इति पर्यायनामेति भाति। अयं विद्याधिपतिः श्रीमता रामकण्ठेन मोक्षकारिकावृत्तौ (२१ तमे पृष्ठे) उदाहृतः। अनेन 'मानस्तोत्रम्' इत्यपरो ग्रन्थः कृत इति तन्त्रालोके (१४.९) उदाहरणाज्ज्ञायते।

२. **अन्यत्र** — रामकण्ठकृतः कश्चन ग्रन्थः। ग्रन्थनाम न ज्ञायते।

३. **आयुर्वेदः** — ग्रन्थनाम न दत्तम्। उदाहरणमपि न ज्ञायते कुत्रत्यमिति।

४. **कवचभार्गवम्** — एतन्नामको ग्रन्थो न लभ्यते।

५. **कालोत्तरम्** — अयं वातुलाख्यस्याष्टाविंशतितमस्य शैवागमस्योपागमभूतः। अस्य मातृका अस्मद्ग्रन्थागारे लभ्यन्ते।

६. **किरणम्** — अयं सप्तविंशतितमः शैवागमः। देवसालपुर्यां शिवागमसिद्धान्तपरिपालनसङ्घेन १९३२ क्रैस्तवाब्दे मुद्रितः। किरणागमस्य विद्यापादमात्रं इटेलीभाषानुवादेन सह नेपोलीनगर्यां १९७५ तमे क्रैस्तवाब्दे प्रकाशितम्।

७. **खेटकबालः** — अयं शब्दः 'श्रीमतः सद्योज्योतेर्नामान्तरम्। अयं 'खेटकनन्दनः' इति मृगेन्द्रवृत्तावुदाहृतः। खेटपाल इति अभिनवगुप्तेन तन्त्रालोके ९.२६२ निर्दिष्टः।

८. **नरेश्वरपरीक्षाप्रकाशः** — द्वितीयरामकण्ठकृतः। काश्मीरग्रन्थावल्यां १९२६ क्रैस्तवाब्दे प्रकाशितः।

९. **निःश्वासम्** — द्वादशतमः शैवागमः। अस्य मातृका अस्मद्ग्रन्थागारे लभ्यते।

१०. **न्यायभाष्यटीकाकारः** — कोऽयमिति नावगम्यते।

११. **न्यायसूत्रकारः** — गौतमः सुप्रसिद्धः।

१२. **पतञ्जलिः** — पातञ्जलयोगसूत्रस्य कर्ता।

१३. **परम्** — शैवागमेषु पञ्चमस्य अजितागमस्योपागमेष्वन्यतमः।

१४. **पाञ्चरात्राः** — पाञ्चरात्रागमेषु विशिष्य कोऽयं ग्रन्थ इति न ज्ञायते।

१५. **पौष्करम्** — षड्विंशतितमस्य शैवागमस्य पारमेश्वराख्यस्योपागमभूतम्। चिदम्बरे १९२५ क्रैस्तवाब्दे उमापतिशिवाचार्यकृतव्याख्यानेन सह विद्यापादमात्रं प्रकाशितम्।

१६. **बृहद्वाधीचम्** — ग्रन्थोऽयं न लभ्यते।

१७. **भावनाविवेकः** — मण्डनमिश्रकृतः।

१८. **मण्डनमिश्रः** — विधिविवेकादिषड्ग्रन्थानां कर्ता। सप्तमशतकीयो महान् मीमांसकः। विस्तरो मुद्रितानां तदीयग्रन्थानामुपोद्घातेषु द्रष्टव्यः।

'१९. **मतङ्गपारमेश्वरे** क्रिया-योग-चर्यापादाः — एषां त्रयाणां पादानां मातृका अस्मद्ग्रन्थालये सन्ति। एते द्वितीयभागतया प्रकाशयिष्यन्ते।

२०. **मन्त्रवार्तिकम्** — खेटकबालापरनाम्ना श्रीमता सद्योज्योतिशिवाचार्येण रचितमित्यत्रोदाहरणमात्राज्ज्ञायते। ग्रन्थोऽयं न लभ्यते।

२१. **मालिनीविजयम्** — मालिनीविजयोत्तरतन्त्रमित्याख्योऽयं ग्रन्थः काश्मीरत्रिकदर्शने शैवयोगं निरूपयति। स च काश्मीरग्रन्थावल्यां सप्तत्रिंशतितमपुष्परूपेण १९२२ क्रैस्तवाब्दे प्रकाशितः।

२२. **मृगेन्द्रम्** — प्रथमस्य शैवागमस्य कामिकाख्यस्योपागमोऽयम्। अस्य विद्यापादः भट्टनारायणकण्ठवृत्त्या अघोरशिवाचार्यकृतदीपिकया च सह योगपादश्च भट्टनारायणकण्ठवृत्तिमात्रेण सह देवसालपुर्यां शिवागमसिद्धान्तपरिपालनसङ्घद्वारा १९२८ तमक्रैस्तवाब्दे मुद्रितः। अस्य क्रियापादचर्यापादौ भट्टनारायणकण्ठवृत्त्या सह अस्मदीयग्रन्थावलौ त्रयोविंशतितमपुष्परूपेण १९६२ तमे क्रैस्तवाब्दे प्रकाशितौ।

२३. **मोक्षकारिकावृत्तिः** — सद्योज्योतिकृताया मोक्षकारिकाया अष्टप्रकरणेष्वेकतमाया

द्वितीयरामकण्ठकृता वृत्तिः। देवसालपुर्यां शिवागमसिद्धान्तपरिपालनसङ्घद्वारा १९२५तमे क्रैस्तवाब्दे मुद्रिता।

२४. **रौरवम्** — शैवागमेषु षोडशतम आगमः। अस्मद्ग्रन्थमालायामष्टादशतमपुष्परूपेण १९६१, १९७२ तमे क्रैस्तवाब्दे प्रकाशितः।

२५. **रौरववृत्तिविवेकः**—सद्योज्योतिकृतत्वेन तत्त्वसंग्रहाख्यप्रकरणान्ते निर्दिष्टाया रौरवागमवृत्तेः द्वितीयेन रामकण्ठेन कृतो व्याख्यानरूपो विवेकः। अयमत्र निर्देशमात्रेण ज्ञायते। ग्रन्थस्तु न लभ्यते।

२६ **वायुपुराणम्** — अनेन प्रसिद्धं वायुपुराणं तथा, शिवपुराणस्य सप्तमभागभूता वायवीयसंहिता च निर्दिश्यते।

२७. **वेदान्तविदः** — के ते इति तु प्रत्येकतया निर्देष्टुं न शक्यते।

२८. **सर्वज्ञानोत्तरम्** — अस्य ज्ञानपादमात्रं द्राविडभाषानुवादेन सह देवसालपुर्यां शिवागमसिद्धान्तपरिपालनसङ्घद्वारा १९२३ तमे क्रैस्तवाब्दे मुद्रितम्। उपागमोऽयमिति शिवज्ञानबोधभाष्यादिष्वस्ति व्यवहारः। अष्टाविंशतिशैवागमानामुपभेदेषु नास्य नाम दृश्यते। चतुष्षष्टितन्त्रेषु 'सर्वज्ञानोत्तरम्' अपि गण्यते।

२९. **सूक्ष्मस्वायंभुवम्** — 'स्वायंभुवम्' इत्यनन्तरशीर्षकं पश्यत।

३०. **स्वायंभुवम्** — शैवागमेषु त्रयोदशतमः स्वायंभुवागमः। अस्य मातृकाः अस्मद्ग्रन्थालये सन्ति। 'सूक्ष्मस्वायंभुवम्' इति शीर्षकेण उदाहृतोऽपि श्लोकः स्वायंभुवागममातृकायां लभ्यते। मातृकायामस्यां ५८ पटलाः सन्ति। तत्र ५६ पटलेषु "स्वायंभुवसूत्रसंग्रहे" इति, एकस्मिन् पटले "उत्तरस्वायंभुवे" इति, अन्त्ये पटले "स्वायंभुवे" इति तदीयपुष्पिकासु निर्दिश्यते। एषु पटलेषु २३ पटलाः स्वायंभुवसूत्रसंग्रह इति शीर्षकेण महिषपुर्यां (Mysore) महाराजसंस्कृतमहापाठशालाद्वारा १९३७ तमे क्रैस्तवाब्दे मुद्रिताः। तत्र प्रथमपटलाच्चतुर्थपटलपर्यन्तस्य ज्ञानपादविषयप्रतिपादकस्य भागस्य (पति-पशु-शक्ति-अध्वाख्यपटलचतुष्टयस्य) सद्योज्योतिकृताया वृत्तेरपूर्णा काचन मातृका अस्मद्ग्रन्थालये विद्यते। इयमेव 'स्वायंभुववृत्तिः' इति तत्त्वत्रयनिर्णयान्ते उदाहृता वृत्तिः स्यादिति पूर्वमेव न्यरूपि। श्रीसोमानन्दनाथेन कृतायाः शिवदृष्टेः श्रीमदुत्पलदेवेन कृतायां वृत्तौ (काश्मीरग्रन्थावलिः ५४ पुष्पम्, १०३ पृष्ठे) एवं विद्यते — "खेटपालगुरुः श्रीस्वायंभुवशास्त्रटीकायां 'किं शब्दराशेर्विशेषोऽस्ति' इत्याक्षिप्य 'बाढम् एकः शिवात्मकोऽन्यश्च पाशात्मकः' इत्यादिना परत्वेन शब्दराशेर्मन्त्ररूपस्य कर्तृशक्तावस्थानात् विशिष्यमाणतामाह" इत्यादि। उदाहृतभागोऽयमस्मद्ग्रन्थालयस्थस्वायंभुवसूत्रसंग्रहटीकामातृकायां २३ तमे पृष्ठे उपलभ्यते। अतः "स्वायंभुवसूत्रवृत्तिः", "स्वायंभुवसूत्रसंग्रहटीका", "स्वायंभुवशास्त्रटीका" इत्याद्येकाया एव कृतेर्नामेत्यत्र नास्ति संशयः।

काश्मीरशैवदर्शनेतिहासविषये आचार्यकान्तिचन्द्रपाण्डेमहोदयैः 'अभिनवगुप्त' 'भास्करी' इत्याद्यनेके ग्रन्था लिखिता इति त एव विस्तरावलोकनेच्छुभिरनुसन्धेयाः।

श्रीमतो भट्टरामकण्ठस्य शैली अतीव प्रौढा। अयं सद्योज्योत्यादिगुरुवर्यैर्निगदितस्य शैवसिद्धान्तशास्त्रस्य मार्गं दृढमवलम्बयन् शैवागमानामन्यथा व्याख्यातॄणां मतं सुष्ठु खण्डयति। तथा शैवसिद्धान्तमतादन्यमतावलम्बिनां न्याय-वैशेषिक-सांख्य-जैमिनीय-पाञ्चरात्र-वेदान्तिनां बौद्धानामार्हतानां चार्वाकाणां च मतानि तत्र तत्र प्रकरणेऽनूद्य खण्डयति। अतो न केवलमयं मूलग्रन्थस्य व्याख्यानकर्ता। अपि तु शैवसिद्धान्तमतस्थापनाचार्योऽपीति वक्तव्यं भवति। स्पष्टमिदं मतङ्गपारमेश्वरवृत्तेरुपक्रमश्लोकैः —

कैश्चिद्वेदेऽनुनीतः कुलदृशि तु परैर्न्यायदृष्टावथान्यै-
स्त्यक्त्वा सिद्धान्तसिद्धं गुरुवरगदितं वर्त्म नीतः कुमार्गे।

मातङ्गोऽयं यतोऽतः कुमतिविहतये येन वृत्त्यङ्कुशेन
क्षेप्तुं मार्गे प्रवृत्तास्तदिह ननु वयं ग्रन्थविद्भिः परीक्ष्याः ॥ इत्यादि ।

तथा तदनन्तरश्लोकेन 'त्यक्त्वा पदान्यत्र तथापदार्थम्' इत्यादिश्लोकदर्शनेन मतङ्गपारमेश्वरस्य व्याख्यानान्तराण्यासन्निति ज्ञायते । तेषामसमीचीनत्वादहमेनां वृत्तिं रचयामीति वदति । तथान्येषां व्याख्यानानि तत्र तत्रोद्धृत्य खण्डयति ।

सोमानन्दकृतायां शिवदृष्टौ श्रीमदुत्पलकृतायां वृत्तौ च (१०३–१०४ पृष्ठयोः) एवं दृश्यते —

"तथा चाह खेटपालः शब्दराशेर्विशेषताम् ।
स्वायंभुवस्य टीकायां बाढमित्यादिना गुरुः ।
तथा मतङ्गटीकायां व्याख्यानिगुरुणोदितम् ।"

(शिवदृष्टौ तृतीयाह्निके १३–१४ श्लोकौ)

"तथा व्याख्यानिसंज्ञकेन गुरुणा मतङ्गटीकायामेवमेव विशिष्टमुक्तम् । तथोक्तम् 'प्रमातृभूमिगतानां मन्त्राणां परभूमिगतानां च शब्दानां न तु वागिन्द्रियस्य कदाचित्, वागिन्द्रियं हि मायापद एव स्थितं, शब्दस्तु तन्मात्ररूपः परव्योममहाभूतमयः परमेश्वरस्य पञ्चब्रह्मविन्यासे वक्त्रमुच्यते" इति ॥

अनेनोदाहरणेन सोमानन्दात्पूर्वभावी शैवाचार्यः व्याख्यानिनामा मतङ्गपारमेश्वरस्य टीकामेकामरचयदिति ज्ञायते । तथा सद्योज्योतिर्गुरुरपि सोमानन्दात्पूर्वभावीति ज्ञायते ।

कल्कत्ताराजकीयसंस्कृतकलाशालायामुपलभ्यमानायां रामकण्ठीयमतङ्गवृत्तिमत्यां मातृकायां रामकण्ठवृत्तेर्भिन्ना काचन वृत्तिरपूर्णा कतिपयपटलानामुपलब्धा पुस्तकस्यास्यानुबन्धतया दत्तास्ति । एषा वृत्तिः रामकण्ठवृत्तेर्मध्ये निक्षिप्तास्ति । दक्षिणापथेषु लब्धासु सर्वासु मातृकासु विद्यातत्त्वप्रकरणे २६–२८ श्लोकप्रभृति बुद्धितत्त्वप्रकरणे २४ तमश्लोकपर्यन्तं, तथा अहंकारप्रकरणे प्रथमश्लोकोत्तरार्धादारभ्य ३९ तमश्लोकपर्यन्तं रामकण्ठवृत्तिर्न लभ्यते । काश्मीरग्रन्थालयाद् मातृकात्रयमुपलब्धम् । तत्र द्वयोः रामकण्ठवृत्तिः सामग्रा लभ्यते । कल्कत्तामातृकायां दक्षिणापथमातृकासु यत्र यत्र रामकण्ठवृत्तिर्नष्टा तत्र तत्र काचनान्या वृत्तिर्दृश्यते । अस्याः समीक्षणेन इदं वक्तव्यं भवति यद् वृत्तिरेषा न रामकण्ठात्प्राचीना, अपि तु कश्चिद् भ्रष्टस्थले वृत्तिपूरणाय व्याख्यानान्तराणि दृष्ट्वा नूतनव्याख्यां कृत्वा च मातृकां समपूरयदिति ।

मतङ्गवृत्तेरस्या 'मतङ्गतन्त्रार्थप्रकाशिका' इति नाम 'ऊ' 'ऋ' कोशयोः परं दृश्यते । तत्र विद्यापादान्ते एका पुष्पिका, तथैको श्लोकश्चाधिकतया दृश्येते —

"समाप्ता च मतङ्गतन्त्रार्थप्रकाशिका विद्यापादविवृतिः ॥"
"श्रीमद्विद्यापादे नारायणकण्ठसूनुना रचिता ।
वृत्तिरियं मातङ्गी काश्मीरकभट्टरामकण्ठेन ॥" इति ।

## एतदागमीयाः केचन विशेषाः

मृगेन्द्रे किरणे च पति-पशु-पाशाख्यं पदार्थत्रयं निरूप्यते —

'त्रिपदार्थं चतुष्पादं महातन्त्रम्' इति ।

(मृगेन्द्रे, विद्यापादे २ पटले २ श्लोकः)

तथा — 'पशुपाशपतिज्ञानविचारप्रतिपादकम्' इति

(किरणे, विद्यापादे प्रथमपटले १३ श्लोकः)

सर्वज्ञानोत्तरे विद्यापादे प्रथमपटले त्रिपदार्थविवरणमेव दृश्यते। अथापि योगपादे (टि.३३४. ३१-३२) श्लोकयोः पति-पशु-पाश-शिवाख्यपदार्थचतुष्टयं निरूप्यते।

रौरवागमे विद्यापादे अध्वपटलाख्ये चतुर्थे पटले ४८ तमे श्लोके विधि-क्रिया-काल-योग-शिवाख्यपदार्थपञ्चकं निरूप्यते —

"पदार्थाः पञ्च विख्याता विद्येशवदनोद्गताः।
विधिक्रिये कालयोगौ शिवश्चेति समासतः॥" इति।

अस्मिन् मतङ्गपारमेश्वरे पति-शक्ति-त्रिपर्व-पशु-भोग-उपायाख्याः षट्पदार्थाः द्वितीयपटले १४–२१ श्लोकेषु निरूप्यन्ते।

मतङ्गपारमेश्वरवत् पौष्करागमोऽपि पारमेश्वरस्योपागमेष्वन्यतमः। तत्रापि पति-विद्या-अविद्या-पशु-पाश-कारकाख्यषट्पदार्थाः निरूप्यन्ते। तथा हि —

"पतिः कुण्डलिनी माया पशुः पाशश्च कारकः।
इति प्रोक्ताः पदार्थाः षट् शैवतन्त्रे समासतः॥" इति।

अयं पाठः मुद्रितपौष्करे दृश्यते, तद्व्याख्यात्रा उमापतिशिवाचार्येण च स्वीकृतः। अस्यैव श्लोकस्य पाठान्तरमन्यत्र ग्रन्थेष्वेवं दृश्यते —

'पतिर्विद्याप्यविद्या च पशुः पाशश्च कारकः' इति।

स्वायंभुवे योगपादे ३७ पटले ९-११ श्लोकेषु बन्ध-अविद्या-विधि-भोग-विद्या-कारण-शाश्वताख्याः सप्त पदार्था निरूप्यन्ते॥

यद्यप्यागमेषु भिन्नसंख्याकाः पदार्था निरूप्यन्ते, तथाप्यन्ततः सर्वे पदार्थाः पति-पशु-पाशाख्य-पदार्थत्रयेष्वन्तर्भवन्तीति तेषां सामरस्यमूहनीयम्।

अयमेवार्थः पौष्करव्याख्याने (विद्यापादे पतिपटलेऽष्टमश्लोके) प्रतिपाद्यते —

पौष्करे च मतङ्गे षट् सप्त स्वायंभुवे तथा।
पञ्चोक्ताः श्रीपराख्ये च मृगेन्द्रादौ त्रयः स्मृताः॥" इति।

अयमेवार्थः पाठान्तरेण शिवाग्रयोगिकृतायां शैवपरिभाषायां द्वितीयपटलारम्भे (२८ तमे पृष्ठे) दृश्यते —

"सप्त स्वायंभुवे प्रोक्ताः षट् पौष्करमतङ्गयोः।
श्रीमत्पराख्ये पञ्चोक्ताः पदार्था रौरवे त्रयः॥" इति।

अत्र पाठान्तरानुसारेण रौरवे पदार्थत्रयं निरूपितमिति यदुच्यते नात्र काचन विप्रतिपत्तिः, यस्माद् विद्यापादपटलेषु पति-पशु-पाशाख्यपदार्थत्रयस्य विवरणं दृश्यते॥

सर्वज्ञानोत्तरागमस्योपोद्घाते (२ पृष्ठे) "शिवः, पतिः, पशुः, शुद्धमाया, अशुद्धमाया, कर्म, आणवमलम् इति सप्त पदार्थाः" इति, तथा 'पशुः, पतिः, माया, कर्म, आणवमलम् इति पञ्च पदार्थाः' इति च आगमान्तरेषु पदार्थाः निरूप्यन्ते" इति सूचिका दत्ता। मूलाधारश्लोकाः, आगमनामानि वा न दीयन्ते।

मतङ्गपारमेश्वरेऽत्र तृतीयः पदार्थः त्रिपर्वपदेनाभिधीयते। तत्र कलादिक्षित्यन्तानि त्रिंशत्तत्त्वानि तत्त्वशब्दवाच्यानि, वामदेवभुवनादारभ्य कालाग्निभुवनान्तानि चतुःषष्ट्यधिकशतत्रयसंख्यातानि भुवनानि भावशब्दवाच्यानि, तत्तद्भुवनजशरीराणि असंख्यातानि भूतशब्देन वाच्यानि। एतानि तत्त्वभुवनभूतानि त्रिपर्वपदेनाभिधीयन्ते। एतन्निरूपकाणां नवमपटलादारभ्य त्रयोविंशतितमपटल-पर्यन्तानां पटलानां वृत्तेः समाप्तिसूचकवाक्येषु "मतङ्गवृत्तौ त्रिपर्वपदार्थे"... इति विशिष्य निर्देशो दृश्यते।

मृगेन्द्रे किरणे सुप्रभेदे च भुवनानां प्रतिपादनं यद्यपि वर्तते, तथापि मतङ्गपारमेश्वरवन्न स्पष्टतया दृश्यते। मृगेन्द्रे किरणे च तत्त्वानि परं सृष्टिक्रमेण वर्णितानि, भुवनक्रमः संहारक्रमेण प्रतिपादितः। मतङ्गपारमेश्वरे तत्त्वानां भुवनानां च विचारः सृष्टिक्रमेणैव दृश्यते। तत्त्वभुवनविचारः प्रतितत्त्वं तत्र तत्र विशदतया सम्यग्वर्णितः।

मतङ्गवृत्तौ (१७. १५७) बुद्धेर्भावप्रत्ययभेदः शतत्रयमिति प्रतिपादितम्। पौष्करे पुंस्तत्त्वपटले (१२५–१२७) द्वादशाधिकं षट्शतमिति प्रोक्तम्। मृगेन्द्रे कलादिकार्यप्रकरणे (१०.२५) सांख्योक्तवत्पञ्चाशदेव भेदा वर्णिताः॥

यद्यपि भुवनसंख्याक्रमो मृगेन्द्रे किरणे च विद्यते, तथापि शुद्धाशुद्धाध्वनोरुभयोरपि क्रमविषयो यथावन्नैव सुबोध्यो भवति। मतङ्गपारमेश्वरे तु पतिपदार्थे चतुर्दश भुवनानि, शक्तिपदार्थे एकचत्वारिंशद्भुवनानि, प्रत्येकं प्रतितत्त्वं भुवनान्युक्त्वा त्रिपर्वपदार्थे चतुष्षष्टयधिकशतत्रयभुवनानि, आहृत्य एकोनविंशत्यधिकचतुःशतं भुवनानि सुष्ठु निरूपितानि। किरणव्याख्याने (मातृकाङ्कः टि.२९०.१३२ पृष्ठे) "एवं भुवनाध्वा सदाशिवान्तं पञ्चविंशत्यधिकेन भुवनानां शतचतुष्टयेन" इति रामकण्ठेन स्वव्याख्यायामुक्तम्। अतः किरणानुसारेण ४२५ भुवनानि; मतङ्गानुसारेण ४१९ भुवनानि। मृगेन्द्रे, रौरवे, तथा अघोरशिवाचार्यपद्धतौ (क्रियाक्रमद्योतिकायां) २२४ भुवनान्येव वर्णितानि। किरणे पृथिवीतत्त्वे २७० भुवनानि, मतङ्गे २५७ भुवनानि। मतङ्गपारमेश्वरवृत्तौ (२३. ८१-८४) हाटकस्य पातालेष्वन्तर्भावो वर्णितः। मृगेन्द्रे (विद्यापादे अध्वप्रकरणे ३२-३३ श्लोकेषु), किरणे (विद्यापादे भुवनपटले ४३ श्लोके च,) हाटकस्य पृथग्भुवनत्वं वर्णितम्।

मृगेन्द्रे (विद्यापादे अध्वप्रकरणे १४१-१४३ श्लोकेषु), तथा किरणे (विद्यापादे भुवनपटले ११८-१२० श्लोकेषु च) अहंकारादितन्मात्रान्ततत्त्वाध्वनि स्थाण्वष्टकमेव भुवनमिति प्रोच्यते। मतङ्गे (१८. १०९-११५) अहंकारादिकर्मेन्द्रियान्ततत्त्वाध्वनि द्वादशतत्त्वेषु स्थाण्वष्टकं भुवनमिति वर्ण्यते। तन्मात्राणां पञ्चानां विश्वेदेवादिपञ्चभुवनानि पृथक्तया प्रोक्तानि।

मतङ्गे १८. ४४, ४५ श्लोकयोः सत्त्वेनोत्कृष्टोऽहंकारो वैकारिक इति रजसोत्कृष्टस्तैजस इति तमसोत्कृष्टो भूतादिरित्युच्यते।

पौष्करे पुंस्तत्त्वपटले १४१-१४२ श्लोकयोः —

"स च त्रिविध उद्दिष्टः प्रथमस्तत्र तैजसः।
वैकारिको द्वितीयः स्यात्तथा भूतादिकः परः॥
सत्त्वेनोत्कृष्टभागो यः स तैजस इहोच्यते।
वैकृतो रजसोत्कृष्टो भूतादिस्तमसाधिकः।"

इति सत्त्वेनोत्कृष्टोऽहंकारः तैजस इति, रजसोत्कृष्टो वैकृत इति तमसोत्कृष्टो भूतादिरित्युच्यते।

मतङ्गवृत्तौ सप्तमे पटले १६-१८ श्लोकानां वृत्तौ एतदागमानुसारेण विद्याङ्गानां शिवासन एव प्रयोगोऽणुत्वपक्षमङ्गीकृत्य, शक्त्यनन्तर्भावात्। न त्वागमान्तराणामिव सकलीकरणे प्रयोग इत्येतदागमस्थो विशेषः सूचितः। विद्याङ्गानामपि शिवाङ्गब्रह्ममन्त्रवत् सकलीकरणे प्रयोगो दीप्तागमादिषु दृश्यते —

"नेत्रं हस्ततले न्यस्याप्यस्त्रं तर्जनिके न्यसेत्।
विद्याङ्गमेवं विन्यस्य शिवं पर्वणि विन्यसेत्॥" इति।

(दीप्तागमे २३ पटले २७ श्लोकः)

तत्त्वविभागविषयेऽप्यस्त्यस्यागमस्यागमान्तरेभ्य ईषद्भेदः। एतदनुसारेणैवं तत्त्वगणना सृष्टिक्रमेण —

| | | |
|---|---|---|
| १ लयतत्त्वम् | २ भोगतत्त्वम् | ३ अधिकारतत्त्वम् |
| ४ शुद्धविद्यातत्त्वम् | ५ मायातत्त्वम् | ६ कलातत्त्वम् |
| ७ विद्यातत्त्वम् | ८ रागतत्त्वम् | ९ कालतत्त्वम् |
| १० नियतितत्त्वम् | ११ पुरुषतत्त्वम् | १२ अव्यक्ततत्त्वम् |
| १३ गुणतत्त्वम् | १४ बुद्धितत्त्वम् | १५ अहंकारतत्त्वम् |
| १६ मनस्तत्त्वम् | १७ श्रोत्रतत्त्वम् | १८ त्वक्तत्त्वम् |
| १९ चक्षुस्तत्त्वम् | २० जिह्वातत्त्वम् | २१ घ्राणतत्त्वम् |
| २२ वाक्तत्त्वम् | २३ पाणितत्त्वम् | २४ पादतत्त्वम् |
| २५ पायुतत्त्वम् | २६ उपस्थतत्त्वम् | २७ शब्दतन्मात्रतत्त्वम् |
| २८ स्पर्शतन्मात्रतत्त्वम् | २९ रूपतन्मात्रतत्त्वम् | ३० रसतन्मात्रतत्त्वम् |
| ३१ गन्धतन्मात्रतत्त्वम् | ३२ आकाशतत्त्वम् | ३३ वायुतत्त्वम् |
| ३४ अग्नितत्त्वम् | ३५ अप्तत्त्वम् | ३६ पृथिवीतत्त्वम् इति । |

अत्र यद्यपि षट्त्रिंशत्तत्त्वानि निरूपितानि। तत्र पुरुषतत्त्वस्य न परमार्थतस्तत्त्वत्वं भुवनाधारत्वं च विद्यते। तस्य भुवनानां रागतत्त्व एव स्थितिः। दीक्षायां प्रकृतितत्त्वशुद्धयनन्तरमत्रैव पुंस्तत्त्वमलशुद्धयर्थं तस्यात्र तत्त्वेषु परिगणना। अत एव मतङ्गवृत्तौ "मायायास्तत्त्वशब्दवाच्याः कलादिक्षित्यन्तास्त्रिंशदर्था उत्पन्नाः" (२-१६) इत्युक्तं संगच्छते। अन्यथा पुरुषगणने एकत्रिंशत्तत्त्वानीति वक्तव्यं भवेत्। तत्र तत्त्वेषु मनःप्रभृति घ्राणपर्यन्तं ज्ञानेन्द्रियषट्कं, वागादि-उपस्थपर्यन्तं कर्मेन्द्रियपञ्चकं, शब्दतन्मात्रप्रभृति गन्धतन्मात्रपर्यन्तं तन्मात्रपञ्चकम्, आकाशादि-पृथिवीपर्यन्तं भूतपञ्चकमिति व्यवहारः। एवं मतङ्गपारमेश्वरे पुरुषतत्त्वस्वीकारे ३६ तत्त्वानि। तदगणने ३५ तत्त्वानि॥

रौरवागमे त्रिंशत्तत्त्वानि विद्यापादे दशमपटले ९८-१०१ श्लोकेषु परिगणितानि। तत्र ५ भूतानि, ५ तन्मात्राणि, ५ कर्मेन्द्रियाणि, ६ बुद्धीन्द्रियाणि, कला-विद्या-राग-पुरुष-अव्यक्त-गुण-बुद्धि-अहंकारा इत्यष्टौ, शिवाख्यमेकम् इत्याहृत्य त्रिंशत्तत्त्वानि। शक्ति-सदाशिव-ईश्वर-शुद्धविद्या-मायाख्यानि पञ्च नोक्तानि, पञ्चैतानि शिवतत्त्व एवान्तर्भूतानि॥

मृगेन्द्रागमे विद्यापादे ५ भूतानि, ५ तन्मात्राणि, ५ कर्मेन्द्रियाणि, ६ ज्ञानेन्द्रियाणि, माया-कला-काल-विद्या-राग-नियति-पुरुष-प्रकृति-अव्यक्त-गुण-बुद्धि-अहंकाराख्यानि १२ तत्त्वानि, तथा शुद्धविद्या-सदाशिव-बिन्दु-नाद-परबिन्दु -परमशिवाख्यानि ६ शुद्धाविद्यातत्त्वानि निरूपितानि। आहृत्य ३९ तत्त्वानि भवन्ति। परं तु यत्र कुत्रापि तत्त्वसंख्या न न्यदर्शि।

कालोत्तरागमे ३० तमे पटले ३६ तत्त्वानि परिगणितानि। ५ भूतानि, ५ तन्मात्राणि, ५ कर्मेन्द्रियाणि, ६ ज्ञानेन्द्रियाणि, पुरुष-प्रकृति-महद्-अहंकार-राग-माया-विद्या-कला-नियति-विग्रहेश-कालाख्यानि एकादश, तथा शुद्धविद्या-शुद्धकाल-महेश-सदाशिवाख्यानि चत्वारि इत्याहृत्य षट्त्रिंशत्तत्त्वानि।

अत्र विग्रहेश इत्यात्मतत्त्वस्य नाम स्यात्। महेशपदेन ईश्वरतत्त्वमुक्तं भवेत्। शुद्धकालाख्यमत्राधिकम्। तत्त्वातीतः शिव इति हेतोः शिवतत्त्वं नात्र संख्यातमिति भाति।

किरणागमेऽपि ३६ तत्त्वानि (विद्यापादे ८ पटले) ५ भूतानि, ५ तन्मात्राणि, ५ कर्मेन्द्रियाणि, ६ ज्ञानेन्द्रियाणि, अहंकार-बुद्धि-अव्यक्त-राग-विद्या-काल-नियति-कला-माया-शुद्धविद्या- ईश्वर-सदाशिव-प्रथमशक्ति-द्वितीयशक्ति-शिवतत्त्वाख्यानि पञ्चदशेत्याहृत्य षट्त्रिंशत्तत्त्वानि। तत्र तन्मात्राणि, इन्द्रियाणि च यद्यपि नामतो न निर्दिष्टानि। अथापि सर्वागमसंमतत्वाद्ग्राह्याणि।

पुरुपतत्त्वं यद्यप्यस्ति तन्न परिगणितमिति भाति। शक्तिद्वयं परिगणितमित्ययमत्र विशेषः।
सुप्रभेदे योगपादे प्रथमपटले ५ भूतानि, ५ तन्मात्राणि, ६ बुद्धीन्द्रियाणि, ५ कर्मेन्द्रियाणि, बुद्धि-अहंकार-अव्यक्त-पुरुष-राग-नियति-विद्या-कला-कालाख्यानि नव, शुद्धविद्या-शुद्धकला-शुद्धमाया-आत्म-विद्या-शिवाख्यानि षड् इत्याहृत्य ३६ तत्त्वानि निर्दिष्टानि।
अत्र शुद्धविद्यातत्त्वादनन्तरं पुनर्विद्यातत्त्वं यत्परिगणितं तत्तु व्याख्यानमर्हति। शुद्धकलेत्यादि कलाप्रतिरूपेणात्र भावना॥
सुप्रभेदे ज्ञानपादे तृतीयपटले ५ भूतानि, १० ज्ञानेन्द्रियकर्मेन्द्रियाणि, राग-विद्या-काल-कला-आत्माख्यानि पञ्च, अहंकार-बुद्धि-गुण-अव्यक्ताख्यानि चत्वारि, शुद्धविद्या-सादाख्य-बिन्दु-नाद-शक्तिद्वय-शिवाख्यानि सप्त इत्याहृत्य ३१ तत्त्वानि निरूपितानि। यदि ५ तन्मात्राणि स्युः, तर्हि ३६ तत्त्वान्यत्रापि भवेयुः। मुद्रितपुस्तकं त्वशुद्धिभूयिष्ठमिति नान्यत् सांप्रतं वक्तव्यम्॥
चिन्त्यागमे, पौष्करे च ३६ तत्त्वानि वर्तन्ते। शुद्धतत्त्वानि शिव-शक्ति-सादाख्य-ईश्वर-शुद्ध-विद्याख्यानि पञ्च, मायादि-पृथिवीपर्यन्तमेकत्रिंशत्तत्त्वानीत्याहृत्य ३६ तत्त्वानि॥
स्वायम्भुवागमे ३८ तमे पटले ३२ तत्त्वानि परिगणितानि। ३१ अशुद्धतत्त्वानि, शिवाख्य-मेकं शुद्धतत्त्वमित्यत्र विशेषः॥

## विद्यापादपटलार्थसंग्रहः

मतङ्गपारमेश्वरेऽस्मिंस्तन्त्रे विद्यापादे षड्विंशतिः पटलाः सन्ति। तत्र प्रथमे पटले एतच्छा-स्त्रस्यावतारक्रमो वर्ण्यते। शास्त्रमिदं साक्षात्परमेश्वरस्य वक्त्राम्बुजात् प्रथमक्षोभेण नादात्मना प्रादुर्भूय गुरुशिष्यपारम्पर्यनिमित्तं क्रमेण स्थूलशब्दतां प्राप। एतच्च भगवान् सदाशिवः कोटि-संख्ययानुष्टुप्छन्दसा रचयामास। ततस्तस्मादवगत्यानन्तेश्वरो लक्षसंख्यया संजग्राह। अनन्ते-श्वरेण श्रीकण्ठायोपदिष्टमिदम्। श्रीकण्ठेन सार्धत्रिसहस्रीसंख्यया संगृह्य मतङ्गायोपदिश्यत इति, एतेनास्य 'मतङ्गपारमेश्वरम्' इति नाम।
द्वितीये पटलेऽस्मिंस्तन्त्रे प्रतिपादयिष्यमाणानां सर्वेषां विषयाणामुद्देशः क्रियते। तत्र पतिः, अण्वाख्य आत्मा पशुः, बन्धभूतं मलम्, बन्धसोपानभूतं कर्म, भोगः, शुद्धाशुद्धभुवनानि, भुवनजशरी-राणि, बन्धनिवृत्तिः, तदुपायः, आत्मस्वरूपाभिव्यक्तिरूपमुक्तिरित्यादीनामुद्देशः, तत्र दीक्षाया उपयोगश्च सूच्यते। तथा विद्याक्रियायोगचर्यापादानामुद्देशः, श्लोकसंख्या, पतिशक्तित्रिपर्वपशु-भोगोपायाख्यपदार्थषट्कविभागः, तत्तत्पदार्थनिर्वचनं च संग्रहेण क्रियते।
तृतीयपटलादारभ्य पञ्चमपटलान्तं लयभोगाधिकाराख्यतत्त्वत्रयरूपः पतिपदार्थो वर्ण्यते। तत्र तृतीये पटले मीमांसकमतखण्डनपूर्वकं जगतो नित्यत्वमङ्गीकृत्येश्वरसिद्धिः प्रतिपाद्यते। तथा पाञ्चरात्रमीमांसकादिमतान्तरनिराकरणपूर्वकं ज्ञानक्रियात्मकाचलमूर्तिमतः पत्युः स्वरूपं वर्णितम्। तथा निष्कलं परं लयाख्यतत्त्वं, तथा बिन्द्वात्मकं भोगाख्यं तत्त्वं च प्रतिपाद्येते। तथा शान्ति-विद्याप्रतिष्ठानिवृत्तिशान्त्यतीतभुवनानि तदुपसंहारक्रमश्च वर्ण्यन्ते।
चतुर्थे पटलेऽधिकारतत्त्वं निरूप्यते। तत्र स्वतन्त्रस्यापीश्वरस्य दयया पश्वनुग्रहकर्तृत्वरूपः परोपकार एवाधिकारः, ईशान्यादिपञ्चशक्तिभिः समवेतः सदाशिवो विद्येशैः सह तेभ्योऽर्ध्ववर्तिनि निखिलेऽध्वनि भोगसाधनव्यापारसारभतेत्युच्यते। तथा ईशानमूर्धेत्यादिपञ्चब्रह्मणां निर्वचनम्, तस्य करणात्मकहारिण्यादिशक्तित्रयव्यापारवर्णनम्, शक्तिपातस्वरूपवर्णनम्, दीक्षया सदाशिव-भुवनयोजितानां स्थितिकथनम्, लयतत्त्वे योजितानां च स्थितिनिरूपणम्, लयभोगतत्त्वयोर्नित्यत्व-प्रतिपादनं च क्रियते।

पञ्चमे पटले भगवतः शरीरत्वेन प्रोक्तानामीशान्यादिरोधयित्र्यन्तानामष्टानां शक्तीनामधिकारिणीनामधिकारतत्त्वेऽन्तर्भावः, विज्ञानकेवलिनामेव विद्येशत्वेनानुग्रहः, अधिकारेच्छावतामेवानन्तेशादीनामधिकारे नियोगः, विद्येशादिषु तारतम्ये कारणकथनपूर्वकं तेषां मोक्षहेतुः, महाप्रलये तेषामुपसंहारः, अनन्तेशादीनां याः शक्तयस्तासां व्यापार इत्यादि प्रतिपाद्यते।

षष्ठे पटले पाश्यानामात्मनां प्रधानादिपाशानां पाशयितुरीश्वरस्य च स्वरूपं वेदान्तपाञ्चरात्रसांख्यन्यायसौगतचार्वाकमतखण्डनपूर्वकं सप्रपञ्चं निरूप्यते।

सप्तमे पटले विद्यातत्त्वं निरूप्यते। अस्य तत्त्वस्य मायातत्त्वस्य च शक्त्याह्वयपदार्थान्तिर्भावः। परमेश्वरशक्तिभिरीशान्यादिभिरभिव्यक्तशक्तीनां शुद्धविद्याभुवनेष्वीश्वरत्वम्, अनन्तेशस्याशुद्धविद्याभुवनेष्वीश्वरत्वम्, परमेश्वराभिव्यक्तानामेतासां विद्यानां विद्यातत्त्वे स्थितिः, एतासामेव मन्त्रभूतानां सप्तकोटित्वम्, तेषां मन्त्राणां विद्यातत्त्वत्वकथने कारणम्, स्वाधिकारं निर्वर्त्य कदा तेषां मोक्ष इत्यादिविषयविमर्शः, विद्याङ्गभुवनानि, अनन्तादिविद्येश्वरराज्ञीनां भुवनानि, अघोरादिविद्यारुद्राणां भुवनानि, विद्यातत्त्वस्यैवाक्षरयोनित्वम्, व्योमव्यापिमन्त्रस्य सर्वमन्त्रयोनित्वम्, मन्त्राणां भोगमोक्षप्रदत्वम्, परमेश्वरशक्तिसमावेशादेव मन्त्राणां वाचि संनिधिः, मन्त्राणां दीक्षाद्वारा कर्मफलबन्धच्छेत्तृत्वम्, तेषाममोघशक्तिकत्वम्, इत्यादयो विषयाः प्रकाश्यन्ते।

अष्टमे पटले शक्त्याह्वयपदार्थान्तर्भूतं मायातत्त्वं निरूप्यते। महाप्रलयविश्रान्त्या प्राप्तकर्मपरिपाकस्य प्रलयकेवलिनः सूक्ष्मशरीरोत्पत्तिकारणं तथाभिलाषिणो बाह्यस्थूलशरीरोत्पत्तिकारणं भोक्तुमभ्युद्यतस्य सकलस्यापि योगिनः शरीरोत्पत्तिकारणं मायातत्त्वमित्युच्यते। मात्यस्मिन् प्रलये सर्वं जगदिति मायेति तल्लक्षणम्। कलाविद्यारागकालनियतिगुणाख्यैः षड्भिः प्रकारैर्माया व्यवस्थिता पुंसो भोक्तृत्वसंपादिकेति, मायामलयोर्भेदः, सप्त मलस्वभावाः, मलैः संबद्धाया मायाया मोहिकात्वम्, तस्या अनन्तेशेन क्षोभे जगद्रूपत्वम्, प्राधानिकतत्त्वभुवनादीनां मायात उत्पत्तिः, समस्तजगदुपादानकारणभूतायास्तस्या महाप्रलये तत्त्वभुवनाद्युपसंहारे प्रवृत्तिः, मायातत्त्वसंबन्धिनां विंशतेर्भुवनानां कलातत्त्वमस्तके स्थितिः, तेषां भुवनानां वर्णनम्, जात्यायुर्भोगप्रदकर्मभिर्जन्माद्यारम्भः, कर्मविषये सांख्यमतखण्डनम्, मायाया नित्यत्वम्, तस्याः प्रवृत्तावीश्वरशक्तीनां कारणत्वमित्यादयो विषया अभिधीयन्ते।

नवमादारभ्य त्रयोविंशपटलान्तं त्रिपर्वपदार्थो निरूप्यते। तत्र नवमे पटले कलातत्त्वं विचार्यते। अनन्तेशेन क्षोभिताया मायायाः कार्यभूता कला। तत्र मोहशून्याः प्रलयकेवला मायातत्त्वभुवनेश्वरत्वेन स्थिताः। पुंस ईषन्मलनिवृत्त्यात्मकचित्त्वसमर्थनेन कर्तृत्वस्वरूपोपकारकत्वात् कलाया अचेतनत्वेऽपि पुरुषं प्रति प्रयोजककर्तृत्वमेव। विद्यादयः प्रवृत्तिविषयदर्शकत्वेन पुंसः करणानि भवन्ति। अत्र वामदेवादयो दश भुवनेश्वराः, तथा दशभुवनानि, ते च भुवनेश्वराः शिवेच्छयैव नियुक्ताः, न तु कपालेशादिवदनन्तेन। कला जगच्चैतन्योपोद्बलने समर्था, तथाणुसमूहं स्वभुवने योजयितुं समर्थेत्यादिविषयाः प्रदर्श्यन्ते।

दशमे पटले विद्यातत्त्वं निरूप्यते। कलातत्त्वाद् विद्यातत्त्वोत्पत्तिः। कलयेषन्मलनिवृत्तिद्वारोपोद्बलितचिच्छक्तेः पुंसो विद्यया परिमितं भोग्यविषयं विज्ञानं भवति। प्रतिपुरुषं कर्मविपाकभेदवत् तदाक्षिप्ता विद्यारचनापि भिन्नैव भवति। तेन तद्वेदनं सुखवेदनं दुःखवेदनं चोपजायते। अध्यवसायस्मृतिप्रतिभादिप्रत्ययभेदेन भिन्ना बुद्धिर्यया वेद्यते सा विद्येति विद्याशब्दार्थः। कलया मले निवृत्ते विद्यया भोग्यविषयज्ञानोत्पत्तौ च पुरुषो भोगेषु युज्यते। बुद्धिश्च स्त्र्यादीन् भोग्यान् ग्राह्यत्वेन निवेदयति। विद्या तान् भोगान् निरूपयति। ततः पुरुषो भोगेषु युज्यते। पौरुषं भावमाश्रित्य पुरुषाणां प्रवृत्तत्वेनैषा न शिवाद्यर्थप्रकाशिका, किं तु शुद्धविद्यैव तत्प्रकाशिका। सकलोऽपि दीक्षया शुद्धवर्त्मस्थः शिवं पश्यति, परेण मोक्षेण युज्यते। दीक्षा च संचितमागामि

च कर्म विध्वंसयति, न वर्तमानम्, तस्य भोगेनैव क्षपयितव्यत्वात्। विद्यातत्त्वे द्वादश भुवनानि, तत्रैकशिवादयो द्वादश रुद्रा अनन्तेशनियुक्ता इत्यादिविषयाः प्रख्याप्यन्ते।

एकादशे पटले रागतत्त्वं निरूप्यते। कलया मलस्य निवृत्तौ विद्यया च दृशः समुन्मीलितत्वादभिलाषेण भोगायोन्मुखीभूतस्य यो रागः स मायोपादानकात् कलातत्त्वाज्जायते। द्विविधो रागो वासनात्मकः प्रत्ययात्मकश्च। प्रत्ययरूपेण रागेणाकृष्टो भोगेषु रागी भवति। अनाकृष्टो विरक्तो भवति। वासनारूपेण रागेण पुरुषेच्छामनपेक्ष्य बलात्कारेण कर्मणा भोक्तुं पुरुषः प्रवर्त्यते। परमेश्वरे निवेशितो रागः शुद्धरागः। स च मायाजालापनुत्तये भवति। कलाविद्यारागाख्यं तत्त्वत्रयमात्मनोऽन्तरङ्गत्वेन समीपवर्ति भोक्तृत्वहेतुः। अङ्गुष्ठमात्रादयो रुद्रा अष्टभुवनेश्वरा अनन्तेशनियुक्ता रागतत्त्वभुवनेश्वरा इत्यादयो विषयाः प्रतिपाद्यन्ते।

द्वादशे पटले कालतत्त्वं निरूप्यते। कलाविद्यारागाख्यकञ्चुकत्रयजनिते भोगसंवेदने भोगादिगतचिरक्षिप्रादिप्रत्ययः कालेन कल्प्यते। तथा वृद्धत्वतरुणत्वाद्यवस्था च तेनैव कल्प्यते। भूतवर्तमानभाविरूपेण कालस्त्रिविधः। महाप्रलये सर्वेषामुपसंहृतत्वात् परमशिवबिन्द्वात्ममायाख्यानि चत्वारि तत्त्वानि विद्यन्ते। तेषां नित्यत्वाज्जन्मनाशाद्यभावात् कलनीयाभावान्महाप्रलये कालव्यवहाराभावः। आत्मा कालेन सूक्ष्मदेहनिविष्टतत्त्वसंयोगवान् भवति, नियतितत्त्वेन भेदेन नियम्यते, तेन स पुंभावमायाति। कालतत्त्वेऽष्टौ भुवनानि। पतद्गादयस्तदीश्वराः, इति कालतत्त्वप्रकरणार्थसंग्रहः।

त्रयोदशे पटले नियतितत्त्वं निरूप्यते। नियतिः सकलस्य पुंसो भोगसंबन्धस्य नियामिका, तथा भोगान्निवृत्तेश्च नियामिका। कालतत्त्वभुवनान्येव नियत्या अपि भुवनानि। भुवनदीक्षायां कालनियत्योरभेदेन विनियोगः, तत्त्वे च भेदेनेति नियतितत्त्वप्रकरणार्थसंग्रहः।

चतुर्दशे पटले पुरुषतत्त्वं निरूप्यते। दीक्षादौ संस्कार्य आत्मा प्रकृतितत्त्वात् श्रीकण्ठभुवनात् प्रोद्धृत्य पुंस्तत्त्वे योजनीयः पुंस्त्वविच्छेदाय। तत् पुंस्तत्त्वं कलादिनियत्यन्तेन तत्त्वपञ्चकेन संयुक्तमेव दीक्षादौ पुंस्तत्त्वनिर्देशं याति। ततश्च सकलस्यैव पुंस्तत्त्वत्वम्, न प्रलयकेवलविज्ञानकेवलयोः। पुंस्त्वमलयोगः पञ्चतत्त्वयोगश्चेति द्वयमत्र पुंस्तत्त्वनिर्देशनिमित्तम्। पुरुषस्योपकारायैव सर्वतत्त्वानां विभागो भगवता कृतः। प्रकृतिपुरुषसंयोगादेतज्जगत् स्थावरजङ्गमात्मिकां व्यक्तिमायाति। भोक्त्रात्मैव पशुतत्त्वशब्देन समर्थितः, न विज्ञानकेवलादिरिति पटलस्यास्यार्थसंग्रहः।

पञ्चदशे पटलेऽव्यक्ततत्त्वं निरूप्यते। अनन्तेशेन मायाक्षोभवत् श्रीकण्ठेनाव्यक्तक्षोभः क्रियते। तच्चाव्यक्तं गुणादिपृथिव्यन्तस्य तत्त्वभुवनात्मनो जगत उपादानकारणम्। व्यक्तस्य तस्य सत्त्वादिगुणात्मिकास्तिस्रो वृत्तयः समस्तकार्यान्वयिन्यः समस्तपुरुषभोग्याश्च भवन्ति। अव्यक्ताद्व्यक्तिमायाताः सत्त्वादयो गुणा बुद्ध्यादिभूतान्तेषु ब्रह्माण्डान्तं प्रवृत्ताः। ततो ब्रह्मणश्चतुर्दशविधभौतिकसर्गो भवति। ब्रह्मा स्वमानेन वर्षशतान्ते श्रीकण्ठनिशाकाले लयं याति। तथाव्यक्तादिकपालेशभुवनान्ते ब्रह्मादयो लयं यान्ति। अयं मध्यमः प्रलयः। श्रीकण्ठस्य स्वमानेन वर्षसहस्रान्ते मायोपसंहारः, स एव महाप्रलयः। उपशान्तगुणावस्थं गुणत्रयमव्यक्तम्। अप्रशान्ता भिन्ना गुणा गुणतत्त्वमित्येतत्पटलार्थसंग्रहः।

षोडशे पटले गुणतत्त्वं निरूप्यते। श्रीकण्ठेन स्वशक्त्या क्षोभितादव्यक्ताद् गुणानामुत्पत्तिः। अविभक्ता गुणा अव्यक्तम्। अव्यक्तस्य तत्त्वात्मिका सृष्टिर्गुणतत्त्वम्। अव्यक्ततत्त्वे नव भुवनानि। श्रीकण्ठभुवनमेकम्। शिखेदाद्यष्टरुद्राणां भुवनान्यष्टौ। एतेषामेव महादेवाष्टकमिति निःश्वासे रौरवे च व्यपदेशः। श्रीकण्ठशक्तिक्षोभिताव्यक्तोत्पन्नाद्गुणतत्त्वादेव बुद्धितत्त्वं मनोबुद्धीन्द्रियकर्मेन्द्रियतन्मात्रसंघातात्मकमहंकारतत्त्वं पञ्चभूतात्मकं ब्रह्माण्डं च समभवत्। ब्रह्मसृष्टेः प्रागेव श्रीकण्ठाद्भूरादिलोकविभागः संपन्नः। गुणतत्त्वादेव ब्रह्मा प्राप्तबाह्यशरीरो भवति।

स च चतुर्दशविधभौतिकसृष्टिं करोति। गुणानां वृत्तयः पुरुषेषु मिश्राः। श्रीकण्ठस्य शुद्धसत्त्वात्मकत्वम्, विष्णोः शुद्धरजोमयत्वम्, अकृतस्य भुवनेश्वरस्य शुद्धतमोमयत्वम्। गुणतत्त्वेऽष्टौ भुवनानि। अकृतविष्णुश्रीकण्ठानां त्रीणि भुवनानि। औमकौमारब्राह्मभुवनानि त्रीणि, तथा विभुकृतयोर्द्वे भुवने च विमिश्राणि। एते भुवनेश्वरा योगिन इति व्यवह्रियन्ते। एते श्रीकण्ठेन नियोज्याः। एतैर्गुणैः समस्तं जगत् पुरुषाणां स्थित्यर्थं व्याप्तम्, इत्येतत्पटलार्थसंग्रहः।

सप्तदशे पटले बुद्धितत्त्वं निरूप्यते। गुणतत्त्वादुत्पन्नाया बुद्धेस्तत्त्वभावभूतभुवनानि विषया भवन्ति। तस्या धर्मादयोऽष्टौ गुणाः। तेषां मध्ये धर्मज्ञानवैराग्यैश्वर्याणां सात्त्विकत्वम्, अवैराग्यस्य राजसत्वम्, अधर्मादीनां त्रयाणां तामसत्वम्। बुद्धितत्त्वे 'ब्रह्मा, प्रजापतिः, सोमः, इन्द्रः, गन्धर्वः, यक्षः राक्षसः, पिशाचः' इत्यष्टौ भुवनेश्वराः। धर्मो द्विविधो यमो नियमश्चेति। प्रकर्षावस्थां प्राप्तं ज्ञानं सिद्धिः। बुद्धिर्धर्मादिभिः सप्तभिर्गुणैः पुरुषं संसारे योजयति। अष्टमेन ज्ञानाख्येन संसारात् पुरुषं मोचयति। दीक्षादिना संस्कृतस्य पुंसो बुद्धौ परमेश्वरशक्तिरधिष्ठात्री प्रवर्तते। तदा स्वशक्त्यात्मकमेव ज्ञानं श्रेयःप्रकाशकं भवति। अनेनैव ज्ञानेन सिद्धाः शिवं पश्यन्ति, न बुद्ध्या। ततो बुद्धेर्गुणानां धर्मादीनां विवरणम्, तथा बुद्धेर्भावप्रत्ययानां संख्या शतत्रयमिति प्रतिपादनं च। बुद्ध्यादीनां कर्मसामर्थ्येनैव पुंबन्धस्य कृतत्वात् प्रलयकेवलादेर्बुद्ध्याद्यभावान्नानेन संबन्धः, किंतु सकलस्यैव। मायीयकर्मासंबद्धस्य मलस्य परिपाकासंभवान्मलपरिपाकं विना मोक्षानुत्पत्तेः भगवता अज्ञानयोगेन जगद् धार्यते। अध्यवसायात्मिका बुद्धिर्जगदिदं प्रकाशयति; इत्येतत्पटलार्थसंग्रहः।

अष्टादशे पटले, अहंकारमनोबुद्धीन्द्रियकर्मेन्द्रियतन्मात्रतत्त्वात्मकानि सप्तदशतत्त्वानि निरूप्यन्ते। गुणत्रयात्मकबुद्धेरुद्भूतोऽहंकारस्त्रिविधः। आत्मनो ज्ञानसत्ता क्रियासत्ता चाहंकारव्यापारैरेव लक्ष्यते। अहंकारकार्येष्विन्द्रियेषु सत्त्वगुणापूरणात् तेषु पटुत्वं जायते। तच्च तेषां वृत्तिभिरेव सिद्धमिति बुद्धीन्द्रियकर्मेन्द्रियाणां वृत्तिनिरूपणम्। सत्त्वेनोत्कृष्टोऽहंकारो वैकारिकः, रजसोत्कृष्टस्तैजसः, तमसोत्कृष्टो भूतादिः। सात्त्विकाहंकाराद् वैकारिकाख्यान्मनो बुद्धीन्द्रियवर्गश्च जायते। राजसाहंकारात् तैजसाख्यात् कर्मेन्द्रियवर्गो जायते। तामसाद्भूतादेरहंकारात् तन्मात्रवर्गो जायते। संकल्पेन रागसहभाविना पुरुषमिन्द्रियमार्गे प्रवर्त्येन्द्रियमर्थेन सह मनो योजयति। पञ्चानां बुद्धीन्द्रियाणां श्रोत्रचक्षुर्जिह्वाघ्राणत्वचां शब्दरूपरसगन्धस्पर्शाः पञ्च विषयाः। वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि, तेषां तत्तत्क्रियानिरूपणम्। अन्तःकरणानि बुद्ध्यहंकारमनांसि त्रीणि त्रिकालविषयाणि। बाह्यकरणानि मनःप्रेरितानि वर्तमानमेव वस्तु गृह्णन्ति, इति तेषां परस्परं विशेषः। बुद्धीन्द्रियाणि मनःप्रेरितान्येव स्वस्मात् स्थानादर्थग्रहणाय प्रवर्तन्ते, न तु स्वस्थाने क्रियामुत्पादयन्ति। कर्मेन्द्रियाणि स्वाश्रये कार्यं कुर्वन्ति। बुद्धीन्द्रियाणां विप्रकृष्टमपि वस्तु ग्राह्यं भवति। कर्मेन्द्रियाणां संनिकृष्टमेव वस्तु ग्राह्यम्। कार्यं तु बुद्धीन्द्रियकर्मेन्द्रियसंबन्धादेव सिध्यति, अज्ञातस्य करणासंभवात्। बुद्धीन्द्रियाणि तु कर्मेन्द्रियानपेक्षयैव कार्यं कुर्वन्तीति विशेषः। करणानां स्थित्यर्थं कार्यतां गतानि पञ्चतन्मात्राणि। तत्र शब्दतन्मात्रं शब्दमात्रमेव। स्पर्शतन्मात्रं किंचिच्छब्दयुतम्। रूपतन्मात्रं शब्दस्पर्शसमायुतम्। रसतन्मात्रं शब्दस्पर्शरूपयुतम्। गन्धतन्मात्रं शब्दस्पर्शरूपरसैश्चतुर्भिर्युतमिति तन्मात्रस्वरूपम्। तन्मात्राणि सूक्ष्माणि। भूतानि तु स्थूलान्यस्मदाद्युपलभ्यानीति भूततन्मात्रयोर्विशेषः। आकाशादिपञ्चभूतानां कार्याणां कारणभूतानि पञ्चतन्मात्राणि। अहंकारादिकर्मेन्द्रियान्तेषु द्वादशसु तत्त्वेषु स्थूलेश्वराद्यष्टभुवनानि। तन्मात्रेषु पञ्च भुवनानि, इत्येतत्पटलार्थसंग्रहः।

एकोनविंशे पटले आकाशतत्त्वं निरूप्यते। तत्र मनुष्यादीनां स्थितये आकाशादिपृथिव्यन्तं महाभूतपञ्चकं भुवनाकारतया सिद्धम्। तस्मादेव भूतपञ्चकाद्ब्रह्मा सूक्ष्मस्थूलशरीराणि पानान्न-

शयनादि चासृजत्। एवं चतुर्दशविधभौतिकसर्गः। ब्रह्माण्डान्तर्वर्तिभूलोकादिविषये ब्रह्मणः शरीरादिकर्तृत्वम्। तत्त्वभुवनानां त्वनन्तेशश्रीकण्ठकर्तृत्वम्। शब्दतन्मात्रादाकाशोत्पत्तिः। तस्यामूर्तत्वं शब्दगुणत्वं च। आकाशतत्त्वे स्थाण्वष्टकाख्यभुवनाष्टकम्। आकाशतत्त्वं जगतो वृद्ध्यर्थं व्यक्तमित्येतत्पटलार्थसंग्रहः।

विंशे पटले वायुतत्त्वं निरूप्यते। स्पर्शतन्मात्राद्वायोरुत्पत्तिः। स च शब्दस्पर्शाख्यगुणद्वययुक्तः सदा प्रवहणात्मकः। चेष्टा वायुव्यापारः, स च प्राणोऽपानः समान उदानो व्यान इति पञ्चविध इति सलक्षणं प्रतिपादितः। वायुतत्त्वे भीमाद्यष्टकाख्यान्यष्टौ भुवनानीत्येतत्पटलार्थसंग्रहः।

एकविंशे पटले वह्नितत्त्वं निरूप्यते। रूपतन्मात्रादग्नेरुद्भवः। स च रूपस्पर्शशब्दाख्यगुणत्रययुतः। तस्य रूपं तेजोलक्षणं प्रकाशकं दिव्यं भौममाकरजमिति त्रिविधम्। औदरं तु न प्रकाशकम्। भौमाग्निनादग्धमुदकं सूर्यकिरणैराकृष्यते, ततस्ते किरणा मेघरूपतया वर्षन्ति, तेजोरूपतया तपन्ति। एकमेव तेजो भूमौ वह्निरूपतया दिव्यादित्यात्मना संसारस्थित्यर्थं भगवता स्थापितम्। भौमो वह्निर्बहिर्जगदुपकाराय गार्हपत्याहवनीयदक्षिणभेदेन त्रिधा कल्पितः। तादृशाग्नौ स्वर्गाद्यवाप्त्यै होमः क्रियते। वह्नितत्त्वे भैरवाद्यष्टकाख्यान्यष्टौ भुवनानि। दाहपाकप्रकाशादिना जन्तुचक्रं वह्निना द्योत्यते, उपक्रियते च। अग्निना भुवनात्मना सलिलतत्त्वं व्याप्तमित्येतत्पटलार्थसंग्रहः।

द्वाविंशे पटलेऽप्तत्त्वं निरूप्यते। तोयं रसतन्मात्रादभिव्यक्तम्। लोकानामुपकाराय सरित्समुद्रादिभावेन व्यक्तम्। मधुरो रसोऽस्य असाधारणो गुणः। शब्दस्पर्शरूपास्तु साधारणा गुणाः। शब्दश्चलचलादिकः, स्पर्शः शीतः, रूपं तु शुक्लम्। द्रवत्वं स्निग्धत्वं च गुणान्तराणि। तोयं शरीरस्य धारकं पोषकं वर्धकं च भवति। तोयतत्त्वे लाकुलाद्यष्टकाख्यानि अष्टौ भुवनानि। इत्येतत्पटलार्थसंग्रहः॥

त्रयोविंशे पटले पृथिवीतत्त्वं निरूप्यते। पृथिवी गन्धतन्मात्रादुत्पन्ना। शब्दस्पर्शरूपरसगन्धैः पञ्चभिर्गुणैः समन्विता। गन्धोऽस्यासाधारणो गुणः। गन्धः सुरभिरसुरभिरिति द्विविधः। रसस्तिक्तमधुरादिभेदेन षड्विधः। रूपं सितरक्तादिभेदेनानेकविधम्। स्पर्शोऽनुष्णाशीतः। शब्दस्तु खटखटादिभेदेनानेकविधः। पृथिवी बहिः भुवनरूपतया व्यक्ता। अन्तः शरीरात्मना विचित्रावयवसंनिवेशा प्रवृत्ता। देवमानुषतिर्यञ्चो यत्र वसन्ति तत्पार्थिवं तत्त्वमिति, अत्रैव चतुर्दशविधो भौतिकः सर्गः। इदं सर्वतत्त्वेभ्योऽधो वर्तते। सर्गकाले मायातत्त्वात् कलादीनि समुत्पन्नानि। तेषु यल्लघु व्यापकं च तदुपरि वर्तते। यद्गुरु व्याप्यं च तदधोवर्ति भवति। पृथिवीतत्त्वात्सूक्ष्मभूतरूपत्वेनाव्यक्तात् कपालद्वययुक्तं ब्रह्माण्डमभिव्यक्तम्। अधःकपालं कृष्णवर्णम्। ऊर्ध्वकपालं लोहितवर्णम्। तयोर्योगः संधिलक्षणः शुक्लवर्णः। तत्र ज्योतिष्मन्तः सवितृप्रधानाः प्रकाशात्मना विलसन्ति। ब्रह्माण्डं बहिर्देशे शतरुद्रैरावृतम्। शतरुद्राः कलाभुवनेशवत् शिवनियुक्ताः, न त्वनन्तादिनियुक्ताः। एतेषां शतं भुवनानि ब्रह्माण्डाद्बहिः वर्तन्ते। ब्रह्माण्डस्यान्तः सत्यलोकाद्याः सप्त लोकाः वर्तन्ते। तदूर्ध्वं चोर्ध्वकटाहभित्तिमध्यलग्नं सप्तलोकनाथस्य श्रीकण्ठरुद्रस्य भुवनं वर्तते। तदधः सत्यलोकः यत्र सर्वलोकपितामहो ब्रह्मा निवसति। तदधः तपोलोको यत्र सनकादियोगिनः, तदधो जनोलोकः यत्र साध्याः, तदधो महर्लोकः यत्रेन्द्राद्याः, तदधः स्वर्लोकः यत्र ध्रुवाद्याः, तदधो भुवर्लोकः यत्रादित्याद्या निवसन्ति। तदधो भूलोकः तन्मध्ये मेरुपर्वतः, तस्य मध्ये ब्रह्मणः स्थानम्। ईशानकोणे ज्योतिष्कं नाम शिखरं, यत्र लोकानुग्रहकारणान्मतङ्गमुनेर्गुरुः श्रीकण्ठः सप्तलोकनाथो निवसति। तत्र पूर्वादिक्रमेण इन्द्राद्यष्टलोकपालानाममरावत्याद्या अष्ट पुर्यः। मेरोरधस्तमेव परिवृत्य सप्तद्वीपा अष्टौ समुद्राश्च वर्तन्ते। इति भूलोकस्य श्रीकण्ठभुवनस्य सप्तभुवनानां च वर्णनम्। भूमेरधः सप्त पातालानि। तलं, वितलं नितलं सुतलं तलातलं रसातलं पातालमिति

तेषां नामानि। तत्र बलिर्नामासुरो रक्षांसि नागा दैत्याश्च कन्यकाभिः सुखिनः क्रीडन्ति। एवं सप्तपातालभुवनं वर्ण्यते। पातालेभ्योऽधः चत्वारिंशदधिकशतं नरकभुवनानि सन्ति। एतेष्वन्तः पापकर्मरतानां नरकविभागलक्षणविमानानामष्टाविंशतिकोटयः सन्ति। ता नरकभुवनशुद्धचैव दीक्षया शोध्याः। एतेभ्यो नरकेभ्य ऊर्ध्वं कूश्माण्डभुवनमेकमस्ति। नरकेभ्योऽधः कालाग्निभुवनं यत्र कालाग्निरुद्रो निवसति। एवं पृथिवीतत्त्वे सप्तपञ्चाशदधिकशतद्वयभुवनानि वर्तन्ते। एतेन सह कलादितत्त्वेषु प्रतिपादितभुवनानां संकलनया चतुःषष्टचधिकशतत्रयं भुवनानि सिद्धानि इत्येतत्पटलार्थसंग्रहः॥

चतुर्विंशे पटले अध्वसंख्या निरूप्यते। तत्र प्रथमतः त्रुटचादियोजनान्तं मानं लौकिकं वर्ण्यते। अधो ब्रह्माण्डभित्तिः कोटियोजना, कालाग्निभुवनं कोटियोजनं, तज्ज्वाला दशकोटियोजना, तद्धूमः पञ्चकोटियोजनः, द्वात्रिंशन्नरका द्वात्रिंशत्कोटियोजनाः, कूश्माण्डभुवनं त्रिंशत्सहस्राधिकनव-. नवतिलक्षयोजनप्रमाणकं, पातालसप्तकं सप्ततिसहस्रयोजनकमिति ब्रह्माण्डभित्तितो भूलोकादधो यावत्पञ्चाशत्कोटियोजनानि, भूलोकात्सत्यलोकान्तम् एकोनचत्वारिंशत्कोटियोजनानि। तत ऊर्ध्वं श्रीकण्ठभुवनं दशकोटियोजनकम्, ऊर्ध्वब्रह्माण्डभित्तिः कोटियोजनेति। पार्थिवं तत्त्वं शतकोटियोजनोच्छ्रितम्। एवं मेरुमवधि कृत्वा चतुर्दिक्षु भूमिवैपुल्यमपि वर्ण्यते। पूर्वतः पश्चिमतः दक्षिणत उत्तरतश्च प्रत्येकं पञ्चाशत्सहस्राणि योजनानि। एवं पार्थिवतत्त्वस्य शतकोटियोजनविस्तीर्णत्वम् (५२६ पृष्ठे १४ अङ्कितां टिप्पणीं पश्यत) पृथिवीतत्त्वभुवनादनन्तरं क्रमेण दशगुणया वृद्धचा अव्यक्तभुवनान्तं मानं ज्ञेयम्। ततो मायाभुवनान्तं शतगुणया वृद्धचा, तत ऊर्ध्वं सदाशिवभुवनं यावत् सहस्रगुणया वृद्धचा, ततः शान्तिभुवनान्तं लक्षगुणया वृद्धचा च मानमवगन्तव्यम्। परमेश्वरस्त्वमेय इति सर्वतत्त्वभुवनानां मानं प्रतिपादितम्॥

पञ्चविंशे पटले सकलाध्वसंहारो निरूप्यते। तत्र तत्त्वभुवनादीनां प्रलयो निरूप्यते। मनुष्याणां कर्मणः जात्यायुर्भोगप्रदस्य परिक्षयात् स्थूलशरीरप्रलयः, विज्ञानयोगसंन्यासैर्भोगाद्वा सर्वकर्मणः परिक्षयात् सूक्ष्मशरीरप्रलयः, तदा तस्य विज्ञानकेवलित्वमिति देहान्ते दृश्यमानस्य प्रलयस्य निरूपणम्। अयं प्रथमः प्रलयः। यदा श्रीकण्ठनाथो जगत् स्वात्मनिष्ठं विश्रामयितुं कालाग्निरुद्रं वह्निरूपेण प्रविश्य तद्द्वारा भूरादिलोकत्रयं दहति, अयं त्रिलोकसंहाराख्यो द्वितीयः प्रलयः। अयमेव कनिष्ठप्रलयः। अयं त्रिलोकसंहारो ब्रह्मणो निशास्वापकालः। पुनर्दिवसे सृष्टिः। एवं जगतः सृष्टिसंहारौ। एवं ब्रह्मणो वर्षशते पूर्णे तस्याप्युपसंहारः मध्यमप्रलयः। इदं ब्रह्मोपसंहारात्मकं श्रीकण्ठरात्रिर्भवति। तदा कालाग्न्यादीनामुपसंहार्यत्वात् यत एव उत्पत्तिः तत्रैव लय इति तत्त्वानामुपसंहृतिं कृत्वा गुणतत्त्वान्तमव्यक्ते लयं करोति। अयं गुणतत्त्वान्तः प्रलयः मध्यमप्रलयः। श्रीकण्ठवर्षसहस्रे पूर्णेऽव्यक्तं मायायां लीयते। अयमेव महाप्रलयः। महाप्रलयोत्तरं शुद्धभुवनेश्वरा अनन्तादिविद्येश्वरा मयागर्भाधिकारिणो श्रीकण्ठादयस्तथा मन्त्राश्च स्वाधिकारं समाप्य युगपदेव परां मुक्तिं गच्छन्ति इत्यपुनरावृत्तिप्रलयः। यदा सदाशिवः निवृत्त्यादिभुवनपञ्चकमुपसंहरन् शिवतत्त्वं याति तदा विचित्रप्रलय इति पञ्चविधाः प्रलयाः निरूप्यन्ते॥

षड्विंशे पटले भोगपदार्थो निरूप्यते। तत्रात्मनां भोगहेतवो धर्माधर्मविपाका निरूप्यन्ते। आत्मनां जात्यायुर्भोगप्रदकर्माणि, उत्तमभुवनप्राप्तौ नरकाद्यधमलोकप्राप्तौ च कारणानि वर्ण्यन्ते। मायोर्ध्वभुवनानां प्राप्तौ आगमोक्तस्य योगस्य, क्रियायाः, चर्यायाः, ज्ञानस्य च साधनत्वम् इति भुवनप्राप्त्युपायो निरूपितः। ज्ञानादिसमुच्चयादेव मोक्षः नैकैकस्मादिति वर्ण्यते। ज्ञानाभिव्यक्तये शिवत्वम् अणुं प्रत्यभिव्यक्तं भवति। तेनाभिव्यक्तज्ञानेन निर्वर्तिताशेषाज्ञानोऽसौ पुरुषः शिववद्भवति जीवन्मुक्त एव भवति। शरीराभावे शिवसम इति च भण्यते।

**एवं विद्यापादार्थसंग्रहः**

## कृतज्ञतानिवेदनम्

एतद्ग्रन्थसंपादनाय मातृका दत्त्वोपकृतवतां मद्रपुरीराजकीयप्राच्यतालपत्रकोशागारस्य, काश्मीरराजकीयग्रन्थालयस्य, कल्कत्तासंस्कृतकलाशालायाः, तिरुपतिश्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयभाण्डागारस्य, देवकोट्टै शिवागमसिद्धान्तपरिपालनसङ्घस्य चाध्यक्षवर्याणां, तथा कीवलूरग्रहारवासिशिवश्री-अक्षयशिवाचार्यपुत्रबालसुब्रह्मण्यशिवाचार्याणां, पलनि शिवश्री-ईशानशिवाचार्यपुत्राणां, तिरुवाडुदुरै शिवश्री-स्वामिनाथशिवाचार्याणां, तिरुवण्णामलै शिवश्री-चिन्नगुरुक्कल् रामलिङ्गशिवाचार्याणां, तथैतत्पुस्तकसंपादनकार्ये सर्वात्मना सर्वास्ववस्थासूपकृतवतां श्रीरामानुजय्यङ्गार्-श्रीसंबन्धशिवाचार्यमहाशयानाम्, उपोद्घातस्य संग्रहात्मना फ्रांसीयभाषायां कृपयानुवादकरणेनोपकृतवतां 'ब्रूनो दजान्स्' महाशयानां च तथा नातिचिरेण ग्रन्थं सुष्ठु मुद्रितवतां श्री-अरविन्दमुद्रणालयाध्यक्षाणां च हार्दिकीं कृतज्ञतां निवेदयामः।

## ग्रन्थसमर्पणम्

वैदिकपरंपरागतग्रन्थविषयविमर्शो मुद्रणादिकार्यं च बहोः कालात्प्रभृति प्रचलति। आगमेषु शाक्तागमविषये 'जान् वुड्राफ' अथवा 'आर्थर अवलन्' इत्याख्येन महाशयेन विरचितो भूरिपरिश्रमो लोकविदित एव। पाञ्चरात्रागमविषये 'श्राडर्' महाशयो मार्गदर्श्यभूत्। अडयार् ग्रन्थालये, तथा तिरुपतिदेवस्थानकार्यालये, तिरुपति केन्द्रीयसंस्कृतविद्यापीठे च वैखानसपाञ्चरात्रग्रन्थाः प्राकाशिषत। यद्यपि पञ्चाशद्वर्षेभ्यः पूर्वं मद्रपुर्यां शिवज्ञानबोधग्रन्थालये ग्रन्थलिप्यां, तथा देवकोट्टै शिवागमसिद्धान्तपरिपालनसङ्घे ग्रन्थलिप्यां देवनागरीलिप्यां च शैवागमग्रन्थप्रकाशने महान् यत्नोऽकारि। तथापि तत्र मातृकाणां प्रकाशनं परं समजनि, न विमर्शसरण्या। ते च ग्रन्थाः प्रायशोऽधुना नोपलभ्यन्ते। एतादृशीं न्यूनतां परिहर्तुकामा अस्मदध्यक्षवरेण्याः श्री 'जान् फिलियोसा' महाशयाः अप्रकाशितानां शैवागमानां विमर्शरीत्या प्रकशनविषये बद्धादराः, तादृशानामागमानां प्रतिकृतिसंग्रहे, प्रकाशने, भाषान्तरीकरणे च मार्गदर्शिनो विलसन्ति। अस्मदागमप्रकाशनेषु प्रथमपुष्पभूते रौरवागमे प्रथमभागे शैवागमविषयोपोद्घाते विषयमिमं विशदीकृतवन्तः। १९५५ क्रैस्तवाब्दे प्रक्रमितेऽस्मिन्ग्रन्थालयेऽधुना द्वाविंशतिवर्षेषु शैवागमसंबन्धिमातृका बहुधा संगृहीताः। एतादृशः संग्रहो न क्वचिदन्यत्र लभ्येत। एतादृशस्यानितरसाधारणस्य कर्मणो मार्गदर्शिनां नेतॄणां प्रोत्साहकानां सर्वेषु समयेषु सहायकानां सहृदयानां विद्वदग्रेसराणामस्मदध्यक्षवर्याणां कृतज्ञतापूर्वकं कृतिमिमां समर्पयामः।

श्रीमाता सा भूयान्मातङ्गी पारमेश्वरी जगताम्।<br>
श्रीमत्कटाक्षितामृतमनिशं सर्वत्र संप्रवर्षन्ती॥

# एतद्ग्रन्थसंपादनोपयुक्तमातृकासूची

अ. अस्मद्ग्रन्थालयपत्रात्मकहस्तलिखितमातृका । अङ्कः टि. ६१ । इयं मातृका मद्रपुरी-राजकीयप्राच्यतालपत्रकोशागारे विद्यामानायाः आर्. १४३४१ अङ्कितायाः मातृकायाः प्रतिकृतिः । अस्यां मातृकायां प्रथमपटलादारभ्य दशमपटले २५ श्लोकवृत्तिपर्यन्तं, सप्तदशपटले २५ श्लोकोत्तरार्धवृत्तेरारभ्य अष्टादशपटले १ श्लोकपूर्वार्धवृत्तिपर्यन्तं, तत्रैव ४० श्लोकवृत्तेरारभ्य षड्विंशे पटले ४१ श्लोकवृत्तिपर्यन्तं वृत्तिः केवलं विद्यते ।

आ. कीवलूर् – अ. बालसुब्रह्मण्यशिवाचार्यगृहे विद्यमाना तालपत्रात्मिका ग्रन्थलिपिमयी मातृका। अस्यां मातृकायां प्रथमपटलादारभ्य दशमपटले २५ श्लोकवृत्तिपर्यन्तं, सप्तदशपटले २५ श्लोकोत्तरार्धवृत्तेरारभ्य अष्टादशपटले १ श्लोकपूर्वार्धवृत्तिपर्यन्तं, तत्रैव ४० श्लोकवृत्तेरारभ्य विद्यापादान्तं वृत्तिः केवलं विद्यते ।

इ. पलनि – ईशानशिवाचार्यगृहे विद्यमाना ग्रन्थलिपिमयी पत्रात्मिका प्रतिकृतिः। अस्यां मातृकायाम् अष्टादशपटलादारभ्य विद्यापादान्तं वृत्तिः केवलं विद्यते।

ई. देवकोट्टै शिवागमसिद्धान्तपरिपालनसङ्घे विद्यमाना ग्रन्थलिपिमयी तालपत्रात्मिका मातृका । पटलादिविवेकः 'आ' मातृकावत् ।

उ. देवकोट्टै शिवागमसिद्धान्तपरिपालनसङ्घे विद्यमाना ग्रन्थलिपिमयी पत्रात्मिका प्रतिकृतिः । पटलादिविवेकः 'आ' मातृकावत्, परं त्वस्यां मातृकायां मूलश्लोका अपि विद्यन्ते।

ऊ. काश्मीरराजकीयग्रन्थालयाल्लब्धा छायात्मिका प्रतिकृतिः । अङ्कः ८५२ । शारदालिपिमयी । अस्यां मातृकायां द्वितीयपटले षोडशश्लोकवृत्तेरारभ्य विद्यापादान्तं मूलश्लोकैः सह वृत्तिर्विद्यते । मध्ये मध्ये पत्राणि लुप्तानि ।

ऋ. काश्मीरराजकीयग्रन्थालयाल्लब्धा छायात्मिका प्रतिकृतिः । अङ्कः ८४० । शारदालिपिमयी । पटलादिविवेकः 'ऊ' मातृकावत् ।

ॠ. काश्मीरराजकीयग्रन्थालयाल्लब्धा छायात्मिका प्रतिकृतिः । अङ्कः १०११ । शारदालिपिमयी । अस्यां मातृकायां द्वितियपटले षोडशश्लोकवृत्तेरारभ्य षष्ठपटले ७४ तम श्लोकवृत्तिपर्यन्तं मूलश्लोकैः सह वृत्तिर्लभ्यते । मध्ये मध्ये पत्राणि लुप्तानि ।

ऌ. अस्मद्ग्रन्थालयपत्रात्मकहस्तलिखितमातृका । अङ्कः टि. ५१७। तिरुवण्णामलै रामलिङ्गशिवाचार्यगृहाल्लब्धायाः ग्रन्थाक्षरतालपत्रमातृकायाः प्रतिकृतिः । प्रथमपटलादारभ्य चतुर्थपटले एकादशश्लोकवृत्तिपर्यन्तं वृत्तिः केवलं विद्यते।

ए. अस्मद्ग्रन्थालयपत्रात्मकहस्तलिखितमातृका। अङ्कः टि. २६३ । श्रीवेङ्कटेश्वरप्राच्यपरिशोध-

नालयभाण्डागारीयमातृकायाः प्रतिकृतिः। पटलादिविवेकः 'आ' मातृकावत्।

ऐ. कल्कत्ताराजकीयसंस्कृतकलाशालातः समानीता छायात्मिका प्रतिकृतिः। देवनागरीलिपिमयी। अस्यां मातृकायां प्रथमपटलादारभ्य विद्यापादान्तं वृत्तिः केवलं विद्यते। क्वचित्-क्वचिन्मूलश्लोकाश्च वर्तन्ते।

ओ. अस्मद्ग्रन्थालयपत्रात्मकहस्तलिखितमातृका। अङ्कः टि. १८६। मद्रपुरीराजकीयप्राच्यतालपत्रकोशागारे विद्यमानायाः आर्. १६७९४ अङ्कितायाः प्रतिकृतिः। अस्यां मातृकायां पादचतुष्टयस्यापि मूलश्लोकाः परं विद्यन्ते। चर्यापादोऽपूर्णः।

औ. तिरुवाडुदुरै — श्री. स्वामिनाथशिवाचार्येभ्यः प्राप्ता ग्रन्थलिपिमयी तालपत्रात्मिका मातृका। पटलादिविवेकः 'आ' मातृकावत्।

## सङ्केतसूची

मु. शिवागमसिद्धान्तपरिपालनसङ्घेन १९२४ क्रैस्तवाब्दे प्रकाशितम्।

पू०. श्लोकानां पूर्वार्धम्

उ०. श्लोकानामुत्तरार्धम्

# मतङ्गपारमेश्वरम्

भट्टरामकण्ठवृत्तिसहितम्

## विद्यापादः

## प्रथमः पटलः

## उपोद्‌घातप्रकरणम्[1]

[2]मतङ्गवृत्तिः

ओमितिकरेण[3] [4]विश्वं [5]निषेधविधिदंष्ट्रयोः समारोप्य[6] ।
[7]नियमयति यः समस्तं[8] नमोऽस्तु विघ्नेश्वराय तस्मै प्राक् ॥

[9]याभ्यां प्रकाशितं [10]वर्त्म सिद्धान्ते सिद्धभावतः[11] ।
गुरूणामपि तौ वन्द्यौ सद्योज्योतिबृहस्पती[12] ॥

प्रोतुङ्गमत्तमातङ्गस्कन्धपृष्ठप्रकाशितम्[13] ।
सर्वेश्वरं [14]ततो वन्दे श्रेयोलाञ्छनमव्ययम् ॥

कैश्चिद्वेदेऽनुनीतः[15] [16]कुलदृशि तु [17]परैर्न्यायदृष्टावथान्यै[18]-
स्त्यक्त्वा सिद्धान्तसिद्धं[19] [20]गुरुवरगदितं वर्त्म नीतः [21]कुमार्गे ।

---

[1] श्रीमत्कल्पगणेशानं भजतां वाञ्छितप्रदम् । पार्वतीहृदयाम्भोधिचन्द्रं वन्दे शिवात्मजम् ॥ श्लोकोऽयमादौ 'लृ' कोशे अधिकः ।; गजाननाय महसे प्रत्यूहतिमिरच्छिदे । अपारकरुणापूरतरङ्गितदृशे नमः ॥ श्लोकोऽयमादौ 'ओ' कोशे अधिकः ।

[2] मतङ्गपारमेश्वरवृत्तिः — ए.

[3] कारेण — ई; करणे — उ; कारेणेदं — उ. पाठान्तरम्; करण — लृ.

[4] विश्र — अ; विश्व — ए.

[5] निजनिषेधविधि० — उ. पाठान्तरम् ।

[6] ०दंष्ट्राद्व...समा...प्य — अ, आ.

[7] नियम इति — अ, आ.

[8] अत्र 'तस्मै' इत्यधिकम् — अ, आ, ई.

[9] अयं मङ्गलश्लोकः श्रीरामकण्ठकृतमोक्षकारिकावृत्तावपि दृश्यते ।

[10] पद्मसिद्धान्ते — अ.

[11] भावितः — ऐ.

[12] ज्योतिं बृहस्पतिम् — अ, आ; ज्योतिर्बृहस्पति — ए; ज्योतिं बृहस्पतिः — ऐ.

[13] स्कन्दस्पृष्टप्रकाशितम् — ऐ.

[14] तदा — अ, आ, ई.

[15] ०द्वेदेन मितः — अ, ए; द्वेद्येऽनुनीतः — ऐ.

[16] कलद्रशि — अ, ए; कुलरुषि — ऐ.

[17] परे न्याय० — लृ.

[18] ०पथान्यै — आ; ०प्यथान्यै — लृ.

[19] '०त्यक्त्वा सिद्धान्तसिद्धं' इति अ कोशे लुप्तम् ।

[20] सुरवर० — ए.

[21] कुमार्गैः — अ, ए.

★

मातङ्गोऽयं [1]यतोऽतः कुमतिविहतये येन [2]वृत्त्यङ्कुशेन
[3]क्षेप्तुं मार्गे [4]प्रवृत्तास्तदिह [5]ननु वयं ग्रन्थविद्भिः परीक्ष्याः ॥

त्यक्त्वा पदान्यत्र तथापदार्थं सूत्रान्वयं स्वागमवर्तिनं[6] च ।
[7]व्याख्यातृलोको हि [8]गतः कुतर्कैर्वृत्तिः प्रवृत्तेयमतः पदादौ ॥

[9]पाठभेदोऽत्र साधुर्वा तदन्यो वा न मूलतः ।
किं त्वध्येतृभ्रमात्तेन तत्प्रदर्शनमज्ञता ॥

[10]अथैकः पुस्तकेभ्योऽसौ पाठो ग्राह्यो विचार्य चेत् ।
साधुरेव तु संग्राह्यः[11] साधूनामपि [12]भावतः ॥

ततश्च [13]पाठभेदेभ्यः प्रोद्धृतैः साधुभिः पदैः ।
तदभावाद्युक्त[14]मन्यैस्तन्त्रमेतत्प्रकाश्यते ॥

[15]**अथाणोरित्यादि** [16]तत्तन्त्रं, किंस्वरूपो [17]मतङ्गः, पारमेश्वरमपि [18]येनेदमुपलभ्यते, किं च कृत्वा, कुतश्च [19]तेनैतदवाप्तम् इत्याकाङ्क्षाव्यावर्तनाय **हिमवत्यचल** इत्यादि प्रकरणम्। पुरुषमात्रागोचरदेशविशेषावस्थानेनापि मतङ्गमुनेरत्रातिशयः प्रतिपाद्यत इति वक्ष्यामः[20]।

[21]अन्ये तु प्रथममेवोत्सूत्रमस्य शास्त्रस्य[22] लाकुलमौसलादिभ्यः[23] शैवत्वेन विशेषं, [24]तत्रापि च स्रोतोऽन्तरेभ्यो [25]वामदक्षिणगारुड[26] भूततन्त्रेभ्यः सिद्धान्ततया [27]वर्णयन्ति। तदयुक्तं, [28]सूत्रैरेवास्यार्थस्य

---

[1] व्यतात — अ; ततोऽतः — ऐ.
[2] प्रत्यङ्कुशेन — अ, आ, ई, उ.
[3] क्षेत्तुं — अ, ए.
[4] प्रवृत्तस्तमिह — ऐ.
[5] न तु — ऐ.
[6] वर्तनं — आ, ई, उ, लृ, ए.
[7] व्याख्यातृलोकोऽभिहितः — उ; व्याख्यातलोके हि — ऐ.
[8] कृतप्रतर्कैः — ऐ.
[9] पाठे भेदो — आ, ई, उ.
[10] अथैकवस्तर्केभ्योऽसौ — अ, लृ; अक्षैकपुस्तकेभ्योऽयं — ऐ.
[11] सद्ग्राह्यं — ऐ.
[12] भानतः — अ, आ, ई, उ, लृ, ए.
[13] पाठभेदे यः — अ, ए, ऐ.
[14] ०मन्यैश्शास्त्रमेत० — ऐ.
[15] मतङ्ग० विद्या० २. १.
[16] तन्त्रं तत् किंस्वरूपो — आ, ई, उ; तन्त्रं तत् किंस्वरूपं — ए; तत् किं स्वरूपो — ऐ.
[17] मतङ्गपारमेश्वरमपि — अ, ए; मतङ्गः पारमैश्वरमपि — ऐ.
[18] येनैतदुप० — ऐ.
[19] तेनैतद्व्याप्तम् — अ, लृ; तेनैतदाप्तम् — ए.
[20] मतङ्ग० विद्या० १. ४ उत्तरार्धवृत्तौ.
[21] अन्ये तत् प्रथम० — ए.
[22] ०मवशास्त्रस्य — अ; ०मत्र शास्त्रस्य — उ.
[23] लागुकुलं मौसलादिभ्यः — अ, ए; लाकुलसौमादिभ्यः — ऐ.
[24] तत्रापि स्रोतो० — ए; तत्रापि च तस्रोतरेभ्यो — ऐ.
[25] वामदत्तण० — अ.
[26] ०गारुढ० — अ, आ, ई, उ.
[27] वर्णयति — अ.
[28] सूत्रैरेवासाध्वर्थस्य — अ.

वक्ष्यमाणत्वात्[1]। [2]अथोपक्रमशोभार्थमवश्यमेव प्रसङ्गमुत्पाद्य, उत्सूत्रतया [3]कलकलः कार्यः। तदन्योऽप्यन्यथा बहुतरं [4]करिष्यतीति यत्किंचिदेतत्।

तर्हि संबन्धप्रयोजनादीन्यत्र वक्तव्यानि। न। तान्यपि यथाक्रमं सूत्रैरेव वक्ष्यमाणानि[5] यतः। तथाप्यादौ प्रवृत्तिहेतुत्वेन व्याख्यातृभिर्वाच्यानीति चेत्। सत्यम्। यदि सूत्रकारात्तेषामतिशयः स्यात्, ततस्तस्याव्याप्तिपरिहाराय ते तान्यत्र कथयेयुः।

स तु सर्वज्ञः कथं पुरुषमात्रगोचरं वस्तु न पश्येत्। यदाहुः — "[6]अस्मदद्दृश्यं न पश्येद्धि कथं न्यायसहस्रदृग्" इति। तेन [7]त्वादावत्र [8]तान्यकथयता, एतज्ज्ञाप्यते[9]। [10]नात्र तर्कशास्त्रादाविव[11] संबन्धप्रयोजनादिप्ररोचनतः[12] स्वमनीषिकया प्रवृत्तिः। अपि तु [13]शास्त्रचोदितत्वेन अवश्यकर्तव्यतया गुरुवाक्यादेव गुरूपसदनात्[14] [15]प्रभृति सर्वत्र तैः प्रवर्तितव्यमित्यादौ तदुपन्यासोऽनुपयोगीति। यत्र तु न [16]निबद्धानि [17]तानि तत्राप्यवश्यकर्तव्यतया आदौ वक्तव्यानि [18]यतः। [19]यद्वक्ष्यति चर्यायामध्ययनप्रकरणे[20] — "ततोऽस्य गुरुणा [21]वाच्यः संबन्धः शक्तिपूर्वकृद्" इति।

**हिमवत्यचले रम्ये सिद्धचारणसेविते।**
**नानाश्चर्यगुणोपेतं[22] शिखरं चारु निर्मलम् ॥१॥**

तत्र हिमवान् पर्वतो वर्षाचलत्वेन प्रसिद्ध एव। [23]स च रम्यो भगवतोमापतिना श्वशुरत्वेनानुगृहीतत्वतः। [24]पवित्रतयापि रम्यो यतः। अत [25]एवासौ सिद्धैः देवविशेषैः, चारणैश्च नारदादिभिः सेवितः[26]। तत्र तथाभूते पर्वते अधिकरणे नानाभूतैः सिद्धदर्शनादिभिः [27]आश्चर्यैः, नानाभूतैश्च [28]अशीतानातपादिभिः गुणैरुपेतं **शिखरम्** अस्तीत्यध्याहारः। तच्च **चारु** विशिष्टसंनिवेशवत्त्वेन[29]

---

[1] मतङ्ग० विद्या० १. ३० उ० — ३३ पू० वृत्तौ; २. १, २ पू० वृत्तौ च।
[2] अथो वक्त्रशोभार्थ० — ए.
[3] कलः कलः — ऐ.
[4] कर्ष्यतीति — ई, उ.
[5] मतङ्ग० विद्या० १. ५ — २६ श्लोकैः।
[6] अस्मददृश्यं — अ, आ, ई, उ, लृ; अस्मदृश्यं — ए; अस्मदृश्या — ऐ.
[7] तु आदौ वक्तृ — अ.
[8] तान्यकथयत्तैः तत् — अ; तान्यकथयेयान्यथैतत् — ऐ.
[9] ज्ञास्यते — ए.
[10] नात्रातर्क० — ऐ.
[11] शास्त्रादिव — अ.
[12] प्रयोजनतः — ऐ.
[13] शास्त्रवेदतत्त्वेन — अ.
[14] गुरुवाक्यगुरूपसदनात् — ऐ; "गुरूपसदनात्प्रभृति गुरुवाक्यादेव सर्वत्र प्रवर्तितव्यम्। नान्यत इति" इति किरणागमवृत्तौ विद्यापादे प्रथमपटलोपक्रमे दृश्यते।; वाक्यमिदमघोरशिवाचार्यैः मृगेन्द्रवृत्तिदीपिकायाम् (९ पृष्ठे) 'यदुक्तमाचार्यैरपि' इत्युपक्रम्योदाहृतम् ॥
[15] प्रहृतः — अ.
[16] निबन्धानि — ए, ऐ.
[17] 'तानि' इति नास्ति — ए.
[18] 'यतः' इति नास्ति — ऐ.
[19] यथा यद्वक्ष्यति — आ, ई, उ, लृ, ए, ऐ.
[20] मतङ्ग० चर्या० समयादिपटले ५९उ०
[21] वाच्यसंबन्धः — ऐ.
[22] गुणोपेते — मुद्रितपाठः; उ.
[23] स्वचरण्यो — ऐ.
[24] पवित्रतया अभिगम्यो — अ, आ, ई, उ, लृ, ए.
[25] एव चासौ — ऐ.
[26] सेव्यते — ऐ.
[27] आचार्यैः — ऐ.
[28] शीतानातपा० — ऐ.
[29] संनिवेशत्वेन — अ, आ, ई, उ, ए; संनिवेशित्वेन — ऐ.

सुशोभनत्वात् । न [1]श्वभ्रतुच्छाद्युपहतमित्यर्थः । [2]स्फटिकमयत्वेन दीप्तिमत्त्वाच्च । [3]निर्मलं पांसुकर्दमकण्टकादिना, दंशादिभिः कीटैः, देहारम्भकेन[4] च मलेन शून्यम् ॥१॥

किं च तथाभूतं तच्छिखरम् —

**[5]सिद्धीनामुद्भवो यत्र यत्र नाप्यपमृत्यवः ।**
**यत्रान्योन्यविरुद्धानां प्रीतिर्भवति तत्क्षणात् ॥२॥**

**सिद्धीनामुद्भवो[6] यत्रेति** सिद्धिशब्देनात्र[7] [8]लक्षणया 'आयुर्घृतम्'[9] इतिवत् [10]सिद्धिकारणानि [11]अञ्जनपादुकाचिन्तामण्यादीनि द्रव्याण्युच्यन्ते । तासाम् **उद्भवो[12] यत्र भवतीति** वक्ष्यमाणक्रियान्वयः । तदुद्भूतानां [13]त्वन्य[14]त्रोपयोगः । तत्र कामवृक्षायोगादित्यर्थः[15] । न [16]त्वणिमादयः प्राप्त्यादयो वा । तेषां शरीरकरणयोरेवोद्भवात्[17] । यद्वक्ष्यति[18] —

"[19]त्रितयं कार्यतः सिद्धमैश्वर्यमणिमादिकम् ।
प्राप्त्यादयो गुणाः पञ्च योगिनः करणात्मजाः ॥" इति ।

नापि च तत्तद्भुवनेश्वरत्वं, तस्य तेष्वेव [20]भुवनेषु संभवात् । न च **यत्रेति** पदमत्र[21] यत्रस्थे पुंसीत्येवं लक्षणयास्त्विति वाच्यम्[22] । यच्छब्दस्यात्र [23]विशेष्यत्वम् । अतः प्राधान्येन लक्षणात्वायोगात् । अन्यथा [24]आयुर्घृतमित्यादावपि पदान्तरलक्षणायाः संभवादनवस्था । किं च **यत्र नाप्यपमृत्यवः** अपमृत्यवोऽकालमरणानि[25] [26]अप्रकृष्टस्तु मृत्युः अपमृत्युः । "[27]शतायुर्वै पुरुष" इति श्रुतेः । बहुत्वं तु तेषां हेतुभेदात्[28] । अपिशब्दात् तद्धेतवः समस्त[29]वैद्याचिकित्स्या ज्वरादयो रोगाः[30] । [31]पूर्व-

[1] स्वस्व श्वभ (शुभ्र ?) तुषाराद्यपहत० — ऐ.
[2] अत्र 'न त्वणिमादयः प्राप्त्यादयो वा' इत्यधिकम् — अ
[3] निर्मलं च पांसु० — आ, ई, उ, ए, ऐ; निर्मलं च पांशु० — ऌ.
[4] ०रम्भे केन — आ; रम्भकत्वेन — ए.
[5] सिद्धाना० — ओ.
[6] ०मुद्भावो — अ, ऐ.
[7] ०शब्दो नात्र — आ, ई, उ.
[8] लक्षणया युतं इति० — अ.
[9] आयुर्घृतमिति न्यायः लौ० न्या० साहस्री. १९३.
[10] सिद्ध० — अ.
[11] खड्गञ्जनपादुका० — आ; खड्गाञ्जनपादुका० — ई, उ, ऌ; वत्माञ्जनपादुका० —ए; खड्गकाञ्चनपादुका० — ऐ.
[12] ०मुद्भावो — अ.
[13] चान्य० — ए.
[14] ०त्रोपपादादितयोगस्तत्र तत्र — ऐ.
[15] ०वृक्षायोगादि इत्यर्थः — अ; ०वृक्षयोगादित्यर्थः — ऌ; ०त्यक्षयोगादित्यर्थः — ए; ०वृक्षयो... दीत्यर्थः — ऐ.
[16] त्वसमादयः प्राप्यादयो — ऐ.
[17] . . . योरेवोद्भावात्—अ; करणयोरुद्भावात्— आ, ई, उ, ऌ, ऐ; करणयोरुद्भवात् — ए.
[18] मतङ्ग० विद्या० १७. ११४.
[19] तृतीयं — अ.
[20] भुवनेषूद्भवात् — आ, ई, उ, ए, ऐ.
[21] 'अत्र' इत्येतन्नास्ति — ऌ.
[22] ०यास्त्वित्येव वाच्यम् — ए.
[23] विशेषत्वम् — अ.
[24] आयुर्घृतमिति न्यायः—लौ०न्या० साहस्री. १९३.
[25] अत्र इतिशब्दोऽधिकः — ए.
[26] अपृष्टस्तु — अ; अमृष्टस्तु — आ, ई, उ, ऌ, ए; अवमृष्टस्तु — ऐ.
[27] तै. ब्राह्म० ३. ८. १५. ३.
[28] हेतौ भेदात् — ऐ.
[29] ०वैद्य० आ, ई, उ.
[30] ०चिकित्स्या जरादयो रोगाः — अ; ०चिकित्सादयो रोगाः — ऐ.
[31] पूर्वं स्याद्धि — ऐ.

स्माद्धि [1]दुष्कृतात्, इदानीं वा अनायुष्यकर्मानुष्ठानेन वा आर्जितात् पुंसां ते भवन्ति। तत्र स्वर्गादाविव सुकृतस्यैव भोग्यत्वान्नैव ते भवन्तीति [2]प्राग्वद्वचनव्यत्ययेन [3]संबन्धः। किं च यत्र शाश्वतिकविरोधभाजोऽपि तिर्यग्जातयो विरोधं परिहरन्ति। एतद्धि [4]परं सिद्धिक्षेत्रलक्षणम्। यदाहुः[5] — "तत्संनिधौ वैरत्याग" इति ॥२॥

अन्यच्च —

**मूर्खोऽप्यमूर्खतां याति भयाद्भीतो विमुच्यते[6]।**
**यत्र नास्त्युपसर्गाणां प्रवेशः शिखरोत्तमे ॥३॥**

[7]**मूर्खो**ऽत्यन्तानवगतशास्त्रानुष्ठानोऽपि **यत्र** समाचारमात्रदर्शनाद् **अमूर्खतां** शास्त्रार्थानुष्ठाननिष्ठतां[8] **यातीति**। अत्यन्तक्रियानुष्ठाननिष्ठस्तत्र जन इत्यर्थः। **अपि**शब्दस्य "अपि पर्वतं शिरसा [9]भिन्द्याद्" इतिवत् [10]संभावनार्थत्वात्। न तु मूर्खस्य तत्र जन्म प्रवेशो [11]वा संभवति, दिव्यभूमित्वात्। भयं त्रिविधं, निमित्तभेदात्। तत्र आधिदैविकस्य शीतातपादिहेतोः, आधिभौतिकस्य च अहिकण्टकादिजन्यस्य प्रागसंभवः प्रोक्तः। अधुना आध्यात्मिकस्य मनोमात्राश्रितस्य अभाव उच्यते। तद्धि [12]सत्त्ववृत्तिपरिक्षयान्मनसो[13] [14]भवति। [15]अत्र तु तत्परिपोषात्तस्याप्यभावः। [16]न तु संसारस्यात्र भयत्वं व्याख्येयम्। [17]दीक्षाद्युपायं विनेह क्षेत्रसामर्थ्यान्मोक्षासिद्धेः। **उपसर्गाः** विघ्नाश्च तेषां दिव्यभूमित्वात्तत्र **प्रवेश एव नास्ति**। कुतः [18]स्वकार्यकर्तृत्वम् ॥३॥

तथाभूतानि च बहूनि हिमवतः शृङ्गाणि श्रूयन्ते। [19]तद्विशेष्यते — 'यत्र संनिहितो नित्यम्' इति।

**यत्र संनिहितो नित्यं भगवान् परमेश्वरः।**

परमश्चासौ ब्रह्मादिभ्यः ईश्वरश्च[20] ब्रह्माण्डान्तराधिकाराद् उमापतिरेव। स एव [21]यतोऽत्र मतङ्गमुनिनाराध्यो गुरुश्च। [22]वक्ष्यति [23]भूलोकप्रकरणे मेरुनिरूपणायाम् —

---

[1] दुष्कृता वानायुष्य० — ऐ.
[2] पृथग्वचन० — उ; प्राग्वचन० लृ.
[3] संबद्धः — ए.
[4] वरं — अ.
[5] योगसू० २. ३५.
[6] भीतोऽधिमुच्यते — उ; भीतोऽपि मुच्यते — ओ.
[7] .... वात्यन्तरनवगत० — अ; ... त्यतोऽनवगत० — लृ.
[8] ०ष्ठाननिष्ठता—अ; ०ष्ठानज्ञाननिष्ठतां—ऐ.
[9] भिम्यादितिवत् — ए; भिबन्द्यादितिवत् —ऐ.
[10] संभवात् — अ; संभवानर्थत्वात् — आ; असंभावनाहितार्थत्वात् — ऐ.
[11] ०ऽवश्यं भवति — ए.
[12] तत्त्ववृत्ति० — ऐ.
[13] परीक्षया मनसो — अ; परीक्षायां मनसो — आ, उ, ए; परीक्षयान्मनसो — ई; परीक्षयात्ममनसो — ऐ.
[14] भवन्ति — अ.
[15] तत्र — आ, ई, उ, लृ, ए, ऐ.
[16] न त्वसंसारः० — ऐ.
[17] दीक्षाद्युपायमपि नेह सामर्थ्यात् — अ.
[18] 'स्व' इति नास्ति — ऐ
[19] तद्विशिष्यते — अ, आ, ई, उ, लृ, ए.
[20] 'ईश्वरश्च' इत्यनन्तरम् 'असौ' इत्यधिकम्—ऐ.
[21] यतो यतोऽत्र — आ.
[22] यद्वक्ष्यति — ऐ.
[23] ते लोकव्यवहारेण मेरु० — ए.

[1]"पूर्वोत्तरे तु दिग्भागे[2] ज्योतिष्कं शिखरं महत्।
[3]तत्राहं मुनिशार्दूल लोकानुग्रहकारणात्॥
कृताधिवास" इति।

ततस्तद् [4]हिमवदन्तर्व्यवस्थिततत्वात् कैलासाख्यमेरुशिखरम्[5]। यद्वा काश्मीरेषु [6]हरमकुटाभिधानमेव। यदुक्तं **वायुपुराणे**[7] —

"यत्र खात्पतिता गङ्गा कालो यत्र पराजितः।
सिद्धाः सप्तर्षयो यत्र यत्र नित्यं स्थितो हरः॥" इति।

[8]सर्वं तल्लक्षणं तत्रैव विद्यते। भगवता [9]नन्दीश्वरदेवेन तत्रैव [10]कालोऽपि निर्जितो यतः।

अथ तथाभूते शिखरोत्तमे किमित्युच्यते—

**तत्रासौ मुनिशार्दूलस्तपसोत्कृष्टमूर्तिमान्॥४॥**

**तत्रासौ** मतङ्ग[11]मुनिरासमन्ताच्चिरकालव्यापकत्वेन समाधौ स्थितः। ततस्तादृशदिव्यदेशावस्थिततत्वाद् नासौ[12] सामान्यपुरुषः। अपि तु मुनीनां शार्दूलः सिंहः। प्रकृष्टतर इति गम्यते।

अपि [13]च तपः कृच्छ्रचान्द्रायणादिकं शरीरसंतापात्मकं, तेन हेतुना उत्कृष्टा चासौ निवृत्तपाप्मा[14] [15]मूर्तिश्च सा विद्यते यस्य। ततश्च[16] [17]शरीरोत्कर्षत्वादप्युत्कृष्टः॥४॥

'ज्ञानाग्निदग्धकलुषः' इत्यादि।

**ज्ञानाग्निदग्धकलुषो वृत्ताम्भःक्षालितात्मवान्।**
**शिवध्यानैकचित्तात्मा समाधावास्थितः सुधीः॥५॥**

अत्र ज्ञानम् "[18]आत्मा ज्ञातव्यः" इत्यादिश्रुतिसिद्धमात्मविषयमेव। वस्तुतो मतङ्ग[19]मुनेर-

---

[1] मतङ्ग० विद्या० २३. ५७, ५८ पू०
[2] 'दिग्भागे इत्यनन्तरं 'तद्' इत्यधिकम् — अ, ई, उ.
[3] तत्राह — आ .
[4] हिमवदन्तव्यवस्थिततत्वात् — अ, ई, उ; हिमवदन्तेऽप्यवस्थिततत्वात् — लृ.
[5] ०मेव शिखरम्। — अ, आ, ई, उ, लृ, ऐ.
[6] हरमुकुटा० — अ, ऐ; हारमुकुटा० — आ.
[7] वायुपुराणे ३० तमेऽध्याये ९१, ९२ श्लोकयोर्गङ्गानन्दिकेश्वरप्रस्तावो दृश्यते। किंतु तत्र न चायं श्लोको लभ्यते। शिवमहापुराणे वायुसंहितायामुत्तरभागे ४० तमेऽध्यायेऽपीयं कथा दृश्यते।
[8] सर्वलक्षणम् — ए.
[9] नन्दीश्वरेण — लृ
[10] कालोऽतिनिर्जितः — अ, आ; कालो निर्जितः — ई, उ, लृ, ए, ऐ.
[11] ०मुनिः समन्ता० — अ.
[12] ०दिव्यभूमित्वान्नासौ — उ.
[13] चातप (प्त?) कृच्छ्र — ऐ.
[14] ०पापा — आ, ए, ऐ; ०पाप — ई, उ.
[15] मुक्तिश्च सा विद्यते — अ, लृ; मूर्तिश्चासौ विद्यते — आ.
[16] चशब्दो नास्ति — अ.
[17] शरीरोत्कर्षादप्युत्कृष्टः — अ; शरीरोत्कृष्टत्वादप्युत्कृष्टः — ए.
[18] बृहदारण्य० २. ४. ५. 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यस्य उपनिषद्वाक्यस्यानुवादरूपोऽयमिति भाति।
[19] मुनेरनुदीक्षित० — अ.

दीक्षितत्वेनात्र [1]शैवेऽनधिकारादिति दर्शयिष्यामः[2]। तदेवाग्निः, तेन ज्ञानाग्निना दग्धः कलुषः अनात्मन्यात्माभिमानरूपो मोहो येन। ततश्च प्राप्तात्म[3]ज्ञानत्वादसौ[4] उत्कृष्टः।

किं च वृत्तमिति शास्त्रीयो नियमो [5]नित्यानुष्ठानविषयः [6]अक्रोधादिविषयश्च चित्तधर्मः संकल्पः, तदेवाम्भः, तेन क्षालितश्चासौ आत्मा [7]च अनात्मन्यात्मा[8]भिमानः स विद्यते यस्य। ततश्च [9]यमनियमैकनिष्ठचित्तत्वादपि उत्कृष्टः।

अपि च **शिवध्यानैकचित्तात्मा** परिणतमलः। न ह्यन्यथा शिवैकनिष्ठो भवतीति। यच्छ्रूयते[10]—"क्षीणे तस्मिन् [11]यियासा स्यात्परं निःश्रेयसं प्रति" [12]इति। तस्य हि परिणतमलत्वेन शक्तिपातवशादेवंविधा मतिः संजाता—"सोऽहम् [13]'आत्मा [14]ज्ञातव्य' इत्यादिश्रौतक्रमेण लब्धस्वात्मसंबोधोऽपि[15] [16]कार्यकरणाद्युपायं विना विषयबोधाशक्तेरस्वतन्त्रो [17]बन्धान्तरेण [18]बद्धमिवात्मानमुपलक्षयामि। यतः श्रुत्यादिसिद्धस्तावद्[19]बन्धोऽनात्मन्यात्माभिमानात्मको मम नास्त्येव। नापि प्रकृत्यात्मकः, [20]कर्मरूपो वा। तयोरपि तन्मूलत्वात् [21]तदभावे [22]बन्धत्वासिद्धेः। [23]तस्मात्तद्व्यतिरिक्तोऽन्यः कश्चिद् दृक्शक्तेरावारकैकस्वभावः[24] चक्षुःशक्तेः पटलादिवद्बन्धोऽस्ति। यदुपरुद्धत्वान्मलोच्छेदेऽपि[25] सर्वज्ञत्वं न [26]प्रभवति। न चासौ [27]तन्निवृत्त्यु[28]पायः श्रुत्यादिदर्शनसिद्धः। [29]येनास्मदादिभिर्निवर्तयितुं शक्यं स्यात्। [30]तद्यावत् कर्मक्षयतः [31]कार्यकारणाभावेन, प्रत्युत [32]ममात्मज्ञत्वमेव [33]पर्यवस्यति। तावदेव [34]सेवयैव एतच्छिखरनिवासिनं भगवन्तमुमापतिमाराध्य,

---

[1] शैवे न तु अनधि० — अ; शैवेत्यनधि० — लृ; शैवेनाधि० — ए, ऐ.

[2] मतङ्ग० विद्या० १. २७, २८ पू० वृत्तौ.

[3] ०ज्ञानरूपत्वा० — ई, उ.

[4] ०दप्यसौ — लृ, ऐ.

[5] नित्याद्यनु० — ई, उ, लृ, ए, ऐ.

[6] क्रोधादि० — अ, लृ.

[7] च नात्मन्यात्मा० — अ; नात्मन्यात्मा० — ऐ.

[8] ०भिमानलक्षणः स — आ, ई, उ, लृ, ए.

[9] यं नियमैक० — इ, उ; समनियमैक० — ए.

[10] स्वायम्भुवे ३२. १७ उ०

[11] धियासा — अ.

[12] इतिशब्दो नास्ति — आ.

[13] बृहदारण्य० २. ४. ५.

[14] वेद्य इत्यादि — आ, ई, उ, लृ, ए.

[15] ०स्वात्मबोधोऽपि — ई, उ; ०संबोधेऽपि — ऐ.

[16] कार्याद्युपायं — ई, उ.

[17] बद्धान्तरेण — ए.

[18] बन्धमिवा० — अ.

[19] बन्धो नात्मन्यात्माभि० — अ, आ, ए; बन्धो नात्माभि० — ई, उ.

[20] कर्मरूपोपपातयोरपि — अ; कर्मस्वरूपो वा तयोरपि — आ, ई, उ, ए;

[21] ते भावे — ऐ.

[22] बद्धत्वा० — ई, उ.

[23] तस्माद्व्यति० — आ.

[24] ०रावरकस्वभावः — आ, ई, उ; ०रावारकस्वभावः — ए.

[25] ०न्ममोच्छ्रितोऽपि — अ; न्ममेच्छ्रुतोऽपि — आ, ई, उ; न्ममोच्छ्रतोऽपि — लृ; न्ममोच्छ्रूतोऽपि — ए.

[26] भवति — ऐ.

[27] 'तद्' इति नास्ति — अ.

[28] ०पायश्रुत्यादि० — ई, उ.

[29] येन विद्यादिभि० — ऐ.

[30] 'तद्यावत्' इति नास्ति — आ, ई, उ, ए.

[31] कार्यकारणामेन — अ; कार्यकरणाभावेन — ई, उ.

[32] 'मम' इति नास्ति — ए.

[33] पर्यवस्यन्ति। तावदेव — आ, ई, उ, ए; पर्यवस्य श्रुतवदेव — ऐ.

[34] स्वेच्छयैव तच्छिखर० — ऐ.

अस्य निवृत्त्युपायं पृच्छामि। [1]अनेनैव हि [2]सर्वाण्येवैतानि[3] [4]शास्त्राणि कृतानि। ब्रह्मविष्ण्वादयश्चैनमेवागत्य[5] पृच्छन्तो दृश्यन्ते। श्रुतयश्च एतदाराधनादेव मोक्षमाहुः। यच्छ्रूयते[6] — '[7]त्र्यम्बकं [8]यजामहे' इत्यादि। [9]उर्वारुकं [10]पक्वकर्कारुः; तथा च "[11]यस्मिन् ऋचः सामानि यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः। यस्मिंश्चित्तं [12]सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु।" इति। [13]ऋगादिप्रतिष्ठितमपि [14]मनः शिवसंकल्पोऽस्येति शिवविषयमस्त्विवति। एवं हि श्रेयःसाधनं [15]भवति"इति। एतदपि श्रुत्यर्थतया निरूप्य, मतङ्गमुनिः तस्मिन् शिवे यथादृष्टाकारवति, यजुर्वेदपठित [16]भगवद्रुद्राभिधेयाकारवति[17] वा ध्यानं [18]चिन्ता तदाकारावलोकनम्। [19]तदेकचित्त आत्मा यस्य [20]स तथाभूतो ध्याननिष्ठः सन्। [21]समाधिः ध्यानस्यैव [22]प्रकर्षावस्था [23]ध्येयाकारस्फुटीभावस्तल्लीनतैव। [24]यदाहुः[25] — "तदेव [26]आत्ममात्रनिर्भासं [27]स्वरूपशून्यमिव समाधिः" इति। तन्निमित्तम् **आस्थितः**। तस्मिन्हि स्फुटीभूते यथाभिलषितसिद्धिः[28]। असौ **सुधीः परिणतमलः** ॥५॥

[29]कियन्तं कालमसावेतन्निमित्तमास्थित इत्युच्यते — 'यावन्मारुतसंपर्कात्' इति।

**यावन्मारुतसंपर्कान्मुमोच मधुरं [30]स्वरम्।**
**कीचकः षट्पदावासविवरेण शनैः शनैः ॥६॥**

**यावन्मारुतसंपर्कात् कीचको** [31]वेणुः, भ्रमरगृहविवरेण **शनैः शनैः** इति [32]विलम्बितया वृत्त्या। **मधुरं** [33]**स्वरमिति** [34]मन्द्रध्वनिं **मुमोच**। न तु तारमित्यर्थः ॥६॥

---

[1] अनेन हि — अ, लृ.
[2] सर्वाण्येतानि — ऐ.
[3] अत्र 'वै' इति अधिकम् — ऐ.
[4] 'शास्त्राणि कृतानि' इति नास्ति — अ.
[5] ०मेवागमं — ऐ.
[6] ऋग्वेदे ५.४.३०; तै. सं०. १.८.६.१०; महाना० १३.१८.
[7] त्रियम्बकं — लृ, ऐ.
[8] पूजयामीत्यादि — आ, ई, उ.
[9] 'उर्वारुकम्' इत्यारभ्य 'शिवविषयमस्त्विवति' इत्यन्तं नास्ति। — आ, ई, उ, लृ.
[10] पक्षकर्करे — ए; पक्वकर्कारुहुः — ऐ.
[11] शुक्लयजुस्सं० ३४.५. शिवसंकल्पोपनिषत् ५.
[12] सर्वमेतत् — अ, ऐ.
[13] शाखादि — ए.
[14] नः शिवकल्पो अस्येति — अ; न जीवसंकल्पस्येति — ए.
[15] तद्भवतीति — आ, ई, उ, लृ, ए.
[16] ०भवरुद्राभि — ए.
[17] ०कारयति — ए.
[18] चिन्ताकाराव० — आ; चिन्त्यादाकाराव० — ऐ.
[19] तदैकचित्तमात्मा — लृ.
[20] 'सः' इति नास्ति — अ.
[21] 'समाधिः ध्यानस्यैव' इत्येतन्नास्ति — अ.
[22] उत्कर्षावस्था — अ; प्रकृष्टावस्था — ए.
[23] ध्येयाधारास्फुटीभावतल्लीन० — ए.
[24] तदाहुः — ऐ.
[25] योगसू० ३.३.
[26] 'आत्ममात्रनिर्भासं' इत्येतन्नास्ति — अ.
[27] स्वरशून्य० — अ.
[28] ०लक्षितसिद्धाः — अ, आ.
[29] क्रियान्तः — अ, आ.
[30] स्वनम् — मु, उ.
[31] वेणुभ्रमरविवरणे — अ; वेणुभृङ्गाग्रहविवरणे — ऐ
[32] बिम्बिताया वृत्त्या — ऐ.
[33] स्वनमिति — ऐ.
[34] मन्त्रध्वनिं — ऐ.

**तावन्मुनेर्मतङ्गस्य सहसा क्षुभितं मनः ।**

[1]**तावन्मतङ्गमुनेः सहसेति** [2]झटिति [3]तच्छ्रवणमात्रादेव तत्र ध्वनिलक्षणे विषयान्तरे **मनः** प्रवृत्तम्। अयमेव [4]हि तस्य [5]मनसो क्षोभो न तु रागादिविकारात्मकः[6], ज्ञानाग्निदग्धकलुषत्वेनोक्तत्वात्।

[7]अथ कथं तत्स्थानत्यागादिना तेन मनः प्रत्याहृत्य [8]न समाधावास्थीयते । यच्छ्रूयते[9] — "[10]निःशब्दे विजने स्थाने योगी योगं सदाभ्यसेत्" इति। तदर्थमेतत् — 'भूयो भूयः' इत्यादि।

**भूयो भूयो निनादेन श्रोत्रामृतवपुष्मता ॥७॥**
**करिण्यारण्यमातङ्गः [11]स वशीकृत्य नीयते[12] ।**
**वनात्पराङ्मुखस्तद्वच्चित्तं[13] [14]लक्ष्याच्छिवात्मकात् ॥८॥**

[15]संतत्या प्रवृत्तं श्रोत्रयोः यदमृतम् [16]आह्लादकं तदेव वपुः शरीरं तद्विद्यते यस्य निनादस्य ध्वनेः सः **श्रोत्रामृतवपुष्मान्**, तेन । [17]यतो लक्षणाद् नागरहस्तिन्या इव **वनाद्** [18]हस्ती **वशीकृत्य चित्तं** [19]स्वविषयान्**नीयते**। एतदुक्तं भवति — यद्याक्रन्दनाद्[20] दुःखरूपेण, सिंहनादात्मना वा [21]मोहरूपेणैव तस्य चित्तं चालितं [22]तत्र [23]संत्यजेदेव तं देशम्। असौ [24]यावता सुखैकशरीरेण चालितः। "[25]ततो [26]द्रव्यैर्मनोज्ञैस्तु [27]बाह्यं कुर्याद्विधानतः" इति श्रुत्यर्थनिरूपणया[28] "तिष्ठतु [29]तावदिदं योगाभ्यासादिकं कर्म। [30]बाह्येनैव कर्मणा सुमनोज्ञद्रव्यसाध्येन भगवन्तमाराधयामि। एवमपि भगवन्निष्ठमेव मनो भवति।" इत्येवंविधोऽस्य निश्चयो जातः। ततस्तत्स्थानत्यागेन नान्यत्र[31] तेन समाधावास्थीयत इति ॥७–८॥

किं तर्हि तेन तत्र क्रियत इत्युच्यते—'ततश्चासौ' इत्यादि।

---

[1] तावन्मात्रं मुनेः — ए.
[2] त्वरिति — ए.
[3] तच्छ्रवणादेव — ऐ.
[4] 'हि' इति नास्ति — आ, ई, उ, लृ, ए, ऐ.
[5] मनसो हि क्षोभो — आ, ए; मनसोऽभिक्षोभो — ऐ.
[6] ०विकारात्मकम् — ए.
[7] 'अथ' इति नास्ति — ए.
[8] 'न' इति नास्ति — आ.
[9] आकरो न लभ्यते।
[10] निश्शब्देऽपि जने — अ.
[11] स्ववशीकृत्य — ओ.
[12] लीलया — मु, उ.
[13] ०च्चित्त० — मु, उ.
[14] लक्षा० — ओ.
[15] सन्ततप्रवृत्तं — ऐ.
[16] आह्लादं — आ, ई, उ, लृ; आह्लादकरं — ए.
[17] यतो लक्षान्नागर० — आ; यतो नागर — ई, उ.
[18] हस्तीव वशी० — ऐ.
[19] स्वविषयं नीयते — अ, आ, ई, उ, लृ, ए.
[20] ०क्रन्दादिना — आ, ई, उ, लृ, ए, ऐ.
[21] मोहारोपेणैव — अ, आ.
[22] 'तत्र' इत्येतन्नास्ति — ऐ.
[23] स्यात्त्यजेदेव — आ, ई, लृ, ऐ.
[24] धावता — ऐ.
[25] आकरो न लभ्यते।
[26] हव्यै० — ऐ.
[27] बाह्यं तद्विधानतः — आ, ई, उ.
[28] निरूपणतया — अ, लृ, ए.
[29] यावदिदं — अ,
[30] बाह्येऽन्यैः कर्मणा — अ.
[31] ०त्यागेनान्यत्र — आ.

**ततश्चासौ मुनिः श्रीमाञ्ज्ञात्वाभ्रष्टं[1] मनः शिवात् ।**
**आदाय तरसा वेणुं सुसममृजुमव्रणम् ॥९॥**
**श्लक्ष्णत्वचं सुनिष्णातं कृत्वा छिद्रैरलंकृतम् ।**
**[2]तदोत्पादितवाँल्लेशाद्ध्वनिं सप्तस्वरान्वितम् ॥१०॥**

**ततश्च** बाह्यकर्मयोगादपि भगवतः **शिवादभ्रष्टमेव मनो** भवतीति निश्चित्य, तदुपायतानिश्चये हि **असौ** [3]प्रेक्षावत्त्वान्नैव [4]प्रवर्तते। प्रवर्तमानो वा स[5] बालोन्मत्तादिवत् [6]प्रेक्षावत्तां जह्यात्। न चैतद्युक्तम्। यतः श्रीः संपद्धेतुरात्मज्ञानादिशक्तिपातान्तो यस्यासौ **मुनिः** प्रेक्षावान्[7]। ततोऽत्रोपायनिश्चयपूर्वकमेव **तरसा** वेगेन सुसमत्वादिलक्षणयुक्तं वंशं **सुनिष्णातं** स्वकार्यकुशलम् **आदाय,** ध्वन्युत्पत्तियोग्यं **छिद्रैः** [8]**कृत्वा तदा** तस्मिन्काले **लेशाद्** अल्पया मात्रया परीक्षार्थं सप्तभिः षड्जादिभिः [9]स्वरैर्युक्तं[10] **ध्वनिमुत्पादितवानिति।**

ये तु भ्रष्टं ज्ञात्वेति व्याचक्षते, तैरज्ञत्वादन्यत्रानिश्चितोपायभावः प्रवर्तमानो मतङ्ग[11]मुनिरप्रेक्षापूर्वं[12]कार्येवेति व्याख्यातं स्यादिति "[13]ज्ञानाग्निदग्धकलुष" इत्यादिविरोधोऽत्र न परिहर्तुं शक्यः॥९-१०॥

एवमुत्पाद्य— 'त्र्यम्बकस्य' इत्यादि।

**त्र्यम्बकस्याग्रतो भूत्वा [14]प्रहृष्टेनान्तरात्मना ।**
**मुनिर्वादितवान्वेणुं भक्त्या [15]तु परया भृशम् ॥११॥**

**त्र्यम्बकस्य** "[16]पक्वेष्टकाचितं सम्यग्यः करोति शिवालयम्" [17]इति [18]स्मृतिसिद्ध[19]पूर्तधर्मविधिना कल्पशाखोपदिष्टवैदिक[20]मन्त्रेतिकर्तव्यताक्रमेण पूर्वप्रतिष्ठापितस्य[21] त्रिलोचनस्योमापतेः **अग्रतः** अग्रे "[22]त्र्यम्बकं यजामहे" इत्यादिश्रुतिसिद्धत्वात् प्रथमे प्रधाने कर्मणि यागे निमित्तं **भूत्वा** [23]त्र्यम्बकमिष्ट्वेत्यर्थः। ततो **भृशम्** अत्यर्थम् [24]अत्र पूजास्थाने वंशं वादितवान्।

---

[1] ०ज्ञात्वा दृष्टं — ओ.
[2] तदा वादितवान् — मु, उ.
[3] प्रेक्षावत्वेनैव — अ.
[4] प्रवर्तेत — आ, ई, उ, ए; प्रवर्तयेत — ऐ.
[5] 'स' इत्यस्य स्थाने 'असौ' इति दृश्यते — ए.
[6] प्रेक्षावतां — अ.
[7] अप्रेक्षावान् — अ, लृ.
[8] 'कृत्वा' इत्येतन्नास्ति — अ.
[9] स्वनैः — आ, ए.
[10] ०र्युक्त० — ऐ.
[11] ०मुनिरपेक्षा० — अ, आ, लृ, ए, ऐ.
[12] कार्ये व्याख्यातं — अ; कार्यैव व्याख्यातं — आ; कार्येव व्याख्यातं — ई, उ, लृ, ए, ऐ.
[13] मतङ्ग० विद्या० १. ५ पू०
[14] प्रदृष्टे० — मु.
[15] 'तु' इत्यस्य स्थाने 'नु' इति दृश्यते — मु, उ; 'अत्र' इति व्याख्यातृसंमतः पाठः स्यात्।
[16] पक्वेष्टकखचितं सम्य० — अ; पक्वेष्टकचितं लिङ्गं सम्य० — आ; पक्वेष्टखचितं सम्य० — ई, उ; पक्वेष्टकचितं सम्य० — ए. आकरो न लभ्यते
[17] इतिशब्दो नास्ति — आ.
[18] प्रसिद्ध० — ऐ;
[19] पूर्वर्त्तविधिना—आ; पूर्वोक्तक्रमेण विधिना —ए.
[20] मन्त्रेण कर्तव्य० — अ, आ, ई, उ, लृ, ए.
[21] ०प्रतिष्ठितस्यापि तस्य — ऐ.
[22] ऋग्वेदे ५. ४. ३०; तै० सं — १. ८. ६. १०.
[23] त्र्यम्बकमित्यर्थः — ऐ.
[24] मन्त्रपूजास्थाने — अ, ऐ.

ये तु **अग्रतः** पुरतः इति व्याचक्षते, तैश्चाशास्त्रीयेण[1] क्रमेण कुवांशिकस्येव मतङ्ग[2]मुनेराराधकत्वमुक्तं स्यात्। न चैतद्युक्तम्। [3]वृत्ताम्भः[4]क्षालितात्मत्वेनोक्तत्वात्। वक्ष्यति[5] च — "स तस्य पादावभ्यर्च्य" इति।

ननु वादनमपि शास्त्रीयमेव। सत्यम्। यागाङ्गतया स एव विज्ञानयोगादिभिः[6]सह विकल्प्यते। न तु वादनमात्रम्। यच्छ्रूयते[7] —

"ज्ञानेन केचिद्योगेन [8]सिद्धा [9]यागेन चापरे" इति।

भक्तिः शक्तिपातयोग्य[10]तयैव तन्निष्ठत्वम्। यदाहुः[11] —

"[12]अन्योऽपि योग्यतावेशलक्षणोपहृतस्मृतिः[13]।
भक्तित्वेन समाख्यातो [14]विज्ञानावयवः पृथक्"॥ इति।

[15]तथैव [16]**प्रहृष्टेन अन्तरात्मना**। न तु कारणान्तरेण फलाद्यनुसंधानेनेत्यर्थः॥११॥

"ततः स भगवान्" इत्यादि।

**[17]ततः स भगवान्नाथः पार्वत्या सहितो हरः।**
**स्वं वपुर्दर्शयामास मतङ्गाय तपस्विने ॥१२॥**

योऽसावभिध्यातोऽभिपूजितश्च [18]असावेव उमापतिः। नान्यः। **स्वं** [19]**वपुः** यत्तदधिकारनिबन्धनं तस्य पारमार्थिकं त्र्यक्षं त्रिशूलहस्तादि शरीरम्। न तु [20]निर्माणकायान्तरं[21] दर्शितवान्। यतो मतङ्गमुनिः तपसोत्कृष्टमूर्तिमानुक्तः[22]॥१२॥

ततश्च — 'ददर्श सहसा' इत्यादि।

**ददर्श सहसा विप्रः श्रीकण्ठं विश्वनायकम्।**

---

[1] तैश्च शास्त्रीयेण — अ, आ, ई, उ, ए.
[2] ०मुनेराधारकत्व० — अ, आ.
[3] मतङ्ग० विद्या० १. ५ पू०
[4] क्षालितत्वेन – लृ; क्षालितात्मकत्वेन —ए.
[5] मतङ्ग० विद्या० १. १३ उ.
[6] स विकल्प्यते — ई., उ.
[7] आकरो न लभ्यते
[8] सिद्धचा —लृ.
[9] योगेन — अ.
[10] ०तयैतन्निष्ठत्वम् — आ, ई, उ, लृ, ए, ऐ.
[11] मृगेन्द्रवृत्तिदीपिकायां २२ तमे पृष्ठे, क्रियाक्रमद्योतिकाव्याख्यायां प्रभायां ३६१ तमे पृष्ठे चोदाहृतः। तत्रापि आकरग्रन्थो न निर्दिष्टः।
[12] अन्योपयोग्यता० — ऐ; 'अन्येऽपि योग्यता०' इति प्रभापाठः।
[13] ०स्मृतः — लृ, '०लक्षणोऽपर उच्यते।' इति मृ. वृ. दीपिकापाठः; '०स्मृतिम्।' इति प्रभापाठः।
[14] 'विज्ञानावयवोऽप्यथ' इति मृ. वृ. दीपिकोपाठः; 'विज्ञानावयवं पृथक्' इति प्रभापाठः।
[15] तयैव —अ, आ, ई, उ, लृ, ए.
[16] प्रसृष्टेन —ऐ.
[17] 'ततोऽसौ भगवान्' इति व्याख्यातृसंमतपाठः स्यात्।
[18] असावेवम् उमा० — अ.
[19] वपुर्युक्तं तदधि० — अ, ए.
[20] निर्वाण० — ए.
[21] कार्यान्तिरं — अ, आ, ई, उ, लृ, ए.
[22] मतङ्ग० विद्या० १. ४ उ०

झटित्येव। न क्रमेण। भगवतस्तत्रैवाभिव्यक्तेः। देवदत्तादेरिव देशान्तरादागच्छतो दर्शनाभावात्। **श्रीकण्ठं** विश्वस्य चतुर्दशविधस्य भूतसर्गस्य नायकं [1]दृष्टवान्। न तु विद्येश्वरं [2]योगीश्वरं वेत्यर्थः॥

दृष्ट्वा च — 'स तस्य पादावभ्यर्च्य' इत्यादि।

> **स तस्य पादावभ्यर्च्य दण्डवत्पतितो भुवि ॥१३॥**
> **तद्भक्तिमन्योरावेशान्नयनामलवारिणा ।**
> **पादौ प्रक्षाल्य [3]तमतः स्तोतुमारब्धवान्मुनिः ॥१४॥**

अत एव पूजायां निरतोऽसौ। न तु वादनमात्रे इति [4]सूक्तं [5]प्राक्। तस्मिन्भगवति [6]**भक्तिः**, तया **मन्युः** भक्तस्यापीयता मे कालेन[7] भगवान् न प्रसन्न इत्यन्तर्गतो विरागः। ततो मन्योर्हेतोः य **आवेशः** [8]चित्तक्षोभः, [9]तस्माद्यद् **नयनामलवारि** आनन्दाश्रु, तेन [10]**स तस्य पादौ प्रक्षाल्य, तम्** उमापतिम् **अतः** अनन्तरं **स्तोतुमारब्धवान् मुनिः** ॥१३–१४॥

**मतङ्ग उवाच —**

> **भगवन्भूतभव्येश ब्रह्मविष्णिवन्द्रनायक ।**
> **त्वत्प्रसादगुणाविष्टा दिवि दीव्यन्ति देवताः ॥१५॥**

'भगवन् भूतभव्येश' इत्यादि। भगः ऐश्वर्यादिगुणो यस्य स [11]संबोध्यते। भूतानि पृथिव्यादीनि[12] भव्याश्च [13]भवनार्हा ब्रह्मणः सृष्टिसंहारयोग्या[14] भूरादयो लोकाः,[15] तेषामीशः। न तु भूतादेः कालस्य तदधिकारोऽतिक्रान्तत्वात्[16]। ब्रह्मादयोऽपि भूतभव्येशा इति चेत्। यतस्तेषामप्ययमीशः। तस्यात्रामन्त्रणम्। अत्रैव तदीश्वरत्वे हेतुः यतः [17]**त्वत्प्रसादलक्षणेन गुणेन** [18]**आविष्टाः** समधिष्ठिताः, **दिवि** यथा [19]स्वाधिकारस्थाने [20]**दीव्यन्ति** ब्रह्मादिलक्षणाः **देवताः** ॥१५॥

> [21]**भवता निखिलं व्याप्तं जगत्स्थावरजङ्गमम् ।**

---

[1] दृष्ट्वा न तु — अ, ए, ऐ.
[2] 'योगीश्वरं वा' इत्येतन्नास्ति — ऐ.
[3] तमथ — मु, उ, ओ.
[4] सूचितं — ऐ.
[5] मतङ्ग० विद्या० १. ११ वृत्तौ.
[6] भक्तितया — ऌ, ऐ.
[7] ०पियतामेककालेन —अ.
[8] चित्ते क्षोभः — अ.
[9] तस्माद्युन्नयना० — अ.
[10] 'स' इति नास्ति — अ, आ.
[11] संबध्यते — अ, ऌ.
[12] अत्र 'भव्यादीनि' इत्यधिकम् — ई, उ.
[13] भुवनार्हा — अ.
[14] 'संहारयोग्या' इति नास्ति — अ.
[15] तेषामीशम् — ऐ.
[16] ०कारात्क्रान्तत्वात् — अ; ०कारातिक्रान्तत्वात् — ऌ, ए, ऐ.
[17] तत्त्वात्प्रसाद० — अ.
[18] विशिष्टाः — अ.
[19] स्वसेव्योपकारं स्थाने — अ; स्वं व्यवहारस्थाने — आ, ई, उ, ऐ; स्वयं व्यवहारस्थाने —ए.
[20] दिव्यान्ते —अ.
[21] भगवन्निखिलं — मु, उ.

त्वया च [1]**स्थावरजङ्गमं** स्थावरादिब्रह्मान्त[2]चतुर्दशविधभूतसर्गात्मकं **यज्जगत्**। यदाहुः[3] —

"अष्टविकल्पो दैवस्तिर्यग्योनिश्च पञ्चधा भवति।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥" इति।

तद् **निखिलं** निरवशेषं **व्याप्तम्**॥

किं च — 'त्वत्पादाम्बुज' इत्यादि।

**त्वत्पादाम्बुजसामर्थ्यस्मरणादपि पापिनः ॥१६॥**
**प्रध्वस्तपापनिचयाः सिद्धिभाजो भवन्ति हि ।**
**किं पुनर्मुनयो धीरास्त्वय्येवार्पितचेतसः ॥१७॥**
**विमुक्ताः सर्वपापेभ्यो योगिनो विगतस्पृहाः ।**
**विरजस्का विशोकाश्च [4]व्यतिक्रान्तभवार्णवाः ॥१८॥**
**अन्येऽपि हि सुरेशान लब्धेप्सितवरा नराः ।**
**अहमेकोऽल्पभाग्यस्तु दुःखभाक् सुखवर्जितः ॥१९॥**

[5]त्वत्पादाम्बुजयोर्यत्सामर्थ्यं शक्तिः, तत्स्मरणमात्रात्[6]। **अपीति**[7] संभावनायाम्। **पापिनोऽपि** विगतपापाः सिद्धियुक्ता [8]**भवन्ति**। [9]अन्धकरावणादीना[10]मसुराणामपि[11]तथा दृष्टत्वात्। **किं पुनः** अस्मदादयो **धीराः** दृढव्रताः [12]त्वदेकनिष्ठाः **विगतस्पृहाः** [13]समुदितसत्त्ववृत्तयो विगतरजसो **विशोकाश्च** निवृत्ततमसः। केचिद् मुमुक्षवो [14]**व्यतिक्रान्तभवार्णवाः**। अन्ये तु साधका[15] **लब्धेप्सितवराः**[16] भवन्तीति नैतदाश्चर्यम्। [17]श्वेतोपमन्युप्रभृतीनां तथा दृष्टत्वात्। तेषां मध्याद् **अहमेकोऽल्पभाग्यस्तु** कुतः। यतो **दुःखभाक् सुखवर्जितः**। [18]भवन्निष्ठत्वेऽप्यमुक्त एव यतः[19] ॥१६–१९॥

ननु त्वमपि [20]ज्ञानाग्निदग्धकलुषो[21] वृत्ताम्भः[22]क्षालितात्मवान् संपन्न इति तदर्थमेतत् — 'वज्रोपमम्' इत्यादि।

---

[1] स्थावरसंगमं — अ.
[2] चतुर्दशसर्गात्मकं — अ.
[3] सांख्यका० ५३.
[4] व्यतिक्रान्ता भवार्णवात्। — मु, उ.
[5] तत्पादाम्बुज० — ए.
[6] मात्रम्। — ए.
[7] इतिशब्दो नास्ति — ऐ.
[8] 'भवन्ति' इत्येतन्नास्ति — अ.
[9] अन्धकरावणादीनां सुराणामपि — अ; अन्धककथा — शिवमहापुराणे रुद्रसंहितायां युद्धकाण्डे ४७तमेऽध्याये, रावणकथा —वाल्मीकिरामायणे उत्तरकाण्डे १६ तमे सर्गे च दृश्यते।
[10] ०मसुरादी . . पि — लृ.
[11] तदा — अ; 'तथा' इति नास्ति — आ.
[12] तदेकनिष्ठाः — ऐ.
[13] सकलितसत्त्व० — अ.
[14] ०ऽप्यतिक्रान्त० — अ, अा, ई, उ, लृ.
[15] साधिकारे — ऐ.
[16] अत्र 'नराः' इत्यधिकम् — आ.
[17] श्वेतकथा — शिवमहापुराणे शतरुद्रसंहितायां ४ तमेऽध्याये, दृश्यते। उपमन्युकथा — महाभारते अनुशासनपर्वणि ४५ तमेऽध्याये, शिवमहापुराणे वायवीयसंहितायां ३५ तमेऽध्याये च दृश्यते।
[18] भगवन्निष्ठ० — ए, ऐ.
[19] ऽप्यमुक्तये वा यतः —ऐ.
[20] मतङ्ग० विद्या० १.५ पू०
[21] ज्ञानाग्निना दग्धकलुषो — ऐ.
[22] क्षालितमिति — अ.

**वज्रोपमं महत्पापं [1]मदीयमथवा विभो ।**
**त्वदीयशक्तयस्तीव्राः [2]संसारोत्तारणं प्रति ॥२०॥**
**मत्पापनिचयं प्राप्ता [3]लघुतां मृदुतां गताः ।**

**अथवेति** वितर्के। यद्यप्यहं त्वत्प्रसादतो [4]ज्ञानाग्निना दग्धकलुषः संपन्नः। तथापि [5]कार्यकरणादेस्तन्मूलस्य [6]च [7]अनात्मन्यात्माभिमानात्मनो बन्धनस्य निवर्तनं [8]**प्रति तीव्राः शक्तयो** मयानुभूताः। ता एवास्य बन्धनस्य निवर्तनायाशक्ता[9] दृष्टाः। एतदुक्तं भवति — नैतद्बन्धनमात्ममात्रविषयेण[10] त्वन्यविषयेण वा ज्ञानेन निवर्तयितुं शक्यमिति मया निश्चितमेव। [11]तदेतन्निवृत्तिर्मम कर्तव्या [12]देवेनेति प्रार्थनार्थः। [13]वस्तुवृत्ताख्यानाच्च नेयं निन्दा। अपि तु प्रार्थनात्मिका स्तुतिरेवेति ॥

'एतस्मिन्नन्तरे' इत्यादि ।

**एतस्मिन्नन्तरे देवः प्रहस्योवाच विश्वराट् ॥२१॥**
**प्रमृज्याज्ञानपटलं वस्तुरत्नसुशोभया ।**
**वाण्या प्रश्वास्य तं विप्रं समुत्थाप्य च भूतलात् ॥२२॥**

**परमेश्वर उवाच —**

**वरमन्विच्छ विप्रेन्द्र यत्त्वया [14]मनसेप्सितम् ।**

प्रार्थनास्वरूपज्ञानानन्तरमेव भगवान् "इयता कालेनास्य मलपरिणतिः संपन्ना। येन मलस्वरूपमप्यनुमातुं [15]"प्रवृत्त" इति [16]सोपहासम् "उत्तिष्ठतु भवान् [17]संपादिता प्रार्थितार्थात्मिका स्तुतिरेवं[18] तत्करिष्यामि" [19]इत्यर्थितार्थपूरकवस्तुरत्नशोभायुक्तेन वचसा समाश्वास्य [20]यदज्ञानं चक्षुःशक्तेः पटलादिवत् चिच्छक्तेरा[21]वारकं तेनाशक्यनिवर्त्यतया [22]प्रार्थितं तत् **प्रमृज्य** स्वव्यापारेण दीक्षाख्येन

---

[1] मदीयमथवापि भोः — ओ.
[2] संसारोद्धारणं — ओ.
[3] लघुतामृतते गताः — मु; लघुतामृततां गताः — उ; लघुना मृदुतां गताः — ओ.
[4] ज्ञानाग्निदग्ध० अ, लृ
[5] कार्यकारणादे० — अ, आ, लृ, ए, ऐ.
[6] चशब्दो नास्ति — ऐ.
[7] नात्मन्यात्मा० — ऐ.
[8] प्रतीति प्राक् शक्तयो — अ, ई, उ, ऐ.
[9] ०याशक्तं — अ; ०याश्शक्ताः — ऐ.
[10] ०मात्मविषयेण — आ, लृ, ऐ; ०मात्मनविषयेण — ई, उ; ०मात्मज्ञानविषयेण —ए.
[11] तन्निवृत्तिः — अ; तदेवं निवृत्तिः — ऐ.
[12] देवदेवेनेति — लृ.
[13] वस्तुप्रत्याख्या० — अ, आ, ए; वस्तुवृत्त्याख्या० — ई, उ.
[14] 'मनसीप्सितम्' इत्येव पाठो मुद्रितपुस्तके मूलमातृकासु च लभ्यते। अथापि व्याख्यानानुसारेण पाठः स्वीकृतः।
[15] प्रवृत्ते इति — अ; प्रवृत्तमिति —ऐ.
[16] सोपहासः — अ, आ, ई, उ, लृ, ए, ऐ.
[17] संपादितप्रार्थि० — अ, आ, ई, उ, लृ, ए.
[18] ०त्मिका स्तुतिरेव — अ, आ, ई, उ, लृ, ए; ०त्मिकस्तुतिरेव — ऐ.
[19] इत्यर्थता० आ, ई, उ.
[20] यत्तदज्ञानं — ऐ.
[21] ०वारकत्वेनाशक्य० — ए., ऐ.
[22] प्रार्थितः — ऐ.

शोधयित्वा ततो **वरम्** अनु पश्चाद् [1]**इच्छ** प्रार्थयस्वेत्याह[2]। यद् **मनसा** प्राप्तुमिष्टम्। न तु बाह्येन व्यापारेण[3] अत्यन्ताशक्यमित्यर्थः ॥

एतदाकर्ण्य मतङ्गमुनिः — 'ततः प्रोवाच' इत्यादि।

**ततः प्रोवाच हृष्टात्मा रोमाञ्चितवपुर्मुनिः ॥२३॥**

**मतङ्ग उवाच —**

**कृतकृत्योऽस्मि देवेश त्वत्प्रसादात्किमद्भुतम् ।**
**प्राप्तव्यं यत्प्रयत्नेन तत्प्राप्तमखिलं मया ॥२४॥**
**दृष्टे त्वयि [4]जगन्नाथे"**

ततोऽनुग्रहाद् यथाप्रार्थितबन्धनाभावसंपत्त्या [5]प्रहृष्टात्मा सन्निदमाह — "[6]कृतं कृत्यं बन्धनाभावात्मकं यस्य सोऽहं [7]**त्वत्प्रसादाद्** दीक्षाख्यात्संपन्नः। **यच्च प्रयत्नेन प्राप्तव्यं** शिवत्वव्यक्त्यात्मकं फलं **तदपि प्राप्तम्। अखिलमिति** दीक्षोत्तरं यज्ज्ञेयतया, अनुष्ठेयतया चोच्यते तदपि [8]**मया** त्वत्तो वचनमात्रेण प्राप्तम्। नाधुना [9]मत्प्राप्तव्यमस्ति" इति। अत एवास्य निर्वाणदीक्षा [10]संपन्नेत्यत्र प्रतीयते ॥

किं तर्हि तवाधुना प्रार्थनीयमिति तद्दर्शयति — 'लोकानुग्रहकारणात्' इत्यादि।

**"लोकानुग्रहकारणात्[11] ।**
**[12]द्विविधार्थप्रदं श्रीमद्वस्तुरत्नसुचर्चितम् ॥२५॥**
**ज्ञानमज्ञानहं तारं सुखबोध्यमनाकुलम् ।**
**विपुलार्थमसंदिग्धं समासोक्त्या [13]ब्रवीहि मे ॥२६॥**

लोकानामनुग्रहो दीक्षा[14]व्याख्यानादिर्मम कर्तव्यतया [15]प्रतिभाति। न चासौ [16]त्वज्ज्ञानात्मकं शास्त्रं विनोपपद्यत इत्यस्मात्कारणात् [17]ज्ञायतेऽनेनेति ज्ञानं शास्त्रं [18]ब्रूहि ममेति प्रार्थना। लोकानुग्रहकारणान्न[19] ममेति तु व्याख्याने [20]वक्ष्यमाणग्रन्थविरोधः। यद्वक्ष्यति[21] —

"प्रददाह मुनेः सम्यगज्ञानं तृणराशिवत्।" इत्यादि। तच्च द्विविधोऽर्थो भुक्तिमुक्ती[22]

---

[1] इच्छा — अ; इच्छां — ए.
[2] ०त्याहुः — अ.
[3] अत्र इतिशब्दोऽधिकः — आ, ई, उ, लृ, ए, ऐ.
[4] जगन्नाथ — ओ.
[5] प्रकृष्टात्मा — ए.
[6] कृतकृत्यं — ऐ.
[7] तत्प्रसादाद् — अ, ए.
[8] माया — अ, आ, ऐ.
[9] मम प्राप्तव्य० — आ, ई, उ, लृ.
[10] संपन्नेऽप्यत्र — अ, आ.
[11] ०कारण। — ओ.
[12] विविधार्थ० — ओ.
[13] तु ब्रूहि मे — ओ.
[14] ०व्याख्यानादि मम — अ, आ, ए.
[15] प्रतिविभाति — ऐ.
[16] त्वदाज्ञात्मकं — ई, उ, लृ, ए; त्वदात्मकं — ऐ.
[17] ज्ञायते तेनेति — अ
[18] एहि — अ, ए.
[19] नशब्दो नास्ति — अ.
[20] वक्ष्यमाणे ग्रन्थ० — ऐ.
[21] मतङ्ग० विद्या० २. ७ उ.
[22] ०मुक्तीति — ऐ.

तत्प्रदमिति। अनेन विशिष्टप्रयोजनप्रार्थना। श्रीः सर्वेश्वरत्वं तद्योगात् सर्वेश्वरोऽपि श्रीः स विद्यते कर्तृतया यस्मिञ्शास्त्रे इति। अनेन कौलमहाव्रतादिनिरासः।

ननु तेऽपि ईश्वरकर्तृका एव। सत्यम्। न तु परमेश्वरकर्तृकाः सकलपरिच्छेद्यापरिच्छेद-कत्वादित्युक्तं[1] **नरेश्वरपरीक्षाप्रकाशे**[2]।

वस्तून्येव रत्नानि श्रेयःसाधकत्वात्। तानि **सुचर्चितानि** [3]अनुमानेन यत्र। न त्वागम-मात्रसिद्धानीति। अनेन वस्तु[4]विचारोऽत्राभिधेय इति। **ज्ञानं** [5]**च** शास्त्रमित्युक्तम्। अज्ञानं हन्तीति **अज्ञानहम्**। "[6]अन्येष्वपि दृश्यते" इति डप्रत्ययः। दस्युहं ब्राह्मणकुलमितिवत्। अपि-शब्दस्य तत्र सर्वोपाधिव्यभिचारार्थत्वेन [7]धात्वन्तरेभ्योऽपि प्रत्ययप्राप्त्यर्थतया व्याख्याततवात्। तच्चाज्ञानं [8]शास्त्रनिवर्त्यम्। [9]तत्त्रिविधम्। तत्र संशयविपर्ययात्मकं वस्तुरत्नसुचर्चितमित्यनेनैव निवर्त्यतया [10]प्रार्थितम्। यत्तु ज्ञानाभावात्मकं तदभावोऽत्र प्रार्थ्यते। तथा चोदाहरन्ति — "[11]अज्ञातज्ञापनं विधिः" इति। ततश्च दर्शनान्तरानधिगत[12]विषयज्ञानमित्यर्थः। किं च [13]तार-यति स्वप्रयोजननिष्ठांस्त्रायते इति **तारम्** **अनुगुणोपायम्**[14]। न तु अनुष्ठानमात्रोपदेशकमित्यर्थः। ततश्च स्वप्रयोजनविषयसाध्यसाधनभाव[15]लक्षणसंबन्धो[16]ऽप्यस्यात्र प्रार्थ्यते। **सुखबोध्यमिति** — अनेकभाषावक्तृत्वेऽपि भगवतः संस्कृतभाषयैव [17]निबन्धनमार्यत्वान्मतङ्गमुनेः सुखबोध्यं भवति। **अनाकुलमिति**[18] — [19]श्लिष्ट[20]संधिभिरप्रसिद्धार्थैश्च [21]पदैर्न **गहनीकृतम्**। विपुलाः सर्वान्यागमप्राप्या-र्थाः[22] प्रदर्शनीयत्वेन [23]**विद्यन्ते** यत्र। नैकदेशमात्रप्रकाशकम्[24]। अपि तु सर्वान्यागम[25]प्राप्य[26]स्थाना-न्तरप्रदर्शकमित्यर्थः। **असंदिग्धं** पूर्वापराविरुद्धार्थाभिधायकम्। एवंविधं [27]विशिष्टं ज्ञानं संक्षे-पोक्त्या ब्रूहि ममेति प्रार्थना ॥२५–२६॥

'तस्य तद्वचनम्' इत्यादि।

**तस्य तद्वचनं श्रुत्वा मतङ्गस्य महात्मनः।**

---

[1] ०त्वाद्युक्तं — आ.
[2] प्रथमकाण्डप्रथमश्लोकस्थस्य अमितद्युतेरिति पदस्य विवरणे.
[3] इत्यनुमानेन — आ, ई, उ, ए, ऐ.
[4] विचारेऽत्रा० — अ, आ, ई, उ.
[5] चशब्दो नास्ति — आ, ई, उ, ऌ, ए, ऐ.
[6] पा. सू. ३. २. १०१.
[7] धात्वन्तरेऽन्योऽपि — ऐ.
[8] यच्छास्त्र० — आ, ई, उ, ए, ऐ.
[9] अत्र 'तत्र' इत्यधिकम् — अ.
[10] प्रार्थितः — आ, ई, उ, ए.
[11] 'अज्ञातार्थज्ञापको वेदभागो विधिः' अर्थसंग्रहे विधिपरिच्छेदे।
[12] विषयं ज्ञान० — आ, ई, उ, ऌ.
[13] तारयन्ति — ऐ.
[14] ०गुणोपायीति। — अ.
[15] लक्षणः संबन्धो — आ, ई, उ, ऌ, ए, ऐ.
[16] अत्र 'अतो' इत्यधिकम् — अ.
[17] निर्बन्धनमा० — अ; निबद्धमा० — आ, ई, उ, ऌ, ए.
[18] अनाकुलमिदमिति — अ.
[19] दुश्लिष्ट० — आ, ई, उ, ऌ, ए, ऐ.
[20] सन्धिगिरः प्रसिद्धार्थैश्च — अ; पदसंधिभिरेव प्रसिद्धार्थैश्च — ए; सिद्धिभिरप्रसिद्धार्थैश्च — ऐ.
[21] पदैर्नवगहनीकृतम् — अ; पदैर्निगहनीकृतम् — ऐ.
[22] ०प्राप्त्यर्थः — अ.
[23] विद्यते — अ, ऐ.
[24] प्रकाशम् — ऐ.
[25] प्राप्यं — ऐ.
[26] स्थानानन्तरदर्शक० — अ; स्थानान्तरप्रकाशक० — आ, ई, उ, ए.
[27] विशिष्टज्ञानं — अ.

**ज्ञानालयवपुष्मत्या वाण्यालुप्तवपुर्गुरुः ॥२७॥**
**उवाच तस्मै सुप्रीत्या मतङ्गाय महात्मने ।**

ज्ञानमेव आलयः, तदेव वपुः शरीरं तद्विद्यते यस्याः तया शुद्धविद्यात्मिकया[1]। तदन्यस्याः शुद्धविषयत्वासंभवादिति [2]वक्ष्यामः। **मतङ्गाय महात्मने** दीक्षिताय **उवाच गुरुः** श्रीकण्ठनाथः। अत एव दीक्षितानां श्रवणाधिकार इति [3]सिद्धम्। स च गुरुः **अलुप्तवपुः**। [4]अधिकारनिबन्धनं हि तस्य शरीरं [5]तत्पदादिप्राप्तानामिव न[6] कर्मक्षयाल्लुप्यते। ननु [7]तस्यापि महाप्रलये लोपोऽस्त्येव। सत्यम्। अधिकारोपसंहारादिति विशेषः॥

किमुवाचेत्युच्यते — 'विचारयुक्तम्' इत्यादि।

**परमेश्वर उवाच —**

**विचारयुक्तं [8]सद्वस्तु स्फुटमाम्नायदर्शनात् ॥२८॥**
**यथा [9]व्यवस्थितं न्यायमार्गेणैवानुलोमतः ।**
**सुकरं सुविभक्ताङ्गं षट्पदार्थमयं शुभम् ॥२९॥**
**चतुष्पादमिदं शास्त्रमायातममृतात्मकम् ।**

शास्त्रमुवाच। विचारेण युक्तमिति अनेन वस्तुरत्नसुचर्चितमित्यस्याः [10]प्रार्थनाया अभ्युपगमः। **सद्वस्तु** [11]प्राप्यतया विद्यते यस्येति। अनेन द्विविधार्थप्रदमित्येतत्पदार्थस्याभ्युपगमः। [12]**स्फुट**मित्यनेन अनाकुलपदार्थस्याभ्युपगमः। **आम्नायस्य** आगमस्य दर्शनाद् **इदं शास्त्र**मुवाचेत्यनेन[13] वस्तुरत्नसुचर्चितमित्यस्याः प्रार्थनायाः [14]सोपपादताभ्युपगमः। तच्च **अनुलोमतः** सृष्टिमार्गेण, न तु संहारमार्गेणैव[15] उवाचेति। एवमपि सुखबोध्यं[16] भवतीति। सुष्ठु क्रियते [17]निर्णीयते इति **सुकरम्**। अनेन तारमित्यस्यार्थाभ्युपगमः। **सुविभक्तानि अङ्गानि** छन्दोव्याकरणादीनि रक्षार्थं यस्य। यद्वक्ष्यति[18] — "अनुष्टुप्छन्दसा"इति। [19]**कवचभार्गवेऽप्युक्तम् —**

"देवानां साधुशब्दैर्यन्मनुष्याणां [20]स्वभाषया।
व्यवहारास्ततो [21]रक्ष्याः साधूनां लक्षणैः सदा"॥ इति।

---

[1] ०विद्यात्मिकायाः — आ.
[2] मतङ्ग० विद्या० ७. ३६ उ० — ३८ पू० वृत्तौ।
[3] सिद्धः। — ऐ.
[4] अधिकारी निबन्धनं — अ.
[5] तदादिप्राप्ता० — लृ; तत्पादादिप्राप्ता —ऐ.
[6] नशब्दो नास्ति। — ए.
[7] 'तस्यापि' इत्येतन्नास्ति — ई, उ.
[8] तद्वस्तु — ओ.
[9] व्यवस्थितन्याय० — उ, ओ.
[10] प्रार्थनाय — अ.
[11] प्राप्त्या — अ,
[12] 'स्फुटम्' इत्यारभ्य 'अभ्युपगमः' इत्यन्तं लुप्तम् अ. कोशे।
[13] अत्र 'अपि' इत्यधिकम् — ऐ.
[14] सोपवादाभ्युपगमः — अ; सोपवादताभ्युपगमः — आ, ई; अर्थापवादताभ्युपगमः — उ; सोपवादमभ्युपगमः — ए; सापपादतयाभ्युपगमः — ऐ.
[15] एवकारो नास्ति — आ, ई, उ, ए.
[16] बोद्धव्यं — ए.
[17] निष्क्रीयते — ए.
[18] मतङ्ग० विद्या० १. ३१ पू०
[19] अयं ग्रन्थो न लभ्यते।
[20] स्वभाषाधि व्यव० — अ.
[21] रक्ष्या — अ, ऐ.

श्रीमत्पौष्करेऽपि[१] —

"पदलक्षणतः [२]सिद्धिः पदस्य समुदाहृता"। इति। श्रुतिरप्याह[३] — "न म्लेच्छितव्यं नापभाषितव्यं श्रेयस्कामेन" [४]इति। अनेन [५]सुखबोध्यमित्यस्यापि पदस्यार्थोऽभ्युपगतः[६]। षट् च ते पदार्थाश्च अर्थराशयः पत्यादयः [७]तन्मयम्। दर्शनान्तरानधिगतपदार्थज्ञापनैकस्वरूपमिति। अनेन अज्ञानहमित्येतत्पदार्थाभ्युपगमः। [८]अनेन विपुलार्थपदस्य चापि। चत्वारः पादा विद्यादयो यस्येति। [९]अनेन असन्दिग्धपदार्थस्याभ्युपगमः। ननु शास्त्रातिशयप्रतिपादनायामप्रयोजकमेतत्पदम्[१०]। सत्यम्। तत्स्वरूपलक्षणार्थं तु भविष्यति। यदि चैवं[११] व्यवस्थितार्थत्वात् शुभपदेनाभ्युपगतस्य असन्दिग्धपदार्थस्यानेनोपपत्तिरुच्यते[१२]। किं च **अमृतात्मकम्** [१३]नित्यम्। [१४]शब्दात्मनः परमेश्वर-[१५]कर्तृकत्वेऽपि तदर्थस्य [१६]परमेश्वराज्ञात्मनो नित्यत्वात्। विधिनिषेध[१७]रूपत्वाच्छास्त्रस्य[१८]॥

अधुना श्रीमदिति [१९]पदस्यार्थमभ्युपगच्छति — 'धातुर्वक्त्राम्बुजोद्गारात्' इत्यादि।

**धातुर्वक्त्राम्बुजोद्गाराद्विमलाद्गुरुसंततौ ॥३०॥**
**अनुष्टुप्छन्दसा पूर्वं निबद्धं कोटिसंख्यया।**
**सदाशिवेन देवेन ततोऽनन्तेन धीमता ॥३१॥**
**भाषितं लक्षमात्रेण तदेवाहं तवाधुना।**
**उपसंहृत्य [२०]संक्षेपाद्वक्ष्ये वै पारमेश्वरम् ॥३२॥**
**सहस्राणां त्रयेणाथ पञ्चभिश्च शतैः परम्।**

शास्त्रस्य हि [२१]नाकृतकत्वेन [२२]प्रामाण्यम् असंभवात्। [२३]रचनाश्लोकादिवत् कर्तारं न [२४]व्यभिचरति यतः। किं त्वाप्तप्रयुक्ततया पित्रादिवाक्यवत्[२५]। परमाप्तश्च परमेश्वर इति, [२६]तन्मूलताप्रामाण्यप्रतिष्ठार्थं [२७]प्रतिसंहितमत्राविच्छिन्नगुरु[२८]संततिसंबन्धदर्शनेन [२९]स्मर्यते। इहापि **धातुः** पर-

---

[१] मुद्रितपौष्करे न लभ्यते।
[२] सिद्धः — अ.
[३] 'न म्लेच्छित वै नापभाषित वै।' इति व्याकरणमहाभाष्ये उदाहृतम् १. १. १.
[४] इतिशब्दो नास्ति — आ, ई, उ, ॡ.
[५] सुखबोद्धमि० — अ, ए; सुखबोद्धव्यमि० — ऐ.
[६] -ऽभ्युपगमः — ॡ, ए.
[७] तन्मयाः — अ.
[८] अनेनेत्यारभ्य चापीत्यन्तं नास्ति — अ, आ, ई, उ, ॡ, ए.
[९] 'अनेन' इत्यारभ्य '०भ्युपगमः' इत्यन्तं नास्ति अ, आ, ई, उ, ॡ, ए.
[१०] ०प्रयोजकमित्येतत्पदम् — अ.
[११] वैवं — आ, ई, उ, ए, ऐ; त्वैवं — ॡ.
[१२] ०स्यानेनाप्युपपत्तिर्निरुच्यते — अ.
[१३] नित्यः — अ.
[१४] शब्दात्मकः — ऐ.
[१५] कर्तृत्वेऽपि — अ, आ, ई, उ, ॡ, ए.
[१६] परमेश्वरात्मनो — आ, ऐ.
[१७] ०रूपात्मा शास्त्रस्य — अ; स्वरूपत्वाच्छास्त्रस्य — ए.
[१८] अत्र 'नित्यत्वम्' इत्यधिकम् — ऐ.
[१९] ०पदार्थमभ्युप० — अ, ए.
[२०] संक्षेपाच्छास्त्रं वै — मु, उ.
[२१] निराकृतकत्वेन — ऐ.
[२२] प्रामाण्यासंभवात् — अ.
[२३] अत्र 'नव' इत्यधिकम् — ऐ.
[२४] व्यभिचरन्ति — ऐ.
[२५] ०वाक्यात् — अ.
[२६] तच्छब्दो नास्ति — अ.
[२७] प्रतिसंहृतिमत्र — आ; प्रतिसंहृतमत्र — ए, ऐ.
[२८] ०संततिस्संबन्ध० — आ, ई, उ, ॡ.
[२९] स्मार्यते — ॡ; समर्थते — ऐ.

मेश्वरस्याशरीरित्वेन[१] वक्ष्यमाणत्वाद्[२] **वक्त्रमिव** वक्त्रं शब्दव्यक्तिहेतुत्वात् परिग्रहवर्तिनी शक्तिः वागीश्वरीति वक्ष्यामः[३]। तदेवाम्बुजं [४]कमलं तस्माद् उद्गिरणम् उद्गारः समुन्मेषः प्रथमक्षोभोऽव्यक्तशब्दात्मको नादरूपः[५], ततो **विमलादायातं** तद्गुरुसंततिनिमित्तं स्थूलशब्दतां गतम्।

ननु सर्वाण्येवमेव शास्त्राण्यायातानि। यदुक्तं [६]श्रीमत्**पौष्करे** —

"अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात्।
नादरूपं विनिष्क्रान्तं शास्त्रं [७]सर्वम्" इति।

सत्यम्। इदं तु [८]**निबद्धम्** [९]उपरचितं **सदाशिवेन देवेन** [१०]**कोटिसंख्यया** शास्त्रम्। अत एवेदमूर्ध्वस्रोतः, तत्रैवेशानादिकलायाः सदाशिवाभिधानायाः[११] संभवादिति स्रोतोऽन्तरेभ्योऽस्य वामदक्षिणगारुडभूततन्त्रेभ्यो[१२]ऽन्यत्वम्। **तत इति** न [१३]अनन्तेश्वरेण। आनन्तर्येण तस्य तत्र कर्तृत्वासिद्धेः। यदुक्तम्[१४] —

"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः।" इति।

अपि तु **ततः** सदाशिवभट्टारकादधिगम्य, तच्छास्त्रमनन्तेशेन लक्षसंख्यया संगृहीतम्। **तदेवेति** अनन्तरत्वादानन्तेशमेव[१५] शास्त्रम् **अधुना वक्ष्ये उपसंहृत्य संक्षेपादिति**। अत एवायं श्रीकण्ठोऽनन्तशिष्यो[१६] न परमेश्वरशिष्यः। प्रोक्तं श्रीमद्**रौरवे**[१७] —

"जगतः कारणं देवमनन्तेशं [१८]गुरुं परम्।
तेनोक्तं परमेशेन श्रीकण्ठाय महात्मने॥" इति।

**तवेति** मतङ्गस्य [१९]इदं मातङ्गं पारमेश्वरमुच्यते। न तु यक्षिणीपारमेश्वरम्[२०] [२१]पौष्करपारमेश्वरं वा पारमेश्वरत्वेऽपीति[२२]। **परो महांस्ततो** [२३]दिव्यः संबन्ध **उक्तः**। दिव्यादिव्यस्तथापरोऽदिव्यश्चेति द्वावर्थसिद्धौ। मतङ्गमुनिना मनुष्याणां मनुष्यैश्च[२४] मनुष्याणामद्य यावदुच्यते [२५]यत इति पञ्चविधो गुरुसंबन्धक्रमः सिद्धः। यद्येवं मतङ्गकर्तृत्वेनात्र वक्ष्यमाणानां [२६]प्रश्नानामपारमेश्वरत्वमुक्तम्[२७]। सत्यमेतदिति।

---

[१] ०स्याशरीरत्वेन — आ, ए.
[२] मतङ्ग० विद्या० ३. १८, १९ वृत्तौ.
[३] मतङ्ग० विद्या० ४. २० उ० — २३ पू०
[४] अमलं — ऐ.
[५] नादरूपता — ऐ.
[६] पौष्करे विद्यापादे तन्त्रावतारपटले ५, ६ सूत्रयोरत्रोक्तो विषयो दृश्यते, नत्वयं श्लोकः; 'श्रीमत्' इति नास्ति — अ.
[७] 'सर्वम्' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.
[८] निबन्धम् — ए, ऐ.
[९] उपचरितम् — अ, आ.
[१०] कोटिकोटिसंख्यया — ऐ.
[११] ०भिधानाः। अ.
[१२] ऽन्यत्वत इति। — अ.
[१३] 'अनन्तेश्वरेण' इत्येतन्नास्ति — अ, आ, ई, उ, ऌ, ए.
[१४] किरणे विद्या० ३. २७ उ०
[१५] ०त्वादनन्तेशमेव — अ, ए.
[१६] -ऽनन्तेश्वरशिष्यो — ए.
[१७] रौरवे विद्या० ३. ६, ७.
[१८] परं गुरुम् — ऌ, ऐ.
[१९] अयं — आ.
[२०] परमेश्वरः — अ.
[२१] पौष्करं वा — अ, ई, उ, ए, ऐ.
[२२] पारमेश्वरत्वेसति — आ, ई, उ, ऌ, ए; परमेश्वरत्वेऽपीति — ऐ.
[२३] दिव्यसंबन्धः — अ,
[२४] मनुष्येभ्यश्च — ऌ.
[२५] 'यतः' इत्येतन्नास्ति — आ.
[२६] 'प्रश्नानाम्' इत्येतन्नास्ति — आ.
[२७] 'उक्तम्' इत्येतन्नास्ति — ऐ.

केचिच्छास्त्रविदस्त्वद्यत्वेऽपि [१]शास्त्रकाराणां तथा दर्शनाद्भगवतैव [२]प्रश्नप्रतिवचनरूपं [३]शास्त्र-मेतत्प्रवर्तितमनुग्रहात्तु मतङ्गपदानि प्रश्नेषु [४]क्लृप्तानीत्याहुः ॥

अथातोऽपि [५]सार्धसहस्रत्रयात् संक्षिप्ततरसंग्रहः[६] कस्मान्नोच्यत इति तदर्थमेतत् — 'अतोऽन्यो यः समुद्धारः' इति ।

**अतोऽन्यो यः समुद्धारः स स्फुटार्थप्रकाशकः ।**
**न भवत्यतिसूक्ष्मत्वात्ततोऽयं निश्चयः स्फुटः ॥३३॥**

अतिसंक्षिप्तो हि अनर्थसूचकत्वेन दुःश्लिष्टपदतया च [७]न स्फुटं कृत्वार्थप्रकाशक[८] इत्ययमेव निश्चयहेतुत्वाद् **निश्चयः स्फुट** उक्तः ॥३३॥

व्याख्यातार्थोपसंहाराय [९]व्याख्येयोपक्षेपाय च श्लोकः — 'उदारबुद्धिः' इत्यादि ।

**उदारबुद्धिर्भगवान्मतङ्गः शास्त्रार्णवो येन हरादवाप्तः ।**
**आराध्य वेण्वाकृतनिश्चयेन [१०]तद्वस्तु युक्त्या ह्यखिलं प्रवक्ष्ये ॥३४॥**

यदुक्तं [११]"प्राक् किंविशिष्टोऽसौ मतङ्गमुनिः" [इति] तत्रेदमुक्तम् **उदारबुद्धिः** उत्कृष्टबुद्धिः, **भगवांश्च** अनुगृहीतत्वेन संप्राप्तैश्वर्यादिकः । यदप्युक्तं "कुतस्तेनैतदवाप्तम्"इति तत्राप्युक्तं **शास्त्रार्णवो** [१२]**येन** हराद् [१३]उमापतेः प्राप्त इति । यच्चोक्तं "किं च कृत्वा तेनेदमवाप्तम्"इति तत्रापि [१४]प्रतिविहितं वेणुना आसमन्तात्कृतो [१५]वेण्वाकृतः स चासौ निश्चयश्च प्रागुक्तो[१६] बाह्यार्चनाभिनिवेशः तेन नान्येनेति । एवंविधशङ्कानिवृत्त्यर्थमेतदुपोद्घातप्रकरणमिति मतङ्गशिष्यः [१७]प्रशिष्यो वा स्व-शिष्येभ्यः कथयति । व्याख्येयं चोपक्षिपति **तदिति** शास्त्रार्णवरूपं **वस्तु** [१८]तस्मै मतङ्गाय भगवता [१९]यत् कथितं [२०]तद् [२१]**अखिलं प्रवक्ष्ये** इति[२२] ।

इति [श्री भट्ट] नारायणकण्ठात्मजभट्टरामकण्ठविरचितायां
मतङ्गवृत्तौ [विद्यापादे] उपोद्घातप्रकरणं प्रथमं [समाप्तम्] ।
[**प्रथमः पटलः**]

---

[१] शास्त्रकारणात्तथा—अ; शास्त्रं कारणं तथा —ऐ.
[२] प्रवृत्तिवचनरूपं —अ; प्रश्नप्रवृत्तिवचनरूपं — आ, ई, उ.
[३] शास्त्रमेवं तत् — अ.
[४] क्षिप्तानीत्याहुः — आ, ई, उ, ऐ.
[५] सार्ध सहस्र० — आ.
[६] ०तरः संग्रहः — आ, ई, उ, लृ.
[७] 'न' इति नास्ति — अ.
[८] 'प्रकाशक' इति नास्ति — अ.
[९] व्याख्येयोपेक्षया च — आ.
[१०] तद्वस्तुयुक्तं — मु, उ.
[११] मतङ्ग० विद्या० प्रथमश्लोकावतारिकायाम् ।
[१२] 'येन' इत्येतन्नास्ति — ऐ.
[१३] उमापतिः — अ.
[१४] प्रतिहितं — अ; प्रतिविहतं —ऐ.
[१५] वेणुवता कृतः — अ; वेण्वाकृति —ऐ.
[१६] मतङ्ग० विद्या० १. ७ उ० ८ वृत्तौ ।
[१७] प्रतिशिष्यो — अ.
[१८] 'तस्मै' इत्येतन्नास्ति — आ.
[१९] तावत्कथितं — लृ.
[२०] 'तद्' इति नास्ति —ऐ.
[२१] निखिलं — आ, ई, उ, लृ, ए, ऐ.
[२२] प्रवक्ष्यते । — अ, ऐ.

## द्वितीयः पटलः

## उद्देशप्रकरणम्

तदिदं शास्त्रम् अथाणोरित्यादि —

**अथाणोर्बन्धसोपानपदपङ्क्तिनिवृत्तये**
**सत्ताभिव्यक्तये चैव वर्ण्यते च बुभुक्षुणा ॥१॥**
**ज्ञानामृतमसंदिग्धं भूत्यर्थमतुलं[1] परम् ।**

अथेति [2]स्थानसंबन्ध[3]प्रयोजनाभिधानादनन्तरमिति[4] केचित्। न। तस्य व्याख्येयोपक्षेपादेव च सिद्धेः।

ननु [5]भिन्नवक्तृकोऽसावित्युक्तम्। सत्यम्। [6]भगवदुक्तिरेवात्र [7]मतङ्गमुनेः शिष्यैरनूद्यते नाधिकमित्यानन्तर्यसिद्धिरुक्ता।

तर्हि मल[8]परिणतिशक्तिपात[9]गुरूपसदनदीक्षाभ्योऽनन्तरम्। यदाहुः[10] —

"अथेति चतुरो [11]धर्मान्निपातो ज्ञेयवर्तिनः।
यतः [12]सद्यो नयत्येष" इति।

न। तस्यापि [13]महात्मन इत्यनेनैवात्र सिद्धत्वात्। भवतु [14]तर्हि अधिकारार्थोऽयम् अथशब्दः। न[15]। [16]"चतुष्पादमिदं शास्त्रम्"इत्यनेनैव सिद्धेः। तर्हि कोऽर्थः। परमेश्वरावलोकनादनन्तरं यत्प्रसृतं तद्वर्ण्यत [17]इत्यानन्तर्यमस्यार्थः।

तदवलोकनं चैवम् "अमी हि पुमांसो मोक्तुमर्हन्ति[18]। यत [19]एषां दृक्क्रियावारकस्य बन्धस्य परिपाको वर्तते। स च परिपक्वोऽपि,[20] अचेतनत्वात् चक्षुषः पटलादिवद् न स्वयं निवर्तते। अपि तु निमित्तान्तरात्। न [21]चाज्ञातं तथात्वेन व्यापारयितुं शक्यम्। न च शास्त्रान्तरात् [22]तज्ज्ञायते। अतोऽहमेषां तज्ज्ञानायैकं शास्त्रं प्रवर्तयामि" [23]इत्यालोच्य, स्ववक्त्राम्बुजोद्गराच्छास्त्रं

---

[1] ०मखिलं — ओ.
[2] स्नान० — अ, आ, ई, उ, ऐ.
[3] प्रयोजनाभिधेयाभिधाना० — ऐ.
[4] ०दनन्तरमेवेति —लृ.
[5] न वक्तृको० — अ; भिन्नवक्त्रको० —आ, ई, उ, लृ, ऐ.
[6] भवदुक्ति० — अ, ऐ.
[7] मतङ्गमुनिशिष्यै० — ऐ.
[8] ०परिणतशक्ति० — ऐ.
[9] ०गुरुसदन० — ऐ.
[10] आकरो न लभ्यते।
[11] धर्मान्निपाततो —लृ.
[12] स द्योतमित्येष — अ; स द्योतयत्येष — आ, ई, उ, लृ, ए.
[13] मतङ्ग० विद्या० १. २७, २८ पू० वृत्तौ।
[14] तदधिकारार्थो० — ऐ.
[15] अत्र 'तस्यापि' इत्यधिकम् — ऐ.
[16] मतङ्ग० विद्या० १. ३० पू०
[17] इत्यानन्तर्यस्यार्थः — आ, ई, उ, ए.
[18] मोक्तुमर्हति — अ, ए, ऐ.
[19] एषा दृक्० — अ, आ; येषां दृक्० — ऐ.
[20] ०पाकोऽपि — ए, ऐ.
[21] चाज्ञानं — आ, ए.
[22] तु ज्ञायते। — अ, आ, ई, उ, लृ, ए; न तु ज्ञायते — ऐ.
[23] इत्यालोच्यास्य वक्त्रा० —ऐ.

प्रवर्तयतीति। [1]अतश्च पतिपदार्थस्य अत्र [2]प्रथममुद्देशसिद्धिः। अथशब्दस्य [3]च नार्थान्तर-कल्पना। आनन्तर्यासंभवे हि तस्य मङ्गलाद्यर्थत्वम् अभावविकल्प[4]प्रसिद्धया सिद्धम्। तेन [5]समुच्चयादेव [6]हेतुनियोगार्थत्वं न तु समविशिष्टतया यतः।

अणुश्च आत्मा [7]स्वशास्त्रव्यवहारात्। ननु प्रसिद्धार्थैरेव पदैर्मतङ्गमुनिना [8]शास्त्रं प्रार्थित-मनाकुलमिति। अभ्युपगतं [9]च भगवता स्फुटपदेनेति विरोधः। प्रोक्तं चान्यैरपि—

"[10]सूत्रार्थे क्लिश्यतश्चैव[11] दूरे शास्त्रार्थनिश्चयः।" इति।

सत्यम्। न तु सर्वत्रैतदुपपद्यते। स्वशास्त्रैकसिद्धानाम् अणुमलमायादीनां [12]वक्ष्यमाणत्वादिति दर्शयितुं [13]प्रसिद्धपदस्याप्यर्थस्याप्रसिद्धेनाभिधानमिति। स च सर्वार्थप्रकाशकतया [14]परात्मानुमातृत्वेन च [15]प्रत्यात्मानं स्वसंवेदनसिद्धो भिन्न एव नित्यो व्यापकश्चेति वक्ष्यामः[16] **पुंपाशेश्वरप्रकरणे**। अत एव [17]चात्र जातावेकवचनम्। अणूनामित्यर्थः। तेषां बन्धः। [18]बन्धशब्दोऽत्र [19]अणुशब्दसंनिधानाद् आणवत्वेन [20]प्रसिद्धमणूनां दृक्क्रिया[21]वारकं बन्धमभिधत्ते[22]। [23]सोपानपदपङ्क्तिपदे च विशेषयति अभिधानशक्तेः। नामपदमिव लक्षणपदम्। यदाहुः[24]—

"अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः।
[25]प्रोक्ताः [26]सामान्यशब्दानां विशेषस्मृतिहेतवः[27]॥" इति।

स [28]च नात्मस्वभावः, तस्य नित्यत्वव्यापकत्वादेरिवानिवर्त्यत्वात्[29]। नाप्यवस्त्वेव, तस्य शशविषाणादेरिव नित्यनिवृत्तत्वेन[30] दीक्षाद्यानर्थक्यप्रसङ्गात्। नापि मायाद्यात्मकः, तेषां स्वकार्यैरेव सिद्धेः। कार्यान्तरहेतुत्वे प्रमाणाभावात्। अनेकतत्त्वपरिकल्पनाभावप्रसङ्गाच्च। अपि तु [31]तद्व्यतिरिक्तद्रव्यान्तरमेवानन्तात्मस्वरूपावारकानेकशक्तियुक्तमिति [32]**पुंपाशेश्वरप्रकरणे** वक्ष्यामः[33]।

---

[1] एतच्च — अ.
[2] प्रथममुपदेश० — आ, ई, उ, ए.
[3] न चार्थान्तर० — ऐ.
[4] प्रसिद्धासिद्धम् — अ, ऐ.
[5] समुच्चार्यादेव — अ,
[6] हेतुं नियोगा० — ऐ.
[7] स्वशास्त्रस्थव्यव० — ए.
[8] शास्त्रं हि आर्थित० — ए.
[9] चशब्दो नास्ति — अ, आ, ऐ.
[10] मी० श्लोकवा० जिज्ञासासू० ३६ पू०; सूत्रार्थैः — आ, ई, उ, ए.
[11] ०श्चैवं० — ई, उ.
[12] अणुमलमायानां पुंपाशेश्वरप्रकरणे, अन्येषां च तत्तत्प्रकरणेषु।
[13] प्रसिद्धस्याप्यर्थस्य — ई, उ, लृ, ए.
[14] परमात्माणुमात्रत्वेन — अ; परानुमात्रत्वेन — आ, ए; परात्मानुमात्रत्वेन — ई, उ, लृ;
[15] प्रत्यात्मकं० — ऐ.
[16] मतङ्ग० विद्या० ६. ३४, ३५ वृत्तौ।
[17] चाणुजाता० — ऐ.
[18] बन्धोऽत्र — ऐ.
[19] अणुपदसं० — आ, ई, उ, लृ, ए, ऐ.
[20] प्रसिद्धाणूनां — अ.
[21] वारकबन्ध० — अ, आ.
[22] ०मभिधीयते। — लृ.
[23] सोपादानवन्दितपदे — अ.
[24] वाक्यपदीये — २. ३१५ उ० ३१६ पू०
[25] 'शब्दार्थस्यानवच्छेदे' इति वाक्यपदीयपाठः।
[26] सामान्यं शब्दानां — अ, आ, ई, उ.
[27] ०स्थितिहेतवः — आ, ई, उ, लृ, ए, ऐ.
[28] चानात्मस्वभावः — अ; सर्वनाम्नः स्वभावः — ए.
[29] ०रिव निवर्त्यत्वात् — अ.
[30] ०निर्वृतत्वेन — ऐ.
[31] तद्व्यतिरिक्तं द्रव्या० — आ, ई, उ.
[32] पुंपाशेशप्रकरणे — अ.
[33] मतङ्ग० विद्या० ६. ८१ वृत्तौ।

[1]बन्धसोपानानि च कर्माणि ऊर्ध्वाधोगमनहेतुत्वात्। यदुक्तम्[2] —

"कर्मसोपाननिःश्रेण्या भुवनाद्भुवनान्तरम्।
[3]यात्यात्मा भोगतो [4]भोगं देहाद्देहान्तरं तथा॥" इति।

तानि च [5]प्रत्यात्मभिन्नान्येव आत्मनां कर्तृत्वादिति वक्ष्यामः[6]। तन्निमित्तत्वाच्च भावप्रत्ययात्मनो [7]भोगस्यात्र ग्रहणम्। [8]बन्धे सति कस्यचित् "[9]विज्ञानयोगसंन्यासैर्भोगाद्वा कर्मणः [10]क्षये" इति तेभ्यः प्रथमं [11]बन्ध उपात्तः। [12]बन्धपदपङ्क्तिश्च द्वयी [13]शुद्धा, अशुद्धा च। [14]तत्र अशुद्धा मायादिपृथिव्यन्ततत्त्वात्मिका, षट्कपालेश्वरानन्तभुवनात् कालाग्न्यन्तं[15] यावद्भुवनरूपा, [16]तत्तद्भुवनजानेकशरीरस्वभावा च[17]। [18]सा च मायागर्भाधिकारिभि : श्रीकण्ठादिभिरनेकविधा, स्रोतोभेदेन चेति। शुद्धा तु [19]विद्यातत्त्वाधिकार[20]तत्त्वभोगतत्त्वसंभवा चेति[21] दर्शयिष्यामः[22]।

सा च सकलानां समायागर्भेश्वराणां द्विरूपा वर्तमानैव। प्रलयकेवलिनां भविष्यत्वेन,[23] [24]वर्तमानत्वेन च विज्ञानकेवलिनां मायोर्ध्वभुवनस्थानां च शुद्धैवेति[25]। [26]बन्धतत्सोपाननिमित्तत्वाच्च पदपङ्क्तेस्तथा निर्देशः। [27]तासां बन्धसोपानपदपङ्क्तीनां[28] निवृत्तिरपगमः। निवृत्तिपदमत्र प्रत्येकमभिसंबध्यते। तेन केषांचिदणूनां बन्धस्यैव निवृत्तिः; विज्ञानकेवलिनां प्रागुक्तहेतुभिः [29]कर्मणः क्षयात् स एव विद्यते। न [30]सोपानपदपङ्क्ती यतः। केषांचिद् बन्धसोपानयोर्निवृत्तिः; प्रलयकेवलिनां प्रलयेन पदपङ्क्तेरुपसंहृतत्वात्[31]। केषांचित्तु बन्धसोपान[32]पदपङ्क्तीनां निवृत्तिः; सकलानां बन्धत्रयस्य विद्यमानत्वात्। कश्चित्तु सकलः क्षीणकर्मापि,

---

[1] बन्धः सोपानानि — लृ.
[2] आकरो न लभ्यते।
[3] यात्यात्मभोगतो — ए.
[4] भोगदेहा० — अ; भोगान् देहा० — ऐ.
[5] प्रत्यात्मकं भि० — आ, ई, उ, लृ, ए, ऐ.
[6] मतङ्ग० विद्या० २६ तमे प्रकरणे.
[7] भोगस्याग्रहणम् — अ; भोग्यस्यात्र ग्रहणम् –ऐ
[8] बन्धेऽपि सति — आ, ई, उ, लृ, ए, ऐ.
[9] पौष्करे — १४६ उ०; परमोक्षनिरास० ५४ उ०
[10] क्षया — आ; 'क्षयात्' इति परमोक्षनिरासकारिकापाठः।
[11] बद्ध — ऐ.
[12] बन्धपन्दितश्च — अ.
[13] शुद्धा चाशुद्धा च — आ, ई, उ, ए; अशुद्धा शुद्धा च — ऐ.
[14] तत्र शुद्धा —अ.
[15] कालाग्न्युक्तं — ए; कालाग्निरुद्रान्तं — ऐ.
[16] तत्तद्भुवनानेक० — अ; तत्तद्भुवनज्ञानैक० ए; तत्तद्भुवनजान्येक० — ऐ.
[17] स्वभावाच्च — अ.
[18] सह माया० — अ, आ, ई, उ, लृ, ए.
[19] विद्याधिकार० — आ.
[20] ०तत्त्वभोगतत्त्व० इत्येतन्नास्ति — ऐ.
[21] ०संभवाच्चेति — अ, ऐ.
[22] अष्टमप्रकरणादारभ्य त्रयोविंशतितमप्रकरणपर्यन्तमशुद्धपङ्क्तिर्वर्ण्यते। शुद्धपङ्क्तिस्तु तृतीयप्रकरणादारभ्य पञ्चमप्रकरणान्तं, सप्तमप्रकरणे च वर्ण्यते।
[23] अत्र 'पुनर्भविष्यत्वेन' इत्यधिकम् — अ, आ, ई, उ, लृ.
[24] 'वर्तमानत्वेन च' इत्येतन्नास्ति — ए, ऐ.
[25] इतिशब्दो नास्ति — आ, ई, उ.
[26] बन्धतत्सोपाने नि० — अ; बन्धनिमित्तत्वात्सोपाननि० — ऐ
[27] तेषां — अ.
[28] ०सोपानपङ्क्तीनां — आ.
[29] कर्मक्षयात् — ए.
[30] सोपानपदपङ्क्तितः यतः — अ; सोपानपङ्क्तिः यतः।—ऐ.
[31] ०संभृतत्वात्।—ए.
[32] 'पद' इत्येतन्नास्ति — ऐ

[1]"तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः ।" इति तस्य [2]बन्धपदपङ्क्तयोरेव[3] निवृत्तिः; तयोरेव विद्यमानत्वात् । [4]सा च निवृत्तिः क्वचित् कस्यचिद् बन्धस्य सर्वात्मना, क्वचिदसर्वात्मनेति [5]दर्शयिष्यामः । [6]तस्यै **निवृत्तये** निवृत्त्यर्थम् । इदमत्र प्रयोजनमित्यर्थः । अभिधेयस्तु [7]निवर्त्यत्वेनात्र श्रुतेः निवृत्त्युपायश्च विचार्यत्वेन [8]प्रागुक्तषट्पदार्थ[9]लक्षणोऽर्थसामर्थ्य-[10]सिद्धः । संबन्धश्चोपायोपेयलक्षण इति ।

[11]किमेतावदेवाङ्गीकृत्य तद्वर्ण्यते । **न** । सत्तायाः स्वरूपस्य चाणूनां दृक्क्रियात्मनोऽभिव्यक्तये अभिव्यक्त्यर्थम् । [12]सर्वज्ञत्वं सर्वकर्तृत्वं ह्यात्मनां [13]स्वरूपं मलावृतत्वान्न सर्वत्र युगपदभिव्यज्यत इति तन्निवृत्तिद्वारेणाभि[14]व्यक्तिर्बोद्धव्या, नान्यथेति वक्ष्यामः[15] । तदभि[16]व्यक्तिं च दीक्षादिना [17]वक्ष्यतीति क्रियापादादीनामप्यत्र[18] सूचनमिति सिद्धम् । तस्यैव[19] **सत्ताभिव्यक्तये** [20]वर्ण्यते चेति प्रयोजनान्तरसमुच्चयः[21] ।

[22]ननु आवरणनिवृत्तिरेव घटादेरिवाणोः सत्ताभिव्यक्तिरिति न प्रयोजनान्तरत्वम् । न । अनैकान्तिकत्वात् । पटलादिभिः पटलाद्यावरणनिवृत्त्यापि न चक्षुरादेः ग्राहक[23] शक्तिर्दृष्टा । असत्यावरणे तच्छक्त्युत्तम्भनेन [24]अनावरणमिति[25] तन्निवृत्त्यापि तत्र निमित्तान्तरतोऽञ्जनसेवादिना [26]युक्ता

---

[1] सांख्यका० ६७ उ०

[2] 'बन्ध' इत्येतन्नास्ति — ऐ.

[3] ०पङ्क्तेरेव — ऐ.

[4] स च — अ.

[5] अत्र भोगजननाभ्यां कर्मेश्वरात्मनोः सर्वात्मना क्षपितत्वादवशिष्टानां दीक्षाक्रमेणैवोर्ध्वस्रोतसा भूतभुवनतत्त्वानां विच्छेदः। यतस्तत्त्वानामेव संनिवेशो भुवनानि भौवनानि च भूतास्थूलशरीरात्मकानीत्युक्तं विद्यापादे। तत्रापि च भूतलक्षणस्य सर्वात्मना विच्छेदः। भुवनात्मनस्तु पर्वणोऽनन्तपुरुषभोगसाधनत्वेन साधारणतया व्यवस्थितेः, सर्वथा विच्छेदासंभवात् तत्तद्भोगसाधनत्वं विच्छेत्तव्यमित्यसर्वात्मना विच्छेदः प्रोक्तः । . . . तत्त्वात्मनस्तु सूक्ष्मदेहत्वेनावस्थितेः प्रतिस्थानमंशांशिकया विच्छेदे, तत्र तदूर्ध्वं वैकल्येन भोगानुपपत्तिरिति न तत्र सर्वात्मना विच्छेदः। अपि तु तद्विशिष्टपापभोगदानसामर्थ्यमात्रस्यैव । त्रिपर्वपदार्थावसाने तु सर्वात्मनेति वक्ष्यामो "मायान्तं भुवनेशानाम्" इत्यत्र। — मतङ्ग० क्रियापादे भुवनदीक्षापटले २१ — २२ पू० वृत्तौ, टि. ६७८ तममातृकायां १३८, १३९ पृष्ठयोः ।

[6] तस्यैव — अ, आ, ऐ.

[7] निवृत्तत्वेनात्र — अ.

[8] मतङ्ग० विद्या० १. २८ — ३० पू०.

[9] लक्षणार्थ० — ई, उ.

[10] सिद्धेः — आ; सिद्धिः — ऌ.

[11] न केवलमेताव० — ऐ.

[12] सर्वज्ञत्वसर्व० — अ, आ, ई, उ, ए, ऐ.

[13] स्वरूपमला० — ऐ.

[14] 'व्यक्तिः' इत्यारभ्य 'वक्ष्यतीति' इत्यन्तं नास्ति 'अ' कोशे ।

[15] मतङ्ग० विद्या० २६. ७१ उ० ७२ वृत्तौ ।

[16] व्यक्ति च — आ; व्यक्तिश्च — ए.

[17] मतङ्ग० विद्या० २६. ६३ वृत्तौ ।

[18] ०पादादीनामत्र — आ.

[19] तस्य — आ; तस्यै — ऌ, ए.

[20] च वर्ण्यत इति — आ, ई, उ, ऌ, ए.; वर्णित इति — ऐ.

[21] समुच्चयम् — ए.

[22] न तु — अ.

[23] शक्तिदृष्टसत्यावरणे — ऐ.

[24] आवरणमिति — आ, ए; नावरणमिति — ई, उ, ऌ, ऐ.

[25] अत्र 'व्यक्तिर्बोद्धव्या नान्यथेति वक्ष्यामः । तदभिव्यक्तिश्च दीक्षादिना वक्ष्यतीति' इत्यधिकम् — अ.

[26] उक्तम् । — ए.

सत्ताभि[1]व्यक्तिर्यथा, एवमिहाप्यनादि[2]बन्धकदर्थितत्वाच्छक्तेर्निमित्तान्तरादभिव्यक्तिरिति प्रयोजन-[3]द्वयमविरुद्धमेव ।

संसारावस्थायामपि कलया निवृत्तमलस्य विद्यादिभिर्बुद्धीन्द्रियकर्मेन्द्रियपर्यन्तैः[4] ज्ञत्व[5]कर्तृत्वोपोद्बलनाद्विकसनं दृष्टमेव यतः। न चैतावता पुंसः परिणामित्वमिति [6]प्रतिपादयिष्यामः। अत एव दीक्षायां मायातत्त्वादूर्ध्वं मलविच्छेदं[7] यावद्बन्धनिवृत्तिः। [8]ततस्तूर्ध्वं क्रमेण दृक्क्रियात्मक-[9]सत्ताभिव्यक्तिरिति [10]निवेदयिष्यामः। अवधारणेन न चात्र दर्शनान्तरसिद्धानि फलानि परमेश्वरकर्तृकाणीति दर्शयति। [11]बन्धनिवृत्तिरपि समुच्चीयमानावधारणत्वाद् यथा देवदत्तो भोजयितव्यो यज्ञदत्त एव चेति। **वर्ण्यते** कथ्यते। ज्ञायतेऽनेनेति [12]**ज्ञानं** शास्त्रं तदेवामृतमिव **अमृतं** मुक्तिहेतुत्वात्। नात्र प्रकृतिलयवादिनां [13]वेदान्तिपाञ्चरात्रिणामिव[14] [15]मुक्तेः पुनरावृत्तिदोष इत्यर्थः।

नन्वेवं विज्ञानकेवलादीनामपि शास्त्रान्मुक्तिः स्यात्। न। इच्छामात्रेणेति विरोधो न। शास्त्रस्य साक्षान्मुक्ति[16]फलसाधकत्वासंभवात् तत्साधनोपदेशद्वारेण हि, आयुर्वेदस्यायुःफल[17]प्रदत्ववदुपचारेण मुक्तिफलत्वं तस्योच्यते। अथ शास्त्रदृष्टेनोपायेन स्यादित्युच्यते। तदिष्यत एव। इच्छामात्रस्यापि तेषां शास्त्रदृष्टत्वात्।

किं च [18]**असंदिग्धम्**। ननु च प्रार्थनाभ्युपगमवाक्येनैवास्य [19]पूर्वमसंदिग्धता। सत्यम्। नात्रोक्तस्य मोक्षहेतोः [20]कारीर्यादेर्वृष्ट्यादिफल इव [21]प्रागार्जितेनाशास्त्रीयेण कर्मणा प्रतिबन्धः संभवतीति तदर्थमित्यर्थः। यदाहु[22]ः —

"फलति यदि न सर्वं तत्कदाचित्तदेवं[23]
ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते"। इति।

---

[1] व्यक्तिस्तथा — ऐ.
[2] ०बद्ध० — ए.
[3] द्वयमपि विरुद्ध० — अ; द्वयं विरुद्ध० — ऐ.
[4] पर्यन्ते — ऐ.
[5] ०कर्तृत्वोद्बलना० — अ.
[6] निरूपयिष्यामः — ऐ.
[7] ०दूर्ध्वममविच्छेदं — आ; दूर्ध्वमूलविच्छेदं — ए.
[8] तत ऊर्ध्वं — आ; तदूर्ध्वं ए, ऐ.
[9] सत्तान्तव्यक्तिरिति — ए.
[10] निदर्शयिष्यामः — ऐ; मतङ्ग० विद्या० १०. २४ — २८; "भोगप्रदाने हि कर्मणां मलः सहकारिकारणमुक्तं विद्यापादे। मायातत्त्वे तु कर्मसंस्कारं दग्धबीजं विधाय, तदूर्ध्वं सर्वज्ञत्वावारकत्वं मलस्य विच्छेत्तव्यमित्युक्तं तत्रैव"। क्रियापादे भुवनदीक्षापटले ३३, २१ — २२ पू. वृत्तौ०
[11] बन्धननिवृत्ति० — ए.
[12] 'ज्ञानं' इत्येतन्नास्ति — आ.
[13] वेदान्त० — ऐ.
[14] ०पाञ्चरात्रादीनामिव — आ, ई, उ, ऌ, ए; ०पञ्चरात्रादीनामिव — ऐ.
[15] मुक्ते पुनरा० — ऐ.
[16] ०फलत्वासंभवत्वात् — अ, ऌ, ऐ; ०फलसाधकत्वसंभवात् — आ,
[17] ०प्रदत्तवदुप० — ऐ.
[18] सन्दिग्धम् — अ.
[19] पूर्वसन्दिग्धता — अ, आ, ऌ.
[20] कार्यादेः प्रागार्जितादिफलमिव — अ; कुर्वादि फल इव — ए; कार्यादेः कृष्यादिफल इव — ऐ; पूर्वमीमांसायां ६. २. ३. अधिकरणे विचार्यतेऽयं विषयः।
[21] प्रागार्जितेन शास्त्रीयेन — अ, आ, ई, उ, ए; प्रागोदितेन शास्त्रीयेन — ऐ.
[22] श्लो० वा० चित्राक्षेपपरिहारे २६.
[23] ०त्तदेव — अ, ऌ, ए.

किं च [१]न केवलं मुक्त्यर्थमेवेदं वर्ण्यते। यावद् [२]भूत्यर्थं सिद्धयर्थम्। अतुलं न [३]ह्येतत्सिद्धसाधनैरन्यैः शास्त्रान्तरैः सह तुलयितुं शक्यम्। [४]तैरतुल्यमित्यर्थः। एतत्साध्यायाः सिद्धेः [५]सिद्धयन्तरैरनभिभवात्। संस्कारविशेषेण च संसारानारम्भकत्वादिति वक्ष्यामः[६]। प्रोक्तं च श्रीमद्रौरवे[७] —

"[८]भुक्त्वा भोगान्सुचिरममरस्त्रीनिकायैरुपेताः
स्रस्तोत्कण्ठाः [९]शिवपदपरैश्वर्यभाजो भवन्ति"। इति।

ननु प्रार्थनाभ्युपगमवाक्येनैवास्य सिद्धिमुक्तिसाधनत्वं [१०]प्राक्प्रतिपादितम्। सत्यम्। अत एवात्र विशिष्टत्वं विधीयत इत्यविरोधः।

अथ कथं तदेवंविधविशेषयुक्तम् — यतः परं शास्त्रान्तरेभ्यः परमेश्वरप्रयुक्तत्वादित्युक्तम्[११]। अथ केनेदं वर्ण्यते — बुभुक्षुणा भुजिः पालनेऽपि पठयते, पालनेच्छावता परमाधिकारिणा अनन्तेशेन। एतदुक्तं भवति — अनन्तेशप्रोक्तान्येवात्र मया सूत्राणि[१२] केवलमर्थवादानुवादपरित्यागेन[१३] संक्षिप्तानि। [१४]चशब्दान्मया क्वचिद्वर्ण्यत इति दर्शयिष्यति[१५] "निश्चितेयं मतिर्मम" इत्यादिना[१६]।

[१७]नन्वेक एवात्र [१८]श्लोकः आदिसूत्रमिति[१९] कैश्चिद्वयाख्यातम्[२०]। [२१]किं नाम न व्याख्यातं मूढमतिभिर्वाक्यलक्षणानभिज्ञैः। प्रोक्तं च [२२]श्रीमत्पौष्करे —

"वाक्यलक्षणतः सिद्धिर्वाक्यस्य समुदाहृता।[२३]
वाक्यमेकमनेकं वा तत्स्वशक्त्यैव[२४] सिद्धयति॥" इति[२५]।

[२६]न पुरुषेच्छया। यदाहुः[२७] — "[२८]अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्याद्"इति।

[२९]ननु सूत्र[३०]विवरणभेदेनात्र वाक्यभेदः। मनोराज्यमात्रमिदम्; एकक्रियान्वयेनात्र वाक्य-

---

[१] नशब्दो नास्ति — ऐ.
[२] भुक्त्यर्थं — ए.
[३] ह्येतद्धि साधनै० — अ; ह्येतत्सिद्धिसाधनै० — लृ, ए.
[४] तैरतुल० — अ, लृ.
[५] सिद्धयन्तरेण नाभिभवात् — ऐ.
[६] मतङ्ग० विद्या० ७. ६९ उ० — ७१ वृत्तौ।
[७] मृगेन्द्रे क्रियापादे अष्टमपटले द्वितीयश्लोकवृत्तौ श्रीमद्रुरुसंहितायाम् इति निर्दिश्येदमर्धमुदाहृतम्। परं तु मुद्रितरौरवे नोपलभ्यते।
[८] भुक्तान् भोगान् — अ.
[९] शिववदपरैश्वर्य० — अ; शिवपदपदैश्वर्य० —आ.
[१०] मतङ्ग० विद्या० १. २८ उ०, २९.
[११] ०दिति सिद्धम्। ..त्युक्तम् — आ; मतङ्ग० विद्या० १. ३० उ० — ३२ वृत्तौ।
[१२] सुशास्त्राणि — ए.
[१३] अत्र चशब्दोऽधिकः — आ, ई, उ, लृ, ए.
[१४] शब्दात्मना क्वचित् — अ.
[१५] मतङ्ग० विद्या० ७. ४८ उ०
[१६] ०त्यादि —आ.
[१७] नत्वेक — अ.
[१८] 'श्लोकः' इत्येतन्नास्ति — ए.
[१९] ०सूत्रस्य — अ, आ, ई, उ, लृ, ए.
[२०] व्याख्यातः — अ.
[२१] किं नाम्ना व्याख्यातं — अ; किं नाम व्याख्यातं — ऐ.
[२२] श्रीपौष्करे — अ, लृ, ऐ; मुद्रिते पौष्करे नोपलभ्यते
[२३] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, लृ, ए, ऐ.
[२४] -शक्यैव — ऐ.
[२५] इतिशब्दो नास्ति — अ, लृ, ऐ.
[२६] 'न' इति नास्ति — ऐ.
[२७] पूर्वमीमांसासूत्रम् २. १. ४६.
[२८] अथैक्यादेकं — अ; अर्थैक्यादेकं — आ ई, उ, लृ.
[२९] न तु — अ.
[३०] विचारण० — ए.

भेदासिद्धेः। अन्यथा प्रतिकारकं क्रियान्वयेन वाक्यभेदाद् युष्मत्परिकल्पितस्यापि मूल-सूत्रस्यानेकवाक्यत्वेन एकसूत्रत्वासिद्धेरभ्युपगमविरोधः[१]। तस्माद्यावति एकक्रियान्वयः, तावति पदसमूहे एकवाक्यत्वमभ्युपगन्तव्यमिति, [२]सार्धेनैव [३]श्लोकेनैतत्सकलशास्त्रार्थसूचनान्मूलसूत्रमिति सिद्धम्॥

अथ मूल[४]सूत्रसूचितपदार्थसंग्रहप्रतिज्ञापूर्वकं यस्येदं [५]शास्त्रं संस्कारकं तदुच्यते—'षड्भिः पदार्थैर्माणिक्यैः' इत्यादि।

**षड्भिः [६]पदार्थैर्माणिक्यैर्वाक्सूत्रेणातिशोभिता[७]॥२॥**
**वस्तुरश्मिसहस्राढ्या प्रविचारगुणोज्ज्वला।**
**मालेयं धीविलासिन्या मण्डनायावतारिता॥३॥**

पदार्थाः अर्थराशयः सकलशास्त्रार्थसंग्रहरूपाः, ते [८]च षट् पत्यादयो वक्ष्यमाणाः[९], तैः **षड्भिः** [१०]**माणिक्यैरिव** पुरुषार्थहेतुत्वाद् **मालेयं** शास्त्ररूपा [११]अनेकवाक्यसंहतिः। **वागेव** विशिष्टवर्णपदात्मिका सूत्रं, तेन **सूत्रेण अतिशोभिता** [१२]सुललितपदनिबन्धनैवेत्यर्थः। वस्तून्यत्र षट्पदार्थसंगृहीतानि अनन्ततत्त्वभुवनादीनि रश्मय इव। सहस्रशब्दस्य अनेकार्थत्वात्, तैराढ्या अनेक[१३]वस्त्वव-भासोपेतेत्यर्थः। प्रकृष्टो विचारः [१४]अनुमानं स एव गुणव्यवस्थापनः प्रकृतत्वाद्वस्तूनाम्[१५], तेनोज्ज्वला संहितान्तरेभ्यः [१६]आगममात्रसिद्धार्थप्रतिपादकेभ्यः।

अथ कस्येयं शास्त्रमाला **मण्डनाय** संस्काराय प्रवर्तिता?। धीः बुद्धिरेव [१७]विलासवती [१८]नाना-विधाध्यवसायादिभिर्व्यापारैः तच्छीलेति विलासिनी परिणतिस्वभावा[१९], तस्याः [२०]संस्काराय इयं न पुंसः, यथा जैमिनीया नैयायिकादयश्च मन्यन्ते।

अयमर्थः—द्विविधम् [२१]अज्ञानं पौरुषं बौद्धं च। तत्र [२२]यत्पौरुषमप्रतिपत्तिरूपं द्रव्यजन्यं तन्नि-वृत्तिः कारणनिवृत्तिपूर्विका[२३] शास्त्रस्य [२४]मुख्यं प्रयोजनमुच्यते। अध्यवसाय[२५]फलत्वादनधिगतविषये

---

[१] ०विरोधात्—लृ.
[२] सार्धेनैकेन—आ; सार्धेनैक०—ई, उ, लृ, ए, ऐ.
[३] श्लोकेनैव सकल०—लृ.
[४] 'सूत्र' इत्येतन्नास्ति—ई, उ.
[५] शास्त्रसंस्कारं—ऐ.
[६] पदार्थमाणिक्कै०—ओ.
[७] ०णाधिशोभिता—उ.
[८] चशब्दो नास्ति—ए.
[९] मतङ्ग० विद्या० २. १४—२१ श्लोकैः।
[१०] माणिक्कैरिव—अ, लृ, ए.
[११] अनेन वाक्य०—ए.
[१२] सुललितं—अ.
[१३] ०वस्त्वाभासो०—अ, ऐ.
[१४] अनुमानव्यवस्थापनः—अ; अनुमानव्यवस्थापनम्—लृ.
[१५] ०द्वस्तुना—अ.
[१६] आगममन्त्रसि०—अ, लृ.
[१७] विलसति—अ, ऐ; विलासवति—आ, ई, उ.
[१८] नानाविधावसाया०—अ; नानाविधव्यवसाया०—आ, ई, उ, ए.
[१९] ०स्वभावात्—अ; ०स्वभावाः—आ, ई, उ, ऐ.
[२०] संस्कारो येयं—अ.
[२१] ज्ञानं—ऐ.
[२२] यत्पौरुषं प्रतिपत्ति०—अ, आ, ई, उ, ए, ऐ.
[२३] ०निवृत्तिः पूर्विका—अ, आ.
[२४] मुखं प्रयोजन०—अ; मुख्यप्रयोजन०—ए.
[२५] ०फलत्वानधि०—अ.

विज्ञानमुपजनयच्छास्त्रं बुद्धेरेव संस्कारकं युक्तम्। योगविच्चित्तजयं [1]हि योगमिच्छतीति। न तु पुंसोऽनध्यवसाय[2]स्वभावत्वादिति बुद्धिपुरुषविवेकप्रसङ्गे दर्शयिष्यामः[3]। प्रोक्तं चान्यैः[4]— "[5]चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च" इति। शुद्धत्वं चास्य स्वभावः, औपाधिकमशुद्धत्वं [6]तत्तत्किंचिद्दीक्षादिना निवर्त्यम्।

यत्तु [7]वक्ष्यमाण[8]नयेनारब्ध[9]कार्यकर्मभोगोपरोधतो[10] बुद्ध्यादीनां दीक्षानिवर्त्यत्वाभावान्न दीक्षया निवर्तयितुं शक्यं बौद्धमनध्यवसायात्मकं, तदेव [11]शास्त्रेण निवर्त्यत इति बुद्धिसंस्कारकं शास्त्रमुक्तम्। सा च संस्कृता न पुनः अविद्यास्मितारागद्वेषाभिनिवेशात्मभिः [12]संसारहेतुभूतैः क्लेशैः पुरुषमनुबध्नातीति श्रेयोहेतुः [13]संपद्यत इति ॥२–३॥

एतच्छ्रुत्वा मतङ्गमुनिः — 'भर्तुर्वाक्यावसानेऽस्मिन्' इत्यादि।

> [14]**भर्तुर्वाक्यावसानेऽस्मिन्मतङ्गप्रवरो मुनिः।**
> **भक्तिचन्द्रवपुष्मत्या विनयाम्भोऽभिषिक्तया ॥४॥**
> **गिरा प्रोवाच"**

[15]भक्तिः योग्यतावेशलक्षणो ज्ञानविशेष उक्तः, सैव चन्द्रः आह्लादकत्वात् [16]संहृष्टिवृद्धिहेतुत्वाच्च, स एव वपुः शरीरं तद्विद्यते यस्याः[17]। [18]भक्त्यैकप्रयुक्तत्वात् कार्ये कारणोपचारेण "[19]धर्मः साक्षाद्युधिष्ठिर" इतिवद् गीर्वागेव भक्त्यात्मिकेत्युक्ता। अथ [20]भक्तेर्ज्ञानविशेषात्मकत्वेनातीन्द्रियत्वात्तत्प्रयुक्तत्वं गिरः [21]कथं गम्यते — यतो [22]विनयः अत्यन्तनम्राद्यभिभाषणं तदेवाम्भो [23]मिथ्याभिमानादिकलङ्कनिवृत्तिहेतुत्वात् तेनाभिषिक्ता [24]समन्तात् सिक्तेव[25] व्याप्ता, तया [26]तथाभूतया **गिरा** तत्प्रतीयत इत्यर्थः। अत एवात्र [27]भक्तिविशेषाभिद्योतनाय अनेकामन्त्रणप्रयोगः, लोके तथा दृष्टत्वात्॥

---

[1] 'हि' इति नास्ति — अ.
[2] ०स्वभावत्वादिबुद्धि० — अ, आ; ०स्वभावादिति बुद्धि० — लृ.
[3] मतङ्ग० विद्या० १७. २ वृत्तौ।
[4] योगसूत्रभाष्ये १. २.
[5] चिच्छक्ति० — अ, आ, ई, उ, ऐ.
[6] तत्किंचि० — लृ, ए, ऐ.
[7] मतङ्ग० विद्या० ७. ६० उ० — ६२ वृत्तौ।
[8] ०नयेन येनारब्ध० — अ; ०न्यायेनारब्ध० — ई, उ.
[9] 'कार्य' इत्येतन्नास्ति — लृ; ०कार्यं कर्म — ऐ.
[10] कर्मोपरोधतो — आ.
[11] शास्त्रे निर्वर्त्यत — आ.
[12] संस्कारहेतु० — आ, ई, उ, ए, ऐ.
[13] संपाद्यत इति — आ, ई, उ; संबध्यत इति — ऐ.
[14] भर्तृवाक्या० — ओ.
[15] भक्तियोग्यता० — अ; भक्तिमेयात्यता० — ऐ.
[16] संदृष्टि० — अ, लृ, ए; सद्दृष्टि० — आ, ई, उ.
[17] यस्य — अ.
[18] भक्तयेकप्रयुक्त० — अ, आ, ई, उ, लृ; भक्त्यैकयुक्त० — ए.
[19] आकरो नोपलभ्यते
[20] भक्तेर्ज्ञानात्मकत्वे० — ऐ.
[21] अथागम्यते — अ.
[22] विनायोऽत्यन्त० — अ, आ, ऐ.
[23] मिथ्यादिमाना० — अ, आ.
[24] आसमन्तात् — आ.
[25] सिक्तैव — लृ.
[26] 'तथाभूतया' इत्येतन्नास्ति — लृ.
[27] भक्तविशेषा०—अ; 'भक्ति' इत्येतन्नास्ति—ऐ.

एवमामन्त्र्य भगवन्तमिदमुवाच — 'भगवन्' इत्यादि ।

**मतङ्ग उवाच —**

**"भगवन्देवदेव जगत्पते ।**
**प्रविभागं पदार्थानां षण्णामपि शिवोदये ॥५॥**
**चतुष्पादे महातन्त्रे यथावद्वक्तुमर्हसि ।**

महता रचितत्वेन [1]प्रागुक्तः शिवस्योदयो यस्योक्तः तस्मिन्, [2]प्राक् सूचितानां **पदार्थानामपि**[3] **षण्णां** [4]**प्रविभागं** [5]चतुष्पादनिमित्तं च [6]प्रविभागं **वक्तुमर्हसि** [7]इत्यपिशब्दार्थः[8] ॥

'ततः स भगवान्' इत्यादि ।

**ततः स भगवान्देवः स्फुरन्माणिक्यशेखरः[9] ॥६॥**
**[10]वाक्यानलसमुत्थेन ज्वालाव्यूहेन मन्त्रराट् ।**
**प्रददाह मुनेः सम्यगज्ञानं तृणराशिवत् ॥७॥**

स्फुरन्माणिक्यं शेखरे[11] यस्य [12]**स भगवान्** [13]मन्त्रैर्विराजते; पाशदाहादिकार्यं करोति गुरुरित्यर्थः। वाक्यमेव अनलः तस्मादुत्थितेन **ज्वालाव्यूहेन** अनेकवाक्यार्थप्रकाशात्मना तद्विभागाज्ञानं **तृणराशिवद्** अक्लेशेन **मुनेः प्रददाह** [14]इति ॥ ६–७॥

तत्र पादप्रतिपाद्यत्वात् पदार्थप्रविभागस्य, आदौ पादविषयमज्ञानं निवर्तयितुं प्रथमं पादविभागमाह — 'विवेको यत्र' इत्यादि ।

**परमेश्वर उवाच —**

**विवेको यत्र तत्त्वानां कार्यकारणभेदतः ।**
**यथावदुचितं वस्तु हेयं चैवोपवर्ण्यते ॥८॥**
**विद्यापादः स विज्ञेयः सार्धेन परिमण्डितः ।**
**[15]श्लोकानां च सहस्रेण शास्त्रेऽस्मिन्मुनिसत्तम ॥९॥**

---

[1] मतङ्ग० विद्या० १. ३०, ३१. वृत्तौ।; प्रागुक्तं शिव० — अ; प्रागुक्तशिव० — आ, ई, उ. ए, ऐ.
[2] मतङ्ग० विद्या० — १. २९ उ० वृत्तौ.
[3] अपिशब्दो नास्ति — अ, आ, ई, उ, ऌ, ए.
[4] विभागं — ऐ.
[5] चातुष्पाद० — ऐ.
[6] प्रतिभावं — ई, उ.
[7] इतिशब्दो नास्ति — अ.
[8] ०शब्दात् । — ए.
[9] ०माणिक्कशेखरः — ओ.
[10] वाक्याकल० — ओ.
[11] ०माणिक्कशेखरो — अ, आ, ई, उ, ऌ, ए; ०माणिक्कशेखरे — ऐ.
[12] 'स' इत्येतन्नास्ति — ए.
[13] तन्त्रैर्विरा० — ए.
[14] इतिशब्दो नास्ति — आ, ई, उ, ऌ, ऐ.
[15] सहस्रेणैव श्लोकानां — ओ.

**विवेकः तत्त्वानां** सत्तासाधनमनुमानं, तेन हि[1] तत्त्वान्तरेभ्यस्तानि[2] विविच्यन्ते। स च **कार्य-कारणभेदतः** प्रतिबन्धमूलतः[3], [4]न अभिमानमात्रसिद्धः[5]। किं च **यथावद्** इति यथापरमार्थं **यत्र उचितम्** इत्युपादेयं **हेयं च** उच्यते। **सः** प्रथमः पादो विद्यापादशब्दाभिधेयः ॥८–९॥

अथ द्वितीयं पादं विभजति — 'मुद्रामण्डलमन्त्राणाम्' इत्यादि।

**मुद्रामण्डलमन्त्राणां लक्षणं साधकात्मनाम्।**
**आचार्याणां च विधिवत्सहस्रेणैव[6] वर्ण्यते ॥१०॥**
**क्रियापादः स विज्ञेयः सर्वानुग्रहलक्षणः।**

मुद्राश्च मण्डलानि च मन्त्राश्च वक्ष्यमाणाः, तेषां यत्र **लक्षणं** तथा साधयन्ति ये [7]भुक्ति-मुक्ती ते साधकाः समयि[8]पुत्रकफलार्थिनः, तेषां लक्षणम्। **आचार्याणां च**। न च तल्लक्षण-मात्रं, किं तु विधिः नित्यादिकर्मविषयः पुत्रकादिभेदेन विद्यते यस्य तद् **विधिवल्लक्षणं** यत्रोच्यते। सर्वेषां च [9]समय्यादीनां [10]द्विजातीनां वा शक्तिपातादियुक्तानां योऽनुग्रहो दीक्षाख्यः स लक्ष्यते यत्रासौ तल्लक्षणः **क्रियापादः** ॥

तृतीयं पादं विभागेन दर्शयति — 'यत्रोपायः' इत्यादि।

**[11]यत्रोपायो विरक्तानां षडङ्गः सुमहात्मनाम् ॥११॥**
**रागिणामपि [12]भोगार्थं योगपादः स उच्यते।**
**शतैः पञ्चभिराख्येयः श्लोकानामपि विस्तरात् ॥१२॥**

**विरक्तानां** मुमुक्षूणां मुक्त्यर्थं **रागिणां च भोगार्थं** षट् प्रत्याहारादीनि अङ्गानि [13]यस्य स तथाभूतः **उपायः यत्र** उच्यते [14]स तृतीयः पादः **योगसंबन्धी**, स च महांश्चासौ ज्ञानसंस्कृतः आत्मा च सुष्ठु येषां तेषामेव। तदन्येषां च ज्ञानिनां क्रियापाद इति भेदः॥ ११–१२॥

चतुर्थस्य विभागः — 'समयाचार' इत्यादि।

**[15]समयाचारसद्भावस्थितिः [16]स्वाम्नायलक्षणः[17]।**
**चर्यापादः समुद्दिष्टो यथावत्पञ्चभिः शतैः ॥१३॥**

---

[1] ०मनुमानं कान्तेन हि — अ; ०मनुमाने तेन हि — ऐ.
[2] ०भ्यस्तत्त्वानि — ॡ.
[3] ०मूलः — आ, ई, उ; ०मूलम् — ए.
[4] नानुमानमात्र० — ऐ.
[5] ०सिद्धिः — ए.
[6] ०सहस्रेणोप० — ओ.
[7] भुक्तिमुक्ति — अ, ॡ, ए.
[8] ०पुत्रफला० — आ.
[9] समर्थादीनां — अ, आ, ए; समयादीनां — ए.
[10] द्विजादीनां — ॡ.
[11] यत्रोपाये — ओ.
[12] योगार्थं — मु, उ, ओ; वृत्त्यनुसारेण 'भोगार्थम्' इति पाठः स्वीकृतः।
[13] यस्य तथा० — अ.
[14] 'स' इति नास्ति — अ.
[15] समय्याचार० — मु, उ.
[16] साम्नाय० — मु, उ.
[17] ०लक्षणा — ओ.

समयिपुत्रकादीनां पुरुषार्थाय ये आचाराः, तेषामेव मिलितानां परस्परव्यवहारः[1] सद्वादः शोभनो वादः; [2]शिष्यसब्रह्मचारिणां गुरुशिष्याणां वा। न तु [3]जल्पादिः, वादिप्रतिवादिविषयत्वात्तस्य। तेषां स्थितिः स्वसमयात् सिद्धा यत्रोच्यते। स च[4] चतुर्थः पादः चर्यापादाख्य इति **पादचतुष्टयविभागः**[5] ॥१३॥

अधुना पदार्थ[6]विषयमज्ञानं निवर्तयितुं प्रथम[7]पदार्थविभागस्तावदुच्यते — 'लयभोगाधिकाराह्वः' इत्यादि।

**लयभोगाधि[8]काराह्वस्त्रितत्त्वोक्तिनिदर्शनात्।**
**पदार्थः पतिनामासौ प्रथमः परिकीर्तितः ॥१४॥**

लयशब्देन समुपसंहृत[9]कार्यात्मिका निष्कलशिवावस्थोच्यते। भोगशब्देन[10] पूर्वावस्था[11]त्यागेन कार्यं [12]प्रत्युद्युक्ततामात्रा बिन्दुगता सकलनिष्कलावस्था। [13]यद्वक्ष्यति[14] —

"चतुर्मूर्तिमयं [15]शुभ्रम् यत्तत्सकलनिष्कलम्।
तस्मिन्भोगः समुद्दिष्टः पत्युर्विश्वस्य सर्वदा॥" इति।

अधिकारपदेनापि तदवस्था[16]त्यागेन कार्यसंपत्तिशरीरता सदाशिवत्वं सकलावस्थोच्यते। तत्रैव शक्तीनामन्तर्भावः। यद्वक्ष्यति[17] —

"शक्तयो [18]या व्यवस्थिताः।" "तत्त्वेऽस्मिन्नीश्वराह्वये।" इति[19]।

विद्येश्वराणां च। यद्वक्ष्यति[20] —

"[21]तस्मिन्नेवेश्वरे तत्त्वे संस्थिताः परमेश्वराः।" इति।

तैर्लयभोगाधिकारैः आह्वा[22] आह्वानं संज्ञा यस्य सः; [23]**पतिनामा प्रथमः पदार्थः**।

नन्वेवमप्यौपाधिका एव तत्र व्योमव्याप्यादयः शब्दाः सन्ति। [24]ततस्तेषां विशेष उच्यते — त्रीणि तत्त्वानि समाहृतानि त्रितत्त्वम्। [25]पात्रादिप्रतिषेधान्न स्त्रीप्रत्ययः। तस्योक्तिः, तस्या निदर्शनं प्रकाशनं, तस्माद्धेतोः। एतदुक्तं भवति — तत्त्वत्रयस्यास्य लयभोगाधिकारलक्षणस्योक्ति-

---

[1] –व्यवहाराः — अ, आ, ई, उ, ऐ.
[2] शिष्यः सब्रह्म० — अ; शिष्यस्य सब्रह्म० — ए; सशिष्यसब्रह्म० — ऐ.
[3] जल्पादिवादिविषयत्वात्तस्य — अ.
[4] चशब्दो नास्ति — आ, ई, उ, ऌ, ए, ऐ.
[5] ०चतुर्विधविभागः — अ.
[6] ०विषयं ज्ञानं — ऐ.
[7] ०पादार्थ० — आ, ई, उ.
[8] ०कारं वस्त्रि० — ओ.
[9] ०कार्यात्मिकनिष्कल० — ऐ.
[10] अत्र अपिशब्दोऽधिकः — आ, ई,. उ, ए, ऐ.
[11] पूर्वकावस्था० — अ.
[12] प्रत्युक्तता० — अ, आ.
[13] यद्वक्ष्यते — अ.
[14] मतङ्ग० विद्या० ३. ३४.
[15] शुभं — अ.
[16] ०त्यागसंपत्तिः शरीरता — आ.
[17] मतङ्ग० विद्या० ५. १ पू, २ पू.
[18] वा व्यवस्थिताः — अ; समवस्थिताः — ऐ.
[19] इत्यादि — आ.
[20] मतङ्ग० विद्या० ५. ५.
[21] तस्मिन्नेवेश्वरता परमेश्वरता इति। — अ.
[22] आख्या — ए.
[23] पतिनाम प्रथमः — आ, ई, उ; पतिनाम्ना प्रथमः — ऐ.
[24] तत एषां — आ, ई, उ, ऌ, ए, ऐ.
[25] 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' महाभाष्यम् २.४. ३०.

रूपा [1]यत एते शब्दाः। न तु[2] व्योमव्याप्यादिवत् संज्ञाशब्दा एव ते। अतस्तत्त्वत्रयसंबन्धि[3] [4]वक्ष्यमाणभुवनचतुर्दशात्मकं पतिपदार्थशब्देन संगृहीतं [5]भवति ॥१४॥

द्वितीयं पदार्थं विभजति — 'भोग्यभोक्तृत्वसंबन्ध' इत्यादि।

**भोग्यभोक्तृत्वसंबन्धमायाधारसुसंचिते।**
**[6]क्रियाज्ञानात्मिकाकीर्तिर्ये च धर्माः [7]पतौ स्फुटाः ॥१५॥**
**[8]शक्त्याह्वः स पदार्थोऽयं द्वितीयः परिभाष्यते।**

भोग्याः स्त्र्यादयोऽर्थाः, भोक्ता आत्मा, तेषां भावः भोग्यभोक्तृत्वम्, तस्य संबन्धः संपत्तिः, यस्माद् भोग्यभोक्तृत्वसंबन्धः कार्यकारणात्मकः[9]। [10]तन्निमित्तं यो मायालक्षणः आधारः परम-[11]कारणं मायातत्त्वं, यच्च सुसंचितं शुद्धविद्यादेहभुवनादिसंचयरूपं[12] [13]तत्कारणं विद्यातत्त्वं ते द्वे तत्त्वे, [14]वक्ष्यमाणैर्विद्यामाया[15]भुवनैरेकचत्वारिंशता सह **शक्त्याह्वः पदार्थः**। [16]अनेनैवं-भूतं तत्त्वद्वयं संगृहीतमित्यर्थः। [17]तथा क्रियाज्ञानात्मिकायाः **परस्याः** शक्तेः[18] कीर्तनं **कीर्तिः** अभिधानं [19]वाचकः शब्दो व्योमव्याप्यादिमन्त्रग्रामो [20]विद्यातत्त्वाश्रितत्वात्[21] [22]शक्त्याह्वः पदार्थ उच्यते। यद्वक्ष्यति[23] —

"एकाशीतिपदा [24]देवी या सा शक्तिः शिवात्मिका।
[25]शान्तौ विनिर्गता पूर्वं स्थानं तस्यास्तदात्मकम् ॥" इति।

---

[1] य एते — आ.
[2] 'तु' इत्येतन्नास्ति — ऐ.
[3] ०संबन्धी — अ, आ, ई, उ
[4] मतङ्गविद्यापादे ३. २३ — ३४ श्लोकेषु क्रमेण शान्ति-विद्या-प्रतिष्ठा-विद्या-शान्त्यतीताख्यानि पञ्च भुवनानि वर्ण्यन्ते। ४. ९, १०; ५१, ५२ श्लोकेषु विद्येशानां भुवनान्यष्टौ वर्ण्यन्ते। ४. ५३ — ५५ श्लोकेषु सदाशिवभुवनं वर्ण्यते। एवं चतुर्दशभुवनानि प्रतिपाद्यन्ते।
[5] भवतीति। —अ, लृ, ऐ.
[6] कर्मज्ञानात्मिकाः — मु.
[7] पतेः — ओ.
[8] शक्त्याख्यः — मु, उ.
[9] ०करणात्मकः — ई, उ.
[10] तन्निमित्तः — ई, उ.
[11] कारणमाया० — ऐ.
[12] ०भुवनादिसंगृहीतमित्यर्थः। यद्रूपं — ऐ.
[13] तत्परमकारणं —आ, ई, उ, लृ, ए, ऐ.
[14] मतङ्गविद्यापादे ७. १६. उ० — २३ श्लोकेषु विद्यातत्त्वभुवनानि एकविंशतिर्वर्ण्यन्ते। ८.७९ उ० — ९२ श्लोकेषु मायातत्त्वभुवनानि विंशतिर्वर्ण्यन्ते। एवमेकचत्वारिंशद्भुवनानि शक्तिपदार्थे प्रतिपाद्यन्ते।
[15] ०भुवनैकचत्वा० — अ, आ, लृ, ऐ.
[16] तदनेनैवं० — ए.
[17] 'तथा' इत्यारभ्य 'विद्यातत्त्वाश्रितत्वात्' इत्यन्तं नास्ति — आ; तया — अ.
[18] परस्याः स्थितेः — ई, उ, ए; परस्य शि.. शक्तेः — ऐ.
[19] वाचकं — ऐ.
[20] विद्याश्रितत्वात् — लृ; विद्यातत्त्वात् — ए.
[21] अत्र 'तेन तत्स्थत्वादुपचारेण' इत्यधिकम् — आ; ३३ तमे पृष्ठे द्वितीयसंख्यानिर्दिष्टः 'तेऽपि' इत्यारभ्य 'संगृहीतमित्यर्थः' इत्यन्तो भागो विपर्ययेणात्र लिखितः — ई, उ, ए, ऐ.
[22] शक्त्याह्वयः पदार्थः — ए; शक्त्याह्वयपदार्थः — ऐ.
[23] मतङ्ग० विद्या० ७. ३१.
[24] देवेन्द्रिया शक्तिः — अ; देवि या सा शक्तिः — आ; देव या सा शक्तिः — ऐ.
[25] शस्त्रौ — ए; शक्तौ — ऐ.

[1]ये वक्ष्यमाणत्वेन धर्मरूपास्तेऽपि[2] तत्स्थत्वादुपचारेण [3]शक्त्याह्वाः पदार्था [4]उच्यन्ते। [5]यद्वक्ष्यति[6] —

[7]ब्रह्माण्यङ्गानि यानि स्युस्तानि सादाख्यगोचरे।
तथाप्यनुग्रहार्थं तु तत्त्वे विद्याह्वये मुने॥
द्रष्टव्यान्यधिकारेण" इति।

[8]इयदर्थजातं शक्तिपदार्थे [9]संगृहीतमित्यर्थः।

ननु शक्तय एवात्र संगृहीता इति केचित्। तदयुक्तम्। [10]तासां पति[11]पदार्थैकदेशेश्वरतत्त्वे एवान्तर्भाविस्य[12] [13]वक्ष्यमाणत्वान्नात्र पृथग्भावः। आदिसूत्रसूचितस्य बन्धपदपङ्क्त्यात्मनस्तत्त्वभुवनरूपस्य पदार्थसंग्रहप्रतिज्ञायामस्यामतिव्याप्तिः। विद्यामायात्मनस्तत्त्वादेरस्यासंग्रहादव्याप्तिश्च दोष इति॥

तृतीयमपि[14] पदार्थं प्रकटयति — 'ये भूतभावतत्त्वाख्याः' इत्यादि।

**ये भूतभावतत्त्वाख्या मायातः [15]क्षुरिताः सदा ॥१६॥**
**[16]पदार्थश्च त्रिपर्वोऽयं तृतीयः शिवशासने ।**

तत्र मायायाः [17]तत्त्वशब्दवाच्याः कलादिक्षित्यन्ताः [18]त्रिंशदर्था उत्पन्ना इति वक्ष्यामः। भुवनात्मका[19]स्त्वर्था विशिष्टरचनावत्वेन[20] भोगसाधनतया भवन्तीति[21] भावशब्देनात्र निर्दिष्टाः। न धर्मादयः। भोगपदार्थे एव तेषां संग्रहस्य [22]वक्ष्यमाणत्वात्। ते च कलातो [23]वामदेवादिभुवनादारभ्य कालाग्निभुवनं यावच्चतुष्षष्ट्यधिकशतत्रयसंख्याता[24] इति वक्ष्यामः[25]। भूतशब्दवाच्यास्तु [26]तत्तद्भुवनजशरीर[27]लक्षणा अर्था असंख्याता [28]एवं मायातः समुत्पन्नाः। ते सर्वे एव [29]तत्त्वभुवन-

---

[1] 'ये' इत्यारभ्य 'धर्मरूपाः' इत्यन्तं नास्ति — ऐ.
[2] 'तेऽपि' इत्यारभ्य 'संगृहीतमित्यर्थः' इत्यन्तो भागो नास्ति — आ.
[3] शक्त्याह्वः पदार्थः — ई, उ, ऌ; शक्त्याह्वयः पदार्थः — ए; शक्त्याह्वयपदार्थः — ऐ.
[4] उच्यते — ई, उ, ऌ, ए, ऐ.
[5] यद्वक्ष्यते — अ.
[6] मतङ्ग० विद्या० ७. २५ उ०, २६.
[7] ब्रह्मण्यङ्गानि — ई, उ.
[8] यदर्थजातशक्ति० — ऐ.
[9] 'संगृहीतमित्यर्थः' इत्येतन्नास्ति — ऐ.
[10] तेषां — अ.
[11] पादार्थैकदेशमीश्वर० — अ; पादार्थैकदेशेश्वर० — आ, ई, उ.
[12] ०तत्त्वान्तर्भाविस्य — अ.
[13] मतङ्ग० विद्या० ५. १, २ वृत्तौ.
[14] अपिशब्दो नास्ति — ऌ.
[15] क्षारिताः — ओ.
[16] स पदार्थस्त्रि० — ओ.
[17] तत्त्ववाच्याः — अ, ऐ.
[18] त्रिंशदर्थ उत्पन्नः — अ,
[19] ०स्वार्थविशिष्ट० — अ.
[20] ०रचनात्वेन — ऋ, ॠ.
[21] भवन्ती — ऊ, ऋ, ॠ; भवतीति — ऐ.
[22] मतङ्ग० विद्या० २६तमे प्रकरणे।
[23] वामदेवभुवना० — ऌ, ए; वामदेवादीति भुवना० — ए.
[24] षष्ट्यधिकं शतत्रयसंख्याताः — अ; षष्ट्यधिकं शतत्रयः संख्यातः — ऊ; षष्ट्याधिकं शते त्रयस्संख्यातः — ऋ, ॠ; षष्ट्यधिकास्त्रयसंख्याताः — ए.
[25] मतङ्ग० विद्या. २३. ८५ वृत्तौ.
[26] तत्तद्भुवनशरीर — आ; तद्भुवनजशरीर — ऐ.
[27] लक्षणार्था — अ, आ, ई, उ, ऐ.
[28] एवमायाताः — अ, ऊ; एवममायातः — ई, उ, ऐ; एवमायातः — ऋ, ॠ.
[29] 'तत्त्व' इत्येतन्नास्ति — अ.

शरीरात्मकैस्त्रिभिः पर्वस्थानीयैराकारैर्युक्तत्वाद् अत्र **तृतीयः पदार्थः** [1]**त्रिपर्व** इत्युच्यते। एतावतो-[2]ऽर्थसमूहस्यात्र संग्रह इत्यर्थः। एवं मूलसूत्राद् बन्धपद[3]पङ्क्तिः शुद्धाशुद्धरूपात्र **पदार्थत्रयेण** तावत् संगृहीतेति[4]॥

चतुर्थः [5]पदार्थो विभज्यते — 'योऽस्वतन्त्रः' इत्यादि।

**योऽस्वतन्त्रः पशुर्भोक्ता क्षेत्री [6]पाश्यः पुमान्स्फुटम् ॥१७॥**
**पदार्थः पशुनामाऽसौ चतुर्थो मुनिपुङ्गव ।**

[7]कुतोऽसौ **अस्वतन्त्रः** यतः [8]**पशुः** पशुत्वेन मलेन आवृत[9]स्वरूपो विज्ञानकेवली। यश्च पशु-त्वेऽपि सति [10]**भोक्ता** भोगप्रदकर्मयुक्तो भोगयोग्यः[11] प्रलयकेवली। यश्च मलकर्मयुक्तोऽपि क्षेत्रेण कलादिक्षित्यन्तेन [12]तात्त्वशरीरेण [13]संबद्धोऽप्राप्त[14]बाह्यशरीरः प्रणष्टबाह्यशरीरो वा सकलः। यश्च मल[15]कर्मकलादियुक्तोऽपि [16]**स्फुटं** कृत्वा **पाश्यः** [17]बाह्येन यथाक्रमं कलादि[18]क्षित्यन्तभुवनजेन स्थूल-शरीरेण [19]युक्तः सकलविशेष[20] एव। स चतुरवस्थोऽपि [21]पशुत्वेनावियुक्तत्वात् [22]पशुपदार्थशब्दे-नोच्यते। ततश्च सूत्रादणुर्बन्धश्च [23]संगृहीतः। तेन विना [24]पशुत्वायोगादित्येवं समस्ततत्त्व[25]भुव-नानां संग्रहः पदार्थचतुष्टयेनोक्तः॥

अधुना [26]सूत्रात् सोपानशब्दार्थसंग्रहाय [27]पञ्चमः पदार्थः[28] — धर्माधर्मविपाकाख्याः' इत्यादि।

**धर्माधर्मविपाकाख्याः [29]स्थितौ भोक्तुरिहागताः ॥१८॥**
**साध्यसाधनभावेन [30]संस्थिता ये परस्परम् ।**
**पञ्चमः स[31] तु बोद्धव्यः पदार्थो भोगसंज्ञकः ॥१९॥**

---

[1] त्रिपूर्वेत्यु० — ऋ.
[2] -ऽर्थः समूह० — अ.
[3] ०पङ्क्तिशुद्धाशुद्ध० — अ, ई, उ, ऐ.
[4] संगृहीते — अ; संगृहीता — आ, ई, उ, लृ, ए.
[5] पादार्थो — ए.
[6] पाश्यश्च यः स्फुटः। — ऊ, ऋ, ॠ; पाशः पुमान्स्फुटम् — ओ.
[7] कुतेऽसौ — अ.
[8] 'पशुः' इत्येतन्नास्ति — ऐ.
[9] स्वरूपोऽपि ज्ञान० — अ.
[10] भोक्तृभोग्यप्रद० — अ.
[11] ०भोग्यः — अ.
[12] तत्त्व० — अ.
[13] सम्बन्धो० — अ, आ, ई, उ, ऋ, ॠ, लृ, ए, ऐ.
[14] 'बाह्य' इत्येतन्नास्ति — ऐ.
[15] कर्मादि० — आ.
[16] विस्फुटं — ऐ.
[17] पाश्येन — ऐ.
[18] क्षित्यन्तेन भुव० — ऊ, ऋ, ॠ, लृ.
[19] 'युक्तः' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ऋ ॠ, लृ ए.
[20] ०विशेषण — ऊ, ऋ, ॠ.
[21] पशुत्वेनापि युक्त० — अ, लृ, ए; पशुत्वेन वियुक्त० — ऐ.
[22] पाशुपदार्थ० — अ, ऐ.
[23] संगृहीतौ — अ, आ, ई, उ, लृ, ए, ऐ.
[24] पशुत्वयोगा० — अ, लृ.
[25] भुवनभूताश्च सं० — ऊ, ऋ, ॠ.
[26] सूत्रं सोपान—अ; सूत्रात् बद्धसोपान—ऐ.
[27] पञ्चमपदार्थः — ऐ.
[28] अत्र 'प्रपद्यते' इत्यधिकम् — ऊ, ऋ, ॠ.
[29] स्थिता भोक्तुमिहागताः — मु, उ; स्थितो भोक्तुरिहागतः — ऊ, ऋ, ॠ; स्थितौ भोक्तुमिहागताः — ओ.
[30] संस्थितो यः — ऊ, ऋ, ॠ, .
[31] तु स विज्ञेयः — ऊ, ऋ, ॠ.

[1]धर्माधर्मा ज्योतिष्टोमब्रह्महत्यादयः आम्नायसिद्धाः प्रागनुष्ठिताः, बुद्धौ संस्काररूपतया [2]गुणत्वेनोच्यन्ते। यावन्न परिपाकं[3] प्राप्ताः [4]"नामिश्रं परिणमत" इति तु परस्परोपकारेण परिपक्वाः [5]स्थिताः स्थितिकाले[6] [7]भोक्तुः सुखदुःखात्मना समुपस्थिताः। तेषामेव धर्माधर्माणां [8]विपाकाख्या भावप्रत्ययरूपाः कथ्यन्ते। [9]तेषां भोगहेतुत्वाद् **भोगसंज्ञकोऽत्र पञ्चमः**[10] [11]पदार्थ [12]उच्यते। यः प्रतिस्थानं [13]दीक्षया क्षपयितव्य इति दर्शयिष्यामः[14] ॥१८—१९॥

अधुना सूत्रोपात्त[15]बन्धादिनिवृत्तिसत्ताभिव्यक्त्योः उपायसंग्रहाय षष्ठः पदार्थो विभज्यते — 'ये मन्त्राः' इत्यादि।

**ये मन्त्राः शुद्धमार्गस्थाः शिवभट्टारकादयः।**
**मुद्राश्च शक्तिपूर्वाः स्युर्ये चार्थाः परिविस्तृताः ॥२०॥**
[16]**पादत्रय उपायो यः संसारोद्धारकारणम्।**
[17]**षष्ठः सोऽभिहितस्तन्त्रे पदार्थः पारमेश्वरे ॥२१॥**

**ये** शुद्धमार्गे विद्यातत्त्वे स्थिताः **मन्त्राः**। [18]न त्वशुद्धे। [19]यच्छ्रूयते[20] —
"अन्ये प्राधानिका मन्त्रा ब्रह्मविष्ण्वादयोऽपरे[21]।
साञ्जनास्तेऽण्डमध्यस्थाः [22]सात्त्वराजसतामसाः ॥" इति।

ये च शिवभट्टारकादयो [23]मन्त्रप्रयोजकत्वेन विद्यापादे वक्ष्यमाणाः[24]। आदिग्रहणा[25]दनन्ते-

---

[1] धर्माधर्मज्यो० — अ, आ, ऊ, ऋ, ॠ, ए; धर्माधर्मौ ज्यो० — ऐ.
[2] गुणत्वेनोच्यते — आ, ऐ; गुणतत्त्वेनोच्यन्ते— ई, उ; गुणतत्त्वेनोच्यते — ए.
[3] परिपावनं — ऊ, ऋ, ॠ.
[4] आकरो न लभ्यते।
[5] 'स्थिताः स्थिति' इत्येतन्नास्ति — ऐ.
[6] कालो — ऐ.
[7] भोक्तृसुख० — अ, ऌ; भोक्तुं सुख० — आ, ई, उ, ए ऐ.
[8] विभावाख्या — ए.
[9] ते भोग० — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऌ, ए, ऐ.
[10] अत्र 'सः' इत्यधिकम् — ऊ, ऋ, ॠ,
[11] पादार्थः — ऋ, ॠ, ऐ.
[12] उच्यन्ते — ई, उ, ऊ, ऋ, ॠ, ऌ, ए, ऐ.
[13] दीक्षा क्षपयितव्य — अ; दीक्षया क्षयितव्य — आ, ई, उ; दीक्षया क्षपितव्य — ऊ, ऋ, ॠ.
[14] मतङ्ग० विद्या० २६. १ पू० वृत्तौ।
[15] ०बन्धाभिनि० — अ, आ, ई, उ, ऌ, ए, ऐ.
[16] पादत्रये स चोपायः — मु, उ, ओ.
[17] षष्ठोऽप्यभिहित० — मु, उ, ओ.
[18] नन्वशुद्धे — अ, ऌ; न त्वशुद्धेः — ऐ.
[19] यदुच्यते — उ, ऋ, ॠ.
[20] अयं श्लोकः श्रीमद्रौरवेऽप्युक्तमिति मृगेन्द्रवृत्तिदीपिकायामुपोद्घातप्रकरणे २२ तमश्लोकविवरणे निर्दिष्टः। किं तु मुद्रितरौरवे नोपलभ्यते।
[21] ०विष्ण्वादयोऽपराः — अ, ऌ, ऐ; ०विष्ण्वादयोऽमराः — ऊ, ऋ, ॠ.
[22] सत्त्व० — अ.
[23] मन्त्राः प्रयोज० — अ, आ, ई, उ, ऌ, ए, ऐ.
[24] 'विद्यापादे' इत्यत्र 'विद्याप्रकरणे' इति स्थातव्यमिति भाति; मतङ्ग० विद्या० ७. २४ — ३४ पू० श्लोकेषु.
[25] ०दनन्तादिमन्त्रेशा — ऊ, ऋ, ॠ.

शादिमन्त्रेशा दीक्षादावुपायत्वेन ये विहिताः। याश्च **शक्तिपूर्वाः** शक्त्याद्याः **मुद्राः** वक्ष्यमाणाः[१]। [२]**ये चार्थाः** दीक्षोत्तरं नित्य[३]नैमित्तिककाम्यात्मकाः **परिविस्तृताः** [४]वक्ष्यमाणाः। विद्यापादोक्तस्योपायस्य मन्त्रादेरुक्तत्वात् [५]तद्व्यतिरिक्ते **पादत्रये** [६]**उपायो यः** दीक्षाद्या[७]त्मकः संसारोद्धारकारणत्वेन वक्ष्यमाणः[८] **स सर्वोऽत्र**[९] [१०]**षष्ठः** उपायः **पदार्थ** उच्यते। एतावतोऽर्थ[११]जातस्यादिसूत्रे संग्रह इत्यर्थः ॥२०-२१॥

प्रकरणार्थोपसंहाराय, वक्ष्यमाणप्रकरणोपक्रमाय [१२]चोच्यते — 'संख्या तन्त्रार्थयुक्त्या' इत्यादि।

**संख्या तन्त्रार्थयुक्त्या गुरुलघु[१३]लघुतानुक्रमेणैवमुक्ता[१४]**
**पादानां यो विभागः स [१५]सकलनिगमव्यापकत्वाद्विभक्तः।**
**संक्षेपोक्त्याऽध्वसंस्था[१६] पतिपशुविषयाः[१७] सूचिताः षट्पदार्था-**
**स्तेषामादौ गरीयान्पतिरिति [१८]गदितः प्रोच्यते स क्रमेण[१९]** ॥२२॥

[२०]**पादानां** विद्यादिविषयाणां चतुर्णां [२१]यात्र ग्रन्थसंख्या [२२]सा [२३]गुरुश्च लघुश्च [२४]लघुश्च। द्वितीयेन लघुशब्देन प्रकरणाल्लघुतरश्च[२५] गुरुलघुलघवः, तेषां भावो गुरुलघुलघुता सैव अनुक्रमः, तेन **उक्ता**। अथ कथं सा [२६]विपरीतानुक्रमेण नोक्ता। यतः, तन्त्रस्य विद्यादिपादात्मनो योऽर्थः तस्य युक्तिः [२७]योजना, [२८]तया हेतुभूतया संख्या इयमुक्ता; ततो न विपरीतानुक्रमेण संभवति।

---

[१] मतङ्ग० क्रियापादे दीक्षापटले ५ — १२ श्लोकेषु वक्ष्यमाणाः।

[२] एवं त्वादीक्षोत्तरनित्य — अ.

[३] नैमित्तिककर्मात्मिकाः — अ; नैमित्यकामिकात्मिकाः लृ.

[४] वक्ष्यमाणस्वविद्या० — अ; मतङ्ग० चर्यापादे वक्ष्यमाणाः।

[५] तद्व्यतिरिक्तपाद० — अ; तद्व्यतिरिक्तो पाद० ऊ, ॠ, ॠ.

[६] उपाये — ऊ, ॠ, ॠ.

[७] ०त्मकसंसारो० — अ, ऐ.

[८] मतङ्ग० क्रिया० दीक्षापटले श्लो० २, ३. पू० वृत्तौ वक्ष्यमाणः, मतङ्ग० विद्या०, २३, ६३ वृत्तावपि सूचितः।

[९] 'अत्र' इत्येन्नास्ति — ऊ, ॠ, ॠ.

[१०] षष्ठपदार्थ उपाय इत्युच्यते — ऊ, ॠ, ॠ; षष्ठ उपायपदार्थ उच्यते — लृ; षष्ठोपायपदार्थ उच्यते — ऐ.

[११] ०शतस्यायं संग्रहः — ऊ, ०जातस्यायं संग्रहः — ॠ, ॠ; ०जातस्य सूत्रे संग्रहः — ऐ.

[१२] उच्यते — ॠ, ॠ.

[१३] लघुतोऽनु० — ऊ.

[१४] ०क्रमेणैव युक्त्या — मु, उ; भोक्ता — ऊ, ॠ; मोक्ता — ॠ.

[१५] सकलजगतो व्यापक० — मु; निखिलसंहिता व्यापक० — उ; सकलसंहिताव्यापक० — उ० पाठान्तरं; सकलजगता व्यापक० — ऊ, ॠ, ॠ.

[१६] संस्थाः — उ, ओ.

[१७] पशुपतिविषयाः — मु.

[१८] जगतः — ऊ, ॠ, ॠ.

[१९] प्रोच्यतेऽनुक्रमेण — मु; सोच्यतेऽनुक्रमेण — उ, ओ.

[२०] पदानां — अ, आ, ई, उ.

[२१] तथात्र — ए.

[२२] 'सा' इत्येतन्नास्ति — अ, लृ, ऐ.

[२३] गुरुलघुलघुश्च — ऊ, ॠ, ॠ.

[२४] 'लघुश्च' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.

[२५] अत्र 'ते' इत्यधिकम् — ॠ.

[२६] विपरीतानुक्रमेणोक्ता — अ, ई, उ, लृ, ए, ऐ; विपरीतक्रमेणोक्ता — आ; विपरीतक्रमेण नोक्ता — ऊ, ॠ, ॠ.

[२७] योजनं — अ आ, ई, उ, ऊ, ॠ, ॠ, ए, ऐ.

[२८] तथा — अ, आ, लृ, ऐ.

न हि विद्यापादार्थस्य[१] लघुना[२] ग्रन्थेन योजनमुपपद्यते। क्रियापादार्थस्य[३] वा लघुतरेणेत्यर्थः। तथा विद्यापादादीनां **यो विभागो** लक्षणं **स**[४] सकलसंहिताव्यापकोऽप्यत्र[५] प्रतिपादितः। किं च संक्षेपतः तत्त्वानाम् अध्वव्यवस्थाप्यत्र प्रथमेन पदार्थत्रयेण सूचिता। तथा पतिः प्राप्यतया विषयो येषां, पशुश्च [६]नेयतया ते **पतिपशुविषयाः सूचिताः षट्पदार्था** अप्यत्रेति उपसंहारः।

अथ वक्ष्यमाणप्रकरणार्थोप[७]क्रमः **तेषां** षण्णां पदार्थानाम् **आदौ** यः **पतिरिति गदितः** [८]पदार्थः **सः प्रोच्यते** लयभोगाधिकारक्रमेणेति[९] ॥२२॥

[१०]इति [११]श्री[१२]भट्ट[१३]नारायणकण्ठात्मजभट्टरामकण्ठ[१४]विरचितायां मतङ्गवृत्तौ (विद्यापादे) उद्देशप्रकरणं [१५]द्वितीयं [समाप्तम्]

[**द्वितीयः पटलः**]

---

[१] पदार्थस्य — अ; पादात्तस्य — ऊ, ऋ, ॠ.

[२] अत्र 'लघुना' इत्यधिकम् — अ, ऌ, ऐ.

[३]पदार्थस्य — अ; क्रियापादस्य — ऊ, ऋ, ॠ.

[४] 'स' इत्येतन्नास्ति — अ, ई, उ, ऌ, ए.

[५] व्यापकोऽत्र — आ.

[६] प्रणेयतया — ऊ, ऋ ॠ.

[७] ०क्रमेणार्थस्तेषां — ऊ, ऋ, ॠ.

[८] पदार्थः संप्रोच्यते — अ, आ, ऊ, ऋ, ॠ, ऌ; पदार्थानुक्रमेण सह प्रोच्यते — ऐ.

[९] भोगानुक्रमेणेति — ऊ, ऋ,

[१०] 'इति श्री' इत्येतन्नास्ति — ऊ, ऋ, ॠ

[११] 'श्री' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ; 'श्री' इत्यस्य स्थाने 'श्रीमत्' इति दृश्यते — ऌ.

[१२] 'भट्ट' इत्येतन्नास्ति अ, आ, ई, उ, ऌ, ए, ऐ.

[१३] नारायणात्मज — ऊ, ऋ, ॠ; नारायण-कण्ठात्मक — ई, उ.

[१४] कृतायां — ऊ, ऋ, ॠ

[१५] 'द्वितीयं' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

# तृतीयः पटलः

## लयभोगाख्यतत्त्वद्वयविचारप्रकरणम्

[1]अथास्मिन् [2]पटलान्तरारम्भे [3]पञ्चविधः संबन्धः प्रोच्यते । यदुक्तं [4]श्रीमत्पौष्करे[5] —

"अनन्तरं यत्पटलात्सूत्रं [6]तन्त्रे प्रवर्तते ।
वक्तव्यस्तस्य संबन्धः पञ्चधा समवस्थितः[7] ।।
[8]तन्त्र[9]वस्त्वात्मकात्सूत्राद्वाक्यात्प्रकरणात्तथा[10] ।
[11]पटलाच्च" इति ।

तत्रेह [12]तन्त्रवस्तुनः षट्पदार्थात्मिनः [13]प्रतिज्ञातत्वात् [14]तन्त्रवस्तुसंबन्धः पतिपदार्थत्वेन[15] । सौत्रस्तु अथशब्देन सूचितः, [16]पदपङ्क्तिपदेन[17] चाभिहितः। वाक्यात्मकोऽनेकविधः [18]धातुर्वक्त्राम्बुजोद्गारादित्यादिवाक्योक्तः[19] । प्राकरणिकस्तु[20] पादगतो विद्यापादात्मकः। पाटलिकस्तु पूर्वपटलोप[21]संहार एव सूचितः[22]। [23]सर्वत्रापि पूर्वपटलोपसंहारे एव [24]पाटलिकः संबन्धः श्रूयते। प्रकरणसंबन्धोऽपि विद्यापादं यावदेकरूप एवेति[25] किं तयोरसकृद्वचनेन। यदाहुः — [26]"अतः कष्टतरं नास्ति यदुक्तं पुनरुच्यते" [27]इति । सूत्रवस्तुवाक्यात्मकस्तु पतिपदार्थ[28]विचारान्तं यावदेकरूप एवेति[29] पटल[30]चतुष्टयानन्तरं [31]पदार्थान्तरे [32]दर्शयिष्याम[33] इत्यतोऽनन्तरेण[34] वक्तव्यतया पतिपदार्थः[35] प्रतिज्ञात[36] उच्यते — 'अथ पत्युः' इत्यादि ।।

---

[1] 'अथास्मिन्' इत्येतन्नास्ति — अ, आ, ई, उ, लृ, ए, ऐ.
[2] पटलानन्तरा० — अ, आ, ई, उ, लृ, ए.
[3] पञ्चविषयसं० — ऐ.
[4] श्रीपौष्करे — ऊ, ऋ, ॠ.
[5] मुद्रितपौष्करे नोपलभ्यते
[6] तत्र — ए.
[7] ०स्थिताः — ऐ.
[8] तत्र — अ.
[9] ०वस्त्वष्टकात् — ऊ, ऋ, ॠ.
[10] प्रकरणं तथा — अ; प्रकरणादपि — ऊ, ऋ, ॠ.
[11] पटलाश्च — अ.
[12] तन्त्रे वस्तुनः — अ.
[13] मतङ्ग० विद्या० १. २९ उ०
[14] तत्र वस्तु० — अ, लृ.
[15] पदार्थः । — ऊ, ऋ, ॠ.
[16] पादः पङ्क्ति० — ऊ, ऋ, ॠ.
[17] मतङ्ग० विद्या० २. १ पू०
[18] मतङ्ग० विद्या० १. ३० उ०
[19] ०द्गारादिति वाक्येनोक्तः — अ, आ, ई, उ, लृ, ए; ०द्गारादिभिर्वाक्यैः — ऊ, ऋ, ॠ.
[20] तुशब्दो नास्ति — ऊ, ऋ, ॠ.
[21] ०संहारेण सूचितः — अ, आ, ई, उ, लृ, ए; ०संहार एव उक्तः — ऊ, ऋ, ॠ.
[22] मतङ्ग० विद्या० २. २२ वृत्तौ
[23] 'सर्वत्रापि' इत्यस्य स्थाने 'इत्येष च प्रतिपटलमनुसंधेयः। यतः प्रतिपटलमत्र' इति दृश्यते — ऊ, ऋ, ॠ; 'सर्वत्रापि' इत्यस्य स्थाने 'तत्र' इति दृश्यते — ए.
[24] पाटलिकसं० — ऐ.
[25] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[26] आकरो न लभ्यते ।
[27] इतिशब्दो नास्ति — ऐ.
[28] विचारं याव० — ऊ, ऋ, ॠ.
[29] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[30] चतुष्टये अनन्तरं — ऊ, ऋ, ॠ.
[31] पदार्थान्तरेण — अ, आ, ई, उ, लृ, ए, ऐ.
[32] प्रदर्श० — लृ.
[33] मतङ्ग० विद्या० ७. १ पू० वृत्तौ ।
[34] ०ऽनुक्रमेण — ऊ, ऋ, ॠ.
[35] पदार्थे — ऐ.
[36] मतङ्ग० विद्या० २. २२ वृत्तौ ।

अथ पत्युरधिष्ठानं स्वशक्तिकिरणात्मकम्[१] ।
तस्यां दिवि सुदीप्तात्मा निष्कम्पोऽचलमूर्तिमान् ॥१॥
काष्ठा सैव परा सूक्ष्मा सर्वदिक्काममृतात्मिका ।
प्रध्वस्तावरणा शान्ता वस्तुमात्रातिलालसा[२] ॥२॥
आद्यन्तोपरता [३]साध्वी मूर्तित्वेनोपचर्यते ।
स्थितावन्योन्यलोकेऽस्मिन्संविदा नोपलभ्यते ॥३॥

**अथेति** पदार्थसंग्रहानन्तरं[४] पतिपदार्थं सधर्मकं युक्तितो विचारयितुं तावद् विशिष्टलक्षणेन प्रतिजानाति। तस्मिंस्तु[५] सिद्धे लयभोगाधिकारभेदः प्रतिपादयितुं शक्य इति [६]पश्चात्तत्प्रतिपादयिष्यति — [७]"तस्मादेव परं तत्त्वम्" इत्यादिना । तत्र **पत्युः** परमेश्वरस्य पतिपदार्थत्वेन [८]संगृहीतस्य [९]आधिक्येन सर्वकालव्याप्त्या स्थीयते[१०] यस्मिंस्तद्[११] **अधिष्ठानं** [१२]विशिष्टं स्थानमेव 'प्रोच्यत' इत्यनुषङ्गः[१३] । तच्च [१४]तस्य [१५]विद्येश्वरादीनामिव न [१६]व्यतिरिक्तम् । अपि तु स्वशक्तिरेव ज्ञानक्रियात्मिका; किरणाः [१७]सवितुरिव दाह[१८]प्रकाशादिकर्तृत्वात्; [१९]तदात्मकम् । शक्तय एव तत्राधिष्ठेयत्वेनोपचर्यन्त इति यावत् । [२०]ततश्च[२१] तत्रापि ये विद्यात्मकं बैन्दवं वा भुवनं "[२२]बिन्दुरूपः शिवो ध्येयः" [२३]इत्याद्यन्यार्थश्रुतिजनितभ्रान्तयः कल्पयन्ति ते [२४]प्रतिक्षिप्ताः । यथा चास्यां दिवि सविता [२५]दाहकप्रकाशकस्वभाव एव, तथा **तस्यां** [२६]स्वशक्तिकिरणात्मिकायां[२७] परस्यां **दिवि** क्रीडास्थाने सुष्ठु [२८]दीप्तः सर्वविषयज्ञानैश्वर्यदीप्तिभिः आत्मा[२९] स्वभावो यस्य [३०]स [३१]तत्स्वरूप

---

[१] ०करणात्मकम् । — ओ.
[२] ०मात्रात्र लालसा — ऊ; मात्रा तु लालसा — ऋ, ऋ॒.
[३] साध्वमूर्ति० —ओ.
[४] संग्रहादनन्तरं — आ, ऊ, ऋ, ऋ, ए, ऐ.
[५] तुशब्दो नास्ति — आ, ई, उ, ए.
[६] पश्चात्तान् प्रति० — ऋ.
[७] मतङ्ग० विद्या० ३. २० उ०
[८] मतङ्ग० विद्या० २. १४ वृत्तौ।
[९] अधिकेन — ऐ.
[१०] व्याप्यास्थीयते — अ.
[११] तस्मिंस्तद् — ए.
[१२] विशिष्टस्थान० — ऋ, ऋ.
[१३] मतङ्ग० विद्या० २. २२ तमश्लोकात् ।
[१४] 'तस्य' इत्येतन्नास्ति — ऐ.
[१५] विद्याविद्येश्व० — ऐ.
[१६] व्यतिरिक्तः — अ.
[१७] सवितरीवादाह० — ऐ.
[१८] ०प्रकाशाधिकर्तृ० — ऋ; ०प्रकाशकर्तृ०— ऌ
[१९] तदात्मकाः — ऐ.
[२०] अत्र 'तस्मात्' इत्यधिकम् — अ.
[२१] तच्च — अ, आ, ई, उ, ऊ, ऌ, ए.
[२२] 'बिन्दुरूपः शिवो ध्येयः' इत्ययं भागः सार्धत्रिशतिकालोत्तरवृत्तौ यजनप्रकरणे पञ्चमश्लोकविवरणे 'यदुक्तं श्रीमत्पौष्करे' इति उद्धृतः । परं तु मुद्रितपौष्करे (ज्ञानपादे) नोपलभ्यते ।
[२३] इत्याद्यनर्थश्रुति० — ऐ.
[२४] प्रक्षिप्ताः — अ, ऌ, ऐ.
[२५] दाहप्रकाशकस्व० — आ; दाहप्रकाशस्व० — ऌ.
[२६] 'स्व' इति नास्ति — अ, आ, ई, उ, ऌ, ए, ऐ.
[२७] ०किरणात्मकायां — ए.
[२८] दीप्तसर्व० — अ, ऌ, ऐ.
[२९] ०ज्ञानैश्वर्यदीप्तिरात्मा — ऊ, ऋ, ऋ; ०ज्ञानैश्वर्यादिभिरात्मा — ऐ.
[३०] 'स' इत्येतन्नास्ति — अ, ऐ.
[३१] एतत्स्वरूप — आ, ई, उ.

एव [१]पतिरित्यर्थः। [२]न तु [३]मनःसंयोगान्नैयायिकादिसिद्धस्येश्वरस्येव[४], बुद्धिसंयोगात् [५]पातञ्जल-सिद्धस्येव वा तस्य [६]संज्ञानाद्दीप्तिः। तत्संयोगस्य [७]व्यापकाव्यापकवर्तित्वेन घटाकाश[८]संयोगस्येवाव्यापकत्वात् तत्र पुरुष इव समस्तवस्तुव्यापकज्ञानक्रियास्वरूपकार्यानुपपत्तिः[९]।

[१०]ननु अव्यापकानामपि परमाणूनां व्यापक[११]पृथिव्यादिद्रव्यकार्यदर्शनादनैकान्तिकमेतत्। न। तस्य [१२]तन्मात्रकार्यत्वेन वक्ष्यमाणत्वात्[१३] परमाणुकार्यत्वासिद्धेः। सिद्धावपि नैकस्तस्यारम्भको भवद्भिः [१४]परमाणुरिष्यते। अपि तु प्रत्यवयवं बहवः[१५]। [१६]बहूनां च [१७]मूर्तानामव्यापकत्वासंभवान्नानैकान्तिकः।

ननु वटबीजादेर्महतो[१८] वटादेर्जननादनैकान्तिकः[१९]। न[२०]। [२१]भूम्युदकादीनामपि तत्र हेतुत्वादिति वक्ष्यामः[२२]। [२३]सर्वविषय[२४]व्यापक[२५]ज्ञानादियुक्तश्चायं [२६]पतिः। अतो नाव्यापकमनःसंयोगोऽत्र हेतुः। अपि तु तथाभूतज्ञानादिस्वभावतैव।

ननु पातञ्जलानां बुद्धेर्व्यापकत्वान्नैष प्रसङ्गोऽत्र। न। व्यक्तत्वेन [२७]व्यापकत्वायोगाद् महाभूतादिवत्। प्रोक्तं च सांख्यैः[२८] —

"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥" इति।

तेन तेषामप्येष प्रसङ्ग एव।

---

[१] 'पतिरित्यर्थः' इत्यस्य स्थाने इतिशब्दो वर्तते। — ए.

[२] ननु — अ; स तु — ॠ.

[३] मनःसंयोगो नैया० — अ.

[४] नैयायिकादिसिद्धस्येव — आ; नैयायिकसिद्धस्येश्वरस्येव — ऊ, ऋ; नैयायिकसिद्धस्येश्वरस्यैव — ॠ.

[५] पातञ्जलि० — अ, ऊ, ऋ, ॠ, ऐ.

[६] संज्ञादानाद्दीप्तिः — अ; संज्ञानादिदीप्तिः — ई, उ, ए; ज्ञानादिदीप्तिः — ऊ, ऋ, ॠ; संज्ञानदीप्तिः — ऐ.

[७] व्याप्यव्यापक० — ऐ.

[८] ०संयोगस्यैवा० — ऐ.

[९] ०क्रियारूपा कार्यानुपपत्तेः — ऊ, ऋ, ॠ; क्रियारूपकार्यानुप० . . . ॡ; क्रियात्मस्वरूपकार्यानुपपत्तिः — ए.

[१०] ननु व्यापका० — अ, ॡ, ए.

[११] पृथिवीद्रव्यादिकार्यादर्शना० — ऋ, ॠ; पृथिव्यादिकार्यदर्शना० — ए.

[१२] तावन्मात्रत्वेन — ऊ, ऋ, ॠ; तन्मात्राकार्यत्वेन — ॡ.

[१३] मतङ्ग० विद्या० १८. १०५ पू० वृत्तौ।

[१४] 'परमाणुः' इत्येतन्नास्ति — ऐ.

[१५] अत्र 'एव' इत्यधिकम्। ऊ, ऋ, ॠ.

[१६] 'बहूनां च' इत्यस्य स्थाने 'ब्रह्मज्ञान' इति दृश्यते — ए.

[१७] मूर्तानां व्यापकत्वा० — अ, ॡ, ऐ; मुक्तानां व्यापकत्वा० — ए.

[१८] ०बीजादिना महतो — ऋ, ॠ; ०बीजान्महतो — ऐ.

[१९] ०दनेकान्तः — अ, ई, उ, ॡ, ए; ०दनेकान्तिकः — आ, ऐ.

[२०] 'न' इत्येतन्नास्ति — आ.

[२१] नम्येरकादीनामपि — ऐ.

[२२] मतङ्ग० विद्या० १९. ३३ पू; २०. ३ पू; २१. ३ उ; २. ५ उ ६. २३. १ उ०—६पू० श्लोकेषु

[२३] सर्वविषये व्या० — ऐ.

[२४] 'व्यापक' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[२५] ०ज्ञानयुक्त० — आ, ई, उ.

[२६] पतिरनेक नाव्यापक (?) — ऐ.

[२७] व्यापृत्वायोगाद् — ऐ.

[२८] सांख्यका० — १०.

किं च **निष्कम्पः** । न बिन्दुसदाशिवात्मना [१]भेदेन, नापि मन्त्र[२]मन्त्रेश्वराणां भेदेन, [३]नापि मायादिपृथिव्यन्तेन भेदेन [४]सकम्पः [५]परिणामी; न तत्प्रकृतिरुपादानमित्यर्थः । [६]मृदादिवदचैतन्यप्रसङ्गादिति वक्ष्यामः[७] । ततश्च यैः कौलादि[८]शास्त्रवासनया विवर्त[९]परिणामपक्षयोरन्यतराभ्युपगमेनात्र [१०]पत्युरद्वैतवादः समारोप्यते ते [११]प्रतिक्षिप्ताः । कथं तर्हि अत्र सकलनिष्कलादिभेदः । न मुख्यः । [१२]अपि तूपचरित[१३] एवेति वक्ष्यामः[१४] । "तनुस्तस्योपचारेण" इत्यादिना ।

[१५]अन्यैस्तु — [१६]"अशरीरो [१७]ह्यधिष्ठाता नात्मा मुक्तात्मवद्[१८] भवेत् ।" इत्येतद्दोषभयात् पतिः शरीरयुक्त एवाभ्युपगतः [१९]पाञ्चरात्रादिभिः । तद्व्यावर्तनाय **अचलमूर्तिमान्** इति । द्विविधा[२०] ह्यात्मनां मूर्तिः चला च[२१] अचला च । तत्र चला [२२]तात्त्वभौवनशरीरात्मिका । अचला तु ज्ञानक्रियात्मिकेति[२३] वक्ष्यामः[२४] । स चाचलमूर्तिमान् । न तु तात्त्वेन[२५] बाह्य[२६]शरीरेण वा युक्त इत्यर्थः ।

ननु[२७] तदप्यचलमेव तस्य [२८]तैरभ्युपगम्यते । तदयुक्तम्[२९] । [३०]संनिवेशवतामकर्तृपूर्वकत्वासिद्धेः, तत्र [३१]वा [३२]तत्सिद्ध्यर्थमभ्युपगमे तेनैव[३३] संनिवेशवत्त्वादेर्हेतोः[३४] [३५]तनुकरणभुवनादीनां [३६]कर्तृपूर्वकत्व-

---

१ भेदनेनापि — ॠ.

२ मन्त्रेश्वराणुमायादि० — ऊ, ऋ, ॠ; मन्त्रेश्वराणां मायादि० — ऐ.

३ न च मायादि० — आ, ई, उ, ॡ, ए.

४ 'सकम्पः' इत्यनन्तरं 'न बिन्दुसदाशिवात्मना परिणामीव' इत्यधिकम् — ऊ; 'परिणामीव' इत्यधिकम् — ॠ.

५ परीणामी न तत्प्र० — ई, उ; परिणामीव तत्प्र० — ऊ, ऋ, ॠ.

६ मृदादिवदाचैतन्य० — अ, आ, ई, उ, ऊ, ऋ, ॡ, ए, ऐ.

७ मतङ्ग० विद्या० ३. २० उ० वृत्तौ ।

८ शास्त्रान्तवासनया — ऋ, ॠ.

९ परिणामयोः पक्षयोरन्यतरत्वाभ्युप० — ॡ.

१० पत्यद्वैतवादः समा० — ऋ, ॠ; पत्युरद्वैतः समा० — ॡ.

११ प्रतिक्षेप्याः — अ, आ, ई, उ, ॡ, ए; प्रक्षेप्याः — ऐ.

१२ 'अपि' इत्यस्य स्थाने 'किं' इति दृश्यते — अ, ऐ.

१३ ०चारित — आ, ई, उ.

१४ मतङ्ग० विद्या० ४. १४, १५ पू०

१५ अन्यस्तु — ऊ, ऋ, ॠ.

१६ श्लोकवा० संबन्धाक्षेपपरिहारे — ७८ उ०.

१७ 'हि' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

१८ ०वद्भवेयमित्येत० — अ; ०वदित्येत० — ऊ, ऋ, ॠ.

१९ पञ्चरात्रा० — ऊ, ऋ, ॠ, ऐ.

२० द्विधा — ऐ.

२१ चशब्दो नास्ति — आ, ई, उ, ॡ, ए, ऐ.

२२ तत्त्व० — अ.

२३ क्रियास्वभावेति — अ, आ, ई, उ, ॡ, ए, ऐ.

२४ मतङ्ग० विद्या० ४. २८ उ० — ३० पू० वृत्तौ ।

२५ 'तात्त्वेन' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

२६ ०शरीरयुक्त — ऊ, ऋ, ॠ.

२७ ननु च तद० — अ, ॡ.

२८ एतैरभ्यु० — ऐ.

२९ तदयुक्तः — अ.

३० संनिवेशवतां कर्तृ० — अ.

३१ 'वा' इत्यस्य स्थाने 'तावत्' इति आ, ई, उ, ए कोशेषु, 'यैः' इति ऐ कोशे च दृश्यते ।

३२ तत्सिद्ध्यभ्युप० — ऊ, ऋ, ॠ; तत्त्वसिद्ध्यर्थमभ्युप० — ऐ.

३३ ०गम्य तेनैव — ए; ०गमः तैरेव — ऐ.

३४ संनिवेशत्वादेर्हेतोः — आ, ए; संनिवेशत्वाद्धेतोः — ऐ.

३५ तत्र करण० — ॠ.

३६ कर्तृपूर्वकसिद्धौ — अ; अकर्तृपूर्वकत्वसिद्धौ — आ.

सिद्धौ वक्ष्यमाणस्य[१] अनेकान्तिकत्वादीश्वरस्याप्यसिद्धिः[२] । यदाहुः[३] —

[४]"अनेकान्तश्च [५]हेतुस्ते तच्छरीरादिना भवेत् ।
उत्पत्तिमांश्च तद्देहो देहत्वादस्मदादिवत् ।।" इति[६] ।

[७]यथा चात्र "अशरीरो [८]ह्यधिष्ठाता नात्मा" इत्ययं न[९] दोषः, [१०]तथा वक्ष्यामः[११] ।

अन्ये तु [१२]यथा पतिरस्मदादीनामेवं [१३]तस्याप्यन्यः [१४]सातिशयोऽचलमूर्तिमानधिष्ठातेति[१५] [१६]परमेश्वरादाधिक्यमोक्षवादिनः । [१७]यद्येवं तस्यापि [१८]प्रकर्षस्तस्यापि प्रकृष्टतरावस्थेत्यादि[१९]तरतमादिप्रतिपाद्य[२०]मोक्षभेदावस्थितेरनवस्थैव [२१]मुक्तौ भवेत् । [२२]न तु [२३]परमेश्वरादाधिक्यमेव[२४] । न हि [२५]सर्वज्ञत्वसर्वकर्तृत्वप्राप्तेरन्यः [२६]प्रकर्षः संभवति । [२७]यतः काष्ठा निष्ठा सैव तन्मूर्तिलक्षणा परा प्रकृष्टा । ननु सर्वज्ञस्यापि [२८]यया सर्वज्ञता । यदाहुः —

"यया विना न सर्वज्ञः सोऽपि तस्यै नमोऽस्तु ते ।" इति ।

तदप्ययुक्तम् । कल्पितव्यपदेशमात्रभेदस्य न [२९]क्वचिदप्यप्रसृतिरिति यत्किंचिदेतत् ।

---

[१] मतङ्ग० विद्या० ६. ९९ उ०, १०० पू० वृत्तौ ।

[२] ०स्यापि सिद्धिः — ए.

[३] श्लोकवा० संबन्धाक्षेपपरि० ७७.

[४] अनेकान्तिकश्च — अ.

[५] हेतुरेतच्छरीरिना — अ; हेतुस्ते तच्छरीरिना — आ; हेतुस्ते तच्छरीरादीनां — ऐ.

[६] इतिवत् — अ.

[७] तथा — ऐ.

[८] ह्यधिष्ठिता — ऊ, ऋ, ॠ.

[९] 'न' इत्येतन्नास्ति — आ.

[१०] तदा — अ.

[११] मतङ्ग० विद्या० ३. १८, १९ वृत्तौ ।

[१२] यथाधिशयः पति० — ऐ.

[१३] तस्याप्यतिशयोऽचल० — अ, आ, ई, उ, ऌ, ए, ऐ.

[१४] सातिशयाचल० — ऊ, ऋ, ॠ.

[१५] मूर्तीनामधिष्ठातेति — ए.

[१६] परमेश्वराधिक्यं — अ; पारमेश्वरादाधिक्य० — आ; परमेश्वराधिक्य० — ऊ, ऋ. ॠ, ऌ, ऐ.

[१७] 'यद्येवं' इत्यारभ्य 'तदप्ययुक्तम्' इत्यन्तो भागः अष्टसु मातृकासु क्रमव्यत्ययेन लिखितो दृश्यते । सः यथामातृकमत्र प्रदर्श्यते । 'तदप्ययुक्तं यतः काष्ठा निष्ठा सैव तन्मूर्तिलक्षणा परा प्रकृष्टा । न हि सर्वज्ञत्वसर्वकर्तृत्वप्राप्तेरन्यः प्रकर्षः संभवति । ननु सर्वज्ञस्यापि यया सर्वज्ञता । यदाहुः — "यया विना न सर्वज्ञः सोऽपि तस्यै नमोऽस्तु ते" इति । यद्येवं तस्यापि प्रकर्षः तस्यापि प्रकृष्टतरावस्थेत्यादितरतमादिप्रतिपाद्यमोक्षभेदावस्थितेरनवस्थैव मुक्तौ भवेत् । न तु परमेश्वरादाधिक्यमेव' — आ, ई, उ, ऊ, ऋ, ॠ, ए. ऐ.

[१८] 'प्रकर्षस्तस्यापि' इत्येतन्नास्ति — अ.

[१९] ०तरतमपादि० — ऐ.

[२०] मोक्षभेदोऽवस्थितेत्यादिरनव० — आ, ए; मोक्षभेदोऽवस्थितेरनव० — ई, उ; मोक्षभेदाव्यवस्थितेरनव० — ऊ, ऋ, ॠ.

[२१] मुक्तं — ए; मुक्तो — ऐ.

[२२] ननु — आ, ई, उ; 'नतु' इत्येतन्नास्ति — ऊ.

[२३] परमेश्वरोऽपि चाधिक्यमेव — ऊ; परमेश्वरादपि चाधिक्यमेव — ऋ, ॠ.

[२४] ०मेवम् — ऐ.

[२५] सर्वज्ञत्वकर्तृत्वव्याप्ते० — ऊ, ॠ; सर्वज्ञ कर्तृत्वव्याप्ते० — ऋ.

[२६] प्रकृष्टः — ए.

[२७] ततः — अ, ऌ.

[२८] पृथा या सर्वज्ञतया यदाहुः — अ; या सर्वज्ञता यदाहुः — ऊ, ऋ, ॠ; यथा सर्वज्ञता यदाहुः — ए.

[२९] क्वचिदप्यपप्रसृतिरिति — अ, आ, ई, उ, ऌ; क्वचिदप्रसृतैरिति — ऊ; क्वचिदप्रसृतेरिति — ऋ, ॠ; क्वचिदप्यपसृतिरिति — ए; क्वचिदप्युपप्रसृतिरिति — ऐ.

केचित्पुनः व्यापारवत्वात् सवितुरिव स्थूला [1]चाव्यापिका च तनुरीश्वरस्य। ततस्तत्कारण-भूतया अन्यया ब्रह्माख्यया [2]सूक्ष्मया व्यापिकया च भाव्यमिति विकारेश्वरवादिनः। यच्छ्रूयते[3] — "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति ॥

[4]पाञ्चरात्रा अप्याहुः[5] —

"[6]ईशास्तु ते [7]समभवन्प्रकृतेः [8]परस्याः
कृष्णानिरुद्धमकरध्वजरौहिणेयाः ।" [9]इति

[10]तदयुक्तम्। [11]स्थूलाव्यापक[12]मूर्तित्वेनास्मदादिवत् तेषामनीश्वरत्वात्। [13]भगवतस्तु सर्वे-श्वरत्वात् [14]सूक्ष्मा परमाण्वादेरपि व्यापिका सा मूर्तिः। सर्वदिक्का च सर्वदिक्, [15]वक्ष्यमाण-[16]तत्तत्कार्यव्याप्तेर्यतः सिद्धा । [17]ततो [18]ब्रह्मवद्व्यापार[19]वत्वेऽपि न मूर्त्यन्तरपूर्विकेति।

जैमिनीयास्तु — "[20]पुरुष एवेदं सर्वम्" इत्यादिश्रुतितः पुरुष एवायं स्वात्मनः सुकृतदुष्कृतात्मकं बन्धम्, [21]"आत्मा [22]ज्ञातव्य" [23]इत्यादिना योगेन [24]च [25]मोक्षमारचयन्नीश्वरो नान्यः" इत्याहुः । तदयुक्तम्। यस्माद् अमृतात्मिका सैव मूर्तिः सर्वेश्वरत्वान्न पौरुषी, मृतिस्वभावत्वेन[26] तस्या असिद्धेः[27]। शक्तिनिरोधो हि मरणं, तच्च [28]मलावियोगात्तस्या इति वक्ष्यामः[29]। तद्वियोगे [30]तु

---

[1] च व्यापिका च — अ; चलाव्यापिका च — ए.
[2] 'सूक्ष्मया' इत्येतन्नास्ति — अ, ऌ.
[3] तै० संहिता — ४. १. ८.
[4] पञ्चरात्रा — ॠ, ऌ, ऐ.
[5] आकरो नोपलभ्यते।
[6] ईश्वरास्तु — ए.
[7] संभवन् — अ, ई, उ, ऐ; समभवत् — ऊ; संभवमप्र० — ए.
[8] परः स्याः — ॠ.
[9] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[10] तदप्ययुक्तम् — ऊ, ऋ, ॠ.
[11] स्थूलव्यापक० — अ, ई, उ; स्थलव्यापक — ॠ.
[12] ०मूर्तिमत्वेना० — ऋ, ॠ.
[13] भागवतस्तु — ऊ.
[14] सूक्ष्मपरमा० — अ; सूक्ष्मातपरमा० — ए.
[15] मतङ्ग० विद्या० ३. १० उ० — १३ पू० वृत्तौ ।
[16] तत्कार्य० — अ, ऊ, ऋ, ॠ.
[17] अत्र नशब्दोऽधिकः — अ, आ, ई, उ, ऌ, ए, ऐ.
[18] ब्रह्मवदव्यापार० — ई, उ.
[19] ०वत्वेन मूर्त्यन्तर० — अ, आ, ई, उ, ऌ, ए, ऐ.
[20] ऋग्वेदे १०. ९०. २; तै० आरण्यकम् ३. १२. १; सर्वमिदं पुरुष एवेत्यादिना श्रुत्या पुरुषः — आ, ई, उ, ऌ, ए.
[21] बृहदारण्य० २. ४. ५ 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्य-स्योपनिषद्वाक्यस्यानुवादरूपोऽयमिति भाति ।
[22] विचारयितव्यः — आ, ई, उ, ए.
[23] इत्यादिनयेन च — ऊ, ऋ, ॠ; इत्यादि-योगेन च — ऐ.
[24] चशब्दो नास्ति — आ, ई, उ, ऌ.
[25] मोक्षमारचयन्ति ईश्वरो — अ; मोक्ष-माचरयन्नीश्वरो — आ, ई, उ; मोक्षं रच-यन्नीश्वरो — ऊ, ऋ, ॠ.; तन्मोक्षमार-रचयन्नीश्वरो — ऐ.
[26] ०स्वभावेन — ए.
[27] तस्यासिद्धेः — अ; तस्यास्सिद्धेः—आ, ई, उ, ऌ, ए, ऐ; तस्या अपि सिद्धेः — ऊ.
[28] मलायोगात् — अ; अमलावियोगात् — आ, मालावियोगाः — ऐ.
[29] मतङ्ग० विद्या० ४. ४१, ४२ वृत्तौ।
[30] तुशब्दो नास्ति — अ, आ, ई, उ, ऌ, ए, ऐ.

न पुरुषता । अपि तु [1]पतित्वमेव । न [2]च तत्र पुंसः सामर्थ्यमित्यपि[3] दर्शयिष्यामः[4] । [5]सुकृताद्यार्जनमात्रसामर्थ्येऽपि तनुकरणभुवननिर्माणादौ सामर्थ्यादृष्टेरनीश्वरत्वमेवेति ।

[6]अपरे पुनः —

"[7]अनुग्रहतिरोभावौ द्वौ पाशौ तु सदाशिवे ।
पशुराद्यः सदाशिवः"

इति [8]वदन्तो मूर्तेरस्याः [9]पाशसंसर्गं प्रतिपन्नाः । तत्प्रतिक्षेपाय — प्रध्वस्तावरणेति । [10]विनिवृत्तसमस्तबन्धना । [11]'तत्सद्भावे हि जगतः [12]तत्कर्तृकत्वानुपपत्तिरिति [13]अन्या तत्कर्तृभूता कल्पनीया, ततोऽनवस्थेति [14]निवेदयिष्यामः । [15]न च अनुग्रहतिरोभावयोः [16]पाशत्वं तत्कृत्यविशेषात्मकत्वात् स्थिति[17]संरक्षणादीनामिवेति । यदपि पशुत्वमुक्तं, तदपि शिवावस्थाप्रकर्षप्रतिपादकत्वेनोपचरितार्थं[18] व्याख्येयम् । [19]संस्कार्यसदाशिवविषयतया वा[20] मुख्यार्थमेवेति वक्ष्यामः[21] ।

यैस्तु भगवतः सर्वेश्वरत्वेऽप्याराधनतदभावाभ्यामिष्टानिष्टफलप्रदत्वाद् नृपत्यादीनामिव रागद्वेषावभ्युपगम्येते तान्प्रत्युच्यते — **शान्तेति** रागादिरहिता । तदाराधनस्य चोदितत्वे [22]सति श्रेयःसाधनत्वाज्ज्योतिष्टोमादेरिव [23]विशिष्टेष्टफलदत्वाद् नृपत्यादिना [24]साधर्म्यं नास्येति, नात्र रागादिसिद्धौ साधनत्वमिति ।

अतएव [25]**अतिलालसा** [26]लालसा तृष्णातिरेकः, सातीव विद्यते यस्याः । रागद्वेषाभावेऽपि पितेव पुत्रादीन्[27] योग्यतानुसारेण सर्वं [28]जगत्पातीत्यर्थः ।

अथ लयाधिकारभोगाख्यानां[29] मध्यात् [30]कासावत्र मूर्तिः साध्यत्वेन प्रतिज्ञायत इत्युच्यते —

---

[1] पशुत्वमेव — ऌ.
[2] चशब्दो नास्ति — ऐ.
[3] ०मित्यादि — अ, आ, ई, उ.
[4] मतङ्ग० विद्या० ३. १२, १३ पू० वृत्तौ; ४. ३४ उ० — ३७ पू० वृत्तौ च ।
[5] सुकृताद्यर्जन० — ऋ, ॠ; सुकृताद्यज्जनन० — ऐ.
[6] अन्ये — ऊ, ऋ, ॠ.
[7] आकरो नोपलभ्यते
[8] तदन्तो मूर्ते० — ऊ; तदन्तमूर्ते० — ऋ; तदन्तं मूर्ते० — ॠ.
[9] पाशसंसर्गा — अ; पाशोसंसर्गं — ऊ;
[10] 'वि' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[11] तत्स्वभावे हि — आ, ई, उ, ए; तच्छब्दो नास्ति — ऊ, ऋ, ॠ.
[12] तत्कर्तृत्वानु० — अ, ऌ, ए.
[13] अन्यतन्त्रभूता — अ, आ, ई, उ, ऌ, ए, ऐ.
[14] निवेशयिष्यामः — ऋ; मतङ्ग० विद्या० ६. ९६-९७ वृत्तौ, ईश्वरस्य जगत्कर्तृकत्वे रागद्वेषादियोगत्वमाशङ्क्य परिहृतम् । अत्रैव "शान्ता" इति पदविवरणे च रागादिरहितत्वं प्रोच्यते ।
[15] ननु चानु — ऊ, ऋ, ॠ.
[16] पाशत्वं कर्तृत्वविशेषा० — ऊ, ऋ, ॠ.
[17] ०सर्गादीनामिवेति — आ, ऌ, ए; ०सर्गादीनामेवेति — ई, उ.
[18] ०चरितमित्यं — ए; चरितार्थे — ऐ.
[19] संस्कारसदा० — अ.
[20] वाशब्दो नास्ति — अ,
[21] मतङ्ग० विद्या० ४. ५४. उ०, ५५ वृत्तौ ।
[22] 'सति' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[23] विशिष्टे तत्फल० — अ, ऐ; विशिष्टफलसाधकत्वं नान्यस्येति — ऊ, ऋ, ॠ.
[24] साधर्म्ये — ऐ.
[25] 'अतिलालसा' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[26] 'लालसा' इत्येतन्नास्ति — ऌ, ॠ ऐ.
[27] पुत्रान् — ऊ, ऋ, ॠ.
[28] जनयत्पातीत्यर्थः — ऐ.
[29] ०भोग्याख्यानां — अ, आ, ई, उ.
[30] कासावर्तिमूर्तिः — अ; कात्र मूर्तिः — ऊ, ऋ; क्वात्र मूर्तिः — ॠ; कासावमूर्तिः — ऐ.

[1]**वस्तुमात्रेति** पतिलक्षणवस्तु[2]मात्रैवेयं मूर्तिः, [3]सा तावदत्र साध्यते। तस्यास्तु लयभोगादिको[4] भेदः पश्चात् प्रतिपाद्यत[5] इत्यर्थः।

[6]नाप्यसौ वैद्येश्वरी, मुक्तशिवसंबन्धिनी वा। [7]यथाहुः प्रवाहनित्येश्वरवादिनः। [8]यतः **आद्यन्तोपरता**[9] सैव मूर्तिः; [10]तत्कार्यस्याद्यन्तरहितस्य [11]सिद्धेरिति वक्ष्यामः[12]। विद्येश्वराणां [13]तु आद्यन्तयुक्ता मूर्तिः[14]। मुक्तशिवानां [15]च आदियुक्तेति भेदः। न च प्रवाहनित्येश्वरपक्षः संभवति, ऐश्वर्यस्य स्वरूपव्यक्तिलाभात्मकत्वेन [16]विनाशासंभवादिति दर्शयिष्यामः। तत्संभवे हि भवेत् प्रवाहनित्येश्वरपक्षः।

यद्येवं मुक्तशिवानामपि पतिसमत्वेन[17] ईश्वराणां [18]बहुत्वाच्चातुल्यमतित्वेन सर्वकार्यानिर्वाहः। न। सर्वज्ञत्वाद्यथार्थ[19]दर्शनप्रवृत्तत्वेन [20]तेषामतुल्यमतित्वासिद्धेः। [21]"रागद्वेषादियुक्तत्वादतुल्यज्ञानता नृणाम्" यत इत्यदोषः।

यद्येवं प्राप्तप्रापणीयत्वेन प्रयोजनाभावादस्या मूर्तेर्न सर्गनिर्माणादौ प्रवृत्तिरुपपद्यते। यदाहुः[22]—"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।" इति। तदपि न। यतः सा पत्युर्मूर्तिः—**साध्वी** करुणायुक्ता। स्वप्रयोजनाभावेऽपि [23]च करुणावन्तः[24] परार्थं प्रवर्तमाना [25]दृश्यन्त इति नात्र प्रयोजनाभावः।

[26]ननु पत्युः सुदीप्तात्मस्वभावत्वेनोक्तत्वात् कथं सा तस्य मूर्तिः। व्यतिरिक्ता हि मूर्तिः कथ्यते। सत्यम्। अत एव—**मूर्तित्वेनोपचर्यते**। न तु व्यतिरिक्ता [27]सा मूर्तिः। [28]प्रोक्तं च श्रीमत् **पौष्करे**[29]—

---

[1] 'वस्तुमात्रेति पतिलक्षण' इत्येतन्नास्ति—अ.

[2] ०मात्रैव यन्मूर्तिः—अ, ई, उ, ऊ, ऋ, ऐ; ०मात्रैव यज्ञमूर्तिः—आ; ०मात्रैवं यं मूर्तिः—ऋ; ०मात्रैव मूर्तिः—ए.

[3] 'सा' इत्येतन्नास्ति—अ, आ, ई, उ, ऊ, ऋ, ए.

[4] ०भोगादिके—अ, ऋ, ऌ.

[5] प्रतिपाद्य—अ, आ, ऌ; प्रतिपाद्यता—ऋ.

[6] न ह्यसौ—अ, आ, ई, उ, ऌ, ए, ऐ.

[7] यदाहुः—आ, ऐ.

[8] 'यतः' इत्येतन्नास्ति—ए.

[9] ०रतः—ऐ.

[10] तत्कार्यस्यान्त०—अ.

[11] सिद्धेति—आ.

[12] बिन्दुभोगतत्त्वयोर्नित्यत्वं वर्ण्यते मतङ्ग० विद्या० ३. ३२. उ०—३५ वृत्तौ

[13] 'तु' इत्यत्र चशब्दो वर्तते।—आ, ई, उ, ए.

[14] ०युक्तमूर्तिः—ऐ; 'मूर्तिः' इत्येतन्नास्ति—ऊ, ऋ, ॠ.

[15] 'च' इत्यत्र तुशब्दो दृश्यते—अ, ऊ, ऋ, ॠ.

[16] विनाशानुपपत्तेरिति—उ; निराशासंभवादिति—ऊ, ऋ; निरासासंभवादिति—ॠ.

[17] ०समानत्वेन—ऊ, ऋ, ॠ.

[18] बहुत्वाच्चातुलं मति०—अ, ई, उ; बहुत्वादतुल्यामति०—ऊ, ऋ, ॠ.

[19] ०दर्शनप्रवर्तने च न तेषा०—अ; ०दर्शनप्रवर्तत्वेन तेषा०—आ, ई, उ, ए; ०दर्शप्रवृत्तत्वेन तेषा०—ऐ.

[20] 'तेषाम्' इत्यारभ्य 'प्रापणीयत्वेन' इत्यन्तं नास्ति—ऊ, ऋ, ॠ.

[21] मोक्षकारिका ११९ पू०

[22] श्लोकवा० संबन्धाक्षेपपरि० ५५ पू०.

[23] चशब्दो नास्ति—ऊ, ऋ, ॠ, ए, ऐ.

[24] करुणावती—ए.

[25] दृश्यत इति—ऐ.

[26] न तु—अ, आ, ई, उ.

[27] सास्य मूर्तिः—ऊ, ऋ, ॠ; 'सा' इत्येतन्नास्ति—ए.

[28] अप्रोक्तश्च—अ.

[29] मुद्रितपौष्करे नोपलभ्यते।

"ज्ञानक्रिये [1]शिवः प्रोक्तः सर्वार्थे निर्मले परे।" इति।

सैवेत्यवधारणाप्रस्तावादत्र[2] न [3]मन्त्रमन्त्रेश्वराणां, [4]नापि दीक्षया बिन्दुसदाशिव[5]तत्त्वयोजितानामपि मूर्तिरुपचर्यत इति [6]व्यावर्त्यते। ततश्च तेषां [7]वक्ष्यमाणनयेन मुख्यैव शुद्धविद्योपादानान्मूर्तिरित्युक्तं भवति।

एवमागमसिद्धस्य विद्येश्वरादीनां [8]शरीरस्य निराकरणायात्र [9]येन केनचित् प्रयोगः कृतः "विद्याविद्येश्वरा अपि न [10]वास्तवशरीरयोगिनः असर्वज्ञत्वप्रसङ्गाद् देवदत्तादिवत्" इति। [11]तस्य मायागर्भाधिकारिभिरनेकान्तः[12]। तेषां हि श्रीकण्ठादिरूपाणां [13]शरीरित्वेऽपि सर्वज्ञत्वस्य वक्ष्यमाणत्वात्[14]। [15]योगपादादिविरोधश्च। तत्र हि [16]सशरीराणामेव योगादिबलेन सर्वज्ञत्वं वक्ष्यति[17]। असिद्ध[18]श्चायमसर्वज्ञत्वप्रसङ्गहेतुः[19], अत्राभि[20]मतशरीरित्वादिति। तथाभूतस्य [21]शरीरस्य तत्रासिद्धेः। [22]यदुक्तं श्रीमत्**किरणे**[23] —

"शुद्धयोनिमयं [24]तस्य [25]वपुरुक्तमकर्मजम्"। इति।

न चाविरुद्धानां सहभावो न दृष्टः, [26]प्रकाशशीतादीनाम्। न च [27]शरीरित्वसर्वज्ञत्वयोर्विरोधः [28]सिद्धः। येनात्र शीतस्पर्शो [29]वह्निरितिवदयं विरुद्धोपलम्भः स्यात्। [30]सतोऽपि सर्वज्ञत्वस्य अतीन्द्रियत्वात् [31]शरीराभावे तदभावासिद्धेर्विरोधासिद्धिर्यतः[32]। नापि सर्वज्ञत्वविरुद्धकारणत्वाच्छरीरस्य विरुद्धकारणोपलम्भोऽयं प्रयोग इति वाच्यम्। अस्य "[33]नावश्यं कारणानि तद्वन्ति [34]भवन्ति"

---

[1] शिवप्रोक्तः सर्वार्थनिर्मले — ऐ.
[2] ०धारणाप्रस्तावनादत्र—ऊ; ०धारणप्रस्तावनादत्र — ऋ., ॠ.
[3] मन्त्रे मन्त्रेश्व० — अ.
[4] चापि दीक्षया — अ; न दीक्षया — ए.
[5] 'तत्त्व' इत्येतन्नास्ति — ऊ, ऋ, ॠ, ॡ, ऐ.
[6] व्यावर्तते — ऋ, ऐ.
[7] वक्ष्यमाणेन येन मुख्यैवाह शुद्धविद्योपादानमूर्ति० — ऐ; मतङ्ग० विद्या० ३. २३ उ० — ३० वृत्तौ वक्ष्यमाणनयेन।
[8] शरीरत्वनिरा० — अ.
[9] यः केनचित्प्रयोगः — अ, ई, उ, ॡ, ए; केन चित्प्रयोगः — ऊ, ऋ, ॠ; यः कैश्चित्प्रयोगः — ऐ.
[10] वास्तवाशरीर० — ऐ.
[11] तच्च — ऊ, ऋ, ॠ; तस्या — ऐ.
[12] ०रनैकान्तः — ऋ, ॠ.
[13] शरीरत्वेऽपि — अ, आ, ॡ, ए, ऐ.
[14] मतङ्ग० विद्या० १५. १, २ पू० वृत्तौ, १६. १ उ० — ४ पू० वृत्तौ च।
[15] योगपदादि० — ऊ, ऋ, ॠ.
[16] शरीरिणामेव — ऊ, ऋ, ॠ.
[17] मतङ्ग० योग० शिवतत्त्वोपलब्धिपटले।
[18] ०श्चायं सर्वज्ञत्व० — अ, आ.
[19] ०प्रसङ्गो हेतुः — ॡ.
[20] मतशरीरत्वा० — अ, आ, ई, उ, ए, ऐ; मतः शरीरित्वा० — ऊ, ऋ, ॠ.
[21] ०भूतशरीरित्वस्य — ऊ; भूतस्य शरीरित्वस्य — ऋ, ॠ.
[22] 'यदुक्तं श्रीमत्किरणे' इत्येतन्नास्ति — अ.
[23] किरणे विद्या० ४. ७ उ० पाठभेदः।
[24] तत्र — ऋ, ॠ.
[25] वपुरुत्तम० — अ, आ, ऐ.
[26] प्रकाशनशीता० — ए.
[27] शरीरस्य सर्वज्ञत्वविरोधसिद्धिः — अ, आ, ई, उ, ॡ, ए, ऐ.
[28] सिद्धो योगेन नात्र — ऊ, ऋ, ॠ.
[29] वह्नेरितिवदयं — ऊ, ऋ, ॠ.
[30] स्वतोऽपि — ए.
[31] शरीरभावे तदभावासिद्धेः — अ, ॡ, ऐ; शरीरभावतदभावासिद्धेः — ऊ, ऋ; शरीरभावतदभावसिद्धेः — ॠ.
[32] ०विरोधसिद्धिर्यतः — अ.
[33] नावश्यकारणानि — अ, ऊ, ऋ, ॠ.
[34] भवति — अ, आ, ई, उ, ऐ.

इति न्यायेन [1]व्यभिचारित्वात्। न हि भवति [2]नात्र शीतस्पर्शः [3]काष्ठादिति। [4]न चास्य शरीरस्य तद्विरुद्धकारणत्वम्[5]। अपि तु मलस्यैव। तस्य भोगैकसाधनत्वादित्यग्रे भविष्यति[6]। भोगस्य च[7] विषय[8]वेदनात्मकत्वात् [9]सर्वज्ञत्वेनाविरोध एव।

अथान्यहेतुकमपि "असर्वज्ञत्वं भूयसा शरीरेण [10]सह दृष्टम्" इति साध्यते। [11]तदयुक्तम्। एवं ह्यनुमान[12]सहस्रोत्थापनप्रसङ्गः "स श्यामः [13]तत्पुत्रत्वात्, [14]भूयोदृष्टतत्पुत्रवत्" इत्येवमादीनामप्यनुमाना[15]वस्कराणामनुमानत्वप्राप्तिरिति[16] प्रतिबन्धमूलमेवानुमानमभ्युपगन्तव्यम्। न भूयोदर्शनमात्रसिद्धमिति[17] वक्ष्यामोऽनुमानलक्षणे एवेति[18], नातस्तेषां शरीराभावसिद्धिः[19]। शरीरसिद्धिस्तु[20] यथा तेषां तथा [21]तत्स्थाने एवोपपादयिष्यामः[22]।

सा च [23]तथाभूता पत्युर्मूर्तिस्तिष्ठतु तावद् [24]आदानभावकालयोः[25], तत्र लोकस्य [26]कार्यकरणाभावेन [27]संवित्त्यभावात्। स्थितौ स्थितिकालेऽपि [28]लब्धकार्य[29]करणोऽन्योऽन्यश्च[30] लोको[31] नानाजातिभिन्नो यस्मिन् संसारे [32]तस्मिन्नत्र संविदा प्रत्यक्षेण [33]नोपलभ्यते। अत्यन्तातीन्द्रियस्वभावा सिद्धेत्यर्थः[34]। [35]तदेवं दर्शनान्तरा[36]प्रसिद्धस्य विशिष्टस्यैव पत्युर्विचाराय लक्षणप्रतिज्ञावाक्यमेतदिति ॥१–३॥

---

[1] व्यभिचारित्वाच्छरीरं न भवति — आ.
[2] नात्र स्पर्शः — अ.
[3] ०काष्ठादिरिति — ॠ.
[4] न च शरीरस्य — ऊ, ऋ, ॠ.
[5] ०करणत्वम् — ॠ.
[6] शरीरस्य भोगसाधनत्वं मतङ्ग० विद्या० २६ तमे भोगपदार्थप्रकरणे वर्ण्यते।
[7] 'च' इत्यस्यानन्तरं 'सर्वज्ञत्वस्य' इत्यधिकम् — ऊ, ऋ, ॠ.
[8] ०चेतनात्मकत्वात् — ऊ, ऋ, ॠ.
[9] सर्वज्ञत्वेन विरोध एव — ऐ.
[10] सहादृष्टम् — ऐ.
[11] तदयुक्तमेव ह्यनु० — ऋ.
[12] सहस्रे वेदाख्योऽर्थे... — अ; सहसा वेतालोत्थापन० — ऊ, ऋ, ॠ; सहस्रवेदाख्योत्थापन० — ऌ, ऐ.
[13] तत्पुरुषत्वात् — ऐ.
[14] भूयो दृष्टातत्पुत्रवत् — ऊ, ऋ; भूयो दृष्टादृष्टातत्पुत्रवत् — ॠ.
[15] ०वस्काराणा० — अ, आ, ए, ऐ.
[16] ०मनुमानप्राप्तेरिति — ऊ, ऋ, ॠ.
[17] ०मात्रमिति — अ.
[18] इतिशब्दो नास्ति — आ, ई, उ, ए.
[19] ०भावासिद्धिः — आ.
[20] 'तु' इत्यत्र स्यादिति दृश्यते — अ, आ, ई, उ, ॠ. ऌ. ए, ऐ.
[21] तत्स्थानत एव — आ, ई, उ.
[22] मतङ्ग० विद्या० ४.५३ पू० वृत्तौ.
[23] यथाभूता — ऊ, ऋ, ॠ.
[24] 'आदानभावकालयोः' इत्येतन्नास्ति — अ; 'आदान' इत्यत्र दानेति दृश्यते — आ.
[25] ०भवकालयोः — ई, ऊ, ऌ, ऐ; ०भवकालः — ऊ, ऋ, ॠ, ए.
[26] कार्यकारणभावेन — अ; कार्यकारणाभावेन आ, ऊ, ऌ, ए.
[27] संवित्त्याभावात् — आ, ऐ; संवित्त्यभावः — ऊ, ऋ, ॠ.
[28] बन्धकार्य० — अ.
[29] ०करणे० — अ, आ, ई, उ, ऊ, ऌ, ए, ऐ.
[30] ०ऽन्यतश्च — ॠ.
[31] लोके — ऊ, ऋ, ॠ.
[32] तस्मिन्नात्र — अ; तस्मिंस्तत्र — ए.
[33] उपलभ्यते — अ.
[34] ०स्वभावसिद्धेत्यर्थः — अ, ऌ; ०स्वभावासिद्धेरित्यर्थः — ऐ.
[35] तदेव — आ, ई, उ, ऌ.
[36] ०सिद्धविशिष्टस्येव — ऊ, ऋ, ॠ.

ततो विचाराय प्रश्नः — 'तत. स मुनिशार्दूल' इत्यादि ।

> ततः स मुनिशार्दूलः[1] [2]पृष्टवान्परमेश्वरम् ।
> श्रोत्रादीनि प्रमाणानि [3]प्रमेयोऽर्थश्च पञ्चधा ॥४॥
> [4]एतावान्व्यवहारोऽस्मिन्सुप्रतीतो [5]जगत्पते ।
> अनुमानागमाख्ये [6]च [7]तत्पूर्वे व्यवहर्तृषु ॥५॥
> एभ्योऽतिरिक्तं[8] यद्वस्तु तत्कथं साध्यते विभो ।

[9]अत्र [10]च पतिपदार्थसिद्धौ [11]प्रतिपक्षिणः सांख्यसौगत[12]क्षपणकलोकायतिकमीमांसकाः । तत्र च पूर्वेषां पुंपाशेश्वरप्रकरण एव प्रतिक्षेपपूर्वं[13] तत्सिद्धिं[14] वक्ष्यतीत्यत्र मीमांसकदृष्ट्यैव[15] तावद् वेदार्थप्रवणत्वान्मतङ्गमुनेः प्रश्नः ।

ते ह्येवमाहुः — पत्युरीश्वराख्यस्यात्र पशुपदार्थव्यतिरेकेणोक्तत्वात्, न तावत् स्वसंवेदनप्रत्यक्षेण [16]प्रमातृपुरुषवत् सिद्धिः संभवति । न [17]ह्यात्मानः स्वसंवेदनमात्राः संकीर्त्यन्ते । तदानीं [18]ह्यैकात्म्यमेवेति केन किं [19]साध्येत । ततश्चेन्द्रियादे[20]रिवैन्द्रियकद्रव्यस्य[21] प्रत्यक्षहेतुत्वेन, [22]सामान्याद्यतीन्द्रियकद्रव्यस्येव[23] प्रत्यक्षप्रमेयतया, [24]अथानुमानेन, आगमाद्वा । प्रमाणान्तरस्य भवद्भिरनभ्युपगमात् । तत्र **श्रोत्रादीनीति** आदिग्रहणात् त्वक्चक्षुर्जिह्वानासिकाख्यानि करणानि । बहुवचनात् कार्यं शरीराख्यमालोकादि चेति । एतानि [25]दृष्टान्येव कार्यान्यथानुपपत्तिसिद्धानि च प्रमातुः [26]प्रमाजनकानि, प्रत्यक्षप्रमाणहेतुत्वात्प्रमाणशब्देनात्र प्रोक्तानीति [27]कुतोऽत्यन्तासिद्ध[28]सामर्थ्यस्येश्वरस्याप्यत्र [29]हेतुत्वसिद्धिः । तदुक्तम्[30] — "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म [31]तत् प्रत्यक्षम्" इति ।

---

[1] ०शार्दूरः — ऊ, ऋ, ॠ.

[2] दृष्टवान् — ओ.

[3] प्रमेयार्थश्च — ओ.

[4] एतावद्व्यवहारो — मु, उ; एतावद्व्यवहारे — ऊ; एतावान् व्यवहारे — ओ.

[5] जगत्प्रभो — ओ.

[6] तु — ऊ, ऋ, ॠ.

[7] तत्पूर्वव्यव० — मु, उ; तत्पूर्वेऽप्यप० — ओ.

[8] ०रिक्तो — ॠ.

[9] तत्र — अ, आ, ई, उ, ॡ, ए, ऐ.

[10] चशब्दो नास्ति — ऐ.

[11] प्रतिपक्षः — ऊ, ऋ, ॠ; प्रतिक्षिप्याः — ऐ.

[12] क्षपणका लोका० — ऐ.

[13] प्रतिक्षेपात् — अ.

[14] तत्सिद्धं — आ, ई, उ, ऊ, ऋ, ॠ.

[15] ०दृष्ट्येव — ऊ, ऋ, ॠ.

[16] प्रतिपुरुषवत् — अ.

[17] ह्यात्मनः — अ, आ, ऐ; ह्यात्मनां — ऊ, ऋ, ॠ.

[18] ह्येकात्म्य० — अ.

[19] साध्यते — ऋ; बाध्येत — ए.

[20] ०रिवेन्द्रियक० — ए.

[21] 'द्रव्यस्य' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ऋ, ॠ, ॡ, ए.

[22] सामान्याद्यतीन्द्रियैक० — अ; सामान्याद्यदिवैन्द्रियक० — आ, ई, उ, ॡ, ए; सा वाच्या यदि वेन्द्रियक० — ऊ, ऋ, ॠ; सामान्यमित्यादिवैन्द्रचक० — ऐ.

[23] ०द्रव्यस्यैव — आ, ई, उ, ए, ऐ; 'द्रव्यस्येव' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[24] वानुमानेन — ऊ, ऋ, ॠ.

[25] द्रष्टव्यान्येव — अ, आ, ई, उ, ॡ, ए.

[26] प्रमाजनकप्रत्यक्ष० — अ, आ, ई, उ, ॡ, ए, ऐ.

[27] कृत्वात्यन्ता० — अ, आ, ई, उ, ॡ, ए, ऐ.

[28] ०साध्यस्येश्वर० — अ, आ, ई, उ, ॡ, ए, ऐ.

[29] हेतुत्वासिद्धिः — अ, आ, ई, उ, ॡ, ए, ऐ.

[30] पू. मी. सू. १. १. ४.

[31] 'तत्' इत्येतन्नास्ति — अ.

नापि द्वितीयः पक्षः। यतः प्रमातुः, तेनेन्द्रियादिजनितेन प्रमाणेन [1]**प्रमेयोऽर्थो** [2]द्रव्याद्यात्मकः शब्दस्पर्शरूपरसगन्धात्मकैः पञ्चभिरेव प्रकारैः [3]सिद्धः। सामान्यस्य रूपाद्यात्मनैव मीमांसकैरभ्युपगमात्। [4]अवधारयति — **एतावान्** प्रत्यक्षाद् **व्यवहारोऽस्मिन्** जगति प्रतीतः। तच्चेश्वरस्य ज्ञानक्रियारूपत्वेनैव [5]पूर्वमुक्तत्वाद्रूपाद्यसंभवतो नेन्द्रियप्रत्यक्षविषयता। तच्छरीरस्य प्रत्यक्षत्वेऽपीश्वरेतरत्वयोरसिद्धेः। यदाहुः[6] —

"न च कैश्चिदसौ [7]ज्ञातुं कदाचिदपि शक्यते।
स्वरूपेणोपलब्धेऽपि[8] स्रष्टृत्वं[9] नावगम्यते॥
न च तद्वचनेनैषा प्रतिपत्तिः सुनिश्चिता[10]।
[11]असृष्ट्वापि ह्यसौ ब्रूयादात्मैश्वर्यप्रसाधनात्॥" इति।

नापि "कार्यत्वाज्जगतो घटादेरिवावश्यं कर्त्रा भवितव्यम्[12]" इत्यनुमानेन, "[13]द्यावापृथिवी जनयन्[14]देव एकः" [15]इत्याद्यागमेन [16]चेश्वरसिद्धिः। [17]यतः **अनुमानागमाख्ये** पुनर्यथाप्रमाणे **तत्पूर्वे** इति प्रत्यक्षपूर्वे। ततः [18]प्रत्यक्षेणासिद्धो योऽर्थ ईश्वराख्यस्तस्य कुतस्ताभ्यां सिद्धिः। कथमेतयोः प्रत्यक्ष[19]पूर्वकत्वम्। यतो [20]**व्यवहर्तृषु** गृहीतसंबन्धेषु [21]पुरुषेषु [22]एते प्रमामुत्पादयन्ती[23] [24]प्रमाणे सिद्धे। नागृहीतसंबन्धेषु। न च व्यवहर्तृषु जगतः कार्यतया संबन्धः [25]प्रत्यक्षेण सिद्धः। अपि तु नित्यत्वेनैव। यदाहुः[26] — "न कदाचिदनीदृशं जगत्" इति। अतो नासिद्धादस्माद्धेतो-[27]र्जगतः कर्तुरीश्वरस्यानुमानं[28] युक्तमित्यर्थः[29]।

---

[1] प्रमेयार्थो — अ, आ, ई, उ, ऊ, लृ, ए, ऐ.
[2] द्रव्याद्यात्मकशब्द० — अ, आ, ई, उ, ए, ऐ; द्रव्यात्मकशब्द० — ऊ, लृ; द्रव्यात्मकः शब्द० ऋ, ॠ.
[3] सिद्धसामान्यस्य — अ, ऐ; 'सिद्धः' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[4] 'अवधारयति' इत्यारभ्य 'असिद्धेः' इत्यन्तं न दृश्यते — अ, आ, ई, उ, लृ, ए, ऐ.
[5] मतङ्ग० विद्या० ३. १-३ वृत्तौ 'स्वशक्तिकिरणात्कम्' इत्यस्य विवरणे.
[6] श्लोकवा० संबन्धाक्षेपपरि० ५७ उ०, ५८ पू०, ६०.
[7] ज्ञातः — ऐ.
[8] ०लब्धोऽपि — अ, आ, ई, उ, लृ, ए, ऐ.
[9] सृष्टत्वं — अ, ए.
[10] ०नेष्टा प्रतिपत्तिसुनिश्चिताः — ऐ; नैषां प्रतिपत्तिः सुनिश्चिता — श्लोकवार्तिकपाठः।
[11] असृष्टचापि — ऊ, ऋ, ॠ.
[12] भाव्यम् — लृ.
[13] नारायणोपनिषत् — ३.
[14] द्यावापृथिव्यौ जनयन् — अ; द्यावाभूमी एको देवो जनयन् — आ, ई, उ, लृ; द्यावाभूमी जनयन् — ए.
[15] इत्यागमेन — अ, ए, ऐ.
[16] वेश्वरसिद्धिः — ऐ.
[17] 'यतः' इत्यारभ्य 'सिद्धिः' इत्यन्तं नास्ति — अ, आ, ई, उ, लृ, ए, ऐ.
[18] प्रत्यक्षेण सिद्ध. — ऊ.
[19] पूर्वकत्वात्। यतो — अ, आ, ई, उ, लृ, ए, ऐ; पूर्वकं यतो — ऊ, ऋ, ॠ.
[20] व्यवहरत्येषु — ॠ.
[21] 'पुरुषेषु' इत्येतन्नास्ति — अ.
[22] एतेषु — ऊ, ऋ, ॠ.
[23] प्रमाणमुत्पादयन्ति — अ, आ, ई, उ, लृ, ए; प्रमामुत्पादयती — ऊ, ऋ, ॠ; प्रमाणमुत्पादयति — ऐ.
[24] अत्र नशब्दोऽधिकः — ऐ.
[25] प्रत्यक्षेणैव सिद्धः — ऊ, ऋ, ॠ.
[26] आकरो न लभ्यते।
[27] ०र्जगत्कर्तुरी० — ऋ, ॠ.
[28] ०रीश्वरत्वस्यानुमानं — ऐ.
[29] कृतमित्यर्थः — अ, आ, ई, उ, लृ, ए, ऐ.

नापि [1]संनिवेशवत्त्वादिनानुमा[2]नान्तरेणास्य सिद्धिर्भवतीति वाच्यम्। पूर्ववत्प्रत्यक्षनिराकृतत्वेन तस्याप्यसंभवात्।

एवमागमोऽपि शब्दात्मकत्वाद् घटादिशब्दवत्संबन्धग्रहणसापेक्ष एव स्वार्थे [3]प्रमामुत्पादयति। न चाप्रत्यक्षीकृते संबन्धः संभवति। न च प्रत्यक्षेण ईश्वरलक्षणोऽर्थः कदाचिदप्यस्मदादीनां [4]सिद्ध इत्युक्तम्। [5]ततस्तत्र संबन्ध[6]ग्रहणासंभवात्, नागमस्यापि प्रामाण्यमिति[7]। कथं तर्हि "[8]द्यावापृथिवी जनयन्देव एकः" इत्यादि[9]श्रुतयः। अत [10]एवैता [11]विध्यर्थवादरूपाः। यदाहुः[12] —

[13]"अर्थवादकृतश्चैष जनानां मतिविभ्रमः।
[14]पौर्वापर्यापरा[15]मृष्टः शब्दोऽन्यां कुरुते मतिम्॥
उपाख्यानादिरूपेण वृत्तिर्वेदवदेव हि[16]।
धर्मादौ भारतादीनां भ्रान्ति[17]स्तेभ्यो यतो भवेत्॥" इति।

[18]किं च ईश्वरकृतो, [19]नित्यो वागमोऽत्र ईश्वरसिद्धेः[20] प्रमाणं स्यात्। तत्रेश्वर[21]कृतत्वेऽन्योन्यापेक्षादोषः। नित्यत्वे वेदवज्जगतोऽपि [22]नित्यत्वोक्तेः, नेश्वरव्यापार[23]पूर्वकत्वमिति[24] "अग्निना सिञ्चेत्" [25]इतिवदस्याः [26]श्रुतेर्बाधः। यदाहुः[27] —

"एवं वेदोऽपि [28]तत्पूर्वस्तत्सद्भावादिबोधने।
साशङ्को न प्रमाणं स्यान्नित्यस्य व्यापृतिः[29] कुतः"॥

---

[1] संनिवेशत्वादिना० — ॠ.
[2] ०नान्तरे नास्य सिद्धिर्भविष्यतीति — ऊ, ॠ, ॠ.
[3] प्रमाणमु० — अ, आ, ई, उ, ऊ, ॡ, ए, ऐ.
[4] सिद्धमित्युक्तम् — ऊ.
[5] अत्र संबन्ध० — ऊ, ॠ, ॠ; तदत्र संबन्ध० — ऐ.
[6] ग्रहणसंभवात् —ई, उ, ए.
[7] ०ण्यादिति — ॠ.
[8] नारायणोपनिषत् — ३.
[9] द्यावाभूमी एको देवो जनयतीत्यादि — आ, ई, उ; द्यावापृथ्वी जनयन् देव इत्याद्याः — ऊ, ॠ, ॠ; द्यावाभूमी एको देवो जनयन्नित्यादि — ॡ; द्यावाभूमी जनयन् देव एक इत्याद्याः — ए.
[10] एव देवता — ऊ, ॠ, ॠ.
[11] सिद्ध्यर्थं वादरूपाः—अ; सिद्ध्यर्थवादरूपाः—ऐ
[12] श्लोकवा० संबन्धाक्षेपपरि० ६३. ६४
[13] स्तुतिवाक्यकृतश्चैष० — श्लोकवार्तिकपाठः।
[14] पौर्वापर्यपरा०—ई, उ; पौर्वपर्यापरा०—ऊ, ॠ, ॠ.
[15] ०मृष्टाः शब्दो — अ, ॠ, ऐ; ०मृष्टशब्दो — आ, ए.
[16] ०विदेव हि — आ.
[17] ०स्तेभ्यो भवेत् इति — अ, आ, ई, उ, ॡ, ए, ऐ. ०स्तेभ्यो यतो भवेदित्यादि — ऊ; ०स्तेभ्योऽप्यतो भवेदित्यादि — ॠ, ॠ; स्तेभ्योप्यतो भवेत् — श्लोकवार्तिकपाठः।
[18] किं चैश्वर० — ऊ, ॠ, ॠ.
[19] 'नित्यो' इत्यनन्तरम् 'अनित्यो' इत्यधिकम् — अ.
[20] ०सिद्धौ — ऊ, ॠ.
[21] ०कृतत्वेन अन्यापेक्षा — ए; ०कृतत्वेऽन्योन्यापेक्षो — ऐ.
[22] नित्यत्वोक्ते ईश्वर० — ऊ, ॠ; नित्यत्वोर्थे ईश्वर० — ॠ; नित्यत्वेनोक्तं नैश्वर० — ऐ.
[23] पूर्वत्व० — ऊ, ॠ, ॠ.
[24] इतिशब्दो नास्ति — अ.
[25] इत्यादिवदस्याः — ऊ, ॠ, ॠ.
[26] श्रुतेर्भावः — अ, आ, ॡ, ए, ऐ.
[27] श्लोकवा० संबन्धाक्षेपपरि० ६१.
[28] तत्पूर्वं तत्सद्भा० — अ, ऐ.
[29] व्यावृतिः — अ, आ, ई, उ, ऐ.

ततश्च **एभ्यः** प्रत्यक्षानुमानागमेभ्यः [1]**अतिरिक्तं** तेषामगोचरं[2] **यद्वस्तु** ईश्वराख्यं **तत्कथं** गम्यते। नैवेत्यर्थः। तदुक्तम्[3] —

"प्रमाणपञ्चकं यत्र[4] वस्तु[5]रूपे न जायते।
[6]वस्तुसत्तावबोधार्थं [7]तत्राभावप्रमाणता॥" इति॥

अत्रोत्तरम् — वाक्यार्ककिरणैरित्यादि।

**वाक्यार्ककिरणैस्तीव्रैः स्फुरद्भिरतिभासुरैः[8] ॥६॥**
**विभुर्मार्जितवानाशु मुनेर्भ्रान्त्युत्थितं तमः।**

[9]वाक्यमेवैतदत्रोत्तरभूतं प्रकरणम् [10]अर्कः, तस्य [11]किरणा विचित्रार्थप्रकाशनशक्तयः[12], तैः, मुनेः कुतर्क[13]दर्शन[14]**भ्रान्त्युत्थितं** भगवानज्ञानं **मार्जितवान्** ॥

कथमित्युच्यते — सर्व एवेत्यादि।

**सर्व एव पदार्थाः स्युः सत्तामात्रोपलक्षिताः[15] ॥७॥**

प्रौढवादितया चेदमुच्यते। न केवलं युष्मन्निराकृतः पतिपदार्थ एव [16]तावत्, **सर्वे एव** [17]अमी पूर्वोद्दिष्टाः शक्त्यादिपदार्थाः [18]प्रमाणाभावेऽपि [19]सत्तैव **सत्तामात्रं** [20]तेनैव **उपलक्षिताः**। सत्तामात्रेण स्युरिति संभाव्यन्ते [21]भ्रष्टाम्नायभूम्यन्तर्गतनिधानवत्। न तु [22]प्रमाणाभावेनासन्त एवाभ्युपगन्तुं युक्ता इत्यर्थः। [23]तस्य व्यापकत्वाद् व्यापको हि [24]निवर्तमानो व्याप्यं निवर्तयति। [25]तथास्वभावत्त्वाद्वह्निरिव [26]धूमम्। नाव्यापको घटादिः, अनवस्थाप्रसङ्गात्। न च प्रमेय[27]सत्ता या, सा अस्मदादिप्रमाण[28]सत्तया

---

[1] अतीव रिक्तं हीनं तेषा० — ऊ, ऋ, ॠ.
[2] ०गोचरे — अ; ०गोचरो — ऊ, ऋ ॠ.
[3] श्लोकवा० अभाववादे १.
[4] यत्रेत्यस्यानन्तरं 'यद्' इत्यधिकम् — अ,
[5] ०रूपेण जायते — अ, आ, ई, उ,ऊ, ऋ, ॠ, ए, ऐ.
[6] वस्तुतत्त्वाव० — अ; वस्तुसद्भाव० — ऋ; वस्तुसंज्ञाव० — ॡ.
[7] तत्राभावे प्र० — ऐ.
[8] भास्वरैः — ओ.
[9] वाक्यमेवेदमत्रो० — ऊ, ॠ.
[10] अर्कस्य किरणा — ॡ.
[11] किरणं — अ.
[12] प्रकाशनाच्छक्तयः — ए.
[13] 'दर्शन' इत्येतन्नास्ति — ऊ, ऋ.
[14] ०भ्रान्त्यर्थितं — ऐ.
[15] ०लक्षणाः — ऊ, ऋ, ॠ.
[16] यावत् — आ, ई, उ, ऊ, ऋ, ॠ, ॡ, ए, ऐ.
[17] 'अमी' इत्येतन्नास्ति — ऐ.
[18] प्रमाणभावेऽपि — अ, आ, ॡ.
[19] सत्ता सत्तामात्रं — ऊ.
[20] तेनोपल० — आ, ऊ, ऋ, ॠ.
[21] दुष्टाम्नाय — ऐ.
[22] प्रमाणभावे० — अ.
[23] तस्माद्व्या० — अ, आ, ई, उ, ॡ, ए, ऐ.
[24] निवर्तनमव्याप्यं — अ.
[25] यथास्व० — ऐ.
[26] 'धूमम्' इत्यस्य स्थाने 'तासाम्' इति दृश्यते — ऊ, ऋ, ॠ.
[27] ०सत्तायाः सास्मदादि० — अ, आ, ई, उ; ०सत्तास्मदादि० — ऊ, ऋ, ॠ, ऐ.
[28] ०सत्ताया व्याप्ता — अ; ०संबन्धव्याप्ता — ऊ; ०संबन्धव्याप्या — ऋ, ॠ.

व्याप्ता, सर्वस्य सर्वज्ञत्व[1]प्रसङ्गादिति, कुतस्तदभावात् [2]पदार्थाभावसिद्धिरिति ॥७॥

[3]यद्येवं [4]भूम्यन्तर्गतनिधानवदेव पदार्थानां सत्ताविषयसंशयो[5] युक्तो न निश्चयः । न[6]। यतः —'स्वधर्मैरवगम्यन्त' इत्यादि ।

**स्वधर्मैरवगम्यन्ते [7]स्वागमोक्तिनिदर्शनात् ।**

[8]स्वधर्माश्रितो गुणः, [9]कार्यं, करणं च [10]साध्यधर्माश्रितत्वाद्धर्म एवोक्तः । यदनन्तरं वक्ष्यति[11]— "धर्मेण साध्यते धर्मी [12]क्वचित्कार्येण कारणम् ।" इत्यादि ।

तैस्त्रिभिः **धर्मैरवगम्यन्ते** [13]यतः । ततो [14]न सत्ताविषयः [15]पदार्थेषु संशयः । येऽपि अनुमानत्रयान्नावगम्यन्ते, [16]तेऽपि **स्वागमस्यास्य** सर्वज्ञ[17]प्रयुक्तत्वतः सर्वागमेभ्यः प्रकृष्टतरत्वेन [18]वक्ष्यमाणस्य **उक्तिः** प्रतिपादनं [19]तस्य **निदर्शनाद्** गम्यन्ते इति सत्त्वेन असन्दिग्धा एव ।

तत्र तस्य कथं [20]सिद्धिरित्युच्यते — 'धूमादग्नेर्यथा' इत्यादि ।

**[21]धूमादग्नेर्यथा पत्युः शक्तयो विद्धि साधनम् ॥८॥**

धूमो हि [22]कार्यत्वात् [23]स्वकारकमनुमापयति । शक्तयश्च [24]कारकं, न [25]द्रव्यं, तत्सत्तामात्रेण[26] [27]कार्योत्पत्तिप्रसङ्गात् । विशेषतः सत्कार्यवादिना[28] कारणात्मनि कार्यस्य शक्तिरूपत्वेनैवाभ्युपगमाच्चेति । [29]**धूमात्** स्वकारकशक्तयो[30]ऽनुमिता **यथा** तच्छक्तिमतोऽग्नेः **साधनमिति** । वक्ष्यति **योगपादे**[31]—

---

[1] प्रसङ्गादि कुतः — ऋ.
[2] पदार्थभावसिद्धिः — अ; पदार्थसिद्धिः — ऊ, ऋ, ॠ
[3] यदेवं — ऊ, ऋ.
[4] भूम्यन्तर्भूत० — अ.
[5] ०विषयः संशयो — अ, आ, ई, उ, ऊ, ऋ, ॠ, ॡ, ए.
[6] 'न' इत्येतन्नास्ति — अ, ॡ, ए.
[7] स्वाम्नायोक्तनि० — ऊ, ऋ, ॠ; स्वाम्नायोक्ति० — ओ.
[8] स्वधर्म आश्रितो — ॡ, ए, ऐ.
[9] कार्यं कारणं च — अ, ऊ, ऋ, ॠ, ॡ, ए, ऐ; कार्यकारणं च — आ, ई, उ.
[10] सार्धं धर्मा० — अ.
[11] मतङ्ग० विद्या० ३. ९ पू०
[12] 'क्वचित्कार्येण कारणम्' इत्येतन्नास्ति — अ, आ, ई, उ, ॡ, ए, ऐ.
[13] 'यतः' इत्यारभ्य 'अवगम्यन्ते' इत्यन्तं नास्ति — अ, आ, ई, उ, ॡ, ए, ऐ.
[14] वसन्तादिविषयः — ऊ.
[15] पदार्थेष्वसंशयः — ऋ, ॠ.
[16] अन्येऽपि — अ, आ, ई, उ, ॡ, ए, ऐ.
[17] ०प्रयुक्ततः — ॡ; ०प्रयुक्ततत्त्वतः — ऐ.
[18] मतङ्ग० विद्या० ३. १८ — २० पू० वृत्तौ.
[19] तस्यागमदर्शनाद् — ऊ, ॠ.
[20] सिद्धिरुच्यते — अ, ऐ.
[21] धूमा अग्ने० — मु, उ, ओ.
[22] कार्यार्थात् — ॡ.
[23] स्वकारणमनु० — ऐ.
[24] कारके — ऐ.
[25] द्रष्टव्यं — आ, ऊ, ऋ, ॠ.
[26] ०मन्त्रेण — अ.
[27] कार्योक्तिः प्र० — ऐ.
[28] ०वादिनां — अ, आ, ई, उ, ॡ, ए, ऐ.
[29] धूमाः — अ, आ, ई, उ, ॡ, ए, ऐ.
[30] -ऽन्तरितस्य यथा — अ, आ, ई, उ, ॡ, ए, ऐ.
[31] मतङ्ग० योग० तत्त्वसाधनपटले श्लो० ६.

"गुणा गुणिनमाश्रित्य विचेष्टन्ते स्वके स्वके।
[1]विषये न निराधाराः" इति।

तथा **पत्युः शक्तयः** एव [2]वक्ष्यमाणप्रमाणसिद्धाः[3] [4]**साधनमिति** ॥८॥

पदार्थान्तराणि तु यथाग्रे साध्यानि तथा[5] प्रसङ्गादुच्यन्ते — 'धर्मेण साध्यत' इत्यादि।

**धर्मेण साध्यते [6]धर्मी क्वचित्कार्येण कारणम्।**
**कारणेन क्वचित्कार्यं क्वचिदाम्नायदर्शनात् ॥९॥**

यथा हि संतमसे विशिष्टा[7]द्रसादेर्धर्माच्छाल्यन्नयवान्नादि[8]धर्मी, गन्धादेः कर्पूरकस्तूरिकादिश्च[9] साध्यते। तथैवात्र[10] क्वचित् पशुपदार्थप्रकरणादौ ज्ञानक्रियालक्षणेन **धर्मेण** पशुपदार्थलक्षणो **धर्मी साध्यते** इति तत्रैव दर्शयिष्यामः[11]। [12]त्रिपर्वपदार्थे **च** इच्छासंरम्भबोधात्मकैस्त्रिभिर्धर्मैः मनोऽहं-कारबुद्धिलक्षणान्तःकरणरूपस्य [13]धर्मित्रयस्य सिद्धिः। तदिदं धर्मधर्मिस्वभावप्रतिबन्धमूलं सामान्यतो [14]दृष्टमनुमानम् [15]इत्युच्यत इत्युदाहरिष्यति[16] **योगपादे**[17] — "सामान्यमपरं मतम्[18]" इति। एतेनैव तन्मात्रादि[19]कलान्तानां भुवनधर्मित्वसिद्धिः; [20]व्यक्तत्वे सति तत्त्वत्वान्महाभूतवदिति दर्शयिष्यामः[21]।

**'क्वचित् कार्येण कारणम्'** इति, इदं शेषवद[22]नुमानमित्युच्यत इत्युदाहरिष्यति **योगपादे**[23] —

"[24]स्थूलावर्तशकृत्पुञ्जभूयिष्ठं[25] मदगन्धि च[26]।
स्तम्भशय्यादिभि[27]श्चिह्नैस्तत्रासीन्मत्तवारणः ॥
अतीतोऽप्यनुमानेन साध्यः शेषवता बुधैः।" इति।

---

[1] विषयेण निरा० — अ, आ, ई, उ, ए.
[2] मतङ्ग० विद्या० ३. १२, १३ पू० वृत्तौ.
[3] ०सिद्धः — ऐ.
[4] 'साधनमिति' इत्यस्य स्थाने 'साधनः' इति दृश्यते — अ.
[5] तथापि —ऐ.
[6] धर्मे — ऋ.
[7] ०द्रसादेर्धर्म्याच्छाल्यन्न० — ऊ, ऋ; ०द्रसा-देर्यद्यच्छाल्यन्न० — ॠ.
[8] धर्मि — अ, ऐ.
[9] ०कादिभिश्च — ई, उ.
[10] 'अत्र' इत्येतन्नास्ति — अ, आ, ई, उ, ऌ, ए, ऐ.
[11] मतङ्ग० विद्या० ६. १४, १५ वृत्तौ, ३५ — ३७ पू० वृत्तौ च।
[12] त्रिपरपदार्थश्चेच्छा० — ऊ, ऋ ॠ.
[13] धर्मत्रयस्य सिद्धिः — ऋ; धर्मत्रयसिद्धिः — ॠ; सर्वत्रयस्य सिद्धिः — ए.
[14] दृष्टानुमानम् — अ, आ, ई, उ, ऌ, ए.
[15] इतिशब्दो नास्ति — ऊ, ऋ, ॠ, ऐ.
[16] इति वक्ष्यति — ऊ, ऋ, ॠ.
[17] मतङ्ग० योग० तत्त्वसाधनपटले श्लो० १४ पू०.
[18] सामान्यं परमं पदं मतम् — अ; सामान्यं परमं मतम् — आ, ऌ, ए, ऐ; सामान्यं पर-मतम् — ई, उ; सामान्यमपरं स्मृतम् — मतङ्ग० योगपादपाठः।
[19] कालान्तानां — आ, ए.
[20] वक्तृत्वे धर्मित्वा तत्त्वत्वा० — ऊ; धर्मित्वे सति तत्त्वत्वा० — ऋ, ॠ.
[21] मतङ्ग० योग० तत्त्वसाधनपटले भवेदिति भाति।
[22] ०नुमानमुच्यत० — ऊ, ऋ, ॠ.
[23] मतङ्ग० योग० तत्त्वसाधनपटले श्लो० १४ उ०, १५.
[24] स्थूलाद्रक्तशकृ० —ऊ, ऋ, ॠ.
[25] ०भूपृष्ठं — आ, ई, उ, ऊ, ऋ, ऌ; भूपृष्ठ० — ॠ, ए.
[26] ०गन्धितम् — ऊ, ऋ, ॠ.
[27] ०श्चिह्नैरत्रासी० — ऊ, ऋ, ॠ.

[1]अनेन चेह क्वचिदिति त्रिपर्वपदार्थप्रकरणे[2] सर्वमेव तन्मात्रादिमायान्तं साध्यत इति वक्ष्यामः[3]। '**कारणेन क्वचित्कार्यम्**' इति, इदं [4]तु पूर्ववदनु[5]मानमित्युच्यत इत्युदाहरिष्यति **योगपादे**[6] —

"कृष्णाञ्जननिभैरुच्चैः साटोपैर्निबिडैर्घनैः[7]।
[8]अविघ्नैर्विपुलैः [9]स्निग्धैस्तडिन्निर्घोषसंकुलैः॥
प्रावृट्समयसंप्राप्तैर्दृष्टैर्वृष्टिः प्रमीयते।
एवं पूर्ववता साध्या ह्यनुमानेन वृष्टयः[10]॥ इति।

इहाप्यनेन[11] क्वचिदिति[12] भोगपदार्थप्रकरणादौ परिदृश्यमानात् तपस्वितस्करयोः सुकृत[13]दुष्कृतानुष्ठानादागम[14]सिद्धकारणभावादामुष्मिको[15] भोगपदार्थः सुखात्मको [16]दुःखरूपो वानुमीयते। उपाय[17]पदार्थानुष्ठानाच्च सिद्धिमुक्तिलक्षणं फलमिति।

यत्र तु त्रिविधस्यापि प्रतिबन्ध[18]मूलस्यास्यानुमानस्यापगमः[19] क्वचिद्विषये, तत्राम्नायस्य दर्शनादागमसिद्धेनानुमानेन[20] साध्यते। यथा मन्त्रमन्त्रेश्वरादीनां [21]शरीरादीति दर्शयिष्यामः[22] ॥९॥

ननु धर्मः शौक्ल्यादिः [23]हिममक्कोलादावनेकत्र वर्तमानो [24]नियतधर्मिणं व्यभिचरतीति कथं ततो विशिष्टधर्मिसिद्धिः। तथा कार्यमपि [25]वह्नेरवह्नेश्च चक्रमूर्धादेर्धूमादि दृश्यते। [26]एवं [27]कारणमपि [28]घनादि कार्यं वृष्ट्यादिकं कदाचित्करोति, कदाचिन्नेत्यनैकान्तिकत्वात्, कथं ताभ्यां कारणकार्ये साधयितुं [29]शक्येते। अत्रोच्यते — एवमित्यादि।

**एवमन्योन्यसाधर्म्यवैधर्म्येण विनिश्चयात्।**

---

1 अनेन नेह क्वचित्त्रिपर्व० — ऊ, ऋ; अनेनेह क्वचित्त्रिपर्व० — ॠ.
2 ०प्रकरणं — ॠ.
3 मतङ्ग० विद्या० ८. १३ — १८ पू० वृत्तौ.
4 तुशब्दो नास्ति — ऊ, ऋ, ॠ.
5 ०मानमुच्यते — ऊ, ऋ, ॠ.
6 मतङ्ग० योग० तत्त्वसाधनपटले श्लो० १६, १७ पू०, १९ पू०.
7 ०निबिडैश्च वै — ऐ.
8 निर्विघ्नै० — ऊ, ऋ, ॠ, ऐ.
9 सिद्धैः — ऊ, ऋ, ॠ, ऐ.
10 वृट् सदा — ऊ, ऋ, ॠ.
11 ०प्यनेनैव — ए, ऐ.
12 इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
13 दुष्कृतादनुष्ठाना० — ए.
14 ०सिद्धिकारणाभावा० — अ; ०सिद्धकारणाभावा० — आ, लृ, ए, ऐ.
15 ०दामुत्रिको — ऊ, ऋ, ॠ, ऐ.
16 दुःखरूपश्चानुमीयते — ऊ, ऋ; दुःखरूपश्चानुमीयन्ते — ॠ.
17 ०पदार्थानामनु० — अ, लृ.
18 ०मूलस्यानुमान० — अ, आ, ई, उ, लृ, ए, ऐ.
19 ०स्याप्रगमः — ई, उ, ऊ, लृ, ए; ०स्य प्रगमः — ऐ.
20 ०सिद्धेन नानुमानेन — आ; ०सिद्धेनानुमानेन — ऐ.
21 शरीरादीनि दर्श० — अ, आ, ई, उ, लृ; शरीरादीन् दर्श० — ए; शरीरादि निदर्शयामः — ऐ.
22 मतङ्ग० विद्या० ७. १५ — ४० पू०
23 हिमकालादावनेकत्र — अ, आ, ई, उ, लृ, ए.
24 नियतधर्मिणां — अ; नियतं धर्मिणं — ऊ, ऋ, ॠ.
25 वह्नेश्चक्रमूर्धादेः — अ, आ, ई, उ, लृ, ऐ.
26 'एवं' इत्येतन्नास्ति — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
27 'कारणं' इत्येतन्नास्ति — अ.
28 मेघादि—ऊ, ऋ, ॠ; मेघघटनादि — ऐ.
29 शक्यते — आ, ई, उ; शक्य इति—ऊ, ऋ, ॠ; शक्यतेति —ऐ.

एवं स्वभावप्रतिबन्धे सत्यपि अन्यस्य हेतोः अन्यस्य च साध्यस्य यत् साधर्म्यं यत्रायं तत्रावश्यमयमिति स्थितीकृतं सादृश्यम्, वैधर्म्यं च [1]साध्याभावेन[2] साधनाभावात्मकम्[3], तयोर्यथाक्रमं [4]साधर्म्यवैधर्म्य[5]दृष्टान्तापेक्षो [6]यो निश्चयः साध्याविनाभावप्रतिपत्त्यात्मकः, तस्मात्कारणात्। अनेन धर्मादिना [7]हेतुना धर्म्यादित्रयं[8] साध्यत इति [9]प्रकृतम्।

अयमर्थः — न धर्ममात्रस्यास्माभिर्हेतुत्वमिष्यते। [10]अपि [11]तु अव्यभिचरित[12]विशिष्टधर्मिणः कस्यचिदेव [13]विशिष्टधर्मस्य, तथास्वभावत्वेन निश्चयात्। [14]न तु तस्य व्यभिचारः संभवति। यस्य तु व्यभिचारः पाण्डुत्वादेः, न तस्य हेतुत्वम्। तस्यापि [15]चाभ्यासतो [16]नियतधर्मिगतविशेषग्रहणेन[17] [18]व्यभिचाराभावाद्धेतुत्वम्[19]।

[20]एतदुक्तं [21]च — "[22]न सुष्ठु विवेचितो धर्मो धर्मिणं व्यभिचरति" इति। एवं कार्यमपि धूमादि अन्यदेव वह्न्यादिजन्यम्, अन्यदेव चक्रमूर्धादिजन्यमिति न सुष्ठु विवेचितं[23] कारणं व्यभिचरतीति। तथा कारणमपि मेघादि यदवश्यं कार्यजनकस्वभावं [24]न तद्ब्रह्मणापि प्रतिबद्धुं शक्यं, [25]छेदादिवद्वृक्षस्य [26]पर्णशोषादौ। यत्त्वजनकस्वभावं [27]न तदिन्द्रेणापि जनकं शक्यं कर्तुमिति न [28]सुष्ठु विवेचितं [29]कारणं कार्यं व्यभिचरतीति। [30]यदुक्तम्[31] —

"यदभावि न तद्भावि [32]यद्भावि न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते॥" इति।

---

[1] साध्यभावेन — अ.

[2] अत्र 'हेतुभावात्मनस्तु हेतुभावेन' इत्यधिकम् — ऊ; 'हेत्वभावात्मनस्तु हेत्वभावेन' इत्यधिकम् — ऋ; हेत्वभावात्मना तु हेत्वभावेन' इत्यधिकम् — ॠ.

[3] साधनभावात्मकतया — अ; साध्यभावात्मकं — ऊ, ऋ, ॠ; साधनात्मकं — ऐ.

[4] साध्यवैधर्म्य० — ऋ, ॠ; साधर्म्यदृष्टा० — ऐ.

[5] ०दृष्टान्तापेक्षा तेन विनाभाव० — अ.

[6] 'यो' इत्यारभ्य 'धर्मादिना' इत्यन्तं लुप्तम् ऊ, ऋ, ॠ कोशेषु।

[7] हेतुधर्मादित्रयं — अ.

[8] धर्म्यादित्रये — ऊ; धर्म्यादिषु ये — ऋ, ॠ; धर्म्यादित्रयः — ॡ.

[9] प्रकृतः — अ, ऊ, ऋ; प्रकृते — ॠ.

[10] 'अपि तु' इत्येतन्नास्ति — ऋ, ॠ.

[11] 'तु' इत्येतन्नास्ति — ऊ.

[12] ०विधर्मिणः — अ.

[13] विशिष्टधर्म्य यथास्वभाव० — अ; विशिष्टस्य धर्मस्य तथा० — ऊ, ऋ, ॠ.

[14] न च तस्य — ऊ, ऋ, ॠ.

[15] वाभ्यासतो — अ, ऊ, ऋ, ॠ, ॡ.

[16] नियतिधर्मि० — ऊ, ऋ, ॠ.

[17] ०ग्रहणे — ऊ, ऋ, ॠ.

[18] व्यभिचारी तद्धेतुत्वम् — अ.

[19] अत्र 'एव' इत्यधिकम् — ऊ, ऋ ॠ.

[20] तदुक्तं — ऊ, ऋ, ॠ, ए.

[21] चशब्दो नास्ति — ॠ.

[22] न सुविवेचितो — ऊ; न स्वविवेचितो — ऋ, ॠ.

[23] अत्र 'कार्यम्' इत्यधिकम् — अ, आ, ई, उ, ॡ, ए.

[24] 'न' इत्येतत् 'तद्ब्रह्मणापि' इत्यस्यानन्तर दृश्यते — ऊ, ऋ, ॠ.

[25] छेदादिवत् प्रत्यक्षस्य — अ, ॠ; छेदादीव वृक्षस्य — ऊ, ऋ; छेदादि वृक्षस्य — ॡ, ए.

[26] पूर्णशोषादौ — अ, ॠ; पर्णाशोषादौ — — आ, ई, उ, ऊ, ऋ, ॡ, ए, ऐ.

[27] तदिन्द्रियेणापि न जनकं — ऊ, ऋ, ॠ.

[28] सुखविरेचितं — ऊ, ऋ, ॠ.

[29] 'कारणं' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[30] तदुक्तं — ॠ.

[31] भर्तृहरिसुभाषितसंग्रहे ६६६.

[32] भाविचेन्न तदन्यथा — भर्तृ० सु० पाठः।

ननु मन्त्राणामप्रतिहतशक्तित्वेन वक्ष्यमाणत्वात् तैः जनकमपि अजनकम्, अजनकमपि जनकं कर्तुं संभाव्यत एवेति[१], अत्र व्यभिचारः। यदाहुः[२] —

"अर्थशक्तेरन्यथात्वं[३] मन्त्रैर्येनेह[४] दृश्यते।
[५]कारणानि [६]च नावश्यं कार्यवन्ति भवन्त्यतः॥" इति।

[७]सत्यमेवैतत्। अत एव [८]शान्तिकादिकर्मणां मन्त्रवादानां च सप्रयोजनता[९]। नान्यथा फल[१०]वादादेरप्युपपत्तिः। कथं तर्ह्यत्र कारणस्य मेघादेर्वृष्ट्यादिकार्यादावव्यभिचार उक्तः। [११]मन्त्रैरविघ्नितत्वे सतीति[१२] विशेषणात्। अत एवोदाहरणसूत्रे[१३] —

"कृष्णाञ्जननिभैरुच्चैः[१४] साटोपैर्निबिडैर्घनैः।
[१५]अविघ्नैः"

इति, हेतुविशेषणमुपात्तमिति [१६]न विरोधः।

अनेन चात्र [१७]हेतोः साधर्म्यवैधर्म्यनिश्चयाभिधानेन पक्षधर्मान्वय[१८]व्यतिरेकात्मकस्त्रि[१९]लक्षण एव हेतुः [२०]अबाधित[२१]विषयत्वासत्प्रति[२२]पक्षत्वाद्यन्यतमरूप इत्युक्तं भवति। [२३]तेषामर्थसिद्धत्वे[२४]नाभिधानानुपयोगात्। अत एवैतल्लक्षणरहिता असिद्धसंदिग्धपक्षधर्मा असिद्धसंदिग्धान्वयव्यतिरेका विपर्ययसिद्धान्वयव्यतिरेका वा असिद्धानैकान्तिकविरुद्धा [२५]हेत्वाभासा गम्यमानाः प्रमाणलक्षणेभ्यो भेदेन [२६]अवधार्या इति दर्शयितुं नात्र तथोपात्ताः। प्रोक्तं च [२७]श्रीमत्पौष्करे[२८] —

"प्रमाणलक्षणात्सिद्धिः प्रमाणानां प्रकीर्तिता।" इति।

[२९]तदियता प्रसङ्गतः सर्वपदार्थसाधकान्यत्रैव प्रमाणान्युपदर्श्य[३०] [३१]प्रकृतपतिपदार्थसिद्धौ प्रमाणमुच्यते — 'पत्युर्धर्माः' इत्यादि।

---

१ इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
२ आकरो नोपलभ्यते।
३ ०रन्यथात्वे — ऐ.
४ मन्त्रैर्येन हि — अ.
५ करणानि — आ.
६ न चावश्यं — ऊ, ऋ, ॠ.
७ सत्यमेवमेतत् — ऊ, ऋ, ॠ; सत्यमेतत् — ऐ.
८ शान्तिदीक्ष्यादि० — ऐ.
९ सप्रयोजनतया — अ, ए.
१० ०वेदादेरप्युपपत्तेः — ऊ, ऋ, ॠ.
११ मन्त्रैरहितत्वे — अ, ॡ; मन्त्रैरपिहतत्वे — आ, ए; मन्त्रैरविहितत्वे — ई, उ, ऐ.
१२ 'इति' इत्येतन्नास्ति — ई, उ.
१३ मतङ्ग० योग० तत्त्वसाधनपटले श्लो० १६.
१४ ०निभैरुग्रैः — ऋ, ॠ.
१५ निर्विघ्नैः — ऊ, ऋ, ॠ.
१६ अविरोधः — आ, ई, उ, ऊ, ऋ, ॠ, ॡ, ए ऐ.
१७ हेतौ — ऊ, ऋ, ॠ.
१८ व्यतिरेकात्मकत्रि० — अ, आ, ई, उ, ॡ, ए, ऐ.
१९ ०लक्षणविषय एव — आ.
२० नन्वबाधित० — ऊ; नत्वबाधित० — ऋ, ॠ.
२१ ०विषयत्वात्सत्प्रति० — अ, ऐ; विषयत्वसत्प्रति० — ऊ, ऋ, ॠ.
२२ ०पक्षत्वाद्यनन्तररूप — अ, ऊ, ऐ; ०पक्षत्वाद्यनन्तरूप — आ, ई, उ, ऋ, ॡ; ०पक्षत्वादनन्तरूप — ए.
२३ 'तेषां' इत्यारभ्य 'असिद्धानैकान्तिकविरुद्धाः' इत्यन्तं लुप्तम् — ऊ, ऋ, ॠ.
२४ ०नापिधानानुप० — अ.
२५ हेतुत्वाभासा — अ.
२६ अवधार्यत इति — आ.
२७ श्रीपौष्करे — ऊ, ऋ, ॠ.
२८ मुद्रितपौष्करे विद्यापादे नोपलभ्यते।
२९ तदीयता — अ, आ, ई, उ; यदियता — ऐ.
३० ०न्युपदिश्य — आ.
३१ प्रकृते पति० — ऊ, ऋ, ॠ.

**पत्युर्धर्माः शक्तयस्तु[1] ताश्च सर्वत्र निःसृताः ॥१०॥**
**शास्त्रेऽस्मिन्युक्तितः[2] सिद्धा लक्ष्यन्ते [3]त्रिष्ववस्थिताः[4] ।**
**पशौ पाशेषु भोगेषु[5]**

.

**शक्तयः** पुनर्या भगवतो [6]वक्ष्यमाणप्रमाणसिद्धाः, ता न वस्त्वन्तरम्[7]। अपि तु **धर्मा** एव भगवतः[8]। ततश्च "[9]धर्मेण साध्यते धर्मी" इत्येतदेव तस्यापि साधनमिति [10]नाव्याप्तिरित्यर्थः। [11]**ताश्च पत्युः** संबन्धिन्यः शक्तयो यद्यपि **सर्वत्र** तत्त्वभावभूत[12]भुवनधर्मिणि [13]कार्यकरणाय प्रवृत्ताः। तथापि **शास्त्रेऽस्मिन्** [14]विचारप्रतिपादके **युक्तितः** अनुमानात् [15]**पशौ** आत्मनि, **पाशेषु** [16]चोभयवादिसिद्धेषु त्रिपर्वपदार्थैकदेशभूतेषु[17] कार्यकारणादिषु[18], **भोगेषु** चेति **त्रिषु** एतेषु [19]पशुभोगत्रिपर्वपदार्थैकदेशेषु[20] **सिद्धाः लक्ष्यन्ते** [21]दृश्यन्ते। [22]तेष्वधिष्ठायकत्वेन साध्यन्त इत्यर्थः। न[23] पदार्थान्तरेषु [24]शक्त्यादिषु त्रिपर्वपदार्थैक[25]देशान्तरभूतेषु[26] कलादितन्मात्रान्तेषु[27] वा[28]। तेषां परस्यासिद्धेः। असिद्धस्य धर्मित्त्वायोगाद्धेतोराश्रयासिद्धिप्रसङ्गाच्च ॥

[29]अथ कथं तुल्ये पदार्थत्वे पदार्थैकदेशान्तरत्वे वा पशुभोगपदार्थाविव[30], त्रिपर्वपदार्थैकदेशभूताश्च [31]कार्यकारणाद्यात्मकाः एव पाशाः प्रतिवादिनः सिद्धाः। न तु शक्त्यादयोऽपि पदार्थाः, त्रिपर्वैक[32]देशान्तरभूताश्च [33]कलादितन्मात्रान्ता[34] इत्यत्रोच्यते — 'तदेव त्रितयम्' इत्यादि।

---

[1] शक्तयस्स्युः — ओ.
[2] -ऽस्मिन्नुक्तितः — ओ.
[3] त्रिष्विव० — ओ.
[4] ०स्थितः — ॠ.
[5] भोग्येषु — मु, उ, ओ.
[6] मतङ्ग० विद्या० ३. १२. १३ पू० वृत्तौ; वक्ष्यमाणसिद्धाः — अ, आ, ई, उ, ऌ, ए, ऐ; वक्ष्यमाणप्रापणसिद्धाः — ऊ, ऋ, ॠ.
[7] वस्त्वेतरम् — ॠ; वस्त्वन्तरानि — ऐ.
[8] भगवते — आ, ई, उ.
[9] मतङ्ग० विद्या० ३. ९ पू०
[10] नाव्याप्तमित्यर्थः — ऊ, ऋ, ॠ.
[11] तच्च — ऊ, ऋ, ॠ.
[12] ०भुवनवर्त्मनि — ऊ, ऋ, ॠ.
[13] कार्यकारणाय — अ, ऊ, ऋ, ॠ, ऐ.
[14] विचारयति प्रति० — ऊ, ऋ; विचारवति प्रति० — ॠ.
[15] पाशावात्मनि — आ, ई, उ, ए; पश्वात्मनि — ऐ.
[16] चोभयथादि० — ऊ, ऋ, ॠ.
[17] अत्र वाशब्दोऽधिकः — ऐ.
[18] अत्र वाशब्दोऽधिकः — अ, आ, ई, उ, ॡ.
[19] पशुभोगेषु त्रि० — ऋ; पाशपशुभोगेषु त्रि० — ॠ.
[20] ०पदार्थेषु — अ, आ, ई, उ, ॡ, ए, ऐ.
[21] दर्श्यन्ते — ऋ, ॠ.
[22] तेष्वधिष्ठापक० — अ; ते अधिष्ठायक० — ॠ.
[23] अत्र चशब्दोऽधिकः — ऊ, ऋ, ॠ.
[24] शक्तयादित्रिपर्व० — ऐ.
[25] ०देशान्तरं भूतेषु — ऊ, ऋ; ०देशावान्तरभूतेषु — ऐ.
[26] अत्र वाशब्दोऽधिकः — ऊ, ऋ, ॠ, ऐ.
[27] तन्मात्रान्तरेषु — अ, ई, उ, ऊ, ऋ, ॠ, ऐ.
[28] वाशब्दो नास्ति — ऋ, ऐ.
[29] 'अथ' इत्येतन्नास्ति — ऐ.
[30] ०पदार्थविव—अ, आ, ई, उ, ऊ, ऋ, ॠ, ॡ, ए.
[31] कार्यकरणात्मकाः — ॡ.
[32] ०देशभूताश्च — ऐ.
[33] कालादि० — ऊ.
[34] ०तन्मात्रा — ऐ.

[1]"तदेव त्रितयं [2]पुनः ॥११॥
[3]संयोगात्प्रतिपत्तव्यम्"

न हि सर्वः पदार्थः, सर्वो वा तदेकदेशः पशुभिः प्रतिपत्तव्यः, सर्वज्ञत्व[4]प्रसङ्गेन पशुत्वायोगात्। मलेन आवृतशक्तयो हि पुमांसः पशव इत्युक्तम्[5]। अतस्तैरनादि[6]कर्माक्षिप्त[7]भोग्यभोक्तृत्वसंबन्धाद्धेतोः '[8]तदेव भोक्तृभोग्य[9]भोगरूपं [10]त्रितयं प्रतिपत्तव्यम्। तेन विना भोगायोगात्। भोगो न स्वतस्तावत्। सुखादिप्रतिपत्त्यात्मक एव [11]भोग्यं सुखादिहेतुकं[12] प्रतिपद्यते। न [13]चाप्रतिपन्ने भोक्तरि अन्य[14]भोग्यवत्तदुपपद्यते। तद्भोगसंबन्धान्यथानुपपत्त्यैव[15] [16]तत्त्रितयमवश्यं प्रतिपत्तव्यं शरीरिभिः। यद्वक्ष्यति[17]—

"व्यस्तानां शक्यते वक्तुं न कदाचित्स्वरूपकम्।" इति।

[18]पतितशरीरस्य भोगसंवित्त्यभावात्। न पुनरेवं पदार्थान्तरस्य, पदार्थैकदेशान्तरस्य वा प्रतिपत्त्या विना भोगस्य [19]काचिदनुपपत्तिः। त्रितयसंवित्त्यैवानुभवसिद्धत्वादिति [20]तदेतत्त्रितयमत्र [21]सिद्धत्वाद् धर्मित्वेनोपात्तम्। [22]न त्वसिद्धं पदार्थान्तरं पदार्थैकदेशान्तरं वा कलादिकमिति॥

अधुना किमत्र साध्यमित्युच्यते—'न च शक्त्युज्झितं क्वचिद्' इत्यादि।

**"न च [23]शक्त्युज्झितं [24]क्वचित्।**
**प्रवर्ततेऽस्वतन्त्रत्वादचेतनतया तथा ॥१२॥**
**अमूर्तत्वाच्च क्रमशो [25]यथोद्दिष्टाः परस्परम्।**

शक्तिः कारकं, न द्रव्यमित्युक्तम्[26]। अत्र च "एतदुभयवादिसिद्धं पशुपाशभोगात्मकं पदार्थत्रयं [27]धर्मि, [28]**न क्वचिद्** [29]धर्मादौ [30]प्रयोजने शक्त्या प्रकृष्टेन कारकेण विरहितं **परस्परम्** अन्योन्यं

---

[1] तदेवं — ऋ.
[2] पुरा —मु. उ.
[3] भोगात्तत्प्रति० — मु. उ.
[4] ०प्रसङ्गेन पशुत्वात् — अ, ऐ; ०प्रसङ्गेनापशुत्वात् — आ, ई, उ, लृ, ए.
[5] मतङ्ग० विद्या० २. १७ उ०, १८ पू० वृत्तौ।
[6] ०कर्माक्षिप्तभोगभोक्तृत्व० — ऐ.
[7] 'भोग्य' इत्यारभ्य 'तदेव' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[8] तद्यदेव —ऐ.
[9] 'भोग' इत्येतन्नास्ति — अ.
[10] 'त्रितयं' इत्येतन्नास्ति — ऐ.
[11] भोगं — अ, आ, लृ.
[12] सुखादिसहेतुकं — आ, ई, उ, लृ, ऐ; सुखादिकं — ऊ, ऋ, ॠ.
[13] च प्रतिपन्नं — ऊ, ऋ, ॠ.
[14] ०भौगवत् — ऊ, ऋ, ॠ.
[15] 'अनुपपत्यैव' इत्यस्य स्थाने 'अनुपपत्त्यै' इति दृश्यते — ऊ, ऋ, ॠ.
[16] 'तत्' इत्येतन्नास्ति — अ, लृ.
[17] मतङ्ग० विद्या० ३. १३ उ०
[18] तच्छरीरस्य — उ; प्रतिश्रुतशरीरस्य — ऐ.
[19] कदाचिदनुप० — अ, आ, ई, उ, लृ, ए, ऐ.
[20] तदेव त्रितय० — ऊ, ऋ, ॠ.
[21] सिद्धित्वाद् — अ.
[22] तत्तत्प्रसिद्धं — ऊ, ऋ, ॠ.
[23] शक्त्युत्थितं — ओ.
[24] किंचित् — ऊ.
[25] यथोद्दिष्टः — ऊ.
[26] मतङ्ग० विद्या० ३. ८ उ० वृत्तौ।
[27] धर्मी — अ, आ, ई, उ, लृ, ए, ऐ.
[28] नशब्दो नास्ति — अ, आ, ई, उ, लृ, ए, ऐ.
[29] बन्धादौ — ऊ, ऋ.
[30] प्रयोजनशक्त्या — ऐ.

पशुः शरीरादिपाशार्थं भोगार्थं वा, पश्वर्थं च [1]पाशो भोगो वा प्रवर्तते ; चशब्दान्निवर्तते च" इति साध्यम्[2]। [3]तत्र [4]साध्यधर्मि पश्वादि[5]त्रयं, श्रुतक्रमेण यथानिर्दिष्टाः अस्वतन्त्रत्वादयस्त्रयो हेतव इति। अतश्च प्रयोगत्रयमेतदित्युक्तं भवति। तत्रैकः प्रयोगः — "[6]पशुर्धर्मी [7]कारकान्तरेणानधिष्ठितः शरीरादिपाशार्थं स्वात्मनः[8] सुखादिभोगार्थं वा न[9] प्रवर्तते, [10]दुःखादिभ्यो वा निवर्तते। अस्वतन्त्रत्वात् मेषादिपशुवत्"। स्वतन्त्रो हि कर्ता कथ्यते। न च तस्य स्वस्वशरीरनिर्माणादौ कर्तृत्वं सिद्धम्। [11]अशरीरस्य भवद्भिरपि कर्तृत्वानभ्युपगमात्। यदुक्तम्[12] —

"अशरीरो ह्यधिष्ठाता नात्मा [13]मुक्तात्मवद्भवेत्।" इति।

[14]शरीरान्तरयुक्तस्य कर्तृत्वेऽपि [15]परपुरप्रवेशिनो योगिन इव [16]स्वशरीरान्तरोत्पादनासिद्धेः। कर्तृत्वेऽपि[17] सर्व एव पुरुषा [18]अप्राकृतशरीराः सुखिनश्च[19] स्युः।

[20]द्वितीयोऽपि — "पाशाः शरीरादयो धर्मिणो न कारकान्तरनिरपेक्षाः पशुषु स्वत एव [21]प्रवर्तन्ते, [22]निवर्तन्ते वा। अचेतनत्वात्[23], मेषादिपशुषु रज्ज्वादिपाशवत्"। न च वायूदकादिभिर्व्यभिचारः। तेषामपि पक्षीकृतत्वात्।

[24]तृतीयस्तु — "[25]भोगाः [26]कर्मतत्फलसंवेदनात्मकाः प्रागुक्ता धर्मिणो न कारकान्तरनिरपेक्षाः स्वत एव [27]प्रवर्तन्ते निवर्तन्ते च[28]। अमूर्तत्वात्[29], रसादिवद्" इति। [30]यत् कारकं तेषां परस्पर-

---

[1] पाशा — ऊ, ऋ, ॠ.

[2] च बोध्यम् — अ; च नेति साध्यम् — आ, ई, उ, ऌ, ए, ऐ.

[3] अत्र — ऊ, ऋ, ॠ.

[4] साध्यधर्मी — आ, उ; साध्यधर्म० — ई, ए.

[5] ०त्रयश्रुतक्रमेण — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ; ०त्रयश्रुतिक्रमेण — ए.

[6] पशुधर्मि — अ, ऐ; पशुधर्मी — आ, ई, उ, ए.

[7] कारकान्तरेणाधिष्ठितः — ऊ; न कारकान्तरेणाधिष्ठितः — ऋ, ॠ.

[8] स्वस्मिन् — ऐ.

[9] 'न' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[10] दुःखादिनाशार्थं नि० — ऊ, ऋ; दुःखादिनाशार्थं वा नि० — ॠ.

[11] असिद्धस्य — अ.

[12] श्लोकवा० संबन्धाक्षेपपरि० ७८ उ०

[13] मुक्तादिवद्भवेत् — अ; 'मुक्तात्मवद्भवेत्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[14] स्वशरीरकर्तृत्वेऽपि — अ, आ, ई, उ, ऌ, ए; स्वशरीरान्तरकर्तृत्वेऽपि — ऐ.

[15] परपुरुषप्रवेशिनः — ऊ, ऋ, ॠ.

[16] स्वशरीरोत्पादनासिद्धिः — ऊ, ऋ, ॠ; स्वशरीरोत्पादनासिद्धेः — ए.

[17] कर्तृत्वे हि — ऊ, ऋ; कर्मत्वे हि — ॠ.

[18] प्रकृष्टतरशरीराः — ऊ, ऋ, ॠ.

[19] चशब्दो नास्ति — ऐ.

[20] द्वितीयेऽपि — ऊ, ॠ.

[21] प्रवर्तते निवर्तते वा — ऐ.

[22] 'निवर्तन्ते' इत्येतन्नास्ति — ए.

[23] अचेतनत्वं — अ.

[24] 'तृतीयस्तु' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[25] भोगः — अ.

[26] कर्मणः फल० — अ; कर्मतः फल० — — आ, ई, उ, ए.

[27] प्रवर्तते निवर्तते च — ऐ.

[28] अत्र 'इति साध्यम्' इत्यधिकम् — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऌ, ए, ऐ.

[29] अत्र 'धर्मात्' इत्यधिकम् — अ, आ, ई, उ, ऌ, ए, ऐ.

[30] यत्तत्कारकमेषां — ऊ, ऋ, ॠ.

प्रवृत्तौ[1] निवृत्तौ[2] च सा [3]शक्तिः; शक्तिरेव[4] कारकमित्युक्तं[5] यतः। [6]अतः प्रतिज्ञावाक्यादेव[7] "[8]पत्युरधिष्ठानं स्वशक्तिकिरणात्मकम्" [9]इत्येवं तावत्साधितम्।

अत्र च[10] जगतो नित्यत्वाभ्युपगमेनेयमीश्वरसिद्धिरुक्ता। तत्कार्यत्वेन [11]तु **पुंपाशेश्वरप्रकरणे**। यद्वक्ष्यति[12] — "कार्यमेतज्जगत्सदा" इति। ततो नान्योन्यं गतार्थता[13]॥

'व्यस्तानाम्' इत्यादि।

**व्यस्तानां शक्यते वक्तुं न कदाचित्स्वरूपकम् ॥१३॥**

एतत् "[14]संयोगात्प्रतिपत्तव्यम्" इत्येतत्सूत्रसंबन्धेन [15]व्याख्यातम्। यदाहुः[16] —
"यस्य [17]येनाभिसंबन्धो दूरस्थस्यापि तस्य सः।" इत्यादि। इति॥१३॥

अधुना पदार्थान्तराणां पूर्वं[18]प्रसङ्गेनेवात्रोपायपदार्थस्यापि प्रमाणमुच्यते — 'उपायोऽपि हि' इत्यादि।

**उपायोऽपि हि तद्धर्मन्यायेन समवस्थितः।**

[19]तस्य पत्युर्धर्माः शक्तय इत्युक्तम्[20]। तेषां सिद्धौ यो न्याय उक्तः[21], तेन न केवलं शक्तयः; यावद् **उपायोऽपि समवस्थितः** सिद्धः।

अयमर्थः — पुंसामज्ञानात्मनो बन्धस्य द्रव्यनिमित्तत्वेन वक्ष्यमाणत्वात्[22] स्वनिमित्तद्रव्यनिवृत्यैव[23] [24]निवृत्त्या भाव्यं चक्षुष इव पटलादेः। न तु ज्ञानात्। द्रव्यनिवृत्तौ[25] पशुर्न शक्तः। [26]पुंसो ज्ञानमात्रेण स्वातन्त्र्यासिद्धेः। नापि तत्पाशात्मकं द्रव्यं[27] स्वयमेव निवर्तते। पटलादिवदचेतन-

---

[1] अत्र चशब्दोऽधिकः — ऐ.
[2] 'निवृत्तौ' इत्येतन्नास्ति — ॠ, ॠ.
[3] 'शक्तिः' इत्येतन्नास्ति — अ, आ, ई, उ, ॡ, ए, ऐ.
[4] मूर्तिरेव — ॡ.
[5] कार्यमित्युक्तं — अ.
[6] 'अतः' इत्यत्र 'अतश्च' इति दृश्यते — ऊ, ॠ, ॠ; 'अतः' इत्येतन्नास्ति — ऐ.
[7] एवकारो नास्ति — ऊ, ॠ, ॠ.
[8] मतङ्ग० विद्या० ३. १ पू०.
[9] इत्येतत्तावत् — ऊ, ॠ, ॠ.
[10] चशब्दो नास्ति — ऊ, ॠ, ॠ.
[11] तुशब्दो नास्ति — अ, आ, ई, उ, ॠ, ॡ, ए, ऐ.
[12] मतङ्ग० विद्या० ६. ९९ उ०.
[13] नान्योन्याङ्गता — अ, आ, ई, उ, ॡ, ए, ऐ.
[14] मतङ्ग० विद्या० ३. १२ पू०.
[15] व्याख्यातव्यम् — अ, आ, ई, उ, ॡ, ए, ऐ.
[16] तन्त्रवार्तिकव्याख्यायां न्यायसुधायामुद्धृतः — २. २. ९; व्यक्तिविवेकेऽपि ४३२ तमे पृष्ठे इदमर्धमुद्धृतम्।
[17] येनार्थसंबन्धो — न्यायसुधापाठः।
[18] ०प्रसङ्गेनैवात्रो० — आ, ई, उ, ऊ, ॠ, ॠ, ॡ, ए, ऐ.
[19] अस्य — अ.
[20] मतङ्ग० विद्या० ३. १० उ०, ११ वृत्तौ.
[21] मतङ्ग० विद्या० ३. ८ उ० वृत्तौ।
[22] मतङ्ग० विद्या० ६. ८१ पू० वृत्तौ।
[23] ०निवृत्त्येव — अ, ई, उ.
[24] निवृत्तिर्भाव्यं — ऐ.
[25] ज्ञानद्रव्यनिवृत्तौ — अ; निवृत्तौ इत्यनन्तरं विद्यमानं 'पशुर्न शक्तः' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[26] पुंसां ज्ञान० — अ, ऊ, ॠ, ॠ.
[27] ०त्मकद्रव्यं — ऐ.

त्वात्[1]। नापि भोगस्तन्निवर्तकः, अमूर्तत्वात्; रसादिवदिति[2] मोक्षान्यथानुपपत्त्या [3]पटलादेश्चक्षुर्वैद्य[4]व्यापारेणेवास्यापि निवृत्तौ उपायान्तरेण व्यापारात्मना भवितव्यमिति [5]तदुपायपदार्थस्य दीक्षादे[6]रीश्वरव्यापारात्मनः सिद्धिः। यदुक्तं [7]श्रीमत्पौष्करे[8] —

"न मोक्षं यान्ति पुरुषाः स्वसामर्थ्यात्कदाचन"। इति ॥

यद्येवं [9]सर्वे एव पदार्थाः इहैव[10] प्रमाणदर्शनेन[11] साधिताः। सत्यम्। — 'किं तु साधर्म्यवैधर्म्यविचारोक्त्या' इत्यादि।

**किं तु साधर्म्यवैधर्म्यविचारोक्त्या पृथक् पृथक् ॥१४॥**
**[12]वक्ष्यन्तेऽमी [13]पदार्थास्ते सुसंपृक्ताः सुविस्तरे ।**
**[14]संसारे गहने पत्यू रश्मिभिः प्रकटीकृताः ॥१५॥**

अत्र हि सामान्येन पदार्थसाधनानि प्रमाणानि उपन्यस्तानि। कस्य तु पदार्थस्य किं प्रमाणं [15]कथं च तस्यात्र प्रमाणगत्या[16] [17]इदमित्थमिति **साधर्म्यवैधर्म्यविचारस्योक्तिः**[18] अन्वयव्यतिरेकसिद्धेरभिधानं[19], तया न प्रतिपादिताः [20]**पदार्थाः**। तथा केषां केन सह साधर्म्यं साधारणधर्मयोगित्वं[21], यथा षण्णामपि पुरुषार्थहेतुत्वम्[22]। वैधर्म्यं च असाधारणधर्मयोगित्वं[23] यथा पतिपशुपदार्थयोश्चिद्रूपत्वम्, अन्येषामचिद्रूपत्वमित्यादि। तयोर्यो विचारः तस्योक्तिः, [24]तयापि न [25]प्रतिपादिताः। ततः[26] **पृथक् पृथक्** भेदेन स्वस्मिन् [27]स्वस्मिन् प्रकरणे [28]**वक्ष्यन्ते**। [29]ते च न भिन्ना एव। **किं तु**

---

[1] ०वदाचैतन्यात् — ऊ, ऋ, ॠ.
[2] इतिशब्दो नास्ति — अ, आ, ई, उ, ऌ, ए, ऐ.
[3] पटलादेर्वैद्य० — अ, आ, ई, उ, ऌ, ए, ऐ.
[4] व्यापारेणैवा० — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऌ, ए, ऐ.
[5] एतदुपाय० — अ.
[6] ०रीश्वरव्यापारात्मना सिद्धिः — अ, ऐ; ०रीश्वरव्यापारात्मनः सिद्धः — ऊ, ऋ, ॠ; ०रीश्वरस्य व्यापारात्मनः सिद्धिः — ए.
[7] श्रीपौष्करे — ऋ, ॠ.
[8] पौष्करे विद्या० १. ९० पू०
[9] सर्वपदार्थाः — अ, आ, ई, उ.
[10] अत्र चशब्दोऽधिकः — अ, ॠ, ऌ, ऐ.
[11] प्रमाणप्रदर्शनेन — ऊ, ॠ.
[12] लक्ष्यन्तेऽमी — मु, उ. ओ.
[13] पदार्थास्तु — ऊ, ऋ, ॠ.
[14] संसारगहने — ऊ, ऋ, ॠ.
[15] कथंचित्तस्यात्र — अ ; कथं च तत्रास्य — ऊ, ऋ, ॠ, ए, ऐ.
[16] प्रमाणागतस्य — आ, ई, उ; प्रमाणगतस्य ऊ, ऋ, ॠ, ऌ, ए, ऐ;
[17] 'इदमित्थमिति' इत्येतन्नास्ति — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[18] ०वैधर्म्याचारस्योक्तिः — अ, ऋ.
[19] ०सिद्धेः परं प्रत्यभिधानं — ऊ, ऋ, ॠ.
[20] 'पदार्थाः' इत्येतन्नास्ति — ऌ.
[21] ०योगत्वं — अ, ऊ, ऋ.
[22] पुरुषार्थत्वम् — ऊ, ऋ, ॠ.
[23] ०योगिता — ऊ, ऋ, ॠ
[24] तथापि — अ, ए.
[25] प्रतिपादितः — अ.
[26] अत्र 'तथा' इत्यधिकम् — ऐ.
[27] 'स्वस्मिन्' इत्येतन्नास्ति — आ, ई, उ, ए.
[28] लक्ष्यन्ते — अ, आ, ई, उ, ऌ, ए; 'वक्ष्यन्ते' इत्यनन्तरं इतिशब्दोऽधिकः — अ, आ, ई, उ, ऌ, ए, ऐ.
[29] केचन — अ, ऐ.

[1]सुसंपृक्ताः अत्यन्त[2]संबद्धाः [3]संसारनिमित्तं [4]वक्ष्यन्ते[5]। किं च पत्युः रश्मिभिः प्रकटीकृताः। [6]ये नित्यास्तेन परमेश्वरेण व्यक्तीकृताः। ये त्वनित्याः, तेषामुत्पादनमेव प्रकटीकरणम्॥ १४—१५॥

[7]अनुमानार्थोपसंहारः—

**शक्तिभ्यः शक्तिमान्सिद्धः"**

इति। तदिदमुक्तम्[8]—"[9]धूमादग्नेर्यथा पत्युः [10]शक्तयो विद्धि साधनम्।" [11]इति। शक्तयो हि [12]कारकं न द्रव्यमित्युक्तम्[13]। ता एव च[14] भोगमोक्ष[15]लक्षणान्मेषादौ [16]प्रत्यक्षसिद्धसंबन्धात् [17]कार्यादनुमेयाः। [18]ताश्च निराधारा न संभवन्तीति ताभिः [19]धर्मभूताभिः [20]धर्मी मूर्तिमानीश्वरोऽनुमानान्तरेण साध्यत इति [21]पतिपदार्थः सिद्धः॥

अथ किमनेन [22]सोपानान्तराधिरोहणन्यायेन[23] [24]अनुमितानुमानेन। शक्तिमानेव [25]कथं पूर्वोक्तात्कार्यान्नानुमीयते। यथा पुंपाशेश्वरप्रकरणे वक्ष्यति[26]—

"एवं हि परतन्त्रत्वाज्जगतोऽस्याखिलस्य तु।
[27]प्रवृत्तिर्नेष्यते [28]यस्मात्तस्मात्कर्ता महेश्वरः"॥ इति।

न च कार्यं शक्तिमिव शक्तिमन्तमपि व्यभिचरति। सत्यम्। अत्र तु [29]पतिपदार्थ-

---

[1] संप्रोक्ताः — आ; संपृक्ताः — ई, उ, ए; स्वसंपृक्ताः — ऊ, ऋ.
[2] ०संबन्धाः — अ, आ, ई, उ, ऋ, ए, ऐ.
[3] संसारिनिमित्तं — अ, आ, ई, उ, ऋ.
[4] लक्ष्यन्ते — अ, आ, ई, उ, लृ, ए.
[5] मतङ्ग० विद्या० १४. २ — ९ पू०, १२ — १८ पू० श्लोकेषु।
[6] 'ये' इत्यारभ्य 'व्यक्तीकृताः' इत्यन्तं नास्ति — अ, आ, ई, उ, लृ, ए, ऐ.
[7] 'अनुमान' इत्येतन्नास्ति — अ.
[8] मतङ्ग० विद्या० ३. ८ उ०.
[9] धूमा अग्नेर्यथा — अ, आ, ई, उ, लृ, ऐ.
[10] शक्तयस्सिद्धि० — ए, ऐ.
[11] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[12] कारणं — अ,
[13] मतङ्ग० विद्या० ३. १२, १३ पू०वृत्तौ
[14] चशब्दो नास्ति — अ.
[15] ०लक्षणोन्मेषादौ — अ, ऊ; ०लक्षणादौ — ऋ; ०लक्षणाद्देहादौ — ॠ.
[16] प्रत्यक्षः सिद्ध० — ऐ.
[17] कार्याद्यनुमेयाः — ऐ.
[18] तावच्च — ऊ, ऋ, ॠ.
[19] धर्मीभूताभिः — अ; 'धर्मभूताभिः' इत्येतन्नास्ति — ऐ.
[20] धर्मिशक्त्यानुमानान्तेरेण — अ, लृ, ऐ; धर्मी शक्त्यानुमानान्तरेण — आ, ई, उ; धर्मी शक्त्यनुमानान्तरेण — ए.
[21] पतिपदार्थसिद्धिः — आ, ई, उ, लृ, ए, ऐ; पदार्थसिद्धिः — ऊ, ऋ, ॠ.
[22] सोपानान्तरारोहण० — ॠ.
[23] सोपानारोहन्यायः — लौ० न्या० साहस्री ४४.
[24] शक्त्यनुमानेन — अ, आ, ई, उ, ए, ऐ; 'अनुमितानुमानेन' इत्येतन्नास्ति — लृ.
[25] 'कथं' इत्येतन्नास्ति — अ.
[26] मतङ्ग ० विद्या० ६. ९५.
[27] प्रवृत्तिर्दृश्यते यस्मात् — अ, आ, ई, उ, ऊ, ऋ, ॠ, लृ, ए, ऐ.
[28] 'यस्मात्' इत्यस्य स्थाने 'यत्र' इति दृश्यते — ऐ.
[29] पदपदार्थ० — अ.

भेदस्य लयभोगाधिकारात्मनः शक्तिभेदाश्रयेण वक्ष्यमाणत्वात्[1] [2]तत्प्राधान्येन पतिपदार्थसिद्धिरुक्तेत्यविरोधः। [3]अनेनैव [4]प्रतिज्ञावाक्यात् सुदीप्तात्मवस्तुसिद्धिः[5]॥

अधुना "[6]श्रोत्रादीनि प्रमाणानि" इत्यादि[7]कमपि नियमं निराकर्तुमीश्वरस्य योगिप्रत्यक्षमपि साधनमित्युच्यते — 'ह्यथवा' इत्यादि॥

"**ह्यथवा मुनिपुङ्गव।**
**अक्षाणि प्रति [8]प्रत्यक्षं मनश्चाक्षमनुत्तमम्॥१६॥**
**संकल्पविषयं सिद्धं संकल्पादेव केवलात्।**
**[9]प्रपत्तव्यं मुनिव्याघ्र किमन्यत्परिपृच्छसि॥१७॥**

**अक्षाणि प्रतीति** [10]अक्षमक्षं प्रति वर्तते इति हि[11] प्रत्यक्षलक्षणम्[12]। [13]**मनश्चाक्षम्** इन्द्रियम्, अन्तःसुखादिबुद्ध्यधिष्ठानाद् बाह्येन्द्रियाधिष्ठानाच्च **अनुत्तमं** भवतामस्माकं [14]चेति मनःप्रकरणे [15]वक्ष्यमाणे वक्ष्यति[16] —

[17]"द्विधाधिकारि तच्चित्तं [18]भोक्तुर्भोगोपपादकम्।
बहिःकरणभावेन [19]स्वोचितेन यतः सदा॥
इन्द्रियाणां तु सामर्थ्यं संकल्पेनात्मवर्तिना।
करोत्यन्तःस्थितं[20] भूयस्ततोऽन्तःकरणं [21]मनः॥" इति

ततश्च न श्रोत्रादीन्येव[22] प्रमाणानि। इन्द्रियान्तरस्य सत्त्वात्[23]। नापि [24]प्रमेयोऽर्थश्च पञ्चधैव[25]। अर्थान्तरस्य सुखादेरपि प्रमेयत्वादिति।

अथ केन व्यापारेण मनसोऽत्र [26]करणत्वमित्युच्यते। संकल्पो[27]ऽवधानमेकाग्रता [28]बाह्यान्तरकरणप्रवृत्तिनिवृत्तिहेतुर्व्यापारः। यद्वक्ष्यति मनःप्रकरणे[29] —

---

[1] मतङ्ग० विद्या० ३. २० उ० वृत्तौ।
[2] तत्प्रावण्येन — ऊ, ॠ.
[3] अत्र 'अथवा' इत्यधिकम् — आ.
[4] अत्र चशब्दोऽधिकः — ऊ, ऋ, ॠ.
[5] मतङ्ग ० विद्या० ३. १—३.
[6] मतङ्ग० विद्या० ३. ४ उ०
[7] कथमपि — ऊ, ऋ, ॠ.
[8] प्रत्यक्ष्यं — मु, उ.
[9] प्रवक्तव्यं — मु; प्रकर्तव्यम् — मु० पाठान्तरम्, उ.
[10] 'अक्षं' इत्येतन्नास्ति—अ, आ, ई, उ, लृ, ए, ऐ.
[11] हिशब्दो नास्ति — ऊ, ऋ, ॠ.
[12] लक्षणात् — अ, आ, ई, उ, ऋ, लृ, ए, ऐ.
[13] मनश्चान्तरिन्द्रियम् — अ.
[14] चशब्दो नास्ति—अ, आ, ई, उ, ऋ, लृ, ए, ऐ.
[15] 'वक्ष्यमाणे' इत्येतन्नास्ति — ऋ, ॠ.
[16] मतङ्ग० विद्या० १८. ८१, ८२.
[17] द्विधाधिकारी तच्चित्तं — आ; द्विधाकारतच्चित्तं—ऊ; विविधाकारतच्चित्रं—ऋ, ॠ.
[18] भोक्तुं भोगोप०— अ; भोक्तृभोगोप — ऊ, ऋ, ॠ, लृ, ऐ; भोक्तुं भोग्योप० — ए.
[19] स्वोचिते नियतः — आ; स्वाचित्तेन यतः — ऋ; सेवितेन यतः — ए.
[20] ०स्थितिं — अ, आ, ई, उ, लृ, ए.
[21] मतम् — अ, आ, ई, उ, लृ.
[22] ०दीन्येवमेषु — अ.
[23] ०न्तरसत्त्वात् — ए.
[24] प्रमेयार्थश्च — अ, आ, ई, उ, लृ, ए
[25] पञ्च तथैव — ऐ.
[26] करणमित्युच्यते — अ, आ.
[27] -ऽव्यवधान० — अ.
[28] बाह्यान्तःकरण० —अ, आ, ई, उ, ऊ, लृ, ए, ऐ.
[29] मतङ्ग० विद्या० १८. ९२ उ०, ९३ पू०

"[1]देवाश्चाप्यविकुर्वाणा बोद्धारो बुद्धिसंज्ञकाः।
प्रच्यवन्ते[2] स्वकात्स्थानान्मनः[3]संकल्पिताः सदा॥" इति।

[4]न तु ज्ञानम्; यथान्यैर्व्याख्यातम्। तस्य पुरुष[5]स्वभावत्वात्। यद्वक्ष्यति[6] — "चितेश्चित्सहजो धर्म" इति[7]। नाप्यध्यवसायः। तस्य ग्राह्यग्राहकात्मनो [8]बुद्धयहंकार[9]वृत्तित्वेन वक्ष्यमाणत्वात्। [10]सः संकल्पः विषयः [11]मार्गप्रतीतौ उपायः[12] यस्य। संकल्पात्मिकया [13]हि वृत्त्या मनःसिद्धिरिति वक्ष्यामो मनःप्रकरणे[14]।

ततः प्रकृते[15] किमित्युच्यते — **"संकल्पादेव"** इति प्रत्याहारादिभिरुपायैर्बाह्येन्द्रियार्थेभ्यो योगपादवक्ष्यमाणक्रमेणाहृतत्वात्[16] **केवलाच्च** यमनियमानुष्ठानतो विनिवृत्त[17]पापादिदोषाद् या प्रतिपत्तिः बौद्धी वा पौरुषी वा; सकलाकलभेदेन तया[18] प्रतिपत्तव्यमीश्वराख्यं तत्त्वम्। यदुक्तम्[19] — "[20]त्रितत्त्वोक्तिनिदर्शनाद्" इति। ततश्च योगिज्ञानेन ईश्वरसिद्धेः[21] किमत्रान्येन साधनेनेति। [22]यदुक्तम् **अनुभवस्तवे**[23] —

"[24]तं विविक्तधिषणः[25]समाधिना
[26]निश्चयोज्झितनिवेशनो मुनिः
त्वामकारणनिवृत्तभावनो
भावयत्यनुभवैरकृत्रिमैः॥ इति।

न च योगिनोऽस्माकमसिद्धा[27] इति वाच्यम्। यच्छ्रूयते[28] —

---

[1] देवाश्चापि वि० — अ, आ, ई, उ, ऌ; देवाश्चात्यधिकु० — ए; देवाश्चाप्यधिकु० — ऐ.

[2] प्रच्यवन्ति—अ, आ, ई, उ, ऌ, ए; प्राप्नुवन्ति — ऐ.

[3] संकल्पिता सदा — अ.

[4] ननु ज्ञानं — अ; न तु न ज्ञानम् — ऐ.

[5] संभवत्वात् — ए.

[6] मतङ्ग० विद्या० ६. ८० उ०

[7] ०त्सहजोऽयमिति — ए.

[8] बुद्धिरहंकार० — अ, आ.

[9] ०वृत्तित्वे वक्ष्यमाण० — आ.

[10] 'सः' इत्येतन्नास्ति — अ, आ, ई, उ, ऌ, ए, ऐ.

[11] मार्गः प्रतीतौ — अ, ई, उ, ऊ, ॠ, ॠ, ॡ, ए.

[12] उपायौ — अ, ऐ.

[13] हिशब्दो नास्ति — अ, आ, ई, उ, ऌ, ए, ऐ.

[14] मतङ्ग० विद्या० १८. ८०-८२ वृत्तौ।

[15] अत्र इतिशब्दोऽधिकः — अ.

[16] ०णाहृतात् — आ, ई, उ, ऊ, ॠ, ॠ, ॡ, ए, ऐ.

[17] ०पापादिमोक्षात् — ए.

[18] तथा — अ, ए.

[19] मतङ्ग० विद्या० २. १४ पू०.

[20] अत्र 'लयभोगाधिकाराख्य' इत्येतदधिकम् — ऐ.

[21] ईश्वरसिद्धिः —अ, आ, ई, उ, ऌ, ए; ईश्वरस्य सिद्धिः — ऐ.

[22] यदाहुः — ऊ, ॠ, ॠ.

[23] ग्रन्थोऽयं न लभ्यते।

[24] ते विविक्त० ऊ, ॠ, ॠ; मे विविक्त० — ऐ.

[25] ०धिषण — ऐ.

[26] निश्चयोऽन्वितनिवेशनो — अ, निश्चयेऽकृतनिवेशनो — ऊ, ॠ, ॠ.

[27] ०मसिद्धया — ऌ.

[28] ब्रह्मोप० — १८; कैवल्योप० — ११; ध्यानबि० — २२.

"आत्मान[1]मरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
[2]ध्याननिर्मथना[3]भ्यासाद्देवं पश्येन्निगूढवत् ॥" इति ।

न चात्र "[4]परतन्त्रं बहिर्मन" इति वाच्यम् । तस्य स्मृतिप्रतिभाद्युपस्थापितार्थानुभव[5]विषयत्वाद्-बाह्येन्द्रियपारतन्त्र्यासिद्धेरिति दर्शितं **नरेश्वरपरीक्षाप्रकाशे**[6] ।

यस्तु "संकल्पादेव केवलात्प्रतिपत्तव्यं मनः" इति व्याचष्टे । तस्योपक्रमविरोधः । ईश्वर-तत्त्वं हि मानस[7]प्रत्यक्षसिद्धमित्युपक्रान्तं त्यक्त्वा [8]मनःसाधनाभिधानमत्र निष्प्रयोजनमेव । तस्य स्वप्रकरण एव [9]वक्ष्यमाणत्वादिति ॥१६—१७॥

अधुनास्यैव नियमस्य निराकरणाय पत्युरागमसिद्धत्वमप्युच्यते[10] — "पञ्चमन्त्रतनुः श्रीमान्" इत्यादि ।

**पञ्चमन्त्रतनुः श्रीमान्सकलः परिपठ्यते ।**
**सुप्रसन्नेन्द्रियग्रामः सर्वज्ञः सर्वगोचरः ॥१८॥**
**योग[11]योगेश्वरस्वामी स्वतन्त्रः पशुपाशहा ।**
**तस्योक्तिः पौरुषैः स्थूलैः प्रमाणैर्न प्रबाध्यते ॥१९॥**

[12]पञ्चभिर्वक्ष्यमाणै[13]रीशानादिभिर्मननत्राणशक्तिरूपैः तनुः मूर्तिर्यस्य[14] स **श्रीमान्** [15]ईश्वरः पठ्यते । यद्वक्ष्यति[16] —

"[17]तनुस्तस्योपचारेण[18] पञ्चमन्त्रमयी शिवा ।" इति ।

न पुनर्बाह्यशरीर[19]युक्त इत्यर्थः ।

ननु "[20]अशरीरो ह्यधिष्ठाता नात्मा मुक्तात्मवद्भवेत् ।" इति[21] ।

[22]तदयुक्तम् । स्वशरीरस्पन्दादावशरीरस्यैव अस्मदादेः [23]कर्तृत्वदर्शनादित्युक्तमस्माभिः **नरेश्वरपरीक्षाप्रकाशे**[24] विस्तरेणेति तत एवावधार्यम्[25] ।

---

[1] ०मरणीकृत्वा — अ; ०मरणीं कृत्वा — ऐ.
[2] ज्ञाननिर्मथना० — अ, ई, उ, ऌ, ए, ऐ, कैवल्योपनिषत्पाठः; ज्ञानाग्निमथना० — आ.
[3] ०भ्यासाद्दैवं — आ. ०भ्यासादेवं — ब्रह्मोपनिषत्पाठः; ०भ्यासादेव — ध्यानबिन्दूपनिषत्पाठः; ०भ्यासात्पापं दहति पण्डितः । — कैवल्योपनिषत्पाठः ।
[4] परमं तन्त्रं — अ; 'न स्वतन्त्रं बहिर्मनः' विधिविवेके पृ० १६१.
[5] ०विषये बाह्ये० — ऊ, ॠ, ॠ.
[6] तृतीयकाण्डे १३३ उ०, १३४ पू० विवरणे ।
[7] ०प्रत्यक्षसिद्धमपीत्युप० — ऊ, ॠ; ०प्रत्यक्षमित्युप० — ए.
[8] मनसस्साधना० — ऊ, ॠ, ॠ; मनस्साधनमत्र — ॡ.
[9] मतङ्ग० विद्या० १८. ८०—८२ वृत्तौ ।
[10] ०सिद्धत्वमुच्यते — आ, ई, उ, ए.
[11] ०योगीश्वरः स्वामी — मु, ओ.
[12] बहुभि० — ऊ, ॠ, ॠ.
[13] मतङ्ग० विद्या० ४. ५ उ०, ६ पू० वृत्तौ ।
[14] अत्र इतिशब्दोऽधिकः — अ.
[15] ईश्वरोऽत्र पठ्यते — ऊ, ॠ, ॠ.
[16] मतङ्ग० विद्या० ४. १४ पू०.
[17] तनुर्यस्यो० — आ, ई, उ, ऌ, ए.
[18] ०कारेण — ऊ, ॠ, ॠ.
[19] —युक्तेत्यर्थः — ऊ. ॠ ॠ
[20] श्लोकवा० संबन्धाक्षेपपरि० ७८ उ०.
[21] अत्र 'उक्तम्' इत्यधिकम् — ऊ, ॠ, ॠ.
[22] यदुक्तम् — अ.
[23] कर्तृत्वादर्शना० — अ.
[24] द्वितीयकाण्डे श्लो ८ विवरणे ।
[25] ०धार्यः — अ, आ, ई, उ, ऌ.

अत एव च सह कलाभिः पञ्चमन्त्रावान्तरशक्तिभेदरूपाभिरष्टत्रिंशत्संख्याभिर्वर्तत इति **सकलः** सर्वशक्तियुक्तः पठ्यत इत्यर्थः। ततश्च "[1]अचलमूर्तिमान्" इति प्रतिज्ञासूत्रात्सिद्धम्[2]।

[3]किंच [4]**सुप्रसन्नो**ऽनादिमलरहितः[5] **इन्द्रियग्रामः** शक्तिसमूहो यस्य। कर्तुः कुम्भकारादेरपि स्वकार्ये तथा सिद्धेः। न हि तस्य व्याध्यादिनोपहतेन्द्रियत्वे [6]कुम्भकरणत्वमुपपद्यते। अतश्च "अमृतात्मिका" तन्मूर्तिरिति सिद्धम्[7]। **सर्वज्ञश्च** कुम्भकारादीनामपि[8] स्वकार्ये सर्वज्ञत्वेन सिद्धेः। न हि तेषां [9]तत्रांशेनाप्यज्ञत्वे कुम्भ[10]करणमकुम्भकारादीनामिवोपपद्यते।

यद्येवं शास्त्रान्तरेष्वपि [11]हरिहिरण्यगर्भादयः [12]सर्वज्ञाः जगतः कर्तारः श्रूयन्ते। [13]तदयुक्तम्। [14]तेषामसर्वगोचरत्वात्। स्वप्राप्यावधिसर्वज्ञत्वं यतस्तदगोचरत्वं च रागादि[15]शिवान्तवस्त्वपरिज्ञानात्। [16]यस्य [17]तु [18]सर्वज्ञत्वं सर्ववस्तुगोचरत्वं [19]स सर्वज्ञ इत्यर्थः।

[20]योगाः समभिव्यक्तज्ञानक्रियाशक्तयो मन्त्राः। यद्वक्ष्यति[21] — "[22]योगोऽस्य [23]शक्तयः स्वाक्याः" इति। [24]योगेश्वराः मन्त्रेशाः तेषां स्वामी प्रभुः अधिष्ठाता। [25]न तूपादानकारणम्। अतश्च निष्कम्पपदार्थसिद्धिरित्यर्थः।

किं च **स्वतन्त्रो** नान्यप्रेरितः। ततः प्रकृष्टतरस्येश्वरान्तरस्यासंभवादित्युक्तम्[26]। ततश्च काष्ठा [27]सैव इत्येतदपि सिद्धम्। **पशुपाशहा** परार्थकरणैक[28] स्वभावत्वात् पश्वनुग्रहकृदित्यर्थः। **तस्य** सर्वज्ञस्य सर्वेश्वरस्य परार्थप्रवृत्तेः **उक्तिः** आगमः। न [29]त्वसर्वज्ञत्वादिधर्मकस्य पुंसः, येन विप्रलम्भः [30]संभाव्येत। न [31]चाकृतक आगमः संभवति; रचनावत्त्वाद्[32] [33]अभिनव[34]कविविरचित-

---

[1] मतङ्ग० विद्या० ३. १—३.

[2] ०सूत्रात्सिद्धः — अ; सूत्रादेव प्रसिद्धम् — आ; ०सूत्रात्प्रसिद्धम् — ई, उ.

[3] 'किं च' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ए.

[4] सुप्रसन्नो व्याधिमल० — ऊ, ऋ, ॠ.

[5] अत्र इतिशब्दोऽधिकः — आ

[6] कुम्भकरणमुप० — अ, ई, उ, ऊ, ऋ, ॠ, ऌ, ए, ऐ.

[7] सिद्धः — अ.

[8] अपिशब्दो नास्ति — आ

[9] तन्त्रांशे० — अ, ऊ, ऋ, ए.

[10] ०करणं कुम्भ० — अ, ए.

[11] हरिहरहिरण्य० — ऊ, ऋ, ॠ; हरिशब्दो नास्ति — ऌ.

[12] सर्वस्य जगतः — ऊ, ऋ, ॠ.

[13] 'तदयुक्तम्' इत्यत्र 'युक्तम्' इति दृश्यते — अ, आ.

[14] तेषां सर्व० — अ, आ, ऐ; तेषां सगोचर०— — ऊ; तेषामगोचर० — ऋ, ॠ.

[15] ०शिवान्तपरिज्ञानात् —अ; ०शिवान्तवत्स्वपरिज्ञानात् — ऊ, ऋ, ॠ; ०शिवान्तवस्तुपरिज्ञानात् — ए; ०शिववस्त्वपरिज्ञानात् — ऐ.

[16] अयं तु सर्वज्ञः सर्वगोचरः सर्वसर्वज्ञ इत्यर्थः — ऊ, ऋ, ॠ.

[17] तुशब्दो नास्ति — आ, ई, उ, ए.

[18] 'सर्वज्ञत्वं' इत्येतन्नास्ति — ऐ.

[19] 'सः' इत्येतन्नास्ति — अ.

[20] योगसमभि० — ऐ.

[21] मतङ्ग० विद्या० ४. ५ उ०

[22] योगस्य — अ, ऋ, ऐ.

[23] शक्तयः स्वक्रियाः — अ; शक्तयस्स्वार्थ्याः — ऋ, ॠ; शक्तयः स्वाख्याः — ए, ऐ.

[24] योगीश्वररामन्त्रेशाः — अ; योगीश्वरा मन्त्रेशाः — आ, ई, उ, ऌ, ए, ऐ.

[25] नात्रोपादान० — ऐ.

[26] मतङ्ग० विद्या० ३. १–३ वृत्तौ।

[27] सैव परेभ्य एतदपि — ऊ, ऋ, ॠ.

[28] परार्थैककरण० — ऊ, ऋ, ॠ.

[29] त्वसर्वज्ञादिधर्मस्य — ऊ, ऋ, ॠ.

[30] संभाव्यते — अ, ऋ, ॠ, ए.

[31] चार्थकृतक — ऋ, ॠ.

[32] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.

[33] 'अभि' इत्येतन्नास्ति — अ.

[34] ०कविरचित० — ई, उ, ऊ, ऋ, ऌ.

वाक्यवत्। रचना हि कर्तारं न व्यभिचरतीति **पुंपाशेश्वरप्रकरणे** वक्ष्यामः[1]। सा चोक्तिः पत्यादिपदार्थावगमकत्वेन प्रमाणम्। अतः प्रागुक्तैः[2] प्रत्यक्षादिभिः [3]ईश्वरासत्ता[4]साधनायोपन्यस्तैर्न बाध्यते। कुतः?। यतः स्थूलानि तानि स्थूलविषयाणि[5] न [6]इन्द्रियातीतं वस्तु गोचरयितुं शक्नुवन्ति। [7]इन्द्रियातीतार्थविषयश्चागमः। ततो भिन्नविषयत्वान्न तैर्बाध्यते। स्वर्गादिसिद्धौ [8]"ज्योतिष्टोमेन यजेत [9]स्वर्गकामः" इत्यादिवाक्यवदिति[10]। ननु [11]कार्येऽर्थे [12]शास्त्रस्य प्रमाणत्वमुक्तम्। न[13] सिद्धे देवतादौ। एवमपि कार्यपर्यालोचनतयैव[14] स्वर्गादि[15]सिद्धिः। यथा [16]देवतासिद्धिस्तथोक्तं **नरेश्वरपरीक्षाप्रकाशे**[17] इति तत एवावधार्यम् ।१८–१९।।

एवं तर्हि वेदादीनामपि सर्वज्ञप्रणीतत्वेनैव प्रामाण्याभ्युपगमात्सर्वागमप्रामाण्यप्रसङ्गः। अत्रोच्यते — 'प्रमाणमेकम्' इत्यादि।

**प्रमाणमेकं तद्वाक्यं तथ्यमीश्वरभाषितम् ।**

सत्यम्। तान्यपि प्रमाणान्येव। न तु सर्वज्ञप्रयुक्तानि परस्परविरोधात्। यदाहुः[18] —

[19]"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा।
अथोभावपि [20]सर्वज्ञौ [21]मतिभेदः [22]कथं तयोः।।" इति।

न चासर्वज्ञप्रयुक्तान्यपि वाक्यान्यप्रमाणानि। [23]प्रकारविरोधेऽप्यु[24]पेयाविसंवादान्मित्रादिवाक्यवत्[25]। [26]इदं तु **प्रमाणमेकम्** [27]अद्वितीयं तस्य भगवतः सर्वज्ञस्य वाक्यम्। [28]यतः सर्वान्यागमाविरोधेन[29] —

---

[1] मतङ्ग० विद्या० ६. ३६, ३७ पू० वृत्तौ, १. ३० उ० — ३३ पू०. वृत्तौ च।
[2] मतङ्ग० विद्या० ३. ४–६ पू० वृत्तौ।
[3] ईश्वरसत्ता० — अ, ऋ, ॠ.
[4] ०साधकायोप० — आ, ई, उ, ए, ऐ.
[5] स्थूलविषयाः — ऐ.
[6] इन्द्रियातीतवस्तु — ॠ.
[7] इन्द्रियातीतविषय० — ऊ, ऋ, ॠ.
[8] शाबरभाष्ये उद्धृतः — ३. ६. ९. ३०; स्वर्गकामो यजेज्ज्योतिष्टोमेनेत्यादि — आ, ई, उ, ऌ.
[9] 'स्वर्गकामः' इत्येतन्नास्ति — ए.
[10] इतिशब्दो नास्ति — आ, ई, उ, ऌ, ए, ऐ.
[11] कार्यार्थे—अ, ऋ, ए, ऐ; कार्योऽर्थे—आ, ई, उ.
[12] प्रमाणमुक्तम् — आ, ऌ; प्रामाण्यमुक्तम् ऊ, ऋ, ॠ.
[13] सिद्धदेवतादौ — आ; असिद्धेर्देवतादौ —ऐ.
[14] ०लोचनयैव — ऊ, ऋ, ॠ.
[15] ०सिद्धिवद्यथा — ऊ, ऋ, ॠ; ०सिद्धौ यथा — ऌ.
[16] देवतास्तथोक्तं — ऊ, ऋ, ॠ; देवतास्ति तथोक्तं — ऐ.
[17] तृतीयकाण्डे श्लो० ९२ उ० विवरणे।
[18] रत्नकीर्तिनिबन्धावल्यां सर्वज्ञसिद्धौ (कुमारिल) भट्टवचनत्वेनोद्धृतः — पृ० ५.
[19] कपिलो यदि — अ; स्वगतो यदि — ॠ.
[20] सर्वज्ञाविति — अ, ऊ, ए.
[21] मितिभेदः — आ, ई, उ, ऌ, ऐ; मतभेदः — रत्नकीर्तिनिबन्धावलिपाठः !
[22] तयोः कथम् —अ, ई, उ, ऊ, ऋ, ॠ, ऌ, ए, ऐ.
[23] परस्परविरोधे० — ऊ, ऋ, ॠ.
[24] ०पेयविसंवादात् — अ; ०पेयान्यविसंवादात् — ऐ.
[25] ०त्पित्रादिवाक्यवत् — ऊ, ऋ, ॠ.
[26] अत्र 'सर्वम्' इत्यधिकम् — ऊ, ऋ, ॠ.
[27] 'अद्वितीयम्' इत्यत्र 'द्वितीयम्' इति दृश्यते — अ, आ, ऌ.
[28] 'यतः' इत्येतन्नास्ति—अ, आ, ई, उ, ऊ, ऌ, ए, ऐ.
[29] ०गमविरोधेन — अ, आ, ई, उ, ऌ.

[1]"बुद्धितत्त्वे स्थिता [2]बौद्धा [3]गुणेष्वेवार्हताः स्थिताः ।"

इत्यादिसर्वान्यागमप्राप्यस्थानविशेषप्रदर्शनपूर्वं [4]तदनधिगतार्थाधिगमरूपत्वात्, [5]प्रमाणान्तरेणाबाधितत्वाच्च **तथ्यम्** इति दर्शितमस्माभिः सर्वागम[6]प्रामाण्योप[7]न्यासे **रौरववृत्तिविवेके** इति तत एवावगन्तव्यम्[8] ।

तस्मिंश्चागमे पञ्चमन्त्रतनुरीश्वरः पठ्यत इति [9]तत ईश्वरसिद्धिः । न चापीतरेतराश्रयदोषः । [10]ईश्वरसिद्धिरागम[11]प्रतिपाद्यत्वादेव । आगमस्यात्र अप्रामाण्यशङ्का तु ईश्वरप्रयुक्तत्वेन [12]प्रतिक्षिप्यत इत्यविरोधः ॥

[13]तदियता प्रतिज्ञापूर्वं[14] बाधकाभावाद् अनुमानयोगि[15]प्रत्यक्षागमाख्यसाधकसद्भावाच्च जगन्नित्यत्वेऽपि विशिष्टधर्मयुक्तं पतिपदार्थं प्रसाध्य, तस्य लयभोगाधिकारभेदं प्रतिपादयति — 'तस्मादेव' इत्यादि ।

**तस्मादेव परं तत्त्वमचलं सर्वतोमुखम् ॥२०॥**

तस्य लयभोगाधिकारभेदेन तत्त्वत्रयपूर्वप्रतिपत्तेरित्यवधारणार्थः । **परं तत्त्वं** लयतत्त्वं प्रतिपत्तव्यम् । तच्च [16]**अचलं** न परिणामि । परिणामित्वे हि मृदादिवदचैतन्यप्रसङ्गोऽत्रेत्युक्तम्[17] ।

कथं तर्हि ततो भोगाधिकारतत्त्वयोरुद्भवः, तत्रैव च तयोर्लय इति वक्ष्यति[18] । भेदे ह्यसावुपपद्यते । न च विद्येश्वरादिभेदवदणुभेदनिबन्धनोऽसौ । तत्त्व[19]त्रयस्याप्यभेदेन वक्ष्यमाणत्वात् । प्रोक्तं च श्रीमत्**पौष्करे**[20]—

"एकमेव परं तत्त्वं स्वेच्छया च त्रिधा भवेत् ।" इति ।

नापि [21]परिणामभेदादिदम् । तस्य श्रुत्यैवात्र निरस्तत्वात् । न चापि [22]विवर्तताश्रयोऽसौ । सत्यत्वादेव तदाकारस्य । असत्यरूपोपग्राहिता [23]हि विवर्तता[24] ।

---

[1] इदमर्धं मतङ्गवृत्तौ विद्यापादे १७. ५९ उ०, ६० पू० व्याख्याने, तथा सार्धत्रिशतिकालोत्तरे दीक्षाप्रकरणे श्लो० ३०, ३१ व्याख्याने च सर्वज्ञानोत्तरस्थत्वेनोदाहृतम् । परं तु मुद्रितसर्वज्ञानोत्तरे नोपलभ्यते ।

[2] बुद्धाः — अ.

[3] गुणेषु त्वार्हताः — आ, ऊ, ॠ, ॠ; गुणेष्वप्यार्हताः — ए.

[4] तदनभिगतार्थाविगम० — ऐ.

[5] प्रमाणत्वेनाबाधित० — अ, आ, ई, उ, ॡ, ए; प्रमाणत्वेन व्याधित० — ऐ.

[6] प्रमाणोप० — आ, ई, उ, ए, ऐ.

[7] ०न्यासेन रौरव० — ऊ, ॠ, ॠ.

[8] ०गन्तव्यः — अ, आ.

[9] 'ततः' इत्येतन्नास्ति — ऊ, ॠ, ॠ.

[10] प्रागुक्तत्रयतोऽवगतिकारकत्वादेवागमस्यात्र प्रामाण्यम् । अप्रामाण्य० — ऊ, ॠ, ॠ.

[11] ०प्रतिपाद्यसिद्धिरेकत्वादेवागमस्यात्र प्रामाण्यम् । प्रामाण्यशङ्का — ऐ.

[12] प्रक्षिप्यते — ई, उ.

[13] तदीयता — अ, आ, ऐ.

[14] ०पूर्वे — ऊ.

[15] 'प्रत्यक्षागम' इत्यनन्तरं २९तम श्लोको दृश्यते ऊ, ॠ, ॠ, कोशेषु । मध्ये विद्यमानो भागः लुप्तः । पत्रद्वयं लेखनं विना दृश्यते ।

[16] अचलमपरिणामि — ए.

[17] मतङ्ग० विद्या० ३. १ — ३ वृत्तौ.

[18] मतङ्ग० विद्या० २५. ६४, ६५ वृत्तौ ।

[19] ०त्रयस्याप्रभेदेन — अ.

[20] मुद्रिते पौष्करे विद्यापादे नोपलभ्यते

[21] परिणामिभेदात् — आ, ॡ

[22] विवर्तनाश्रयोऽसौ — अ.

[23] हिशब्दो नास्ति — अ, आ.

[24] विवर्तः — ए, ऐ.

[1]यतः सत्यमेव तदाकारः। अत एव न मुख्योऽसौ [2]लयः [3]पुनरुद्भवो वा। अपि तु उपचरित एव। यद्वक्ष्यति[4] — "[5]तनुस्तस्योपचारेण" इति।

शक्तयो हि कर्तव्यतिरस्कारेण स्वात्मन्यव[6]स्थिताः लयतत्त्वाभिधानमवस्थाविशेषमुद्दीपयन्त्यो निष्कलादिपद[7]प्रवृत्तावुपाधिभावं प्रतिपद्यन्ते। यदा तु ताः[8] कार्यसंपादनप्रवृत्ताः, न[9] तत्प्रयोगभूमिं प्राप्तास्तदा पालनप्रवृत्तत्वाद् भोगतत्त्वाभिधानमवस्थाविशेषमादर्शयन्त्यः, सकलनिष्कलादिपदप्रवृत्तौ कारणतामुपयान्ति। यदा पुनः कार्यप्रयोगदशामनुप्राप्तास्तदाधिकारतत्त्वाभिधानमवस्थान्तरमवभासयन्त्यः सकलादि[10]पदप्रवृत्तौ हेतुतां [11]व्रजन्ति। इति शक्तीनां प्रवृत्तिभेदकल्पनयात्र भेदो न पारमार्थिकः। यदाहुः[12] —

"शक्तोद्युक्तप्रवृत्तश्च कर्ता त्रिविध इष्यते।
शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः॥" इति।

ननु भेदोपचारस्य प्रयोजनमत्र वक्तव्यम्। यदाहुः[13] —

"नर्ते [14]प्रयोजनादिष्टं मुख्यशब्दार्थलङ्घनम्।" इति।

उच्यते। दीक्षादिनाधिकारतत्त्व[15]योजितस्य, भोगाख्यतत्त्वयोजितस्य, [16]ततोऽपि लयतत्त्वयोजितस्य अणोः स्थूलसूक्ष्मपरशक्त्यभिव्यक्तिभेदेन वास्तव एवात्र भेद इति[17] दर्शयितुं [18]संस्कारकस्यात्र भेदोपचारः कृत इति न निष्प्रयोजनः। यद्वक्ष्यति **योगपादे**[19] —

"योगवीर्यबलोपेता दीक्षया वा नियोजिताः।" इति।

तथा हि — विद्यातत्त्वादनन्तभुवनादूर्ध्वं तत्त्वभुवनात्मकानि[20] सदाशिवनिवृत्तिप्रतिष्ठाविद्याशान्तिबिन्दुपरमशिवलक्षणानि सप्तैव क्रमेणातिशयवन्ति [21]विमोक्षस्थानानि। यद्वक्ष्यति **योगपादे**[22] —

"मोक्षः सप्तप्रकारोऽयं विभागेनोपवर्णितः।
एभ्यो [23]ह्येकः परः सूक्ष्मः कार्यकारणगोचरात्॥
अतीतः परिपूर्णश्च स्वतन्त्रः सर्वतोमुखः।

---

[1] यत एव सत्यस्तदाकारः — ऌ; यतस्सत्यमत एव तदाकारः — ऐ.
[2] 'लयः, पुनरुद्भवो वा' इत्येतन्नास्ति — ऐ.
[3] पुनरुद्भावो — ई, उ.
[4] मतङ्ग० विद्या० ४. १४ पू०
[5] तनुर्यस्योप० — आ, ई, उ, ए.
[6] ०स्थितलय० — अ.
[7] ०प्रयुक्तावुपाधि० — अ.
[8] यदातुराः — अ.
[9] अत्र चशब्दोऽधिकः — आ, ई, उ, ऌ, ए, ऐ.
[10] 'पद' इत्येतन्नास्ति — अ, आ.
[11] प्रव्रजन्ति — आ; व्रजति — ई, उ, ऐ.
[12] शतरत्नसंग्रहे २२ तमे पृष्ठे अयं श्लोकः मृगेन्द्रसूत्रत्वेनोद्धृतः। परं तु मुद्रितमृगेन्द्रे नोपलभ्यते.।
[13] हेतुबिन्दुटीकायामुदाहृतम् पृ०. १२.
[14] प्रयोजनमिष्टं मुख्य० — ऌ; प्रयोजनादिष्टमुख्य० — ई, उ, ए, ऐ.
[15] ०योजिताद्भोगाख्य० — अ, ऌ.
[16] ततो विलय० — अ, आ, ई, उ, ऌ, ऐ.
[17] अत्र 'ननु' इत्यधिकम् — आ, ऐ.
[18] संस्कार्यस्यात्र — ऐ.
[19] मतङ्ग० योग० शिवतत्त्वोपलब्धिपटले श्लो० ५९ पू०.
[20] ०भुवनात्मिकानि — अ, ए.
[21] 'वि' इत्येतन्नास्ति — ऐ.
[22] मतङ्ग० योग० शिवतत्त्वोपलब्धिपटले श्लो० ६५ —६७ पू०.
[23] ह्येकपरं सूक्ष्मं कार्य० — ऐ.

[1]एकस्त्वनीश्वरः स्वस्थः षडन्ये सेश्वरा मताः ।।
संरुद्धशक्तयश्चान्ये स्थूलभेदाः प्रकीर्तिताः ।" [2]इति ।

ततः संस्कार्याणुव्यपेक्षया[3] उत्कर्षक्रमेण[4] वक्ष्यमाणविद्येश्वराणामिव वास्तव एव भेदो ज्ञेयः । [5]संस्कारकस्य भेदः कल्पित इत्यस्य च [6]प्रकरणस्य[7] समुदायार्थः ।

अथ यथानेकशरीरनिर्माणेन योगी,

"[8]युगपत्स्त्रीसहस्राणि भुङ्क्ते प्राकाम्यशक्तितः ।" इति ।

एवं परमपि [9]बिन्दुतत्त्वनिर्माणकार्याधिष्ठानेन भोगाधिकार[10]तत्त्वादिभेदमुपयातीति । तदपि न । यतः **सर्वतोमुखम्** । [11]योगिनो ह्यसर्वतोमुखत्वाद्युक्तैव[12] शरीरादि[13]व्यपेक्षयाधिकारादि-सामर्थ्यव्यक्तिः । भगवतस्तु सर्वत्र [14]सर्वदा चाप्रतिहतशक्तित्वेन सर्वतोमुखत्वाच्छरीराद्यनुपयोगे[15] कुतस्तद्भेदादत्र भेदसिद्धिः ।।२०।।

किं च —

**यस्मिन्प्राप्तस्य न पुनर्जन्मेहास्ति कदाचन ।**

**यस्मिन्** तत्त्वे **प्राप्तस्य** संयोजितस्य **न पुनरिह**[16] [17]लयेऽपि **जन्म** विद्यते । भोगाधिकारतत्त्व-प्राप्तानां त्विहास्मिंस्तत्त्वे दीक्षया जन्म विद्यत एव । [18]तदेतदेवंविधं [19]परं लयाभिधानं तत्त्वम् ।।

अथ भोगाख्यं तत्त्वम् । तच्च परमार्थतो [20]लयतत्त्वादव्यतिरेकान्न भेदेन दर्शयितुं शक्यमित्य-धिष्ठेयद्वारेणोच्यते — 'इत्थं गुणवत' इत्यादि ।

**इत्थं गुणवतस्तस्मात्तत्त्वात्तत्त्वमनिन्दितम् ।।२१।।**
**स्फुरद्रश्मि[21]सहस्राढ्यमधस्ताद्व्यापकं महत् ।**
**परिभाषितमित्येतन्नाम्ना बिन्दुरिहोच्यते ।।२२।।**
**[22]चतुर्धावस्थितं वेद्यं प्रेरकं जगतोऽव्ययम् ।**

एवमचलत्वादिगुणविशिष्टात्[23] **तस्मात्** [24]**परात् तत्त्वाद्** [25]**अधस्ताद्** बिन्द्वाख्यं **तत्त्वम्** उच्यते ।

---

[1] एको निरीश्वराः — योगपादपाठः ।
[2] इतिशब्दो नास्ति — ऐ.
[3] अत्र 'यत्' इत्यधिकम् — अ.
[4] उत्कर्षः क्रमेण — अ.
[5] संस्कार्यस्य — ऐ.
[6] कारणस्य — अ.
[7] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[8] युगपदेव स्त्री० — ऐ; आकरो न लभ्यते ।
[9] 'बिन्दु' इत्येतन्नास्ति — अ, आ, ई, उ, ऌ, ए.
[10] ०भेदत्वादि भेद० — ए.
[11] भोगिनो — अ.
[12] ०त्वादुक्तैव — अ, आ, ए.
[13] ०व्यपेक्षाधिकारादि० — अ.
[14] सदा चाप्रति० — ए; सर्वदाप्रति० — ऐ.
[15] ०रीराद्युपयोगे — ऐ.
[16] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ऌ, ए.
[17] लयोऽपि — आ.
[18] तदेवंविधं — आ, ई, उ, ए.
[19] 'परं' इत्येतन्नास्ति — अ, ऌ.
[20] लयतत्त्वाद्व्यतिरेको न — अ.
[21] ०सहस्राढ्यं महस्तद्व्या० — मु, उ.
[22] चतुर्धा वा स्तितो वेद्यं — ओ.
[23] एवमचलादिगुणविशिष्टाः — ऐ.
[24] परतत्त्वात् — ऐ.
[25] अस्माद् — ए

तच्च **अनिन्दितम्** [1]अत्यन्तं शुभत्वात्। अत एव [2]च **स्फुरद्रश्मिसहस्राढ्यम्** [3]अतिदीप्तिमत्। **व्यापकं** च स्वकार्यव्याप्तेः। यद्वक्ष्यति[4] —"योनिः स्यादक्षराणाम्" इति। [5]**महत्** च [6]अनेककार्यशक्त्यात्मकम्। अत एवोपादानकारणं[7] मायादिवत्।

ननु भोगाख्यं तत्त्वमिति वक्तुमुपक्रम्य बिन्द्वात्मनो महामायाख्यस्यास्य संहितान्तरेषु[8] कुण्डलिनीत्वेन प्रसिद्धस्य वर्णनमत्यन्तभिन्नत्वात् "[9]सागरं गन्तुकामस्य हिमवद्गमनोपमम्।" [10]अयुक्तमेव। न च [11]तदेवैतदिति युज्यते वक्तुम्। बिन्दोरत्र तत्पाल्यत्वेन वक्ष्यमाणत्वात्। यद्वक्ष्यति[12] —

"चतुर्मूर्तिमयं शुभ्रं यत्तत्सकलनिष्कलम्।
तस्मिन्भोगः समुद्दिष्टः पत्युर्विश्वस्य सर्वदा॥" इति।

सत्यमेतत्। भोगाख्यं तत्त्वमेतत् [13]स्वशास्त्रपरिभाषयैव केवलं [14]निष्कलतत्त्वात्परमार्थतो भेदाभावेऽपि भेदेन **परिभाषितम्** इति। न तद्भेदेन संयोजनोपासनाविषयता[15]मुपयातीत्यतो हेतोरेतद्भोगाख्यं तत्त्वं "**मञ्चाः क्रोशन्ति**" इतिवदधिष्ठेयनाम्ना **बिन्दुरिहोच्यते**; तत्र संयोजिता [16]भोगाख्यतत्त्वसंयोजिताः, [17]तद्ध्यायिनश्च भोगाख्यतत्त्वध्यायिन इति दर्शयितुम्। न तु परमार्थतः[18] तद्बिन्दुस्वभावमित्यर्थः।

अत्र [19]च केवलेशानमूर्तितयाधिष्ठातृत्वेनाभिध्येयो भगवानिति गुरवः। अनाकारस्य ध्यानासंभवात्। यदाहुः[20] —

"[21]आकारवांस्त्वं नियमादुपास्यो
[22]न वस्त्वनाकारमुपैति बुद्धिः।" इति।

[23]सदाशिवतत्त्वाकाराभिध्यानं तु ततोऽधः पृथिव्यन्तं यावदधिष्ठातृ[24]त्वाच्च तत्र सर्वमुपसंहृतं[25] यत इति वक्ष्यामः[26]। [27]दृष्टं च शुक्लकृष्णाद्याकारभेदेन [28]शान्त्याभिचारादिफलभेदप्रदो भगवानित्यत्रापि प्रतिस्थानमधिष्ठातृतया भिन्नाकार एवोपास्यस्तत्तत्पदप्राप्तिकामैरिति। प्रोक्तं च श्रीमत्**पौष्करे**[29] —

---

[1] अत्यन्तशुभ० — अ; अत्यन्तं शुद्ध० — ई, उ, ए; अत्यन्तशुद्ध० — लृ, ए.
[2] चशब्दो नास्ति — अ, आ, ई, उ, लृ, ए.
[3] अतिदीप्तमव्यापकं — अ.
[4] मतङ्ग० विद्या० ३. ३५ पू०.
[5] महश्च — अ.
[6] अनेन कार्य० — ए.
[7] ०कारणत्वं — ऐ.
[8] पौष्करे विद्यापादे पतिपटले १० उ०, ११ पू०
[9] आकरो न लभ्यते।
[10] युक्तमेव — अ, ए.
[11] तदेव तदिति — आ, ई, उ, ए, ऐ.
[12] मतङ्ग० विद्या० ३. ३४.
[13] 'स्व' इत्येतन्नास्ति — अ.
[14] निष्कलत्वात्पर० — ए.
[15] ०मुपैतीत्यतो—आ, ई, उ, लृ, ए; मुपैतीत्यत एतद्भो० — ऐ.
[16] भोगाख्यं तत्त्वं — ए.
[17] तद्ध्यापिनश्च — अ.
[18] अत्र 'अतः' इत्यधिकम् — आ, ई, उ, ए.
[19] चशब्दो नास्ति — लृ.
[20] इदमर्धं 'तदुक्तं योगसंग्रहे' इति योगसारे ४९ तमे पृष्ठे उद्धृतम्.
[21] आकारवांस्तु नियमा० — ऐ.
[22] न वस्तु नाकार० — आ.
[23] सदाशिवत्वाकाराभि० — ए; सप्तशिवतत्त्वाकाराभि० — ऐ.
[24] ०त्वात्तच्च तत्र — अ.
[25] ०संश्रितं — ए.
[26] मतङ्ग० विद्या० ३. ३१ पू० वृत्तौ.
[27] दृष्टश्च — अ, आ, ई, उ, ए.
[28] शान्त्यभिचारादि० — ऐ.
[29] मुद्रितपौष्करे विद्यापादे नोपलभ्यते।

"[1]बिन्द्वात्मकः शिवो यत्र नादात्मा ज्योतिराकृतिः"। इति।

तत्त्वानां द्रव्यान्तरत्वेऽप्यस्य ततो न [2]तत्त्वान्तरत्वम्। अपि तु सह मलेन पशुतत्त्वमिव[3] सह बिन्दुना [4]भोगाख्यतत्त्वमेवोच्यते। तदिदमुक्तं भगवता महामायात्मकप्रणवपाद[5]पञ्चमव्याप्तिप्रदर्शनाय[6] **खेटकबालेन**[7] **मन्त्रवार्तिके**[8] —

"[9]निष्कलशंभोरर्वाग्यानीह [10]निरञ्जनानि वस्तूनि।
पञ्चमपादेन पुनस्तानि [11]गृहीतान्यतीव शुद्धेन॥" इति।

विद्या[12]तत्त्वं तु एतत्कार्यतया [13]तत्त्वत्वेन प्रोक्तमिति तत्प्रकरण एव दर्शयिष्यामः[14]।

[15]तच्च न केवलं [16]बिन्द्वात्मनैव; यावच्छान्त्यादिभेदेन [17]**चतुर्धावस्थितमपि** ध्येयं [18]शान्त्यादिपदप्राप्तिकामैरिति। [19]स्वरूपेण तु **प्रेरकं जगतः**; शुद्धविषयस्य शरीरादेरुत्पादकं तदुपादानकारणत्वेन ध्येयमित्यर्थः। **अव्ययं** च न सर्वात्मना क्षीरदधिन्यायेन[20] परिणाममेति। अपि तु एकदेशेन मायादिवदिति। एवं बिन्द्वात्मकाधिष्ठेयभेदतः संयोजनोपासनाभेदसिद्धेर्लयतत्त्वाद्भेदेन [21]भोगाख्यं तत्त्वं प्रतिपादितम्॥

तदधुना भुवनात्मकाधिष्ठेयभेदेनापि सृष्टिक्रमेण प्रतिपाद्यते — 'शान्तिभेदः स्थित' इत्यादि।

**शान्ति[22]भेदः स्थितः पूर्वं यत्रासौ [23]परमेश्वरः॥२३॥**
**[24]शान्तमूर्तिरिति ख्यातो वृतः शान्तैर्महात्मभिः।**
**सहस्रादित्यसंकाशैर्विस्फुरद्भिः समन्ततः॥२४॥**
**कोटीशतसहस्रैस्तु [25]स्ववीर्यगुणशालिभिः।**

**यत्रासौ** भोगतत्त्वाभिधानः शान्तमूर्तितया[26] [27]केवलतत्पुरुषाकारत्वेन [28]तत्पदध्यायिनां[29] **ख्यातः**। **वृतश्च** शान्तैर्महात्मभिः तत्पदध्यायिभिरित्युच्यते। दीक्षया वा तत्पदयोजितैः। यदुक्तं **सूक्ष्म-**

---

[1] बिन्द्वात्मकशिवो — अ, ऐ.
[2] तत्त्वान्तरम् — आ.
[3] ०तत्त्वमिह — अ.
[4] भोगाख्यं तत्त्व० — ई, उ, ए.
[5] ०पञ्चकव्याप्ति० — अ, लृ, ऐ.
[6] ०प्रदर्शाय — आ.
[7] खेटकबलेन — अ; घोटकपालेन — ऐ.
[8] ग्रन्थोऽयं नोपलभ्यते
[9] निष्कलं शंभो० — ई, उ.
[10] नीराञ्जनानि — अ.
[11] गृहीतान्यतिशुद्धेन — ए.
[12] ०तत्त्वे तत्कार्य० —ए.
[13] तत्त्वेन — आ, ई, उ, ए.
[14] मतङ्ग० विद्या० ७. २४ — ३० अवतारिकायाम्।
[15] न तच्च केवलं — आ, ई, उ, ए.
[16] बिन्द्वात्मकेनैव — लृ; विद्यात्मनैव — ए.
[17] चतुर्धा वा स्थितमपि — अ; चतुर्धा व्यवस्थितमपि — लृ.
[18] शक्त्यादिपद० — आ.
[19] स्वरूपे न तु — ऐ.
[20] दधिक्षीरन्यायः १, ४. २६ ब्रह्मसूत्रश्रीकरभाष्ये १८० तमे पृष्ठे उदाहृतः।
[21] भोगाख्यतत्त्वं — आ, ई, उ, लृ, ए, ऐ.
[22] ०भेदस्थितः — उ.
[23] पारमेश्वरः — उ.
[24] शान्तिमूर्ति० — मु, उ.
[25] स्ववीरगुण० — मु, उ.
[26] ०मूर्ततया — ऐ.
[27] केवलं तत्पुरुषा० — आ, ई, उ, ए, ऐ.
[28] तत्पाद० — आ, ई, उ.
[29] ०ध्यायिना — अ.

**स्वायंभुवे**[१] —

"यो यत्राभिलषेद्भोगान्स तत्रैव नियोजितः ।
सिद्धिभाङ् मन्त्रसामर्थ्यात्" इति ।

यद्दर्शयति **'स्ववीर्यगुणशालिभिः'** इति । [२]न तु वक्ष्यमाणनयेन[३] अङ्गब्रह्मादिवत् परमेश्वरवीर्यात्मकैरित्यर्थः । [४]तच्छान्तिभुवनम् । वृतपदेन चात्र प्राप्तानां तेषामणूनां तत्तद्भुवनात्मकानि[५] शरीराणीति प्रकाशयति । अन्यथा व्यापकत्वादात्मनां [६]परस्परं वृतत्वासंभवात् । अत एव तच्छरीराणां [७]भास्वरत्वात् **सहस्रादित्यसंकाशै**रित्युपपद्यते ।

ततोऽनन्तरं भुवनम् — 'विद्याख्यमपरं तस्माद्' इत्यादि ।

**विद्याख्यमपरं तस्मात्तेजोमूर्तेर्महात्मनः ॥२५॥**
**स्थानं तत्तेजसा दीप्तं कोटचग्रेण समन्ततः ।**
**व्याप्तं भुवनपालानां विश्वरूपकृतात्मनाम् ॥२६॥**

अत्र तु[८] तत्त्वं तेजोमूर्तितया केवलाघोराकारेण अधिष्ठातृतया ध्येयं तत्पदप्राप्तिकामैः साधकैः । तच्च भुवनं **व्याप्तं भुवनपालानां कोटचग्रेण** । अत एव तु[९] तत्रापि तन्मयशरीरसिद्धिः । अन्यथा व्याप्तेरसंभवादित्युक्तम्[१०] । अत एव विश्वरूपो विचित्ररूपोऽत्यन्तोद्भटो भैरवाकारः कृतः आत्मा दीक्षादिसंयोजनतया[११] शरीरं येषां, तैः कोटचग्रेण व्याप्तमुक्तम् ॥२५–२६॥

'ततोऽधस्तात् प्रतिष्ठाख्यम्' — इत्यादि ।

**[१२]ततोऽधस्तात्प्रतिष्ठाख्यं स्थानमत्यद्भुतोदयम् ।**
**तत्राप्यमृतमूर्तेस्तु परिवारोऽमृतात्मकः ॥२७॥**
**लक्षायुतसहस्राणि यत्रामृतवपुष्मताम् ।**
**शिवानां शिवमार्गेऽस्मिन्व्याख्यातं परमार्थतः ॥२८॥**

**ततः** अनन्तरं **प्रतिष्ठाख्यं** भुवनम् । **तत्र अमृतमूर्तेः परिवारः** इति केवल[१३]वामदेवमूर्त्यात्मकं [१४]तत्पदमभिध्येयं तत्पदसाधकैः । अत्रापि परिवारशब्देन तत्पदप्राप्तानां तद्भुवनमयानि शरीरादीनि [१५]दृश्यन्ते । अन्यथा [१६]परिवरणानुपपत्तेरित्युक्तम्[१७] ॥ २७–२८॥

---

[१] स्वायम्भुवे ३९.२.
[२] ननु — अ.
[३] मतङ्ग० विद्या० ३ — ३५ वृत्तौ ।
[४] तद्वचक्तिभुवनम् —ऐ.
[५] ०द्भुवनात्मिकानि — अ; ०द्भुवनजानि — ऐ.
[६] परस्परवृतत्वा० — लृ.
[७] भास्वरात् — अ.
[८] अत्र 'भोग' इत्यधिकम् — ऐ.
[९] 'तु' इत्येतन्नास्ति — ऐ.
[१०] मतङ्ग० विद्या० ३. २३ उ० — २५ पू० वृत्तौ.
[११] ०संयोजनया — अ, आ, ई, उ, लृ, ए.
[१२] तदधस्ता० — मु, उ, ओ.
[१३] ०वामदेवाकारशक्त्यात्मकं — ऐ.
[१४] तत्तत्पदाभिध्येयं — अ; तत्पदमपि ध्येयं — ऐ.
[१५] दृश्यते — अ.
[१६] परिवारानुप० — ऐ.
[१७] मतङ्ग० विद्या० ३. २३ उ० — २५ पू० वृत्तौ ।

ततः सृष्टिक्रमेण [1]निवृत्तिभुवनं दर्शयितुं महाप्रलयकालभाविना[2] तदधो[3]र्वतिसदाशिवभुवनोपसंहारक्रमेणापि [4]दर्श्यते — 'विनिवृत्ताधिकारस्य' इत्यादि।

**विनिवृत्ताधिकारस्य पञ्चमन्त्रमहातनोः ।**
**गच्छतः परमां काष्ठां [5]विश्रामो यत्र धीमतः ।।२९।।**
**तन्निवृत्तिरिति ख्यातं स्थानं स्थानवतां [6]वरम् ।**
**स्थिरमूर्तिरमोघात्मा यत्रासौ परमेश्वरः ।।३०।।**

महाप्रलयनिमित्तं तत्त्वभुवनादिकार्योप[7]संहारसमुपसंहृत[8]तदधिष्ठातृ[9]लक्षणाधिकारतत्त्वावस्थात्मनः सदाशिवभट्टारकस्य ऊर्ध्वभाविभोग[10]तत्त्वव्यवस्थितनिवृत्त्यादि[11]भुवनोपसंहारक्रमेण लयतत्त्वाख्यां [12]**परमावस्थां** [13]व्रजतो **यत्र** [14]**विश्रामः** तदुप[15]संहारात्मको विलम्बः प्रथमः। तदुपसंहारात्मक[16]निवृत्तिस्थानत्वान्निवृत्त्याख्यं[17] [18]भुवनम्। **स्थानवतां** च दीक्षादिना तद्भुवन[19]प्राप्तानामणूनां **च**[20] [21]**वरणीयम्**। अत एव[22] तन्नि[23]वासिनामत्र शरीरसिद्धिः। अन्यथा व्यापकत्वादात्मनां तत्र [24]स्थानवत्त्वानुपपत्तेः। [25]**यत्रासौ** भोगाख्यतत्त्वरूपः **परमेश्वरः** स्थिरमूर्तिः केवलसद्यो[26]जाताकारो[27]ऽधिष्ठातृतयाभिध्येयस्तत्पदप्राप्ति[28]कामैस्तन्निवृत्तिभुवनम् ।।२९—३०।।

अधुना प्रसङ्गतोऽत्र भुवनोपसंहारक्रमोऽप्युच्यते — 'तस्मिंस्थित्वा' इति।

**तस्मिंस्थित्वा प्रतिष्ठाति देवोऽमृततनुः शिवः ।**

[29]सः सदाशिवभट्टारकः संहारकाले सदाशिवभुवनो[30]पसंहारेण [31]तदाकारोपास्यमानतामप्यात्मनः

---

[1] निवृत्तेर्भुवनं —ऐ.
[2] ०भाविनां — आ, ई, उ.
[3] ०र्वतिना सदा० — लृ.
[4] दृश्यते — अ, आ, लृ, ए, ऐ.
[5] विश्रामोऽन्यत्र — ऊ; विश्रमो यत्र — ओ.
[6] ध्रुवम् — ऊ, ऋ, ॠ.
[7] ०संहारतस्तमुप० — ऊ, ऋ, ॠ; ०संहारमुप० — ए.
[8] ०तत्प्रतिष्ठातृ० — ए.
[9] ०विलक्षणाधिकारतत्त्वावस्थस्य सदा० —ऐ.
[10] ०तत्त्वस्य व्यवस्थित० — ए.
[11] ०भुवनतन्निवास्युपसंहार० — ऊ, ऋ, ॠ.
[12] परामवस्थां — ऊ, ऋ, ॠ.
[13] गमिष्यतो — आ, ई, उ, लृ, ए.
[14] विश्रमः — ऊ, ऋ ॠ.
[15] ०संहाराविलम्बः — ऊ, ऋ, ॠ.
[16] ०निवृत्तिः स्थानत्वात् — अ, ए; ०निवृत्तिस्फारत्वात् — ॠ.
[17] निवृत्ताख्यं — अ.
[18] भुवनस्थान० — अ; 'भुवनं स्थानवतां च' इत्यारभ्य 'यत्रासौ भोगाख्य' इत्येतत्पर्यन्तं नास्ति — ए; 'भुवनम्' इत्येतन्नास्ति — ऐ.
[19] प्राप्तानामप्यणूनां — ऐ.
[20] चशब्दो नास्ति — ऊ, ऋ, ॠ.
[21] करणीयम् — आ, ई, उ, ऐ.
[22] अत्र चशब्दोऽधिकः — आ, ई, उ, ऊ, ऋ, ॠ.
[23] ०वासितानामत्र — आ, ई, उ, ऐ.
[24] स्थानवत्तत्त्वानुप० — अ; स्थानत्वानुप० — लृ.
[25] यत्र चासौ — अ, ई, उ, ऊ, ऋ, ॠ, लृ, ऐ.
[26] ०जाताधिकारो — अ, आ, ई, उ, ए.
[27] -ऽधिष्ठेयतया० — ऊ, ऋ, ॠ.
[28] ०कामैस्तन्निवृत्तिर्भुवनम् — अ; ०कामैर्निवृत्तिर्भुवनम् — ऐ.
[29] 'सः' इत्येतन्नास्ति — अ, आ, ई, उ, लृ, ए, ऐ.
[30] ०संहारेणातदाकारो० — आ, ई, उ.
[31] तदाकारतोपास्य० — लृ.

[1]संहृत्य क्रमेण निवृत्त्यादिभुवनोपसंजिहीर्षुः, तत्र निवृत्तिभुवने प्रागुक्ततदधिष्ठातृरूपोपास्यमानाकारत्वेन[2] स्थिरमूर्तितया स्थित्वा [3]सह तत्तद्भुवनतत्पतिभिः[4] तामप्युपसंहृत्य; तदुपसंहारस्य भुवनाद्युप[5]संहारनान्तरीयकत्वात्तेन विना तेषां स्थित्याद्यनुपपत्तिरिति[6] वक्ष्यामः[7]। [8]ततः [9]**प्रतिष्ठाति** [10]प्रतिष्ठेव आचरति[11]। [12]तदधिष्ठायक[13]प्रागुक्तामृतवपुःस्वरूपतया तदानीमधिकारिणा[14] ध्येयः[15] संपद्यत इत्यर्थः ॥

'एवं क्रमाद्' इत्यादि ।

**एवं क्रमात्पुदीप्ताङ्गो [16]विद्यादेह[17]समाश्रयात् ॥३१॥**

**एवम्** अनेन[18] क्रमेण तामपि मूर्तिं सह [19]तद्भुवनतत्पालैः [20]समुपसंहृत्य [21]विद्याभुवने [22]प्रागुक्त-[23]**विद्यादेह**संश्रयतः तेजोमूर्तितया [24]उपास्यः संपद्यते ॥३१॥

'तत. शान्तत्वम्' इत्यादि ।

**ततः शान्तत्वमायाति [25]शान्तौ स परमेश्वरः ।**

**ततः** [26]प्रागुक्तनयेन तामपि सह [27]तद्भुवनतद्भुवनेशै. [28]समुपसंहृत्य [29]शान्तिभुवने तदधिष्ठातृ[30]रूपोपास्यमान[31]शान्तमूर्तितयोपास्यो भवति ॥

---

[1] समुपसंहृत्य — ऊ, ॠ, ॠ.
[2] ०काररूपत्वेन — अ.
[3] सहभुवनतत्प्रतिबिम्बमप्युपसंहृत्य—ऊ, ॠ, ॠ.
[4] ०भुवनपतिभिः — आ, ई, उ, ऐ.
[5] ०संहारानान्तरीयकत्वा० – आ, ई, उ; ०संहारनान्तरीयत्वा० — ऊ, ॠ, ॠ; ०संहारानान्तरीयत्वा० — ॡ; ०संहारानन्तरीयकत्वा० — ए, ऐ.
[6] ०नुपपत्तेरिति — अ, आ, ई, उ, ॡ, ए, ऐ.
[7] मतङ्ग० विद्या० २५, ६४, ६५ वृत्तौ ।
[8] 'ततः' इत्येतन्नास्ति — अ, ई, उ, ॡ, ए, ऐ.
[9] प्रतिष्ठादि — अ, ऐ; प्रतिष्ठादीति — आ.
[10] 'प्रतिष्ठेव' इत्यत्र 'प्रतिष्ठां' इति दृश्यते — अ, आ, ई, उ, ॡ, ए; 'प्रतिष्ठेव' इत्येतन्नास्ति —ऐ.
[11] 'आचरति' इत्यस्य स्थाने 'याति' इति दृश्यते — अ, आ, ई, उ, ॡ, ए, ऐ.
[12] तत्तदधिष्ठायक०—अ; देवस्तदधिष्ठायक० – ऐ.
[13] मतङ्ग० विद्या० ३. २७, २८.
[14] ०कारिणां — ऊ, ॠ, ॠ.
[15] ध्येयं — अ.
[16] विद्यादेहो — ओ.
[17] ०व्यपाश्रयात् — मु, उ, ओ.
[18] अनेनैव — ऊ, ॠ, ॠ.
[19] तद्भुवनपालैः—अ; भुवनतत्पालैः—ऊ, ॠ.
[20] 'सम्' इत्येतन्नास्ति — ए.
[21] 'विद्याभुवने' इत्यारभ्य 'समुपसंहृत्य' इत्यन्तं न दृश्यते — ऐ.
[22] मतङ्ग० विद्या० ३. २५ उ० – २६ पू० वृत्तौ ।
[23] ०तदधिष्ठातृरूपतेजो०—अ, आ, ई, उ, ॡ, ए.
[24] 'उपास्यः' इत्यत्र 'ध्येयं' इति दृश्यते — अ; 'ध्येयः' इति दृश्यते — आ ,ई, उ, ॡ, ए.
[25] शान्तश्च परमेश्वरः — मु, उ; स शान्तः परमेश्वरः — ओ.
[26] प्रागुक्तेन येन — अ; प्रोक्तनयेन — ॠ; प्रागुक्तनयने — ॠ.
[27] 'तत्' इत्येतन्नास्ति — अ, ऊ, ॠ, ॠ; 'तद्भुवन' इत्येतन्नास्ति — ए.
[28] 'सम्' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[29] शक्तिभुवने — ऊ, ॠ, ॠ.
[30] ०रूपोपास्यमानः — ॡ, ए.
[31] ०शान्तिमूर्ति० — ऊ, ॠ, ॠ.

ततः [1]पूर्वनयेन तामप्युपसंहृत्य —

**[2]शान्त्यतीतं परं तत्त्वमवि[3]नाश्यव्ययात्मकम् ॥३२॥**
**येनोन्मीलितसद्भावाः पशवः शिवतां गताः ।**

**शान्त्यतीतमिति** बिन्दुभुवनम् । यद्वक्ष्यति सृष्टिक्रमेण —

[4]"क्रीडंस्ततोऽवतीर्याशु[5] बिन्दौ स परमेश्वरः ।" इति ।

ततोऽन्यस्य[6] बिन्दुस्वरूपस्य[7] नित्यत्वात् । यद्वक्ष्यति[8] — [9]"न च चलति यतः शाश्वतम्" इति । [10]तदनुपसंहारेण केवलं [11]तत्कार्यभूतमीशानभुवनं [12]सह तन्निवासिभिः[13] उपसंहृत्य **परं तत्त्वं** लयाभि[14]धानं यातीति । [15]तेनैव प्रागुक्तस्वरूपानुवादेन दर्शयति — **अविनाशि अव्ययात्मकम्**[16] इत्यादिना ॥

तदेवम् —

**सदाशिवस्य देवस्य लयस्तत्त्वेऽतिनिष्कले ॥३३॥**

'सदाशिवस्य' इत्यादि प्रासङ्गिकार्थोपसंहारः[17] ॥३३॥

[18]अथैवमधिकाराख्यतत्त्वस्येव किं भोगाख्यस्यापि तत्त्वस्योपसंहारोऽस्ति । [19]त्नेयुच्यते — 'चतुर्मूर्तिमयम्' इत्यादि ।

**चतुर्मूर्तिमयं शुभ्रं यत्तत्सकलनिष्कलम् ।**

चतस्रः शान्त्याद्या मूर्तयः [20]समुपसंहृतभुवनादिविभागाः[21] शक्तिरूपाः[22], तन्मयं तदुपादानकारणत्वात् । **यच्च शुभ्रं** निर्मलं, [23]सकलनिष्कलात्मकतत्त्वाधिष्ठेयत्वाच्च **सकलनिष्कलम्** ॥

**तस्मिन्भोगः समुद्दिष्टः पत्युर्विश्वस्य सर्वदा ॥३४॥**

---

[1] पुनर्नयेन — ऐ.
[2] शान्त्यतीतः — ओ.
[3] ०नाशव्ययात्मकम् — मु.
[4] मतङ्ग० विद्या० ४. २ पू०
[5] ०वतीर्यादौ — लृ.
[6] 'अन्यस्य' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[7] बिन्दुरूपस्य — ए.
[8] मतङ्ग० विद्या० ३. ३५ उ०.
[9] न चलयति — ऐ.
[10] तदनुपसंहारे केवलं — अ; तदुपसंहारेण केवलं — ए.
[11] तत्कार्यं भूत० — ऊ, ऋ, ॠ.
[12] 'सह' इत्येतन्नास्ति — लृ.
[13] 'तन्निवासिभिः' इत्यनन्तरम् 'उपसंहारक्रमेण तत्पदप्राप्तैश्च' इत्यधिकम् — ऊ, ऋ, ॠ.
[14] ०धानमायातीति — ऋ, ॠ.
[15] तदेवं — ऊ, ऋ, ॠ.
[16] अव्ययादिकम् — ऋ, ॠ.
[17] प्रासङ्गिकोपसंहारः — अ, ऐ.
[18] अथैवमधिकाराख्यतत्त्वस्यैव — अ, ए, ऐ; अधिकारतत्त्वस्येव — ऊ, ऋ, ॠ.
[19] नवेत्युच्यते — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[20] समुपहृत० — ऊ, ऋ, ॠ.
[21] ०भुवनभोगाः — अ; ०भुवनाधिविभागः — ऋ, ॠ; ०भुवनादिभागाः — ऐ.
[22] शक्तिरूपत्वात् — अ, आ, ई, उ, लृ, ए, ऐ.
[23] सकलनिष्कलात्मकं तयाधि० — अ; सकलं निष्कलात्मकं तत्त्वाधि० — ऐ.

इति बिन्दुतत्त्वस्य नित्यत्वेन वक्ष्यमाणत्वात्[1] तत्पालनात्मनो भोग[2]तत्त्वस्याप्यस्य नित्यत्वमिति[3] नाधिकारतत्त्वस्येवोपसंहार इत्यर्थः ॥३४॥

तदियता पतिपदार्थसंगृहीताल्लयभोगाधिकाराख्यात् तत्त्व[4]त्रयाल्लय[5]भोगाख्यस्य तत्त्वद्वयस्यात्र व्याख्यातत्वादुपसंहारः[6] । अधिकारतत्त्वस्य [7]च व्याख्येयतयोपक्रमः[8] — 'धातुर्वीर्यात्मकम्' इत्यादि ।

**धातुर्वीर्यात्मकं स्याद्विभवगुण[9]गणापूरितं मन्त्रमुख्यै-**
**र्योनिः स्यादक्षराणामवितथमतुलं[10] शक्तिगर्भं च मुख्यम् ।**
**स्थानं भोगाय [11]भोक्तुर्न च चलति यतः शाश्वतं विश्वमूर्ते-**
**र्व्याख्यातं निष्प्रपञ्चं [12]तदपि न विरतौ वर्ण्यतेऽस्याधिकारः ॥३५॥**

**धातुः** परमेश्वरस्य **वीर्यात्मकं** [13]परिग्रहशक्तिरूपम् । **स्यादिति** संभावनया [14]दर्श्यते । न तु समवेतशक्त्यात्मकम् । यतो विभवः [15]शान्त्यादिभुवनात्मको[16] विस्तारः । [17]ततस्तस्य [18]ये **गुणाः** तत्तद्भुवनवासिनां[19] विचित्रभोगसाधनत्वादयः, तेषां [20]**गणाः** समूहाः, तैरापूरितम्; उपादान-कारणत्वात्तत्र शक्तिरूपेण [21]वर्तत इत्यर्थः । [22]यच्चोपादानकारणं [23]तन्मृदादिवज्जडत्वान्न चित्सम-वेतमुपपद्यत इति, **मन्त्रमुख्यैश्**चाङ्ग[24]ब्रह्मादिभिस्तत्पूरितमधिष्ठितम् । शक्तिरूपत्वेन तदात्मनि [25]भवनासंभवान्मन्त्राणूनां संभवो[26] यतः । [27]यतश्चैतद् **योनिः** उपादानकारणं **स्याद् अक्षराणां** विद्या-

---

[1] मतङ्ग० विद्या० ३.३५ वृत्तौ ।

[2] ०तत्त्वस्याप्यनित्यत्वमिति — ऊ, ॠ ॠ.

[3] नित्यत्वमपि० — अ.

[4] ०त्रयाश्रय — ऊ.

[5] ०भोगाख्यतत्त्व० — अ.

[6] ०तत्त्वात्तदुपसंहाराय — ऐ.

[7] चशब्दो नास्ति — ऊ, ॠ, ॠ.

[8] ०पक्रमात् — ऊ, ॠ, ॠ.

[9] ०गणापूरितमन्त्र० — ॠ, ॠ; ०गुणैः पूरितं मन्त्र० — ओ.

[10] ०मविततमतुलं — ओ.

[11] भोक्तुर्न विचलति विभोः शाश्वतं — मु, उ; भोक्तुर्न चलति नियतश्शाश्वतो — ऊ; भोक्तुर्न चलति नयतश्शाश्वतो — ॠ; भोक्तुर्न च चलति यतः शाश्वतो — ॠ.

[12] न च खलु विरता वर्ण्यते — ऊ; न च खलु विरतं वर्ण्यते — ॠ, ॠ.

[13] परिग्रहवर्तिशक्ति० — ऊ, ॠ, ॠ.

[14] दृश्यते — अ, आ, ई, उ, ॡ, ए.

[15] शक्त्यादि० — ॠ, ॠ.

[16] ०भुवनात्मनो — ऐ.

[17] 'ततः' इत्येतन्नास्ति — ऊ, ॠ, ॠ.

[18] यो गुणः — ऐ.

[19] ०वासिना — ऊ, ॠ, ॠ.

[20] गणः समूहः तेन आपूरितम्; तदुपादान० ऊ, ॠ, ॠ.

[21] वर्तन्त इत्यर्थ. — ई, उ, ऊ, ॠ, ॠ, ॡ, ए, ऐ.

[22] तच्चोपादान० — अ, ॠ; ततश्चोपादान० — ऐ.

[23] 'तद्' इत्येतन्नास्ति — ऐ.

[24] ०ब्रह्मादिभिः पूरित० — आ, ई, उ, ए; ०ब्रह्मादिभिश्चेत्पूरित० — ऊ, ॠ, ॠ.

[25] भुवनासंभवा० — ऊ, ॠ, ॠ, ॡ, ए, ऐ.

[26] ०न्मन्त्राणूनामसंभवो — आ, ऊ, ॠ, ॠ, ॡ, ए, ऐ.

[27] इतश्च तद्योनिरुपादानकारणं — ऊ; इतश्च तद्यदि निरुपादानकारणं — ॠ, ॠ; यतश्चैतद्योनिरूपा न कारणं — ऐ.

[1]तत्त्वात्मिकाया [2]मातृकाया इति [3]तत्प्रकरण एव वक्ष्यामः[4]। **स्यादिति** प्राप्तकालतायाम्[5]। [6]यदाहर्मुखे मन्त्र[7]तन्त्रात्मकाक्षरनिर्माणे भगवतः प्राप्तः कालो भवति। तदा ततस्तानि निर्मिणोति। [8]स्थूल[9]वर्णकारणाकाशवाय्वादे[10]स्तदानीमसंभवादित्युपपादयिष्यामः[11]। अत **एव** कार्या-[12]नुमानेनाविसंवादाद् **अवितथम्** [13]**अतुलम्**। न तु "[14]एष वन्ध्यासुतो [15]याति" इति वाक्यार्थवदंशेनापि भ्रान्तिकल्पितमित्यर्थः[16]। **शक्तिगर्भं च मुख्यमिति** [17]प्रथमम्; मायादीनां [18]स्वकार्यशक्तिगर्भाणां तदधो वक्ष्यमाणत्वात्। किं च **स्थानम्** अधिष्ठेयं **भोगाय** [19]शुद्धतत्त्वपालनाय [20]**भोक्तुः** पालयितुः। अथ विद्यातत्त्वादिवत् [21]किं तस्य संहारोऽस्ति[22]। नेत्युच्यते — **न** [23]**च चलति यतः शाश्वतं**[24] विद्यातत्त्वादिपरमकारणत्वेन मायावन्नित्यं तत्स्थानं **विश्वमूर्तेः** भोक्तुः, तत्संबन्धि[25]। ततस्तदधि-[26]ष्ठायकत्वाद्भोगाख्यमपि तत्त्वं नित्यमिति **व्याख्यातम्**। किं च **निष्प्रपञ्चं** लयाख्यं [27]यत्तत्त्वं **तदपि न** विरतिनिमित्तम्। अपि तु नित्यमित्येतदपि[28] व्याख्यातमिति [29]तत्त्वद्वयोपसंहारः।

अधिकारतत्त्व[30]व्याख्योपक्रमायोच्यते — [31]**वर्ण्यतेऽस्याधिकार** इति। भोगतत्त्वादनन्तरं सृष्टि-क्रमेण अधिकाराख्यं तत्त्वमधुना वर्ण्यत इति॥३५॥

[32]इति [33]श्री[34]भट्टनारायणकण्ठात्मजभट्टरामकण्ठ[35]विरचितायां [36]मतङ्गवृत्तौ [ विद्यापादे ] पतिपदार्थविचारे लयभोगाख्यतत्त्वद्वयविचारप्रकरणं [37]तृतीयं [ समाप्तम् ]।

**तृतीयः पटलः।**

---

[1] तत्त्वात्मिकायां — अ; तत्त्वात्मकाया — ऊ, ॠ, ॠ, ए.

[2] 'मातृकाया' इत्येतन्नास्ति — ॠ.

[3] 'तत्' इत्येतन्नास्ति — ऊ, ॠ, ॠ.

[4] मतङ्ग० विद्या० ७. २४ — ३० वृत्तौ।

[5] ०कालतया — अ, ऐ.

[6] यदाहुर्मुखे मन्त्र० — अ, आ, ऐ; यदाहर्मुखमन्त्र० — ऊ, ॠ, ॠ.

[7] ०तन्त्राक्षरात्मकनिर्माणे — अ, आ, ई, उ, ऊ, ॡ, ए, ऐ.

[8] अत्र 'ननु' इत्यधिकम् — ऊ, ॠ, ॠ.

[9] ०वर्णवदाकाश० — ऊ, ॠ, ॠ.

[10] ०स्तदानीं संभवा० — अ, ऐ.

[11] मतङ्ग० विद्या० ४. २० उ० — २३ पू० वृत्तौ।

[12] ०नुमानेनापि संवादा० — अ, ॠ; ०नुमानेनापि ससंवादा० — ऊ, ॠ.

[13] अतुलनम् — ऊ, ॠ, ॠ.

[14] 'एष' इत्येतन्नास्ति — ऊ, ॠ, ॠ.

[15] यातीत्यादि वाक्यार्थ० — ऊ, ॠ, ॠ.

[16] ०कल्पित इत्यर्थः — अ, आ, ई, उ, ॡ, ए, ऐ.

[17] प्रथममायादीनां — आ, ऐ.

[18] स्वशक्तिगर्भाणां — ऊ, ॠ, ॠ.

[19] पशुतत्त्व० — अ, आ, ई, उ, ॡ, ए, ऐ.

[20] भोक्तुं पालयितुं — अ, ऐ.

[21] किं च तस्य — अ.

[22] 'अस्ति' इत्येतन्न विद्यते — अ.

[23] चशब्दो नास्ति — ॠ.

[24] शाश्वती — ऊ, ॠ, ॠ.

[25] तत्संबन्धः — अ.

[26] ०ष्ठातृत्वाद्भोगा० — ऊ, ॠ, ॠ.

[27] 'यत्' इत्येतन्नास्ति — अ, आ, ई, उ, ॡ, ए, ऐ.

[28] ०मित्येतदेव — ऊ, ॠ ॠ.

[29] तत्त्वत्रयोपसं० — ऊ, ॠ, ॠ.

[30] व्याख्येयोप० — आ, ॡ.

[31] वर्ण्यते साधिकार० — अ, आ.

[32] इतिशब्दो नास्ति — ऐ

[33] 'श्री' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ॠ, ॠ, ए, ऐ; 'श्री' इत्यत्र 'श्रीमन्' इति दृश्यते — ॡ.

[34] 'भट्टनारायणकण्ठात्मज' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ; भट्टनारायणात्मज० — ऊ, ॠ, ॠ; 'भट्ट' इत्येतन्नास्ति — ॡ.

[35] कृतायां — ऊ, ॠ, ॠ.

[36] अत्र 'श्री' इत्यधिकम् — अ; 'श्रीमन्' इत्यधिकम् — आ, ई, उ, ॡ, ए, ऐ.

[37] द्वितीयं — अ; 'तृतीयं' इत्येतन्नास्ति — ऊ, ॠ, ॠ.

# चतुर्थः पटलः

## अधिकारतत्त्वप्रकरणम्

**अथाधिकारिणः पत्युः क्रीडतः परमं पदम् ।**
**स्वतन्त्रस्यापि वक्तव्यं स्वभावोऽस्य यतः [1]पुरा ॥१॥**

**अथेति** लयभोगाख्यतत्त्व[2]द्वयविचारादनन्तरं[3] पतिपदार्थ[4]संग्रहादवशिष्टम् **अधिकारिणो** [5]भगवतः **क्रीडतः** अधिकारमनुतिष्ठतः **परमं पदम्** अधिकार[6]तत्त्वात्मकं पूर्वप्रकरणे वर्ण्यमानतयोक्तं[7] वक्तव्यमिति पाटलिकः संबन्धः। अन्ये तु संबन्धाः पतिपदार्थविचारान्तं यावत् पूर्व[8]प्रकरण एव प्रतिपादिताः[9]।

[10]नन्वधि[11]कारित्वं नियोज्यस्य[12] नियोक्तृपरतन्त्रस्योपपद्यते। तन्न[13]। **स्वतन्त्रस्यापि** [14]तद् **वक्तव्यमेव**। **यतः स्वभावोऽस्य** परोपकारोऽधिकारात्मको[15] [16]दययैवान्यप्रेरणानपेक्षस्य। **पुरा** प्रोक्त इत्यध्याहारः। यदुक्तं[17] — "स्वतन्त्रः पशुपाशहा" इति ॥१॥

तदिदमुच्यते — 'क्रीडंस्ततोऽवतीर्य' इत्यादि।

**क्रीडंस्ततोऽवतीर्याशु[18] बिन्दौ स[19] परमेश्वरः ।**
**सांसिद्धिकेन भावेन [20]यतोऽसावुपबृंहितः ॥२॥**
**अतिरस्कृतवीर्येण [21]प्रभावेणातिसर्पिणा ।**
**सर्वाध्वप्रकटेनायं कर्ता कार्यस्य विश्वराट् ॥३॥**

---

[1] परः — ऊ, ॠ, ॠ.
[2] 'द्वय' इत्येतन्नास्ति — आ, ई, उ, ऊ, ॠ, ॠ, ए, ऐ.
[3] ०विचारानन्तरं — ॡ.
[4] ०संग्रहावशिष्टम् — ऊ, ॠ, ॠ; विचारादवशिष्टम् — ऐ.
[5] श्रीभगवतः — ॠ.
[6] ०तत्त्वात्मकपूर्वप्रकरणवर्ण्य० — ऊ, ॠ, ॠ.
[7] मतङ्ग० विद्या० ३. ३५ वृत्तौ।
[8] ०प्रकार एव — ऐ.
[9] तृतीयप्रकरणोपक्रमे।
[10] नत्वधि० — ॠ, ऐ.
[11] ०कारित्वनियो० — अ.
[12] नियोज्यता — अ, ऊ, ॠ, ॡ, ऐ; नियोज्यतां — आ, ई, उ, ए.
[13] तत्र — ऐ.
[14] 'तद्' इत्येतन्नास्ति — अ, आ, ई, उ, ॡ, ए, ऐ.
[15] परोपकारात्मको — ऊ, ॠ, ॠ.
[16] यथैवान्य० — ए.
[17] मतङ्ग० विद्या० ३. १९ पू०
[18] ०तीर्यासौ — मु, उ, ओ.
[19] तु — मु, उ, ओ.
[20] यथा स्यादुप० — मु; यथा वा ह्युप० — उ.
[21] प्रभावेनातिसर्पिणा — ऊ, ॠ, ॠ; प्रभावेण विसर्पिणा — ओ.

अनन्तरं [1]तत्र शान्त्यादिभुवननिर्माणं संपाद्य **बिन्द्वाख्यादपि स्थानात् चलतः तस्य धातुः** अधिकारतत्त्वात्मनः[2], **तत्तेजः** ज्ञत्वकर्तृत्वात्मकं **नवधा** कार्यभेदाश्रयेण शक्तिशक्तिमद्भेदेन **भिन्नम्** । यद्वक्ष्यति[3] —

"एताः शक्तिमतः प्रोक्ताः शक्तयोऽष्टौ" इति ।

तथा विद्येशभुवनसदाशिव[4]भुवनभेदेन **नवधा** एव [5]भिन्नम् । [6]विद्येशभुवनेभ्य ऊर्ध्वं सदाशिवभुवनमिति [7]हि वक्ष्यति[8] —

"[9]प्राणिनः शुद्धवृत्तिस्थाः सततं ध्यानतत्पराः ।
सदाशिवार्पितधियस्तेषामत्रोदितं पदम्[10] ॥
सदाशिवसमाः सर्वे [11]किं तु ते सेश्वरा मताः" । इति ।

[12]तत्र यदेतच्छक्तिरूपमधिष्ठायकं [13]**तत्तेजः** [14]**तद्योगबलात्मकत्वाद् उत्कटम्** उद्भटम् । यत्त्वधिष्ठेयत्वेनोक्तं[15] भौवनेश्वरत्वं[16] [17]तत् तेजोयोगेनैव पत्युः संबन्धिना[18] बलेन[19] **अधिष्ठितम्** । न तु स्वतन्त्रम् ॥

अथ योगः कः । उच्यते — 'योगोऽस्य शक्तयः स्वाक्याः' इत्यादि ।

**योगोऽस्य शक्तयः स्वाक्या [20]विस्फुरन्ति समन्ततः ॥५॥**
**ईशान्यापूरणी हार्दी[21] वामा मूर्तिश्च पञ्चमी ।**

स्वकस्य भावः स्वाक्यं, तद्विद्यते भगवत्संबन्धितया[22] यासां [23]ताः **स्वाक्याः** । [24]मत्वर्थीयो[25]ऽत्राच्प्रत्ययः । ततश्च [26]ईशान्याद्या भगवत आत्मीया याः शक्तयः, [27]ता एव अनावृतत्वेन सर्वतः प्रमृताः **योगशब्देनोच्यन्ते** । न तु परिग्रहवर्तिन्यो विन्दुस्वभावा इत्युक्तं भवति ॥

---

[1] अत्र — ऊ, ॠ, ॠ.
[2] अधिकारतत्त्वात्परः — ॠ; अधिकारत्वात्परः — ॠ.
[3] मतङ्ग० विद्या० ४. १६ पू०.
[4] ०भुवनाधिष्ठेयभेदेन — ऊ, ॠ, ॠ.
[5] 'भिन्नम्' इत्येतन्नास्ति — ऐ.
[6] विद्येश्वर० — ए.
[7] 'हि' इत्येतन्नास्ति — ए.
[8] मतङ्ग० विद्या० ४. ५३ उ०, ५४ पू०, ५५उ०.
[9] प्राणिना — अ.
[10] तेषां मन्त्रोदितं यदा — ऐ.
[11] किं चैते — अ, ॡ; किं त्वेते — ऐ.
[12] 'तत्र' इत्येतन्नास्ति — अ.
[13] 'तत्' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[14] तद्योगो बला० — अ, आ, ई, उ, ऊ, ॠ.
[15] यत्त्वधिष्ठेयं प्रोक्त० — ऊ, ॠ; यत्त्वधिष्ठेयत्वेनोक्त० — ऐ.
[16] भौवनेश्वरं — आ, ई, उ, ॡ, ए; भुवनेश्वरगतं ऊ, ॠ; भुवनेश्वरं- — ऐ.
[17] तेजस्तद्योगेनैव — ऊ, ॠ, ॠ.
[18] संबन्धेन — अ.
[19] 'बलेन' इत्येतन्नास्ति — अ, ऊ, ॠ, ॠ.
[20] विस्फूर्जन्ति — ऊ, ॠ, ॠ.
[21] ईशानी पूरणी पार्श्वी — मु, उ; ईशान्यापूरणी हात्री — ऊ; ईशानी पूरणी हार्दी — ओ.
[22] भगवतः संबन्धो — ऊ, ॠ, ॠ.
[23] तु — अ.
[24] चतुर्थीयोऽत्राच्प्रत्ययः — ऊ; चतुर्थीयोऽत्र प्रत्ययः — ॠ; चतुर्थीयोऽत्रादाडच्यत्ययः — ॠ.
[25] 'अत्र' इत्येतन्नास्ति — ई, उ.
[26] ईशानाद्या — अ; ऐशान्याद्यां — ऊ; ऐशान्याद्या — ॠ, ॠ.
[27] स्वा एव — ऊ, ॠ ॠ.

अथ ता अपि कथं नोच्यन्त इति। यतः — 'एताभिः' इत्यादि।

**एताभिः परमेशानः शक्तिभिः समधिष्ठितः ॥६॥**
[१]**विशुद्धविप्रुडुद्गारैः** [२]**प्रवर्षत्यखिलेऽध्वनि ।**
**स्वयोगोद्भूतकिरणैर्विद्याविद्येश्वरैः शिवैः ॥७॥**
**वृतः स भगवान्देवो** [३]**मायाचक्रप्रवर्तिभिः ।**

[४]समवेतशक्ति[५]योगी, विशुद्धाश्च ते निर्मलत्वाद् विप्रुण्णिमित्तं सेचनपूरणाद्यर्थमुद्गीर्यन्ते [६]निर्मीयन्ते परमेश्वरेणेति उद्गाराश्च तैः **विशुद्धविप्रुडुद्गारैः**, विद्यानां मन्त्राणाम्, अविद्यानां च मायादिबन्धानाम्[७] ईश्वरैः अनन्तादिभि[८]र्वक्ष्यमाणैर्मेघस्थानीयैः, सवितृस्थानीयो [९]**भगवानखिलेऽध्वनि** विद्येशेभ्योऽधोभाविनि सर्वस्मिन्नध्वनि क्षित्यन्ते **प्रवर्षति** [१०]नानाविधभोगसाधन[११]शाल्यादि[१२]वर्धकं व्यापारमारभते।

अन्यच्च[१३] किंभूतैस्तैः[१४] प्रवर्षतीति — [१५]स्वे योगाः [१६]आत्मीयाः शक्तयः, तत उद्भूताः समभिव्यक्ताः [१७]येषां [१८]पाशदाहकाः सर्वार्थप्रकाशस्वभावाः किरणाः, तैः अभिव्यक्तशिवत्वैः **विद्याविद्येश्वरैः** अणुत्वेन [१९]वक्ष्यमाणैरित्यर्थः।

न केवलं तैः [२०]प्रवर्षति, [२१]यावद् **वृतश्च भगवान्**[२२] **देवः** तैरेव **मायाचक्र**परिवर्तिभिः शिवैः[२३]। [२४]तद्भुवनासन्ननिषेविणस्ते तदाराधनैकनिष्ठाश्चेत्यर्थः॥

अथ [२५]विद्येशानामपि स्वयोगोद्भूतकिरणत्वेनोक्तत्वात्[२६] किं सदाशिवसमत्वमेव। नेत्युच्यते — 'तेऽतीवाक्रान्तविभवाः' इति।

---

[१] विशुद्धिर्वि० —— ओ.
[२] प्रकर्षत्य० — ऊ.
[३] महद्भिश्चक्रवर्तिभिः — ऊ, ऋ, ॠ, ओ.
[४] समवेतः शक्ति० — ई, उ.
[५] ०योगाद्विशुद्धाश्च — ऊ, ऋ, ॠ.
[६] निर्मीयते—अ; 'निर्मीयन्ते' इत्येतन्नास्ति—ए.
[७] ०बन्धनानाम् — अ, ऊ, ऋ, ॠ.
[८] मतङ्ग० विद्या० ४. ९, १०.
[९] भगवान्निखिलेऽध्वनि विद्येशेभ्यो० — अ; भगवानखिले विद्येश्वरेभ्यो० — ऊ, ॠ; भगवानखिले विद्येश्वरीभ्यो० — ऋ; भगवानखिलेभ्यो विद्येशेभ्यो० — ऐ.
[१०] 'नानाविध' इत्यारभ्य 'प्रवर्षतीति' इत्यन्तं नास्ति — अ.
[११] 'साधन' इत्यनन्तरं 'सस्य' इत्यधिकम्—ऋ, ॠ.
[१२] ०जनकं — ऊ, ऋ, ॠ.
[१३] ततश्च — ए; अत्र च — ऐ.
[१४] 'तैः' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[१५] स्वे योगः — अ; स्वो योगः — ऊ, ऋ, ॠ; स्वयोगाः — ऐ.
[१६] आत्मीयाश्च शक्तयः — ऊ; आत्मीयशक्तयः — ऋ.
[१७] एषां — अ.
[१८] पाशदाहसर्वार्थ० — अ, आ, ई, उ, ऌ, ए, ऐ.
[१९] मतङ्ग० विद्या० ४. ११ पू० वृत्तौ विद्येशानामणुत्वं, ७. १ उ०—३ पू० वृत्तौ विद्यानामणुत्वं च वक्ष्यते।
[२०] प्रकर्षति — अ, ऐ; प्रवर्षतीति — ए.
[२१] तथा वृतश्च — अ, आ, ई, उ, ऌ, ए; यावद्वृतश्च — ऋ, ॠ; तदावृतश्च — ऐ.
[२२] भगवता — आ.
[२३] ०परिवर्तनशीलैः — ऊ, ऋ, ॠ; ०परिवर्तिनः शिवैः — ऐ.
[२४] तद्भुवनान्न निषेवि० — अ; तद्भुवनासननिषेवि० — ऊ, ऋ, ॠ.
[२५] विद्येश्वराणामपि — अ, ए.
[२६] मतङ्ग० विद्या० ४. ७ उ०

[1]तेऽतीवाक्रान्तविभवाः पत्युराज्ञानुवर्तिनः ॥८॥

अतीव आक्रान्तः स्वीकृतो विभवः सर्वज्ञत्वादिको [2]यैस्ते; तथाभूता अपि तस्य भगवतो नियोज्याः[3]। अत एव तेषामधिकारमलसिद्धिः[4] प्रेर्यत्वान्मायागर्भाधिकारीश्वरवत्[5]। अन्यथा हि मुक्तशिववन्न तन्नियोज्याः स्युरिति कर्तृत्वमेव तेषां[6] [7]परमेश्वरान्न्यूनमत्र [8]सिद्धं, [9]न तु ज्ञत्वमपीति [10]वक्ष्यामः ॥८॥

ते एव क्रमेण नामतो वक्ष्यमाणभुवनक्रमस्थित्यर्थमुच्यन्ते[11] — 'अनन्तोऽनन्तवीर्यात्मा' इत्यादि ।

**अनन्तोऽनन्तवीर्यात्मा [12]सूक्ष्मोऽतोऽतिवपुर्महान् ।**
**ततः शिवोत्तमो देवस्तृतीयः परिकीर्तितः ॥९॥**
**एकनेत्रैकरुद्रौ च त्रिमूर्तिरपरस्ततः[13] ।**
**श्रीकण्ठश्च महातेजाः शिखण्डी च महाद्युतिः ॥१०॥**

**सूक्ष्मश्च**[14] अतः अनन्तभुवनादनन्तरम् । यद्वक्ष्यति[15] — "तत्पदमानन्तम्[16]" [17]इति । [18]अतिशयेन वपुः शरीरं तत्स्थितिहेतुर्वा भुवनं यस्य । अत एव **महान्**। **ततः** [19]अनन्तरं **शिवोत्तमः तृतीयः**। **ततः** [20]**एकनेत्रैकरुद्रौ च** क्रमेण भुवनद्वये । न त्वेकस्मिन्[21]। यद्वक्ष्यत्येवम्[22] —"पदात्पदं [23]विचरत" इति । **त्रिमूर्तिरपरः, ततः** [24]अनन्तरभुवने । ततोऽप्यनन्तरं **श्रीकण्ठः**। ततश्च[25] **शिखण्डी** अपरतः स्थित इति ॥९–१०॥

एतेषामणुत्वं [26]प्रतिज्ञातमुच्यते — 'एते रुद्राणव' इति ॥

**एते रुद्राणवः सिद्धाः क्रियाज्ञानबलोत्कटाः ।**

---

[1] तेऽतिविक्रान्तिविभवाः — ऊ, ऋ, ॠ.
[2] यैस्तैः तथा० — आ; यैः तथा० — ए.
[3] अत्र 'स्युः' इत्यधिकम् — ए.
[4] ०मलसिद्धः — अ.
[5] ०कारेश्वरवत् — ऊ, ऋ, ॠ.
[6] कर्तृत्वमेषां – ऐ.
[7] परमेश्वरात्कलया न्यून० — ऊ, ऋ, ॠ.
[8] सिद्धः — आ, ई, उ.
[9] न तु सर्वज्ञत्व० — ए.
[10] मतङ्ग० विद्या० ५. २० — २४ पू० वृत्तौ ।
[11] ०मुच्यते — आ, ए, ऐ.
[12] सूक्ष्मश्चातिवपु० — मु, उ, ओ.
[13] ०रपरो महान् — मु. ऊ, ऋ, ॠ, ओ.
[14] चशब्दो नास्ति — ऊ, ऋ, ॠ.
[15] मतङ्ग० विद्या० ५. १२ पू०
[16] ०मनन्तं — अ, उ, ए.
[17] 'इति' इत्येतन्नास्ति — अ, आ, ई, उ, ऌ, ए, ऐ.
[18] अतीत्य वपुः — अ, ऌ, ए, ऐ; अतीत्यन्तवपुः — आ, ई; अति अत्यन्तं वपुः — उ.
[19] 'अनन्तरम्' इत्यस्य स्थाने 'अधोभुवनम्' इति दृश्यते — ऊ; 'अधोभुवने' इति दृश्यते — ऋ, ॠ.
[20] एकनेत्र एकरुद्रश्च — ऌ.
[21] त्वैकस्मिन् — आ, ई, उ.
[22] मतङ्ग० विद्या० ५. १४ पू०.
[23] विचरन्त इति — अ; संचरत इति — ऊ, ऋ, ॠ; चरत इति — ऐ.
[24] अनन्तभुवने — ऊ, ऋ, ॠ.
[25] चशब्दो नाति — अ, आ, ई, उ, ऌ, ए, ऐ.
[26] मतङ्ग० विद्या० ४. ७-८ पू० वृत्तौ

रुद्रवदणुरात्मा [१]परमेश्वराद्भिन्नः चेतनः येषाम्। [२]अयमर्थः — यथा विद्येश्वरभुवनसाधकाः [३]दीक्षया [४]वा तत्पदयोजिता अणव एव रुद्राः, तथा विद्येशा[५] अप्यणव [६]एव। यद्वक्ष्यति विद्येशप्रकरणे[७] —

"[८]ज्येष्ठोऽधिकारी विश्वात्मा वृतो [९]रुद्रैः सहस्रधा।" [१०]इति।

न [११]त्वज्ञादिवत्तच्छक्तय इति। अत एव एते [१२]क्रियाज्ञानबलोत्कटाः सर्वज्ञाः सर्वकर्तारश्चात्र सिद्धाः॥

अथ [१३]किमेते [१४]स्वयमेवाभिव्यक्तबलाः, उत बिन्द्वादिभुवनस्थस्यास्य [१५]तेजसः पत्युरनुग्रहवशादिति। उच्यते — 'बलं च' इति।

**बलं च तेजसः पत्युर्विकारैः प्रकटीकृतम् ॥११॥**

बिन्दुभुवनात् कालाग्निभुवनं यावत् [१६]सर्वाणुगतस्य **तेजसः** ज्ञानक्रियात्मकस्य [१७]यः पतिः परमेश्वरः, तस्य **पत्युः**, संबन्धिनो [१८]ये विशेषेण कुर्वन्ति कार्यजातमिति **विकाराः** [१९]शक्तयः [२०]तैः, विद्येशानामेषां [२१]ज्ञत्वकर्तृत्वात्मकं **बल**मभिव्यक्तम्। न तु स्वात्मनैव, [२२]नैतदन्येन वा केनचित्॥११॥

अथ कुतः प्रभृति[२३] तेषां बलं [२४]तेन प्रकटीकृतम्। [२५]कथं चेत्युच्यते — 'तस्मादेव' इत्यादि।

**तस्मादेवावताराख्यात्समयात्परमात्मनः।**
**[२६]निसर्गेणैव शक्तीनां व्यापारोऽतीव पुष्कलः॥१२॥**

---

[१] परमेश्वराभिन्नचैतनः — ऊ, ऋ; परमेश्वराभिन्नचेतनः — ॠ.
[२] 'अयमर्थः' इत्येतन्नास्ति — अ, आ, ई, उ, ॡ, ए, ऐ.
[३] दीक्षाया — अ.
[४] वाशब्दो नास्ति — आ, ई, उ.
[५] विद्येश्वरा — ए.
[६] 'एव' इत्येतन्नास्ति — अ, आ, ई, उ, ॡ, ए, ऐ.
[७] मतङ्ग० विद्या० ५. ८ उ०.
[८] ज्येष्ठाधिकारिविश्वात्मा — अ; ज्येष्ठाधिकारी विश्वात्मा — आ, ए.
[९] रुद्रैस्तु नैकधा — अ; रुद्रैस्त्वनेकधा — ऊ, ऋ, ॠ; रुद्रैः सहस्रकैः — ॡ .
[१०] 'इति' इत्येतन्नास्ति — ऐ.
[११] त्वज्ञादिवत् — ॠ.
[१२] ज्ञानक्रियाबलो० — अ, आ, ई, उ, ऊ, ए, ऐ.
[१३] किं ते — अ.
[१४] स्वयमेव सिद्धाः, यदि वा कस्यचिच्छान्त्यादिभुवनस्थितस्य सिद्धाणोरनुग्रहादिति। उच्यते — ऊ, ऋ, ॠ.
[१५] 'तेजसः' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.
[१६] सर्वानुगतस्य — ऊ, ऋ; सर्वाध्वगतस्य — ॠ.
[१७] 'यः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[१८] 'ये' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[१९] सिद्धयः — अ.
[२०] 'तैः' इत्यत्र 'ते' इति दृश्यते — ऐ.
[२१] ज्ञकर्तृत्वात्मकं — ऊ, ऋ; विज्ञत्वकर्तृत्वात्मकं — ऐ.
[२२] तैरन्येन वा — ऊ, ऋ, ॠ.
[२३] अत्र 'न' इत्यधिकम् — ऊ, ऋ, ॠ.
[२४] 'तेन' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[२५] कथं चोच्यते — अ, आ, ई, उ, ए; तथा चेत्युच्यते — उ, ऋ, ॠ.
[२६] निसर्गेणेव — ऊ, ऋ, ॠ.

[1]**येनाशु ते महावीर्या विद्येशाः प्रकटीकृताः ।**
[2]**यैर्वृतः परमे व्योम्नि [3]राजते मन्त्रनायकः ॥१३॥**

[4]**तस्मादेव** प्रागुक्तात्सर्गावतारकालात् प्रभृति [5]परमेश्वरस्य याः शक्तयः, तासां स्वभावेनैव **व्यापारः** तथाभूतः [6]परिपुष्टः, **येनाशु** क्षिप्रं युगपदेव तदा तेऽष्टौ [7]**विद्येशाः** समभिव्यक्तशक्तयः संपन्नाः । [8]**यैर्वृतो** भगवान् **परमे व्योम्नि** सदाशिवभुवने प्रकाशत इति ॥१२–१३॥

[9]अत्र केचिद् वृतत्वान्यथानुपपत्त्या भगवतः सदाशिवस्य निर्माणशरीरं बैन्दवं, नादात्मकं [10]वा [11]तद्भुवननिवासिनामिवेत्याहुः[12] । तत्प्रतिक्षेपायोक्तमपि वस्तु प्रपञ्च्यते — 'तनुस्तस्य' इत्यादि ।

[13]**तनुस्तस्योपचारेण पञ्चमन्त्रमयी शिवा ।**
**ईशानमूर्धा [14]पुंवक्त्रो ह्यघोरहृदयः प्रभुः ॥१४॥**
**उच्यते वामगुह्योक्त्या [15]सद्योमूर्तिः स्थिता[16] पृथक् ।**

भगवतस्तनोरुपचाराभिधाने प्रयोजनमुक्तं [17]प्रागेव[18] । ततश्च [19]ईशानादीन्येव मूर्तेरनिर्माणसाध्याया मूर्धादित्वेनोच्यन्ते[20] । न तु परमार्थतोऽस्य मूर्धादियोगः । [21]वृतत्वं च तस्य तैरभि[22]ध्यानादित्युक्तम्[23] ॥

[24]एवं कार्यात्मकं भगवतः [25]शरीरभागमुक्त्वा, [26]करणात्मकोऽपरोऽप्युच्यते; कार्य[27]करणात्मकत्वाच्छरीरस्य — 'हारिणी' इति ।

**हारिणी जननी तावद्बोधयित्री च शक्तयः ॥१५॥**

---

[1] येनाश्नुते — ओ.
[2] तैर्वृतः — ओ.
[3] भजते — ऊ, ऋ, ॠ.
[4] अत्र 'यतः' इत्यधिकम् — ऊ, ऋ, ॠ.
[5] 'परमेश्वरस्य' इत्यारभ्य 'तथाभूतः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[6] परिपृष्टः — अ, ऋ.
[7] विद्येश्वराः — ए.
[8] यो वृतो — ऋ; कैर्वृतो — ए.
[9] तत्र — ए.
[10] वाशब्दो नास्ति — ऐ.
[11] तद्भुवनं निवासि० — अ; तद्भुवनवासि० — आ; तावद्भुवननिवासि० ऐ.
[12] ०मिवाहुः — ऊ, ऋ, ॠ.
[13] तनुर्यस्योप० मु, उ, ओ.
[14] पुंवक्त्रस्त्वघोर० उ, ऋ, ॠ.
[15] सद्यमूर्तिश्च शासने — ऊ, ऋ, ॠ.
[16] तथा — ओ.
[17] मतङ्ग० विद्या० ३. २०उ० वृत्तौ ।
[18] अत्र इतिशब्दोऽधिकः — ऊ, ऋ, ॠ.
[19] ईशान्यादीन्येव — अ, ऐ; ऐशानादीन्येव — ई, उ; ईश्वरादीन्येव — ए; ईशानादीनि ब्रह्माण्यत्र वक्ष्यमाणसाधर्म्यान्मूर्धादि० — ऊ, ऋ, ॠ.
[20] ०त्वेनोच्यते — अ, ऐ.
[21] धृतत्वं च — ऊ.
[22] ०धानादीत्युक्तम् — अ.
[23] मतङ्ग० विद्या० ३. २३ उ० — ३३ पू० वृत्तौ
[24] एकं — ऊ.
[25] शरीराभाव०— अ, आ, ई, उ, ए; शरीराभान० — ऐ.
[26] करात्मकं परमप्युच्यते — अ; कारणात्मकं परमप्युच्यते — आ, ए, ऐ; कारणात्मकं परमप्युच्यन्ते — ई, उ; कारणात्मकोऽपरोऽप्युच्यते — ऊ, ऋ, ॠ.
[27] ०कारणात्मक० — अ, आ, ऊ, ऋ, ॠ, ए, ऐ.

[1]सृष्टिस्थितिप्रलयशक्तयस्तिस्रोऽत्र भगवतः [2]करणम् ॥१५॥

[3]ननु ईशान्याद्याः पञ्च शक्तयः प्रागुक्ताः[4] सन्त्येव । [5]सत्यम् । — 'एताः शक्तिमतः' इति ।

**एताः शक्तिमतः प्रोक्ताः शक्तयोऽष्टौ महामुने ।**

[6]प्रागुक्ताभिरीशान्यादिभिः[7] सह [8]**एताः अष्टौ शक्तयः शक्तिमतः** ईशान[9]मूर्धादिशक्तिशरीरस्योक्ताः । एतदुक्तं भवति — [10]उपसंहृतव्यापाराः [11]ईशान्याद्याः शक्तयो ब्रह्मात्मकशरीरत्वेन[12] भगवतः [13]कथ्यन्ते । कार्यप्रवृत्तास्तु[14] ईशान्याद्याः[15] शक्तिमतः[16] शक्तयः इति शक्तिशक्तिमद्भेदः ॥

यद्येवम् आसां सामर्थ्यं, [17]तद्भेदेन कार्यविभागश्च [18]वक्तव्यः, मूर्धादिरूपत्वं चेति[19] । उच्यते — 'आसां वीर्यम्' इत्यादि ।

**आसां वीर्यं विभागश्च वक्तव्यः [20]पुरतो यतः ॥१६॥**
**ततोऽस्मिन्नेष्यते वक्तुं तथाप्युद्देशतोऽधुना ।**
**अष्टौ धर्मा महेशस्य शक्त्यष्टकविधौ स्थिताः १७॥**
**वक्ष्यन्ते ज्ञापनार्थं तु संक्षेपेण न विस्तरात् ।**

सामर्थ्यविभागौ **आसाम्** अग्रे वक्ष्यामः[21] । [22]**यतस्तु** मूर्धादित्वेनात्रोद्दिष्टाः **ततः** [23]**उद्देशतो** हेतोः, अत्र केवलं [24]ते एव **आसां** परिज्ञानाय [25]**धर्माः** भेदेन [26]**वक्ष्यन्ते** ॥

---

[1] सर्गस्थिति० — ऊ, ॠ.
[2] कारणम् — ऊ, ॠ, ए.
[3] नन्वीश्वरान्याद्याः प्रपञ्चशक्तयः — ए; न चेशानाद्याः प्रपञ्चशक्तयः — ऐ.
[4] मतङ्ग० विद्या० ४. ६पू०
[5] 'सत्यम्' इत्यत्र 'सद्यः' इति दृश्यते — ऊ, ॠ, ॠ.
[6] प्रागुक्तात्ताभि० — ए.
[7] ०रीश्वरान्याद्यादिभिः — ए; ०रीशानादिभिः — ऐ.
[8] 'एताः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[9] ०मूर्धादिशक्तिशरीरोक्ताः — अ, आ, ई, उ; ०मूर्धादिशरीरोक्ताः — ए; ०मूर्धादिशक्तिशरीरिणवुरोक्ताः — ऐ.
[10] उपसंवृत० — ऊ, ॠ.
[11] ईशानाद्याः — ई, उ, ऐ; ईश्वरान्याद्याः — ए.
[12] ब्रह्मात्मकं शरीरान्तरं — अ, आ, ई, उ, ए; ब्रह्मात्मकशरीरं — ऐ.
[13] कथ्यते — ऐ.
[14] 'तु' इत्येतन्नास्ति — अ.
[15] ईशान्याद्य० — अ; ईशान्यादि० — ऊ, ॠ, ॠ; ईशानाद्याः — ऐ.
[16] 'शक्तिमतः' इत्येतन्नास्ति — आ, ई, उ, ऊ, ॠ, ॠ.
[17] 'तत्' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[18] कर्तव्यः — अ.
[19] इतिशब्दो नास्ति — अ, आ, ई, उ, ॠ, ए, ऐ.
[20] परतो — मु, उ, ओ.
[21] मतङ्ग० विद्या० ४. ३२–४३; ५. १, २ वृत्तौ ।
[22] 'यतस्तु' इत्यारभ्य 'ईशानमूर्धत्वमुच्यते' इत्यन्तं नास्ति — अ.
[23] उद्देशको — आ; तद्देशतो — ॠ.
[24] तदेवासां — ऊ, ॠ, ॠ.
[25] धर्मभेदेन — ऊ, ॠ, ॠ, ऐ.
[26] वर्ण्यन्ते — आ, ई, उ, ए; वक्ष्यते — ऊ, ॠ. ॠ.

तत्र ईशानमूर्धत्वमुच्यते — 'मूर्धा वा' इत्यादि ।

**मूर्धा [1]वा परमा काष्ठा तच्चैवेशित्वमद्भुतम् ॥१८॥**
**ईशानीभिस्तदुत्थाभिरणूनां बलमादरात् ।**
**विनिष्कृत्य मलात्तूर्णं[2] योजयत्यमले पदे ॥१९॥**
**यतस्तस्माच्च[3] भगवानीशमूर्धेति [4]चोच्यते ।**

[5]ईशानत्वं सर्वेशित्वं मूर्धेव परा काष्ठा उन्नतियुक्तम् अनादि[6]स्वभावः यस्य सोऽयमीशानमूर्धा । **ईशानीभिरिति** — यदि वा ईशानशब्देन ईशान[7]ब्रह्मोत्थाः [8]पञ्च अनुग्रह[9]कलाः कथ्यन्ते, ईशानस्य अनुग्रहशक्तित्वात् । सद्योजातादीनां क्रमेण [10]स्थितिसंरक्षणादान[11]भावानुग्रहशक्तिपञ्चकरूपत्वेनान्यत्रोक्तेः[12] । ताभिरीशानकलाभिरनुग्राह्याणां ज्ञानक्रियात्मकं [13]बलं विनिवृत्तमलादिबन्धनं मूर्ध्नि सर्वोत्तमे शिवपदे [14]**योजयति** यस्मादसौ । एवमपि[15] ईशानमूर्धा । यदाह — '**तस्माच्च [16]भगवानीशमूर्धा**' इति ॥

पुंवक्त्रताप्युच्यते — 'वक्त्रं तेजोमयम्' इत्यादि ।

**वक्त्रं तेजोमयं तस्य येनोद्गीर्णाः समन्ततः ॥२०॥**
**ज्ञानाग्निविप्रुषस्तीव्राः [17]पूरयन्त्यखिलं जगत् ।**
**पुंशब्दः पवने प्रोक्तः पुनात्यस्मिश्चराचरे ॥२१॥**
**अज्ञाननिचयं पुंसां तस्मात्पुंस उदाहृतः ।**
**चलच्छक्तिमयं वक्त्रं तच्च [18]सर्वगतं विभोः ॥२२॥**
**[19]पुमान्वक्त्रे स्थितो यस्मात्तस्मात्पुंवक्त्र इष्यते ।**

---

[1] वै — मु, उ, ओ.
[2] विनिष्क्रष्यामलात्तूर्णं — ऊ, ऋ, ॠ; विनिष्क्रम्य मलान्मूर्ध्नि — ओ.
[3] ०स्तस्मात्स — ऊ, ऋ, ॠ.
[4] शंस्यते — ऊ, ऋ, ॠ; शब्द्यते — ओ.
[5] ईशानमेव ईशितमूर्ध्वेन — अ; ईशानमेवमूर्ध्वेव — आ; ईशानमेव ईशानमेव मूर्धेव — ई, उ; ईशानमेव मूर्धेधपरा — ए; ईशानमेव शिवमूर्धेव — ऐ.
[6] ०स्वभावं — अ, आ, ई, उ, ऋ, ए, ऐ.
[7] ०ब्रह्मोक्ताः — अ, ऊ, ऋ, ॠ; ब्रह्मोर्थाः — ए, ऐ.
[8] 'पञ्च' इत्यनन्तरं 'अनुग्रहशक्तिपञ्चक०' इति दृश्यते । मध्यस्थो भागो नास्ति ऋ कोशे ।
[9] ०कालाः — अ, आ, ई, उ, ए.
[10] स्थितिसृष्टिसंरक्षणादावरूपत्वेना० — अ.
[11] ०भवारूपत्वेना० — आ; ०भवरूपत्वेना० — ई, उ, ऐ; ०भवानुग्रह० — ऊ, ॠ; ०जपरूपत्वेना० — ए.
[12] मृगेन्द्रे विद्यापादे १३५ पृष्ठे वृत्तौ; ०न्यत्रोक्तः — ऋ.
[13] मलं — अ, ऋ.
[14] भवति — ऊ, ऋ, ॠ.
[15] अपिशब्दो नास्ति — ऊ, ऋ ॠ; 'अपि' इत्यत्र 'असौ' इति वर्तते — ऐ.
[16] भगवानीशानमूर्धा — अ, ऋ, ॠ, ऐ.
[17] पूरयत्यखिलं — ओ.
[18] सर्वमयं — ऊ, ऋ, ॠ.
[19] पुमांस्तत्र स्थितो — ऊ, ऋ, ॠ; पुमानत्र स्थितो — ओ.

**येन** सामर्थ्यविशेषेण [1]प्रोक्तनयतो[2] बिन्दु[3]स्वरूपाद् नादादिक्रमेण ज्ञानाग्नेः शास्त्रस्य [4]विप्रुषः पदवाक्यात्मकाः[5] [6]कालाग्न्यादिबिन्द्वन्ते [7]भुवनाध्वनि [8]शास्यशासकात्मतया **अखिलं जगद्** आपूरयन्ति समुद्गीर्णाः सत्यः। तत्पूरणहेतुत्वात् पुंशब्दवाच्यं **तेजोमयं** शाक्तं, वचनहेतुत्वाच्च वक्त्रमिव [9]यस्येति **पुंवक्त्र** उच्यते। **पुंशब्द** इति, पुंशब्दः "[10]पातेर्डुम्सुन्" इत्यौणादिकोऽपि अनेकार्थत्वाद्धातूनां "[11]पूञ् पवने" [12]इत्यस्य धातोरर्थे **प्रोक्तः**। ततश्च **अज्ञाननिचयं पुनाति** पवित्रीकरोतीति[13] पुमान्[14]। यथा [15]तु मुक्तानां [16]बन्धनं न[17] भवतीति **तस्मात्** स मन्त्रमन्त्रेशवर्गः पुंशब्देन [18]**उदाहृतः**। **वक्त्रमपि** [19]**तत् चलच्छक्तिमय**मिति। पूर्वं हि[20] समवेतशक्त्यभिप्रायेण[21] व्याख्यातम्[22]। अधुना [23]परिग्रहवर्तिशक्त्यभिप्रायेणेति भेदः। तथा हि — [24]चलद्रूपा परिणतिधर्मिणी शक्तिः महामायाख्या परिग्रहवर्तिनी भगवतः; तन्मयं चलच्छक्तिस्वभावमेव। न तु [25]कूटस्थनित्यम्। तद्वक्त्रमिव शब्दकारणत्वात्। व्यापकं च सर्वस्व[26]कार्यावधिव्याप्तेरित्युक्तम्। [27]ततश्चोक्तः **पुमान्** [28]**वक्त्रे** परिग्रहरूपे महामायात्मनि **यस्मात्**[29] [30]**स्थितः तस्माद्** असौ **पुंवक्त्रो** भगवान्॥

अघोरहृदयत्वं प्रतिपाद्यते — 'सद्भावो हृदयम्' इत्यादि।

**सद्भावो हृदयं प्रोक्तमघोरः शान्त उच्यते ॥२३॥**
[31]**सद्भावेनव शान्तात्मा घोरः** [32]**संसार एव हि ।**
**स यस्मान्नेष्यते पत्युरघोरहृदयस्ततः ॥२४॥**

---

[1] प्रोक्तं नयतो — अ; प्रोक्तो नयतो — ॠ; प्रोक्तेन यतो — ए.
[2] मतङ्ग० विद्या० ३.३५ वृत्तौ प्रोक्तप्रकारेण।
[3] ०स्वरूपं नादादि० — अ; ०स्वरूपान्नादान्नादादि० — ऊ, ऋ, ॠ; ०स्वरूपानादि० — ऐ.
[4] विप्लुपः — अ.
[5] पदवाक्यविभागरूपाः — ऊ, ऋ, ॠ; पदवाक्यादिकाः — ए.
[6] कालाग्निबिन्द्वन्ते — ऊ, ऋ, ॠ.
[7] भुवनात्मनि — ऊ, ऋ, ॠ.
[8] शास्यशासकात्मकं जगत् — ऊ, ऋ, ॠ.
[9] 'यस्य' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.
[10] उणादिसूत्रम् — ६२७.
[11] १४८३ तमो धातुः।; पूङ्पवने — अ, ऊ, ऋ.
[12] इत्यस्यायं धातोरर्थः — अ, आ, ई, उ; इत्यस्याः यद्धातोरर्थः — ए; इत्यस्माद्धातोरर्थः — ऐ.
[13] इतिशब्दो नास्ति — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ.
[14] पुंसाम् — ऊ, ऋ, ॠ.
[15] 'तु' इत्यत्र नशब्दोऽस्ति — ऊ, ऋ, ॠ.
[16] पुनर्बन्धकतया भवतीति — ऊ, ऋ, ॠ.
[17] नशब्दो नास्ति — आ, ए.
[18] आहृतः — ऐ.
[19] 'तत्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[20] हिशब्दो नास्ति — ऐ.
[21] ०प्रायेणेति — ऐ.
[22] व्याख्या — ऋ, ॠ.
[23] परिग्रहशक्त्यभि० — आ.
[24] चलरूपा — अ, आ, ई, उ, ए, ऐ.
[25] कूटस्थं नित्यम् — ई, उ, ऋ, ए, ऐ; कूटस्थे नित्ये — ऋ.
[26] ०कार्यव्याप्तेरित्युक्तम् — ऊ, ऋ, ॠ.
[27] ततश्चोक्तम् — अ, ऐ.
[28] वक्त्रपरिग्रह० — ऋ, ॠ.
[29] यस्य — ऊ, ऋ, ॠ.
[30] 'स्थितः तस्मात्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[31] स्वभावेनैव — ऊ, ऋ, ॠ.
[32] संहार एव — ओ.

[1]हृदयपदेन तावल्लोकप्रसिद्धया [2]**सद्भावः** परमार्थः कथ्यते। अघोरशब्देनापि घोरस्य मलादेः संसारात्मनो[3] रागद्वेषादेर्व्युदासेन[4] शान्तरूपता[5]। [6]ततश्च अघोरं [7]शान्तस्वभावं हृदयं यस्य असौ **अघोर**हृदयः॥२३–२४॥

वामगुह्यतापि [8]प्रागुक्ता प्रोच्यते — 'रहस्योक्त्या' इत्यादि।

> **रहस्योक्त्या स्मृतं वामं पत्युस्तेजःक्रियात्मकम् ।**
> **वामोद्गारर्यतः कर्ता करोति रचनां स्फुटम् ॥२५॥**
> [9]**चित्रां भुवनमालाख्यां** [10]**तत्त्वाख्यां च स विश्वराट् ।**
> [11]**वामोक्त्या विपरीतत्वं प्रपञ्चेऽस्मिन् सदाशिवः ॥२६॥**
> **लक्ष्यते विपरीतेन विरुद्धेनापि**[12] **कर्मणा ।**
> **प्रददात्यणुसङ्घेभ्यो**[13] **यत्फलं** [14]**मनसेप्सितम् ॥२७॥**
> [15]**तस्माच्च भगवान्देवो वामगुह्यः प्रभाष्यते ।**

[16]**रहस्योक्त्या** गुह्यपदेन सहात्र **वाम**मिति पदं [17]प्रयुक्तं **स्मृत**मिति[18] [19]अत्यन्तादृष्टपूर्वविलक्षणं **पत्युः तेजःक्रियात्मक**मभिधत्ते। वामलोचनादौ अस्य विलक्षणार्थत्वेन [20]प्रसिद्धेः। [21]तच्च न प्रत्यक्षम्। अपि तु प्राणिगुह्यवत्कार्यदर्शनान्नित्यानुमेयत्वेन गुह्यमुच्यते। यतस्तस्य **वामात्मनः** [22]तेजसः **उद्गारैः** त्रयोदशभिः [23]तत्कलाभेदैः, विश्वेन राजत इति [24]**विश्वराड्** भगवान् सर्वमिव भूत-भावतत्त्वाख्यां[25] **रचनां** करोति। ततः पुत्रादिना कार्येण प्राणिगुह्यमिव तदपि तत्त्वादिरचनात्मना

---

[1] हृदयं बोधपदेन — आ.
[2] सद्भावपरमार्थं स्थितो यस्मात् तस्मादिति कथ्यते — ऐ.
[3] अत्र वाशब्दोऽधिकः — ऊ, ॠ, ॠ.
[4] अत्र चशब्दोऽधिकः ऊ कोशे; 'या' इति ॠ, ॠ कोशयोरधिकम्।
[5] शान्तिरूपता — ॠ, ॠ.
[6] अतश्च — अ, आ, ई, उ, ए.
[7] शान्तभावं — अ, आ, ॠ; शान्तं स्वभावं ई, उ.
[8] मतङ्ग० विद्या० ४. १४, १५ पू० वृत्तौ।
[9] चित्रं भुवनमाख्यातं — उ.
[10] तत्त्वाख्यं च स विश्व० — मु; तत्त्वाख्यं स हि विश्व० —उ.
[11] वामोक्तिविपरीतत्वे — ऊ, ॠ, ॠ.
[12] विरुद्धेनाति० — मु, उ, ओ.
[13] ०संघस्य — मु, उ, ओ.
[14] मनसि स्फुटम् — मु, उ; मनसीप्सितम् — ओ.
[15] यतस्तस्मात्स भगवान् वाम० — मु, उ, ओ; यतस्तस्माच्च भगवान् वाम० — ऊ, ॠ, ॠ.
[16] 'रहस्योक्त्या' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[17] प्रवृत्तं — ए.
[18] स स्मृत इति — ऊ, ॠ, ॠ; इतिशब्दो नास्ति — ई, उ, ए, ऐ.
[19] अन्यं नादृष्टपूर्वं — अ; अत्यन्तादृष्टपूर्वं — ऊ, ॠ, ॠ; अत्यन्तादृष्टं पूर्व० — ऐ.
[20] प्रसिद्धः — ॠ.
[21] ततश्च — ऊ, ॠ, ॠ.
[22] तेज उद्गारै० — अ.
[23] 'तत्' इत्येतन्नास्ति — अ, आ, ई, उ, ॠ, ए, ऐ.
[24] 'विश्वराट्' इत्यारभ्य 'अनुमीयत इति' इत्यन्तं नास्ति — ऊ, ॠ, ॠ.
[25] भूतभावभुवनतत्त्वाख्यां — अ; भूताख्यां — आ, ई, उ, ए.

अनुमीयत इति विलक्षणं गुह्यमिव[1] [2]गुह्यमुच्यते। ततश्च वामं विलक्षणं [3]गुह्यमदृष्टं तेजो[4] यस्य सः[5] **वामगुह्य** [6]इत्युक्तः।

[7]अथवा [8]**वामोक्त्या** [9]**विपरीतत्व**मिति विलक्षणवद्विपरीतोऽपि [10]धर्मो वामपदेनोच्यते लोके इति व्याख्यान्तरम्। यदाहुः[11] —

"यस्य तत्परमं [12]तेजः शैवं हृदि विराजते।
तस्य वामोऽपि नो वेधा विधातुमशिवं क्षमः[13] ॥" इति।

स च सर्वभूतसुखप्रदत्वलक्षणसर्वजगद्विपरीतो धर्मः। [14]जगद्विरुद्धेन कर्मणा भोगमोक्ष लक्षणेन कार्येण **लक्ष्यते** नित्यमनुमीयत इति प्राग्वदेव गुह्य [15]इत्युच्यते। ततो वामो [16]विपरीतधर्मो गुह्यो यस्येत्यपि वामगुह्यः[17]। [18]यदाह —

"तस्माच्च भगवान्देवो[19] वाम[20]गुह्यः [21]प्रभाष्यते"। इति ॥

सद्योमूर्तित्वं [22]प्राक्प्रतिज्ञातमुच्यते[23] — 'मूर्तिः शरीरम्' इत्यादि।

**मूर्तिः शरीरं यत्तस्य स्ववीर्यविभवात्मकम् ॥२८॥**
**सद्योजातं[24] [25]पराद्भावात्सुव्यक्तं क्रीडनाय [26]तत् ।**
**स्वभावस्यापरो भावः सा क्रीडेत्युपचर्यते ॥२९॥**
**सद्यो मूर्तित्वमापन्नं[27] सद्योमूर्तिस्ततः स्मृतः[28] ।**

[29]तच्छरीरं न मायागर्भाधिकारिणामिव मायीयम्। नापि [30]मन्त्रमन्त्रेश्वरादीनामिव बैन्दवम्। अपि तु भगवतो [31]यत् **स्वं वीर्यं** ज्ञानक्रियात्मकं, तस्य[32] **विभवः** सर्गादिकरणायेच्छापूर्वोऽधिकारः,

---

[1] अत्र चशब्दोऽधिकः — ऊ, ऋ, ॠ.
[2] गुह्य उच्यते — ऐ.
[3] 'गुह्यमदृष्टं' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[4] अत्र 'गुह्यं' इत्यधिकम् — ऊ, ऋ, ॠ.
[5] 'स' इत्येतन्नास्ति — अ, ए.
[6] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[7] 'अथवा' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[8] वामोक्तिर्विपरीत० — ऊ, ऋ; वामोक्ति-विपरीत० — ॠ.
[9] विपरीततत्त्व० — ऐ.
[10] 'धर्मो' इत्यारभ्य '०जगद्विपरीतो धर्मः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[11] आकरो नोपलभ्यते।
[12] तेजश्चैवं — ऊ.
[13] ०शिवं तु सः — ॠ.
[14] अत्र 'तथा' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[15] इतिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[16] विपरीते धर्मो — आ; विपरीतो धर्मो — ऊ, ऋ.
[17] वामदेवः — अ.
[18] यदाहुः — ऐ.
[19] 'देवो' इत्येतन्नास्ति — ऊ, ऋ, ॠ, ऐ.
[20] ०गुह्यका भाष्यते — ऐ.
[21] प्रकाशति — अ, आ, ई, उ, ए, ऐ.
[22] मतङ्ग० विद्या० ४. १४, १५ पू० वृत्तौ।
[23] ०ज्ञातमित्युच्यते — ऊ, ऋ, ॠ.
[24] संपन्नं च — मु, उ, ओ.
[25] पराग्भावा० — मु. उ.
[26] तु — ऊ, ऋ, ॠ.
[27] ०मापन्नः — ऊ, ऋ, ॠ.
[28] ०मूर्तिरिति स्मृतः — ऊ, ऋ, ॠ.
[29] तच्छरीरान्तर्माया० — अ; तच्च शरीरान्न माया० — आ, ई, उ; तच्च शरीरं माया० — ऊ, ऋ, ॠ; तच्च शरीरं न माया०—ऐ.
[30] मन्त्रतन्त्रेश्वरा० — ए.
[31] 'यत्' इत्येतन्नास्ति — ऐ.
[32] ०क्रियात्मकस्य — ऐ.

तदात्मकं **यद्** रूपं तदेव शरीरमिव कर्तृत्वोपकारकत्वात् **शरीरम्** इत्युपचर्यते। यच्च[1] **सद्योजातम्** [2]अभिव्यक्तं **परात् भावात्** लयावस्थात्मनो[3] निष्कलात् तत्त्वात्[4] **क्रीडनाय** जगत्कारणाय लयावस्था[5]त्यागेन; अयथाभूतावस्थान्तरग्रहणं **क्रीडा** उच्यते यतः। [6]ततः **सद्यः** [7]सर्गादिनिर्माणेच्छामात्रेणैव **मूर्तित्वम्** [8]अविकारशरीरावयवित्वं यस्य [9]सः सद्योजातमूर्तिः [10]**स्मृतः**॥

'एवं मन्त्रा' इत्यादि।

> **एवं मन्त्रास्तु पञ्चैते [11]यैर्निबद्धतनुः शिवः ॥३०॥**
> **घटितं पञ्चभिस्तस्य शरीरममलं शुभम् ।**

यदुक्तम्[12] — [13]"तनुस्तस्योपचारेण पञ्चमन्त्रमयी [14]शिवा" इति, अस्योपसंहारः। **एवं** [15]कार्यात्मकं [16]शरीरस्वरूपं [17]प्रतिपादितम्॥

[18]पूर्वं प्रतिज्ञातं [19]करणात्मकमपि [20]प्रतिपाद्यते — 'तदप्यत्र' इति।

> **तदप्यत्र तथा सिद्धं शक्तित्रयनिदर्शनात् ॥३१॥**

शक्तिशक्तिमतोर्भेदाभावात्करणात्मकमपि[21] तथैव **शक्तित्रयस्य** कार्यभेदेन **दर्शनाद्** उपचरितेन रूपेण **सिद्धम्**॥३१॥

स एव शक्तिभेदहेतुः कार्यभेदादुच्यते[22] — 'हारिणी' इत्यादि।

> **हारिणी या शिवस्योक्ता [23]हर्तुर्हरणशीलिनी ।**
> **[24]हरणं हानिरुद्दिष्टा[25] भोगेष्वभिरतात्मनाम्[26] ॥३२॥**

---

[1] ततश्च — ऊ, ऋ, ॠ.
[2] अपि व्यक्तम् — ऊ, ऋ, ॠ.
[3] ०स्थामात्मनो — अ.
[4] निष्कलात्वात् — अ.
[5] ०त्यागेन यथाभूता० — आ; ०त्यागेन हि तथाभूता० — ऊ, ऋ ॠ.
[6] ततश्च सद्यः — अ, आ, ई, उ, ए, ऐ.
[7] सर्गनिर्माणेच्छा० — ऊ, ऋ, ॠ.
[8] अधिकशरीरा० — अ, आ.
[9] 'सः' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[10] स्थितः — आ.
[11] यैर्निबद्धा तनुः शिवा — ऊ, ऋ, ॠ; तैर्निबद्धा तनुः शिवा — ओ.
[12] मतङ्ग० विद्या० — ४. १४ पू०.
[13] तनुरस्योप० — अ; तनुर्यस्योप० — आ, ई, उ, ए; मन्त्रस्तस्योप० — ऊ, ऋ, ॠ.
[14] 'शिवा' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[15] कार्यात्मकशरीर० — आ, ई, उ.
[16] शरीरस्य रूपं — आ, ई, उ, ऊ, ॠ, ए, ऐ.
[17] 'प्रतिपादितम्' इत्यत्र 'प्रतिपाद्य' इति दृश्यते — ऊ, ॠ, ए.
[18] मतङ्ग० विद्या० ४. १५ उ० वृत्तौ।
[19] अकरणात्मक० — ई, उ; कारणात्मक० — ऊ, ऋ, ॠ.
[20] 'प्रतिपाद्यते' इत्यारभ्य 'करणात्मकमपि' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] ०त्कारणात्मकमपि — ऊ, ऋ, ॠ.
[22] ०भेद उच्यते — अ, ऊ, ऋ, ॠ, ऐ; ०भेदादुपचर्यते — आ.
[23] हर्तुर्हारिणशूलिनी — ऊ, ऋ; हर्तुर्हरणशूलिनी — ॠ; हर्तुर्हरणशालिनी — ओ.
[24] हारणं — ऊ, ऋ, ॠ.
[25] ०रुद्दिष्टं — ऊ, ऋ, ॠ.
[26] ०त्मवान् — ॠ.

**पुद्गलानां शनैर्गत्वा लिङ्गं संहृत्य वेगतः[1] ।**
**निवर्तयति संभोगं तस्मिन्नेव [2]भवालये ॥३३॥**
**विनिवेशयितुं शक्ता[3] पत्युः सा वशवर्तिनी ।**

**शिवस्य हर्तुः** [4]माया[5]सर्गोपसंजिहीर्षोर्वशवर्तिनी या [6]शक्तिः हरणस्वभावा **पुद्गलानां भोगेषु अभिरतात्मनामि**ति सकलानामेव; न [7]विज्ञानप्रलयकेवलिनां; [8]सा हारिणी [9]इति ।

ननु व्यापकत्वात् [10]पुद्गलानां हरणानुपपत्तिरिति तदर्थमेतत् — **हरणं हानिरुद्दिष्टेति**[11] । भोगेष्वभिरतात्मनां या भोगस्य हानिः उपसंहृतिः सैव हरणम् । न तेषामेव [12]देशान्तरनयनम्; असंभवात् ।

अथ तदपि हरणं तेषां कथमित्युच्यते — पुद्गलानां संबन्धि यद् **लिङ्गं** सूक्ष्मशरीरं तत् **शनैः** प्रलयकालप्रतीक्षया **गत्वा** आक्रम्य, तदेव लिङ्गं **संहृत्य, तस्मिन्नेव भवालये** मायात्मनि [13]यतः प्रोक्तनयेन[14] **सा** शक्तिः **विनिवेशयितुं** [15]**शक्ता वेगतः**; यथा भावभुवनादेरपि [16]संहारो जायते। लिङ्ग[17]संहारनान्तरीयकत्वात्तस्य । यदाहुः[18] —

"न विना भावैर्लिङ्गं [19]न विना लिङ्गेन भावसंभूतिः" । इति ।

ततः **संभोगं** भाववेदनात्मकमपि पुद्गलानां **निवर्तयति** संहरति तदानीम् । ततो हारिणीति [20]प्रोक्ता ॥

अत्र तु [21]लिङ्गादिसंहारेऽनन्तेशस्य साक्षात्कर्तृत्वं वक्ष्यमाणं[22] भगवतस्तु तद्द्वारेणेति मत्वा

---

[1] वेशतः — ऊ, ऋ, ॠ.
[2] शिवालये — उ.
[3] शक्त्या — ओ.
[4] 'माया' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[5] ०सर्गापसं० — ॠ.
[6] 'शक्तिः' इत्येतन्नास्ति — ए.
[7] विज्ञानकेवलिनां — ऊ, ऋ, ॠ, ऐ; विज्ञानकलप्रलयकेवलिनां — ए.
[8] संहारिणी — आ, ए, ऐ.
[9] इतिशब्दो नास्ति — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[10] बलानां — ए.
[11] ०रुद्दिष्टमिति — ऊ, ऋ, ॠ.
[12] विदेशान्तरगमनासंभवात् — अ; देशान्तरनयनासंभवात् — आ, ई, उ, ए, ऐ.
[13] 'यतः' इत्येतन्नास्ति — अ.
[14] प्रोक्तेन — आ.
[15] शक्तावङ्गतः —ऐ.
[16] संसारो — आ, ऐ.
[17] ०संहारानन्तरीयकत्वात् — आ, ई, उ, ए; ०संहारान्तरीयकत्वात्—ऊ, ऋ, ॠ; ०संहारानान्तर्यकत्वात् — ऐ.
[18] सांख्यका० ५२ पू०.
[19] तल्लिङ्गं विना भावसंभूतिः — अ, ऐ; तल्लिङ्गं च विना न भावसंभूतिः — आ, ई, उ; तल्लिङ्गं च विना न भावसंहृतिः — ए; न विना लिङ्गेन भावनिर्वृतिः — सांख्यकारिकापाठः ।
[20] प्रोक्ताः — अ, आ, ऊ.
[21] 'लिङ्गादिसंहारे' इत्यारभ्य 'भगवतः' इत्यन्तस्य स्थाने 'लिङ्गादिसंग्रहेण नाशे तद्द्वारेणास्यापि अपार उक्तः।' इति 'अ' कोशे, 'लिङ्गादिसंग्रहेणानन्तेशद्वारेणास्या व्यापार उक्तः' इति आ, ई, उ, ए, ऐ कोशेषु च पाठो दृश्यते ।
[22] मतङ्ग० विद्या० ५.४७, ४८ वृत्तौ ।

भगवतः [1]साक्षात्कर्तृत्वविषये त्वस्या व्यापारो [2]दर्श्यते प्रकारान्तरेण — 'अथवा' इत्यादि।

**अथवोन्नतिसामर्थ्यात्पुमनुध्यातमादरात् ॥३४॥**
**प्राक् शिवेन[3] परं स्थानं समाहृत्य नयेद्भृशम्।**
**हरणाद्धारिणी हर्तुर्हार्येष्वेवोपलक्ष्यते[4] ॥३५॥**
**यतोऽस्व[5]तन्त्रो भोगात्मा प्रवृत्तः पाशगोचरे।**
**व्याघात[6]भाक् ततस्तस्य सा शक्तिः [7]पारमेश्वरी ॥३६॥**
**प्रवृत्ता लक्ष्यते सम्यङ् न चापैति स्वकं बलम्।**

**उन्नतिः** उन्नतिहेतुत्वान्मलपरिपाकः[8]। यद्वक्ष्यति[9] —

"संसारात्स विरज्येत प्रध्वस्तकलुषः सदा" इति।

तस्याः **सामर्थ्यात्** कारणात् पूर्वमेव [10]**शिवेन**, पुमांश्चासौ अनुध्यातश्च तम् अनुग्राह्यबुद्धया विषयीकृतं सम्यक् [11]प्रतिस्थानं दीक्षासंयोजनेन **आहृत्य, भृशम्** अत्यर्थं [12]**परं स्थानं** शिवतत्त्वाख्यं [13]या **नयेदिति** संभाव्यते। सा अनुग्रहशक्तिः [14]भगवत्संबन्धिनी **हारिणी**त्युक्ता। सा च **हार्येष्वेव उपलक्ष्यते**[15] इत्युक्तं शक्तिसिद्धौ[16] — "लक्ष्यन्ते त्रिष्ववस्थिताः। पशौ पाशेषु भोगेषु" इति। [17]तत्रत्यमेव प्रमाणार्थमनुवदति — [18]**यतोऽस्वतन्त्र** इत्यादिना।

[19]अथ [20]किमियं वाय्वादीनामिव पत्युर्हारिणी शक्तिरनित्या। नेत्युच्यते — **न चापैतीति**[21]। कुतः **स्वकं बलं** पत्युः सा यतः[22]। वाय्वादीनां हि अनित्यत्वात् शक्तेरप्यनित्यत्वम्। इह तु भगवतो [23]नित्यत्वाद्बलमपि नित्यम्। अतो नापैतीति॥

अथ महाप्रलयादनन्तरं जनन्या व्यापारः — 'जननी कारणस्य' इत्यादि।

---

[1] साक्षात्कर्तृत्वस्यास्या — अ; साक्षात्कर्तृत्वविषयत्वस्यास्या — आ; साक्षात्कर्तृत्वविषयत्वस्या — ई, उ; साक्षात्कर्तृत्वविषयेऽस्या — ऊ, ऋ, ॠ; साक्षात्कर्तृत्वविषये त्वस्य — ऐ.

[2] प्रदृश्यते — अ, ऐ; दृश्यते — आ, ई, उ, ऊ, ए.

[3] शिवेश० — ॠ.

[4] ०लक्षिता — मु, उ, ओ.

[5] ०तन्त्रभोगात्मा — मु, उ.

[6] ०भागतस्तस्य — मु, उ, ओ.

[7] परमेश्वरी — ऊ, ऋ, ॠ.

[8] ०पाकाः — ॠ.

[9] मतङ्ग० विद्या० १०. २५ उ०.

[10] 'शिवेन' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.

[11] प्रतिस्थानदीक्षा० — आ; पतिस्थानं दीक्षा० — ॠ; प्रतिष्ठानां दीक्षा० — ऐ.

[12] परस्थानं — ऐ.

[13] 'या' इत्यस्य स्थाने 'वा' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.

[14] भवत्संबन्धिनी — अ, ऐ; भगवतः संबन्धिनी — ऊ, ऋ, ॠ.

[15] उपलक्षिता — अ, आ, ई, उ, ए.

[16] मतङ्ग० विद्या० ३. ११.

[17] मतङ्ग० विद्या० ३. १२, १३ श्लोकोक्तमेव.

[18] यतः स्वतन्त्रा इत्यादिना — अ, ॠ.

[19] 'अथ' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[20] किमयं — अ, आ.

[21] इतिशब्दो नास्ति — अ, आ.

[22] 'सा यतः' इत्यस्य स्थाने 'साधयतः' इति दृश्यते — अ, ऐ.

[23] नित्यत्वात्तद्बल० — ऊ, ऋ, ॠ.

**जननी कारणस्योक्ता [1]शक्तिर्या क्रीडतः प्रभोः ॥३७॥**
**प्रवृत्ता स्वेन वीर्येण तोयवत्पतिता क्षितौ ।**
**मायात्मकेऽणुबीजानां [2]जननी जननात्मिका ॥३८॥**
**तयात्मवीर्यवर्तिन्या पञ्चमन्त्रतनुः शिवः ।**
**जगतोऽस्याखिलस्यापि तस्माज्जनयिता पिता ॥३९॥**
**एवं सुसूक्ष्मकिरणा शक्तिर्जननशीलिनी[3] ।**
**[4]प्रदृश्यतेऽ[5]णुसंघस्य माता जन्मनि जन्मनि ॥४०॥**

[6]भगवतः चेतनाचेतनजगत्प्रलयावस्थात्यागेन संसारावस्थालक्षणां क्रीडामनुभावयतो[7] **या**[8] **शक्तिः, प्रभोः** सकाशात् **प्रवृत्ता** सती, [9]स्वभावेनैव **मायात्मके** क्षेत्रे **क्षितौ तोयवद्** निपतिता, अणूनां बीजानि कर्माणि तदानीं वासनात्मना तत्र यानि स्थितानि, तेषां **जननी** भोग्यत्वाविर्भाविका[10]। न च तेषां [11]भोग्यत्वं [12]शरीरादीनां [13]जननं [14]विनोपपद्यत इति [15]तत्सामर्थ्यात्[16] तेषामपि जननीति[17]। यदाह —

**"जगतोऽस्याखिलस्यापि तस्माज्जनयिता पिता ।"** इति ।

अत एव **सुसूक्ष्मकिरणा** सुसूक्ष्मव्यापारा इत्येषोऽस्याः प्रतिजन्मव्यापारः; [18]स तु अनन्ताधिष्ठानेनेत्यग्रे[19] भविष्यति[20]। साक्षात् हारिण्या [21]इवास्या अप्यनुग्रह एव तत्र [22]प्रतिस्थानं जननीति श्रुतिर्यतः[23] ॥३७–४०॥

रोधयित्र्यप्युच्यते — 'रोधयित्री च' इत्यादि ।

---

[1] शक्तिः क्रीडयतः — ऊ, ऋ, ॠ, ओ.
[2] जननीं जननात्मिकाम् — मु, उ.
[3] ०शालिनी — ऊ, ऋ, ॠ, ओ.
[4] प्रमृज्यते — मु, उ.
[5] ०ऽनुसंघस्य व्यक्ता जन्मनि — उ, ऋ, ॠ.
[6] भगवच्चेतनाचेतनजगत्प्रलया० — अ; भगवतश्चेतिनाचेतनप्रलया० — आ; भगवतश्चेतनाचेतनं जगत्प्रलया० — ऊ, ऋ, ए, ऐ.
[7] ०मनुगायतो — ऐ.
[8] 'या' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ.
[9] स्वाभवेनैव — ऊ; स्वभावेनेव — ऋ, ए; स्वभावनैव — ॠ.
[10] ०त्वाविर्भविका — ऊ, ऋ, ॠ.
[11] भोग्यता — ऊ, ऋ, ॠ; भोजनं — ऐ.
[12] 'शरीरादीनां' इत्येतन्नास्ति — अ, ऐ; 'शरीरादीनां' इत्यस्य स्थाने "तत्त्वभूतभुवन०" इति दृश्यते — ऊ, ऋ, ॠ.
[13] 'जननं' इत्येतन्नास्ति — ऐ.
[14] विना मुक्तिरुत्पद्यते — ऐ.
[15] 'तत्' इत्येतन्नास्ति — ऐ.
[16] अत्र 'शिवोऽपि' इत्यधिकम् — ऐ.
[17] इतिशब्दो नास्ति — आ, ई, उ, ऊ, ऋ, ॠ, ए; 'जननीति' इत्यस्य स्थाने 'जनयिता' इति दृश्यते — ऐ.
[18] सत्वनन्ताद्यधि० — अ, आ, ई, उ, ए, ऐ; सत्यनन्तराधि० — ऊ; सत्यानन्ताधि० ऋ, ॠ.
[19] ष्ठानेनेह्यग्रे — ऐ.
[20] मतङ्ग० विद्या० ५. ३५ — ३६ वृत्तौ ।
[21] उपास्याप्युनुग्रह — आ; उपास्या अस्यनुग्रह — ए.
[22] प्रतिस्थानजननी श्रुतिः — अ; प्रतिस्थानं जननश्रुतिः — ऊ, ऋ; प्रतिस्थानजननश्रुतिः — ॠ; प्रतिस्थानं जननी श्रुतिः — ऐ.
[23] 'यतः' इत्येतन्नास्ति — अ, आ, ई, उ, ए.

रोधयित्री [1]च या [2]पत्युर्विसृतस्यामितात्मनः ।
लक्ष्यते पशुसंघस्य नियमस्थितिदायिका ॥४१॥
या समर्था विधौ रोद्धुं जगद्भोगेष्वभिप्लुतम्[3] ।
शक्तिः सा [4]रोधयित्र्युक्ता यतो रोधयिता प्रभुः ॥४२॥

**पत्युः विसृतस्य** रोधनाय प्रसृतस्य संबन्धिनी **शक्तिः** [5]**या रोधयित्री** [6]**सा पशुसंघस्य**[7] विज्ञान-केवलिनः, [8]प्रलयकेवल्यात्मनश्च महा[9]प्रलये नियमलक्षणां स्थितिं करोतीति [10]तद्रूपा लक्ष्यते इत्येतद् अस्याः साक्षात्कार्यम् । **या च समर्था, विधौ** इति — विधानकाले सर्गावस्थायां [11]सर्वमेव **जगद्** [12]भोक्तृभोग्यरूपं भोगनिमित्तं प्रवृत्तं **रोद्धुं**, सा रोधयित्री । [13]तदा अस्या अनन्तादिव्यवधानेन कार्यमिति ॥४१–४२ ॥

एवं [14]पारमेशस्यास्य [15]करणात्मनः शक्तित्रयस्य क्रमेण व्यापारमुक्त्वा [16]पतिलक्षणं संसारेऽ-स्मिन् यौगपद्येन [17]प्रतिपाद्यते — 'पतिशक्तित्रयाविष्टम्' इत्यादि ।

पतिशक्ति[18]त्रयाविष्टं जगत्स्थावरजङ्गमम् ।
भ्रमत्यज्ञानमोहेन [19]दुःखादिपरितापितम् ॥४३॥

अज्ञानं [20]ज्ञानानुत्पादः, विज्ञानकेवल[21]प्रलयकेवलिनां मलस्य कार्यम् । मोहश्च अनात्मन्यात्माभि-मानः सकलानां मायायाः, तेन हेतुना । [22]तथा दुःखादिहेतुत्वाद् दुःखादीनि कर्माण्युच्यन्ते, तैश्च परितापितं [23]तत्तद्योनिसंबन्धीकृतं सद् अनेन शक्तित्रये[24]णाविष्टं **जगद्** जन्मवज्जन्तुचक्रं [25]भ्रमति। यत् [26]केषांचितत्र [27]शरीरादेर्जननम्, अन्येषां हरणम्, तदपरेषां निरोध इति ॥

---

[1] यतः पत्यु० — ऊ, ऋ, ॠ.
[2] पत्युः प्रसृत० — मु.
[3] ०ष्वभीप्सितम् — मु, उ, ओ.
[4] रोधिनी प्रोक्ता — मु, उ, ओ.
[5] 'या' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[6] 'सा' इत्येतन्नास्ति — ऊ, ऋ, ॠ, ऐ.
[7] अत्र 'सा' इत्यधिकम् — ऊ, ऋ, ॠ, ऐ.
[8] प्रलया केवलया० — ऊ, ऋ, ॠ.
[9] ०प्रलयनियम० — ऊ, ऋ, ॠ.
[10] तत्रोपालक्ष्यते — अ.
[11] सर्वमेवं — ए.
[12] भोग्यभोक्तृरूपं — आ, ई, उ, ए; भोग्य-भोक्तृत्वरूपं–ऊ, ऋ, ॠ; भोगभोक्तृरूपं –ऐ.
[13] तदस्या — आ, ई, उ, ए, ऐ; इत्येतदस्या — ऊ, ऋ, ॠ.
[14] परमेश० — अ, आ, ई, उ, ऊ, ऋ ए, ऐ.
[15] कारणात्मनः — अ, ऊ, ऋ.
[16] प्रतिक्षणं — ऊ, ऋ, ॠ.
[17] प्रतिपद्यते — ॠ.
[18] ०क्रमाविष्टं — ॠ.
[19] दुःखाग्निपरि० — ऊ, ऋ, ॠ.
[20] ज्ञानानुत्पत्तिः — ऐ.
[21] ०प्रलयाकालानां — अ; ०प्रलयकेवलानां — आ, ई, उ, ए; ०प्रलयकेवलयोः — ऐ.
[22] तदा दुःखाति० — आ.
[23] तद्योगसंबन्धी० — अ; तद्योनिसंबन्धी० — आ, ई, उ, ऊ, ए, ऐ.
[24] ०णाविष्टजन्मवज्जन्तु० — अ, आ, ई, उ, ए; ०णाविष्टं जन्मवज्जन्तु० — ऐ.
[25] दमति —ऐ.
[26] केषांचिदत्र — ऊ, ऋ, ॠ.
[27] शरीरादेर्योगो जननं — अ, आ, ई, उ, ऊ; शरीरादेर्योगजननं — ऋ; शरीरयोगाज्ज-जननं — ऐ.

अथ किं [1]सर्वदा [2]सर्वस्यासौ भ्रमः। नेत्युच्यते — 'यावत्सा' इत्यादि।

**यावत्सोन्मीलिनी[3] शक्तिः शिवरागेण [4]संयुता ।**
**न पतत्यति[5]तेजस्विनित्यानुग्रहशालिनी ॥४४॥**

या पूर्वम् — [6]"अथवोन्नतिसामर्थ्याद्"इत्यादिना [7]**उन्मीलिनी** दृक्क्रिययोर्व्यञ्जकत्वेनाति[8]दीप्तिमती प्रोक्ता **सा यावत्** पुंसोऽनुग्रहकरणे[9] श्लाघ्यते[10] तच्छीला **शक्तिर्न पतति**[11], तावत् सर्वमेव जगद् भ्रमतीत्यर्थः। यत्तदोर्नित्यसंबन्धात्[12], या[13] च **शिवरागेण** [14]युक्ता भगवद्भक्त्यविनाभूता यस्य हि सा पतति, तस्यावश्यं संसारवैतृष्ण्याव्यभिचारिणी भगवति [15]भक्तिरुपजायते। [16]अत एव ततः शक्ति[17]पातानुमानमव्यभिचारात्कार्यमाचार्यादिभिरित्यर्थः ॥४४॥

[18]अथ किं यस्यैव सा पतति, तस्यैवासौ भ्रमो निवर्तते। आहोस्वित् सर्वस्यैव[19] जगत इत्युच्यते — 'तन्निपाताच्च' इत्यादि।

**तन्निपाताच्च [20]तस्येत्थ[21]मज्ञस्याप्यभिलाषिणः ।**
**बुद्धिरुत्पद्यतेऽकस्मा[22]द्विवेकेनात्मवर्तिना ॥४५॥**
**विवेकिनो विरक्तस्य जिज्ञासा चोपजायते ।**
**जिज्ञासोपेतचैतन्यं [23]पशुं संसारसागरात् ॥४६॥**
**जिघृक्षया युनक्त्येनं युक्तं प्रेरयिता प्रभुः ।**
**प्रेरणे प्रेरकः श्रीमान्द्वयोरपि स मन्त्रराट् ॥४७॥**
**[24]अनुग्राह्यस्य [25]विनये तथानुग्राहकस्य[26] च ।**
**[27]कारुण्ये [28]त्वनयो[29]र्यस्मात्तयोर्योगः सुदुर्लभः ॥४८॥**

---

[1] 'सर्वदा' इत्येतन्नास्ति — अ, आ, ई, उ, ऋ, ए, ऐ.
[2] सर्वस्यैवासौ — अ, ई, उ, ए, ऐ; सर्वस्यायं भ्रमः — ऊ, ऋ, ॠ.
[3] ०न्मीलनी — ऊ, ऋ, ॠ.
[4] रञ्जिता — ऊ, ऋ, ॠ.
[5] ०तेजिष्ठा नित्या० — मु, उ; ०तेजस्वा नित्या०—ऊ, ऋ, ॠ; ०तेजाढ्या नित्या०—ओ.
[6] मतङ्ग० विद्या० — ३४ उ०.
[7] उन्मीलनी — ऊ, ऋ, ॠ.
[8] 'अति' इत्येतन्नास्ति — आ, ई, उ, ए.
[9] पुंसानुग्रहणेन — ऊ, ऋ, ॠ.
[10] श्लाघते — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[11] पतिता — ऊ, ऋ, ॠ.
[12] नित्याभिसंबन्धात् — आ, ई, उ, ए, ऐ; नित्यमभिसंबन्धात् — ऊ, ऋ, ॠ.
[13] सा — अ, ऊ, ऋ, ॠ, ऐ.
[14] युक्त्या — ऊ, ऋ; युक्त्याविनाभूता — ॠ.
[15] सक्तिरुप० — ॠ.
[16] 'अत एव' इत्येतन्नास्ति — अ; त एव — ऊ, ऋ, ॠ.
[17] ०पातानुमानाव्यभि० — आ, ई, उ, ए; ०पातनानुमानमव्यभि० — ऐ.
[18] आह किं यस्यैवं — ऊ, ऋ ॠ.
[19] एवकारो नास्ति — ऊ, ऋ, ॠ.
[20] तस्योत्थ० — ओ.
[21] ०मज्ञस्यास्याभिलाषिणः — ऊ, ऋ, ॠ.
[22] ०द्विवेकानात्म० — ओ.
[23] पशुसंसार० — मु, उ, ऊ, ॠ.
[24] अनुग्रहस्य — उ,.
[25] विषये — ऊ, ऋ, ॠ.
[26] ०ग्राह्यकस्य — उ.
[27] कारुण्येतरयो० — ऋ, ॠ.
[28] त्वनयोरस्मा० — मु, उ.
[29] ० र्यस्माद्द्वयोर्योगः — ऊ, ऋ, ॠ.

तस्याः शक्तेर्निपातात् [1]तस्यैवैकस्य [2]**अज्ञस्य** संसारिणः अनात्म[3]न्यात्मविवेकयुक्तस्य **आत्मवर्तिना** [4]**विवेकेन** "अनित्याशुचि[5]दुःखात्मभूतायाः प्रकृतेरन्योऽहं चेतनात्मकः पुरुषोऽस्वतन्त्रः स्वतोऽवभासमानः परमेश्वरेणाधिष्ठितः" इत्येवंविधेन[6] युक्ता [7]मतिर्भवति। [8]**अकस्मादिति** शक्तिपात[9]मात्रात्। तस्यास्त्वहेतोरुत्पत्त्ययोगात्ततो विवेकात् प्रकृत्यात्मकसंसारनिवृत्तिहेतुरीश्वरपुरुषविषया **जिज्ञासा, च**शब्दाद्वैराग्यं च **उपजायते**। यदाह — "**विवेकिनो विरक्तस्य**" इति। ततो जिज्ञासायुक्तं पुरुषं [10]**संसारसागराद्** अवधेः ग्रहीतुमुद्धर्तुमिच्छया **युनक्ति भगवान्**। ततो जिघृक्षा[11]युक्तम् **एनं** पशुं प्रेरयति तज्जिज्ञासाविषयज्ञं [12]गुरुं प्रति **स** एव। यतो **द्वयोरपि** शिष्याचार्ययोः स एव [13]परस्परसंबन्धे प्रयोजकः। तदग्रे[14]रितस्य अनन्तादेरपि [15]प्रवृत्त्ययोगादित्युक्तम्[16]। **अनयोरिति** [17]एवं द्वयोर्मध्याद् **अनु**[18]**ग्राह्यस्य** विशिष्टो नयो **विनयः** गुरुसपर्यात्मकः, तस्मिन् **प्रेरको** भूत्वा स एव भगवान् गुरुणा संबन्ध[19]मुत्पादयति। **अनुग्राहकस्य,** [20]करुणैव कारुण्यं, [21]चतुर्वर्णादित्वात्[22] ष्यञ् प्रत्ययः तस्मिन्, **तु**शब्दादनु[23]ग्रहेच्छायामपि **प्रेरको** भूत्वा तेनानु[24]ग्राह्येण सह [25]संबन्धं करोति **यस्मात्**। अन्यथा स[26] **तयोः** संबन्धो **दुर्लभः** ॥४५–४८॥

इतश्च दुर्लभः — 'नाप्रसन्ने प्रभौ' इत्यादि।

> **नाप्रसन्ने प्रभौ यस्माद् द्वारमाप्नोति पुद्गलः।**
> [27]**मुक्तये गुरुनामानं**[28] **व्यक्तं वर्त्म सुनिर्मलम् ॥४९॥**
> [29]**यं प्राप्य पशवः सिद्धाः पतित्वमुपयान्ति हि।**
> **तस्य** [30]**देवादिदेवस्य कारणत्वमनिन्दितम् ॥५०॥**

---

[1] तस्येवेकस्य — आ.
[2] आज्ञास्य — ई, उ; अज्ञानस्य — ए.
[3] ०न्यात्माविवेक० — ऊ, ऋ, ॠ.
[4] विवेकेनानित्याश्च चिद्दुःखानात्म० —ऊ, ऋ, ॠ; विवेकानित्याशुचिदुःखनानात्म० — ए.
[5] दुखानात्मभूतायाः — अ.
[6] ०विवेकेन — ऐ.
[7] मितिः — ई, उ.
[8] तस्मादिति — ऐ.
[9] ०मात्रान्तरस्यास्त्वहेतो० — अ; मात्रान्त त्वहेतो० — ऊ, ऋ, ॠ; मात्राद्धेतो० — ऐ
[10] संसारसागरावधेः — अ, आ, ई, उ, ए; संसारावधेः — ऊ, ऋ; संसारादवधेः — ॠ.
[11] ०युक्तमेव पशुं — ऊ, ऋ, ॠ.
[12] 'गुरुं' इत्येतन्नास्ति — अ.
[13] परः संबन्धी प्रेरकः — अ; परसंबन्धिप्रेरकः — आ, ई, उ; परसंबन्धे प्रयोजकः — ऊ; परसंबुद्धिप्रेरकः — ए, ऐ.
[14] ०रितस्यानानन्तादेरपि — ऋ, ॠ.
[15] प्रवृत्तियोगाद् — ऐ.
[16] मतङ्ग० विद्या० — ४. ८ उ० वृत्तौ।
[17] 'एवम्' इत्यत्र 'एतद्' इति दृश्यते — ऊ; 'अतः' इति दृश्यते — ऋ, ॠ; 'एव' इति दृश्यते — ऐ.
[18] ०ग्राह्यस्याविशिष्टो — ऊ, ऋ, ॠ.
[19] ०मुपपादयति — अ.
[20] करुणयैव — अ, आ.
[21] ५. १. १२४ पाणिनिसूत्रस्थेन 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्' इति कात्यायनवार्तिकेन।
[22] चातुर्वर्ण्यादित्वात् — ऊ, ऋ, ॠ, ऐ.
[23] ०ग्रहेच्छयापि — ॠ.
[24] ०ग्रहेण — ऐ.
[25] संहारं — अ.
[26] 'स' इत्येतन्नास्ति — ॠ, ऐ.
[27] मुक्तयो — ॠ, ओ.
[28] ०नामानां — ओ.
[29] यः — ऊ, ऋ, ॠ.
[30] देवातिदेवस्य — उ, ऊ, ऋ, ॠ.

ततश्च, [1]अननुगृहीतैरपि परिणतमलत्वादुपासकैरनुग्रहसाधनप्राप्तिनिमित्तं मतङ्गमुनिनेव[2] पूर्वं [3]श्रुतौ विहितेन, शिवधर्मोदितेन वा विधिना ईश्वरोपासनैव कार्येति प्रतीयते। [4]नान्यथा पतित्वस्य ईश्वर[5]समत्वलक्षणस्य श्रेयसो [6]गुर्वभिधानं **द्वारं** स्फुटं **वर्त्म** अमलं [7]सुप्रापं भवति। तेनैव सर्वस्याधिष्ठितत्वात्। [8]तथाहि — **तस्य** [9]**देवादि**[10]**देवस्येति**। स हि सर्वेश्वरः। [11]तदननुज्ञातो नरः तृणस्य [12]कुब्जीकरणेऽप्यशक्तः। [13]अत एवासौ स्वतन्त्रः शक्तिपातः। न तु पुरुषयोग्यतानपेक्षः। [14]भोगेऽपि तथात्वप्रसङ्गतः कर्मानुष्ठानवैयर्थ्या[15]ल्लोकायतिकपक्ष एव। तत्र भगवतः [16]कर्मापेक्षित्वेन नास्वतन्त्रत्वमित्युक्तमस्माभिः [17]**मोक्षकारिकावृत्तौ** तत एवावधार्यम्॥४९–५०॥

तदियता पतिपदार्थसंग्रहावशिष्टमधिकाराख्यं तत्त्वं सृष्टिसंहारभेदेन प्रतिपाद्य, तत्रैव शक्तीनां विद्येशानां च संग्रहं तत्त्वदीक्षायां सकृत्संयोजनायोक्त्वा, [18]अस्यैव भुवनविभागो भुवनदीक्षायां भेदेन संयोजनार्थमुच्यते — 'भर्तुर्ये शासन' इत्यादि।

> **भर्तुर्ये शासने देवा महान्तश्चक्रवर्तिनः।**
> **तेषां भुवनविन्यासः स्वासु स्वासु विभूतिषु॥५१॥**
> **न तेषां परिसंख्यानं**[19] **निर्मलानां महात्मनाम्।**
> **यस्तेषां विभवः सूक्ष्मः सूक्ष्माचारश्च** [20]**सुव्रत॥५२॥**

शास्यते भगवता साक्षादिति शासनं शुद्धवर्त्म तस्मिन्, **ये देवाः**, जिगीषवः **चक्रवर्तिनः** अनन्तादयः पूर्वमुक्ताः[21], **तेषां भुवनविन्यासः स्वासु** [22]**स्वासु विभूतिषु** परिवारलक्षणासु निमित्तभूतासु। एतदुक्तं भवति — स्वस्वभूतिनिमित्तं तेषां भुवनविन्यासो भिन्न एव। न तु सर्वेषा[23]मेकं भुवनमिति। **न च तेषां** [24]**निर्मलानां** संबन्धिनीषु विभूतिषु परिसंख्यास्ति[25]। [26]येन नैकस्मिन्नेव भुवने स्थितिरुपपद्यते। **यश्च तेषां** सविभूतीनां **विभवः** भोगसाधनपुर[27]प्रासादादि[28]परिच्छेदः **सूक्ष्मः**

---

[1] अनुगृहीतैरपि — ऊ, ऋ, ॠ.
[2] ०मुनेरिव — अ, ॠ; मुनिरेव — ऊ, ॠ.
[3] श्रुत्यादिविहितेन — ऊ, ऋ, ॠ.
[4] न ह्यन्यथा — ऊ, ऋ, ॠ.
[5] समतालक्षणस्य — ऊ, ऋ, ॠ; सत्त्वलक्षणस्य — ऐ.
[6] गुर्वभिधानद्वारं — अ, आ, ए, ऐ.
[7] सुप्राप्तं — अ, आ, ऊ.
[8] 'तथा हि' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[9] देवाति० — ई, उ, ऊ, ऋ, ॠ.
[10] ०देवस्य कारणमनिन्दितं स हि – ऊ, ऋ, ॠ.
[11] तदनुज्ञातोऽन्यस्तृणस्य — ऊ, ॠ.
[12] 'कुब्जीकरणे' इत्यारभ्य पञ्चमप्रकरणे ३, ४, श्लोकवृत्तौ 'वस्तुनस्तत्त्वान्तरस्य' इत्यन्ता वृतिः ऊ, ऋ, ॠ कोशेषु लुप्ता।
[13] अयमेवासौ — ऐ.
[14] भोगोऽपि तथा। प्रसङ्गतः — अ, ए, ऐ; भोगोऽपि तथात्वप्रसङ्गतः — आ.
[15] ०ल्लौकायतिक० — ए.
[16] कर्मापेक्षत्वेन — ए.
[17] ७० तमकारिकावृत्तौ।
[18] अस्येव — ई, उ.
[19] ०संख्यातं — ओ.
[20] सुव्रतः — मु, उ, ऊ. ॠ.
[21] मतङ्ग० विद्या० ४. ९, १०.
[22] 'स्वासु' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.
[23] ०मेकभुवन० — ऐ.
[24] मलानां — अ, आ, ई, उ, ऐ; मालानां — ए.
[25] विभूतिमुपरि संख्यास्ति — अ; विभूतिष्वपरिसंख्यास्ति – आ; विभूतिपरिसंख्याः – ऐ.
[26] तेनैकस्मिन्नेव — ऐ.
[27] ०प्रसादादि० — आ.
[28] ०परितः — अ.

बिन्द्वधोवर्तित्वाद् [1]नादात्मकः, तद्विषयश्च आचारः परस्पर[2]संघट्टनात्मकः, तस्यापि **न परिसंख्यानं** यतः ॥५१–५२॥

अथ किं तत्र कर्मनिबन्धनो भोगः। नेत्युच्यते — 'मनोऽभिलषितान्' इत्यादि।

**मनोऽभि[3]लषितान्भोगान्भुञ्जते ते महाबलाः ।**

स्वेच्छयैवाधिकारनिबन्धनस्तेषां भोग इत्यर्थः। [4]अत [5]एव भुवनावस्थितेः सपरिवारत्वाद्, भोगसाधनविभवयोगाद्, आचारयोगित्वाच्च विद्येश्वराणां शरीरसिद्धिः। अन्यथा व्यापक[6]त्वादेतेषामेतत्सर्वं नोपपद्यत [7]इति श्रुतिविरोधः। उप[8]चरितार्था श्रुतिर्भविष्यतीति चेत्। सत्यम्। यदि तेषां शरीरादिसिद्धौ बाधक[9]प्रमाणं स्यात्। [10]तन्नास्तीत्युक्तम्[11] "अथ पत्युरधिष्ठानम्" इत्यत्र। बाधकाभावे चोपचरितार्थतायां[12] सर्वमेव शास्त्रमुपचरितार्थं स्यादित्य[13]नाश्वासः। तस्यापि नियतस्याव्यवस्थितेरित्यवश्यं तेषां भुवनादिश्रुत्यन्यथानुपपत्त्या [14]शरीराण्यभ्युपगन्तव्यानि। भुवनक्रमश्च तेषाम[15]नन्तरोक्त[16] एव ॥

अधुना सदाशिवभुवनं, तस्य च प्राप्त्युपायः कथ्यते — 'प्राणिनः शुद्धवृत्तिस्था' इत्यादि।

**प्राणिनः शुद्ध[17]वृत्तिस्थाः सततं ध्यानतत्पराः ॥५३॥**
**सदाशिवार्पितधियस्तेषामत्रोदितं [18]पदम् ।**

ये पुरुषाः, **शुद्धवृत्तिः** दीक्षा **तत्स्थाः** तद्युक्ताः सदाशिवपदप्राप्तिकामत्त्वात्तदाराधने निष्ठाः, **तेषाम्**। **अत्रेति** [19]वक्ष्यमाणसदाशिवपदेऽवस्थानमुक्तम्। एतच्चोपलक्षणम्। प्रतिभुवनं साधकानाम्। इह [20]हि भुवनेश्वराराधनतस्तद्भुवनप्राप्तिरिति वक्ष्यामो[21] भोगपदार्थविचारप्रकरणे ॥

अथ सदाशि[22]वभुवनं प्राप्तास्ते कीदृशा भवन्तीत्युच्यते — 'मेरुपृष्ठं यथा' इत्यादि।

**मेरुपृष्ठं यथा प्राप्तास्तृणलोष्टादयो भृशम् ॥५४॥**
**प्राप्नुवन्ति सुवर्णत्वं तद्वत्सादाशिवे पदे ।**
**सदाशिवसमाः सर्वे किं तु ते सेश्वरा मताः ॥५५॥**

---

[1] तदात्मकतद्विषय० — ऐ.
[2] ०सुघट्ट० — आ, ई, उ.
[3] ०लाषितान्भोगान् — मु; ०लाषितान्कामान् — ऊ; ०लषितात्कामात् — ऋ, ॠ.
[4] अथ — अ.
[5] एवानवस्थितेः — आ.
[6] ०त्वादेव तेषां तत्सर्वं — ऐ.
[7] इतिशब्दो नास्ति — ऐ.
[8] ०चरितार्थश्रुति० — अ, ऐ.
[9] ०प्रामाण्यं — ए.
[10] तत्तु नास्ती० — आ, ई, उ, ए.
[11] मतङ्ग० विद्या० ३. १–३ वृत्तौ 'मूर्तित्वेनोपचर्यते' इत्यस्य विवरणे।
[12] ०चरितार्थतया — ऐ.
[13] ०नाश्वास्य तस्यापि — अ, ऐ.
[14] सर्वशरीरा० — ऐ.
[15] ०नन्तरोक्तमेव — अ.
[16] मतङ्ग० विद्या० ४. ५१, ५२ वृत्तौ।
[17] ०वर्तिस्थाः — ओ.
[18] परम् — मु, उ.
[19] मतङ्ग० विद्या० ४. ५४ उ० — ५५ वृत्तौ।
[20] हिशब्दो नास्ति — ऐ.
[21] मतङ्ग० विद्या० २६. ३२ उ० — ३४ वृत्तौ।
[22] भुवनप्राप्ताः — अ, आ, ई, उ, ऐ.

[1]**सादाशिवे पदे** सदाशिवभुवने। **प्राप्ताः** [2]**सदाशिवसमाः** [3]**सर्वे** इति। अत्रापि बिन्दुभुवनादधोवर्तित्वाद् नादात्मकान्येव भुवनादीनि।

ननु शिवसदाशिवयोः [4]परमार्थतो भेदाभावेनोक्तत्वात् सदाशिवसमाः परमशिवसमा एवोक्ता भवन्तीति कथं तेषां भुवनवासित्वमत्रोच्यत इति। तदर्थमेतत् — "**किं तु ते सेश्वरा मताः**" इति। सह ईश्वरैः विद्येशैर्वर्तन्त इति सेश्वराः; विद्येश्वराणां प्रधानाः। तेभ्य ऊर्ध्वभुवने एव सदाशिवसमाधिकारशक्त्यभिव्यक्तेर्भोगलयस्थान[5]शक्त्यनभिव्यक्तावपि **सदाशिवसमाः** कथ्यन्ते। अत एव तत्पदप्राप्ता अपि दीक्षयोर्ध्वं [6]सुसंस्क्रियन्त इति विद्येश्वरवत्प्रेर्यत्वात्तेषामपि अधिकारमल[7]सिद्धिः। एवं च संस्कार्यसदाशिवापेक्षयात्र लयभोगतत्त्वयोर्वास्तव एव भेदः ॥५४–५५॥

अथ [8]किं तत्रैव [9]यावदधिकारमल[10]हेतुः प्रेर्यत्वम्। अथोपर्यपि [11]निवृत्त्यादिभुवनेष्वित्युच्यते —'कार्यत्वेनाणुः' इत्यादि।

**कार्यत्वेनाणुरुद्दिष्टस्तावत्सन्तानगोचरे ।**
**यावद्धरेण हारिण्या न सम्यग्ध्रियते बलात् ॥५६॥**
**पश्चाद्वृत्ते शिवत्वेऽणोः [12]कारकत्वेन कारणम् ।**
**न तं प्रति कदाचित्स्यात्सोऽपि कार्यत्वगोचरात् ॥५७॥**
**उत्तीर्णः पतिसामर्थ्यात्स्थितः शान्तपदे यतः ।**

**कार्यत्वेन** प्रेर्यत्वेन **तावद्** आत्मा [13]संप्रोक्तः; **यावत्** परमेश्वरेण **सम्यक्** सर्वस्माद्भोगतत्त्वावधिशान्त्यतीतभुवनपर्यन्तादधस्तान्नोद्धृतः। अतः समुद्धृत्य **शान्तपदे** लयतत्त्वाभिधाने योजितस्य संप्राप्तसर्वेश्वरत्वात् कार्यत्वं, तद्विषयं च भगवतः [14]कारणत्वं[15] निवर्तते। सैषा स्वस्वामिभावविच्छित्तिर्दीक्षायामत्र कार्येति। "**पश्चाद्वृत्ते शिवत्वेऽणोः**" [16]इत्युक्ते भगवान्न शिव एव स्यात्। [17]यदाहुः[18] —

"[19]निजाः शक्तीरनन्ताय प्रयच्छेच्चेत्सदाशिवः।
द्राघिष्ठं शक्तिदारिद्र्यं भद्रं संप्राप्नुयात्ततः॥" इति॥

अत्रोच्यते — 'दानं नाम स्वसत्तैव' इत्यादि।

[1] सदाशिवे — अ, आ, ऐ.
[2] सदाशिवः सर्वे — अ; सदाशिवाः सर्वे — आ, ई, उ, ए, ऐ.
[3] 'सर्वे' इन्यत्र 'सर्वत्र' इति दृश्यते — ए.
[4] परार्थतो — अ.
[5] ०शक्त्यमभिव्यक्ता अपि — अ; ०शान्त्यनभिव्यक्ता अपि — ऐ.
[6] 'सु' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.
[7] ०सिद्धेः — अ, आ, ई, उ, ए; ०सिद्धैः — ऐ.
[8] किमत्रैव — ऐ.
[9] यावन्मल० — ऐ.
[10] ०हेतुप्रेर्यत्वम् — आ, ई, उ, ए, ऐ.
[11] विनिवृत्यादि० — अ, ऐ.
[12] कारणत्वेन — ओ.
[13] 'सं' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.
[14] करणत्वं — ए.
[15] अत्र चशब्दोऽधिकः — ई, उ, ए.
[16] इत्युक्तो — ऐ.
[17] तदाहुः — ऐ.
[18] आकरो न लभ्यते।
[19] निजा शक्तिरनन्ताय — अ, ऐ.

**दानं नाम स्वसत्तैव या सा ज्ञानक्रियात्मिका ॥५८॥**
**सा शक्तिस्तस्य संस्पर्शाद्व्यक्तीभूता सुनिर्मला ।**
**[1]पत्युर्दानं तदेवोक्तम्"**

सकलावरणनिवृत्त्या [2]स्वसत्तायाः सर्वज्ञत्वादिरूपाया एवाभिव्यक्तिः पुंसां परमेश्वराच्छिवत्वस्य **दान**मुपचाराद्रुच्यते ॥

ननु [3]"नर्ते प्रयोजनादिष्टं मुख्यशब्दार्थलङ्घनम्" इति, तदर्थमेतत्— 'न स्वयं व्यज्यते' इति ।

**"न स्वयं व्यज्यते पशोः ॥५९॥**

न हि सत्ता चार्थः सर्वदात्मनां स्वयमेव **व्यज्यते**[4] आवृतत्वात् कालिकावृतताम्रसत्तावत्। न तु पुरुषोऽज्ञानान्निर्वर्तकः सिद्धः। [5]अन्धः पटलाच्चक्षुःशक्तेरिव। अपि तु[6] ततः[7] सातिशयः चक्षुर्वैद्य [8]इवेहापि ईश्वर एव मोक्षकर्ता। न तु स्वयमेव पुरुष इत्युक्तम्[9]—

"उपायोऽपि हि तद्धर्मन्यायेन समवस्थितः"।

इति [10]पतिप्रकरणप्रयोगे। भोगे तु [11]कलादिना ईषन्मलव्युदासतः [12]पुंसस्तावज्ज्ञत्वकर्तृत्व[13]मात्रस्याभिव्यक्तेर्युक्तं कर्तृत्वमिति [14]विस्तरेणास्माभिर्विचारितं [15]**मोक्षकारिकावृत्ताविति** तत एवावधार्यम् ॥५९॥

अधुना पतिपदार्थसंग्रहावशिष्टमधिकाराख्यमपि तत्त्वं सह शक्तिभिः, [16]विद्येश्वरान्तर्भाविन च[17] प्रतिपादितमुपसंहर्तुं, व्याख्येयं चोपक्षेप्तुं श्लोकः— 'नित्योऽविकारी च' इति।

**नित्योऽविकारी च यथाध्वमूर्तिः स्थितोऽग्रणीर्यश्च स विश्वनेता ।**
**तथा मयोक्तः सकलाकलोक्त्या शक्तेर्विभागं ह्यधुना विधास्ये ॥६०॥**

**नित्यः** लयाभिधानार्थो मयोक्तः[18]— "तस्मादेव परं तत्त्वमचलं सर्वतोमुखम्" इत्यादिना ।

---

[1] प्रत्युत्थानं — मु, उ.
[2] स्वयंसत्तायाः — अ.
[3] हेतुबिन्दुटीकायामुदाहृतम् पृ० १२.
[4] अत्र इतिशब्दोऽधिकः — आ, ई, उ, ए.
[5] 'अन्धः पटलाच्चक्षुःशक्तेरिव' इत्येतन्नास्ति — ऐ.
[6] अत्र 'सः' इत्यधिकम् — ए.
[7] 'ततः' इत्यत्र 'तत्तत्' इति दृश्यते — ऐ.
[8] इवेतीहापि — अ, आ, ई, उ, ए.
[9] मतङ्ग० विद्या० ३. १४ पू०.
[10] पतिकरण ० — अ.
[11] कलादिनेष्टमल० — ऐ.
[12] पुंसः तावतोऽज्ञत्वकर्तृत्व० — अ, ई, उ, ऐ; पुंस्तावतोऽज्ञत्वमकर्तत्व० — आ; पुंसस्तावतोद्धृत्वकर्तृत्व० — ए.
[13] ०ज्ञातृतत्त्वस्याभि० — ऐ.
[14] विस्तारेणा० — अ, आ.
[15] ४६ उ० — ७२ तमकारिकाविवरणे ।
[16] विद्येश्वरानन्तर्भाविन — ऐ.
[17] चशब्दो नास्ति — ऐ.
[18] मतङ्ग० विद्या० ३. २० उ०, २१ पू.०

**स** एव[1] **यथा अविकारी** [2]विकारशून्यः। **अध्वमूर्तिश्च** शान्त्यादि[3]भुवनात्मना च **स्थितः** भोगाख्यः [4]**तथोक्तः**[5] — "न च चलति यतः शाश्वतम्" इत्यनेन। यथा च स एव **विश्वनेता** सदाशिवभट्टारकः **अग्रणीः**[6] शक्तीनां विद्येश्वराणां च; [7]तत्रैवान्तर्भावस्य वक्ष्यमाणत्वात्[8] **तथा मयोक्तः। सकलाकलोक्त्येति**[9] सकलः अधिकारी सदाशिवभट्टारकः, सकलाकलः बिन्द्वधिष्ठाता भोगाख्यः [10]पूर्वमुक्तः[11], अकलस्तु निष्कलः, [12]तेषामुक्त्या अवस्थाभेद[13]कल्पनया एक एव त्र्यवस्थः प्रोक्तः। न तु विद्येश्वरवदनेकात्मभेदेनेति व्याख्यातस्य पतिपदार्थस्योपसंहारः।

अथ व्याख्येयोपक्रमः — **शक्तेर्विभागमिति** विभागो भेदः केह शिवशक्तिः, का चानन्तशक्तिः, तस्या अपि [14]कीदृशः कार्यभेदेन विभाग इति, तं **विधास्ये** कथयिष्ये; [15]प्रासङ्गिकोऽयं विचार इत्यर्थः। न त्वत्र शक्तिपदार्थव्याख्येयोपक्रमः, तस्य विद्या[16]मायात्मकतत्त्वद्वयसंग्रहत्वेन [17]पूर्वमुक्तस्य[18] पुंपाशेश्वरप्रकरणादनन्तरं व्याख्यास्यमानत्वादिति ॥६०॥

[19]इति [20]श्री [21]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [22]मतङ्गवृत्तौ [विद्यापादे] पतिपदार्थविचारेऽधिकारतत्त्वप्रकरणं [23]चतुर्थं (समाप्तम्) ॥

**चतुर्थः पटलः**

---

[1] अत्र चशब्दोऽधिकः — अ, ऐ.
[2] विकारशून्योर्ध्वमूर्तिश्च — अ, ऐ; विकारात्मनोर्ध्वमूर्तिश्च — ए.
[3] भुवनात्मना च स्थिते भोगाख्यं — अ; भुवनात्मनावस्थितो भोगाख्यः — ए; भुवनात्मनावसितो भोगाख्यः — ऐ.
[4] तदोक्तः — ए.
[5] मतङ्ग० विद्या० ३. ३५ उ०.
[6] अत्र 'यः' इत्यधिकम् — आ, ई, उ, ए.
[7] तत्रैवान्तरभावस्य — ऐ.
[8] मतङ्ग० विद्या० ५. १ — ५ वृत्तौ।
[9] सकलाकलेति — ऐ.
[10] प्रपूर्व — ऐ.
[11] मतङ्ग० विद्या० ३. २१ उ० – २३ पू० वृत्तौ।
[12] तेषां मुक्त्यवस्था० — अ, ई, उ, ऐ.
[13] ०कल्पनायैक एव — ऐ.
[14] कीदृशकार्य० — ऐ.
[15] प्रासङ्गिकोपायं — ए.
[16] ०मायात्मतत्त्व० — आ, ई, उ, ए, ऐ.
[17] पूर्वमुक्तमस्य — आ, ई, उ; पूर्वमूर्तस्य — ऐ.
[18] मतङ्ग० विद्या० २. १५, १६ पू० वृत्तौ।
[19] इतिशब्दो नास्ति — ऐ.
[20] 'श्री' इत्यारभ्य '०विरचितायां' इत्यन्तं नास्ति — आ, ई, उ; श्रीमन्नारायणात्मज० — ऐ.
[21] ०भट्टनारायणकण्ठात्मज० इत्येतन्नास्ति — अ.
[22] श्रीमतङ्गवृत्तौ — अ; श्रीमन्मतङ्गवृत्तौ — आ, ई, उ, ऐ.
[23] चतुर्थकम् — अ; चतुर्थः — ऐ; पञ्चमम् — ए.

## पञ्चमः पटलः

# शक्तिविचारप्रकरणम्

अथेति, पूर्वपटलस्थायाः शक्तेर्विभागः प्रतिज्ञातः[१]। अनन्तरं पतिपदार्थविचारप्रसङ्गागतं[२] शक्तिविभागप्रतिपादकं [३]प्रकरणम्। यथा चैतत् [४]प्रासङ्गिकं तच्चोक्तम्[५]। वक्ष्यति चोपसंहारे[६] —"पतिप्रसङ्गेन हि सूचिताः" इति। प्रासङ्गिकस्य न तु संबन्धान्तराभिधानमुपयुज्यते। [७]प्रासङ्गिकसंबन्धेनैव तत्सिद्धेः।

तत्राद्यप्रसङ्गमुपदर्शयितुं [८]वक्ष्यमाणाभ्यः क्षोभिकादिभ्यो भेदेन प्रागुक्ताः[९] शिवशक्तयस्ताव-त्प्रदर्श्यन्ते[१०] — 'अथ कारणकार्यत्वे' इत्यादि।

**अथ कारणकार्यत्वे शक्तयो या व्यवस्थिताः।**
**ताश्चैवात्राधिकारिण्यः प्रतीताः सर्वगोचराः ॥१॥**
**संलब्धोन्मीलनाः सत्यस्तत्त्वेऽस्मिन्नीश्वराह्वये।**
**दर्शयन्ति [११]स्वमात्मानमधिकारे नियोजिताः ॥२॥**

कारणस्य भगवतः कार्यत्वे शरीरत्वे **शक्तयः** [१२]ईशान्याद्याः रोधयित्र्यन्ताः अष्टौ **याः व्यवस्थिताः**। तदुक्तम्[१३]—"एताः शक्तिमतः प्रोक्ताः शक्तयोऽष्टौ" इति। **ताः** एव **अधिकारिण्यः** सर्वविषयाः। न त्वनन्तशक्तयः। एताश्च [१४]यदैव कार्याय **नियोजिताः**, तदैव [१५]लब्धोन्मीलनाः **सत्यः**, [१६]**तत्त्वेऽस्मिन्नीश्वराह्वये** पूर्वप्रदर्शितेऽधिकाराख्ये **दर्शयन्ति आत्मानम्**। [१७]तदन्तर्भूता एव प्रतीयन्ते, न तु [१८]पृथक्त्वेन। शक्तिशक्तिमतोः परमार्थतो भेदाभावादित्यर्थः ॥१-२॥

अथ किमिह तत्त्वलक्षणम्। यदभावाच्छक्तीनां न तत्त्वरूपत्वमित्युच्यते — 'तत्त्वं यद्' इत्यादि।

**तत्त्वं यद्वस्तुरूपं स्यात्स्वधर्मप्रकटात्मकम्[१९]।**
**तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शनात् ॥३॥**

---

[१] ०विभागप्रतिज्ञाते — अ.
[२] ०प्रसङ्गादागतं — आ, ई, उ, ए.
[३] 'प्रकरणम्' इत्येतन्नास्ति — अ.
[४] प्रासङ्गितं — अ, आ.
[५] मतङ्ग० विद्या० ४. ६० वृत्तौ।
[६] मतङ्ग० विद्या० ५. ७७ उ०.
[७] प्रासङ्गिकस्य संबन्धेनैव सिद्धेः — ऐ.
[८] मतङ्ग० विद्या० ५. २४ उ० — २६.
[९] मतङ्ग० विद्या० ४. ५ उ०, ६ पू०; १५ उ०, १६ पू०.
[१०] प्रदृश्यन्ते — अ, ए, ऐ.
[११] च स्वात्मान० — ओ.
[१२] ईशानाद्याः — ऐ.
[१३] मतङ्ग० विद्या० ४. १६ पू०.
[१४] यदि देवकार्याय — ए.
[१५] लब्धोन्मीलिनः — ई, उ.
[१६] तत्त्वेऽस्मिन्निजाह्वये — अ; तत्त्वेऽस्मिन्नीश्वराख्यये — ए.
[१७] तदन्तर्गता एव — आ, ई, उ, ए.
[१८] प्रथमत्वेन — ए.
[१९] ०प्रकटात्मकः — ओ.

यदच्युतं स्वकाद्वृत्तात्ततः शाक्तवशं जगत्[1]।
ततमन्येन वा [2]यत्स्यात्तत्तत्वं तत्त्वसन्ततौ ॥४॥

[3]तत्त्वशब्देनात्र [4]पारमार्थिकं मायाद्युच्यत इति नाभावस्य तत्त्वता। किं च स्वधर्मेण आत्मा प्रकटो यस्य [5]तदेतद्धर्मिरूपं तत्त्वमिति, न तद्धर्मस्य शक्त्यात्मनः पारमार्थिकत्वेऽपि तत्त्वता। नापि मलस्य। यतः तत्त्वं वस्तुनस्तत्त्वान्तरस्य पद[6]मुपकारकतया [7]तदभेदेन सिद्धं, न तु तत्त्वान्तरात्मकमिति, मलस्य पशु[8]तत्त्वान्तर्भूतत्वात्, तेन विना पशुत्वायोगान्न तत्त्वान्तरता। यद्येवं कलादेरिवावान्तरपरिणतेरपि तत्त्वरूपताप्रसङ्गः। न। यतः [9]स्फुटमाम्नायस्य [10]प्रबन्धस्याकल्पमवस्थितेः दर्शनात् तत्त्वं[11] कलाद्युच्यते। [12]न चैवमवान्तरपरिणतेर्दर्शनम्[13]। [14]क्षीरदधिन्यायेन [15]तदैव कार्यात्मना परिणामात्। तर्हि भाव[16]भूतभुवनानां [17]तत्त्वत्वम्। न। यतः यदच्युतम् [18]आत्मीयाद् [19]वृत्तात् [20]तद्वृत्तिमत् तत्त्वम्[21]। भुवनादीनां तु [22]प्रतितत्त्वमनेकत्वाद् घटादिवच्छीता[23]तपादिषु स्ववृत्तच्युतेर्न[24] [25]तद्वृत्तिमत्त्वमिति न[26] [27]तत्त्वता। यद्येवं [28]"स्वभावस्य च्युतिः क्रीडा"[29]इत्युक्तत्वाल्लयभोगाधि[30]कारिणाम[31]प्यतत्त्वत्वप्रसङ्गः। न[32]। [33]यतः ततं येनात्मवशं स्वकार्यात्मकं जगद् [34]जन्मस्वभावं व्याप्तं, [35]यच्च अन्येन [36]अनधिष्ठितं तत् तत्त्वमिति न तेषामतत्त्वता। व्यवस्थितविकल्प-

---

[1] ततश्चात्मवशं जगत् — ओ.
[2] तत्स्यात् — उ.
[3] तत्र शब्दे० — अ.
[4] पारमार्थिकमाया० — अ; परमेश्वरमाया० — ऐ.
[5] तद्धर्मिरूपं — ई, उ, ए; तदेतद्धर्मरूपं — ऐ.
[6] ०मुपकारतया — अ.
[7] ततोऽभेदेन — ऊ, ऋ, ॠ, ऐ.
[8] ०तत्त्वान्तरभूतत्वात् —ऐ.
[9] स्फुटमात्मा यस्य — ए.
[10] प्रतिबन्धस्या० — ई, उ.
[11] दर्शनात्तत्वं० — अ, आ, ई, उ, ऊ, ऋ, ॠ.
[12] तेन चैव० — आ.
[13] ०र्दर्शना। — ऐ.
[14] 'क्षीरदधिन्यायेन' इत्यत्र 'क्षीरं येन' इति दृश्यते — अ; दधिक्षीरन्यायः ब्रह्मसूत्र-(श्रीकर) भाष्ये १. ४. २६.
[15] तदेव — आ, ॠ.
[16] 'भूत' इत्येतन्नास्ति — अ, ॠ, ऐ.
[17] तत्त्वम् — आ, ऊ, ऋ, ॠ.
[18] आत्मीयार्थतत्त्वाद्वृत्तिमत्त्वम्। — ए.
[19] 'वृत्तात्' इत्यत्र 'तत्त्वात्' इति दृश्यते —आ.
[20] 'तत्' इत्येतन्नास्ति— अ, आ, ई, उ, ऊ, ऐ.
[21] वर्तिमत्तत्त्वम् — अ; ०वृत्तिमत्त्वम् — ॠ.
[22] प्रतीतत्वमनेक० — अ, ऐ.
[23] ०तपादिनिष्ठस्ववृत्त० — अ, आ, ई, उ, ऐ; ०तपादिभिश्च स्ववृत्त० — ऊ, ऋ, ॠ.
[24] 'न' शब्दो नास्ति — ऊ, ऋ, ॠ.
[25] तद्वृतिमत्तत्त्वमिति — आ; तत्त्ववृत्तित्वमिति — ऊ, ऋ, ॠ, ऐ.
[26] 'न'शब्दो नास्ति — ऋ, ॠ.
[27] तन्त्रता — ॠ.
[28] स्वभावच्युतिः — ऐ.
[29] मतङ्ग० विद्या० ५. २९. पू०.
[30] ०काराणा० —ऊ, ॠ.
[31] ०प्यतत्त्वप्रसङ्गः —अ,आ, ऊ, ऋ, ॠ, ए, ऐ.
[32] 'न'शब्दो नास्ति — ऐ; 'न' इत्यनन्तरं 'प्रसङ्गः' इत्यधिकम्— ऊ, ऋ, ॠ.
[33] यतस्ततः येना० — अ, ए, ऐ; यतस्तत यो नात्म० — आ; यतस्तु तं येना० — ऊ, ऋ, ॠ.
[34] जन्यस्व० — ऊ, ऋ, ॠ.
[35] तच्च — अ, ए.
[36] अधिष्ठितम् — अ, आ, ई, उ, ए, ऐ.

श्चात्र वाशब्दः[१]। तेन पश्वादीना[२]मन्याधिष्ठानेऽपि [३]नातत्त्वतेति। न च स्वभावस्य च्युतिरत्र परमार्थतः। अपि तु उपचरितेत्युक्तम्[४]। तदेव[५]मत्र शक्तीनां न [६]तत्त्वत्वम्। अधिकारतत्त्वे एवान्तर्भाव इति ॥३–४॥

किं च — 'तस्मिन्नेव' इत्यादि।

**तस्मिन्नेवेश्वरे [७]तत्त्वे संस्थिताः परमेश्वराः ।**
**शिवेच्छानुमताः सर्वे जगतः प्रभविष्णवः ॥५॥**

यत्रैव शक्तीनामन्तर्भावः प्रोक्तः[८], तस्मिन्नेवेश्वरतत्त्वे विद्येशाना[९]मनन्तादीनामवस्थितिरन्तर्भावः। न तु [१०]स्थितिरेव अदेशस्वभावत्वात्तस्य, तेभ्यश्च भिन्नचेतनत्वेन [११]तादात्म्य[१२]स्थित्यसंभवाच्च[१३]। तर्हि निष्प्रयोजनोऽत्रैषामन्तर्भावः। नैवम्[१४]। तत्त्व[१५]दीक्षायामपृथक्संयोजन[१६]निमित्तक इत्युक्तं प्राक्[१७]।

अथैते अनन्तादयः किमनिच्छा एव तदानीं बलाद्भगवता [१८]जगत्प्रभुत्वे नियुक्ताः। न। यतः — **शिवेच्छानुमता** इति। [१९]यत एते पत्युराज्ञा[२०]विधायित्वेन पूर्वमुक्ताः[२१], ते जगति प्रभवनशीलाः प्रभुत्वेच्छा[२२]युक्ताः सन्तो नियुक्ताः। न तु बलादेव ॥५॥

अथ कीदृशाः सन्तस्तेऽनुगृहीता [२३]इत्युच्यते — 'शिवशक्ति' इति।

**शिवशक्तिगुणामोदकृत्स्नोन्मीलितशक्तयः ।**

शिवसंबन्धिनः शक्त्यात्मनो गुणस्य आमोदो [२४]बहिःप्रसरः, तेन [२५]कृत्स्ना सर्वार्थविषया प्रोन्मी-

---

[१] वार्थः — ऊ, ॠ, ॠ.
[२] ०मन्यथाधिष्ठाने० — अ; ०मन्याधिष्ठानेनापि—आ; ०मण्याधिष्ठाने०—ऊ; ०मध्याधिष्ठाने० —ॠ.
[३] न तत्त्वता — ऐ.
[४] मतङ्ग० विद्या० ४. १४, १५ पू० वृत्तौ।
[५] मन्त्रशक्तीनां — अ; चात्र शक्तीनां — ऊ, ॠ, ॠ; मातृशक्तीनां — ऐ.
[६] तत्त्वमपि तु अधि० — ऊ, ॠ, ॠ; तत्त्वम् अधिकार० — ऐ.
[७] तत्त्वेऽवस्थितः परमेश्वरः — ऊ, ॠ, ॠ.
[८] मतङ्ग० विद्या० ५. १, २ वृत्तौ।
[९] ०ममूर्तादीनां मध्य एव स्थिति० — ऊ, ॠ, ॠ.
[१०] स्थितिरेवादेश० — ऊ; स्थितिरेव देश० — —ॠ, ॠ, ए, ऐ.
[११] तादर्थ्यस्थित्यसंभवाच्च। तर्हि — ऐ.
[१२] ०स्थितिसंभवात्। तर्हि — ऊ, ॠ, ए.
[१३] 'च' शब्दो नास्ति — अ, आ, ई, उ, ॠ.
[१४] नैव — आ, ए, ऐ; नैतत् — ऊ, ॠ, ॠ.
[१५] दीक्षायां पृथक् — ए, ऐ.
[१६] निमित्त इत्युक्तम् — ए.
[१७] मतङ्ग० विद्या० ४.५१, ५२ अवतारिकायाम्।; 'प्राक्' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ए, ऐ.
[१८] 'जगत्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[१९] य एते— ऊ, ॠ, ॠ.
[२०] ०विधायित्वे पूर्वं — आ.
[२१] मतङ्ग० विद्या० ४. ८ उ० वृत्तौ।
[२२] ०युताः—ऐ.
[२३] इत्युच्यन्ते — आ.
[२४] 'बहिः' इत्यत्र 'हि' इति दृश्यते— ॠ.
[२५] कृत्स्नात् सर्वार्थ० — अ; तत्स्थानसर्वार्थ० — ए.

लिता निर्मली[1]कृता शक्तिः ज्ञानक्रियात्मिका येषां ते; विज्ञानकेवलाः सन्तोऽनन्तादयोऽनुगृहीता इत्यर्थः। तेषामेव[2] [3]शक्त्यनुन्मीलनमात्रस्य बन्धस्य संभवात्। प्रलयकेवलसकलानां तु [4]कार्ममायीययोरपि [5]संभवात् न [6]तावन्मात्रयोगतः। प्रोक्तं च [7]श्रीमन्**मालिनीविजये**[8] —

"[9]स सिसृक्षुर्जगत्सृष्टेरादावेव निजेच्छया।
[10]विज्ञानकेवलानष्टौ बोधयामास पुद्गलान्॥" इति।

श्रीमद्**रौरवे**ऽपि[11] — "पतयश्चाञ्जनातीता [12]अष्टादावभवन्" इति। अत एवागमसिद्धत्वाद् विज्ञानकेवलिनोऽपि अप्रतिक्षेप्याः; युक्तिसिद्धत्वाच्च। पशवः [13]कार्ममायीय[14]बन्धाभावेऽपि [15]केवलमलयुक्ताः संभवन्ति। तद्व्यतिरिक्तस्य मलस्य [16]तेषां बन्धत्वेनाभ्युपगमात्। यो यद्बन्धव्यतिरिक्तो येषां बन्धः, [17]सः तदभावेऽपि[18] तेषां [19]बन्धः सिद्धो भवति निगलादिवत्। [20]कार्ममायीयबन्धव्यतिरिक्तश्च[21] मलोऽभ्युपगतः[22], न तु सांख्यजैमिनीयादिवत् [23]तदव्यतिरिक्त इति कथं न [24]केवलमल[25]बद्धपुरुषसिद्धिः।

अस्तु व्यतिरिक्तो मलः। स [26]तु कर्मनिमित्त एव भविष्यतीति [27]व्याप्तिसिद्धेरनैकान्तिकत्वादस्य कुतो [28]विज्ञानकेवलिनः। अत एव नैयायिकादिभिर्नेष्यन्त इति [29]केचिद्व्याख्यातारः।

किमिदमज्ञत्वं, कुदर्शनदृष्टिविपर्यासो वा तेषाम्। यत् सदागमसिद्धमपि [30]वस्तु तद्दृष्ट्या तिरोधीयते। प्रोक्तं चात्र नयविदा[31] —

"[32]स्वप्रज्ञातिमिरेण [33]पापमतिभिर्बालैरपक्वात्मभिः
शास्त्राणि ग्रथितानि यैरतितरां ज्योतिस्तिरोधीयते।

---

[1] ०कृतकृत्या शक्तिः — ॠ; ०कृतशक्तिः—ऐ.
[2] अत्र 'शक्यमेव' इत्यधिकम् — ॠ.
[3] शक्त्युन्मीलन० — ऐ.
[4] कर्ममायीय० — आ.
[5] सद्भावात् — आ, ई, उ, ए, ऐ.
[6] तावन्मात्रयोगो यतः — आ, ई, उ, ए, ऐ; तावन्मात्रबन्धयोगो यतः — ऊ; तावन्मात्रबन्धयोगा यतः — ॠ, ॠ.
[7] 'श्रीमन्' इत्येतन्नास्ति — आ; श्रीमालिनी० — ॠ.
[8] मालिनीविजयोत्तरे १. १८ उ०, १९ पू०.
[9] सिसृक्षुर्जगतः सृष्टे० — अ, आ, ई, उ, ए, ऐ.
[10] विज्ञानसकलानष्टौ — ऊ, ॠ.
[11] "पतयश्चाञ्जनातीताः सर्वविज्ञानसंयुताः। अनन्तादिशिखण्डयन्ता अष्टौ विद्यामहेश्वराः॥" रौरवे विद्या० सृष्टिक्रमे १. १३.
[12] अष्टावभवन् — अ, ऊ, ॠ, ॠ, ऐ.
[13] 'कार्ममायीय०' इत्यारभ्य 'निगलादिवत्' इत्यन्तं न दृश्यते —ए.
[14] कर्ममायीय० — अ, आ, ऐ.
[15] केवला मलयुक्ताः — ऐ.
[16] 'तेषां' इत्येतन्नास्ति—अ, आ, ई, उ, ॠ, ऐ.
[17] 'सः' इत्येतन्नास्ति — अ.
[18] अपिशब्दो नास्ति — ऊ, ॠ, ॠ, ऐ.
[19] भवतिसिद्धो हस्तिनिगडादिवत् — ऊ, ॠ, ॠ.
[20] कर्ममायीय० — अ.
[21] चशब्दो नास्ति — अ.
[22] मतङ्ग० विद्या० ६. १०२उ० — १०३ पू० वृत्तौ।
[23] तद्व्यतिरिक्त० — अ, ऊ.
[24] केवलं — अ, आ, ई, उ.
[25] ०बन्धपुरुष० — अ, ऊ, ॠ, ए.
[26] तुशब्दो नास्ति — अ, आ, ई, उ.
[27] व्याप्त्यसिद्धे० — ऊ, ॠ.
[28] अत्र नशब्दोऽधिकः — अ.
[29] केचिदत्र व्याख्या० — ऊ, ॠ, ॠ.
[30] वस्तु दृष्टया — अ, आ, ऐ.
[31] आकरो न लभ्यते।
[32] स्वप्रतिज्ञा० — अ, आ, ऐ.
[33] दृष्टगतिभि० — ऊ, ॠ, ॠ.

नीतिज्ञैरनधिष्ठितेऽत्र जगति ध्वस्ता मुनीनां दृशः
प्रत्यासन्नविनाश[1]विघ्नघटना[2]चिह्नैस्तदेतत्पुरः ॥ इति ।

न च [3]कर्मनिमित्तत्वं मलस्य, अनादित्वादिति वक्ष्यामः[4] **पुंपाशेश्वरप्रकरणे** ।

अथ सौगतमतानु[5]सारेण तन्निमित्तानि कर्माणि भविष्यन्तीत्युच्यते[6]। यदाहुः[7] —

"मोहो निदानं दोषाणामत एवाभिधीयते ।
सत्कार्यदृष्टेरन्यत्र तत्प्रहाणे प्रहाणतः ॥" [8]इति ।

भवतु। तथापि[10] "नावश्यं कारणानि [11]कार्यवन्ति भवन्ति" इति [12]न्यायेन संभवन्त्येव विज्ञानकेवलिनः ।

[13]ननु अविनाभावात् [14]प्रदीपप्रभान्यायेनास्यात्र तन्निमित्तता[15]। तर्हि प्रलयकेवलिनामपि अनुपपत्तिरिति साधु[16]समर्थितः स्वनयः ।

अथ सहकारिणः शरीरादेरभावान्न तदास्य कर्मनिमित्तता। न तर्हि [17]प्रदीपप्रभान्यायेनास्यात्र निमित्तत्वम्, अपि तु धूमाग्निवदिति [18]तेषां संभवः प्रोक्त एव ।

कश्चायं मोहः ? । ननु अनात्मन्यात्मप्रतिपत्त्यात्मकं ज्ञानमेव। भवतु। तेनैषामविनाभावो न तु। [19]ज्ञानान्तरेषु [20]चक्षुरादिव्यापृतेष्वपि कारणत्वादिरस्तीति तदुदय[21]मात्रान्मोक्षप्रसङ्गः। [22]अथ तथाभूतज्ञानहेतु[23]रन्य एवासावित्युच्यते। यद्येवमस्मत्पक्ष एवेति कार्याभावेऽपि तस्य भावात् सिद्धा एव विज्ञानकेवलिनः। न चापि तस्य [24]कर्महेतुत्वमेव, मूर्च्छा[25]व्यवस्थावदज्ञानहेतुत्वात्। अपि तु प्राक्तस्य विपरीतवेदनात्मनो [26]रागादेरेवानुभवसिद्धत्वादिति दर्शितमुपोद्घातेन[27] ।

---

[1] विश्वघटना — ऊ, ऋ, ॠ.

[2] चिह्नं — ऊ, ऋ, ॠ.

[3] कर्मनिमित्तत्वान्मलस्य — अ; कर्मनिमित्तत्वे मलस्य स्यादिति — ॠ.

[4] मतङ्ग० विद्या० ६. ८१ वृत्तौ ।

[5] ०सारे एतन्निमित्तानि — ए.

[6] ०त्युच्यन्ते — अ, आ, ई, उ.

[7] 'मोहश्च मूलं दोषाणां स च सत्त्वग्रहो विना ।' 'सत्कायदृष्टेर्विगमादाद्य एवाभवो भवेत् ।' प्रमाणवार्तिके प्रमाणसिद्धौ १९७ उ०, २०० उ०. पूर्वनिर्दिष्टमर्धद्वयमत्रत्यश्लोकस्य सदृशमिव भाति ।

[8] ०दृष्टिरन्यत्र — ऊ, ऋ, ॠ.

[9] इतिशब्दो नास्ति — अ, ऊ, ए.

[10] अपिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.

[11] तद्वन्ति — ऊ, ऋ, ॠ.

[12] 'न्यायेन संभवन्त्येव विज्ञानकेवलिनः' इत्येतन्नास्ति — अ, आ, ई, उ, ॠ, ए, ऐ; अस्य न्यायस्याकरो न लभ्यते ।

[13] न तु — ॠ.

[14] प्रमाणवार्तिकभाष्ये ८३ तमे पृष्ठे प्रदीपप्रभाविषयो विचार्यते ।

[15] ०स्यात्र निमित्तता — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए.

[16] ०समभिमतः — ऊ, ऋ, ॠ; ०समुत्थितः — ए.

[17] 'प्रदीप' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[18] अत्र तुशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.

[19] तज्ज्ञानान्तरेषु — ऊ, ऋ, ॠ.

[20] चक्षुराद्याश्रितेषु अकल्पकत्वादस्तीति — ऊ; चक्षुराद्याश्रितेषु अकल्पकत्वादस्तीति — ऋ, ॠ.

[21] ०मात्रोन्मोक्ष० — अ.

[22] अतस्तथा० — अ.

[23] ०रन्यतर एवासौ — अ, आ, ई, उ, ए; ०रन्यस्तदासौ — ऐ.

[24] कर्मणे हेतुत्व० — अ.

[25] ०द्यवस्थाद्यज्ञान० — अ, ॠ.

[26] रागादेरनुभव० — ऐ.

[27] मतङ्ग० विद्या० १. ५ वृत्तौ; दर्शितमुपोद्घाते । — ऊ, ऋ, ॠ.

[1]ननु तस्याप्यत्र [2]निमित्तत्वमस्त्येव। यदुक्तं [3]श्रीमत्स्वायंभुवे[4] —

"[5]यद्यशुद्धिर्न पुंसोऽस्ति [6]सक्तिर्भोगेषु किंकृता" इति।

[7]सत्यम्। न तु रागादेरिव [8]साक्षात्। [9]साक्षान्निमित्तत्वे तु वक्ष्यमाणनयेन[10] विज्ञानयोगादिभिरपनीयते। [11]तस्यापरिक्षयान्न कश्चिद्विज्ञान[12]केवलिनः सत्तां वारयितुं क्षमः।

अन्येतु[13] — "[14]अधिकारं न [15]चेत्कुर्याद्विद्येशः [16]स्यात्तनुक्षयः" इति [17]श्रुतेः सकला[18]नामेवातिक्रान्तशास्त्राणामाचार्याणामधिकार इत्याहुः। तदयुक्तम्। विद्येशकार्यत्वात्कलाद्युत्पादस्य[19], [20]तदानीं सकलानामसभवात्। [21]तत्सद्भावकाले तु तेषां तत्र [22]साधकतयैवाधिकार [23]इत्युक्तम् —

[24]"यो यत्राभि[25]लषेद्भोगान्स तत्रैव नियोजितः।
सिद्धिभाङ्मन्त्रसामर्थ्यात्" इति।

न चातिक्रान्तशास्त्राणा[26]मेवात्राधिकार इति समीचीनं, श्रुत्यन्तरविरोधात्। श्रूयते हि श्रीमत्पौष्करादौ[27] —

"आज्ञाविलङ्घनात्प्रोक्तं क्रव्यादत्वं शतं समाः" इति।

ततश्चैतच्छ्रुत्यविरोधेन क्रव्यादानां पिशाचरूपाणां विद्यानामीशः [28]स्यादित्यत्रार्थो व्याख्येयः। पिशाचादीनामपि [29]विद्यात्वेन श्रुतेः। यदुक्तम्[30] —

"अन्ये प्राधानिका मन्त्रा ब्रह्मविष्ण्वादयोऽपराः[31]।
साञ्जनास्तेऽण्डमध्यस्थाः सात्त्वराजसतामसाः॥"

इत्यविरोधः॥

---

[1] 'ननु' इत्येतन्नास्ति — अ; न तु — ए.
[2] निमित्तमस्त्येव — ऊ, ऋ, ॠ.
[3] 'श्रीमत्स्वायम्भुवे' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[4] स्वायम्भुवे ३३. ४ पू०.
[5] यदशुद्धिर्न — अ, ऋ.
[6] शक्तिर्भो० — अ, ऋ, ऐ.
[7] 'सत्यम्' इत्यारभ्य 'निमित्तत्वे तु' इत्यन्तं न दृश्यते — अ.
[8] 'साक्षात्' इत्येतन्नास्ति — आ, ई, उ, ए, ऐ.
[9] साक्षान्निमित्ते वक्ष्य० — आ, ई, उ, ए; साक्षान्निमित्ते तु वक्ष्य० — ऐ.
[10] मतङ्ग० विद्या० ९. ३४, ३५; ११. २८ उ० — २९ पू०; २५. २ उ० — ३ वृत्तौ।
[11] तस्यापरीक्षायां न — आ, ई, उ; तस्यापि परीक्षायां न — ए.
[12] ०केवलसत्तां — ऊ, ऋ.
[13] आकरो न लभ्यते
[14] अधिकारान् — आ, ई, उ, ए.
[15] चेत्कार्या० — अ, ऋ.
[16] स्यात्तत्त्वक्षयः — ऋ.
[17] 'श्रुतेः' इत्यत्र 'कृत्वा' इति दृश्यते — अ, आ, ई, उ, ऊ, ए, ऐ.
[18] ०नामेवात्राति० — ऊ, ऋ, ॠ.
[19] ०द्युत्पाद्यस्य — अ.
[20] 'तदानीं' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] तत्संभवकाले — ऋ, ॠ; तत्संभावकाले — ऐ.
[22] साधनतयैवाधि० — अ, आ, ई, उ, ऊ, ऐ. साधनतयैव साधिकार — ए.
[23] इत्युक्तः — ऐ.
[24] स्वायंभुवे ३९. २.
[25] ०लषेद्भोगांस्तत्रैव स नियोजितः — अ.
[26] ०मेवाधिकारः — अ, आ, ई, उ, ए, ऐ.
[27] 'समयोल्लङ्घनात्प्रोक्तं क्रव्यादत्वं शतं समाः' इति सार्धत्रिशतिकालोत्तरे, २५, २ उ०
[28] स्यादित्यर्थो — अ, आ, ई, उ, ए, ऐ.
[29] विद्यात्वे श्रुतेः — ऊ, ऋ, ॠ.
[30] अयं श्लोकः 'श्रीमद्रौरवेऽप्युक्तम्' इति मृगेन्द्रवृत्तिदीपिकायामुपोद्घातप्रकरणे २२तमश्लोकविवरणे निर्दिष्टः। किं तु मुद्रितरौरवे नोपलभ्यते।
[31] ०ऽप्योमराः — ऋ, ॠ.

[1]"मनोऽभिलषितान्भोगान्भुञ्जते ते" तत्रेत्युक्तम्[2]। स तु किंसाधनोऽत्र तेषामित्युच्यते — 'रमन्त' इत्यादि।

**रमन्ते [3]विविधैर्भोगैर्भुवनेषु महत्सु च ॥६॥**
**[4]विद्याविद्येश्वरीभिस्ते सुशोभाभिरनिन्दिताः।**
**इत्थं [5]गुणयुताः सर्वे बोद्धारः [6]पारमेश्वराः ॥७॥**

**विद्याविद्येश्वरीभिः** सह तेऽपि **अनिन्दिताः** शोभायुक्ताः, विचित्रैः [7]**भोगैः** [8]करणभूतैः **भुवनेषु रमन्ते** इति। अतोऽपि तेषां शरीरसिद्धिः, आत्मनः [9]स्त्र्याद्याकारासंभवात् ॥६–७॥

अथ [10]यथा शिवादेषां न्यूनकर्तृत्व[11]मित्युक्तम्[12]। एवं परस्परतो[13]ऽप्यूनतेत्युच्यते —'तेषामथाग्रणीः' इत्यादि।

**तेषा[14]मथाग्रणीः शूरः समर्थः परमेश्वरः।**
**[15]ज्येष्ठोऽधिकारी विश्वात्मा वृतो रुद्रैः [16]सहस्रधा ॥८॥**

**तेषां** मध्याद् यो यस्य **ज्येष्ठः अधिकारी विश्वात्मा** इति उपरिभुवनवर्ती सः, तस्याधोभुवनवर्तिनः कनिष्ठस्य **अग्रणीः शूरः** समर्थि[17]ताधिकारक्रियाशक्तिः। यतः प्रोक्तं च [18]**श्रीमन्मालिनीविजये**[19] —

[20]"यो हि यस्माद्गुणोत्कृष्टः स तस्मा[21]दूर्ध्व इष्यते" इति।

ततश्च अनन्तात् सूक्ष्मस्य [22]कलान्यूनं कर्तृत्वं, ततः शिवोत्तमस्येत्यादि सर्वेषामत्र [23]सिद्धम्। स चैकैको **वृतो रुद्रैः** सहस्रशः [24]स्वभुवने इत्युक्तं प्रागेव[25] ॥८॥

अथ तुल्येऽधिकारित्वे कथमेकैकस्यास्य क्रियाशक्त्युत्कर्षः। [26]तुल्ये वा विज्ञानकेवलित्वे[27] तेषा-

---

[1] मतङ्ग० विद्या० ४. ५३ पू०.
[2] ०भुञ्जते इत्युक्तम् — अ; ०भुञ्जते नर इत्युक्तम् — आ; ०भुञ्जते तत्र इत्युक्तम् — ई, उ, ए, ऐ.
[3] किं विधैर्भोगै० — ऊ.
[4] विद्येश्वरीभिस्सततं सुशोभा० — ओ.
[5] गुणवतः — ऋ, ॠ.
[6] परमेश्वरः — ऊ, ऋ, ॠ.
[7] भागैः — अ, ऐ.
[8] किरणभ्रमैः — ए; करणभूताः — ऐ.
[9] स्त्र्याकारसंभवात् — अ; स्त्र्याकारासंभवात् ऊ; स्त्र्याद्याकारसंभवात् — ॠ.
[10] यथैषां शिवान्न्यूनं कर्तृ० — ऊ, ऋ, ॠ.
[11] इतिशब्दो नास्ति — आ.
[12] मतङ्ग० विद्या० ४. ८ उ० वृत्तौ।
[13] ०ऽप्युत नेत्युच्यते — ऊ, ऋ, ॠ.
[14] ०मप्यग्रणीः — ऊ, ऋ, ॠ.
[15] ज्येष्ठाधि० — ओ.
[16] सहस्रशः — ओ.
[17] ०ताधिकक्रिया० — ऊ, ऋ, ॠ.
[18] 'श्रीमन्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ; 'श्रीमन्' इत्यत्र 'श्री' इति दृश्यते — ऊ, ॠ.
[19] मालिनीविजयोत्तरे २. ६० पू०.
[20] यो ह्यस्माद्गुणो० — ऐ.
[21] ०दूर्ध्वमिष्यते — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ; ०दूर्ध्व उच्यते—मालिनीविजयोत्तरपाठः।
[22] कलया न्यूनकर्तृत्वं — ऊ; कलया न्यूनं कर्तृत्वं — ऋ, ॠ; कलान्यूनत्वं ततः — ऐ.
[23] सिद्धः — अ.
[24] स्वभवने — ऊ, ॠ.
[25] मतङ्ग० विद्या० ४. ९ — ११ पू० वृत्तौ।
[26] तुल्यो वा — ऐ.
[27] ०केवलत्वे — अ, ऊ, ऐ.

मेव अनन्तादिरूपत्वं[१], [२]नातमान्तरस्येत्यत्र[३] हेतुरुच्यते[४] — 'यतः सोऽर्हति' इति।

**यतः सोऽर्हति कर्तृत्वे नियोगोऽस्य ततः शिवात् ।**
[५]**परिपाटयागतः प्राप्तः"**

तुल्ये [६]वा विज्ञानकेवलित्वे **यतः स** एवैकैको विद्येश्वरः तथाभूते [७]**कर्तृत्वे** विषये विशिष्ट-[८]मलपरिपाकयुक्तत्वाद् **अर्हति**, [९]नान्योऽविशिष्टपरिणतमलत्वात्। ततस्तस्यैवैकैकस्य **शिवाद् नियोगः**, नान्यस्य। अत एव[१०] मलपरिपाकप्रकर्ष[११]क्रमयोगतः, [१२]तत्तत्पदार्हत्वात् तस्य तस्य विद्येश्वरस्य [१३]च स नियोगः **परिपाटया** शिवात् [१४]**प्राप्तः आगतः** [१५]निश्चितः; अष्टानां मध्याद्य-[१६]स्योत्कृष्टो मलपाकः सोऽनन्तपदे, यस्य तु ततो न्यूनः स सूक्ष्मपदे, यावदष्टानामपीति नियतः[१७]। [१८]अर्हत्वस्यात्र मलविपाकविशेषात्मनो [१९]नियामकत्वादिति। बहूनां [२०]तत्र [२१]तत्तत्पदार्हत्वे नियोगोऽन्यैकैकस्येति[२२] नियमश्रुतेरन्येषां [२३]तच्छक्त्युत्कर्षक्रमेण मोक्ष एवेति प्रतीयते॥

[२४]अथैतदुक्तम्[२५]—'जगतः [२६]प्रभविष्णवः [२७]सन्तः [२८]विद्येश्वरा भगवता नियुक्ता' इति [२९]तत्रैतद्वक्तव्यम्—तेषां[३०]मध्याद्यदि कस्यचित् कदाचिद् [३१]वक्ष्यमाण[३२]मन्त्रवर्गस्येवाधि[३३]कारेच्छा[३४] व्यावर्तते।

---

[१] 'रूपत्वं' इत्यत्र 'रूपत्वात्' इति दृश्यते — ए.
[२] नातमान्तस्येत्यत्र — अ, आ.
[३] अत्र 'को' इत्यधिकम् — ऊ, ऋ, ॠ.
[४] हेतुरित्युच्यते — ऋ, ॠ, ऐ.
[५] परिपाटया ततः प्राप्तः — मु, उ, ऊ, ॠ.
[६] वाशब्दो नास्ति — अ, ऊ, ॠ, ए, ऐ.
[७] कर्तृत्वविषये — ऋ, ॠ.
[८] ०मलपाक० — अ, ऊ.
[९] नान्योऽपरिणत० — ऊ, ऋ, ॠ, ऐ.
[१०] अत्र चशब्दोऽधिकः — ऋ, ॠ.
[११] 'क्रम' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[१२] तत्पदार्ह० — अ, आ, ई, उ, ऊ, ए, ऐ.
[१३] 'च' इत्येतत् 'स' इत्येतच्च न स्तः — अ, आ, ई, उ, ए, ऐ.
[१४] प्राप्तो गतः — आ, ई, उ, ऊ, ए, ऐ; प्राप्यो गतः — ऋ, ॠ.
[१५] निश्चयः — अ, ऐ.
[१६] ०स्योत्कृष्टमलपाकः — अ; ०स्योत्कृष्टो मलविपाकः — ऊ, ऋ. ॠ.
[१७] 'नियतः' इत्यत्र 'नानियमः' इति दृश्यते — ऊ, ऋ, ॠ.
[१८] अर्हस्यात्र — ॠ
[१९] नियमैकत्वादिति — ऊ, ऋ, ॠ; नियामकत्वस्य संभवादिति — ऐ.
[२०] 'तत्र' इत्यत्र तुशब्दो दृश्यते — ऊ, ऋ, ॠ.
[२१] तत्पदार्हत्वे — आ; तत्तत्पादार्हत्वे — ऐ.
[२२] ०ऽस्यैकस्यैवेति — ऊ, ऋ, ॠ.
[२३] तत्तच्छक्त्युत्कर्ष० — ऊ; तनुशक्त्युत्कर्ष० — ॠ.
[२४] आह एतदुक्तम् — ऊ, ऋ, ॠ; आदावेतदुक्तम् — ऐ.
[२५] मतङ्ग० विद्या० ५. ५ उ०.
[२६] प्रभविष्णुवशात् सन्तः — ऐ.
[२७] शान्ताः — अ, आ, ई, उ, ए.
[२८] विद्येशा० — अ, आ, ई, उ, ए; ऐ.
[२९] तत्र तद्वक्तव्यम् — अ, ॠ; तत्रैव तद्वक्तव्यम् — आ, ई, उ, ए, ऐ.
[३०] धर्माद्यदि — ए.
[३१] मतङ्ग० विद्या० ७. १ उ० — १४ वृत्तौ; वक्ष्यमाणस्येवाधि० — ॠ.
[३२] ०मन्त्रस्येवाधि० — ऊ, ऋ.
[३३] ०कारो व्यावर्तते — अ; ०कारोच्चा व्यावर्तते — आ.
[३४] अत्र हिशब्दोऽधिकः — ए.

किं तस्य [1]भगवांस्तदैव मुक्तिं विधत्ते । अथ [2]बलादधिकारमित्युच्यते — 'स च तस्मै समर्पित' इत्यादि ।

"स च तस्मै [3]समर्पिते ॥९॥
निर्वाति कृतकृत्यत्वादनन्तोऽनन्तवीर्यवान् ।

**सः** अनन्तेशः, **च**शब्दादन्योऽपि सूक्ष्मादिः, [4]निवृत्तायामधिकारेच्छायां **तस्मै** सदाशिवभट्टारकाय "सम्यगिह[5] नाहमिममत्यन्तमलकलङ्कसंकुलमधिकारं कर्तुं क्षमः" इति [6]अभ्यर्थनापूर्वं **समर्पिते** अधिकारे सति, शिवादेव [7]निमित्ताद् **निर्वाति** निर्वाणं परं मोक्षं याति । **कृतकृत्यत्वाद्** अधिकारेच्छाया [8]उपरमाद् न परमे[9]श्वरेण [10]अधिकारे बलान्निरुध्यत इत्यर्थः ॥

[11]तदानीमनन्तेशे [12]परां मुक्तिमधिरूढे भगवान् किं [13]करोतीत्युच्यते — "ततस्तस्मिन्" इत्यादि ।

**ततस्तस्मिन्समारूढे पञ्चमन्त्रतनुः शिवः ॥१०॥**
**[14]ददात्याज्ञां सुसूक्ष्मस्य विद्येशस्य महात्मनः ।**
**स च प्राप्तवरः श्रीमान्भर्तुराज्ञानुवर्तकः ॥११॥**
**[15]तत्तन्त्रः [16]पदमानन्तमधिष्ठाय [17]महायशाः ।**
**निवर्तयत्यधश्चक्रं यत्तन्मायात्मकं जगत् ॥१२॥**
**एवं शिवोत्तमस्यापि सूक्ष्मस्योपरमे शिवः ।**
**प्रददातीशसंघस्य कारणत्वमनिन्दितम् ॥१३॥**
**पदात्पदं विचरतो ह्येकैकस्य महात्मनः ।**
**[18]यावत्सा परमा काष्ठा तावच्चक्रस्य कारणम् ॥१४॥**
**अव्युच्छेदाय रुद्राणां कृत्वा शक्तिबलान्वितम् ।**
**नियुनक्ति पदे [19]तस्मिन्यवीयांसं शिखण्डिनम् ॥१५॥**

**ततो** भगवान् अनन्तपदे सूक्ष्मं, सूक्ष्मपदे [20]च शिवोत्तममित्येवमुत्कर्षक्रमेण **पदात्पदं** सप्तापि संयोज्य, अष्टमे शिखण्डिनः **पदे** मायाचक्रस्याविच्छेदाय, अण्वन्तरं शिखण्डिसमानगुणाभि[21]व्यक्तेः

[1] भगवांस्तदेव मुक्ति — अ; तदैव भगवान् मुक्ति — ऊ, ऋ, ॠ.
[2] बलाधिकारम् — अ.
[3] समर्पितः — मु, उ.
[4] वीतायामधि० — ऊ, ऋ, ॠ.
[5] 'इह' इत्यत्र इतिशब्दो वर्तते — ऊ, ऋ.
[6] अर्थितापूर्वमर्पिते—अ, ऐ; अभ्यर्थितः पूर्वमर्पिते — आ; अभ्यर्थिताः पूर्वमर्पिते — ई, उ, ए.
[7] 'निमित्ताद्' इत्यत्र 'निर्मितां' इति दृश्यते-अ, आ.
[8] परमोपरमाद् — आ; परमुपरमाद् — ई, उ, ए, ऐ; अप्युपरमाद् — ऊ, ऋ, ॠ.
[9] ०श्वरेणैव अधि० — अ, आ, ई, उ, ए, ऐ.
[10] अधिकारबला० — ऊ, ऋ, ॠ.
[11] इदानीं — ऊ, ऋ, ॠ.
[12] परमां मुक्ति — ई, उ.
[13] करोति । उच्यते — अ, आ, ई, उ.
[14] ददात्यनुज्ञां सूक्ष्मस्य — ऊ, ऋ, ॠ.
[15] तत्तन्त्रपरमानन्त० — ओ.
[16] पदमानन्दमधि० — मु, उ.
[17] महायशः — ऊ, ऋ, ॠ.
[18] यावच्च परमा — उ.
[19] तस्मिन्यवीयसि — ऊ, ऋ, ॠ.
[20] चशब्दो नास्ति—अ, आ, ई, उ, ऋ, ॠ, ए, ऐ.
[21] ०व्यक्तः — ऊ, ऋ.

शिखण्डचभिधानमेव [1]विधत्ते। एवं चशब्द[2]समुच्चितानां सूक्ष्मादीनां [3]मध्यादन्यतमस्यापि[4] [5]वीतायामधिकारेच्छायां [6]तमुन्मोच्य, तत्पदावधि पदात्पदमुत्कर्षं तेषां कृत्वा, पुन[7]रन्तिमपदेऽण्वन्तरं भगवान् विदधातीति। नानिच्छोर्मन्त्रवर्गस्येव [8]कस्यचिन्मन्त्रेश्वरस्यापि[9] भगवानधिकारं विधत्त इत्यत्रार्थः। न तु महाप्रलयविषयः। तत्र युगपदेव संहारश्रुतेः। यद्वक्ष्यति[10] —

"[11]शुद्धाध्वपतयो देवा [12]मन्त्राश्चामोघशक्तयः।"
"[13]समाप्य [14]स्वाधिकारांस्ते प्रयान्ति पदमुत्तमम्।" इति।

श्रीमद्रौरवेऽपि[15] —

"[16]अनन्तोपरमे तेषां महतां चक्रवर्तिनाम्।
विहितं [17]सर्वकर्तृत्वकारणं परमं पदम्॥" इति।

युगपत्सर्गश्रुतेश्च। यदुक्तम्[18] —

"[19]येनाशु ते महावीर्या विद्येशाः प्रकटीकृताः।" इति।

अतश्च [20]यः, केनापि श्रुतेः पौर्वापर्यपरामर्शाक्षमेण अत्रैषां क्रमोपसंहारसिद्धौ प्रयोगः कृतः —

"विद्येशाः धर्मिणः, [21]प्रयोजककारकान्तरोपरमे [22]क्रमेणोपसंहृति[23]धर्माणः इति साध्यो धर्मः, स्वाधिकारमलयोगित्वात्, राजोपसंहारे[24]ऽप्यनुपसंहृतयुव[25]राजवत्" इति।

स [26]त्वागमनिराकृतः। हेतुरप्यत्र विरुद्ध एव, विपर्यय[27]व्याप्तेः। ये हि [28]अधिकारमलयोगिनः, ते [29]युगपदुपसंहृतिधर्माण एव यथा तु सार्धत्रिकोटयो[30] [31]मन्त्राः, मायागर्भाधिकारिणश्च।

---

[1] विदत्ते — ऊ, ऋ; विदन्ये — ॠ.
[2] ०समुत्थितानां — ऊ, ऋ, ॠ.
[3] 'मध्याद्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[4] अपिशब्दो नास्ति — आ.
[5] विरतायामधि० — ऐ.
[6] तम् उन्मोच्यते पदावधि — अ; तं मुमोच तत्पदावधि — ऐ.
[7] ०रन्तिमे पदे — ऊ, ऋ, ॠ, ऐ.
[8] कस्य चेन्मन्त्रे० — ऊ, ऋ, ॠ.
[9] अपिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[10] मतङ्ग० विद्या० २५. ६२ उ०, ६३ उ०.
[11] शुद्धाश्च पतयो — ऊ, ऋ, ॠ.
[12] महान्तश्चक्रवर्तिनः — ऊ, ऋ, ॠ, ऐ.
[13] समर्प्य — ऐ.
[14] स्वाधिकारे तं — ऊ, ऋ; स्वाधिकारे ते — ॠ; स्वाधिकारं तं — ऐ.
[15] रौरवे विद्या० २. १३.
[16] अनन्तः परमस्तेषां — मुद्रितरौरवपाठः।
[17] सर्वकर्तृत्वं कारणं — ऊ, ऋ, ॠ, ऐ.
[18] मतङ्ग० विद्या० ४. १३ पू०.
[19] येनाश्रुते महा० — अ, आ.
[20] यत्केनापि श्रुतिपौर्वापर्य० — ऊ, ऋ, ॠ.
[21] प्रयोजनकारकाणां नोपक्रमेणोपसंहृति० — अ; प्रयोजनकारकानन्तोपक्रमेणोपसंहृति० — आ; प्रयोजककारकानन्तोपक्रमेणोपसंहृति० — ई; उ, ए; प्रयोजककारकानन्तरोपरमे संहृति० — ऊ; प्रयोजकावनन्तोपक्रमेणोपसंहृति० —ऐ.
[22] 'क्रमेणोप' इत्येतन्नास्ति — ऋ, ॠ.
[23] अत्र 'धर्मिण इति' इत्यधिकम् — ऊ, ऋ, ॠ.
[24] ०ऽप्यनुसंहृत० — ऐ.
[25] ०राजादिवत् — ऊ, ऋ, ॠ.
[26] स्वागम० — ऊ, ऋ, ॠ.
[27] व्याप्तः — ऊ, ऋ, ॠ.
[28] अधिमल० — ऋ, ॠ.
[29] युगपदसंहृति० — ऊ, ऋ, ॠ.
[30] यथावच्चतुर्थकोटिसंख्याताः — ऊ, ऋ.
[31] मन्त्रमात्रागर्भाधि० — ऊ; मन्त्रमायागर्भाधि० ऋ, ॠ.

[1]दृष्टान्ते साधनधर्मासिद्धिः। न हि राजयुवराजादीनामधि[2]कारमल[3]निबन्धनोऽधिकारः। अपि तु कर्मनिबन्धन एव।

अथ कर्माण्येवात्राधिकारमलशब्देनोच्यन्ते[4]। [5]तर्ह्यसिद्धो हेतुः। तेषां तत्रासंभवादिति [6]यत्किंचिदेतत्। प्रयोगश्चात्रापि विद्यत एव — "विद्येशास्तदानीं युगपदुपसंहृति[7]धर्माणः, अधिकारित्वे सति विद्यमानत्वात्। विद्यमानमन्त्रवन्माया[8]गर्भाधिकारीश्वरवच्च" इति॥ १०–१५॥

[9]अथ क्रिया[10]शक्त्युत्कर्षापकर्ष[11]वत्वेऽप्येषां किं शिवैकप्रयोज्यत्वम्, आहोस्वित् परस्परमपि प्रयोज्यतेत्युच्यते — 'एवं ते ऽनुगता' इत्यादि।

**एवं तेऽनुगताः सर्वे [12]तदिच्छानुविधायिनः।**
**अनन्तेशस्य नाथस्य यतस्तेभ्यो [13]महत्तमः॥१६॥**
**तदायत्ता विचेष्टन्ते सुखिनः सर्व एव ते।**

अथैव **ते** [14]अनन्तक्रियाशक्त्या न्यूनाः, **एवम्** अनन्तस्य **अनुगताः** तत्तन्त्राः, **तदिच्छानुविधायिनः** ते **सर्वे** एवेति। [15]तत्र हेतुः — "**यतस्तेभ्यो** [16]नियोगविषयेभ्यो [17]**महत्तमः**" इति। एवं शिवोत्तमादिभ्योऽपि यो येषां महत्तमः, तेऽपि **तदायत्ता विचेष्टन्ते** [18]इत्यपि सिद्धम्। न च [19]चेष्टनं तेषां दुःखाय। यतः **सुखिनः सर्व एव ते**; क्लेशं विनेच्छामात्रेण कार्यकर्तार इत्यर्थः॥

'न केवलम्' इत्यादि।

**न केवलं महेशाना [20]विद्याश्चामितविक्रमाः॥१७॥**
**तिस्रः कोट्योऽर्धकोटिश्च नियोगेनाधिरोपिताः।**
**[21]विद्यातत्त्वविधौ वाच्यास्तासामेव विभूतयः॥१८॥**

**न केवलं** विद्येशा एवोपर्युपरिवर्तिनो महत्तमस्यायत्ता[22] विचेष्टन्ते। यावद्विद्या अपि; विद्या-

---

[1] दृष्टान्तश्च साधनधर्मासिद्धः — ऊ, ऋ, ॠ.
[2] ०कारो मल० — ऋ, ॠ.
[3] 'निबन्धनो' इत्यारभ्य 'अत्राधिकारमल०' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[4] ०नोच्यते — अ, आ, ऋ, ऐ.
[5] तस्य सिद्धो — अ, ऋ; तर्हि सिद्धो — ऐ.
[6] 'यत्' इत्येतन्नास्ति — अ; 'यत्' इत्यत्र 'न' इति दृश्यते — ऊ, ऋ, ॠ.
[7] ०धर्मिणः — अ.
[8] ०कर्माधि० — ऊ, ऋ, ॠ.
[9] 'अथ' इत्यत्र 'आह' इति दृश्यते — ऊ, ऋ, ॠ.
[10] शक्त्युत्कर्षवत्वे० — ॠ.
[11] ०वत्वे तेषां — अ, ऋ; ०वत्वेत्येषां — ऊ.
[12] महावीर्या महाधियः — ऊ, ऋ, ॠ.
[13] महत्तमाः — ॠ.
[14] तावत्क्रिया० — अ, आ, ई, उ, ए; तव क्रिया० — ऐ.
[15] अत्र — ऋ, ॠ.
[16] विभाग० — अ, आ, ई, उ, ए, ऐ.
[17] 'महत्तमः' इत्यारभ्य 'येषां' इत्यन्तं नास्ति — आ.
[18] 'इत्यपि' इत्येतन्नास्ति — ई, उ.
[19] तेषां चेष्टा दुःखाय — ऊ, ऋ, ॠ.
[20] विद्याचरितविक्रमाः — मु, उ.
[21] 'विद्यातत्त्वविधौ' इत्यारभ्य श्लो० ३८उ.–४१ पूर्वार्धान्तस्य अवतारिकायां 'रोधयित्र्या व्यापार उच्यते' इत्यन्तो भागो लुप्तः — ऊ, ऋ, ॠ.
[22] महत्तमस्य युक्ता — अ.

ङ्गराज्ञी[1]रुद्रव्यूहभेदेन विद्याप्रकरणे [2]वक्ष्यमाणाः[3] **नियोगेन** उपरि **अधिरोपिताः** सत्यः तथैवोपरिवर्तिनो विद्या[4]रूपस्यायत्ता विचेष्टन्ते। न त्वत्र विद्येश्वरस्याज्ञया विचेष्टन्ते [5]इत्यर्थो व्याख्येयः। तस्य [6]विद्येश्वरत्त्वाभिधानेनैव सिद्धत्वात्। यदुक्तम्[7] — "विद्येशाः प्रकटीकृताः" इति। **तासां च** भुवनादिविभूतयो **विद्या**[8]तत्त्वविधौ वक्ष्यमाणाः,[9] तत्रैव आसामन्तर्भावः ॥१७–१८॥

तदियता शक्तेर्विभागप्रतिपादनप्रसङ्गेन [10]शिवशक्तेरिव [11]अनन्तशक्तेरप्यधिकारानुप्रवेशनमनन्तादिद्वारेणोक्तम्। अधुना [12]विभागस्तस्याः कथ्यते — 'यत्स्वरूपम्' इत्यादि।

**यत्स्वरूपमनन्तस्य पतिशक्तिबलान्वितम्।**
**तेन सर्वं विजानाति करोति च महाबलः ॥१९॥**

**यद्** [13]**अनन्तस्य स्वरूपं** स्वशक्त्यात्मकं **तेन** [14]**सर्वं** जानाति **करोति च**। [15]न तु परमेश्वरबलेन तत्र संक्रान्तेन यथा पाशुपतैरिष्यत इति ॥१९॥

परमेश्वरशक्तिभ्यस्तावदनन्तशक्तीनामन्यत्वं प्रतिपादितमिति। तथा हि —

**पत्युः शक्तिः परा सूक्ष्मा जगदुन्मीलने क्षमा।**
[16]**तया प्रभुः प्रबुद्धात्मा स्वतन्त्रः स सदाशिवः ॥२०॥**
**प्रबुध्यते महातेजा ज्ञानशक्तिकृतास्पदः।**
**द्विधा** [17]**भेदं समापन्ना स्थानभेदेन सा पुनः ॥२१॥**

**पत्युः शक्तिः द्विधा भेदं** संप्राप्ता, ततः **स्थानभेदेन** इति [18]ज्ञत्वपूर्वकत्वेन कर्तृत्वस्येत्युक्तम्[19] ॥२०–२१॥

[20]ततः प्रकृते किमित्युच्यते — 'स्थानभेदेन' इत्यादि।

**स्थानभेदेन कर्तृत्वं** [21]**यत्तस्या उदितं सदा।**
**तत्सामर्थ्यादनन्तस्य तत्तेजः** [22]**पारमेश्वरम् ॥२२॥**

---

[1] ०रुद्रवद्व्यूह० — अ.
[2] वक्ष्यमाणनियोगेन — अ, आ, ई, उ, ए.
[3] मतङ्ग० विद्या० ७. १६ उ० – २३ वृत्तौ।
[4] ०रूपाधिकस्यायत्ता — ऐ.
[5] इत्यर्थे — अ.
[6] विद्येश्वरतत्त्वाभि० — अ.
[7] मतङ्ग० विद्या० ४. १३ पू०.
[8] ०तत्त्वान्तविधौ — ए.
[9] मतङ्ग० विद्या० ७. १६उ – २३ वृत्तौ।
[10] शिवशक्तेरप्यधिकारानु० — आ; शिवशक्तेः शिवानन्तेशशक्तेरप्यधिकारानु० — ए.
[11] अनन्तेशशक्ते० — ई, उ, ऐ.
[12] भोगस्तस्याः — ऐ.
[13] अनन्तरस्य रूपं — ऐ.
[14] सर्वान् — आ, ई, उ.
[15] ननु — अ.
[16] तथा — ओ.
[17] भावं — मु. उ.
[18] ज्ञत्वं पूर्वकत्वेन — अ; मन्त्रत्वपूर्वकत्वेन — ए.
[19] मतङ्ग० विद्या० ५. १९ वृत्तौ।
[20] 'ततः' इत्येतन्नास्ति — आ.
[21] यस्मात्तस्योचितं सदा — मु, उ.
[22] परमेश्वरम् — ओ.

भेदैः [1]षोडशभिर्भिन्नं क्रियाज्ञानात्मकं शिवम् ।
अतिरस्कृतसामर्थ्यं जगत्यस्मिन्सितासिते ॥२३॥
[2]व्यापारकृत्स्नसंपूर्णं नामभेदेन सर्पितम् ।

**यद्** एतत्पूर्वोक्तस्थानभेदेन **तस्याः** शक्तेः **कर्तृत्वम्** उक्तं, तस्य **सामर्थ्यात्**। **अनन्तस्ये**त्युपलक्षणं विद्येश्वराणाम्। **तद्** विद्येश्वरात्मकं **तेजः** ज्ञान[3]क्रियारूपं **शिवं** [4]श्रेयःसाधनं **जगत्यस्मिन्** व्यापारभेदेन [5]**षोडशभिः** नामभे**दैः** [6]**सर्पितं** प्रसृतमिति। पतिशक्तिभ्यः **ईशान्यादिभ्यः** [7]प्रागुक्ताभ्यो विभक्ता भिन्ना ऐवैताः षोडशानन्तेशशक्तयः क्षोभिकाद्या इत्यर्थः॥

तासां नामानि क्षोभिकेत्यादीनि[8] —

**क्षोभिका जननी चैव रोधयित्री च कीर्तिता ॥२४॥**
**गोप्त्री नेत्री च योक्त्री च त्राणा वामा नियामिका ।**
**रौद्री च प्लाविका श्रद्धा [9]भाविका द्वादशी मता ॥२५॥**
**ज्वाला [10]प्रह्लादिनी चैव स्तम्भिनी [11]विकिरापरा ।**
**दश षट् च पराः सूक्ष्माः शक्तयोऽनन्ततेजसः ॥२६॥**

किमे[12]तावत्य एवानन्तशक्तयः। न। — 'आभ्योऽन्याश्च' इत्यादि।

**आभ्योऽन्याश्चाप्यसंख्येयास्ताश्च तत्त्वाध्वनि स्थिताः ।**
**वक्तव्या या [13]यथातत्त्वं तत्त्वधर्मेण संगताः ॥२७॥**
**संक्षेपोक्त्या न विस्तारात्स्फुटार्थप्रतिपादिकाः ।**

**आभ्यः** षोडशभ्यः शक्तिभ्यः **अन्याः** असंख्याता एव। **चो** ह्यर्थे यस्मात् तत्त्वानि परमार्थभूतानि घटादिवद्वस्तूनि[14] [15]अध्वा, अर्थक्रियाव्याप्तिहेतुत्वात्, तस्मिंस्तु **स्थिताः**; [16]प्रत्यर्थमधिष्ठाय[17]कत्वेन स्थितत्वादर्थवद्[18]**असंख्येया** इत्यर्थः। [19]ततश्चासंख्यातत्वेनातिविस्तृतत्वाद् **न** व्यवहारावसरप्राप्तास्ता वक्तुं शक्यन्त इति, संक्षेपतः सामान्योक्त्या **तत्त्वानामर्थानां धर्मेण** कार्यलक्षणेन **वक्तव्याः**। [20]यतो **याः स्फुटं** सर्वेषामर्थानां [21]**प्रतिपादिकाः** गमिकाः समाविर्भाविकाः।

---

[1] षोडशिभि० — ओ.
[2] व्यापाराः कृत्स्नसपूर्णा — मु, उ०.
[3] ०क्रियात्मकरूपं — आ.
[4] 'श्रेयः' इत्येतन्नास्ति — ऐ.
[5] षोडशीभिः — अ.
[6] समर्पितं — अ, ई, उ, ए, ऐ.
[7] मतङ्ग० विद्या० ४.५ उ०, ६, १५ उ०, १६ पू० वृत्तौ।
[8] क्षोभिकाद्यादि — आ, ऐ.
[9] भाविनी — मु, उ, ओ.
[10] प्राजातिनी — उ.
[11] विकारापरा — उ.
[12] ०तावन्त्येवानन्त० — आ.
[13] 'यथा' इत्यत्र 'यतः' इति दृश्यते — ओ.
[14] घटादिवद्वस्तु — अ; घटादिवस्तुनि — आ; घटादिवस्तूनि — ई, उ, ए, ऐ.
[15] 'अध्वा' इत्यत्र 'अन्यत्' इति दृश्यते — अ.
[16] वृत्त्यर्थमधि० — अ, आ.
[17] ०कत्वेऽस्य तत्त्वादर्थव० — अ.
[18] असंख्येत्यर्थः — अ.
[19] ततश्च संख्यात० — अ.
[20] या तया स्फुटं — ऐ.
[21] प्रतिपादका गमिका — अ; प्रतिपादका गमिकाः — आ; प्रतिपादिका नागमिका — ऐ.

तदिदमुक्तम्[१] —

"न सा भावकला काचित् सन्तानद्वयवर्तिनी।
व्याप्त्री शिवकला यस्यामधिष्ठात्री न विद्यते॥" इति॥

अथ क्षोभिकादीनां कार्यद्वारेण विभाग उच्यते — 'तत्र तावद्' इत्यादि।

**तत्र तावदनन्तस्य क्रीडतः पत्युरिच्छया ॥२८॥**
**स्वभावस्य च्युतिः क्रीडा स च क्षोभ इति स्मृतः।**
**[२]क्षोभेनातिजवात्कर्तुः शरीरमभवत्पुरा ॥२९॥**
**येनावतीर्य संभोगात्तत्त्वादीश्वरसंज्ञकात्।**
**व्यापारस्थितयेऽणूनां कृतवान्भुवनं महत् ॥३०॥**

**तत्र** तासु मध्यात् क्षोभिका **तावद्** उच्यते। [३]"स्वभावस्यापरो भावः सा क्रीडेत्युपचर्यते" इति प्रागुक्तं स्मार्यते। तत्र भोगावस्थात्यागेन कर्तृत्वावस्थालक्षणं [४]क्षोभं क्रीडाशब्दवाच्यमनुभवतः **अनन्तस्य, कर्तुः** परमेश्वराद् यः क्षोभः शुद्धविद्याविषयः। यदुक्तम् श्रीमत्किरणे[५] —

"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तो[६]ऽनन्तोऽसिते प्रभुः।" इति।

तेन **अतिजवात्** सुशीघ्रमेव **शरीरमभवत्। येन** शरीरेण [७]हेतुना **अवतीर्य** अनन्तः, अशरीरस्यात्मनो [८]व्यापकत्वेनावतरणा[९]संभवादिति। सम्यग् भुज्यते इति **संभोगः** अनन्तस्य स्वयं भुवनं, तदेव ईश्वरतत्त्वान्तर्भाविनोक्तत्वाद्[१०] ईश्वरतत्त्वमित्युच्यते, तस्माद् **अवतीर्य, व्यापारस्य [ स्थितये ]** स्थितिरित्युपलक्षणं स्थिति[११]संरक्षणादान[१२]भावानुग्रहार्थं, स्थाप्यादिधर्मकाणाम् **अणूनां कृतवान् भुवनम्** इति तत्त्वभावभूतभुवनात्मकं **महद्** इति ॥२८—३०॥

कथमित्युच्यते — 'स्वशक्तिव्यूहसामर्थ्याद्' इत्यादि।

**स्वशक्तिव्यूहसामर्थ्यान्मायातत्त्वं सुरेश्वरः।**
**अचालयत्क्रियायुक्तः शक्त्या क्षोभिकया तदा ॥३१॥**

यस्मिन्नवतीर्णः तदेव **मायातत्त्वं स्वशक्तिव्यूहसामर्थ्याद् अचालयत्** चालितवाननन्तेशः [१३]**सक्रियः**! अत्र मायाक्षोभे [१४]कारणभूता या, सा क्षोभिका शक्तिरिति ॥३१॥

---

[१] आकरो न लभ्यते।
[२] क्षोभे सति जगत्कर्तुः — मु, उ.
[३] मतङ्ग० विद्या० ४. २९ उ०.
[४] क्षोभः — ऐ.
[५] किरणे विद्या० ३. २७ उ०.
[६] ०ऽनन्तेऽसिते — अ.
[७] 'हेतुना' इत्येतन्नास्ति — अ.
[८] व्यापारकत्वे० — ए.
[९] 'संभवादिति' इत्यारभ्य 'स्थितिसंरक्षणा' इत्यन्तं नास्ति — ए.
[१०] मतङ्ग० विद्या० ५. ५. वृत्तौ.
[११] ०सुरक्षणा० — अ.
[१२] ०भवानु० — आ, ई, उ, ए.
[१३] सक्रीडयोत्र — ऐ.
[१४] करणभूतया सा — ए.

किं च — 'सुस्थितस्य' इत्यादि ।

**सुस्थितस्याथ जगतः सितासितविभूतिषु ।**
**पशूनां [1]सहसा क्षोभं प्रकरोत्यव्ययात्मिका ।।३२।।**

**अथ** अनन्तरं **सुस्थितस्य** महाप्रलयविश्रान्त्यनन्तरं [2]समर्थीभूतस्य [3]मायाकार्यात्मनस्तत्त्वभावभूत-[4]भुवनलक्षणस्य **जगतः** सुखासुखसमृद्धिनिमित्तमुपादानुगुणं **क्षोभं** करोति यया, **पशूनां** च तदानीं प्रलयकेवलिनां [5]सकलावस्थोत्पादानुगुणं करोति [6]यया सा क्षोभिकेति ।।३२।।

सकलावस्थायामप्यस्या व्यापार इत्युच्यते — 'क्षुब्धो विरज्यत' इत्यादि ।

**क्षुब्धो विरज्यते स्थानान्न [7]चान्यत् समुपैति हि ।**
**विभ्रान्तचित्तो विरतस्तथापि न विमुञ्चते ।।३३।।**
**परं न लभमानः सन्क्षोभिकाकुलितेन्द्रियः ।**
**एवं हि क्षोभको देवः क्षोभ्याश्च पशवः स्मृताः ।।३४।।**

संप्राप्तशरीर[8]ग्रहादिस्थानोऽपि क्षोभशक्त्या समाक्रान्तः, तस्मात् **स्थानाद्** [9]**विरज्यते** । **न** चैतावता स्थानान्तरं [10]समुपयाति, [11]रोधयित्र्या रुद्धत्वात् । किं तु तत्रैव विभ्रान्तचित्ततया। [12]विरागाद्यात्मकत्वेन [13]च [14]यया क्षोभ्यते सा क्षोभिका । अनन्तेशः [15]**क्षोभकः** । **पशवः क्षोभ्याः** । चशब्दात् [16]प्रागुक्तमायादितत्त्वभावभूतभुवनप्रलयकेवलात्मानः ।।३३-३४।।

ततोऽनन्तरं जनन्या व्यापार उच्यते — 'न्यग्भूतस्य' इत्यादि ।

[17]**न्यग्भूतस्याणुसंघस्य मायोदरगतस्य हि ।**
**करोत्युच्छूनतां भावं भोगाभिमुखतां तु या ।।३५।।**
**जनन्या जनितश्चायं पशुर्भोगेषु रज्यते ।**
**जनिता लक्ष्यतेऽणूनां पतिर्जन्मनि जन्मनि ।।३६।।**

न्यक्कारमत्यन्तं मलिनतां मलेन नीतस्य । किं विज्ञानकेवलिनः । [18]न । **मायोदरे गतं** जनन तदानीं योग्यतया यस्य तस्य; कर्मयुक्तस्य प्रलयकेवलिन इत्यर्थः । **या** [19]प्रोच्छूनतां **भोगाभि-**

---

[1] सहजा — मु. उ.
[2] समर्थभूत० — ए.
[3] अत्र 'अस्य' इत्यधिकम् — आ, ई, उ, ए, ऐ.
[4] 'भुवन' इत्येतन्नास्ति — ऐ.
[5] सकालावस्थो० — अ, आ, ई, उ, ए.
[6] यथा — अ.
[7] चान्यः — मु, उ.
[8] ०ग्राहादिस्थानेऽपि — अ; गृहादिस्थानोऽपि — आ.
[9] विराजते — ए.
[10] उपयाति — आ, ई, उ, ए.
[11] बोधयित्र्यारूढत्वात्—अ; रोधयित्र्यारूढत्वात् — आ, ऐ; रोधयित्र्या निरुद्धत्वात् — ए.
[12] विभ्रागाद्यात्म० — अ.
[13] चशब्दो नास्ति — ऐ.
[14] यथा — अ.
[15] 'क्षोभकः' इत्येतन्नास्ति — अ, ई, उ.
[16] मतङ्ग० विद्या० ५. ३१, ३२ वृत्तौ ।
[17] न्यक्कारस्याणु० — ओ.
[18] नशब्दो नास्ति — अ, ए.
[19] प्रोच्छ्रयतां — ऐ.

[1]**मुखतां भावं** तत्त्वभुवनादिजननपूर्वतात्त्वभौवनशरीरसंबन्धं जनयति सा जननी। नित्यत्वादात्मनामिदमेव जननम्। यतो **जनन्या जनितः** [2]लोको भोगाभिरतो दृष्टः। अतो जनकः पितेव भगवान् **लक्ष्यते** प्रतिजन्म अस्याणोस्तद्योगादिति ॥३५-३६॥

इतश्च सा जननी — 'भावोऽन्य' इत्यादि।

**भावोऽन्यो यः स्वभावात्तु शुभो वा यदि वाशुभः।**
**जनयित्वा तु जन्यस्य पशोः स परमेश्वरः ॥३७॥**
**यच्छत्यविकलान्भोगान्यया सा जननी मता।**

**यः** [3]**स्वभावाद्** आत्मनो व्यतिरिक्तो बुद्धिगतो **भावो** धर्मज्ञानाद्यष्टरूपः। [4]यदाहुः[5] —
"भावयन्ति यतो लिङ्गं तेन भावाः प्रकीर्तिताः"। इति।
तं **पशोः जनयित्वा** परिपाच्य, यया भगवान् **भोगान्** [6]प्रयच्छति, **सा जननी** मातेव। अकृतस्य करणं, कृतस्य परिवर्धनं च मातुः कर्म यतः॥

रोधयित्र्या व्यापार उच्यते — 'रोधयित्री' इत्यादि।

**रोधयित्री** [7]**तु या पत्युरावृत्य** [8]**जगदातुरम् ॥३८॥**
**रुणद्धि स्थितयेऽत्यर्थं** [9]**नेच्छन्तं च पशुं बलात्।**
**कर्तव्येष्वथ कार्येषु प्रस्थितस्य क्रियावतः ॥३९॥**
**प्रवृत्तौ धारयेच्चित्तं येन तं प्रति पुद्गलः।**
**प्रवर्तते** [10]**न** [11]**सामर्थ्यादुत्साहे च विमूढधीः ॥४०॥**
**रोधयित्री तु** [12]**सा शक्तिर्यतो रोधयिता प्रभुः।**

जनन्या जनितमपि [13]**जगत्** तत्त्वभुवनादिरूपं परिणतिस्वभावत्वाद् [14]**आतुरम्** [15]अत्यन्तानवस्थितावस्थानम् **आवृत्य** अधिष्ठाय, स्थित्यर्थं **या रुणद्धि**। [16]**पशुं च** सकलावस्थं या **बलाद्** इच्छाशून्यमपि **कर्तव्येषु** रुणद्धि। **सा पत्युः** अनन्तस्य संबन्धिनी **रोधयित्री** [17]**शक्तिरुच्यत** इति।
ननु अनिच्छतश्चेतनस्य सा कथं रोधिकेति। उच्यते — **अथेति** अर्थान्तरोपक्षेपे। **येन**

---

[1] ०मुखभावं तत्त्व० — ऐ.
[2] 'लोको' इत्येतन्नास्ति — अ; लोके — ऐ.
[3] स्वभावात्मनो — अ; यदात्मनो — ऐ.
[4] यथाहुः — अ, आ, ई, उ, ए.
[5] आकरो न लभ्यते।
[6] 'प्र' इत्येतन्नास्ति — ऐ.
[7] च — ओ.
[8] जगतो धुरम् — मु, उ.
[9] नेच्छन्नपि पशुं — ओ.
[10] 'न' इत्यत्र 'अथ' इति दृश्यते — मु, उ.
[11] सामर्थ. . . हन्नपि विमूढधीः — ओ.
[12] या — मु, उ.
[13] 'जगत्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[14] आदातुम् — ई, उ; आन्तरम् — ऋ; आकारम् — ए.
[15] अत्यन्तानवस्थानम् — अ; अत्यन्तानवस्थितानाम् — ऋ.
[16] पशुत्वं च — आ.
[17] 'शक्तिरुच्यत' इत्यारभ्य 'रोधयित्री' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.

तस्य **कार्येषु** प्रवृत्तस्य तत्प्रवृत्तिहेतुभूतं **चित्तमेव** रोधयति। येन [1]कार्य प्रति समर्थोऽपि [2]**न** स्व-सामर्थ्यात् **प्रवर्तते** मूढधीः पशुरिति चित्तविरोधनेन **तमपि** रोधयतीति रोधयित्री ।

ननु रागद्वेषाभावात् किमर्थमसौ रुणद्धि। यथो[3]पयोगं सुकृतदुष्कृत[4]भोगोपरोधेनेत्यविरोधः । तदिदमुक्तम्[5] —

"आहितास्मदुदयप्रतीरणा यद्विघातरहिता मरीचयः ।
एतदेव वयमात्मनोऽधिकं रूपमीश तव संगिरामहे ।।" इति।

आहितमस्मदुदये प्रतीरणं याभिः ।।

अथ गोप्त्र्या व्यापरः — 'धर्माधर्मविपाकेषु' इत्यादि।

**धर्माधर्मविपाकेषु भोक्तु[6]रभ्युद्यतस्य हि ।।४१।।**
**[7]असमञ्जसहानार्थं [8]रक्षणाय च सर्पिता ।**
**गोप्त्री [9]गोपयितुं शक्ता जगदेतच्चराचरम् ।।४२।।**
**स्वं स्वं [10]धत्तेऽणुसंघेभ्यः स्वोचितं फलमादरात् ।**
**नान्येन शक्यते भोक्तुं गोप्त्र्या संवर्तुली[11]कृतम् ।।४३।।**

एवं रोधयित्र्या अत्यन्त[12]चलद्वृत्तेरपि जगतः स्थैर्येणावस्थापितस्य, सकलात्मनश्च कर्तव्येषु रुद्धस्य, व्यापकत्वात्[13] [14]सर्वं कर्म[15]विपाकात्मकं भोग्यं सर्वस्य प्रसक्तमिति,[16]भोगसंकरात्मनो[17]ऽसमञ्ज-सस्य परिहाराय **जगदेतत्** [18]**गोपयितुम्** उद्यता या सा **गोप्त्री**। तथा हि — व्यापकत्वेऽपि आत्मनाम् "इदमहं करोमि" [19]इत्यवगतिपूर्वकत्वेन कर्मणः क्रियमाणत्वात्, [20]प्रत्यात्ममवगतिभेदवत् कर्मणोऽपि भेद एव। तद्भेदाच्च यदेव [21]यदात्मसंबन्धिनः[22] कर्मणः फलं तदेव तदर्थं [23]सा **धत्ते**, नान्यार्थ-मिति न भोग[24]संकरः। **गोप्त्र्या** सर्वस्य वर्तुलीकृतत्वाद् विभक्तत्वादित्यर्थः ।।४१-४३।।

---

[1] कार्ये प्रति — ऊ.
[2] 'न' इत्यत्र 'स' इति दृश्यते — ॠ.
[3] ०पभोगं — अ, आ, ई, उ, ए, ऐ.
[4] ०भोगानुरोधेने० — अ, आ, ई, उ, ऊ, ए, ऐ.
[5] मतङ्ग० विद्या० ६. ९५ वृत्तौ 'अनुभवस्तोत्रे गुरुभिः' इति निर्दिश्य, अयं श्लोकः प्रोक्तः।
[6] ०रभ्युदितस्य — ऊ, ऋ, ॠ; ०रभ्युत्थितस्य — ओ.
[7] आसमञ्जस० — ऊ; आसमञ्जस्य — ऋ, ॠ.
[8] रक्षणायोपसर्पिता — उ, ऋ, ॠ.
[9] गोपायितुं — ओ.
[10] तेभ्योऽणु० — मु, उ, ओ.
[11] ०कृतः — ओ.
[12] ०चलधृतेरपि — अ, आ, ई, उ; चलद्धृतेरपि — ए; बलाद्धृते जगतः — ऐ.
[13] व्यापकात् — ऊ, ऋ, ॠ.
[14] सर्वकर्म० — ई, उ, ऊ.
[15] ०विपाकं भोक्तुं सर्वस्य – अ, आ, ई, उ, ए, ऐ.
[16] भोगसंस्कारा० — अ, आ, ई, उ, ऋ, ॠ, ए, ऐ; भोगसत्कारा० — ऊ.
[17] ०ऽसमञ्जस्य — अ, ए; ०ऽसमञ्जस्यस्य — ऊ, ऐ; — ०ऽसामञ्जसस्य — ऋ, ॠ.
[18] गोपायन्तमुद्यता — ऊ; गोपायतुमुद्यता — ऋ, ॠ.
[19] इत्यवगमपूर्व० — ऊ, ऋ, ॠ.
[20] प्रत्यात्ममपगति — ई, उ; प्रत्यात्ममवगम — ऊ, ऋ, ॠ; प्रत्यात्मावगति — ऐ.
[21] तदात्म० — अ, आ, ई, उ, ए, ऐ.
[22] अत्र हिशब्दोऽधिकः — अ, आ, ई, उ, ए.
[23] 'सा धत्ते' इत्यत्र 'साधनं' इति दृश्यते —ऐ.
[24] संकरम् इति — ऐ.

[1]ननु कर्मणैव शुभेनाशुभेन[2] च[3] पशुर्नियम्यते इति किमत्र गोप्त्र्याः प्रयोजनम्[4]। उच्यते — 'पशुश्च' इत्यादि।

> [5]**पशुश्च सुखदुःखाभ्यामन्यायेन कथंचन ।**
> **न शक्यते वशीकर्तुं यतोऽमूर्ते [6]ह्यचेतने ॥४४॥**
> [7]**गोप्तृगोप्त्री[8]वशादिष्टस्तत्तदुत्सृज्य तत्फलम् ।**
> **न जह्यात्त[9]द्विरागोऽपि यतो गोप्त्र्या तु [10]रक्ष्यते ॥४५॥**

सुखदुःखहेतुत्वादत्र[11] सुख[12]दुःखे शुभाशुभे कर्मणी प्रोक्ते[13] ताभ्याम् **अन्यायेन** [14]असमञ्जसेन प्रवृत्तोऽणुः **न शक्यते** नियन्तुम्। तयोरमूर्तत्वात्, संस्काररूपत्वात् कृष्यादिकर्मवत् नियामक[15]त्वासिद्धेः, अचेतनत्वाच्च। [16]नियमश्च पशोर्दृश्यते। तस्माद् गोप्तुः संबन्धिनी या गोप्त्री तस्याः [17]वशात् सामर्थ्याद् **इष्टः** अयं नियम इति कर्मव्यतिरेकेण गोप्त्र्याः सिद्धिः। अत एव फलं प्रति **विरागोऽपि** [18]पुमांस्तत्तन्त्रोऽभूदिति [19]भोक्त्रन्तरवत्**तदुत्सृज्य**[20] तत्कर्मफलं **न जह्यादिति** संभावनायाम्। न [21]जहात्येव, **यतो गोप्त्र्या रक्ष्यते** इति ॥४४–४५॥

अथ नेत्र्या व्यापारः — 'एकस्माद्' इत्यादि।

> **एकस्मात्क्षीण[22]विभवात्स्थानादन्यत्पशुं बलात् ।**
> **स्थानं नयति या पत्युः शक्तिर्नेत्रीति सा स्मृता ॥४६॥**

एवं गोप्त्र्या संपादित[23]नियत[24]भोगम् **एकस्माद्** भोगाधिकरणात् [25]परिक्षीण[26]भोगेन कर्मान्तरानु-

---

[1] ननु च कर्मणैव — अ, आ, ई, उ, ए; ननु चाकर्मणैव शुभाशुभेन — ऐ.
[2] 'अशुभेन' इत्येतन्नास्ति — ॠ.
[3] 'च' इत्यत्र 'न' इति दृश्यते — ऊ, ॠ, ॠ.
[4] अत्र इतिशब्दोऽधिकः — ऊ, ॠ, ॠ.
[5] पशूश्च — ओ.
[6] ०ऽप्यचेतने — मु, उ, ओ.
[7] गोप्तुर्गोप्त्री० — मु, उ, ऊ, ॠ, ॠ.
[8] ०वशादिष्टां तनुमुत्सृज्य — मु, उ; ०वशादिष्टस्तत्तन्नोत्सृज्य — ऊ, ॠ, ॠ; ०वशादिष्टं तत्तन्त्रोत्सृज्य — ओ.
[9] ०द्विरागेऽपि — मु, उ, ऊ, ॠ, ॠ, ओ.
[10] वक्ष्यते — ऊ, ॠ, ॠ.
[11] 'अत्र' इत्येतन्नास्ति — आ, ई, उ, ए.
[12] ०दुःखशुभाशुभे — ऊ, ॠ; ०दुःखशुभाशुभ० — ॠ.
[13] 'प्रोक्ते' इत्येतन्नास्ति — अ.
[14] आसमञ्जस्येन — ऊ, ॠ, ॠ.
[15] ०त्वादसिद्धेः — ऐ.
[16] अनियमश्च — ए.
[17] वशः सामर्थ्यं तस्माद् इष्टः — ऊ, ॠ, ॠ.
[18] पुमांस्तत्र तत्तन्त्रो० — आ, ई, उ, ए; पुंसस्तत्तन्त्रमिति — ऊ, ॠ, ॠ.
[19] गोप्त्रीतन्त्रं च तदुत्सृज्यं — ऊ, ॠ, ॠ; भोक्त्रन्तरवदुत्सृज्य — ए; भोक्त्रन्तरं तद्वदुत्सृज्य — ऐ.
[20] अत्र चशब्दोऽधिकः — ऊ, ॠ, ॠ.
[21] जहातीत्येवं — ऊ, ॠ, ॠ.
[22] ०विभवं स्थाना० — मु, उ, ओ.
[23] 'नियत' इत्यत्र 'नियतनियत' इति दृश्यते — ऊ, ॠ, ॠ.
[24] भोगभोगाधिकरणात् — ॠ, ॠ.
[25] विक्षीण० — ऐ.
[26] भोगं कर्मान्तरानु० — आ, ई, उ, ए, ऐ; भोगः कर्मान्तरानु० — ऊ, ॠ, ॠ.

सारेण [1]**या** भोगाधि[2]करणान्तरं [3]**नयति सा नेत्री** ।। ४६।।

किं च — 'नेता नेयस्य' इत्यादि ।

**नेता नेयस्य वा पुंसः प्रध्वस्ताशेषकर्मणः ।**
**जन्मन्यपश्चिमे स्पृष्टो [4]यदा शक्त्या [5]च भावितः ।।४७।।**
**निर्धूतकलुषं शान्तं तदा स परमेश्वरः ।**
**नेत्र्या[6] नयत्यसंदेहाद्यत्तत्पदमनामयम् ।।४८।।**

[7]यः **शक्त्या** परमेश्वर[8]संबन्धिन्या [9]संस्पृष्टः, **अपश्चिमे** मलपरिपाकवति **जन्मनि** पुरुषो भवति । यदुक्तं श्रीमत्**स्वायंभुवे**[10] —

"क्षीणे तस्मिन् [11]यियासा स्यात्परं [12]निःश्रेयसं प्रति" । इति ।

तस्य सकलस्यैव उपभोगादिना **प्रध्वस्ताशेषकर्मणः** तत्संस्कारेण[13] चक्रभ्रमवद्धृतशरीरस्य, **वा**-शब्दाद् अक्षीणकर्मणोऽपि[14] यया [15]परं **पदं निर्धूतकलुषं नेता** अनन्तेशः, [16]सा नेत्री । यतस्तयैव [17]सर्वं **नयत्यसंदेहादिति** ।

ननु परमेश्वरशक्तेर्हारिण्या एवायं[18] व्यापार इत्युक्तम्[19] — "अथवोन्नतिसामर्थ्याद्"इत्यादिना । सत्यम् । अत एव [20]तदधिष्ठिताया एव [21]अनन्तेश[22]शक्तेराचार्यशक्तेरिव मोक्षकर्तृत्वं [23]ज्ञापितम्[24] ।।४७—४८।।

[25]अथ योक्त्र्या व्यापार[26] उच्यते — 'योक्त्री' इति ।

**योक्त्री योजयितुं शक्ता नानायोन्यन्तरेष्वणुम्[27] ।**
**[28]परे च नेत्र्योपोढ्व्यूढं युङ्क्ते भर्तृवशानुगा ।। ४९ ।।**

---

[1] यया — ऊ, ऋ, ॠ.
[2] ०करणानन्तरं — अ.
[3] नीयते — ऊ, ऋ, ॠ.
[4] यश्च शक्त्या स्वभावतः — ऊ, ऋ, ॠ.
[5] स्वभावतः — ओ.
[6] नेता — मु, उ.
[7] यश्च शक्त्या — ऐ.
[8] ०संबन्धिना — अ.
[9] संस्पृष्टं पश्चिमे — ॠ.
[10] स्वायम्भुवे ३२. १७ उ०.
[11] यया सा — ऋ, ॠ.
[12] नैश्श्रेयसं — ऊ, ऋ, ॠ.
[13] अत्र चशब्दोऽधिकः — ए.
[14] अपिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[15] परमपदं — अ, ऋ.
[16] सात्र नेत्री — ऐ.
[17] 'सर्वं' इत्यत्र 'स' इति 'अ' कोशे, 'सर्वे' इति 'ऐ' कोशे च दृश्यते ।
[18] 'अयं' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[19] मतङ्ग० विद्या० ४. ३४ उ० – ३७ पू०.
[20] तदधिष्ठाया — ऊ, ऋ, ॠ.
[21] अनन्तशक्ते० — ऊ, ऋ, ॠ, ए.
[22] ०शक्तेरेवाचार्य० — अ.
[23] 'ज्ञापितम्' इत्यस्य स्थाने 'ज्ञास्यन्त इत्यविरोधः' इति दृश्यते — ऊ, ऋ, ॠ.
[24] ज्ञाप्यते — ऐ.
[25] 'अथ' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[26] अत्र इतिशब्दोऽधिकः — ऊ, ऋ, ॠ, ऐ.
[27] ०ष्वणून् — मु, उ; ०ष्वणुः — ओ.
[28] एवं नेत्र्या समीपे तु व्यूढं भर्तुर्वशानुगा — मु, उ, ओ.

एवं [1]**नेत्र्या** [2]**उप** समीपे [3]**उद्व्यूढं** नीतं कर्मवशाद् योन्यन्तरेषु, [4]प्राग्वच्च **परे** [5]शिवतत्त्वे वा[6] **योजयितुं** या [7]**शक्ता** सा **योक्त्री**; भर्तुः अनन्तस्य वशवर्तिनी ॥ ४९॥

अथ त्राणाया व्यापारः — 'दुःखारिवशसंप्राप्तम्' इत्यादि ॥

**दुःखारिवशसंप्राप्तं [8]तप्तमत्यन्तविह्वलम् ।**
**पुंदुःखान्तरमाविश्य [9]त्राणा वै [10]पारमेश्वरी ॥५०॥**
**तयोर्वियोजने[11] शक्ता[12] [13]विमुक्तोऽणुस्ततो [14]भयात् ।**
**[15]स्वस्थस्त्वत्र भवेद्यस्मात्तस्मात्त्राता प्रभुः [16]स्मृतः ॥ ५१ ॥**

इत्थं योक्त्र्या [17]योन्यन्तर[18]योजितं, दुःखमेव अरिः, तस्य वशं प्राप्तं पुरुषं तस्माद्दुःखभयात् [19]**तयोः पुंदुःखयोरन्तरम्**[20] **आविश्य** वियोगं कृत्वा [21]सा शक्तिः त्रायत इति **त्राणा** ॥५०–५१॥

[22]वामायाः कार्यद्वारेण स्वरूपमुच्यते — 'वामा' इत्यादि ।

**वामाधः[23]स्रोत उद्दिष्टा यस्मिंस्ते[24] परमाणवः ।**
**[25]प्लवन्तेऽविरलेनैव वासिताः [26]स्वेन कर्मणा ॥ ५२ ॥**
**संरुद्धशक्तयो मूढा वामयात्मवशीकृताः ।**

[27]**वामैव** अधः[28]स्रोतसो मायीयस्य कलादिक्षित्यन्तस्य अधिष्ठायकत्वाद् **अधःस्रोतः** [29]इत्युच्यते । क्षोभिका हि तत्क्षोभे, जननी च तज्जनने प्रोक्ता [30]यतः । न निष्प्र[31]योजनेयम् । **यस्मिन्** अधः-

---

[1] नेत्र्यां — ऐ.
[2] 'उप' इत्येतन्नास्ति — अ, आ, ई, उ, ॠ, ए.
[3] व्यूढं निहितं कर्म० — अ, आ, ई, उ, ए, ऐ.
[4] मतङ्ग० विद्या० ५. ४६ — ४८ वृत्तौ ।
[5] शिवत्वे — ॠ.
[6] वाशब्दो नास्ति — ऊ, ऋ, ॠ, ऐ.
[7] सक्ता — अ.
[8] त्रस्तमत्यन्त० — ऊ, ऋ, ॠ.
[9] शक्तिर्वै — मु, उ, ऊ, ऋ, ॠ.
[10] पारमीश्वरी — ऋ.
[11] ०योजनी — ऊ, ऋ, ॠ.
[12] शक्तो — मु, उ, ओ.
[13] विमुक्ताणुस्तया — मु, उ, ओ.
[14] यदा — मु, ओ; तदा —उ.
[15] स्वस्थं त्राता भवे० — ऊ, ऋ, ॠ; स्वस्थामृतो भवे० — ओ.
[16] स्मृता — ऊ, ऋ, ॠ.
[17] योन्यन्तरं — ए.
[18] योजितदुःख० — अ, आ.
[19] 'तयोः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] ०योरनन्तम् — अ.
[21] या शक्तिः — ऊ, ऋ, ॠ.
[22] 'वामायाः' इत्येतन्नास्ति — ॠ.
[23] स्रोतो निर्दिष्टा — मु; स्रोतमुद्दिष्टं — ऊ, ऋ, ॠ.
[24] यस्मिन्वै — ओ.
[25] प्लवन्त्यवि० — मु, उ, ओ; प्लव्यतेऽवि० — ऋ; प्लवतेऽवि० — ॠ.
[26] तेन — मु, उ.
[27] वामेव — ऊ, ऋ, ॠ.
[28] ०स्रोतो मायीयस्य — ऐ.
[29] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[30] यदतः — अ, आ, ई, उ, ए, ऐ.
[31] ०योजनोऽयम् — ऊ, ऋ; ०योजनीयम् — ॠ.

स्रोतसि, परमाश्च ते अनन्तत्वाद् अणवश्च [१]आत्मानः, मल[२]संरुद्धशक्तित्वात् [३]स्वकर्मानुसारेण योनितो योन्यन्तरगतिमनुभवन्ति। तद्द्वारेण वामया तेऽप्य[४]धिष्ठिताः। ततश्चाधः[५]स्रोतोऽधिष्ठायकत्वाद् वामैवाधःस्रोतः [६]कथिता ॥

अस्या एव द्वितीयो व्यापारः समुच्चयेनोच्यते — 'नियामिताश्च' इति।

**नियामिताश्च[७] बलवत्स्वोचि[८]तास्वणुवृत्तिषु ॥ ५३ ॥**
**अपश्यन्तः परां काष्ठां [९]न विरक्ता बुभुक्षवः।**

बलवत्यश्च [१०]ताः स्वोचिताश्च, पशूनाम् अनात्मादिषु [११]आत्माभिमानादिरूपाः चित्तवृत्तयः,[१२] [१३]तासु नियमेन स्थापिताः यया, सेयं नियामिका। अत एव [१४]**अपश्यन्तः परां काष्ठां न विरज्यन्ते।** प्रत्युत, अशुद्धमेव[१५] विषयं [१६]रागादियोगाद् भोक्तुमिच्छन्ति[१७]। [१८]एवं हि गोप्त्रीतोऽस्या विषयभेदः सिद्ध्यति। तस्या भोगनियमार्थत्वेनोक्तत्वादिति[१९] ॥

ननु प्रकृतित एवायं बन्धः। यदाहुः पातञ्जलाः[२०] — "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्म[२१]प्रतिपत्तिरविद्या" [इति। ततोऽविद्या] [२२]पञ्चविधक्लेशान्तःपातिन्येवेति किमनया। अत्रोच्यते — 'प्रकृत्या-धोमुखम्' इत्यादि।

**प्रकृत्याधोमुखं सम्यक् [२३]चैतन्यं नियमात्मिका ॥ ५४ ॥**
**नियमे स्थापयेद्यस्मात्तस्मान्नामद्वयं मुने।**
**अस्याः [२४]शक्तेर्मयाख्यातं वामा चेति नियामिका ॥ ५५ ॥**

सत्यम्। प्रकृत्यैवाधोमुखतां[२५] विपरीतार्थप्रतिपत्तिबन्धविषयतां [२६]प्रापितमियं [२७]नियमयति। न तु

---

[१] आत्मनः — अ, आ, ऊ, ऋ, ॠ, ए, ऐ.
[२] ०संरुद्धत्वात् — ॠ.
[३] सकर्मानु० — ॠ.
[४] ०धिष्ठिताः सन्तस्तदधः — ऊ, ऋ, ॠ.
[५] स्रोतसाधिष्ठायकत्वाद् — अ.
[६] 'कथिता' इत्यारभ्य 'समुच्चयेनोच्यते' इत्यन्तं नास्ति — अ.
[७] नियामिकाश्च — मु.
[८] ०तास्वथ वृत्तिषु — ऊ, ऋ; ०ताश्च स्ववृत्तिषु — ॠ; ०ता स्वीयवृत्तिषु — ओ.
[९] स विरक्ता — ऋ.
[१०] 'ताः' इत्येतन्नास्ति — ऐ.
[११] अनात्मादिरूपाः — अ, ऐ; आत्माभिमानरूपाः— ऊ, ऋ, ॠ.
[१२] अत्र 'स' इत्यधिकम् — ई, उ.
[१३] ता. सुनियमेन — ऐ.
[१४] अपश्यतः — ऐ.
[१५] एवकारो नास्ति — आ.
[१६] रागयोगाद् — ऊ, ऋ, ॠ.
[१७] ०मिच्छति — ऊ, ऋ, ॠ.
[१८] 'एवं हि' इत्यत्र 'इत्यवैहि' इति 'ऊ' कोशे, 'इत्यवेहि' इति 'ऋ, ॠ' कोशयोश्च दृश्यते।
[१९] मतङ्ग० विद्या० ४२ उ०, ४३ वृत्तौ।
[२०] योगसू० २. ५.
[२१] ०ख्यातिरविद्या — ए, योगसूत्रपाठः।
[२२] अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः —योगसू. २, ३
[२३] चैतन्यान्नियमा० — मु, उ; चैतन्यनियमा० ऊ, ऋ, ॠ.
[२४] शक्तेस्समाख्यातं — ऊ, ऋ, ॠ.
[२५] ०मुखं मां — अ.
[२६] 'प्रापितम्' इत्येतन्नास्ति — ए.
[२७] नियम इति अनुबध्नातीति — ऐ.

बध्नातीति। अनेनैव [1]च व्यापारान्तरेण अस्या एव [2]नियामिकेति[3] द्वितीयमभिधानमिति प्रकृतितोऽन्यत्वसिद्धिः।

[4]ननु [5]तर्हि व्यापारभेदाच्छक्तिभेदः[6]। सत्यम्। एतदेव[7] दर्शयितुं वामाया व्यापारद्वयमत्रोक्तमित्यविरोधः ॥ ५४–५५ ॥

अथ रौद्र्या 'निरुक्तदृशा व्यापार[8] उच्यते — 'रुक्पाशनिचयम्' इत्यादि।

**रुक्पाशनिचयं [10]भोक्तुर्येयं द्रावयितुं क्षमा।**
**रौद्रं भयानकं विद्धि मायावटसुगह्वरम्[11]॥ ५६ ॥**
**तस्मा[12]दुद्धरणे रौद्री [13]रुद्रस्येयं वशानुगा।**

रुजो हेतुत्वाद् **रुक् पाशनिचयः**, तं द्रावयतीति **रौद्री**। [14]रौद्राच्च [15]मायान्ध[16]कूपात्मका[17]द्बन्धा[18]दुद्धरति[19]; ततो **रौद्री**। **रुद्रस्य च इयम्** अनन्तेशस्य संबन्धिनीति। अनयापि[20] [21]विद्रावितबन्धं [22]नेत्री [23]परं पदं नयतीति नास्यास्तया सह व्यापारसंकरः॥

अधुना प्लाविकाया व्यापारः — 'या प्लावयति' इत्यादि।

**या प्लावयति संतप्तं भोगामृतसुशीकरैः ॥ ५७ ॥**
**संमार्ज्य दुःख[24]संतानं भोगिनं भोगतत्परम्।**
**प्लाविकेयं समुद्दिष्टा तन्त्रेऽस्मिन्पारमेश्वरे ॥ ५८ ॥**

व्रतनियमादिना **संतप्तम्** अत्यन्तक्षीणशरीरं सिद्धिसाधनैक[25]निष्ठं साधकम् **अस्मिस्तन्त्रे या** सिद्धिफलामृतबिन्दुभिरत्युत्तमैराप्लावयति सा **प्लाविकेति**॥५७–५८॥

---

[1] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[2] नियामकेति — अ.
[3] अत्र 'यद्' इत्यधिकम् — आ, ई, उ, ए, ऐ; 'इदं' इत्यधिकम् — ऊ, ऋ, ॠ.
[4] 'ननु' इत्यत्र 'न' इति दृश्यते — ऊ, ऋ, ॠ.
[5] 'तर्हि' इत्येतन्नास्ति — ए.
[6] ०भेदाः — ऐ.
[7] एवकारो नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] नैरुक्तिदृशा — अ, आ, ए; नैरुक्त्यदृशा — ई, उ; नैरुक्तदृशा — ऊ, ऐ.
[9] अत्र इतिशब्दोऽधिकः — ऐ.
[10] भोक्तुर्या यत्र वधितुं क्षमा — मु० पाठभेदः, उ; भोक्तुर्या सा द्रावयितुं — ओ.
[11] ०गह्वरः — ओ.
[12] ०दुद्धारणे — ऊ.
[13] रुद्रस्यैवंवशा० — ऊ, ऋ, ॠ.
[14] रुद्राच्च — अ; रौद्राद्वा — ऊ, ऋ, ॠ.
[15] मायान्त० — ऐ.
[16] कूपात्मकत्वाद्बन्धा० — अ.
[17] 'बन्धाद्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[18] ०दुच्चरति — आ, ए.
[19] अत्र इतिशब्दोऽधिकः — ऊ, ऋ, ॠ.
[20] 'अपि' इत्यत्र चशब्दो दृश्यते — ऊ; अपिशब्दो नास्ति — ऋ, ॠ.
[21] 'वि' इत्येतन्नास्ति — अ, ऊ, ऋ, ॠ.
[22] नेत्र्या — ऊ, ऋ, ॠ.
[23] परमपदं — अ, ऐ.
[24] ०संतापं भोगिनो भोगतत्परः — ओ.
[25] ०निष्ठसाधकम् — अ, आ, ई, उ, ऋ, ए, ऐ.

[1]श्रद्धाया व्यापार उच्यते — 'कुत्सितेषु' इत्यादि।

**कुत्सितेष्वपि भोगेषु श्रद्धयात्मवशीकृतः।**
**स्वाचारमवमत्याशु [2]तद्व्रतौ संप्रवर्तते॥ ५९॥**
**[3]सेयं [4]श्रद्धा समाख्याता शक्तिर्धातुः क्रियात्मिका।**

कुत्सितत्वं **भोगेषु** कौलाद्युपदिष्टकुत्सितसाधनत्वम्। यद्दर्शयति — **स्वाचारमवमत्याशु** इति। सुष्ठु [5]शोभनो य आचारः, तमवज्ञाय त्यक्त्वा प्रवर्तत इति। **अपि**शब्दादकुत्सितेषु वेदादिविहितेषु ज्योतिष्टोमादिषु सिद्धिसाधनेषु पशुमत[6]सिद्धफलसाधकस्य तत्राभिरतिजननेन या [7]प्रवर्तयति **सा श्रद्धा धातुः** अनन्तस्य संबन्धिनी **शक्तिरि**ति॥

एवं पशुमतसाधकविषया श्रद्धेव [8]तन्मतमुमुक्षुविषया भाविकेत्युच्यते — 'धर्माधर्मद्वयावस्थम्' इत्यादि।

**धर्मा[9]धर्मद्वयावस्थं तयोरभ्यधिकैषिणम्[10]॥ ६०॥**
**[11]भाविका भावयत्येव पुद्गलं स्वेन तेजसा।**
**येनाभावेऽपि [12]भावत्वं तद्वशात्प्रतिपद्यते॥ ६१॥**

**धर्माधर्म**[13]द्वययुक्तमेव, **तयोः** धर्माधर्मयोः, [14]**अभ्यधिकं** पशु[15]शास्त्रविहितं [16]मोक्षमेषितुं शीलं यस्य, तं पुरुषं **भाविका** शक्तिः **भावयत्येव** तेन स्वमहिम्ना। **येन** युक्तः, तस्मिन् [17]**अभावेऽपि** सकलपशुदर्शनप्रसिद्धेर्मोक्षभावत्वं[18] सत्यतां **प्रतिपद्यते**।

यथा चैतदागमव्यतिरिक्तानां सर्वेषामेव दर्शनानाम् आत्मनाश एव मोक्षः। तथोक्तमस्माभिरन्यत्र[19] —

"[20]ज्ञातुर्ज्ञेयस्य वा ज्ञप्तेरभावात्सर्ववादिनाम्।
आत्मनाशसमो मोक्षो [21]ज्ञत्वव्यक्तेः [22]परत्र तु"॥ इति॥ ६०–६१॥

अथ ज्वालाया व्यापारः — 'चितेः' इत्यादि।

---

[1] शुद्धाया — ऋ.
[2] तद्वृत्तौ — मु, उ, ओ.
[3] सोऽयं — ओ.
[4] शुद्धा — ऋ.
[5] शोभन आचारः — अ, आ, ई, उ, ए, ऐ.
[6] ०सिद्धिफल० — ऋ.
[7] प्रवर्तत इति सा — ए.
[8] तन्मुमुक्षु० — ऐ.
[9] ०धर्मव्यवस्थेयं तयोरभ्यधि० — ऊ, ऋ, ऋ; ०धर्मद्वयावस्थद्वयोरभ्यधि० — ओ.
[10] ०कैषणम् — ऊ, ऋ, ऋ; ०कैषिणः — ओ.
[11] भाविनी — मु, उ, ओ.
[12] भावित्वं तद्वशः प्रति० — ऊ, ऋ, ऋ.
[13] ०द्वयं युक्तमेव — अ; ०द्वयमुक्तमेव — ए.
[14] अप्यधिकं — अ, ऋ.
[15] ०शास्त्रे विहितं — ऊ, ऋ, ऋ.
[16] मोक्षमुषितुं — अ; मोक्षमेतुं — ऐ.
[17] भावेऽपि — अ, ऐ.
[18] ०र्मोक्षे भावत्वं — ई, उ, ऊ, ऋ.
[19] अयं श्लोकः 'तदुक्तं मन्त्रवार्तिकटीकायाम्' इति निर्दिश्य शिवयोगसारे उदाहृतः। पृ० ३३.
[20] ज्ञातज्ञेयस्य — ऋ.
[21] ज्ञत्वव्यक्तौ — ऊ, ऋ, ऐ.
[22] परं न तु — ऊ, ऋ, ऋ.

**चिते[1]रुन्मील्य सामर्थ्यमसद्भोगे[2]ष्वभिप्लुतम् ।**
**तान्प्रज्वाल्य [3]रुषानिष्टान्सद्भोगेष्वणुमञ्जयेत् ॥ ६२ ॥**
**[4]अथवाप्यतिदीप्तात्मा ज्वालयात्म[5]वशीकृतः ।**
**[6]जुगुप्सते जगत्सर्वमनित्य[7]मशुभावहम् ॥ ६३ ॥**

आत्मनः **सामर्थ्यं** दृक्क्रियात्मकम् **असद्भोगेषु** आभिमु[8]ख्येन गतं मलपाकानुरोधतः समुन्मील्य, कथमित्याह — "**तान्प्रज्वाल्य रुषानिष्टान्**" इति तान् **अनिष्टान्** असद्भोगान् वैराग्यादिजननेन[9] **प्रज्वाल्य**[10] [11]तत्संबन्धं क्रोधेनैव दग्ध्वा, **सद्भोगेषु अणुम् अञ्जयेद्** इति संभावनायाम्; [12]अञ्जयत्येव या सा ज्वालेत्यर्थादभिसंबन्धः । **अथवेति** यद्वा अत्यन्तमलपाकवशाद् [13]यया अत्यन्तदीप्तात्मा कृतः [14]पुरुषः, यत्तेष्वपि सद्भोगेषु **जुगुप्सते** सा ज्वालेति । यदाहुः[15] — [16]"सर्वं दुःखं विवेकिनः" इति । एवं [17]च [18]प्रज्वालाभेद एवात्राथवेति प्रकारभेदेन कथितः ॥६२–६३॥

अनन्तरमा[19]ह्लादिन्या व्यापार उच्यते — 'तत' इत्यादि ।

**ततः स भगवानीशस्तं युनक्त्यात्मशासने ।**
**तदाह्लादितसर्वाङ्गः प्रह्लादिन्या गुरुं प्रति ॥ ६४ ॥**
**शुश्रूषणैकचित्तः स्याद्भावितात्मा गतस्पृहः ।**
**स्निग्धो[20]ऽतिरिक्तो हृष्टात्मा सहिष्णुः कृतनिश्चयः ॥ ६५ ॥**
**शतेनाप्यपकाराणां [21]नित्यं चापकृतोऽपि हि ।**
**[22]परैर्विश्लेष्यमाणोऽपि प्रयोगैर्विविधैर्भृशम् ॥ ६६ ॥**
**न विरज्येत[23] सामर्थ्यात्सदाह्लादात्मचेतनः[24] ।**
**शक्तिः प्रह्लादिनी पत्युः सदा प्रीतिविवर्धिनी[25] ॥ ६७ ॥**

---

[1] ०रुन्मीलसामर्थ्यमसद्भोग्येष्वभि० — ऊ, ऋ, ॠ.
[2] ०ष्वपिप्लुतः — ओ.
[3] रुषाविष्टां सद्भोगेष्वनुरञ्जयेत् — ऊ, ऋ, ॠ.
[4] अस्या वाप्यति० — ओ.
[5] ०वशीकृता — ओ.
[6] जुगुप्सति — ऊ, ऋ, ॠ, ओ.
[7] ०मशुभाशुभम् — मु, उ.
[8] ०मुख्येऽनुगतमल० — ऋ; ०मुख्येन गतमल० — ॠ.
[9] ०जनकेन — ऐ.
[10] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[11] तद्बन्धं क्रोधेनैव — आ; तत्संबन्धक्रोधेनैव — ऊ, ऋ.
[12] अञ्जयत्येवेयमाज्वाले० — ऊ; अञ्जयत्येवं या सा — ऋ, ॠ.
[13] यथात्यन्तदीप्तात्मा — अ; यथान्यदीप्तात्मा — ऊ; यया तु दीप्तात्मा — ऋ, ॠ.
[14] पुरुषोऽयं तेष्वपि — ऐ.
[15] 'दुःखमेव सर्वं विवेकिनः' इति योगसू० २,१५
[16] सर्वदुःखं — अ, आ, ई, उ, ए.
[17] चशब्दो नास्ति — ऊ, ऋ, ॠ.
[18] प्रज्वाल्य भेदः—अ, ऊ, ऋ, ॠ, ऐ; प्रज्वाल्याभेदः — आ, ई, उ, ए.
[19] ०ह्लादिकाया व्यापारः — अ, आ, ई, उ, ए.
[20] ०ऽतिरक्तो — मु. उ.
[21] नित्यत्वापकृतो० — ओ.
[22] परैर्विशिष्यमाणो० — मु, उ, ओ.
[23] विरज्यति — मु, उ, ओ.
[24] ०चेतसः — ओ.
[25] ०विवर्धनी — उ, ऊ, ऋ, ॠ; ०विवर्धनः — ओ.

एवं [1]ज्वालया दग्धभावबीजं [2]पुरुषं कृत्वा, **ततो** [3]**भगवान्** स्वदर्शननिमित्तं **तदा गुरुं** [4]**प्रति** यया योजयति सा **प्रह्लादिनी पत्युः** अनन्तस्य [5]**शक्तिः**। [6]तया च युक्तो गुरुशुश्रूषणादिधर्मनिष्ठः संपद्यत इति।

ननु [7]प्राक् परमेश्वरशक्तेरेवोन्मीलिन्या[8] [9]व्यापारोऽयमित्युक्तम्[10] —

"नाप्रसन्ने प्रभौ यस्माद्द्वारमाप्नोति पुद्गलः।
मुक्तये गुरुनामानम्" इति।

सत्यम्। एतदधिष्ठानेनेत्यत्र ज्ञाप्यत इत्यविरोधः॥ ६४–६७॥

अथ स्तम्भिन्या व्यापार [11]उच्यते — 'स्तम्भिन्या' इत्यादि।

**स्तम्भिन्या [12]स्तम्भितः कर्तुः [13]शक्त्या संगृह्य सादरम्।**
**यत्र [14]यत्र स्थितोऽसम्यगुद्वेगवशगोऽपि सन्॥ ६८॥**
**न चलत्यतिसंसक्तः स्तम्भिन्या स्तम्भितस्तु [15]सः।**

[16]**कर्तुः** अनन्तेशस्य [17]संबन्धिन्या **स्तम्भिन्या**[18]**स्तम्भितः** पुरुषः। यः [19]**शक्त्या** दीक्षाख्यया [20]**संगृह्य सादरं** दीक्षासंस्कारगृहीतः[21], उद्वेगस्य [22]आपल्लक्षणस्य वशाद्, **अपि**शब्दा[23]दनापन्नोऽपि [24]रागादेर्वशाद् **यत्र यत्र** स्वच्छन्द[25]चारितया [26]**स्थितः**। **असम्यगिति** शास्त्रविहित[27]समयाननुष्ठानादसम्यक् प्रत्यवाययोगेन स्थितः। यच्छ्रूयते[28] —

"समयोल्लङ्घनात्प्रोक्तं क्रव्यादत्वं शतं समाः।" इति।

---

[1] ज्वालामुख्या दग्ध० — ऊ, ऋ, ॠ.
[2] 'पुरुषं' इत्येतन्नास्ति — ऐ.
[3] भगवत्स्वदर्शन०—ऊ, ऋ; भगवान् सर्वदर्शन० — ॠ; भगवान् सुदर्शन० — ऐ.
[4] प्रति यथा योजयति — अ, ऋ; प्रति या योजयति — ऊ; प्रति योजयति — ॠ.
[5] शक्तिश्च। — आ.
[6] तथा च — अ, ऋ, ॠ.
[7] मतङ्ग० विद्या० ४. ४५ – ५० वृत्तौ।
[8] ०न्मीलन्या — ऐ.
[9] व्यापारो धर्मीत्युक्तम् — अ.
[10] मतङ्ग० विद्या० ४. ४९.
[11] 'उच्यते' इत्येतन्नास्ति — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[12] संगतः — मु, उ.
[13] शक्तिः सं० — ऊ, ऋ; शक्तिं सं० — ॠ.
[14] तत्र — ऊ, ऋ, ॠ.
[15] सन् — मु, उ.
[16] भर्तुः — ऐ.
[17] संबन्धिन्याः पुरुषः — अ; ०संबन्धिन्या स्तम्भिन्या पुरुषः — आ, ई, उ, ए, ऐ.
[18] संस्तम्भितः — ऊ, ऋ, ॠ.
[19] शक्तिदीक्षाख्यां संगृह्य — ऊ, ऋ, ॠ.
[20] संग्राह्य — ए.
[21] ०संस्कारं गृहीत्वा—ऊ, ऋ, ॠ; ०संस्कारः गृहीतः — ए.
[22] उपलक्षणस्य वशाद् — अ, ई, उ, ए, ऐ; उपलक्षणवशाद् — आ.
[23] ०दनापदोऽपि — ऊ, ऋ, ॠ.
[24] यागादेर्वशाद् — ए.
[25] ०चारुतया — अ; ०चरितया — आ, ई, उ.
[26] स्थिते — अ.
[27] ०समयानुष्ठाना० —आ, ऊ, ऋ, ॠ, ए, ऐ.
[28] सार्धत्रिशतिकालोत्तरे २५. २ उ०.

तथाभूतः **सन् न चलत्यतिसंसक्तः**[1]अत्यन्तं प्रत्यवायफलेन [2]संबद्धो यद्वशात् सा [3]स्तम्भिनीति। एवं न न क्षोभिका[4]। यदुक्तम्[5] —

"विभ्रान्तचित्तो विरतस्तथापि न विमुञ्चति।" इति।

नापि रोधयित्र्या [6]गोप्त्र्या च [7]सहास्याः व्यापारसंकरः॥

अथ विकिराया व्यापार उच्यते — 'विकिरा नाम' इत्यादि।

**विकिरा नाम या प्रोक्ता तया स परमेश्वरः॥ ६९॥**
**भूतभावात्म[8]तत्त्वाख्यं जगत्स्थावरजङ्गमम्।**
**[9]संक्षुब्धं ग्रन्थिविवरात्क्षोभितस्य जगन्निधेः॥ ७०॥**
**[10]पूर्वं क्षोभिकयाक्षोभ्य पश्चात्प्रविकिरत्यसौ।**
**विकिरिण्या यथोपात्तं स्वाङ्गावयवगोचरे॥ ७१॥**

भूतानि शरीराणि। [11]भावाः धर्मादयः। [12]आत्मानः प्रत्ययहेतुत्वाद् [13]आत्मनः सिद्ध्यादयः प्रत्ययाः। तत्त्वानि तु विकिरणप्रस्तावादव्यापकानि कलादिक्षित्यन्तान्येव। न [14]मायादिनिष्कलान्तानि। तदाख्यं यद् **जगत्**। यच्च **स्थावरजङ्गममिति**। शरीराणां भूतपदेनोपादानात् स्थावरजङ्गमपदेन तत्कारणानि भुवनान्युच्यन्ते, आत्मनां [15]स्वतः स्थावरत्वाद्ययोगादिति। उक्तमेतद्विचित्रं जगत्, **पूर्वं क्षोभिकया क्षोभितस्य जगन्निधेः** मायात्मनः संबन्धिनः **ग्रन्थिविवरात्** स्रोतोमुखाद् आसमन्तात् संक्षोभ्य, **संक्षुब्धं** च जनन्या संजनितं [16]सद्, यया प्रतिपुरुषं भेदेन विकिरति [17]क्षिपति **असौ परमेश्वरः** अनन्तः, सा [18]शक्तिः **विकिरा**। तच्च नाविशेषेण विकिरणशीलया तया[19] विकिरति। अपि तु **यथा** कर्मानुसारेण योग्यतानुसारेण च **उपात्तं** [20]तज्जगत्। स्वशब्देन अत्र आत्मा। यदाहुः[21] — "[22]आत्मात्मीय[23]ज्ञातिधनवचनः स्वशब्दः" इति। तस्य यद् अङ्गम् उपकारको भोगः, तस्य [24]अवयवाः भोगसाधनादयः, तेषां यो गोचरः, तस्मिन्नित्यर्थः। एतदुक्तं

---

[1] अत्यन्तप्रत्यवाय० — ऐ.
[2] सम्बन्धः — अ, ऊ, ए, ऐ.
[3] स्तम्भनीति — ऊ, ॠ, ॠ.
[4] क्षोभिकया — अ, आ, ई, उ, ऊ, ए, ऐ.
[5] मतङ्ग० विद्या० ५. ३३ उ०
[6] गोप्त्र्या वा वामयापि वा नियमात्मिकया सहास्याः — ऊ, ॠ, ॠ.
[7] सहास्यव्यापार० — ऐ.
[8] ०तत्त्वाख्यजगत् — मु.
[9] संक्षुब्धग्रन्थि० — ऊ, ॠ, ॠ; संक्षिप्तं—ओ.
[10] पूर्वक्षोभिकया — ऊ, ॠ.
[11] भावधर्मादयः — अ.
[12] आत्मनः — ऊ, ॠ, ए. ऐ.
[13] आत्मानः — आ, ई, ऊ.
[14] मायादीनि निष्कला० — आ; मायानिष्कला० — ई, उ, ए.
[15] 'स्वतः' इत्यारभ्य 'जनन्या संजनितं' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[16] तत्, यया प्रतिविकिरति पुरुषभेदेन विकिरति — अ, आ, ई, उ. ए, ऐ.
[17] क्षिप्यति — अ.
[18] 'शक्तिः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[19] ०शीलतया — ऐ.
[20] 'तद्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] 'स्वमज्ञातिधनाख्यायाम्' इति १. १. ३५ पा० सूत्रे कैयटवचनम्।
[22] 'आत्मात्मीय०' इत्यत्र 'आत्मीय०' इति दृश्यते — ऐ.
[23] ०धनज्ञातिवचनः — अ, आ, ई, उ, ए, ऐ.
[24] अवयवगोचरभेदविषय इत्यर्थः — ऊ, ॠ, ॠ.

भवति — विशिष्ट[1]भोगसिद्धयर्थं किंचिद् भोग्यतया, किंचिद् [2]भोगसाधनत्वेन, किंचिद् भोगाधिकरणतया विकिरति । न सर्वमेकरूपत्वेनेति[3] ॥६९–७१॥

न केवलं जगदेतत् । यावदन्यदपि विकिरतीत्युच्यते — 'व्यक्तीकरोति' इत्यादि ।

**व्यक्तीकरोति जगतः शरीराणि सहस्रधा ।**
**अनादि [4]यद्बलं पुंसां शरीरावधि निश्चयात् ॥७२ ॥**
**विकिरत्यात्ममर्यादान्यायेन समतां नयेत् ।**
**[5]नातिरिक्तं न च न्यूनं [6]युगपद्वेद्यमेव तत् ॥ ७३ ॥**

यानि **जगतः** संबन्धीनि **पुंसां शरीराणि** विकिरतीत्युक्तं[7], [8]तानि **सहस्रधा व्यक्तीकरोति** इति । एवं तच्छरीरावधि [9]नियमेनैवानादि[10]व्यापकमपि **बलं** दृक्क्रियात्मकं **विकिरति** यस्मात् । [11]तद् **आत्ममर्यादान्यायेनेति** आत्मनोऽनाद्यहं[12]कारास्पदभूतस्य शरीरलक्षणस्य या मर्यादा आपाद[13]तलान्मस्तकान्तं तया **समतां** नीतमनुभूयते । [14]यतो न ततः शरीराद् **अतिरिक्तं** न्यूनं वा संवेद्यते । अपितु **युगपदेव** समस्तशरीरव्यापकतया [15]तत् स्वं बलं संवेद्यत इति वक्ष्यामः[16] —

"आशिरोलक्षणे काये [17]येयं संविच्चितेः सदा ।" इत्यत्र ।

ततश्च यथाभूतं [18]पुंसो व्यापकस्यापि भगवान् बलं विकिरति [19]यया सा विकिरेति ।

नन्वसौ[20] योक्त्र्या व्यापारः । न । [21]नेत्र्या व्यापारपूर्वकत्वेनैव[22] [23]तस्याः प्रोक्तत्वात्[24] । अयं तु [25]तत्पूर्वमादिसर्ग एवास्या व्यापारः प्रतिपादित इत्यसंकरः ॥ ७२–७३॥

एवं [26]प्रागुद्दिष्टाः षोडशानन्तशक्तीर्व्यापारभेदेन प्रतिपाद्योपसंहरति — 'शक्तयः' इत्यादि ।

---

[1] भोग्यसिद्धयर्थं — अ, आ, ई, उ, ऐ.
[2] 'भोग' इत्यत्र 'तद्भोग' इति दृश्यते — अ आ, ई, उ.
[3] सर्वरूपमेकत्वेन — अ.
[4] सद्बलं — ऊ, ऋ, ॠ.
[5] नातिरिक्तपथन्यूनं — ऊ, ऋ, ॠ.
[6] युगपद्वृद्धिमेति हि — ऊ, ऋ, ॠ.
[7] मतङ्ग० विद्या० ५. ६९ उ० – ७१ वृत्तौ ।
[8] 'तानि' इत्यारभ्य 'एवम्' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[9] नियमेन तेषामनादि० — ऊ, ऋ ॠ.
[10] ०व्यापकं पञ्चबलदृक्क्रिया०—अ; ०व्यापकमपि दृक्क्रिया० — ऐ.
[11] 'तद्' इत्येतन्नास्ति — आ, ई, उ, ए.
[12] ०कारात्स्वभूतस्य — ऐ.
[13] ०तलमस्तकान्तात्तया — अ, ऐ; ०तलान्मस्तकान्तात्तया — आ, इ, ऊ, ए.
[14] यतोऽनन्तशरीराद् — अ.
[15] तत्सर्वं बलं सं० — अ; तत्स्वबलं सं०— आ, ए; तत्संबन्धेनेव सं० — ऊ; तत्संबन्धेनैव सं० — ऋ, ॠ.
[16] मतङ्ग विद्या० ६. ३४ उ० वृत्तौ ।
[17] येयं संविच्च ते सदा — अ; यं संविच्चिनुते सदा — ॠ.
[18] पुंसां — ऊ, ऋ, ॠ.
[19] 'यया सा विकिरेति' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] 'असौ' इत्यत्र 'अयं' इति दृश्यते — ऊ, ऋ, ॠ.
[21] नेत्रीव्यापार० — ऊ, ऋ, ॠ.
[22] एवकारो नास्ति — ऊ, ऋ, ॠ.
[23] अस्याः — ऐ.
[24] मतङ्ग० विद्या० ५. ४९ वृत्तौ ।
[25] तत्पूर्वोऽप्यादि० — ऊ, ऋ, ॠ.
[26] मतङ्ग० विद्या० ५. २२–२६ वृत्तौ; प्रागुक्ताः — ऊ, ऋ, ॠ.

**शक्तयः [१]कारणस्यैवं दिङ्[२]मात्रेण प्रदर्शिताः ।**
**परमार्थेन[३] नान्तोऽस्ति जगत्यस्मिन्प्रविस्तरे[४] ॥ ७४ ॥**

[५]**कारणस्य** इत्यनन्तस्य । [६]तदिदमुक्तमुपक्रमे [७]एव "[८]आभ्योऽन्याश्चाप्यसंख्येयाः" इत्यादि ॥७४॥

एवं परमेश्वरशक्तितो[९]ऽनन्तशक्तीनां [१०]विभागं पतिपदार्थविचारप्रसङ्गेन [११]प्राग् वक्तव्यतया प्रतिज्ञातमनेन प्रकरणेन प्रतिपाद्य, [१२]प्रसङ्गितमेवोपसंहर्तुं [१३]प्रकरणान्तरव्याख्येयं चोपक्षेप्तुं श्लोक-[१४]त्रयमुच्यते — 'अभ्युद्गता' इत्यादि ।

**अभ्युद्गताः [१५]कर्तुरमोघवीर्याः [१६]प्रविस्तृता याश्च जगत्प्रपञ्चैः ।**
**प्रकाशितं याभिरुदार[१७]वृत्तं स्वकं स्वकं कारणकार्यभावात् ॥ ७५ ॥**
**उन्मीलिताः पाश[१८]विशेषशोभाः कृताश्च सर्वे पशवः [१९]समृद्ध्या ।**
**[२०]भोगेषु [२१]पक्त्या पुनरागतानां [२२]विभाजितं कर्मफलं यथावत् ॥ ७६ ॥**
**प्रभोः स्थिताः स्वात्मवशा महत्यस्ताः शक्तयोऽशेषजगत्प्रदीपाः ।**
**पतिप्रसङ्गेन हि सूचितास्ते[२३] विद्यामिदानीं शृणु विप्रमुख्य ॥ ७७ ॥**

तत्राद्येन श्लोकार्धेन [२४]तावद् [२५]विभागावधित्वेन पूर्वम्[२६] "अथ कारणकार्यत्वे [२७]शक्तयो या व्यवस्थिताः ।" [२८]इत्यादिनात्रैवोक्तानां[२९] परमेश्वरशक्तीनामुपसंहारः । **कर्तुः** परमेश्वराद् [३०]**अभ्युद्गताः** याः । अत एव **अमोघवीर्याः** परमेश्वरान्तरेण अनधिष्ठितत्वात् । **याश्च** जगत्प्रपञ्चहेतुत्वात्[३१]

---

[१] कारणस्यैव — मु, उ, ओ.
[२] ०मात्रेणोपवर्णिताः — मु, ओ; ०मात्रेणोपदर्शिताः — उ.
[३] परमार्थश्च — ओ.
[४] ०स्मिश्चराचरे — ऊ, ॠ, ॠ.
[५] 'कारणस्येति' इत्येतन्नास्ति — ऊ, ॠ.
[६] 'तद्' इत्येतन्नास्ति — ऐ.
[७] एवकारो नास्ति — आ, ई, उ.
[८] मतङ्ग० विद्या० ५. २७, २८ पू०
[९] मन्त्रशक्तीनां — ऊ.
[१०] विभोगं — ऊ, ॠ, ॠ.
[११] मतङ्ग० विद्या० ४. ६० वृत्तौ ।
[१२] प्रसङ्ग गतमेवोप० — आ, ई, उ, ए, ऐ; प्रसङ्गं तमेवोप० — ऊ, ॠ, ॠ.
[१३] प्रकरणान्तरे व्या० — ऊ, ॠ, ॠ.
[१४] ०त्रयेनोच्यते — ऊ, ॠ, ॠ.
[१५] पत्युरमोघ० — ऊ, ॠ, ॠ.
[१६] प्रविस्तृतास्ताश्च — मु, उ, ओ.
[१७] ०वृत्ति — मु, उ; ०वृंत्ति — ओ.
[१८] ०विभागशोभाः — ऊ, ॠ, ॠ.
[१९] समृद्धाः — ओ.
[२०] भोगेष्वयुक्त्यावसरागतानां — ऊ; भोगेषु युक्त्यावसरागतानां — ॠ, ॠ; भोगेषु पत्यावसरागतानां — ओ.
[२१] युक्ताः पुनरागतानां — उ; पक्त्यावसरागतानां — उ. पाठभेदः ।
[२२] विभक्तकं कर्म० — ऊ, ॠ, ॠ; विभाजिता कर्म० — ओ.
[२३] सूचिता मुने — ऊ, ॠ, ॠ.
[२४] 'तावद्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[२५] द्विभागा० — ऐ.
[२६] 'पूर्वम्' इत्यत्र 'पूर्वमपि' इति दृश्यते — ऐ.
[२७] शक्तयः समवस्थिताः — ऊ, ॠ, ॠ, ऐ.
[२८] मतङ्ग० विद्या० ५. १, २.
[२९] ०नात्रोक्तानां — ऐ.
[३०] अभ्युपगता याः — अ, आ, ई, उ, ऊ.
[३१] 'हेतुत्वात्' इत्यत्र 'हेतुः' इति दृश्यते — ऐ.

[1]**जगत्प्रपञ्चाः** विद्याविद्येश्वराः, तैः करणभूतैः **प्रविस्तृताः** तद्द्वारे[2]णाशेषजगदधिष्ठानाय प्रवृत्ताः, [3]**ताः शक्तयः अशेषजगत्प्रदीपाः** पतिपदार्थविचार[4]प्रसङ्गेन मया **सूचिताः** प्रकाशिता इत्युपसंहारः।

[5]अथ [6]शिष्टेन तु विभागविषयत्वेन [7]प्रागुक्तानामनन्तशक्तीनामुपसंहारः — "**प्रकाशितं याभिरुदार**[8]**वृत्तम्**"इत्यादि। [9]विद्येश्वरस्वरूपं [10]**स्वकं स्वकम्** अनन्तसूक्ष्मादिभेद[11]वर्तितया [12]विभिन्नं **कारणकार्यभावाद्** इति। यदुक्तम्[13] — "तेषामथाग्रणीः शूर" इत्यादि। **याभिश्च उन्मीलिताः** पाशानां [14]कार्ममायीयानां [15]भावभूतभुवनरूपाः [16]**विशेषशोभाः** रचना[17]विशेषाः, [18]मलस्यापि विचित्रपरिणामलक्षणाः। अत एव भोगलक्षणया **समृद्धया** केचित्, परे तु मोक्षलक्षणया युक्ताः **पशवः कृताः**। याभिश्च भोगनिमित्तं [19]**पक्त्या** कर्म[20]विपाकानुसारेण पूर्वशरीरभोग्यकर्मक्षयावसरे [21]शरीरान्तरं स्थानम् **आगतानां** पशूनां [22]कर्मलक्षणफलं [23]**विभाजितं** विभक्तमेव **यथावत्**। याश्च **प्रभोः** अनन्तस्य **स्वात्मवशाः**[24]; न [25]तु बन्धपरतन्त्राः। [26]अत एव सर्वार्थविषयत्वाद् **महत्यः**। **ताः** अप्यनन्तशक्तयोऽशेष[27]जगत्प्रति[28]बोधिकाः पतिपदार्थप्रसङ्गेन मया **सूचिताः** प्रकाशिता इति [29]प्रसङ्गागतस्य [30]व्याख्यातस्यार्थस्योपसंहारः।

अथ व्याख्येयार्थोपक्रमः — **विद्यामिदानीम्** [31]इति। पति[32]पदार्थान्तर्भूतानामपि शक्तीनां [33]शक्तित्वेन विचारितत्वादधुना **विद्यां** [34]शक्तिपदार्थत्वेन संगृहीतां परापरां [35]**शृणु** इति। यदुक्तं [36]श्रीमत्**पौष्करे**[37] —

---

1 जगत्प्रपञ्चे विद्या० — ऊ, ऋ. ॠ.
2 ०णाशेषा जगदधि० — ॠ; ०णाशेषं जगदधि० — ए.
3 तच्छक्तयः — अ.
4 ०योगेन — अ, ऊ.
5 'अथ' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए.
6 विशिष्टेन — अ, आ, ई, उ, ऋ, ए, ऐ.
7 मतङ्ग० विद्या० ५. २३–२६.
8 ०वृत्तीति–अ, आ, ई, उ, ए; ०वृत्तिरिति–ऐ.
9 विश्वेश्वर० — अ, ऐ.
10 'स्वकं' इत्येतन्नास्ति — ए.
11 ०वर्तिभिन्नकारण० — ॠ; ०वन्ति यद्भिन्नकारण० — ॠ.
12 भिन्नकारण० — ऊ.
13 मतङ्ग० विद्या० ५. ८.
14 कर्ममायी० — अ, आ, ई, उ.
15 भावभुवनभूतरूपाः — ऊ, ऋ, ॠ; भावभूतभुवनविरूपविशेष० — ऐ.
16 विशेषाः शोभाः — ए.
17 ०विशेषमलस्यापि — ऊ, ऋ, ॠ.
18 'मलस्य' इत्येतन्नास्ति — अ.
19 पत्या — अ, आ, ई, उ, ए; युक्त्या — ऊ, ऋ, ॠ; युक्ताः — ऐ.
20 ०विपाकाकारेण — अ.
21 शरीरान्तरस्थानम् — अ, आ, ई, उ, ए, ऐ.
22 कर्मलक्षणं विभक्तमेव विभाजितं यथावत्—ऐ
23 विभक्तमेव विभक्तकं यथावत् — ऊ, ऋ.
24 ०वशात् — अ.
25 तुशब्दो नास्ति — ए.
26 'अत एव' इत्येतन्नास्ति — अ.
27 ०जगत्प्रदीपाः — ऊ, ऋ, ॠ.
28 ०बोधकाः — अ.
29 प्रसङ्गस्य — ऊ, ऋ, ॠ, ऐ.
30 व्याख्यातस्यास्यार्थस्योप० — ए.
31 इतिशब्दो नास्ति — ऐ.
32 ०पदार्थभूतानामपि — ए.
33 'शक्तित्वेन' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
34 मतङ्ग० विद्या० २. १५, १६ पू० वृत्तौ।
35 शृण्वन्ति — ऐ.
36 श्रीपौष्करे — ऊ, ऋ, ॠ.
37 इदमर्धं 'तदुक्तं श्रीमत्पौष्करे' इति निर्दिश्य शतरत्नसंगहे २३ तमश्लोकव्याख्यायामप्युद्धृतम्। परं तु मुद्रितपौष्करे विद्यापादे नोपलभ्यते।

"परा वागीश्वरी विद्या माया विद्यापरा स्मृता।" इति।

ततश्च [1]शक्तिपदार्थमधुना अवसरप्राप्तमवधारयेत्यर्थः। शक्तिशब्देन त्वत्र तस्योपक्रमे [2]शक्तीनामुपसंहृतत्वाद् भ्रान्तिः स्यादिति शक्तिपदार्थ एव विद्याशब्देन व्याख्येयतयोपक्षिप्तः ॥७५–७७॥

इति [श्री] [3]भट्ट[4]नारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ [विद्यापादे] पतिपदार्थ[5]विचारे प्रासङ्गिकं [6]शक्तिविचारप्रकरणं [7]पञ्चमं [समाप्तम्]

**पञ्चमः पटलः**

---

[1] 'शक्तिपदार्थमधुना' इत्यारभ्य 'भ्रान्तिः स्यादिति' इत्यन्तं नास्ति — ए.

[2] मतङ्ग० विद्या० ५. १, २ वृत्तौ, २२—७४ वृत्तौ च।

[3] 'भट्ट' इत्येतन्नास्ति — अ, आ, ई, उ, ऐ.

[4] ०नारायणात्मजरामकण्ठकृतायां —ऊ, ऋ, ॠ.

[5] ०विचारप्रसङ्गागतशक्तिपदार्थविचार० — ऊ, ऋ, ॠ.

[6] 'शक्ति' इत्येतन्नास्ति — ए.

[7] 'पञ्चमं' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

## षष्ठः पटलः

# पुंपाशेश्वरप्रकरणम्

मतङ्ग उवाच —

अथ शक्तिसमूहस्य चरतोऽस्य जगत्पतेः ।
प्रतिपत्तिर्यथा लोके पशूनां पाशसंचये ॥ १॥
[1]पाश्यः पाशयिता [2]पाशास्त्रयमेतद्व्यवस्थितम् ।
साध्यसाधनभावोक्त्या यथावत्प्रकटं भवेत् ॥ २॥
तथा सम्यक्प्रवक्तव्यं [3]तावद्विद्यावधार्यताम् ।
[4]स एवं मुनिशार्दूलो मतङ्गः प्रत्यवस्थितः ॥ ३॥

**अथेति** विद्याशब्देन शक्तिपदार्थो व्याख्येयत्वेन [5]प्रतिज्ञातः । [6]तदनन्तरं मतङ्गमुनिः [7]पतिपदार्थे **एवं** मम प्रष्टव्यमन्यदस्तीति [8]तत्प्रदर्शनपूर्वं **तावद् विद्या** [9]**अवधार्यताम्** इति **प्रत्यवस्थितः**। अत एवास्यापि प्रकरणस्य प्रासङ्गिकत्वान्न पृथक्संबन्धाभिधानमुपयुज्यते । [10]प्रासङ्गिकसंबन्धेनैव तस्य सिद्धेरित्युक्तम् [11]।

अथ किं [12]तदत्रान्यत्प्रष्टव्यं मतङ्ग[13]मुनेरस्तीति । उच्यते । **शक्तिसमूहस्य अस्य** [14]प्राक्प्रतिपादितस्य [15]**चरतः** कार्याय प्रवृत्तस्य । किमनन्तसंबन्धिनः, [16]न । [17]**जगत्पतेः** परमेश्वरात्मनः, तदव्यतिरेकेण [18]प्राक्प्रतिपादितस्य । ततश्च परमेश्वरस्य **यथा प्रतिपत्तिः लोके** भवति, तथा वक्तव्यमित्यर्थः । ईश्वर[19]सिद्धेरेवात्र [20]वक्ष्यमाणत्वाद्, न शक्तिसिद्धेः । **पशूनां** [21]चात्मनां यथा प्रतिपत्तिर्लोके भवति, **पाशसंचये** च विषये यथा तथा वक्तव्यम् ।

ननु पतिपदार्थप्रकरण [22]एव शक्तिसिद्धिद्वारेण [23]ईश्वरसिद्धिरुक्ता — "[24]शक्तिभ्यः शक्तिमान्

---

[1] पाश्याः — ऋ.
[2] पाशाः स्मृतमेत० — ओ.
[3] तावद्विद्या विचार्यताम् — ऊ, ऋ, ॠ.
[4] स एव मुनि० — मु, उ; एवं स मुनि० — ऊ, ऋ, ॠ.
[5] मतङ्ग० विद्या ० ५. ७७ वृत्तौ ।
[6] 'तद्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[7] 'पति' इत्येतन्नास्ति — ऊ, ऋ, ॠ, ऐ.
[8] तद्दर्शन० — अ, आ, ई, उ, ए, ऐ.
[9] विचार्यताम् — ऊ; धार्यताम् — ॠ.
[10] प्रसङ्गिसं० — ऊ, ऋ, ॠ; प्राक्सं० — ऐ.
[11] पञ्चमप्रकरणोपक्रमे ।
[12] तत्रान्यत् — अ; तदन्यत्रान्यत् — ऊ, ऋ, ॠ.
[13] ०मुनेरपीति — ॠ.
[14] चतुर्थप्रकरणे; ५. १–२ वृत्तौ च ।
[15] 'चरतः' इत्यारभ्य 'प्राक्प्रतिपादितस्य' इत्यन्तं नास्ति — अ.
[16] 'न' इत्येतन्नास्ति — आ, ई, उ.
[17] जगत्प्रकृतेः — ऊ, ऋ, ॠ.
[18] चतुर्थप्रकरणे; ५. १–२ वृत्तौ च ।
[19] ०सिद्धेरत्र — अ, ऐ.
[20] मतङ्ग० विद्या० ६. ९२ – १०२ पू० वृत्तौ ।
[21] चशब्दो नास्ति — ऐ.
[22] एवं — ई, उ.
[23] मतङ्ग० विद्या० ३. ६ उ०–१६ पू० वृत्तौ ।
[24] मतङ्ग० विद्या० ३. १६ पू०

सिद्धः'' इति। पशुपदार्थप्रकरणे च [१]पशूनां [२]वक्ष्यमाणा सिद्धिः[३], त्रिपर्वभोगपदार्थप्रकरणेषु[४] च[५] पाशानामित्यनारभ्यमेवेदं प्रकरणमिति।

अत्रोच्यते। सत्यम्। [६]**पाश्यः** [७]वक्ष्यमाणः, **पाशयिता** [८]प्रोक्तः, **पाशाश्च** वक्ष्यमाणाः[९] इति **त्रयमेतद्व्यवस्थितम्।** न हि त्वया यदुक्तं प्रतिज्ञातं वस्तु तस्य अवचनमस्माभिः संभाव्यते। [१०]तद्वक्तव्यतया व्यवस्थितमेव। किं तु **साध्यसाधनभावोक्त्या** यथा [११]तत्त्वत्रयात्मकं वस्तु **प्रकटं भवेत् तथा सम्यक्** [१२]सुसिद्धेनानु[१३]मानेन प्रकर्षतो वक्तव्यमिति।

अयमर्थः — प्राक् पतिपदार्थप्रकरणे[१४] ''न कदाचि[१५]दनीदृशं जगद्'' इति [१६]न्यायेन पशूनां पाशानां च नित्यत्वमभ्युपेत्य[१७] [१८]पतिसिद्धिरुक्ता[१९]। [२०]पशुत्वं पाशत्वं च[२१] तेषां [२२]पृथग् [२३]यथास्वं स्वप्रकरणेषु वक्ष्यमाणम्[२४]। इह तु किं ते [२५]पाशाः स्वरूपेण साध्याः कार्या एव पत्युः [२६]पशवश्च वेदान्त[२७]पाञ्चरात्रवत् [२८]। [२९]अथवा सांख्यवत् पशवो नित्याः, पाशास्तु पतिनिरपेक्षस्य कारणान्तरस्य साध्याः[३०]। यदि वा सौगतवत् पशुपाशाः प्रतिक्षणं कारणान्तरसाध्या एव। किं [३१]वा लोकायतिकवत् [३२]केचित् कारणान्तरसाध्याः, [३३]केचित्त्वसाध्या नित्या [३४]एव[३५]। अतः परस्परसाधन-

---

[१] 'पशूनाम्' इत्यारभ्य 'भोगपदार्थप्रकरणेषु च' इत्यन्तं नास्ति — ऋ.

[२] वक्ष्यमाणसिद्धिः त्रिपर्व० — अ; वक्ष्यमाणा शक्तित्रिपर्व० — ऊ; वक्ष्यमाणशक्तित्रिपर्व० — ॠ.

[३] मतङ्ग० विद्या० १४. १–१८ वृत्तौ।

[४] मतङ्ग० विद्या० ९–१३, १५–२३, २६ प्रकरणेषु।

[५] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.

[६] पाशो — अ, ई, उ; पाश्या — ऊ, ऋ, ॠ.

[७] मतङ्ग० विद्या० ६. ४ उ० — ४२.

[८] मतङ्ग० विद्या० ३. ६ उ० – १६ पू० वृत्तौ.

[९] पाशश्च वक्ष्माणाः – अ, ऐ; पाशाश्च वक्ष्यमाणः — ॠ; मतङ्ग० विद्या० ६. ४४, ६२ — ९०, १०२ उ० – १०४ वृत्तौ।

[१०] तद्वक्तव्यतयाप्यव० — आ, ई, उ, ऐ.

[११] तत्त्वत्रयात्मकवस्तुप्रकटनं भवेत् — अ; तत्त्रयात्मकं वस्तु प्रकटं भवत्तथा – ऊ, ऋ, ॠ.

[१२] प्रसिद्धेनानु० — ऊ, ऋ, ॠ.

[१३] ०माने वक्तव्यप्रकर्षतो — ऐ.

[१४] ०प्रकरणेन — आ; ०प्रकरणे हि–ऊ, ऋ, ॠ.

[१५] ०दनीश्वरं — ए.

[१६] आकरो न लभ्यते।

[१७] ०मभ्युपगम्य — ऊ, ऋ, ॠ, ऐ.

[१८] पशुसिद्धि० — आ.

[१९] मतङ्ग० विद्या० ३. ६ उ० — १६ पू०.

[२०] पशुतत्त्वं पाशतत्त्वं — अ, आ, ई, उ, ऋ, ए.

[२१] चशब्दो नास्ति — ॠ.

[२२] 'पृथग्' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए.

[२३] यथा स्वप्रकरणेषु — अ; यथास्वं प्रकरणेषु — आ, ई, उ, ए, ऐ.

[२४] मतङ्ग० विद्या० १४ तमे प्रकरणे पशुत्वम्, ९ — १३, १५ — २३ तमेषु प्रकरणेषु पाशत्वं च।

[२५] पाशस्वरूपेण — ऊ.

[२६] पशुश्च — ऊ, ॠ.

[२७] पञ्चरात्रवत् — ॠ, ऐ.

[२८] अत्र 'अनित्याः' इत्यधिकम् — अ, आ, ई, उ, ए.

[२९] 'अथवा' इत्यत्र 'अथ' इति दृश्यते — ऊ, ऋ, ॠ.

[३०] अत्र 'नित्याः' इत्यधिकम् — आ.

[३१] वाशब्दो नास्ति — ऊ, ऋ, ॠ.

[३२] किंचित् — ऐ.

[३३] 'केचित्त्वसाध्या' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[३४] एव सन्तः परस्परं साधनमिति — ऊ, ॠ; एव सन्तः परस्परसाधनमिति — ऋ; एव व सन्तः परस्परसाधनमिति — ऐ.

[३५] अत्र वाशब्दोऽधिकः — अ, आ, ई, उ.

साध्यमिति [1]साध्यत्वस्य साधनत्वस्य चोक्त्या त्रयमेतद्वक्तव्यमिति न गतार्थत्वमस्य[2] प्रकरणस्य, पतिपदार्थ एवावशिष्टविचारविषयत्वात् ।

[3]न त्वत्र "साध्यसाधनभावोक्त्या" इत्यनुमानेनेति व्याख्येयम् । तस्य पूर्वमेव प्रतिज्ञातत्वात् । यदुक्तम्[4] —

"[5]एवमन्योन्यसाधर्म्यवैधर्म्येण विनिश्चयात् ।" इति ॥१–३॥

**ततः प्रोवाच भगवान्मतङ्गाय महात्मने ।**

ततो भगवानाह — पाश्यः, पाशयिता, पाशाः [6]त्रयमेतद् वक्तव्यमिति । तत्र पाश्यस्ताव-दुच्यते — 'पशुरात्मा' इत्यादि ।

**परमेश्वर उवाच —**

**पशुरात्मा समुद्दिष्टः क्षेत्री क्षेत्रज्ञ एव च ॥४॥**
**शरीरी चेति [7]रुद्धात्मा भोक्ता च [8]परिभाष्यते ।**

**पशुः** पाश्यः "[9]अथाणोर्बन्धसोपान" इत्यादिनैवादिसूत्रेण[10], "[11]योऽस्वतन्त्रः पशुर्भोक्ता" इत्यादिना च पशुपदार्थसंग्रहसूत्रेण[12] **समुद्दिष्टः**, स "**आत्मा** [13]सातत्येन गम्यते ज्ञायते" [14]इति दिक्कालानवच्छिन्नो [15]व्यापको नित्यश्चेति [16]प्रतिज्ञातार्थः । न तु अनित्यश्च अव्यापकश्च । येन वेदान्त[17]पाञ्च-[18]रात्राणामिवेश्वरकार्यः स्यात्, सौगतानामिव वा[19] प्रतिक्षणं [20]स्वहेतो[21]र्विज्ञानलक्षणादुत्पद्यते, [22]क्षपण-कानामिव परिणामीति । नापि चार्वाकाणामिवेत्युच्यते — **क्षेत्रीति** क्षेत्रमस्य भोगाधिकरणं [23]शरीरं, भोग्यं चास्तीति । न तु तदात्मक इत्यर्थः । किं च क्षेत्रं [24]जानातीति **क्षेत्रज्ञः** [25]ज्ञस्वभाव एव । न तु न्यायवैशेषिकोक्तवत् [26]संयोगजज्ञान[27]योगाज्ज्ञ इति । [28]**एव चेति** समुच्चीयमानावधारणे-

---

[1] साध्यस्य — ऊ, ऋ, ॠ.
[2] ०र्थत्वमप्यस्य — अ, आ, ई, उ, ए.
[3] नन्वत्र — ए; नह्यत्र — ऐ.
[4] मतङ्ग० विद्या० ३. १०पू०.
[5] 'एवम्' इत्यारभ्य 'भगवानाह' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[6] त्रयमेव तद्वक्तव्य० — ए.
[7] बद्धात्मा — ऊ, ऋ, ॠ.
[8] परिभाषिते — ओ.
[9] मतङ्ग० विद्या० २. १, २ पू०.
[10] ०सूत्रे — ऊ, ऋ, ॠ.
[11] मतङ्ग० विद्या० २. १७ उ०, १८ पू०; यो हि स्वतन्त्रः — अ.
[12] ०सूत्रे — ऊ, ऋ, ए; ०सूक्तेन — ऐ.
[13] सान्तत्येन — अ, आ, ई, उ, ऋ.
[14] 'इति' इत्यत्र 'इत्यात्मा' इति दृश्यते — ऐ.
[15] नित्यो व्यापकश्चेति — ऊ, ऋ, ॠ.
[16] प्रतिज्ञार्थः — ऊ, ऋ, ॠ.
[17] 'पाञ्च' इत्यत्र 'पञ्च' इति दृश्यते — ॠ, ऐ.
[18] ०रात्राणामेवेश्वरकार्यं — अ; ०रात्राणामेवेश्वरकार्यस्य — आ; रात्राणामेश्वरकार्यः — ई, उ; ०रात्राणामेवेश्वरकार्याः — ऐ.
[19] वाशब्दो नास्ति — ऊ, ऋ, ॠ.
[20] 'स्व' इत्येतन्नास्ति — ए; सुखहेतोः — ऐ.
[21] ०विज्ञानं क्षणादुत्पद्यते — अ; ०विज्ञानक्षणादुत्पद्यते — आ, ई, उ, ए, ऐ.
[22] क्षपणकादीनामिव — अ, आ, ई, उ, ऋ, ए, ऐ.
[23] शरीरभोग्यं — ॠ.
[24] अत्र 'तद्' इत्यधिकम् — आ.
[25] ज्ञः स्वभाव एव — ऐ.
[26] संयोगं ज्ञान० — आ; संयोगज्ञान० — ऐ.
[27] योगाज्ज इति — ऊ; योगज्ज्ञा इति — ॠ.
[28] एवेति — ऊ, ऋ, ॠ; एवं चेति — ऐ.

नात्रैतावदेव समुच्चितमात्मनो रूपं प्रतिज्ञातमिति नियम्यते। [1]ततः **शरीरी च** कर्मयोगात् शरीरयोग्यः [2]प्रलयकेवलः। [3]रुद्धात्मा विज्ञानकेवलः। भोक्ता सकलः। **इतिशब्दो**ऽत्र[4] भिन्नक्रमः, [5]इत्येवमवस्थात्रययुक्तः[6] [7]**परिभाष्यते** [8]प्रतिज्ञायते इत्यर्थः ॥

[9]तत्र तावच्चार्वाकदृशा मतङ्गमुनिः — 'न पशुः' इत्यादि।

**मतङ्ग उवाच—**

**न पशुर्नाममात्रेण शरीरी परिभाष्यते ॥ ५ ॥**
**शरीरेऽस्मिन् कुतो ह्यात्मा शरीराद्व्यतिरिच्यते।**

न हि प्रतिज्ञामात्रादर्थसिद्धिः। येन शरीरव्यतिरिक्तः पाश्यः शरीरसंबन्धितया आत्मा अस्तीत्युच्यते। तर्हि नास्तीत्यपि [10]कुतः, प्रमाणाभावात्। [11]अत्र संशय एव युक्तः, [12]न यतः शरीरेऽस्मिन्, कुत इति। [13]शरीरमेव हि द्रष्टृतया दृश्याद् घटादेः [14]भेदेनावभासमानम् अहंकारास्पदत्वेन [15]आत्मव्यवहारं लोके वर्तयद् **आत्मा** [16]सिद्धम्[17]। यदुक्तम्[18] — "चैतन्यविशिष्टः [19]कायः पुरुषः" इति। तद्यदि [20]स एव साध्यतया[21] प्रतिज्ञातः, तत्सिद्धसाधनमेव। [22]अथ यः **शरीराद् व्यतिरिच्यते** नित्यव्यापकस्वभावः सः[23] **शरीरेऽस्मिन्** द्रष्टृतया साध्यः, तथाभूतोऽत्र **कुतः**[24]। न तावत्प्रत्यक्षेण। तस्य शरीरव्यतिरेकेणानुपलब्धेरित्युक्तम्। शरीराद्बहिरणु[25]मात्र-

---

[1] तच्छरीरजकर्म० — ऐ.
[2] प्रलयाकलः — ऊ, ॠ, ॠ.
[3] रुद्धात्मादिर्या ज्ञानाकलः — ऊ; बद्धात्मा ज्ञानाकलः — ॠ, ॠ; रुद्रमविज्ञानकेवलः — ऐ.
[4] 'अत्र' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[5] इत्यवस्था० — ऐ.
[6] ०युक्ताः — ॠ.
[7] 'परिभाष्यते' इत्यत्र 'परीक्ष्यते' इति दृश्यते — अ.
[8] प्रज्ञायते — अ.
[9] अत्र — अ; अथ — ऐ.
[10] 'कुतः' इत्यत्र 'कुर्वतः' इति दृश्यते — ऐ.
[11] अतः — अ,
[12] न शरीरेऽस्मिन्यतः कुतः इति — ऊ, ॠ; ना शरीरेऽस्मिन्यतः कुत इति — ॠ.
[13] शरीरमिति दृश्याद् — अ; शरीरमेव दृश्याद् — आ, ई, उ, ए; शरीरतया दृश्यते घटादेः — ऐ.
[14] भेदेन भासमानादहंकारा० — ऊ; भेदेन भासमानाहंकारा० — ॠ, ॠ; भेदेन भासमानमहंकारा० — ऐ.
[15] आत्मव्यवहारः — अ, ॠ; आत्मनो व्यवहारं — ॠ; आत्मना व्यवहारं — ऐ.
[16] अत्र 'यदात्मा' इत्यधिकम् — ॠ, ॠ.
[17] सिद्धः — ऊ, ॠ, ॠ, ए, ऐ.
[18] ३. ३. ५३ तमे ब्रह्मसूत्रशांकरभाष्ये; षड्दर्शनसमुच्चयव्याख्यायां तर्करहस्यदीपिकायां लोकायतमतप्रस्तावे ४५१ पृष्ठे च उदाहृतम्।
[19] कार्यः — ॠ, ए.
[20] तदेव — ए.
[21] 'साध्यतया' इत्यनन्तरं 'अत्र' इत्यधिकम्—ॠ.
[22] अतः शरीराद् — अ.
[23] 'सः' इत्येतन्नास्ति — अ, ए, ऐ; 'सः' इत्यत्र 'सन्' इति दृश्यते — ऊ, ॠ, ॠ.
[24] तथा कुतोऽत्र उक्तः — अ, आ, ॠ; तथा कुतोऽत्र उक्तम् — ई, उ, ए, ऐ.
[25] ०मात्रमप्यसं० — अ, आ, ई, उ, ए, ऐ.

स्याप्य[1]संवेदनाच्च । नाप्यनुमानेन, [2]परात्मत्वप्रसङ्गात् । [3]स्वप्रकाशतत्प्रकाश्यत्वाभ्यामेव स्व-[4]परात्मनोर्भेदो यतः । कश्च तस्यानुमातेत्यपि वाच्यम् । ज्ञानं चेत्, [5]स एव आत्मानुमातृत्वेन तदानीं [6]संवेदनमिति किमन्येन । [7]तच्च शरीरादव्यतिरिक्तमेव [8]वेद्यमित्युक्तम् । नाप्यागमेन तस्यास्मान्[9] [10]प्रत्यसिद्धेरिति कुतः शरीर[11]व्यतिरिक्तात्मसिद्धिः ॥

ननु [12]न शरीरस्य [13]द्रष्टृत्वम्, घटादिवद् भूतकार्यत्वात् । नापि द्रष्टुः शरीरत्वम्, कारणान्वयाभावेन भूतकार्यत्वाभावादन्योन्यं पृथिव्यादिवत् । पृथिव्यादीनि [14]हि परस्पर[15]मनन्वित[16]त्वादेव कार्यभूतानि [17]भवद्भिरिष्यन्ते । यदुक्तम्[18] — "पृथिव्यापस्तेजो वायुरिति तत्त्वानि" इति व्यतिरिक्तात्मसिद्धिरिति । अत्रोच्यते — 'यथा' इत्यादि ।

**यथाम्बुद्रव्यसंयोगात्स्पन्दनादिविवर्तनम्[19] ॥६ ॥**
**तद्वदेव शरीरेऽस्मिन् विज्ञानं योगजं विभो[20] ।**

तद्भावे भावात्, [21]तदभावे [22]चाभावाद्धि [23]कार्यकारणभावनिश्चयो धूमाग्न्यादेरिव । [24]शुक्लशोणिताद्यात्मक[25]भूतविशेषसंयोगे [26]च द्रष्टुः पुत्रादेर्भावात्, [27]तदभावे [28]चाभावाद् भूत[29]कार्यतया प्रत्यक्षसिद्धत्वात् [30]किमन्येनानुमानेन । अम्बुद्रव्याणां [31]जलकिण्वादीनां **संयोगात्** सुराख्यात् [32]स्पन्दनादि[33]विवर्तनान्मदशक्ति[34]रिव [35]निराकर्तुमशक्येति प्रथमः प्रयोगोऽत्र प्रत्यक्षनिराकृत इत्यर्थः ।

---

[1] '०संवेदनाच्च' इत्यारभ्य 'तदानीं' इत्यन्तं नास्ति — ॠ.
[2] परमात्मत्व० — ऐ.
[3] स्पर्शप्रकाश० — अ.
[4] ०परमात्मनो० — अ, ए, ऐ.
[5] स एवानुमातृत्वेन — ऊ, ॠ; स आत्मानुमानत्वेन —ऐ.
[6] संवेदनादिति —अ, आ, ई, उ, ऊ, ॠ, ॠ, ए.
[7] तच्छरीरा० अ, आ, ई, उ, ए, ऐ.
[8] वेदनमित्युक्तम् — आ, ई, उ.
[9] तस्यास्माकं — ऐ.
[10] प्रत्यासत्तेरिति — अ; प्रसिद्धेरिति — ऐ.
[11] ०व्यतिरिक्तात्मासिद्धिः — अ.
[12] नशब्दो नास्ति — अ, आ, ई, उ, ए.
[13] दृष्टत्वं — आ.
[14] अत्र नशब्दोऽधिकः — अ.
[15] ०मनन्वितादेव — अ.
[16] ०त्वादेवाकार्य० — ऐ.
[17] भवद्भिरिष्यते — अ, ॠ, ऐ.
[18] इदं वाक्यं षड्दर्शनसमुच्चयव्याख्यायां तर्करहस्यदीपिकायां ४५८ तमे पृष्ठे 'यदुवाच बृहस्पतिः' इति निर्दिश्योदाहृतम् ।
[19] विवर्तना — मु, उ, ओ.
[20] विभोः — ऊ, ॠ, ॠ.
[21] तदभावः — ऊ.
[22] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[23] कार्यकरणाभाव० — आ, ई, उ.
[24] शुक्र० — ऊ, ॠ, ॠ.
[25] ०भूतादिभूविशेष० — आ.
[26] 'च' इत्यत्र 'एव' इति दृश्यते — ऐ.
[27] तदाभावे — ॠ.
[28] च भावात् — आ, ॠ.
[29] ०कार्यताप्रत्यक्ष० — ऊ, ॠ, ऐ; ०कार्यत्वाप्रत्यक्ष० ॠ.
[30] नानेनानुमानेन — ऊ, ॠ, ॠ.
[31] जलकम्ब्वादीनां — अ, आ, ई, उ, ए.
[32] स्यन्दनादि० ॠ.
[33] ०विवर्तनानन्तशक्ति० — अ, आ, ई, उ; ०विवर्तं मदशक्ति० — ऊ; ०विवर्तनं मदशक्ति० — ॠ, ॠ; विवर्तानन्तशक्ति० — ए; विवर्तनां . . . दशक्ति — ऐ.
[34] 'रिव' इत्यारभ्य 'संयोगान्मदशक्ति' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[35] निराकर्तुं शक्येति — ऊ, ॠ.

द्वितीयोऽप्यनेनैवाम्बुद्रव्यसंयोगान्मदशक्तिदर्शने[1]नानैकान्तिकः। नात्र [2]कारणान्वयो दृश्यते यतः। एतच्चोपलक्षणमन्येषा[3]मप्यदृष्टकारणान्वयानां सूर्यकान्तादिलब्धजन्मनामग्न्यादीनां कार्याणामिति कुतो व्यतिरिक्तात्मसिद्धिः।

[4]तदुक्तम् — "[5]मदशक्तिवद्विज्ञानम्" इति। अत एव च शरीरविनाशे द्रष्टुरपि [6]विनाशात् पर[7]लोकिनोऽभावात् परलोकासिद्धिरित्युक्तम् [8]—

"[9]यावज्जीवं सुखं जीवेन्नास्ति [10]मृत्युरगोचरः।
[11]भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः॥" इति॥

एतत्प्रतिक्षिपति सिद्धान्तवादी — 'द्रव्यसंकरजम्' इत्यादि।

**परमेश्वर उवाच —**

**द्रव्यसंकरजं [12]यत्तद्विज्ञानं [13]जलजादिवत्॥७॥**
**न सर्वत्र [14]भवेत्स्पष्टं न चैवाकुञ्चनादिकम्।**
**न श्रोत्रादिपरिज्ञानं [15]नर्तुर्नो काल एव च[16]॥८॥**
**सुखदुःख[17]विवेकित्वं न गतिर्वृद्धिरेव च[18]।**

यत्तावदुक्तम् — कारणान्वयाभावेऽपि [19]जलजादि[20]द्रव्यजमदशक्तिवत् तद्भावभावित्वात्, [21]शुक्लशोणितादिद्रव्यसंकरजं [22]द्रष्टृस्वभावं **विज्ञानं** सिद्ध्यतीति। तन्न[23], [24]तद्भावभावित्वस्यास्माकमसिद्धेः। कुतः? यतः **सर्वत्र भवेत्**।

यस्य हि [25]यत्राभावः सिद्धः, सः विशिष्टवस्तुसंनिधाने तत्र भवन् तत्सादृश्याभावेऽपि [26]तत्कार्यतया सिद्ध्यति; सूर्यकान्तादेर्वह्न्यादिवत्। [27]न तु तत्र भावसंभावनायाम्। [28]तदानीं ह्या-

---

[1] ०नानेकान्तिकत्वात् — अ; ०नानैकान्तिकत्वात् — आ, ई, उ, ए, ऐ.
[2] कारणान्वयस्य यो दृश्यते — अ; प्रकरणान्वयो — ऊ, ऋ, ॠ.
[3] ०मन्यदृष्ट० — ऊ, ऋ, ॠ.
[4] यदुक्तम् — ऊ, ऋ, ॠ.
[5] ब्रह्मसूत्रशांकरभाष्ये [३.३. ५३] उदाहृतम्।
[6] नाशात् — ऐ.
[7] ०लोकिनामभावात् — अ, ए, ऐ; ०लोकानामभावात् — आ, ई, उ.
[8] योगवासिष्ठे ६ उत्तरार्धे १००.२.
[9] यावज्जीवेत्सुखं — ऊ, ऋ, ॠ.
[10] मृत्योरगोचरः — ई, उ, ऋ, ए, ऐ.
[11] भस्मभूतस्य — अ, ऐ.
[12] तत्तद्विज्ञानं — ओ.
[13] मनुजादिवत् — ऊ, ऋ, ॠ; जलजाविवत् — ओ.
[14] भवेत्सृष्टं — ऊ, ऋ; भवेत्प्रष्टं — ॠ.
[15] द्रष्टुर्नो — मु, उ; न दत्तः काल० — ऊ, ऋ, ॠ.
[16] वा — मु, उ, ऊ, ऋ, ॠ.
[17] विवेकत्वं — ऊ, ऋ, ॠ.
[18] वा — ऊ, ऋ, ॠ.
[19] जलादि० — अ, ऊ, ऋ, ॠ, ए, ऐ.
[20] ०द्रव्यमद० — अ, ई, उ, ए, ऐ.
[21] शुक्र० — ऊ, ऋ, ॠ.
[22] द्रष्टुः स्वभावं — अ, आ, ई, उ, ऊ, ऋ, ए.
[23] तत्र — ऊ.
[24] तद्भावाभावि० — ऐ.
[25] यत्राभावसिद्धिः — ऐ.
[26] तत्कार्यतायाः — ऐ.
[27] ननु तत्र — अ, ऐ.
[28] तदिदानीं — अ, आ, ई, उ, ए, ऐ.

लोकादिसंनिधौ [1]घटादिवत् तदभिव्यङ्ग्य एव सिद्ध्यति। न तत्कार्यः। व्यापकत्वेन च ग्राह्कात्मनस्तत्रापि भावः संभाव्यत इति। [2]आलोकादिना घटादेरिव [3]तद्भावे व्यक्तिरेव सिद्ध्यति। न तूत्पत्तिरिति कुतो भूतकार्यता।

ननु शुक्लशोणितसंयोगात् प्राक् तत्र तस्यानुपलम्भान्मृत्पिण्डावस्थायां घटादेरिव सत्त्वमसिद्धमेव। तदपि न। यतः [4]स्पष्टं कृत्वा येन रूपेण तत्सिद्धं, तेनैव रूपेण [5]स्वसंवेदनात्मना तत्रास्माभिः[6] संभाव्यते। न त्वत्यन्तासिद्धेनेन्द्रिया[7]लम्बनेन। अतीन्द्रियादिवदनुपलम्भ्यस्वभावत्वाद्, देवदत्तयज्ञदत्तयोरिव च स्वसंवेदनेन [8]स्व[9]संवेदनान्तरा[10]संवेदनान्न तत्र [11]प्रागसत्तासिद्धिरेव।

अथ [12]तत्र प्राक् सत्त्वमप्यस्य कुतः। तर्हि संशय एवेति न युष्मत्पक्षसिद्धिः।

किं चानुमानतो [13]निश्चयाच्चेत्युच्यते— "**न चैवाकुञ्चनादिकम्**" इति। [14]प्राणिनां स्थानकरणादेश्च आकुञ्चन[15]प्रसारणाद्यं कर्म हिताहित[16]स्मरणाविनाभावि व्यवहारकाले सिद्धमिति, बालानामपि तद् दृश्यमानं [17]स्वकारणमनुभवस्मरणं गमयतीति, [18]शुक्लशोणितसंयोगात् प्रागप्यनुभवितुः सत्त्वसिद्धिः। अन्यथा [19]कारणाभावाद् नैवाकुञ्चनादिकं भवेत्तेषां बालानामिति।

न चैतस्य[20] [21]क्षुतजृम्भादेरिव वस्तुशक्त्यैव भवतः, [22]तत्कारणमनाशङ्कनीयम्। प्रयत्न[23]विशेषपूर्वकत्वेनोपलब्धेः। यदाहुः[24] —

"प्रेरणाकर्षणे वायोः प्रयत्नेन विना कुतः" इति।

[25]न चानवगमपूर्वः प्रयत्नः सं[26]भवति। [27]बालानामपीह [28]तीव्रतम[29]रोदनानुमितक्षुधाद्युप[30]शमन-

---

[1] अत्र 'तत्र भवः सत्त्व' इति अ कोशे, तत्र भवत्सत्त्व' इति आ, ई, उ, ए, कोशेषु, 'तत्र संभवसत्त्व' इति ऐ कोशे च अधिकम्।

[2] अत्र 'ननु'शब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.

[3] 'तद्भावे' इत्यारभ्य 'घटादेरिव' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.

[4] स्फुटं — अ.

[5] स्वयं वेदनात्मना — अ.

[6] तत्रात्मापि — अ, ई, उ, ए, ऐ; तत्रापि—आ.

[7] ०लम्भनेन — ऊ, ऋ.

[8] अत्र चशब्दोऽधिकः — अ, आ.

[9] ०संवेदनानन्तरा० — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ; ०संवेदनान्न तत्र — ए.

[10] ०संवेदनं न तत्र—अ; ०संवेदना न तत्र—ऐ.

[11] प्रागुक्तासिद्धिरेव — ए.

[12] तत्प्राक् — ऐ.

[13] निश्चयश्चेत्युच्यते — ऊ, ऋ, ॠ.

[14] प्राणिना स्थान० — ई, उ; प्राणापानादौ नास्थान० — ऊ; प्राणापानादौ स्थान० — ऋ, ॠ.

[15] प्रसादनाद्यं — आ, ई, उ.

[16] ०स्मरणं विनाभावि — अ.

[17] स्वकारणानामनुभव० — ऋ; स्वकारणानामनुभाव० — ॠ.

[18] शुक्र० — ऊ, ऋ, ॠ.

[19] कारणान्तराभावाद् — अ, आ, ई, उ, ए, ऐ.

[20] नैतस्य च —ऊ; न च तस्य च — ऋ, ॠ.

[21] क्षुधाजृम्भा० — अ, ए, ऐ; क्षुधजृम्भा० — आ, ई, उ; क्षुत् जृम्भा० — ऊ.

[22] तत्कारणत्वमाशङ्कनीयम् — ऊ, ऋ; तत्कारणत्वमशङ्कनीयम् — ॠ; तत्कारणं नाशङ्कनीयम् — ऐ.

[23] ०विशेषकत्वेनोप० — ऐ.

[24] प्रमाणवार्तिकम् २. ५३.

[25] न च ननु भवमपूर्वः — ऋ; न च ननु भवनियमपूर्वः — ॠ.

[26] '०भवति' इत्यारभ्य '०परिहारेण तृप्ति०' इत्यन्तं नास्ति — ए.

[27] बालानामपि हि — ऊ, ऋ, ॠ.

[28] तीव्रतर० — ऋ ॠ.

[29] रोदनाद्यनुमित० — ऊ, ऋ, ॠ; रोदनोन्मित० — ऐ.

[30] ०शमार्थितया — ऊ ऋ, ॠ.

समर्थतया स्तनात्क्षीरं तदहर्जातानामपि प्रयत्नविशेषेण प्राणापानोपरोध[1]रक्षापूर्वमाकर्षतां, वमनादिपरिहारेण तृप्तिलक्षणफल[2]प्राप्ति [3]यावच्च निगिरतां [4]दर्शनात्, हिताहितस्मरणावगमपूर्वकत्वं [5]प्रयत्नादेरवगम्यत इति [6]कुतोऽस्य वस्तुशक्त्यैव भावः। [7]क्षुतजृम्भादीनां तु, केशनखवृद्ध्यादीनामिव अवगमपूर्वकत्वेन प्रवृत्त्यदृष्टेर्युक्त एव वस्तु[8]सामर्थ्येनोद्भवः। न त्वाकुञ्च[9]नादेरिति, [10]तदन्यथानुपपत्त्यैव जन्मनः पूर्वं [11]द्रष्टृसिद्धिः। तदिदमाहुः [12]—

"आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च[13] न विना [14]पूर्ववेदनाम्" ॥ इति।

किं च — "**न श्रोत्रादिपरिज्ञानम्**" इति भवत्पक्षे [15]हि शरीरादभिन्नोपादानत्वात् चक्षुःश्रोत्रादेरपि[16] इन्द्रियवर्गस्य द्रष्टृत्वप्रसङ्ग इति, [17]रूपादिदर्शनान्यथानुपपत्तिसिद्धं[18] न[19] [20]श्रोत्रादीनां करणत्वज्ञानं भवेत्। अनेनानुमानेन[21] विरोध इत्यर्थः। अथ तद्विरोधपरिहाराय श्रोत्रादीनामद्रष्टृत्वेन करणत्वमेवाभ्युपगम्यते। [22]तर्हि एकोपादानत्वाच्छोत्रादिवत्[23] शरीरस्याप्यद्रष्टृत्वमिति द्रष्ट्रन्तरसिद्धिः।

कश्चात्र[24] दृष्टो हेतुः [25]विज्ञानस्य [26]भवद्भिरिष्यते। [27]ननु [28]स्त्रीपुरुषसंबन्ध[29]सिद्धशुक्लशोणितसंयोग एव। न। तदभावेऽपि असकृन्नोत्पद्यते[30] यतः। यद्येवं तदभावेऽपि [31]नैवोत्पद्यते। सत्यम्। अत एवास्य कारणान्तर[32]मपेक्षणीयमनुमापयति रूपा[33]लोकमनसां संनिधाविव [34]अनुत्पद्यमानं

---

[1] ०रक्षां पूर्वं० — आ, ऊ, ॠ.
[2] ०प्राप्तिः — अ, आ, ई, उ, ऊ, ए.
[3] यावन्निगिरतां — ऊ, ऋ, ॠ; यावच्च निगरतां — ऐ.
[4] दर्शनाद्धि हितस्मरणा० — ऊ, ऋ, ॠ.
[5] प्रयत्नादेव गम्यते — ऊ, ऋ, ॠ.
[6] कुतोऽस्या वस्तु० — अ.
[7] क्षुवाजृम्भादिकं तु — अ; क्षुवजृम्भादीनां तु — आ, ए; क्षुवं जृम्भादीनां तु — ई, उ; क्षुधाजृम्भादीनां तु — ऐ.
[8] ०सामर्थ्येनोद्भावः — ऐ.
[9] ०नादिरिति — ऊ, ऋ, ॠ.
[10] तद्यथानुप० — आ.
[11] दृष्टसिद्धिः — ई, उ; द्रष्टुस्सिद्धिः — ऊ, ऋ, ॠ; दृष्टिसिद्धिः — ऐ.
[12] वाक्यपदीये — १. १२२.
[13] ०घाताच्च — ऊ, ऋ, ॠ.
[14] पूर्ववेदिनाम् — आ; पूर्वचेतनाम् — ऊ, ऋ, ॠ; शब्दभावनाम् — वाक्यपदीयपाठः।
[15] हिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[16] ०श्रोत्रयोरपि — अ.
[17] रूपदर्शनाद्यन्यथा० — ऊ, ऋ, ॠ.
[18] ०पत्तिसिद्धेः — अ, आ, ई, उ, ए; ०पत्त्योक्तिसिद्धेः — ऐ.
[19] 'न' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[20] 'श्रोत्रादीनां' इत्यारभ्य 'तद्विरोधपरिहाराय' इत्यन्तं नास्ति — ए.
[21] 'अनुमानेन' इत्यत्र 'अनुमाने' इति दृश्यते — ऊ, ऋ, ॠ.
[22] 'तर्हि' इत्यत्र 'तस्य' इति दृश्यते — ए.
[23] श्रोत्रवत् — ए.
[24] कश्चासां — ऊ, ऋ, ॠ.
[25] 'विज्ञानस्य' इत्यत्र 'विज्ञाने' इति दृश्यते — ऊ, ऋ, ॠ.
[26] पूर्ववद्भिरिष्यते — अ.
[27] न तु — ॠ, ऐ.
[28] स्त्रीसम्बन्ध० — अ.
[29] ०सिद्धः शुक्ल० — आ, ई, उ, ए; ०सिद्धशुक्र० — ऊ, ऋ, ॠ.
[30] ०न्नोपपद्यते — ऊ, ऋ, ॠ.
[31] नैवोपपद्यते — आ, ई, उ ,ए.
[32] ०मपेयमनु० — अ.
[33] ०लोकनमनसां — ऋ, ॠ.
[34] अनुत्पाद्यमानं — आ, ई, उ, ए, ऐ; अनुपपद्यमानं — ऊ, ऋ, ॠ.

[1]चक्षुर्लक्षणं चक्षुर्विज्ञानम्। तच्चात्र सदृशत्वाद् [2]द्रष्टृरूपमेवानुमापयतीति, जन्मनः प्रागपि तत्सिद्धिः।

ननु "[3]दृष्टे सति नादृष्टकल्पना युक्ता" इति, [4]तत् कारणान्तरं दृष्टमेवात्र भवेद् ऋतुलक्षणम्। ऋतौ उपगच्छतोर्हि [5]स्त्रीपुरुषयोः पुत्रादि [6]चेतनात्मकं कार्यं दृष्टं यतः। अत्रोच्यते — "[7]**नर्तुः**" इति ऋतुर्न भवेदत्र[8] [9]कारणम्। तद्भावेऽपि असकृत् स्त्रीपुरुषयोरुपगच्छतोस्तत्कार्यस्यादर्शनादिति[10], प्राग्वदेव [11]ततोऽप्यन्येन कारणेन भवितव्यमिति।

तदपि तर्हि [12]दृष्टं कालात्मकमेव शीतातपादिमहाभूतरूपं कारणमस्तु। न त्वदृष्टमिति। तत्राप्युच्यते — "**नो काल** [13]**एव च**" इति। नो निषेधे। तस्यापि [14]हि स्त्रीपुरुषसंबन्धस्येव[15] ऋतोरिव[16] सर्वदा भावात् सर्वदा चेतनकार्योत्पत्तिप्रसङ्गः। न चोत्पद्यते। तस्मान्न काल एव भवेत् कारणम्, ऋतुर्वा, अन्यो वा कश्चिद् व्यभिचारादिति, [17]पारिशेष्यात्तद् द्रष्टृरूपमेव सिद्ध्यतीति द्रष्टुरनादित्वसिद्धिः।

किं च "**सुखदुःखविवेकित्वम्**" इति, [18]यदि शरीरमेव द्रष्टृस्वभावं भवेत्, ततः सकलद्रष्टॄणां परशरीरप्रत्यक्षत्वे तद्द्रष्टृस्वरूपस्यापि प्रत्यक्षत्वात्, तद्गतसुखदुःखरागद्वेषादेरपि विवेकित्वं प्रत्यक्षतान्योन्यं भवेत्, तदभेदात्। न च भवति। ततो न शरीरमेव द्रष्टृ। किं तु ततो[19]ऽन्य एवेति।

किं च "**न गतिः**" इति, यद्धि यदात्मकं तत् [20]तस्मिन्नेव स्थितम्। नान्यत्र गच्छति[21]। अग्नेरिवौष्ण्यम्। यत्तु गच्छति न तत् तदात्मकम्। [22]यथा अयःपिण्डावस्थायामग्नि[23]रूपं नायःस्वभावं गच्छति। [24]गच्छति च पञ्चतावस्थायां [25]शरीराद् द्रष्टृत्वमिति न [26]तत्स्वभावः।

---

[1] चक्षुर्विज्ञानं चक्षुर्लक्षणम् — अ, आ, ई, उ, ए, ऐ.

[2] द्रष्टुः रूप० — अ.

[3] लौ० न्यायसाहस्री — पृ० १९७.

[4] 'तत्' इत्येतन्नास्ति — आ.

[5] 'स्त्रीपुरुषयोः' इत्यारभ्य 'असकृत्' इत्यन्तं नास्ति — आ, ई,

[6] चेतनात्मककार्यं — ऐ.

[7] न तु ऋतुर्भवेत्तत्र — उ.

[8] 'अत्र' इत्येतन्नास्ति — ऊ.

[9] कारणान्तराभावेऽपि — अ, उ; कारणात्तद्भावेऽपि — ऋ; कारणान्तरभावेऽपि — ए, ऐ.

[10] ०त्कार्यस्य दर्शनादिति — उ.

[11] ततोऽप्यनेन — ऊ, ऋ, ॠ.

[12] दृष्टे कालात्मक० — ऋ; दृष्टकालात्मक० — ऐ.

[13] एवेति — ऋ, ॠ, ऐ.

[14] हिशब्दो नास्ति — ऊ, ऋ, ॠ.

[15] ०संबन्धस्यैव — ऊ, ऋ, ॠ, ऐ.

[16] अत्र वाशब्दोऽधिकः — ऊ, ऋ, ॠ.

[17] पारिशेष्यादृष्ट० — अ; पारिशेष्याददृष्ट० —आ, ई, उ, ए; पारिशेष्याद्दृष्ट० —ऐ.

[18] 'यदि शरीरमेव' इत्यारभ्य 'न शरीरमेव द्रष्टृ' इत्येतत्पर्यन्तभागस्य स्थाने अधोनिर्दिष्टप्रकारेण मातृकासु पाठभेदो दृश्यते — 'यदि सुखदुःखविवेकित्वं तदन्यशरीरमेव हि द्रष्टृ' — अ; 'यदि सुखदुःखविवेकित्वं तदा न शरीरमेव द्रष्टृ' — आ, ई, उ, ए, ऐ.

[19] ०ऽन्यदेवेति — ऊ, ऋ, ॠ.

[20] तस्मिन्नवस्थितं नान्यत्र — अ, आ, ई, उ, ए, ऐ; तस्मिन्नेव स्थितो नान्यत्र — ऊ.

[21] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.

[22] यथा यतिपण्डा० — ऊ, ऋ, ॠ.

[23] ०रूपताया अतत्स्वभावत्वाद्गच्छति। — अ, आ, ई, उ, ए, ऐ.

[24] 'गच्छति च' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[25] 'शरीराद्' इत्यत्र 'न शरीरे' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.

[26] तत्स्वभावम् — ऊ, ऋ, ॠ.

किं च — "**वृद्धिरेव च**" इति, यस्य [1]यदात्मकत्वं [2]तस्य तद्वृद्धया वृद्धिः; [3]अग्निवृद्धयेव दाहकत्वस्य। [4]यदि शरीरस्य [5]द्रष्टृस्वभावत्वं [6]स्यात्, ततस्तस्य [7]मांसपायसादिना वृद्धौ [8]द्रष्टुरपि वृद्धिः स्यात्। न च वर्धते। तस्मान्न तदात्मकमिति॥

अत्र [9]श्लोकभागेन पराभिप्रायः — 'वृद्धिः' इति।

**वृद्धिश्चेदूष्मणा"**

अथोच्यते। दृश्यते एवान्नपरिपाकेन[10] शरीरवृद्धया [11]बालानां ज्ञानवृद्धिरिति कथं न [12]तयोरभेदः।

[13]अत्रोच्यते — 'कस्माद्ध्रास' इत्यादि।

[14]"**कस्माद्ध्रासो** [15]**वैधर्म्यतः स्थितः**॥९॥

यो हि यद्वृद्धया [16]वर्धते, यद्ध्रासेन च [17]ह्रसति[18], स तस्य स्वभावः, वह्नेरिवौष्ण्यमित्युक्तम्। यदि च शरीरस्वभावमेव [19]चैतन्यं स्यात्, तत् **कस्मात्** [20]कारणात् **ह्रासो वैधर्म्यतः स्थितः**। यत् करचरणच्छेदादिना शरीरस्य [21]ह्रासेऽपि[22] न [23]चैतन्यस्य ह्रास इति। अत एव तद्ध्रासे ह्रासादर्शनान्न तत् तदात्मकमिति।

यद्वा एवं तादात्म्ये सति शरीरवृद्धया महाकायानां ज्ञानवृद्धिर्भवेत्। ह्रस्वकायानां तु ज्ञानह्रास इति। कस्माद्ध्रासो वैधर्म्यतः [24]स्थितः। स्वल्पकायानामपि केषांचिन्महामतीनां दर्शनात्, ततो न [25]तदात्मकमिति।

---

[1] यदात्मकं — अ.
[2] तद्वृद्धया तस्य वृद्धिः — अ, आ, ई, उ, ए, ऐ.
[3] अग्निविवृद्धयेव — ऊ, ऋ, ॠ.
[4] 'यदि' इत्यत्र 'तदिदं' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[5] द्रष्टृत्वस्वभावं — आ, ए; दृष्टत्वस्वभावं ई, उ; द्रष्टृस्वभावं — ऊ, ऋ, ॠ.
[6] अत्र 'यदि' इत्येतदधिकम् — अ, आ, ई, उ, ए, ऐ.
[7] श्वासश्वयथ्वादिवा वृद्धौ — ऊ, ऋ, ॠ.
[8] द्रष्टु . . . गमवृद्धिः — ऊ; द्रष्ट्रधिगमवृद्धिः — ऋ. द्रष्टत्वगमवृद्धिः — ॠ.
[9] श्लोकविभागेन — ऊ, ऋ, ॠ.
[10] 'अन्नपरिपाकेन' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[11] बालादीनां — अ, आ, ई, उ, ए, ऐ.
[12] तयोर्भावः — ऊ, ऋ, ॠ.
[13] तत्रोच्यते — आ, ई, उ, ए, ऐ.
[14] कस्माद्धासौ — ओ.
[15] वैधर्मतः — ऊ, ऋ; वैधर्मता — ओ.
[16] वर्तते — ऐ.
[17] ह्रसते — अ, आ, ई, उ, ए, ऐ.
[18] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[19] चेतनं — ऊ, ऋ, ॠ.
[20] 'कारणात्' इत्येतन्नास्ति — आ.
[21] ह्रासोऽपि — ऊ, ऋ, ॠ, ए.
[22] अत्र 'चेतनस्य ह्रासः' इत्यधिकम् — ॠ.
[23] चेतनस्य — ऊ, ऋ, ॠ.
[24] सिद्धः — ऊ, ऋ, ॠ.
[25] तदात्मत्वमिति — अ, आ, ई, उ, ए.

यत्तु बालानां शरीरवृद्धया ज्ञानवृद्धिर्दृश्यते इत्युक्तम्[1]। तदभि[2]व्यक्तिपक्षेऽप्युपपद्यते एव। अभिव्यञ्जकानामपि [3]प्रदीपादीनां [4]वृद्धया वृद्धिदर्शनात्।

कथं तर्हि शरीरोपघातादिना मोहोदयः। धनोपघातादिनेव [5]तदभिनिवेशात्। [6]सिंहशार्दूलादि-शोणितादि[7]दर्शनेनापि कातराणां मोहादिदर्शनात्। न च तत्र तादात्म्यसिद्धिः॥९॥

इतश्च न शरीरस्य द्रष्टृत्वम्—'अक्षाणामप्रवृत्तत्वाद्' इत्यादि।

**अक्षाणामप्र[8]वृत्तत्वात्प्रवृत्तत्वाच्च युक्तितः।**
**व्यवहाराच्च[9] साटोपात्प्रतिज्ञायाश्च लक्ष्यते[10]॥१०॥**
**यस्मात्सत्यपि संयोगे कीर्त्यते पञ्चतां [11]गतः।**

**अक्षाणां** देवनहेतुत्वादिन्द्रियाणामिव [12]शरीराणामपि। **युक्तित इति** युक्तिः [13]ऊहापोहात्मकस्तर्कः, ततो हेतोः। [14]प्रियतमालिङ्गनादौ तेषां प्रवृत्ति[15]निवृत्तिस्वभावत्वं यत् सिद्धं, [16]तत्करणत्वेन तेषां [17]सिद्धेः, तद्व्यतिरिक्तः [18]परामर्शकात्मको द्रष्टा **लक्ष्यते**। न हि करणमेव कर्तृ-[19]स्वरूपं संवेद्यते यतः।

किं च [20]**व्यवहाराच्च** अटनभ्रमणादिकाच्छरीरहेतुत्वेन सिद्धात् [21]तद्व्यतिरिक्तो द्रष्टा लक्ष्यते। शरीरस्य तदानीं [22]करणत्वेन संवेदनात्।

अपि च प्रतिज्ञा [23]साध्यार्थनिष्ठा मतिः, [24]तया हि तीव्रतराभिनिवेशतोऽभिमततरवस्तुभावना-निष्ठानां शरीराणि काष्ठ[25]कुड्यादिप्र[26]ख्याण्येवानुभूयन्ते। **यस्मात् सत्यपि** [27]बुद्धया **संयोगे कीर्त्यते**

---

[1] मतङ्ग० विद्या० ६. ९ पू० वृत्तौ।
[2] ०व्यक्तपक्षे० — ऋ, ॠ.
[3] प्रदीपानां — ऋ, ॠ.
[4] वृद्धयवृद्धि० — अ; विवृद्धया तद्वृद्धि० — ऊ, ऋ, ॠ.
[5] तदभिधानात् — ऊ, ऋ, ॠ.
[6] सिंहशोणितादि० — ऊ, ऋ, ॠ.
[7] ०दर्शनेऽपि — ऐ.
[8] ०वृत्तित्वात्प्रवृत्तत्वाच्च — ऊ, ऋ, ॠ; ०वृत्तत्वात्प्रवृत्तित्वाच्च — ऐ.
[9] व्यवहारश्च — ऊ, ऋ, ॠ.
[10] प्रतिज्ञा या च लक्ष्यते — मु.
[11] गताः — ऊ, ऋ, ॠ, ओ; गतैः — ऐ.
[12] शरीराणामिति — अ, आ, ई, उ, ए, ऐ.
[13] औहापोहात्मक० — ऐ.
[14] प्रियतमादौ — अ.
[15] 'निवृत्ति' इत्येतन्नास्ति — आ, ॠ.
[16] ततः करण० — अ, आ, ई, उ, ऊ, ऋ, ए.
[17] सिद्धः — ऋ.
[18] परामर्शात्मको — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए; परामृश्यात्मको — ऐ.
[19] ०स्वभावं — ऐ.
[20] व्यवहारोच्चाटन० — अ, ऋ; व्यवहारोच्चारोच्चाटन० — ॠ; व्यवहाराच्च नटन० — ऐ.
[21] 'तद्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[22] करणत्वेनैव — ऊ, ऋ, ॠ.
[23] साध्यार्थदृष्टा — अ, आ, ई, उ, ऐ; साध्यार्थदृष्टया — ए.
[24] तथा हीति प्रियाभि० — अ; तया तीव्रयाभि० — आ; तया हि तीव्रयाभि० — ई, उ; तथा हि तीव्रतराभि० — ऊ; तथा हि तीव्रतरयाभि० — ए; तस्या अतिवृत्तयाभि० — ऐ.
[25] ०कुण्डादिप्र० — अ, ०कुड्यप्र० — ऋ, ॠ.
[26] ०ख्यान्येवानु० — ऊ; ऋ, ॠ, ऐ.
[27] बुद्धिसंयोगे — ऊ, ऋ, ॠ; बुद्धयादिसंयोगे — ऐ.

**पञ्चतां गत** इव तदानीं [1]पुरुष इति, कथं न [2]द्रष्टुर्व्यतिरेकः। यदाहुः[3] —

"[4]यदा स तीव्रान्शब्दादीन्देही शीतातपादिकान्"।
गतासुरिव नो वेत्ति ज्ञेयो [5]युक्तस्तदा [6]पुमान्॥" इति[7]॥

प्रकरणार्थोपसंहारः — 'न तत्र' इत्यादि।

**न तत्र स्वल्पमप्यस्ति विज्ञानं मुनिपुङ्गव ॥११॥**

अतश्च [8]प्रागुक्तैर्हेतुभिः[9] **तत्र** [10]देहे [11]धर्मिणि **न** [12]**स्वल्पमपि**[13] **विज्ञानमस्ति**[14]। नैवास्तीत्यर्थः॥११॥

अनुभवेनापि शरीराद्व्यतिरिक्तो [15]द्रष्टा अर्थसिद्ध इत्युच्यते — 'भोक्ता भोग्यस्य' इत्यादि।

**भोक्ता भोग्यस्य [16]संसिद्धो नाङ्गुल्यग्रेण कुत्रचित्।**
**[17]स्वाग्रं वै शक्यते [18]स्प्रष्टुं [19]तदुद्भूतात्मवर्त्मना ॥१२॥**
**भूतानां रचना [20]भोग्या पक्षेऽस्मिन्भवतः स्थिता[21]।**

अयमर्थः — शरीरघटयोस्तुल्ये [22]विषयत्वे कस्माद् भवद्भिः शरीरमेव[23] द्रष्टृस्वभावमित्युच्यते। न तु घटाद्यपीति। [24]तस्य [25]घटादिकाद् ग्राह्याद् भेदेन [26]भोक्तृतया ग्राहकत्वेन [27]भासनादिति चेत्।

---

[1] पुरुषा इति — ऋ, ॠ.
[2] दृष्टः। ततोऽतिरेकः — अ, आ, ई, उ, ऐ; दृष्टं ततोऽतिरेकः — ऐ.
[3] आकरो न लभ्यते।
[4] यदा सति प्राक् शब्दादीन् — अ, ऐ.
[5] मुक्तस्तदा — अ, आ, ई, उ, ए, ऐ.
[6] 'पुमान्' इत्यत्र 'प्रति' इति दृश्यते — ऊ, ऋ, ॠ.
[7] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[8] मतङ्ग० विद्या० — ६. ७ उ० — ११ पू० वृत्तौ।
[9] 'हेतुभिः' इत्यत्र 'हेतुः' इति दृश्यते—ऊ, ऋ, ॠ.
[10] 'देहे' इत्यत्र 'शरीरे' इति दृश्यते — ऊ, ऋ, ॠ.
[11] 'धर्मिणि' इत्यत्र 'हेतुर्धर्मिणि' इति दृश्यते — अ, आ, ई, उ, ए.
[12] स्वरूपमपि — अ, ऐ.
[13] अत्र 'अस्ति' इत्यधिकम् — ॠ.
[14] विज्ञानमपि ज्ञानमस्ति — अ.
[15] दृष्टोऽर्थः सिद्ध उच्यते — अ; द्रष्टा सिद्ध इत्युच्यते — ऊ, ऋ, ॠ; दृष्टोऽर्थसिद्ध इत्युच्यते — ऐ.
[16] संसिद्धौ — मु, उ, ऐ.
[17] अग्रं वै — ऊ, ऋ, ॠ.
[18] स्पृष्टुं — मु, उ.
[19] तत्तु भूतात्म० — मु० पाठान्तरम्, उ.
[20] भोग्यपक्षे० — ॠ.
[21] भवति स्थिता — मु, उ; भवति स्थिताः — ऐ; भवता स्थिता — ओ.
[22] विषये — अ; विज्ञानविषयत्वे — ऊ, ऋ, ॠ.
[23] 'एव' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[24] 'तस्य' इत्येतन्नास्ति — अ, आ; 'तस्य' इत्यत्र 'यस्य' इति दृश्यते — ई, उ, ए, ऐ.
[25] 'घटादिकाद्' इत्यारभ्य 'मृदुकर्कशात्मना' इत्यन्तं नास्ति — ई, उ; 'घटादिकाद्' इत्यत्र 'घटाद्' इति दृश्यते — अ, आ, ए, ऐ.
[26] 'भोक्तृतया' इत्येतन्नास्ति — ऐ.
[27] भावनादिति — ए.

यद्येवमनेनैव न्यायेन शरीरस्याप्यन्तःस्पर्शनेन[1] [2]शूलाद्यात्मना, बहिश्च [3]मृदुकर्कशाद्यात्मना ग्राह्यत्वसिद्धेः **भोग्यस्य** [4]सतो [5]**भोक्ता** अन्यो [6]रागद्वेषेच्छाद्याश्रयभूत[ः] स्वसंवेदनसिद्धो[7] [8]न प्रतिक्षेप्य इति व्यतिरिक्तात्मसिद्धिः। न च भोग्य एव शरीरात्मको भोक्ता भविष्यतीति वाच्यम्। घटादेरपि प्रसङ्गात्। **अङ्गुल्यग्रेण** स्वाग्र[9]स्पर्शवत् स्वात्मनि क्रिया[10]विरोधाच्च।

[11]तस्मादपरमत्र चार्वाकपक्षे [12]व्यवस्थितस्य [13]**भवतः** [14]इदं वक्तुमुचितम् — [15]**तदुद्भूतात्मवर्त्मना** इति, तेभ्यो भूतेभ्य [16]एव [17]उद्भूतमात्मनो वर्त्म यद् [18]द्रष्टृस्वभावं विज्ञानं, तेन **भूतानां** पृथिव्यादीनां **रचना** [19]शरीरादिका **भोग्या** इति। न तु शरीरमेव द्रष्टृस्वभावमिति।

[20]एवं च [21]पूर्वनिषिद्ध[22]भूतोद्भवाभ्युपगमेऽपि द्रष्टुः [23]शरीरादिव्यतिरेको[24]ऽनुभवसिद्धोऽत्र प्रतिपादितः॥

[25]तथा हि — 'ज्ञानं ज्ञेयं च' इत्यादि।

**ज्ञानं ज्ञेयं च ज्ञाता च विभक्तानि पृथक् पृथक्॥१३॥**

ततश्च अनुभवेनैव [26]शरीरम् अन्तः शूलाद्यात्मना, बहिश्च[27] [28]मृदुकर्कशाद्यात्मना स्पर्शनेन **ज्ञेयम्**, तज्**ज्ञाता च** रागद्वेषाद्याश्रयभूतो द्रष्टा, **ज्ञानं च** [29]तद्विषयमिति, परस्पर**विभक्तानि** त्रीणि सिद्धानीति व्यतिरिक्तद्रष्टृसिद्धिः॥१३॥

---

[1] ०प्यन्तः स्पर्शन–अ; ०प्यन्तज्वरस्पर्शनेन–ऐ.
[2] 'शूलाद्यात्मना' इत्येतन्नास्ति — ऋ, ॠ.
[3] मृदुकर्कशात्मना — अ, आ; 'मृदुकर्कशाद्यात्मना' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[4] यतो — अ, ई, ऐ.
[5] भोक्तुरन्यो — उ.
[6] रागद्वेषेच्छाश्रय०—अ, ऊ, ऋ.
[7] ०सिद्धौ — ऋ, ॠ.
[8] 'न प्रतिक्षेप्य' इत्यारभ्य '०सिद्धिः' इत्यन्तं नास्ति — अ, ई, उ.
[9] स्पर्शवस्त्वात्मनि — ॠ.
[10] ०विशेषाच्च — अ, ई; ०विरोधश्च — उ.
[11] तस्माद्यदि परमत्र — आ, ऋ, ॠ, ए, ऐ; तस्मादिति परमत्र — उ.
[12] अवस्थि० — ऊ, ऋ, ॠ.
[13] भगवतः — अ, आ, ई, ऊ, ऋ, ॠ.
[14] इति — अ, आ, ई, उ, ए, ऐ.
[15] तद्भूतात्म०—अ, ई, उ.
[16] एवम् — आ.
[17] उद्भूतामात्मनो वर्त्मनि यद् – अ, ई; उद्भूतमात्मनो वर्त्मनि यद् –आ, उ, ऊ; उद्भूतमात्मवर्त्मा यद्–ऋ, ॠ; उद्भूतमात्मवर्त्मन यद् – ए.
[18] अदृष्टस्वभावं — अ, आ, ई; दृष्टस्वभावं — ॠ; द्रष्टुः स्वभावं — ऐ; 'द्रष्टृस्वभावं' इत्यारभ्य '०भ्युपगमेऽपि द्रष्टुः' इत्यन्तं नास्ति –ऋ.
[19] शरीरादिकभोग्या — ऊ, ॠ.
[20] 'एवं च' इत्यारभ्य 'मृदुकर्कशाद्यात्मना' इत्यन्तं नास्ति — ई.
[21] मतङ्ग विद्या० ६. ७ उ०–९ पू० वृत्तौ ; पूर्वं निषिद्ध०—ऋ.
[22] ०भूतोद्भवाद्यभ्युप०—ॠ.
[23] शरीरादेर्व्यतिरेको० — ऊ, ऋ, ॠ.
[24] ०ऽनुभवः सिद्धोऽत्र — अ, आ; ०ऽनुभवेन सिद्धोऽत्र — ऐ.
[25] यथा हि — अ, उ.
[26] शरीराद्यन्तशूला० — उ.
[27] चशब्दो नास्ति — ऊ, ऋ, ॠ.
[28] 'मृदुकर्कशाद्यात्मना' इत्येतन्नास्ति — उ, ऊ, ऋ, ॠ, ऐ; 'मृदु' इत्येतन्नास्ति — ए.
[29] तद्विषयनियतिः परस्पर०—अ; तद्विषयनियति परस्पर० — आ, ई, उ, ए; तद्विषयनियतमति परस्पर० — ऐ.

ननु "हन्त्यात्मानम् आत्मना" इतिवदत्र कल्पितत्वात् ज्ञातृ[1]ज्ञेयभेदस्य, कुतस्ततो व्यतिरिक्तज्ञातृसिद्धिरिति। [2]तदयुक्तम्। [3]यतः — 'ज्ञेयं तावद्' इत्यादि।

**ज्ञेयं तावत्पदार्थानां यादृग्रूपं स्वकं स्वकम्।**
**[4]ज्ञानशक्तेर्यतो ज्ञातुः कर्तुश्चैव न संशयः ॥१४॥**
**प्रत्यक्षमपि शास्त्रेऽस्मिन् व्यपदेष्टुं न शक्यते।**

[5]यत्राप्यभेदः प्रमाणसिद्धः, तत्र युक्तमेव "राहोः शिरः" इतिवद्भेदस्य [6]कल्पितत्वम्। [7]न तु भेदस्य प्रमाणसिद्धत्वे "राज्ञः पुरुषः" इतिवत्। [8]इह च **पदार्थानाम्** [9]अर्थक्रियाकारिणां **तावद्** [10]घटादीनां **यादृग्** [11]परस्परविलक्षणं **रूपं ज्ञेयं** ज्ञातृतो [12]भिन्नं [13]च भवद्भिः [14]प्रत्यक्षमिष्यते; तादृगेव **यतः** [15]शरीरस्य [16]च अन्तः शूलाद्यात्मना, बहिश्च [17]मृदुकर्कशाद्यात्मना [18]स्पर्शनेन ज्ञेयमसंशयं प्रत्यक्षम्। तथा [19]तज्ज्ञातुरपि, सुख[20]दुःखाद्यनुभवात्मनो यादृग्रूपं ज्ञेयाद्विलक्षणमसंशयं [21]**ज्ञानशक्तेः**, **कर्तुश्च**[22] [23]यादृग्रूपं कार्याद्विलक्षणमसंशयं [24]क्रियाशक्तेः तादृगेव[25] यतः प्रत्यक्षम्। [26]अतोऽत्राकल्पित[27]त्वात्तद्भेदस्य [28]युक्तैव ततो व्यतिरिक्तज्ञातृसिद्धिः।

एतेन ज्ञातृज्ञेययो[29]राकारभेदानुपलम्भादिति [30]वक्ष्यमाणशून्यवादसाधनो हेतुः प्रत्यक्षनिराकृतो[31]ऽत्र द्रष्टव्यः।

[32]एवं **प्रत्यक्षमपि** शरीर[33]व्यतिरिक्तस्य ज्ञातुः कर्तुश्च [34]रूपं **शास्त्रेऽस्मिन् व्यपदेष्टुं न शक्यते।**

---

[1] ०ज्ञेयं तस्य — ऊ; ०ज्ञेयतास्य — ॠ, ॠ.
[2] यदयुक्तम् — अ.
[3] 'यतः' इत्यत्र 'तेन' इति दृश्यते — अ.
[4] ज्ञानशक्तिर्यतो० — ऊ, ॠ, ॠ.
[5] यत्र ह्यभेदः — ऊ, ॠ, ॠ.
[6] कल्पितत्वात् — आ, ई, उ, ऊ, ए.
[7] ननु भेदस्य — ॠ.
[8] 'इह च' इत्यत्र 'न च' इति दृश्यते — ऊ, ॠ.
[9] अत्र क्रिया० — ऊ, ॠ.
[10] 'घटादीनां यादृक्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[11] परस्परं विलक्षणरूपं — अ.
[12] भिन्नः — आ, ए.
[13] चशब्दो नास्ति — ऊ, ॠ, ॠ.
[14] प्रत्यक्षयिष्यते — ऊ, ॠ.
[15] शरीरं च — अ, आ, ई, उ, ए, ऐ.
[16] चशब्दो नास्ति — ऊ, ॠ, ॠ.
[17] मृदुकर्कशात्मना — अ, आ, ई, उ; 'मृदुकर्कशाद्यात्मना' इत्येतन्नास्ति — ऊ, ॠ, ॠ, ऐ.
[18] स्पर्शेन — अ, आ, ई, उ, ए, ऐ.
[19] तच्च ज्ञातुरपि — ऊ, ॠ, ॠ.
[20] ०दुःखानुभवाद्यात्मनो — ए.
[21] ज्ञानशक्तिः — ऊ, ॠ, ॠ.
[22] चशब्दो नास्ति — ऊ, ॠ, ॠ.
[23] 'यादृग्रूपं' इत्यारभ्य 'असंशयं' इत्यन्तं नास्ति — ऊ, ॠ, ॠ, ऐ.
[24] क्रियाशक्तिः — ऊ, ॠ, ॠ.
[25] यादृगेव — ऐ.
[26] अतोऽकल्पित० — ऊ, ॠ, ॠ, ऐ.
[27] ०त्वादत्र तद्भेदस्य — ऐ.
[28] युक्त्यैव — ए.
[29] ०राकाराभेदानुपलम्भादिवक्ष्यमाण० — आ.
[30] मतङ्ग० विद्या० ६. १९ उ० – २१ पू० वृत्तौ।
[31] 'अत्र' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[32] 'एवं प्रत्यक्षमपि' इत्यत्र 'तदिदमपि' इति दृश्यते — अ.
[33] ०व्यतिरिक्तः तस्य — ॠ, ॠ.
[34] स्वरूपं — ऊ, ॠ, ॠ.

[1]प्राक्, "[2]विचारयुक्तम्" इत्यादौ शास्त्रप्रार्थनावाक्ये मतङ्गमुनिना विचारात्मनोऽनुमानरूपस्यैव शास्त्रस्य परमेश्वरात्प्रार्थितत्वात्[3] ॥

[4]अतोऽत्राप्यनुमानमेव परार्थं वक्तव्यमिति तदुच्यते — 'भोगैः प्रसाध्यत' इत्यादि।

**भोगैः प्रसाध्यते भोक्ता भोगाश्च [5]विविधा मताः ॥१५॥**

भुज्यन्ते ज्ञायन्ते इति **भोगाः** काय[6]वाग्व्यवहाराः, तैर्विविधैर्हसितगीतनृत्तादिभिः परशरीरे [7]रागी, [8]वीतरागः, स्निग्धो, [9]द्वेषादिधर्मयुक्तो वानुमीयते इति [10]व्यतिरिक्तात्मसिद्धिः। शरीरस्य तु द्रष्टृत्वे [11]प्रत्यक्षमेवैतत्सर्वं स्यादित्युक्तम्[12]। [13]अतश्चार्वाकपक्षोऽत्यन्तायुक्त एवेति ॥१५॥

[14]अस्तु [15]तर्हि शरीरव्यतिरिक्तानामिन्द्रियाणामेव द्रष्टृत्वम्। न तु तद्व्यतिरिक्तस्यान्यस्य[16] [17]अत्यन्तासिद्धेरेवेति[18] [19]इन्द्रियचैतनिकाः। तदप्ययुक्तं यतः — 'अक्षार्थसंगमोत्थम्' इत्यादि।

**[20]अक्षार्थसंगमोत्थं यद्विज्ञानं [21]प्रत्ययात्मकम्।**
**तेनासौ वासितात्मा तु परत्र [22]विनिवेदयेत् ॥१६॥**
**वागिन्द्रियेण स्पष्टेन मनसापूरितेन तु[23]।**
**[24]यः प्रपञ्चोऽनुमानाख्यः सामान्यो व्यवहर्तृषु ॥१७॥**
**तेनानुमीयते ह्यात्मा दृग्दर्पणनिदर्शनात्।**

इन्द्रियार्थसंयोगोत्पन्नं यज्ज्ञानं संवेदनरूपं, **तेनासौ** शरीरव्यतिरिक्तत्वेन तावत्सिद्धः पुमान् आहितवासनोऽभिव्यक्तवासनो वा, **परत्र** पुरुषान्तरे घटमानयेत्यादिवाक्यार्थप्रति[25]भासकेन [26]**मनसा-**

---

[1] मतङ्ग० विद्या० १. २८ उ०.
[2] विचारमित्यादौ — आ, ए.
[3] 'प्रार्थितत्वात्' इत्यत्र 'प्रार्थितः' इति दृश्यते — ऐ.
[4] 'अतः' इत्येतन्नास्ति — ऐ.
[5] विविधाः स्मृताः — ऊ, ऋ, ॠ.
[6] ०वाग्व्यापाराः — अ.
[7] 'रागी' इत्यत्र 'विरागी' इति दृश्यते — आ,
[8] वीतरागस्निग्धो — अ, आ, ई, उ, ए, ऐ.
[9] द्वेषादिभिर्धर्मायुक्तो — अ; द्वेषादिधर्मायुक्तो — आ, ई, उ.
[10] व्यतिरेकात्मसिद्धिः — ऊ, ऋ, ॠ.
[11] प्रत्यक्षमेतत्सर्वं — अ, आ, ई, उ, ए, ऐ.
[12] मतङ्ग० विद्या० ६. ७ उ० – ९ पू० वृत्तौ 'सुखदुःखविवेकित्वं' इत्यस्य विवरणे।
[13] अतश्च पक्षो — अ.
[14] 'अस्तु' इत्यत्र 'अथ' इति दृश्यते — ऐ.
[15] 'तर्हि' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[16] 'अन्यस्य' इत्येतन्नास्ति — ऐ.
[17] 'अत्यन्तासिद्धेरेवेति' इत्यत्र 'अत्यन्तासिद्धिरिति' इति दृश्यते — ऊ, ऋ, ॠ.
[18] इतिशब्दो नास्ति — आ, ई, उ, ए, ऐ; इतिशब्दानन्तरं 'चेत्तदपि न' इत्यधिकम् — अ.
[19] 'इन्द्रियचैतनिकाः' इत्यारभ्य 'पुरुषान्तरे' इत्यन्तं वृत्तिर्न दृश्यते — अ, आ, ई, उ, ए, ऐ.
[20] अक्षश्च संगमोत्थं — ऊ, ऋ; अर्थश्च संगमोत्थं — ॠ; अक्षार्थसंगमार्थं — ऐ.
[21] प्रत्ययात्मकः — ओ.
[22] विनिवेशयेत् — ऐ.
[23] च — ऊ, ऋ, ॠ.
[24] यत्प्रपञ्चो० — ओ.
[25] ०भासमनसा० — आ, ई, उ, ए; ०भासं मनसा० — ऊ, ऋ, ॠ; ०भासेन मनसा० — ऐ.
[26] 'मनसापूरितेनेति' इत्यत्र 'न तेनेति' इति दृश्यते — अ.

**पूरितेनेति** [1]वक्ष्यमाणावधानादिकार्यसिद्धान्तःकरणप्रेरितेन **वागिन्द्रियेण** शब्दात्मना [2]रागद्वेषादिसंभ्रमाव[3]ज्ञानादिकार्यव्यवहारेण दर्शयेदिति [4]शक्यार्थे; [5]नान्यथा [6]स्वाशयः परत्र निवेदयितुं [7]शक्य इत्यर्थः। ततश्च **यः** असौ [8]कायवाग्व्यवहारात्मकः [9]प्रपञ्चयति पराशयमिति **प्रपञ्चोऽनुमानाख्यः** अत्र लिङ्गत्वेनोक्तः सर्व[10]व्यवहर्तृषु सिद्धत्वात् [11]**सामान्यः, तेन** [12]इन्द्रियेभ्योऽप्यन्योऽत्र **आत्मा अनुमीयते**। दृशि दर्शने स्वमुखाद्यवलोकने दर्पण[13]दृष्टान्तादिति।

एतदुक्तं भवति — यानि रूपाद्युप[14]लब्ध्यन्यथानुपपत्त्या [15]चक्षुरादीनि इन्द्रियाणि [16]लोके सिद्धानि, तान्येव यदि भवद्भिश्चेतनानीष्यन्ते। तदयुक्तम्। तेषां दर्पणवत्तत्र करणतयैव सिद्धेश्चैतन्यासंभवात्। [17]यदुक्तं सौगतैरपि[18] —

"[19]परापर[20]प्रार्थनातो [21]विनाशोत्पादबुद्धितः।
इन्द्रियादेः [22]पृथग्भूतमात्मानं वेत्त्ययं जनः॥" इति।

अथ ततोऽन्यानि। स एव आत्मेति [23]नाम्नि विवादः। [24]तन्न [25]इन्द्रियचैतन्यसिद्धिः॥

किं च —

[26]**संहतस्यास्य सर्वस्य** [27]**शयनादेरिवान्वितः॥१८॥**
**भोक्ता संप्रतिपत्तव्यः स** [28]**पुमानत्र कीर्तितः।**

**सर्वस्य अस्य** च चक्षुरादेरिन्द्रियवर्गस्य युष्मन्मते भौतिकत्वेन, अस्मन्मते च त्रैगुण्येन [29]संहत-

---

[1] मतङ्ग० विद्या० १८. ८०–८२ वृत्तौ।
[2] रागद्वेषादि च संभ्रमव० — ऊ, ऋ; रागद्वेषादि च संभ्रम० — ॠ; रागद्वेषादिसंभूताव० — ए, ऐ.
[3] ०ज्ञानादिना कार्य० — ऋ, ॠ.
[4] शक्यार्थं — ऊ, ऋ, ॠ.
[5] 'नान्यथा' इत्यत्र 'यथा' इति दृश्यते — अ.
[6] स्वाशयं — अ, आ, ई, उ, ए; साशयं — ऐ.
[7] शक्यम् — अ, आ, ई, उ, ए, ऐ.
[8] कार्यव्यवहारात्मकः — अ; कायव्यवहारात्मकः — आ.
[9] प्रपञ्चति — ऊ, ऋ, ॠ.
[10] ०व्यवहर्तृसिद्धत्वात् — ऊ, ऋ, ॠ; ०व्यवहर्तृत्वसिद्धत्वात् — ऐ.
[11] 'सामान्यः' इत्यत्र 'अन्यः' इति दृश्यते — अ.
[12] इन्द्रियेभ्योऽन्य आत्मा — ऊ, ऋ, ॠ.
[13] दृष्टान्तोऽभूदिति — अ.
[14] ०लब्धान्यथा० — अ; ०लब्ध्यान्यथा० — आ, ई, उ.
[15] चक्षुरादीन्द्रियाणि — अ, आ, ई, उ, ए, ऐ.
[16] लोकसिद्धानि — ऊ, ॠ.
[17] तदुक्तं — ऊ, ऋ, ॠ.
[18] प्रमाणवार्तिके — २. २४८ उ०—२४९ पू०.
[19] परस्पर० — ऐ.
[20] ०प्रार्थनतो — अ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[21] विनाशोत्पत्तिबुद्धितः — प्रमाणवार्तिकपाठः।
[22] 'पृथग्भूतं' इत्यारभ्य उत्तरत्र १९ उ०, २०, २१ पू० मतङ्गवृत्तावुद्धृतेषु प्रमाणवार्तिकश्लोकेषु 'भिन्नाभः' इत्यन्तं नास्ति 'ऐ' कोशे। १८ उ०, १९ पू० मूलश्लोकः परं दृश्यते।
[23] नास्मिन् — अ.
[24] 'तन्न' इत्यत्र 'तेन' इति दृश्यते — अ, आ, ई, उ, ए; 'तत्र' इति दृश्यते — ॠ.
[25] 'इन्द्रियचैतन्यसिद्धिः' इत्यारभ्य 'चक्षुरादेः' इत्यन्तं वृत्तिर्नास्ति — अ, आ, ई, उ, ए.
[26] संहतस्याप्यशेषस्य — मु, उ, ऐ, ओ.
[27] शयनादेर्विपश्चिता — मु उ, ओ; शयनादेर्वपश्चिमाः — ऐ.
[28] पुमांस्तत्र — मु, उ, ऐ, ओ.
[29] संहतत्वाच्च धनादेरिव — अ.

त्वात् **शयनादेरिव** अन्यो **भोक्ता** [1]प्रतिपत्तव्यः। [2]यो यः संहतः स[3] स [4]भोक्त्रर्थः, यथा [5]शयनादिः। संहतश्च[6] चक्षुरादीन्द्रियवर्गः। [7]अतस्तस्यापि भोक्त्रा भवितव्यमिति इन्द्रियव्यतिरिक्तभोक्तृ[8]सिद्धिः॥

मतङ्ग उवाच —

**केचिद्विज्ञानमात्रस्य सन्तानस्य महाधियः ॥१९॥**
**अव्युच्छिन्नप्रवाहस्य हीयमानस्य सर्वदा।**
**नात्मन्यवस्थितस्यास्य वस्तुशून्यस्य युक्तितः ॥२०॥**
**योऽवस्थितः सदा द्रष्टा स कथं गम्यते [9]विभो।**

**केचिद्विज्ञानमात्रस्येति**। "ननु [10]यो यः संहतः, सः संहतभोक्त्रर्थ एव, यथा [11]शयनादिः शरीरार्थः। संहतश्च इन्द्रियवर्गः इति तेनापि [12]संहतभोक्त्रर्थेन भवितव्यमिति [13]प्राग् अक्षार्थसंगमोत्थत्वेन भवद्भिरभ्युपगतस्य [14]संवेदनात्मनो ज्ञानस्य क्रमेण नीलपीतादिपरिच्छेदरूपत्वेन सन्तानात्मतया[15] [16]वक्ष्यमाणस्य संहतस्यैव [17]**युक्तितः** अनेनानुमानेन द्रष्टृत्वं गम्यते। ततश्च **यो** ज्ञानस्यास्य द्रष्टा सर्वदा **अवस्थितो** नित्यत्वात् [18]क्रमेणासंहतः **सः** आत्मा **कथं** [19]**गम्यते** नैवेति धर्मिस्वरूपविपरीतसाधनोऽयं विरुद्ध" इति केचित् सौगता एव अन्तःकरणचैतनिकत्वेनात्र प्रसङ्गतो मतङ्गमुनिना पूर्वपक्षभूमिकायामुपक्षिप्ताः।

अत्र चात्मविचारप्रस्तावे[20] [21]नैरात्म्यवादितयैव [22]सौगताः पूर्वपक्षीकृताः। न [23]तु [24]शून्यवादितया तस्यात्राप्रयोजकत्वात्। बाह्यार्थवादिभिरपि वैभाषिक[25]सौत्रान्तिकैः आत्मनः प्रतिक्षेपात्, अर्थशून्यतयैव[26] [27]माध्यमिकैः, [28]महायानिकादिभिः "आत्मैवेदं सर्वम्" इति साधनात्, लोकायतप्रसङ्ग एव प्रायशो निरस्तत्वाच्चेति केवलमत्यन्तकुदृष्टित्वादयं पक्षो युक्ति[29]परिक्षयेणापि [30]प्रतिक्षेप्य इति मतङ्गमुनिनात्र[31] प्रसङ्गात्पूर्वपक्षीकृतो यथा तथा [32]दर्शयिष्यामः।

---

[1] प्रतिवक्तव्यः — ए.
[2] योऽयं — अ, ऊ, ऋ, ॠ.
[3] 'स' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[4] भोक्त्रन्वितः — ऊ, ऋ, ॠ.
[5] शयनादि। — ऊ, ऋ, ॠ.
[6] चशब्दो नास्ति — आ, ए.
[7] ततस्तस्यापि — ऊ, ऋ, ॠ.
[8] ०सिद्धेः — अ.
[9] प्रभो — ऊ, ऋ, ॠ.
[10] योऽयं — अ.
[11] शयनादिशरीरार्थः — अ, आ, ऊ, ए.
[12] संहत० — ऋ, ॠ.
[13] मतङ्ग० विद्या० ६. १६–१८ पू० वृत्तौ।
[14] संवेदात्मनो — आ.
[15] सन्तानात्मना — ऊ, ऋ, ॠ.
[16] अत्रैव वृत्तौ 'सन्तानस्य' इति पदविवरणे।
[17] युक्तिस्तेनानुमानेन — ऊ, ऋ, ॠ.
[18] क्रमेणाप्यसंहतः — ऊ, ऋ, ॠ.
[19] अत्र 'स' इत्यधिकम् — अ.
[20] ०प्रस्तावात् — ऊ, ऋ, ॠ.
[21] नैरात्मवादि० — अ.
[22] संहताः — ए.
[23] तुशब्दो नास्ति — ऋ, ॠ.
[24] शून्यत्वादि तथा — ॠ.
[25] सूत्रान्तिकैः — अ, आ.
[26] अत्र चशब्दोऽधिकः — ऋ, ॠ.
[27] मायावेदान्तवादिभिः आत्मैवेदं — ऋ, ॠ.
[28] महामायानिकादिभिः आत्मैवेदं—आ, ई, उ, ए.
[29] परिक्षयेनापि — ॠ.
[30] प्रतिक्षेप्यत इति — अ, आ, ई, उ, ए.
[31] 'अत्र' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ए.
[32] मतङ्ग० विद्या० २१ उ० वृत्तौ।

ततश्च[1] व्याख्यातॄणामत्र प्रथममेव तदुपन्यासः, [2]सौगतदर्शनभेदोपन्यासश्च अज्ञत्वमेव प्रकटयति। वैभाषिकसौत्रान्तिकमहायानिकमाध्यमिकानां [3]हि चतुर्णामपि बौद्धानामत्र [4]नैरात्म्यदृष्टौ [5]अविवादः। ते च सर्वे एव प्रागुक्तज्ञानव्यतिरेकेण नान्यः कश्चिद् आत्माभिधानोऽर्थो विद्यत इत्याहुः। ज्ञान[6]व्यतिरेकेण तस्योपलब्धिलक्षणप्राप्तस्य अनुपलब्धेः। अप्रत्यक्षासंवित्प्रत्यक्षो बुद्धिविवर्तो ज्ञानात्मक इति चेन्न[7]। प्रत्यक्षो [8]हि विषयोपलम्भः [9]तदप्रत्यक्षत्वमन्यप्रत्यक्षवत्। [10]सर्वाप्रत्यक्षत्वप्रसङ्गात्। [11]न हि [12]विषयोऽस्तीति विषयोपलम्भः प्राप्तः। तत्र च प्रत्यक्षे[13] विषयोपलम्भे असमाप्तौ व्यवहार इत्यपार्थक[14]मपरं चैतन्यम्। [15]तच्चैकमेवेदं संविद्रूपं हर्षविषादाद्यनेका[16]कारविवर्तं पश्यामः। तत्र यथेष्टं संज्ञाः क्रियन्तामिति नान्या बुद्धिः, अन्योऽनुभव[17] इति।

"[18]संसर्गादविभागश्चेदयोगोलकवह्निवत्।
भेदाभेद[19]व्यवस्थेयमुत्सन्ना सर्ववस्तुषु॥
अभिन्नवेदनस्यैक्ये [20]यन्नैवं तद्विभेदवत्।
सिद्धचेदसाधनत्वेऽस्य न सिद्धं भेदसाधनम्॥
[21]भिन्नाभः [22]सर्वदुःखादिरभिन्ने[23] बुद्धिवेदने।
[24]अभिन्नाभे विभिन्ने चेद्भेदाभेदौ [25]किमाश्रयौ॥" इति।

[26]उभयवादिसिद्धबौद्ध[27]विज्ञानमात्रव्यतिरेकेण आत्मनो[28]ऽन्यस्यासिद्धे[29]र्निरात्मकाभाव इत्यनाद्य-

---

[1] तत्र तु — ऊ, ॠ, ॠ.
[2] सौगतमतभेदो॰ — ऊ, ॠ, ॠ.
[3] हिशब्दो नास्ति — आ.
[4] नैरात्मदृष्टौ — अ; नैरात्म्यदृष्टया — ए.
[5] अविसंवादः — अ; अविवादात् — ऊ, ॠ, ॠ.
[6] ॰व्यतिरेकश्च तस्योपलब्धिलक्षणोऽप्राप्तस्य — ऊ, ॠ, ॠ.
[7] 'न' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[8] 'हि' शब्दो नास्ति — आ, ई, उ, ऊ, ॠ, ॠ, ए.
[9] तदप्रत्यक्षत्वान्य॰ — अ; तदप्रत्यक्षं त्वन्य॰ — आ, ई, उ; तदप्रत्यक्षत्वेऽन्य॰ — ऊ, ॠ, ॠ.
[10] अत्र 'सर्वाप्रत्यक्षवत्' इत्यधिकम् — आ, ई, उ, ए.
[11] 'न हि' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[12] विषयोपभोगः प्राप्तः — ऊ, ॠ, ॠ.
[13] अत्र अपिशब्दोऽधिकः — आ, ई, उ, ए.
[14] ॰मपरचैतन्यम् — ॠ, ॠ.
[15] तच्चैतन्यमेवेदं — अ.
[16] ॰कारविवर्तव्यं पश्यामः — अ, आ; ॰कारं विवर्तं — ई, उ, ए.
[17] 'अनुभव इति' इत्यत्र 'अनुभवति' इति दृश्यते — अ. ऊ.
[18] प्रमाणवार्तिके ३, २७८–२८०.
[19] ॰व्यवस्थेयमुत्सर्ग ... सर्व॰ — अ; ॰व्यवस्थेव प्रच्छन्ना सर्व — ऊ; ॰व्यवस्थैव प्रच्छन्ना प्रच्छन्ना सर्व — ॠ, ॠ; ॰व्यस्थैवमुत्सन्ना — प्रमाणवार्तिकपाठः; ॰व्यवस्थैवमुच्छिन्ना — प्रमाणवार्तिकपाठान्तरम्।
[20] यन्नैव तद्विभेदवत् — अ; यन्नैव तदभेदवत् — ऊ, ॠ; यत्रैव तदभेदवत् — ॠ.
[21] भिन्नार्हं सर्व॰ — अ; भिन्नार्हस्सर्व॰ — आ, ई, उ, ए.
[22] सन्निदुःखाति॰ — ऊ, ॠ; सितदुःखादि॰ — प्रमाणवार्तिकपाठः।
[23] ॰रभिन्नो — प्रमाणवार्तिकपाठः।
[24] अभिन्नार्हे — अ, आ, ई, उ, ए, ऐ.
[25] क्रियाश्रयौ — अ, आ, ई, उ, ऊ, ए, ऐ.
[26] उभयथादि॰ — ऊ.
[27] विज्ञानव्यतिरेकेण — ऐ.
[28] ॰ऽन्यथासिद्धेर्निरात्मकाभाव — अ; ॰ऽन्यस्यासिद्धकर्तुरात्मकाभाव — ए.
[29] ॰र्निरात्मका इत्यनाद्य॰ — आ.

विद्या[1]त्मिकेयं [2]दृष्टिः संसारहेतुत्वान्नैरात्म्यभावनाभ्यासक्रमेण मुमुक्षुभिः परिहार्येत्युक्तम्[3] —
"[4]तस्मादनादिसन्तानतुल्यजातीयबीजिकाम् ।
उत्खात[5]मूलां कुरुत सत्त्व[6]दृष्टिं मुमुक्षवः ॥" इति ।

ननु तदेव [7]ज्ञानं सवितृवत् [8]प्रकाश्योपाधिभेदेऽपि अभिन्नमवभासमानं [9]चार्वाक[10]निराकरण [11]एव चोत्पत्तिनिषेधान्नित्यत्वेन [12]सिद्ध आत्मा भविष्यतीति ।

तदयुक्तम् — **सन्तानस्य** [13]अस्य अनित्यज्ञानप्रवाहस्य सिद्धेः । नित्यत्वे[14]ऽपि [15]प्रत्यर्थं नियमाभावाद् "नीलस्येयं संविद् न पीतस्य" इति विषयभेदव्यवस्थानुपपत्तिः । तदुक्तम्[16] —
"[17]नित्यं प्रमाणं नैवास्ति [18]प्रामाण्याद्वस्तुसंगतेः ।
[19]ज्ञेयानित्यतया तस्या [20]अध्रौव्यात्क्रमजन्मनः ॥" इति ।

नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधाच्च । नित्यस्य हि अनाधेयातिशयत्वेन [21]सह[22]कार्यपेक्षायोगात्, तदपेक्षत्वे चाधेयातिशयत्वेन नित्यत्वायोगाद् [23]न क्रमेण ज्ञानाद्यर्थक्रिया उपपद्यते । नापि युगपददर्शनादिति, [24]ज्ञानस्यास्य प्रत्यर्थं भेदे सत्यनित्यत्वात् [25]सन्तानात्मन एव [26]सिद्धिरिति नैरात्म्यम् । नित्यस्यैव ग्राहकस्यात्मत्वादिति ।

ननु यथाभूतज्ञानकारणत्वेन [27]आत्मानुमीयते इति नैयायिकवैशेषिकाः । तदयुक्तम् — [28]यतः महती [29]चासौ कारणत्वेन धीश्च विज्ञानं [30]तस्याः **महाधियः** समनन्तरप्रत्ययभूताद् विज्ञानादेव पूर्व-

---

[1] ०त्मिकोऽयमात्मदृष्टिः — ऊ, ऋ, ॠ.
[2] दृष्टिसंहार० — अ.
[3] प्रमाणवार्तिके २. २५७उ०, २५८ पू०.
[4] तस्मादादिमसन्तान० — आ, ई, उ, ए, ऐ.
[5] ०मूलाङ्कुरितः सत्त्व० — अ; ०मूलाङ्कुरितसत्त्व० — ई, उ, ए.
[6] दृष्टिमुमुक्षवः — आ, ई, उ, ऋ, ए; दृष्टिर्मुमुक्षवः — ऐ.
[7] ज्ञानं पितृवत् — अ; ज्ञानं संवितृवत् — आ, ई, उ; ज्ञानसवितृवत् — ऐ.
[8] प्रसादाद्युपाधि०—अ; प्रासादाद्युपाधि०—ए.
[9] मतङ्ग० विद्या० ६. ७ उ०–९ पू० वृत्तौ; चार्वाकानिराकरण एव — ऊ, ऋ, ॠ.
[10] ०निराकरणम् एवं चोत्पत्ति० — अ; ०निराकरण एवं चोत्पत्ति० — ए.
[11] एवोत्पत्ति० — ई, उ.
[12] सिद्धमात्मानं भविष्य० — अ; सिद्धात्मा भविष्य० — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[13] अस्यानित्याज्ञान० — अ, ऊ, ऋ, ॠ; अस्य नित्यज्ञान० — आ, ए, ऐ.
[14] 'अपि' इत्यत्र हिशब्दो दृश्यते —ऊ, ऋ, ॠ.
[15] प्रत्यक्षं नियमाभावाद् — अ; प्रत्यर्थं भेदाभावाद् — ऊ, ऋ, ॠ; प्रत्यर्थनियमाभावाद् — ए; प्रत्यर्थ नियमभावाद् — ऐ.
[16] प्रमाणवार्तिके २.८.
[17] नित्यप्रमाणं — ॠ.
[18] प्रामाण्याद्वचस्तसंगतेः — अ.
[19] ज्ञेयोऽनित्यतया तस्या — अ; ज्ञेयानित्यतया यस्या — आ; ज्ञेयादनित्यता तस्यां — ऊ; ज्ञेया च नित्यता तस्या — ऋ, ॠ.
[20] आद्रव्यात् — अ; आध्रौव्यात् — आ, ई, उ, ए; आस्त्रव्यात् — ऐ.
[21] 'सहकार्यपेक्षायोगात् तदपेक्षत्वे' इत्यत्र 'सहकार्यपेक्षत्वे' इति दृश्यते — अ.
[22] ०कार्यापेक्षायोगात् — ऊ, ऋ, ॠ.
[23] नित्यक्रमे ज्ञानाद्यर्थं० — ऊ, ऋ, ॠ.
[24] 'ज्ञानस्यास्य प्रत्यर्थं' इत्येतन्नास्ति — अ.
[25] सन्तानात्मैव — अ; सन्तानात्मतयैव — आ; सन्तानात्मतैव — ई, उ, ए, ऐ.
[26] सिद्ध्येदिति — अ, आ, ई, उ, ए, ऐ.
[27] आत्मानुभूयते — अ.
[28] 'यतः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[29] 'चासौ' इत्यस्य स्थाने 'चास्य' इति दृश्यते —अ, आ, ई, उ, ए; 'भावस्य' इति दृश्यते—ऐ.
[30] तस्य — ऊ, ऋ, ॠ.

मुपलभ्यमानात् तस्योत्पत्तिसिद्धेः, न कारणान्तर[1]मात्माख्यमनुमातुं युक्तमित्युक्तम्[2] —

> "यस्मिन् सति भवत्येव यत्ततोऽन्यस्य कल्पने ।
> तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥" इति ।

ननु [3]सुषुप्त्याद्यवस्था[4]स्वर्थानुभवात्मनो [5]ज्ञानसंतान[6]स्यार्थानुभवाभावेन विच्छेदसिद्धेः, आत्मानभ्युपगमे पुनः प्रबोधानुपपत्तितो मरणप्रसङ्ग इत्यवश्यमात्मा अभ्युपगन्तव्यः ।

तदप्ययुक्तम् । यतः — [7]**अव्युच्छिन्नप्रवाहस्य** [8]तस्य [9]तदानीमप्यान्तरदेहस्पर्शविशेषमात्रविषयत्वेन भावात्[10] । यदुक्तम्[11] —

> "रागादिवृद्धिः पुष्ट्यादेः कदाचित्सुखदुःखजा ।
> तयोश्च धातुसाम्यादे[12]रन्तरर्थस्य संनिधेः ॥
> एतेन संनिपातादेः स्मृति[13]भ्रंशादयो गताः ।
> विकारयति [14]धीरेव ह्यन्तरर्थविशेषजा ॥" इति ।

अत एव "सुखमहमस्वाप्सम्" इत्यादिस्तदुत्तरकाल[15]भाविपरामर्शप्रत्ययोऽपि उपपन्न एवेति नात्मसिद्धिः ।

[16]स्यादेतत् । नित्यप्रवाहात्मकमपि [17]ज्ञानं यावन्तं कालमेकविषयं तावन्तमेक एव [18]आत्मा स्यात् । पुनश्चात्मान्तरोत्पत्तिः [इति] स्थिरस्यैव [19]ज्ञानस्यात्मत्वं स्यादिति ।

[20]तदप्ययुक्तम् — **हीयमानस्य सर्वदा** अस्य सिद्धेः । अनित्यत्वे हि अनेन तदानीमपि तत्स्वभावत्वादेव [21]नष्टव्यम्, न विनाशहेतोः । अतत्स्वभावे तस्मिन् [22]तस्यासामर्थ्याद्वैयर्थ्याच्च । [23]स च स्वभावः तस्य प्रागप्यस्तीति [24]प्रतिक्षणनाशात् तथाभूतस्यापि आत्मनोऽभाव इति । यदुक्तम्[25]—

---

[1] ०मात्मानमनुमातुं — ऋ, ॠ.

[2] प्रमाणवार्तिकस्थः २. २५ तम श्लोकः, अत्रत्यश्लोकसदृशो दृश्यते । यथा — येषु सत्सु भवत्येव यत्तेभ्योऽन्यस्य कल्पने । तद्धेतुत्वेन हेतूनां सर्वेषामनवस्थिति. ॥

[3] सुषुप्ताद्यवस्था० — ऋ, ॠ, ऐ.

[4] ०स्वार्थानुभवात्मनो — अ, आ, ई, उ, ऋ, ए; स्वात्मानुभवात्मनो — ऐ.

[5] ज्ञानस्य संतान० — अ, आ, ई, उ, ए; ज्ञानस्यासन्तान० — ऐ.

[6] ०स्यार्थस्यानुभवाभावेन — आ; ०स्यार्थानुभावभावेन — ऊ, ऋ, ॠ; ०स्यानुभवाभावेन —ऐ.

[7] अविच्छिन्न० —अ.

[8] 'तस्य' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[9] तदानीमान्तर० — आ; तदानीमप्यन्तर०— ऋ, ॠ.

[10] ०विषयत्वे भावात् — ऊ, ऋ, ॠ; ०विषयत्वेनाभावात् — ऐ.

[11] प्रमाणवार्तिके — २.७६, ७७.

[12] ०रन्तरार्थस्य — ऐ.

[13] ०भ्रंशादयोगतः — ऊ, ऋ, ॠ.

[14] धीरेवाभ्यन्त० — प्रमाणवार्तिकपाठः ।

[15] ०भावी परामर्श० — ऋ, ॠ.

[16] स्यादेतदनित्य० — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.

[17] 'ज्ञानम्' इत्यत्र 'तज्ज्ञानम्' इति दृश्यते — ऊ, ऋ, ॠ.

[18] आत्मत्वं स्यात् — ऐ.

[19] ज्ञानान्तरस्यात्मत्वादिति — ऊ, ऋ, ॠ.

[20] 'तदप्ययुक्तम्' इत्यारभ्य 'तदानीमपि' इत्यन्तं नास्ति — ॠ.

[21] न द्रष्टव्यम् — ऋ, ॠ.

[22] तस्य सामर्थ्या० — अ; तस्याः सामर्थ्या० — आ; तस्यासामर्थ्याच्च । — ऐ.

[23] 'स च' इत्यत्र 'तस्य' इति दृश्यते — अ.

[24] प्रतिक्षणं नाशात् — ऊ, ऋ, ॠ.

[25] आकरो न लभ्यते ।

"अहेतुत्वाद्विनाशस्य [1]स्वभावादनुबन्धिता ।
सापेक्षाणां हि [2]धर्माणां नावश्यं[3]भावितेष्यते ॥
असामर्थ्याच्च तद्धेतोर्भवत्येव[4] स्वभावतः ।
यत्र नाम भवत्यस्मा[5]दन्यत्रापि [6]समानतः" ॥ इति ।

ननु ज्ञानस्योत्पत्तिमत्त्वे सति नियमेन अचाक्षुषप्रत्यक्षत्वतो रसादिवद् गुणत्वाद्, [7]अयावद्द्रव्यभावित्वेन च शरीरादि[8]गुणत्वासिद्धेः, अवश्यं गुणिना भवितव्यमिति[9], [10]अत्र च [11]गुणितयावस्थितस्तत्र आत्मेति नैयायिकाः ।

तदयुक्तम् । यतः — [12]**नात्मन्यवस्थितस्य** [13]**अस्येति** । नकारो निषेधे । अयमर्थः — यदि रसादीनां गुणत्वमस्माकं सिद्धं स्यात्, ततस्तेषां [14]धर्मिणीव, अन्य आत्मन्यवस्थानं[15] सिद्धचेत् । [16]तेषां तु अचाक्षुषप्रत्यक्षत्वेऽपि [17]गुणत्वासिद्धेः, नात्मन्यवस्थानं[18] ज्ञान[19]स्योपपद्यते । [20]तदसिद्धिश्च रूपरसादिव्यतिरेकेण [21]गुणिनोऽन्यस्यानुपलब्धेः ।

कथं [22]तर्हि अमृतरसः इति व्यवहारः । कुतर्कप्रसिद्धिमूलो भ्रान्त एव । यदि वा विशिष्टसमुदायैकदेशप्रतिपादनार्थो "[23]वनस्य धवः शोभनः" इतिवद्युक्त एवेति नातोऽप्यात्मसिद्धिः ।

ननु "नीलमहं वेद्मि" इत्येतत्परामर्शबलाद् अनेन [24]इन्द्रियार्थोत्पन्नेन नीलादिवस्तुवद् आत्मापि संवेद्यते इति जैमिनीयभेदाः ।

तदयुक्तम् । यतो वस्तुना बाह्येनार्थेन शून्यस्यास्य ज्ञानस्य सिद्धेः । [25]अयमर्थः — न परामर्शमात्रादेव [26]संवेदनव्यवस्था । "वृक्षाणां [27]वनं, माषाणां[28] राशिः" इत्यादावपि वृक्षमाषादि[29]व्यतिरिक्तस्य वन[30]राश्यादे[31]रर्थस्य संवेद्यताप्रसङ्गात् । अपि तु संवेद्यत्वादेव । न च ज्ञानव्यतिरिक्तमन्यद्वस्तु संवेद्यते । अर्थज्ञानयोराकारभेदानुपलम्भादित्युक्तम्[32] —

---

[1] स्वभावानुपलब्धिता — ऐ.
[2] सर्वेषां — अ.
[3] ०भावितेक्ष्यते — ऊ, ऋ, ॠ; ०भाविनेष्यते — ए.
[4] ०र्भवत्येष — आ, ई, उ, ए, ऐ.
[5] ०दन्यस्यापि — अ.
[6] स्वभावतः — ॠ; समानता — ए, ऐ.
[7] आयावद्द्रव्य० — ऊ, ऋ, ॠ.
[8] गुणित्वा० — अ, आ, ई, उ, ए.
[9] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[10] यत्र — ऊ, ऋ.
[11] गुणतयावस्थितं तत् स आत्मेति — ऊ, ऋ, ॠ.
[12] आत्मन्यव० — अ; नात्मव्यव० — ऊ, ऋ, ॠ.
[13] 'अस्य' इत्येतन्नास्ति — अ, आ, ई, उ.
[14] धर्मीव — अ; धर्मिणि वा — ए.
[15] अत्र नशब्दोऽधिकः — ऊ, ऋ, ॠ.
[16] तेषां चक्षुष० — ॠ; तेषां तु चाक्षुष० — ऐ.
[17] गुणत्वासिद्धेनात्मन्यव० — ऊ, ऋ, ऐ.
[18] अत्र 'अस्य' इत्यधिकम् — ऊ, ऋ, ॠ.
[19] ०स्योत्पद्यते — आ.
[20] तदसिद्धश्च — अ, आ, ई, उ, ऐ.
[21] गुणिनोऽस्यानु० — ऊ, ऋ, ॠ.
[22] तर्ह्याश्रयस्य न स इति — ऊ, ऋ, ॠ.
[23] नववनस्य — ऐ.
[24] इन्द्रियार्थादुत्पन्नेन — अ, आ, ई, उ, ए, ऐ.
[25] 'अयमर्थः' इत्येतन्नास्ति — ऐ.
[26] संवेदनस्य व्यवस्था — आ.
[27] 'वनं माषाणां' इत्येतन्नास्ति — अ; 'वनं' इत्येतन्नास्ति — आ.
[28] अत्र चशब्दोऽधिकः — ऊ.
[29] व्यतिरिक्तवन० — अ.
[30] ०राश्यादेरित्यर्थस्य — अ, आ.
[31] ०रर्थसंवेद्यता० — ऊ, ऋ, ॠ, ऐ.
[32] प्रमाणवार्तिके ३. ३५४ .

"[1]अविभागोऽपि [2]बुद्धयात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥" इति।

ज्ञानाद्व्यतिरिक्तस्य चार्थस्य [3]संबन्धाभावेन ज्ञातुमशक्यत्वात्। यदाहुः[4] —

"नान्योऽनु[5]भाव्यो बुद्धयास्ति तस्या नानुभवोऽपरः।
[6]ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते॥" इति।

बाह्यवस्तु[7]शून्यस्य नीलादेर्ज्ञानरूपस्यैव सिद्धे[8]रर्थवद् आत्मापि अविषयः इति सोऽयं शून्यवादः प्रासङ्गिकोऽत्रेति [9]प्रदर्शितः। कथं तर्हि "नीलमहं वेद्मि" इत्यात्मव्यवहारः। अत एव अनाद्यविद्यानिर्मितो मिथ्यैव। यदाहुः[10] —

"मिथ्याध्यारोपहानार्थं[11] [12]यत्नोऽसत्यपि मोक्तरि।" इति।

[13]तदेवंभूतस्य ज्ञानस्य योऽवस्थितो नित्यो **द्रष्टा स कथं गम्यते**। प्रत्यक्षानु[14]मानाभ्यामसिद्धेः, बाधितत्वाच्च, आगमेनाप्यसिद्धेः नैव गम्यते इति पूर्वपक्षः॥

सिद्धान्तस्तु — 'शून्यं तावद्' इत्यादि।

**परमेश्वर उवाच —**

**शून्यं तावत्प्रमाणत्वान्न कदाचिद्भवेज्जगत् ॥२१॥**

अत्र [15]च [16]नैरात्म्यदर्शनस्य बुद्धितत्त्व[17]प्राप्तिफलत्वेन **बुद्धितत्त्वप्रकरणे** [18]वक्ष्यमाणत्वाद्, न तथा कुदृष्टित्वं यथा शून्यवादस्येति, प्रथमं तावत् स [19]एव तिरस्क्रियते[20]। तथा हि — [21]**जगद्** जन्मवज्जन्तुचक्रं विज्ञानात्मकं यदत्र [22]शून्यवादिनोपक्षिप्तं [23]**तद् न शून्यं भवेत्**; न **कदाचिद्** निर्विषयं संभाव्यते इत्यर्थः। कुतः **प्रमाणत्वादिति**। अवश्यं ह्यनेन सर्वमेतज्ज्ञानात्मकं [24]जगत् शून्यं [25]व्यवस्थापयता किंचिदेतद्व्यवस्थापकं प्रत्यक्षानुमानात्मकं जगदेव प्रमाणीकर्तव्यम्। प्रमाणं विना

---

[1] अविभक्तोऽपि — ऊ, ॠ.
[2] बुद्धयात्मविपर्या० — प्रमाणवार्तिकपाठः।
[3] संबाधाभावेन — अ, आ, ई, उ, ऊ, ए, ऐ.
[4] प्रमाणवार्तिके ३. ३२८.
[5] ०भाव्यस्तेनास्ति तस्य नानु० — प्रमाणवार्तिकपाठः।
[6] तस्यापि तुल्यचोद्यत्वात् — प्रमाणवार्तिकपाठ:
[7] ०शून्यस्यास्य नीलादिज्ञान० — ऊ, ॠ, ॠ.
[8] ०रर्थवादात्मापि अविशेष इति — ए; ०रादावप्यात्मान्यविषय इति — ऐ.
[9] दर्शितम् — ऊ., ॠ.
[10] प्रमाणवार्तिके — २. १९३ उ०.
[11] मिथ्याध्यारोपणार्थं वो — अ, आ, ई, उ, ए, ऐ.
[12] यत्ने सत्यपि —अ, आ.
[13] तदेवमेवंभूतस्य — ऊ, ॠ, ॠ.
[14] ०मानासिद्धो बाधित० — अ.
[15] चशब्दो नास्ति — ॠ.
[16] नैरात्मदर्श० — अ.
[17] 'प्राप्ति' इत्येतन्नास्ति — ए.
[18] मतङ्ग० विद्या० १७. ५८, ५९ पू० वृत्तौ।
[19] एष — आ, ई, उ, ए, ऐ.
[20] अत्र इतिशब्दोऽधिकः — आ.
[21] जगज्जन्तुचक्रं — आ.
[22] 'शून्य' इत्येतन्नास्ति — आ.
[23] 'तद् न' इत्यत्र 'तत्र' इति दृश्यते — ॠ; 'तद्' इत्येतन्नास्ति — ऐ.
[24] 'जगत्' इत्यारभ्य 'प्रत्यक्षानुमानात्मकं' इत्यन्तं नास्ति — ऊ, ॠ, ॠ.
[25] 'व्यवस्थापयता किंचिदेतत्' इत्येतन्नास्ति — अ.

[1]तस्याः शून्यत्वव्यवस्थाया एवानुपपत्तेः। व्यवस्थान्तरस्यापि संभवात्। ततः प्रमाणत्वादेव तेन व्यवस्थापकेन जगता तद्व्यव[2]स्थाप्यं जगद् विपर्याकर्तव्यम्। अविपर्यीकृतस्य व्यवस्थापयितुमशक्तेः, रथ्या[3]पुरुषेणेव सुगतज्ञानस्येति। तद्विपर्यीकरणाच्च न [4]तस्य जगतः शून्यता। नाप्यर्थज्ञानयोराकारभेदानुपलम्भः। व्यवस्थाप्यव्यवस्थापकयोर्भेदेनैवोपलम्भात्। अन्यथा व्यवस्थायोगात्। नापि व्यतिरिक्तस्य प्रकाशानुपपत्तिः, सहोपलम्भनियमादिभि[5]रभेदो वा। तेषामपि जगद्व्यवस्थापकत्वेनोक्तत्वाद् न स्वात्म[6]व्यवस्थापकत्वेन तथा[7]वृत्तेरात्मनि विरोधादित्युक्तम्[8]। अतो न निर्विषयता इत्येवं, घटादीनामपि[9] विषयीकरणसंभवात् [10]किं [11]कृतं शून्यवादेनेति।

ननु तदपि शून्यताव्यवस्थापकं ज्ञानं परमार्थतो निर्विषयत्वात् शून्यमेव। यदाहुः[12] —

"[13]संव्यावहारिक[14]स्यैव तत्प्रमाणस्य लक्षणम्।" इति[15]॥

यद्येवम् — 'नाप्रमाणाद्' इत्यादि।

**नाप्रमाणात् प्रपत्तव्यं कल्पना विद्यते सतः।**

[16]वस्तुतो[17] न विषयीकृतं न तत्तस्माद्विशिष्टं प्रत्येतव्यं रथ्यापुरुषज्ञानादिव सुगतज्ञानम्। [18]विषयीकृतं च [19]तच्छून्यताव्यवस्थापकेन [20]ज्ञानेन न वस्तुत इति, न [21]तत् शून्यं प्रतिपत्तव्यम्। [22]न संवृत्त्या च प्रमाणत्वस्य विरुद्धत्वम्। [23]अर्थ एव [24]संव्यवहारदर्शनादिति शून्य[25]वादासिद्धेः। **कल्पना विद्यते सतः** [26]एव ज्ञानविषयस्य बाह्यस्य घटादे[27]रर्थक्रियाकारित्वेन अनुभवसिद्धत्वाद्,

---

[1] तस्य शून्यत्व० — ऊ, ऋ, ॠ, ए; तस्याशून्यत्व० — ऐ.
[2] ०स्थाप्य जगद् — ऐ.
[3] पुरुषेणैव — अ, आ, ई, उ, ऐ.
[4] 'तस्य' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[5] ०रनेकदा वा — ए; ०रभेदेन वा — ऐ.
[6] 'व्यवस्थापकत्वेन' इत्यत्र 'व्यवस्थितिः' इति दृश्यते — अ.
[7] ०वृत्तेनात्मनि विरोधाद् — आ; ०वृत्तेरात्मविरोधाद् — ऊ, ऋ, ॠ; ०प्रवृत्तेरात्मनिरोधाद् — ऐ.
[8] मतङ्ग० विद्या० ६. १० — १५ पू० वृत्तौ।
[9] अपिशब्दो नास्ति — अ, आ, ई, उ.
[10] किंशब्दो नास्ति — ऊ, ऋ, ॠ.
[11] 'कृतं' इत्येतन्नास्ति — ऐ.
[12] आकरो न लभ्यते।
[13] सांव्यवहारिक० — आ, ई, उ, ए; संव्यवहारिक० — ऊ, ऋ, ॠ; सा व्यावहारिक० — ऐ.
[14] ०स्य चैतत्प्रमाणस्य — ऊ, ऋ, ॠ.
[15] अत्र 'यद्येवं नाप्रमाणस्य लक्षणमिति' इत्येतदधिकम् — ऊ, ऋ, ॠ.
[16] अत्र 'यद्येवं' इत्यधिकम् — अ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[17] वस्तुनो — अ. ऋ, ॠ.
[18] अविषयीकृतं — ऊ, ऋ, ॠ.
[19] जगच्छून्यता — ऊ, ऋ, ॠ.
[20] 'ज्ञानेन' इत्येतन्नास्ति — अ; 'ज्ञानेन' इत्यस्य स्थाने 'ज्ञाने' इति दृश्यते — ऊ, ऋ, ॠ, ए, ऐ.
[21] 'तत्' इत्यस्य स्थाने 'तस्मात्' इति दृश्यते — ऊ, ऋ, ॠ.
[22] 'न' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[23] 'अर्थ एव' इत्येतन्नास्ति — ऐ.
[24] संविद्व्यवहारदर्शना० — ऐ.
[25] ०वादासिद्धं — ऊ, ॠ; ०वादासिद्धा— ऋ.
[26] एतदेव विषयज्ञान० — ऐ.
[27] ०रर्थकारित्वेन — ऊ, ऋ, ॠ.

अबाधितत्वाच्च इत्युक्तम्[१] — "ज्ञेयं तावत्पदार्थानां यादृग्रूपं स्वकं स्वकम्" इत्यादिना [२]प्रागेवेति शून्यवादाभावः ॥

ननु [३]असतोऽपि [४]हि कल्पना विद्यते। अर्थाभावेऽपि [५]शुक्तिकायां रजतादे[६]रसतोऽवभासनादि[७]प्रकाशकत्वात् स्वप्नादि[८]ज्ञानवत्सर्वमसत्यप्रकाशकं ज्ञानमिति [९]निरालम्बनवादिनः। [१०]यदाहुः —

"[११]यथाकथंचित्तस्यार्थरूपं मुक्त्वावभासिनः।
अर्थग्रहः कथं सत्यं न जानेऽहमपीदृशम् ॥" इति।

तत्रोच्यते — 'नासत' इत्यादि।

**नासतो वस्तुशून्यत्वान्मृत्पिण्डान्न[१२] पटो यथा ॥२२॥**

[१३]**न असतः** अत्यन्तपरितुच्छस्य कल्पना विद्यते। [१४]कुतः? [१५]वस्तुना परमार्थसत्यभूतेन ज्ञानेन शून्यत्वात्। [१६]**यथा च मृत्पिण्डात् पटः**[१७]। एवं [१८]नासतोऽवभासनमुपपद्यते इत्यर्थः। शशविषाणादीनामसतां तस्यादर्शनात्। कथं [१९]तर्हि [२०]शुक्तिकारजताद्यवभासाः। न तावन्निर्विषयाः, देशविशेषावष्टम्भेन तस्य [२१]रजतादेरिव भासनात्। [२२]नात्माकाराः; तस्याविकारित्वेन [२३]वक्ष्यमाणत्वतो[२४]ऽनाकारत्वात्। [२५]नाप्यसत्तावलम्बनाः [२६]असतो [२७]भासनायोगादित्युक्तत्वात्[२८]। नापि [२९]विपरीतार्थाः

---

[१] मतङ्ग० विद्या० ६. १४ पू०.
[२] मतङ्ग० विद्या० ६. १४, १५ पू० वृत्तौ।
[३] न सतोऽपि — ऊ, ऋ, ॠ.
[४] हिशब्दो नास्ति — ऊ, ॠ, ऐ; हिशब्दस्य स्थाने 'स' इति दृश्यते — ऋ.
[५] शुक्तिकारजतादे० — अ, आ, ई, उ, ए, ऐ.
[६] ०रसतोऽपि भासनादिति प्र० — अ, आ, ई, उ, ए; ०रसतो भासनादिति प्र० — ऐ.
[७] प्रकाशत्वात् — अ, आ, ई, उ, ॠ, ए.
[८] ०ज्ञानवदसत्यप्रकाशश्च ज्ञान० — अ; ०ज्ञानवदसत्यमप्रकाशश्च ज्ञान० — आ, ई, उ, ए; ०ज्ञानवदसत्यं प्रकाशश्च ज्ञान०—ऐ.
[९] निरालम्बवादिनः — आ, ऊ, ऋ, ॠ.
[१०] 'यदाहुः' इत्येतन्नास्ति — अ.
[११] आकरो न लभ्यते।
[१२] ०न्मृत्पिण्डे न — मु, उ, ऐ, ओ.
[१३] न ह्यसतस्तुशब्दस्य — अ; न ह्यसतस्तुच्छस्य — आ, ई, उ, ए; नह्यसतोऽपि कल्पना — ऐ.
[१४] अतः — अ, ए.
[१५] वस्तुनोऽपरमार्थस्य सत्य० — अ, आ, ई, उ, ए; वस्तुना परमार्थेन सत्य० — ऐ.
[१६] 'यथा च' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[१७] अत्र इवशब्दोऽधिकः — अ, आ, ई, उ, ए.
[१८] नासतो भासन० — अ, ऐ.
[१९] 'तर्हि' इत्यत्र 'तस्य' इति दृश्यते — ऐ.
[२०] तच्छुक्तिका० — ऊ, ऋ, ॠ; शुक्तिरजता० — ऐ.
[२१] रजतादेरवभासनात् — अ, ई, उ, ऊ, ऋ, ॠ, ए; रजतादेरवभासात् — ऐ.
[२२] न त्वाकाराः — अ, ई, उ, ए, ऐ; नत्वाकारः —आ.
[२३] 'वक्ष्यमाणत्वतो' इत्यत्र 'असत्वतो' इति दृश्यते — अ; मतङ्ग० विद्या० ६. ८४; ८. ११६ पू० वृत्तौ।
[२४] ०ऽनाकरणत्वात् — ऐ.
[२५] नाप्यसक्तावलम्बनाः — अ, ऋ; नाप्यसत्यालम्बनः — ऊ, ॠ.
[२६] ह्यसतो — ऐ.
[२७] भासमानायोगा० — अ, आ, ऋ.
[२८] ०दित्युक्तम् — ऐ.
[२९] विपरीतार्थः — अ, ऊ, ॠ; अविपरीतार्थः — ऋ.

तस्यापि तेन रूपेणासतो भासनायोगात्। [1]यदाकारास्तेषां [2]संवेदनं तदन्यथाविषयत्वेन स्मृति[3]प्रतिभाद्यनुभवेषु ज्ञेयाकारवती बुद्धिः [4]सान्वेति. [5]न [6]निरालम्बनता। [7]दूर एव शून्यवादत्वम्। न चान्तःकरणचैतन्य[8]पक्षः। नापि [9]"नान्या बुद्धिरन्यो[10]ऽनुभवः" इत्यादिपूर्वपक्षोक्तं युक्तमिति। तदेवं भ्रान्तेष्वपि[11] प्रत्ययेषु [12]शून्यवादः प्रतिक्षिप्तः। नैरात्म्यवादं प्रति प्रत्यवस्थीयते। तत्र [13]यदुक्तम्—"एकमेवेदं [14]संविद्रूपं [15]हर्षविषादाद्यनेकाकारविवर्तं पश्यामः" इति।

[16]सत्यमेवैतत्। न हि द्वावुपलम्भौ स्तः[17] एकोऽर्थस्य, [18]अपरश्चात्मनः। किं तु तदेव विषयसंवेदनं [19]स्वसंवेदनं सत् स्वसंवित्सिद्धमात्मनो रूपम्। नान्यत्। यद्वक्ष्यति[20]—"चितेश्चित्सहजो धर्मः" इति॥२२॥

[21]यत्तु [22]प्रतिक्षणनिरोधात्तस्य [23]नैरात्म्यमुक्तम्। तदयुक्तम्। यतः—'निरुध्यते नावस्थानाद्' इत्यादि।

**निरुध्यते नावस्थानाद्विज्ञानं [24]प्रत्ययात्मकम्।**

यदेतद् **विज्ञानम्** [25]अर्थसंवेदनात्मकं [26]तद् **न निरुध्यते** न प्रतिक्षणं नश्यतीति [27]साध्यम्। **अवस्थानादिति** हेतुः। सर्वदैव ग्राहकत्वेन अस्य विज्ञानस्य स्थिर[28]तयैवावभासना[29]दित्यवभासन-

---

[1] यदाकारास्तेषां—अ; यदाकारास्ते सा सं०—ऊ, ॠ, ऋ.

[2] सवेदनं तदन्याविषयत्वेन—अ; संवेदनादन्या तद्विषयत्वेन—ऊ, ॠ, ऋ; संवेदनं तदन्यविषयत्वेन—ऐ.

[3] ०प्रतिभाभान्त्यनुभावेषु—ऊ, ॠ, ऋ; प्रतिपद्यानुभवेषु—ऐ.

[4] सान्वेति—अ, आ, ई, उ, ए; सिद्धेति—ऊ, ॠ, ऋ;

[5] नकारो नास्ति—ऊ, ॠ, ऋ.

[6] निरालम्बना—अ, आ, ई, उ, ए, ऐ.

[7] दूरत एव—अ.

[8] 'पक्षः नापि' इत्यत्र 'पक्षोऽपि' इति दृश्यते—अ, आ, ई, उ, ए, ऐ.

[9] नान्यबुद्धि०—आ, ॠ.

[10] ०ऽनुभवपक्षोक्तं—अ; ०ऽनुभव इत्यादिना पूर्वपक्षोक्तं—ऐ.

[11] अपिशब्दो नास्ति—ऊ, ॠ, ऋ.

[12] शून्यवादं प्रतिक्षिप्य नैरात्म्य०—ऊ, ॠ, ऋ.

[13] मतङ्ग० विद्या० ६. १९–२१ पू० वृत्तौ।

[14] संवेदनं—अ, आ, ई, उ, ऊ, ॠ, ऋ, ए.

[15] 'हर्षविषादाद्यनेकाकारविवर्त' इत्येतन्नास्ति—अ, आ, ई, उ, ऊ, ॠ, ऋ, ए; अविषादाद्यनेकाकारविवर्तं—ऐ.

[16] सत्यमेवमेतं—ऐ.

[17] 'स्तः' इत्येतन्नास्ति—ऊ, ॠ, ऋ.

[18] 'अपरश्च' इत्यत्र 'परश्च' इति दृश्यते—आ, ई, उ, ए, ऐ.

[19] 'स्वसंवेदनं सत्' इत्येतन्नास्ति—ऊ, ॠ, ऋ, ऐ.

[20] मतङ्ग० विद्या० ६. ८१ पू०.

[21] यस्तु—आ.

[22] प्रतिक्षणं—ऊ, ॠ, ऋ.

[23] नैरात्म्यमित्युक्तम्—अ, आ, ई, उ, ए, ऐ.

[24] प्रत्ययात्मकः—ओ.

[25] 'अर्थ' इत्येतन्नास्ति—अ, आ, ई, उ, ए, ऐ.

[26] एतन्न निरु०—ऊ; एतन्निरु०—ऐ.

[27] सामर्थ्यम्—ऐ.

[28] ०तयैव भासमाना०—आ; ०तयैव भासना०—ऊ, ॠ, ऋ.

[29] ०दित्यर्थो भासन०—ऊ, ॠ, ऋ.

मेव [1]अवस्थानं विज्ञानस्य। [2]यतः "यद्धि [3]यदवभाससंवेदनं [4]तत् तद्रूपमेव। नान्यरूपम्। यथा रथ्यापुरुषसंवेदनं तद्रूपमेव न सुगत[5]संवेदनरूपम्। स्थिर[6]संवेदनरूपं [7]चेदमर्थसंवेदनमवभासते। ततो न प्रतिक्षणं [8]विरुद्धस्वभावमिति विरुद्धोपलब्धिः। न चायमसिद्धो हेतुः। [9]यत एवं विज्ञानं प्रत्ययश्चासौ [10]सततमर्थमवगमयतीति आत्मा च। तल्लक्षणं [11]सर्वदैवार्थप्रकाशकतया स्थिरतयैव स्वसंवेदनसिद्धमिति [12]वक्ष्यामः। [13]तामेव हि [14]स्थिरतरामात्मसंविद[15]माश्रित्य सर्वैः [16]कालान्तरफलानि कर्माण्यारभ्यन्ते। [17]क्षणिकत्वे तु तस्याः [18]सर्वव्यवहारप्रत्यस्तमयात्, सर्वज्ञानानां क्षणमात्रवेदनोत्तरध्वंसतः, [19]क्षणान्तरे संभवाभावतः कः [20]प्रवर्तते [21]तत्र किमर्थं वेति निरीहं हेयोपादेयबुद्धि[22]विकलं मिथ्याज्ञानविचारबाधाद्यनेक[23]ज्ञानशून्यं जगद्भवेदिति सर्वव्यव[24]हाराभावप्रसङ्गः। स्थिर[25]बोधपूर्वकत्वादेवमादेः सर्वस्येति, आत्मसिद्धिः। स्थिरस्यैव संवेदनस्यात्मत्वादित्युक्तम्॥

सत्यम्। अस्त्येवेयमात्मसंवित्ति[26]रासंसाराद् नैरात्म्यप्रति[27]पक्षभूता। सा तु न[28] [29]संवेदनात्मिका। [30]चतुःक्षणात्मविज्ञानप्रवाह एव संवेद्यमाने सदृशा[31]परापरोत्पत्तिविप्रलम्भाद् [32]विकल्पेन [33]स एवायमित्यैक्यमध्यारोप्य [34]प्रकाशते। यदुक्तम्[35] —

---

[1] 'अवस्थानं' इत्यत्र 'स्थानं' इति दृश्यते—ऐ.

[2] 'यतः' इत्येतन्नास्ति — अ.

[3] यदाभाससंवेदनं — अ, आ; यदाभासं संवेदनं — ई, उ, ए; यदवभासं संवेदनं — ऋ, ॠ; यदाभासंवेदनं — ऐ.

[4] 'तत्' इत्येतन्नास्ति — आ, ऐ.

[5] 'संवेदनरूपम्' इत्यत्र 'स्वरूपम्' इति दृश्यते — ऊ, ऋ, ॠ.

[6] 'संवेदन' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[7] चेदं समर्थ० — ए.

[8] निरुद्ध० — ऊ, ऋ, ॠ.

[9] यत एव विज्ञानं — आ; यत एतद्विज्ञानं — ऊ, ऋ, ॠ; य एवं विज्ञानं — ऐ.

[10] समर्थमवगम० — अ, आ; सत्यमर्थमवगम० ई, उ, ए, ऐ.

[11] सर्वपदार्थ० — ऊ, ऋ, ॠ.

[12] मतङ्ग० विद्या० ६. २४ उ०, २५ पू० वृत्तौ।

[13] तमेव — ॠ.

[14] स्थिरतरमात्म० — ॠ.

[15] ०मादृत्य — अ, आ, ई, उ, ए, ऐ.

[16] कार्यान्तर० — ए.

[17] क्षणिकत्वेन तु — ऐ.

[18] 'सर्वव्यवहार' इत्यारभ्य 'ध्वंसतः' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.

[19] क्षणान्तरसंभवाभावतः — ऋ; क्षणान्तरमंभवाभा यतः — ॠ.

[20] प्रवर्तेत — ऊ, ॠ.

[21] कुत्र किमर्थमेवेति — ऊ, ऋ, ॠ.

[22] विकलं मिथ्याज्ञानं विचार० — ऊ, ऋ. विकले मिथ्याज्ञाने विचार० — ॠ; विकल्पं मिथ्याज्ञानविचार० — ऐ.

[23] 'ज्ञान' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[24] ०हाराभाव एव प्रसङ्गः — ऐ.

[25] ०बोधादेवमादेः — अ; ०बोधरूपकत्वादेवमादेः — आ; ०बोधकपूर्वकत्वादेवमादेः — ॠ; ०बोधपूर्वकत्वाद्देवतादेः — ऐ.

[26] ०रासंसारं नैरात्म्य० — ऊ, ऋ, ॠ.

[27] ०पक्षीभूता — अ, आ, ई, उ, ऋ, ए, ऐ.

[28] नकारो नास्ति — ऐ.

[29] संवेदनात्मका — ऐ.

[30] अपि तु क्षणात्मिका विज्ञान० — ऊ, ऋ, ॠ; स तु क्षणात्मविज्ञान० — ऐ.

[31] ०परात्परोत्पत्ति०—ॠ; परापरोत्पत्तिः—ऐ.

[32] विकल्पो न — ऐ.

[33] संसर्गोऽयमित्यैक्य० — अ, आ, ई, उ, ए, ऐ; स एवेयमित्यैक्य० — ऊ.

[34] प्रकाश्यते — अ, आ, ई, उ, ऊ, ऋ, ऐ.

[35] प्रमाणवार्तिके २. १९३ उ०.

"मिथ्याध्या[1]रोपहानार्थं [2]यत्नोऽसत्यपि मोक्तरि"। इति।

तत्रोच्यते — 'यदतीतम्' इत्यादि।

**यदतीतमतीतं [3]तु स्मरणं केन हेतुना ॥२३॥**

पौर्वापर्यरहितो [4]हि कालः क्षणो भवद्भिरभ्युपगत इति क्षणिकत्वादेव [5]यत्किंचिद्विज्ञानं तद् [6]अतीव इतं गतम्; उत्पत्त्यैव समं नष्टम्। अतोऽत्यन्तस्थितिकालाभावाद् **अतीतम्** एवेति कुतः स्मरणाध्यारोपादीनां संभवः। येन अध्यारोपिता [7]अत्र [8]आत्मसंविदित्युच्यते। तेषां विकल्पात्मकत्वेन पूर्वापरपरामर्शकत्वतः स्थिरबोधरूपतया क्षणिक[9]ज्ञानत्वायोगादित्युक्तं भवद्भिरपि [10]न हीद[11]मियतो व्यापारान्कर्तुं समर्थम्; संनिहितविषयबलोत्पत्तेरविचारकत्वादिति।

[12]न च संनिहित[13]विषयतयैवाविचारकत्वम्; असंनिहितविषयाणामपि [14]द्विचन्द्रादिज्ञानानामवि[15]चारकत्वात्। अपि तु क्षणिकत्वे[16]नासाधारणतयैव। यदुक्तं भवद्भिः[17] —

"[18]अशक्यसमयो ह्यात्मा [19]सुखादीनामनन्यभाक्।
[20]तेषामतः स्वसंवित्ति[21]र्नाभिजल्पानुषङ्गिणी॥" इति[22]।

[23]ततश्च ज्ञानानां सर्वेषां क्षण[24]संवेदनात्मकत्वेन निर्विकल्पकत्वमेव[25]। न विकल्पता। स्थैर्यं विना तदसंभवादिति, **केन हेतुना** "स एवायम्" इत्यैक्य[26]स्मरणाध्या[27]रोपादि अत्र भवेत्; न भवेदित्यर्थः। अस्ति च तत्। ततस्तद्धेतुस्थैर्यप्रतिपन्नितः[28] [29]क्षणिकत्वे विरोधोऽत्र विरुद्धकार्योप[30]लब्ध्येति नैरात्म्यवादाभावः॥ २३॥

---

[1] ०रोपणार्थं यो — अ; ०रोपणार्थं वो — आ, ई, उ, ए, ऐ.
[2] यत्ने सत्यपि — अ, आ, ऊ, ऋ, ॠ.
[3] तन्मरणं — ऊ, ऋ, ॠ.
[4] हिशब्दो नास्ति — ऐ.
[5] यत्किञ्चिज्ज्ञानं — अ, आ, ई, उ, ऊ, ए, ऐ.
[6] अतीवैतं गतम् — ऊ, ऋ, ॠ.
[7] तत्र — ऊ, ऋ, ॠ.
[8] आत्मा संविद् — आ,.
[9] ०ज्ञानत्वयोगा० — ऊ, ऋ, ॠ.
[10] नकारो नास्ति — ऊ, ऋ, ॠ.
[11] ०मियत्ताव्यापारान् — अ.
[12] 'न च' इत्यस्यानन्तरं 'संनिहितविषयाणामपि' इति दृश्यते — ऊ, ऋ, ॠ.
[13] ०विषयतैवाविचार० — ई, उ, ए, विषयतैवाविलकत्वं० — ऐ.
[14] द्विचन्द्रज्ञानाना० — अ.
[15] ०चारत्वात् — ऐ.
[16] ०नासाधारणतैव — आ, ई, उ, ऐ; ०नासाधारणविषयतैव — ऊ, ऋ; ०नासाधारण विषयतेव — ॠ.
[17] प्रमाणवार्तिके — ३. २५०.
[18] अशक्तिसमयो — ए; आशक्यसमयो — ऐ.
[19] रागादीनां — प्रमाणवार्तिकपाठः।
[20] तेनान्तः — ऐ.
[21] ०र्नाभिन्नार्थानुषङ्गिणी — अ, आ, ई, उ, ए.
[22] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[23] तच्च — ॠ.
[24] ०संवेदात्मकत्वेन — अ.
[25] निर्विकल्पकत्वेन — अ; निर्विकल्पत्वमेव — आ, ऊ, ॠ, ऐ; निर्विकल्पमेव — ॠ.
[26] ०स्मरणाद्यारोपादि — ऊ, ऋ, ॠ.
[27] ०रोपितादि — ए.
[28] प्रतिपत्तिः — अ, आ, ई, उ, ए, ऐ.
[29] क्षणिकत्वनिषेधोऽत्र — ऊ, ऋ, ॠ.
[30] ०लब्वेति — ऐ .

ननु [1]किमुच्यते "स्मरणं केन हेतुना" [2]इति। यावता स्मरणस्य विकल्पात्मकत्वाद् [3]अन्य एव हेतुरविद्यानुभववासनेति बौद्धाः। [4]तदयुक्तम्। यतः — 'तादृगेव' इत्यादि।

**तादृगेव क्षणादन्यत्क्षणान्तरमभीप्सितम्[5]।**

नास्माभि[6]र्विकल्पस्योत्पत्तौ हेतुर्नास्तीत्युक्तम्। अपि तु व्यवस्थापनायां दाहकत्वाभावे[7] वह्नेः पक्तृत्वमिव, स्थैर्याभावे [8]विकल्पस्य स्मरणाद्यात्मनः तत्त्वं न व्यवतिष्ठत इत्यर्थः।

[9]ततोऽविद्यादि[10]हेतुत्वे सत्यपि यस्य यादृगेव [11]पूर्वः समनन्तरप्रत्यय[12]भूतः [13]क्षणिकत्वादेव [14]निर्विकल्पक इत्युक्तः, तादृगेव तस्मादुत्पन्नमविद्यादियोगेऽपि द्विचन्द्रा[15]द्याभासमिव असत्यार्थ[16]प्रकाशकं निर्विकल्पमेव [17]क्षणान्तरम् अभिप्रेतं भवतां स्यात्। [18]न तु [19]विकल्पात्मकम्। तस्य योजनात्मकत्वेन [20]क्षणानामनुपपत्तेरित्यतो विकल्पानामभावप्रसङ्ग एव।

न च क्षणात्मनोऽपि[21] "स एवायम्" इति पूर्वापरकालयुक्त[22]दीर्घार्थप्रकाशकत्वेन [23]विकल्पकत्वमिति वाच्यम्। अयोजनात्मकत्वाद् अलातचक्रप्रतिभासवत्। योजना हि [24]विकल्पना यतः। अत एव योगिज्ञानं युगपत् [25]सर्वार्थविषयत्वेऽप्यविकल्पकं[26] भवद्भिरिष्यते। नापि च बहूनां क्रमभाविनां [27]ज्ञानानां [28]विकल्पकत्वं युक्तम्। तादृगेव [29]क्षणादन्यत्क्षणान्तरमित्युक्तं यतः। न च समुदायो नाम क्षणव्यतिरिक्तोऽस्ति। न च [30]क्षणेनास्मदादीनां व्यवहार इति व्यवहाराभावप्रसङ्ग[31] एवेत्युक्तम्।

---

[1] 'किमुच्यते' इत्यत्र 'किमुत' इति दृश्यते — ऊ, ॠ, ॠ.
[2] इतिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[3] अन्यहेतु० — अ.
[4] 'तदयुक्तम्' इत्येतन्नास्ति — अ.
[5] ०मभीप्सितः — ओ.
[6] ०र्विकल्पस्योक्तौ — अ, आ, ई, उ, ए.
[7] अत्र चशब्दोऽधिकः — अ.
[8] विकल्पस्यास्मरणा० — आ.
[9] यतो — ऊ, ॠ, ॠ.
[10] ०हेतुत्वे तस्यापि यस्य यादृगेव — अ; ०हेतुत्वेऽपि विकल्पस्य यादृगेव — ऊ, ॠ ॠ; ०हेतुत्वेऽपि . . . यस्य यादृगेव — ऐ.
[11] 'पूर्वः' इत्येतन्नास्ति — अ.
[12] ०भूतलक्षणः क्षणिक० — ऐ; ०भूतः क्षणः क्षणिक० — ऊ, ॠ, ॠ.
[13] क्षणिकत्वादेर्निर्वि० — अ, ई, उ.
[14] निर्विकल्प इत्युक्तः — आ, ई, उ, ए; निर्विकल्पित इत्युक्तः — ऐ.
[15] ०द्याभास इव — अ, इ, उ, ए, ऐ; ०द्याभास एव — आ.
[16] ०प्रकाशकनिर्वि० — ऐ.
[17] कारणान्तरम् — अ.
[18] 'न तु' इत्यत्र 'ननु' इति दृश्यते — अ.
[19] विकल्पात्मकः — ऐ.
[20] क्षणेऽनुपपत्तेरित्युक्तमतो — ऊ, ॠ, ॠ.
[21] अपिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[22] ०दीपार्थप्रकाश० — ऐ.
[23] विकल्पत्वमिति — अ, आ, ई, उ, ए; विकल्पकत्वमस्तीति — ऐ.
[24] 'विकल्पना' इत्यत्र 'कल्पना' इति दृश्यते — ॠ, ॠ.
[25] शब्दार्थ० — ऊ, ॠ, ॠ.
[26] ०विषयत्वेपि विकल्पकं — अ.
[27] 'ज्ञानानां' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[28] विकल्पत्वं — अ, आ, ई, उ, ए; — अविकल्पकत्वं — ऐ.
[29] क्षणादन्यक्षणा० — आ.
[30] क्षणो नास्म० — ॠ.
[31] अत्र इतिशब्दोऽधिकः — ऊ, ॠ, ॠ.

[1]ननु स्वात्मनि[2] [3]विकल्पस्थैर्य[4]मारोपयन्नुत्पद्यते। तेन [5]नैतत्प्रसङ्गः। [6]तन्न। [7]तथा-वृत्तेरात्मनि [8]विरोधादित्युक्तम्[9]। [10]स्वात्मनि न विकल्प इति च। [11]तस्मात् स्वात्मन्यारोपा-संभवाद् ग्राहकात्मनः [12]स्थैर्यमवभासमानं [13]स्वसंवेदनसिद्धमेवाभ्युपगन्तव्यम्। [14]अतश्च — 'आ-जन्ममरणाद्' इत्यादि।

**आजन्ममरणात्तस्य[15] न विज्ञानस्य कुत्रचित् ॥२४॥**
**व्यभिचारो भवेल्लोके स च सर्वत्र दृश्यते।**

जन्मनः [16]प्रागस्यासत्त्वं चासदिति चार्वाकदूषणावसरे [17]एवोक्तमिति, अत्र जन्ममरणयोरपि मध्ये **तस्य** अस्य ग्राहकात्मनो ज्ञानस्य [18]**कुत्रचिद्** देशे, काले वा **व्यभिचारो** विनाशो [19]**न** संभाव्यते। [20]सदैकरूपतयैव स्थिरतया अस्य एकेनैव [21]सर्वेण संवेदनात्। **स** पुनर्व्यभिचारोऽस्य **सर्वत्र** प्रतिक्षणं भवद्भिः [22]**दृश्यते** इत्याश्चर्य[23]मत्यन्तासंभावनया। सकललोक[24]सिद्धस्वसंवेदननिराकृतोऽयं नैरात्म्य-पक्ष इत्यर्थः॥

किं च उत्पाद्योत्पादकयो[25]र्ज्ञानक्षणयोरभावेन [26]अन्तरितत्वं नैरन्तर्यं वा। तत्र [27]सान्तरितत्वे — 'एकस्मात्प्रत्ययाद्' इत्यादि।

**एकस्मात्प्रत्ययादन्य[28]त्प्रत्ययान्तर[29]गोचरम् ॥२५॥**
**न प्राप्नोति तदा सर्वं योगिनो न च योगिनः।**

---

[1] नास्वात्मनि — अ.
[2] अत्र अपिशब्दोऽधिकः — ऊ, ऋ, ॠ.
[3] विकल्पः स्थैर्य० — ऊ, ऋ, ॠ; अविकल्प-धैर्य० — ऐ.
[4] ०मारोपयन्नुद्यतते —अ, आ, ई, उ, ऊ, ए, ऐ.
[5] एतत्प्रसङ्गः — अ, ऊ; नैष प्रसङ्गः — ऋ, ॠ; नैव प्रसङ्गतः — ऐ.
[6] 'तन्न' इत्यत्र 'तदयुक्तं' इति दृश्यते — ऋ, ॠ, ऐ.
[7] तदन्यतया वृत्तेरात्मविरोधा० — ऐ.
[8] विरोध इत्युक्तम् — अ, आ, ई, उ, ऊ, ए.
[9] मतङ्ग० विद्या० ६. २३ उ० वृत्तौ।
[10] मतङ्ग० विद्या० ६. २३उ०, २४पू० वृत्तौ; स्वात्मन्यविकल्पिको विकल्प — ऊ; स्वात्म-न्यविकल्पको विकल्प — ऋ, ॠ.
[11] तस्य स्वात्मन्यारोपा० — अ; तत एवमन्या-रोपा० — ऐ.
[12] स्थैर्यमवभासनं — अ; स्थैर्यविभासनं—ए, ऐ.
[13] संवेदनमेवाभ्युप० — ऊ, ऋ, ॠ.
[14] ततश्च — ऊ, ऋ, ॠ.
[15] ०मरणान्तस्य — ओ.
[16] प्रागस्य सत्त्वं चार्वाक० — ऊ, ऋ, ॠ, ऐ.
[17] मतङ्ग० विद्या० ६. ७ उ० — ९ पू० वृत्तौ 'न चैवाकुञ्चनादिकम्' इत्यस्य विवरणे; एवोक्तमन्यत्र जन्म० — ऊ, ऋ, ॠ.
[18] अत्र नकारोऽधिकः — ऋ, ॠ.
[19] 'न' इत्यत्र 'लोके' इति दृश्यते — ऊ, ऋ, ॠ.
[20] सदैव रूप० — अ; सर्वदैव रूप० — ऊ; सर्वदैकरूप० — ऋ, ॠ; सत्येद्देशकरूप० — ऐ.
[21] सवेगसं० — अ, ऐ.
[22] 'दृश्यते' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[23] ०मत्यन्तासंभवनाय — ऊ, ऋ, ॠ.
[24] ०सिद्धः स्वसंवेदन० — ऊ, ऋ; ०सिद्धः स्वयं वेदन० — ॠ.
[25] ०ज्ञानिलक्षणयो० — ऐ.
[26] अन्तरितनैरन्तर्यं — अ.
[27] सान्तरत्वे — अ, उ, ऋ,
[28] ०त्प्रत्ययोतरगोचरम् — ऐ.
[29] ०गोचरः — ओ.

**एकस्मात्** पूर्व[1]ज्ञानक्षणाद् [2]अन्यदेव ज्ञानक्षणान्तरं तत्प्रकृतित्वादुत्पन्नमिति, अन्यस्य [3]ज्ञानस्य गोचरं **न प्राप्नोति**; अभावादेव [4]तस्योत्पत्तेरभावान्तरितत्वात्तयोः। ततश्चाभावस्य अवस्तुत्वेन [5]हेतुत्वानुपपत्तेः, [6]अहेतुकमेव जगद् [7]उक्तं स्यात्। [8]अहेतोश्चादेशकाल[9]प्रकृतित्वाद्, उत्पन्नमित्यस्य ज्ञानस्य नियमायोगात्. [10]तदा **सर्वे** एव[11] **योगिनो**ऽमुक्ता[12] इति [13]सर्वमसमञ्जसम्; मोक्ष-[14]संसारहेतूपदेशानुष्ठानादेः [15]सर्वस्यानर्थक्यात्। यदुक्तम् [16]—

"[17]नित्यं सत्त्वमसत्त्वं वाहेतो[18]रन्यानपेक्षणात्।
[19]अपेक्षातो हि भावानां कादाचित्कत्वसंभवः॥" इति।

[20]न तु [21]शून्यवादिनिरा[22]करणतया एतद्बाह्यार्थसाधकत्वेन व्याख्येयम्। [23]अप्रकृतत्वात्। [24]नैरात्म्यवाद[25]निराकरणमेवात्र प्रकृतं यतः। शून्यनिरालम्बनवादयोः [26]पूर्वमेव निराकृतत्वात्॥

द्वितीयस्मिन्नपि पक्षे उच्यते — 'अथवाजस्रम्' इत्यादि।

**[27]अथवाजस्रमुत्पत्तिरिष्यते [28]समवायजा ॥२६॥**
**विज्ञानस्य तदाभावो न भवेत्तु[29] कदाचन ।**

अथैतद्दोषभयाद् [30]**अजस्रम्** अविरतं नैरन्तर्येण अत्यन्त[31]संश्लेषजा [32]पूर्वस्मात् [33]प्रत्ययात् [34]प्रत्य-

---

[1] ०ज्ञानलक्षणात् — ऋ, ॠ.
[2] अन्यदेव न क्षणान्तरं तत्प्रकृतित्वाद् — अ; अन्यदेतज्ज्ञानलक्षणान्तरमेव तत्प्रकृतत्वाद्— ऊ, ऋ, ॠ.
[3] ज्ञानगोचरे न — ऋ, ॠ.
[4] तस्योत्पत्तिरभावा० — अ, आ, ई, उ, ए, ऐ.
[5] हेतुकत्वानु० — ऐ.
[6] अहेतुकत्वमेव — ए.
[7] उत्पन्नं स्यात् — ऐ.
[8] अहेतुश्च देशकाल० — ऊ, ऋ, ॠ; अहेतोर्देशकाल० ऐ.
[9] प्रकृतित्वादुपपन्नमित्यस्य ज्ञानस्य नियमायोगात् — अ, आ ई, उ; प्रकृतिनियमायोगात् — ऊ, ऋ, ॠ; प्रकृतित्वात्तदुपपन्नमित्यस्य ज्ञानस्य नियमायोगात् — ऐ.
[10] 'तदा' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[11] अत्र 'अयोगिनो मुक्ताः स्यु.' इत्यधिकम् ऊ, ऋ, ॠ.
[12] योगिनश्च मुक्ताः — ऊ, ऋ, ॠ.
[13] सर्वं समञ्जसम् — आ, ऐ.
[14] ०संहारहेतूप० — ऋ, ॠ.
[15] सर्वस्यानर्थत्वात् — ए.
[16] प्रमाणवार्तिके — २. १८१ पू०.
[17] नित्यसत्त्व० — अ, आ.
[18] ०रन्यान्यपेक्षणात् — ऊ, ऋ, ॠ.
[19] आकरो न लभ्यते ।
[20] 'न तु' इत्यत्र 'ननु' इति दृश्यते — अ, ॠ, ए.
[21] शून्यवादनिरा० — ऊ, ऋ, ॠ.
[22] ०करणतैव तद्बाह्यार्थं० —ऐ.
[23] अकृतत्वात् — ऊ, ऋ, ॠ; प्रकृतत्वात् — ऐ.
[24] नैरात्मवाद० — आ; नैरात्म्यवादि — ऐ.
[25] निराकरणमेव प्रकृतं — ऊ, ऋ, ॠ.
[26] मतङ्ग० विद्या० ६. २१ उ०, २२ वृत्तौ शून्यवादनिरालम्बनवादयोर्निराकरणं दृश्यते।
[27] अथाजस्रं समुत्पत्ति० — ऊ, ऋ, ॠ.
[28] समवायतः — ऊ, ऋ, ॠ; समवायजाः -ऐ.
[29] भवेच्च — ऊ, ऋ, ॠ.
[30] अजस्रमप्यभिरतं — अ.
[31] ०संश्लेषतः पूर्वं — ऊ, ऋ, ॠ.
[32] पूर्वं तस्मात् — आ.
[33] 'प्रत्ययात्' इत्येतन्नास्ति — ॠ.
[34] प्रत्ययान्तरस्योत्पत्तिः — ऊ, ऋ, ॠ.

यान्तरोत्पत्तिः **इष्यते**। **तदा न विज्ञानस्य अभावः** प्राप्नोति। अपि तु तदेव [1]तत्क्षणान्तरेऽपि भावानान्तरितत्वं पूर्वक्षणात्मवदिति [2]ग्राहकात्मनः क्षणिकत्वासिद्धेः [3]नैरात्म्यप्रतिक्षेपः॥

अथैवमपि नेष्यते तदा — 'न चैवं स्याद्' इत्यादि।

**न चैवं स्यात्ततो[4]ऽन्यद्वा स्थानं ज्ञानस्य कथ्यताम् ॥२७॥**

अक्षणिकत्वमपि यदि ग्राहकात्मनो नेष्यते। क्षणिकत्वे च [5]दोष उक्तः। **ततोऽन्यदेव** तृतीयं रूपं [6]क्षणिकत्वाक्षणिकत्वात्मकं, [7]येन तिष्ठति तत् **कथ्यताम्**; नान्या गतिरस्तीति। अत्यन्तासंभव[8]ख्यापनार्थमेतत्। न तु तस्य संभवः, [9]परस्पराभाव[10]स्वरूपत्वेनानुपपत्तेरित्युक्तं भवद्भिरपि। तत्परिच्छिनत्ति[11], अन्यद् व्यवच्छिनत्ति, तृतीय[12]प्रकाराभावं च सूचयति. [13]एकप्रमाणव्यापार [14]एष इति। अतोऽक्षणिकत्वमेव ग्राहकात्मनः स्वसंवेदन[15]सिद्धमप्रतिक्षेप्यमेव।

[16]ननु अक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोध उक्तः। सत्यम्। यद्यसौ प्रमाणेन सिद्धो भवेत्। [17]द्विविधो हि पदार्थानां विरोधो भवद्भिरिष्यते। [18]अविकलकारणस्य [19]भवतोऽन्यभावेऽभावाद्वा शीत[20]स्योष्णेनेव [21]परस्परपरिहारस्थितिलक्षणतया, [22]भावस्याभावेनेव [23]सदायमपदार्थस्य पदार्थान्तरेणैव, वस्तु[24]भूतेन कल्पितेन वा [25]संभव इति। न तु [26]धर्मेण वस्तुभूतेन [27]कल्पितेन वा। [28]नित्यत्वे वा अनित्यत्वे वा[29] तस्य ततो [30]रूपान्तराभावात्।

---

[1] तत्क्षणान्तरस्य भावानन्तरितत्वात्पूर्व — ऊ; तत्क्षणान्तरेऽप्यभावानन्तरितत्वात्पूर्व० — ॠ ॠ; तत्क्षणान्तरेऽप्यभावान्नान्तरितत्वं पूर्वं — ए; तत्क्षणान्तरेऽप्यभावानान्तरीतं पूर्व० — ऐ.

[2] ग्राहकात्मनोऽक्षणिकत्वसिद्धेः — ऊ, ॠ, ॠ.

[3] नैरात्मप्रतिषेधः — अ, ए.

[4] 'अन्यद्वै रूपं ज्ञानस्य' इति व्याख्यातृसंमतपाठः स्यादिति भाति।

[5] दोषो विभक्तः — अ, आ, ई, उ, ए, ऐ.

[6] 'क्षणिकत्वाक्षणिकत्वात्मकं' इत्यस्य स्थाने 'क्षणिकत्वात्मकं' इति दृश्यते — अ; क्षणिकत्वाक्षणिकात्मकं — ऐ.

[7] 'येन तिष्ठति' इत्यत्र 'चेति' इति दृश्यते — अ; 'येनेति' इति दृश्यते — आ, ई, उ, ए, ऐ.

[8] ०ख्यापनार्थं न तु तस्य — आ; ०ख्यापनार्थमेतेन तस्य — ऐ.

[9] परस्परभाव० — ऐ.

[10] 'स्वरूप' इत्यत्र 'रूप' इति दृश्यते—ऊ, ॠ, ॠ.

[11] तत्परिच्छिन्नत्वे — ऐ.

[12] ०प्रभावं च — ऊ, ॠ, ॠ.

[13] एवं प्रमाण० — अ, आ, ई, उ, ए; एव प्रमाण० — ऐ.

[14] 'एष' इत्यत्र 'इष्यते' इति दृश्यते — अ, आ, ई, उ, ए; एव — ॠ.

[15] ०सिद्धं प्रतीक्ष्यमेव — अ, आ, ई, उ, ए, ऐ.

[16] नत्वक्षणिकस्य—ऊ, ॠ, ॠ; ननु क्षणिकस्य—ऐ.

[17] विविधो — ऐ.

[18] अविकल्पिताकारस्य — ऐ.

[19] भवतोऽस्यान्यभावे० — ऊ, ॠ, ॠ.

[20] ०स्योष्णेनैव — अ.

[21] 'परस्परपरिहार' इत्यारभ्य 'पदार्थान्तरेणैव' इत्यन्तं नास्ति — ऊ, ॠ, ॠ.

[22] भावस्याभावेनैव — ऐ.

[23] सदायं पदार्थस्य — आ, ई, उ, ए; सदा यः पदार्थस्य — ऐ.

[24] ०भूतेनैव कल्पितेन — ऐ.

[25] 'संभव इति' इत्यत्र 'संभवति' इति दृश्यते — ऊ, ॠ, ॠ.

[26] पदार्थधर्मेण — ऊ, ॠ, ॠ.

[27] कृतेन — अ.

[28] नित्यत्वेन वा अनित्यत्वेन वा — आ, ई, उ, ऊ, ॠ, ॠ, ए.

[29] वाशब्दो नास्ति — ऐ.

[30] रूपान्तरासद्भावात् — ए, ऐ.

[1]धर्मश्चायम् अक्षणिकस्य[2] घटादेः[3] क्रमेण क्षीरदधि[4]धारणादिकः प्रदीपादेश्च युगपद् [5]वर्तिदाह-तैल[6]क्षपणादिकोऽर्थक्रियाकारित्व[7]लक्षणः सिद्धः[8]। न तेन सहास्य [9]विरोधः।

ननु [10]यद्यदर्थकरणस्वभावं [11]तत्तत्करोत्येव [12]यथान्त्यावस्थाप्राप्तं[13] [14]बीजादि अङ्कुरादिकम्। यत्तु न करोति न[15] तत् तत्स्वभावम्। यथा [16]घटादि नाङ्कुरजनक[17]स्वभावमिति। प्रत्यक्षा-नुपलम्भाभ्यामेव धर्मयोरपि [18]जनकस्वभावाजनकस्वभावयोश्च विरोधाविरोधौ [19]सिद्ध्यत एवेति। अक्षणिकस्यापि एकस्वभावत्वेन सर्वदा सर्वार्थ[20]कारित्वाद् यौगपद्येन कार्योत्पादप्रसङ्गः। [21]अथ न तत्स्वभावः क्रमेणापि न कुर्यात्। करोति चायं [22]ग्राहकात्मा [23]क्रमेण। [24]अतस्तदा [25]तत्कर्तृत्व-स्वभावः, नान्यदा [26]तदकरणादिति स्वभावभेदाद्भिन्न एवेति क्षणिकः।

तदयुक्तम्। [27]तत एव विशिष्टस्वभावत्वेन सिद्धेः। यो हि [28]यदर्थकरणस्वभावो यथा सिद्धः, [29]सः तथैव तदर्थ[30]करणस्वभावो [31]निश्चीयते नान्यथा। बीजादेरिव क्षित्यादिसंनिधाने एवाङ्कुर-[32]जनकस्वभावो नान्यथा[33]। [34]स्थिरस्वभावः सर्वदा तत्तत्सहकारिसंनिधौ [35]तत्तदनेककार्य[36]जनकस्वभावः सिद्ध इति। [37]सर्वथा तथाभूतैक[38]स्वभावः सिद्धो नान्यथाभूतस्वभाव इति, स्वभाव[39]भेदाभावाद-भिन्न एवेत्यक्षणिकः। सहकारिणां [40]तु [41]प्रागसं[42]निधानादजनकस्वभावभ्रान्तिरत्र भवताम्। न

---

[1] धर्मश्चायं क्षणिकस्य — अ, आ.
[2] अत्र वाशब्दोऽधिकः — ऊ; एवकारोऽधिकः — ऋ, ॠ.
[3] पटादेः — ऋ, ॠ.
[4] ०कारणादिकः — अ, ऊ.
[5] व्यक्तिदाह० — आ, ऋ, ॠ; शक्तिदाह० — ए.
[6] ०क्षपणकादिको — ऊ, ऋ, ॠ.
[7] ०लक्षणसिद्धः — अ, ऐ; ०लक्षणः प्रत्यक्षेण सिद्धः — ऊ, ऋ, ॠ.
[8] अत्र इतिशब्दोऽधिकः — ऊ, ऋ, ॠ.
[9] 'विरोधः' इत्येतन्नास्ति — अ, ई, उ.
[10] यदि करण० — अ, आ, ई, उ, ए, ऐ.
[11] ततः करोत्येव — अ, आ, ई, उ, ए, ऐ; तत्-करोत्येव — ऊ.
[12] यथाज्ञावस्था० — ए.
[13] ०प्राप्ते — ऋ, ए.
[14] बीजाङ्कुरादिकम् — ऋ, ऐ.
[15] नकारो नास्ति — अ.
[16] घटादीनामङ्कुर० — अ, आ, ई, उ, ए, ऐ.
[17] ०स्वभावत्वमिति — ए.
[18] जनकत्वजनकस्वभाव० — ऊ, ऋ, ॠ.
[19] सिद्ध्येत एवेति—अ, ऊ; सिद्ध्यन्त एवेति—आ.
[20] ०कार्यत्वाद्यौग० — ऐ.
[21] अथ तावत्स्वभावः — ऊ, ऋ, ॠ.
[22] 'ग्राहकात्मा' इत्येतन्नास्ति — अ.
[23] कर्मणा — अ, ई, उ.
[24] ततस्तदा — ऊ, ऋ, ॠ.
[25] तत्कर्तृत्वभावो — ॠ; तत्कर्तृत्वसंभवादन्यथा तदकरणादिति — ऐ.
[26] तत्कारणादिति — ऊ, ऋ, ॠ.
[27] 'तत एव' इत्येतन्नास्ति —अ, आ ई, उ, ए, ऐ.
[28] यदर्थक्रियाकरण० — अ.
[29] 'सः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[30] ०कारणस्वभावो — ऊ, ऋ, ॠ.
[31] 'निश्चीयते' इत्यारभ्य 'अङ्कुरजनकस्वभावो' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[32] जन्मनः स्वभावो — ए.
[33] नान्यत् — ऐ.
[34] स्थिरश्च स्वभावः — ऋ, ॠ.
[35] तदनेक० —ऐ.
[36] जननस्वभावसिद्धः — ऐ.
[37] सर्वदा — आ, ई, उ, ए.
[38] ०स्वभावसिद्धो — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[39] ०भेदादभिन्न — ॠ.
[40] तुशब्दो नास्ति — अ.
[41] प्रसङ्गसं० — आ; प्रासङ्गसं० — ऐ.
[42] ०निधानाजनक० — ऊ, ऋ, ॠ.

त्वजनकत्वमेव। सर्वदाना[1]रोपितरूपस्य [2]ग्राहकात्मनोऽक्षणिकस्यैवा[3]वभासनादित्युक्तम्[4]। सहकारिणामपि स्वसहकारिसंनिधौ [5]तत्तत्सहकार्यैकस्वभावत्वाद् न स्वभावभेद इत्यक्षणिकत्वमेव[6]।

नन्वनुपकारिण्यपेक्षायोगाद् अक्षणिकस्य किं सहकारिणा। तदुपकार्यत्वे वा तस्योपकृतानुपकृतयोः स्वभावयोर्भेदाद् नाक्षणिकत्वम्। न। क्षणिकत्वादेव परस्परोप[7]काररहितैरप्येकार्थकारित्वेन[8] सहकारितया भवद्भिरभ्युप[9]गतैरेकसामग्र्यन्तर्भूतैश्चक्षूरूपा[10]लोकादिभिरनैकान्तिकत्वात्।

ननु तेषां परस्परोपकारासंभवेऽपि स्वहेतुकृत एवासौ स्वभाव इत्युक्तम्। ते निरभिप्रायव्यापाराः स्वहेतु[11]परिणामोपाधिविधुरधर्माणः, तत्प्रकृतेस्तथा भवन्तो नोपालम्भमर्हन्तीति।

यद्येवमक्षणिका अपि भावाः स्वहेतुभ्यः [12]स्वभावाद्वा तथास्वभावा एव। [13]येनान्योन्योपकारानपेक्षया सहकरण[14]मात्रेणैव सहकारिणो भवन्ती[15]त्यनुपलभ्याः। [16]विस्तरेण चायं पक्षो [17]**नरेश्वरपरीक्षाप्रकाशे** अस्माभिः प्रतिक्षिप्त इति तत एवाव[18]धार्यः। एतेन ज्ञत्वविरोधोऽप्यात्मनः [19]प्रतिक्षिप्तः, [20]तत्तद्विषयसंनिधौ तत्तद्ग्राहकैकस्वभावत्वादिति। नातोऽपि तस्यानित्यत्वसिद्धिरिति [21]नैरात्म्याभावः॥ २७॥

[22]किं च क्षणिकत्वे ग्राहकात्मनो [23]यद्यपि कर्मकरणमेव नोपपद्यत इत्युक्तम्[24]। तथापि तदुपपत्त्यभ्युपगमेनेदं निरूप्यताम्—'कृतमेकेन' इत्यादि।

**कृतमेकेन यत्कर्म [25]तद्विपाकं परः कथम्।**
**प्राप्नोति [26]युक्तिदौर्बल्यात्तथापि [27]सुनिरूप्यताम्॥२८॥**

[28]**एकेन** [29]ज्ञानक्षणेन **यत् कृतं** दानादिकं हिंसात्मकं वा **कर्म**, तस्य यो **विपाकः** सुखदुःखफल-

---

[1] 'रोपितरूपस्य' इत्यत्र 'रोपितस्य' इति दृश्यते — आ.
[2] ग्राहकानात्मनो० — ऊ, ॠ, ॠ.
[3] 'अवभासनाद्' इत्यत्र 'भासनाद्' इति दृश्यते — ऊ, ॠ, ॠ.
[4] मतङ्ग० विद्या० ६. २३ उ०, २४ पू० वृत्तौ।
[5] तत्सहकार्यैक० — ऊ; तत्सहकार्येक — ॠ; तत्सहकार्यक — ॠ.
[6] 'अक्षणिकत्वमेव' इत्येतन्नास्ति — अ.
[7] ०कारहितै० — ऊ, ॠ, ॠ.
[8] अत्र 'सहकारित्वेन' इत्यधिकम् — ॠ.
[9] गतैकसामग्र्य० — ॠ.
[10] ०लोकादिभिराक्षेपकारिभिरनैकान्तिकत्वात् — ऊ, ॠ, ॠ; लोकादिरनैकान्तिकत्वात् —ऐ.
[11] ०परिणामोपाधिधर्माणः — ऊ; ०परिणामोपनिधिधर्माणः — ॠ, ॠ.; ०परिणामोपाधितं विधुरधर्माणः — ऐ.
[12] स्वस्वभावाद्वा — आ, ए, ऐ.
[13] येनान्योपकारा० — अ, आ, ई, उ, ऊ, ए, ऐ.
[14] ०मात्रेणेव — ऊ, ॠ, ॠ.
[15] ०त्युनुपालभ्याः—अ, आ, ई, उ, ऊ, ॠ, ॠ, ए.
[16] विस्तारेण — आ, ई, उ, ऐ.
[17] प्रथमकाण्डे श्लो० २२ उ० —४९ विवरणे.
[18] ०धार्यम् — अ, आ, ई, उ, ए, ऐ.
[19] प्रत्युक्तः — ऊ, ॠ, ॠ, ऐ.
[20] ततस्तद्विषय० — ऐ.
[21] "नैरात्म्याभावः' इत्यस्य स्थाने 'नैरात्म्याग्राहकत्वे' इति दृश्यते — अ.
[22] 'किं च क्षणिकत्वे' इत्येतन्नास्ति — अ.
[23] 'यद्यपि' इत्येतन्नास्ति — अ.
[24] मतङ्ग० विद्या० ६. २३ पू० वत्तौ।
[25] तद्विपाको — ॠ; तद्विपाके — ऐ.
[26] युक्तये तु स्यात्तथापि — ऐ.
[27] सुविचार्यताम् — मु, उ, ऐ, ओ.
[28] 'एकेन' इत्येतन्नास्ति — ॠ.
[29] ज्ञानलक्षणेन — ॠ, ॠ, ए.

रूपः, तमन्यो [1]ज्ञानक्षणो जन्मान्तरपरिवर्ती कथं प्राप्नोति। नैव। यो हि यस्माद्भिन्नो नासौ तत्कर्मफलभोक्ता [2]देवदत्तयज्ञदत्तवत्। यदि [3]च कर्मकर्तृग्राह[4]कात्मनः फलभोक्ता अन्यो भवेत्। नैव तत्फलभोक्ता भवेत्। इष्यते च भवद्भिः [5]तत्फलभोक्ता, [6]कर्मनिबन्धनत्वेन [7]तस्याभ्युपगमात्, [8]ततो न भिन्न इति नैरात्म्याभावः।

ननु भेदेऽपि एक[9]सन्तानवर्तित्वात् [10]तेन तत्फलं भुज्यते। [11]न तु देव[12]दत्तेन कृतं यज्ञदत्तेन, भिन्नसन्तानवर्तित्वा[13]दिति, अत्र [14]युक्तिरस्त्येव।

न। असिद्धत्वेन तस्या [15]दुर्बलत्वात्। क्षणिकेषु [16]हि [17]भावेषु प्राग्भाव[18]मात्रेण कार्यजनकेषु विशेषाभावात्, न विद्मः "कः कस्य सन्तानः, को वा [19]न" इति। ननु यो यस्य सदृशः। को वा न [20]तस्य। विश्वस्यापि [21]पञ्च[22]स्कन्धात्मनः सदृशत्वात्। ननु यो यस्य प्रत्यासन्नः। [23]केयं प्रत्यासत्तिः। न तावद्देशकालकृता। तयोर्भवद्भिरनभ्युपगमात्। नापि भावस्वरूपकृता। सर्वेषां [24]क्षणान्तरेण [25]कृतत्वेनाविशेषादिति [26]सन्तानासिद्धेर्न युक्तिरेषा॥ २८॥

[27]ननु त्वदीयोऽपि[28] हेतु[29]रनैकान्तिक एव। आत्मवादिभिरपि स्मृतियुक्तितोऽन्यकृतस्य कर्मणोऽन्यभोक्तृत्वेनाभ्युपगमात्। तथा च [30]मनुः—

[31]"न चेदात्मनि पुत्रेषु न [32]चेत्पौत्रेषु नप्तृषु।
न त्वेवं हि कृतं कर्म कर्तुर्भवति निष्फलम्॥" इति।

तत्रोच्यते—'न कर्मणः फलम्' इत्यादि।

---

[1] ज्ञानलक्षणो — ए, ऐ.
[2] 'देवदत्त' इत्येतन्नास्ति — अ.
[3] चाकर्मकर्तुग्रहि० — ऐ.
[4] ०कात्मना — ऊ, ऋ, ॠ.
[5] तत्कर्मभोक्ता — ऊ, ऋ, ॠ.
[6] तत्कर्म० — ऐ.
[7] संसारस्याभ्युपगमत्वात् — ऊ, ॠ.
[8] ततो नाभिन्न इति — अ, आ, ई, उ, ए, ॠ.
[9] ०सन्तानानुवर्ति० — ऐ.
[10] तेनैतत्फलं — ॠ.
[11] 'न तु' इत्यत्र 'ननु' इति दृश्यते — ऐ.
[12] ०दत्तकृतं — ऊ, ऋ, ॠ.
[13] 'इति अत्र' इत्यस्य स्थाने 'अन्यत्र' इति दृश्यते — ऐ.
[14] युक्तिरस्यैव — ऐ.
[15] दुर्बलता — ई, उ; दुर्लभत्वात् — ॠ.
[16] 'हि भावेषु' इत्यत्र 'भिन्नभावेषु' इति दृश्यते — ए.
[17] 'भावेषु प्राग्' इत्येतन्नास्ति — अ.
[18] 'मात्रेण' इत्यत्र 'मात्रे' इति दृश्यते — ऊ, ऋ, ॠ.
[19] न वेति — अ, आ, ई, उ, ए, ऐ.
[20] कस्य — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए.
[21] 'पञ्च' इत्यत्र 'प्रपञ्च' इति दृश्यते — आ, ई, उ, ए, ऐ.
[22] स्कन्धात्मना सदृश० — ऊ, ऋ, ॠ; स्कन्धात्मा सदृश० — ए.
[23] केयमप्रत्या० — अ.
[24] क्षणान्तरे नष्टत्वेनावि० — ऊ, ऋ, ॠ.
[25] ०कृतत्वेन विशेषा० — अ.
[26] सन्तानसिद्धेः — ॠ.
[27] न त्वदीयोऽपि — ऊ, ऋ, ॠ.
[28] अपिशब्दो नास्ति — आ.
[29] ०रनेकान्तिकः — अ.
[30] मन्त्रः — ऊ, ऋ, ॠ.
[31] एतत्सदृशार्थकः श्लोको महाभारते लभ्यते — 'यदि नात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु। न हि पापं कृतं कर्म सद्यः फलति गौरिव॥' महाभा० — १२.९१.२१.
[32] चेत्पुत्रेषु — ऊ, ऋ, ॠ.

**न कर्मणः फलं कश्चिदशुभस्य शुभस्य वा।**
**भुङ्क्तेऽन्योन्यकृतस्यापि युक्तिरेषा गतत्रपा॥ २९॥**

अयमर्थः — काम्यानां तावत् कर्मणां [1]"ज्योतिष्टोमेन [2]स्वर्गकामो यजेत" [3]इत्यादिभिः श्रुतिभिः [4]कर्माधिकारिविशेषणत्वेन फलं [5]श्रूयमाणं [6]कथं ततोऽन्यस्य कल्पयितुं शक्यते। तदविशेषणं [7]तु विध्यर्थानन्वितमेव। निषिद्धानामपि ब्रह्महत्यादीनां कामक्रोधादिभि[8]रनुष्ठीयमानानां फलं कर्तुरेव। नान्यस्य। [9]यच्छ्रूयते [10] —

"[11]अवीचौ नरके कल्पं [12]वसेयुर्ब्रह्मघातकाः।
क्षेत्रदारहरा[13]श्चैवासत्याश्च कृतघातिनः॥" इति।

ननु श्रूयत एव पुत्रेष्ट्यादावधिकारिणोऽन्यस्य फलम्। तदयुक्तम्। आरोग्यादिफलयुक्तेन पुत्रलक्षणेन [14]फलेन तत्पितु[15]रधिकारिण एव [16]फलं पक्वं, पितृतीर्थादि[17]श्राद्धेषु पुत्रस्यैव पितृसमुद्धरणेनेति। एवं शान्तिकपौष्टिकादिष्वपि मन्तव्यम्। कर्म[18]संस्कारस्य [19]फलजनकस्य भवद्भि-[20]स्तत्कर्त्रात्मन्येवाभ्युपगमात्। अस्माभिस्तु[21] तद्बुद्धाविति कुतोऽन्यत्र [22]फलसंभवः। उभयाधिकरण[23]कर्मयोगादेव पितृपुत्रादिसंबन्धात् फल[24]वैचित्र्यादिदर्शनाच्चेह [25]प्रागार्जितस्य कर्मणः सत्त्वमिव [26]फलभोक्त्रैकाधि[27]करण्यमप्यनुमानसिद्धमिति, [28]कथमधिकरणान्तरे फलसंभावना। कृत[29]नाशाकृतागम[30]दोषश्चेति।

---

[1] एतद्वाक्यं शाबरभाष्ये उद्धृतम् — ३. ६. ९. ३०.
[2] यजेत स्वर्गकामः — अ, आ, ई, उ, ए.
[3] इत्यादिश्रुतिभिः — ऊ, ऋ, ॠ.
[4] कर्माधिकार० — ऋ, ॠ, ऐ.
[5] श्रूयमाणानां कथं — ऐ.
[6] 'कथं ततोऽन्यस्य' इत्येतन्नास्ति — अ.
[7] तुशब्दो नास्ति — ऊ, ऋ, ॠ.
[8] ०रनुमीयमानानां — ए.
[9] यज्ज्ञायते — ऋ; यतः — ऐ.
[10] आकरो न लभ्यते।
[11] अवीची — अ, आ, ई, उ, ए, ऐ.
[12] वसन्ति ब्रह्म — अ, आ, ई, उ, ए, ऐ.
[13] ०श्चैव सत्याश्चानृतवादिनः — ऊ, ऋ, ॠ; ०श्चैव सत्याश्च कृत० — ऐ.
[14] 'फलेन' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[15] 'अधिकारिण एव फलं पक्वं' इत्यस्य स्थाने 'अधिकारित्वं' इति दृश्यते — अ.
[16] फलत्वात् पितृ० — ऊ, ऋ, ॠ; फलमपक्वं पितृ० — ऐ.
[17] श्राद्धे पुत्रस्यैव — अ, आ, ई, उ, ए, ऐ.
[18] ०संस्कारकस्य — आ.
[19] 'फलजनकस्य' इत्यस्य स्थाने "फलजनकं' इति दृश्यते — ऊ; 'च फलजनकं' इति दृश्यते — ऋ, ॠ.
[20] ०स्तत्कर्तृत्वात्मन्येवा० — आ; ०स्तत्कर्मात्मन्येवा० — ॠ; ०स्तकर्तात्मन्येवा० — ए.
[21] तुशब्दो नास्ति — अ, ऊ, ऋ, ॠ.
[22] 'फल' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[23] कर्मयागे पितृ० — ऊ, ऋ, ॠ.
[24] वैचित्र्यदर्शना० — ऊ, ऋ, ॠ.
[25] प्रागर्जितस्य — ऊ, ऋ.
[26] फलभोक्त्रैकाधिकरणः सिद्धमिति — अ.
[27] ०कारिण्यमनुमान० — आ, ०कारण्यमनुमान० — ई, उ, ए, ऐ
[28] कथमधिकारणान्तरे — ई, उ; कथमपि करणान्तरे — ऋ.
[29] ०नाशकृतागम० — अ.
[30] ०दोषाश्चेति — आ.

[1]कथं तर्हि एषा स्मृति[2]युक्तिः। गतत्रपा एव; श्रुत्यादिविरोधा[3]दप्रमाणमित्यर्थः। [4]किं तु फलाविनाशित्वा[5]दर्थवादो वा। यदि वा [6]शरीरान्तराण्येव च क्रमेण पुत्रपौत्रशब्दैरुच्यन्त इत्यविरोधः।

ननु दृष्ट एव अन्यैः कृतस्य कर्मण. [7]कृष्यादेर्लौकिकस्य, अन्येन [8]तस्करादिना भोगः। अत्रोच्यते। तेषां [9]कुम्भकारादिवत् [10]दृष्टेनैव [11]स्वरूपेण स्वकार्योत्पादकत्वाद् युक्तमेव तत उत्पन्नस्य कार्यस्य घटादेरिव [12]अन्यैराहरणम्। [13]उपपन्नं तु [14]यद्येन [15]कर्मणा भुज्यते [16]न तद् [17]भोक्तुभिन्नाधिकरणं संभवति। तदिदमुक्तम्[18] —

"[19]आर्जयेज्ज्ञानमर्थांश्च पुमानमरवत्सदा।
[20]आर्जितानपि भुञ्जीत शास्त्रार्थमविलोपयन्"॥ इति।

[21]ननु एतदपि [22]अर्थोत्पादन[23]रक्षणादि अदृष्टनिमित्तमेवेति। यदाहुः[24] —

"यदभावि न तद्भावि [25]भावि चेन्न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते"॥ इति।

सत्यम्। [26]यत्र तु दृष्टं निमित्तमस्ति, तत्सम्भवेऽत्र[27] नादृष्टकल्पना। [28]न हि [29]दृष्टे सत्यदृष्टकल्पना [30]युक्तिमती। तदिदमुक्तम्[31] —

---

[1] कथं तर्ह्यपि स्मृति० — अ; कथं तन्यैषा स्मृति० — ए.
[2] ०युक्त्यागमागतं तत्र पैल्वश्रुत्यादि० — अ; ०युक्तिस्तत्र पैल्वश्रुत्यादि० — ए.
[3] ०दप्रामाण्यमि० — अ, आ, ई, उ, ए, ऐ.
[4] 'किं तु' इत्यत्र 'कर्तुः' इति दृश्यते —ऊ ऋ, ॠ.
[5] ०दर्थवादे वा — ऊ, ऋ, ॠ.
[6] शरीराण्येव क्रमेणात्र पुत्र० — ऊ, ऋ, ॠ.
[7] कृष्यादेरलौकिकस्य — ऐ.
[8] तस्करादि भोगः — ॠ.
[9] 'कुम्भकारादिवत्' इत्यत्र 'कुम्भकारादि च' इति दृश्यते — ॠ; 'कुम्भकारादिव' इति दृश्यते — ऐ.
[10] दृश्येनैव — ऐ.
[11] रूपेण — ऊ, ऋ, ॠ.
[12] अन्योन्याहरणम् — अ, आ, ई, उ, ए, ऐ; अन्येनाहरणम् — ऊ, ऋ;
[13] उत्पन्नं — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[14] तद्येन — ऊ, ऋ, ॠ.
[15] 'कर्मणा भुज्यते न' इत्यत्र 'कर्मणाद्भुतेन' इति दृश्यते — ऊ, ऋ, ॠ.
[16] नकारो नास्ति — आ.
[17] भोक्तृभिन्ना० — ए.
[18] आकरो न लभ्यते।
[19] अर्जयेज्ज्ञान० — ऊ, ऋ, ॠ, ऐ.
[20] आर्जितामपि — अ, ऐ; आर्जितानि तु — ऊ, ऋ, ॠ.
[21] न त्वेतदपि — आ.
[22] अर्थोत्पादनरक्षादि — ऊ; अर्थोत्पादरक्षादि — ऋ, ॠ.
[23] ०रक्षणाददृष्ट० — ए.
[24] भर्तृहरिसुभाषितसंग्रहे ६६६.
[25] यद्भावि न तदन्यथा — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[26] यत्र तु दृष्टनिमित्त० — ई, उ, ए; यत्र दृष्टं न निमित्त० — ऊ, ऋ, ॠ; यत्र दृष्टं निमित्त — ऐ.
[27] 'अत्र' इत्यत्र तुशब्दो दृश्यते — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[28] 'न हि दृष्टे सत्यदृष्टकल्पना' इत्येतन्नास्ति — ऐ.
[29] दृष्टेऽदृष्टकल्पना — अ; दृष्टे कल्पना — ए.
[30] युक्तमिति — अ, ऐ; युक्तिमेति — ऊ, ऋ, ॠ.
[31] महाभारते कर्णपर्वणि ९८, २३०

"प्रायेण नीचा व्यसनेषु मग्ना
[1]निन्दन्ति दैवं [2]स्वकृतं [3]न तत्तत्।" इति।

[4]यत्र तु दृष्टस्य हेतोर्न कथंचिदपि [5]उपयोगः, तत्र अदृष्टमेव निमित्तम्। यदाहुः[6] —

"अजीर्णप्रभवा रोगाः" इत्यभिधाय,

"यस्तु कर्मकृतो व्याधि[7]र्मरणान्न निवर्तते"। इति।

एवं च धनार्जन[8]रक्षणादिष्वपि[9] [10]दृष्टेनैव रूपेण प्रवृत्तिरिति पुरुषार्थोपदेशशास्त्राणां साफल्यम्। दैवपुरुष[11]कारयोर्न विरोधः स्यात्। तस्करादीनां [12]च पुरुपार्थ[13]नियमव्यतिक्रमेण बलाद् [14]द्रव्याण्याहरतां [15]पापमेवेत्युक्तं [16]"किंचिद्दैवाद्धठात्किंचित् किंचित् [17]पुरुषकारतः" इति। एवं च केवलादृष्ट[18]निमित्तानामुभयादृष्टहेतुत्वेऽपि, [19]न पित्रदृष्टात्पुत्रादेः फलम्। किं तु स्वादृष्टादेवेति नानैकान्तिकता ॥ २९ ॥

इतश्च ग्राहकात्मनो न [20]क्षणिकत्वमित्युच्यते — 'केनोक्तम्' इत्यादि।

**केनोक्तं कुशलं कर्म शून्यत्वान्मुनिसत्तम।**

[21]क्षणिकत्वेन ग्राहकात्मनः क्षणान्तरे[22]ऽत्यन्ताभावः शून्यत्वमिति **केनोक्तम्**। कुशलकर्महेतुत्वात् [23]**कुशलं कर्म** [24]प्रज्ञापारमितेत्यादि शास्त्रम्। [25]न केनचित्[26]। [27]प्रत्येकस्य क्षणस्य तावति शास्त्रे वक्तृत्वाभावात्, तद्व्यतिरिक्तस्य[28] चान्यस्य स्थिरस्यानभ्युपगमादिति, तदपि शास्त्रं रथ्यापुरुष-

---

[1] नमन्ति — ए.
[2] सुकृतं — अ, ऐ; कुकृतं — ऊ, ऋ, ॠ; न तु दुष्कृतं स्वम् — महाभारतपाठः।
[3] न युक्ते — अ; न तत्ते — आ, ई, उ, ए, ऐ.
[4] यत्र दृष्टस्य तु हेतोर्न — ऐ.
[5] उपयोगतः — ऐ.
[6] आकरो न लभ्यते।
[7] ०र्मरणात्संनिवर्तते — ऊ, ऋ, ॠ.
[8] ०रक्षादिष्वपि — ऐ.
[9] अपिशब्दो नास्ति — ऊ, ऋ, ॠ.
[10] दृष्टेनैकरूपेण — ऐ.
[11] ०कारयोरपि तस्करादीनां — अ; ०कारयोरविरोधः तस्करादीनां — आ, ई, उ, ए, ऐ.
[12] चशब्दो नास्ति — ऋ.
[13] नियमविध्यतिक्रमेण — अ, आ, ई, उ, ऐ; नियमः सिध्यति क्रमेण — ए.
[14] द्रव्याद्यपहरतां — ऊ, ऋ, ॠ.
[15] पापमिवेत्युक्तं — ए.
[16] किंचिद्दैवाद्धधात्किञ्चित् पुरुष० — ऊ, ऋ; किंचिद्दैवाद्धधात्किचित्किंचित् पुरुष० — ॠ; किंचिद्दैवशद्धार्थकिंचित् पुरुष — ए; महाभारते वनपर्वणि, ३२, ३४ उ०
[17] पुरुषकार इत्येवं — अ, ई, उ, ए, ऐ; पुरुपाकार इत्येवं — आ.
[18] ०निमित्तादीनामुभय० — ए.
[19] निमित्तदृष्टात्पुत्रादेः। किं तु — ऊ, ऋ, ॠ.
[20] क्षणिकमित्युच्यते — ऊ, ऋ, ॠ.
[21] क्षणिकत्वे हि ग्राह० — ऊ, ऋ, ॠ.
[22] अत्यन्ताशून्यत्व० — अ; अत्यन्ताभावशून्यत्व० — आ, ई, उ, ए, ऐ.
[23] कौशलकर्म — ए; कुशलकर्म — ऐ.
[24] प्रज्ञापारमित्यादि — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ; प्रज्ञाव्यापारमित्यादि — ए.
[25] 'न' इत्यत्र 'च' इति दृश्यते — ए.
[26] 'केनचित्' इत्यत्र 'केवलम्' इति दृश्यते — अ; 'केचित्' इति दृश्यते — आ.
[27] 'प्रत्येकस्य' इत्यत्र 'अस्य' इति दृश्यते —अ, आ.
[28] तद्व्यतिरिक्तं — अ.

[1]वाक्यमिव मिथ्याध्यारोप[2]पूर्वत्वेनासर्वज्ञप्रणीतत्वात् [3]परिहरणीयमेव। परिगृहीतं च मोक्षोपायत्वेन भवद्भिः। [4]यदुक्तम् —

[5]"प्रत्यक्षेणानुमानेन [6]दृष्टादृष्टस्य शासनात्।
[7]तृतीयस्थानसंक्रान्तौ [8]न्याय्यः शास्त्रपरिग्रहः॥" इति।

ततस्तद्वक्तुरनध्यारोपितमेवाक्षणिकत्वं [9]ग्राह्यम्॥

[10]तथा — 'को वात्र मुच्यते' इत्यादि।

**[11]को वात्र मुच्यते ज्ञानादुपा[12]यादन्य आत्मनः॥३०॥**

[13]**अत्र** [14]ग्राहकात्मनः [15]क्षणिकत्वपक्षे [16]**को वा** [17]**ज्ञानाद्** [18]अहंकारोपकाराद्यास्रवप्रतिपक्षभूतनैरात्म्यभावनाद्वारेण [19]मुक्त्यापारभूताद्, **अन्यः आत्मनो** मुच्येत। न कश्चित्। [20]ज्ञानक्षणानां स्वरसनिरोधेन[21] क्षणान्तरे [22]शून्यत्वाज्ज्ञानाभ्यासोऽशक्या[23]नुष्ठानत्वादनुपदेश्य एव। उपदिष्टश्च। यदुक्तम्[24]—

"सर्वेषां सविपक्षत्वान्निर्ह्रासातिशयाश्रिताः।
सात्मीभावात्तदभ्यासा[25]द्धीयेरन्नास्रवाः क्वचित्॥" इति।

तस्मान्नान्य आत्मनः स्थिरग्राहकत्वाद् मुक्त इति॥३०॥

एवं ग्राहकात्मनः स्थैर्यं प्रसाध्य कर्तृत्वमपि साध्यते — 'स्पष्टानि' इत्यादि।

---

[1] ०वाक्यवन्मिथ्या० — ऊ, ऋ, ॠ, ए, ऐ.
[2] ०पूर्वकत्वेनासर्वज्ञ० — ऊ, ऋ, ॠ, ऐ; पूर्वकत्वे न तु सर्वज्ञ — ए.
[3] अपरिग्रहणीयमेव — आ, ई, उ, ऊ, ऋ, ॠ, ऐ; उपरिग्राहणीयत्वमेव — ए.
[4] 'यदुक्तम्' इत्यत्र 'युक्तम्' इति दृश्यते —ए.
[5] आकरो न लभ्यते।
[6] दृष्टादृष्टवशात् . . . — अ; दृष्टादृष्टेष्वबाधनात् — ऊ, ऋ, ॠ.
[7] प्रमाणवार्तिके ४.५१ उ०.
[8] न्यायशास्त्र० — अ, ऐ; कार्यः शास्त्र० — ए.
[9] 'ग्राह्यम्' इत्येतन्नास्ति — अ.
[10] 'तथा' इत्येतन्नास्ति — अ.
[11] को वात्रात्मोच्यते — मु, उ, ओ.
[12] ०याद्वान्यदात्मनः — मु, उ; ०याद्वान्यवर्त्मनः — ऐ, ओ.
[13] 'अत्र' इत्येतन्नास्ति — आ, ई, उ.
[14] ग्रहात्मनः — ऊ, ऋ.
[15] क्षणिकपक्षे — आ.
[16] 'को वा' इत्यत्र 'को वात्मा' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[17] 'ज्ञानाद्' इत्यारभ्य उत्तरत्र ३४ उ०, ३५ पू० वृत्तौ 'सुषुप्तादावप्यखण्डितस्वसंवित्' इत्यन्तो भागः 'ऊ, ऋ, ॠ' एतासु तिसृष्वेव मातृकासूपलभ्यते।
[18] अहंकारमुपकाराद्यास्रव० — ऊ; अहंकारमुपकाराद्याश्रय० — ऋ; अहकारमपकाराद्याश्रय — ॠ; आस्रवशब्दविवरणम् अभिधर्मकोशे तद्भाष्ये च — १. ४
[19] मुक्त्यपारभूताद् — ऊ, ऋ.
[20] ज्ञानपक्षणानां — ॠ.
[21] निरोधशब्दविवरणम् अभिधर्मकोशे तद्भाष्ये च १. ५, ६.
[22] शून्यत्वाज्ज्ञाना० — ऊ, ऋ.
[23] ०नुष्ठानत्वादावुपदेश्य — ऊ, ऋ, ॠ.
[24] आकरो न लभ्यते।
[25] धीयेरन्नाश्रवाः — ऊ, ॠ; धीयेरत्रास्रवाः — ऋ.

**स्पष्टानि करणान्यत्र कर्म चात्र परिस्फुटम्।**
**एवं [1]करणकर्मभ्यां कर्ता सिद्ध्य[2]त्यसंशयः ॥३१॥**

सर्वभावानां हि क्षणिकत्वाभ्युपगमेन भवद्भिः कर्तृकर्मकरणादिकारकविशेषवादं प्रतिक्षिप्य कारणवाद आश्रितः। यदुक्तम्[3] —

"यथा बीजादिसामग्री स्वकार्यस्येह [4]कारणम्।
पाचकादि तथा पाके सन्ति नो कारकाण्यतः॥" इति।

तदयुक्तम्। एवं हि देवदत्तो दासैर्भिक्षून्परिचरति, उपहन्ति वेति परिचरणोपघातयोः सर्वेषां कारणत्वाद् देव[5]दत्तवद्दासस्य भिक्षूणां च पुण्यं पापं च स्यात्। तद्द्रष्टुः सर्वज्ञस्यापि ज्ञातृज्ञेययोरन्योन्यं कारणत्वेनैव भवद्भिः सत्त्वाभ्युपगमादित्यनिष्टं भवतां प्रसज्यते।

न। तस्या एव सामग्र्या अन्तरविशेषकृतत्वात्।

कोऽसौ विशेषः? सर्वेषां कारणत्वाविशेषात्।

न। उपकार्यस्य वध्यस्य वा भिक्षोरसौ स्वसन्तान एवोपकारो वधो वा। देवदत्तदासादेस्तु परसन्तान एव। ।

किमतः। न ह्येतावता भिक्षोरकारणत्वम्। तत्क्षणस्य भवद्भिस्तत्र [6]समनन्तरप्रत्ययत्वेनाभ्युपगमात्।

नन्वयमेव विशेषः, [7]तस्योपादानकारणता तत्र, तेषां तु सहकारिकारणत्वमिति। न। तस्याप्यसम्भवादित्युक्तम्[8]। संभवे वा [9]कारणत्वाविशेषात्, देवदत्तदासादेरर्थान्तरविशेषवत् सोऽप्यविशेष एव। तदपि कारणत्वं विशिष्यते इति चेत्। कथम्? "देवदत्तस्यात्र प्रयोजकत्वात्, दासस्य प्रयोज्यत्वात्, भिक्षूणां चोपकार्यत्वादुपहन्यत्वाद्वा, तद्द्रष्टुश्च तद्दर्शनक्रियान्तरहेतुत्वाच्चेति।

तर्हि एतान्येव तानि कर्तृकर्मकरणादीनि **स्पष्टानि** सिद्धानीति, न कारणवाद एव। अपि तु कारकविशेषवादोऽपीति, ग्राहकात्मनः कर्तृत्वसिद्धिः। तदिदमुक्तम्[10] —

"[11]प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः।
[12]अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कारकः"॥ इति।

तदेव चात्मत्वं [13]तस्य [14]कर्तृत्वं तस्य चैतन्येनावियुक्तमेव स्वात्मनि स्वसंवेदनप्रत्यक्षेण स्वदेहचेष्टादिहेतुत्वेन सिद्धम्॥३१॥

[15]परात्मन्यपि अत एव भूतपरिस्पन्देनानुमीयत इत्युच्यते — 'भूतानाम्' इत्यादि।

**भूतानामप्यचैतन्यात्प्रवृत्तिर्नेष्यते स्वतः।**
**वक्तव्यादान[16]गमनेषूत्सर्गानन्दकर्मणि ॥ ३२ ॥**

---

[1] करणकर्तृभ्यां — ऊ, ऋ, ॠ.
[2] ०त्यसंशयम् — ऊ, ऋ, ॠ.
[3] आकरो न लभ्यते।
[4] करणम् — ऊ, ऋ.
[5] ०दत्तादिवद्दा० — ऊ.
[6] समनन्तरं प्रत्यय० — ऊ.
[7] तत्रोपादान० — ऊ.
[8] मतङ्ग० विद्या० ६. २७ उ० वृत्तौ।
[9] कारणस्य विशेषात् — ॠ.
[10] आकरो न लभ्यते।
[11] प्रवृत्ती च निवृत्ती च — ऊ.
[12] अप्रवृत्तप्रवृत्तो — ऋ.
[13] तच्च — ऋ, ॠ.
[14] कर्मत्वं — ऊ.
[15] परमात्मन्यपि — ऊ, ऋ, ॠ.
[16] ०गमने उत्सर्गा० — ऊ, ऋ, ॠ.

**श्रवणे स्पर्शने रूपे रसे गन्धे च [1]तत्त्वतः।**
**अनेनैवानुमानेन चितिर्ज्ञानक्रियात्मिका ॥३३॥**
**लक्ष्यते सा शरीरेऽस्मिन्प्रत्यक्षेणाप्यथोच्यते।**

तदुक्तं भवद्भिरपि[2] —
'बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्ग्रहात् ॥
[3]ज्ञायते यदि धीः" इति ॥

नन्वेवं ग्राहकात्मनो ज्ञानरूपस्य अक्षणिकत्वेऽपि "पादे मे वेदना, शिरसि मे वेदना, सुखवेदना, '[4]दुःखनाशोऽभूद् भविष्यति वा" इत्युत्पत्त्यपवर्गयोः संवेदनादनित्यतैव। यदाहुः[5] —
घटज्ञान[6]मिदं ज्ञानं घटज्ञानविलक्षणम्।
घट [7]इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ॥" इति ॥

अत्रोच्यते — 'आशिरो लक्षणे' इत्यादि।

**'[8]आशिरोलक्षणे काये [9]येयं संविच्चितेः सदा ॥३४॥**
**आह्लादे वाऽप्यथोद्वेगे"**

**चितिः** ग्राहकात्मा। यद्वक्ष्यति[10] — "चितेश्चित्सहजो धर्मः" इति। तस्या [11]**आशिरोलक्षणे काये** विषयेऽनेकस्मिन् युगपद् **या** [12]**संविद् आह्लादे वाऽप्यथोद्वेगे** सुखदुःखादिविषये क्रमेण **सा सदा** सर्वकालम्। यत्तदोर्नित्यमभिसंबन्धात् सेत्यनुवर्ततेऽत्र। तदयमर्थः — न ग्राह्यभेदेऽपि ग्राहकात्मा युगपदिव क्रमेणापि भिन्नोऽवभासते। अपि तु सर्वदैव। ग्राह्योपाधिभेदेऽपि अना-[13]स्वादितस्वात्मभेदः, कालत्रयेऽपि तिरस्कृत[14]स्वगतप्रागभावप्रध्वंसाभावः, नानाविधप्रमाणाद्यनेकचित्तवृत्त्युदयसंवेदनेऽप्यकम्पित[15]तद्ग्राहकस्थैर्यवेदनः, [16]वृत्त्यन्तरालेऽप्यविलुप्तज्योतिः, सुषुप्तादावप्यखण्डितस्वसंवित्, सततमेवार्थाव[17]गमकत्वेन [18]भासनाद् आत्मपदप्रतिपाद्यः, [19]प्रतिपुरुषं स्वसंवेदन-[20]सिद्धः, स्थिरभाव [21]इति किमत्रान्येन साधनेन। [22]न हि "उष्णोऽग्निः, शीतं [23]हिमम्" इत्यादा-

---

[1] नित्यशः — ऊ, ऋ, ॠ.
[2] आकरो न लभ्यते।
[3] ज्ञायते धीः — ऊ, ऋ, ॠ.
[4] दुःखाशाभूत् — ऊ, ऋ, ॠ.
[5] वाक्यपदीये — ३, १. १०५.
[6] ०मिति ज्ञानं — वाक्यपदीयपाठः।
[7] इत्यभि यज्ज्ञानं — ऊ; इत्यभि विज्ञानं — ऋ, ॠ.
[8] अशिरोलक्षणे — ऊ, ॠ.
[9] ये संवित्तिश्चितेः — ऊ, ऋ; यं संवित्तिश्चितेः — ऋ.
[10] मतङ्ग० विद्या० ६. ८१ पू०.
[11] अशिरो — ॠ.
[12] 'संविद् आह्लादे' इत्यस्य स्थाने 'चाह्लादे' इति दृश्यते — ऊ.
[13] ०स्वादितयात्मभेदः — ऊ.
[14] सुगत० — ऊ, ऋ, ॠ.
[15] ०तद्ग्राहकः स्थैर्य० — ऊ, ऋ, ॠ.
[16] यत्यन्तराले० — ॠ.
[17] ०गमत्वेन — अ, आ, ई, उ, ए, ऐ.
[18] उद्भासनाद् — ए.
[19] 'प्रतिपुरुषं' इत्यस्य स्थाने 'पुरुषः' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[20] ०सिद्धिः स्थिर एवेति — ऊ, ऋ, ॠ.
[21] इवान्येन साधनेन — अ.
[22] नकारो नास्ति — ऐ.
[23] हिमादावित्यपि — ए.

वपि[1] प्रत्यक्ष[2]व्यतिरेकेणान्यत् साधनमुपपद्यते। [3]तामेवात्म[4]संविदमभिन्नामनपायिनीं चाश्रित्य सर्वैः कालान्तरफलानि कर्मा[5]ण्यारभ्यन्ते। [6]क्षणिकत्ववदनित्यत्वेऽपि तस्याः सर्व[7]व्यवहार[8]प्रत्यस्तमयः। सर्वज्ञानानां [9]ज्ञानान्तरोत्पत्ति[10]काल एव ध्वस्तत्वात् [11]कः प्रवर्तेत[12] [13]कुत्र किमर्थं वा। यतो न च ततोऽन्यत्संविद्रूपं पश्याम इत्युक्तम्। [14]तदयमनपह्नव[15]नीय एव ग्राहकात्मनो ज्ञानस्य सर्वदा स्थिर[16]रूपः प्रकाशो [17]व्यवहारहेतुभूतः कालान्तरभावि[18]फलप्रवृत्तिकारणं सर्वैरेव। न च तत्रारोपः संभवतीत्युक्तम्[19] — [20]"सर्वमाल[21]म्बनं [22]भ्रान्तिर्न स्वात्मनि [23]कदाचन" इति। नापि स्थिरस्यार्थक्रियानुपपत्तिर्बाधिका[24], अर्थभेदव्यवस्थानुपपत्तिर्वा इत्युक्तम्। तत् स्थूलसूक्ष्मयोरिव स्थिरत्वास्थिरत्वयोः परस्परविरुद्धरूपत्वाद् विद्युदादावस्थैर्यत्वं[25] सिद्धं [26]सत् स्थैर्यं व्यावर्तयति [27]यथा, तद्वदत्र स्वात्मन्यारोपासंभवेन स्थैर्यमवभास[28]मानमसंशयमस्थैर्यं व्यवच्छिनत्ति, तृतीयप्रकारासंभवादिति।

अत एव न आह्लादोद्वेगादीनां [29]संविद्धर्मत्वम्। तदपायेऽपि[30] संविदोऽनपायात्। अपि तु संवेद्यत्वमेव। [31]यदपि —

[32]"अविशेषेऽपि बाह्यस्य विशेषात् प्रीतितापयोः।
भावनाया विशेषेण [33]नार्थरूपाः सुखादयः॥" इति।

तेषां [34]संविद्धर्मत्वानुमानम्। तदपि [35]प्रत्यक्षविरुद्धत्वादयुक्तमेव। भावनाविशेषेण बुद्धि-

---

[1] अपिशब्दो नास्ति — ऊ, ऋ, ॠ.
[2] ०व्यतिरेकेऽन्यत्–ऊ; ०व्यतिरेकमन्यत्–ऋ, ॠ.
[3] तामेव चात्म० — ऊ, ऋ, ॠ.
[4] संविदभिन्ना० — ऊ, ऋ, ॠ, ऐ.
[5] ०ण्यारभन्ते — ऊ, ऋ, ए.
[6] 'क्षणिकत्ववद्' इत्येतन्नास्ति — अ; क्षणिकत्ववेदनित्य० — ऊ, ऋ, ॠ.
[7] व्यवहारः प्रत्यस्त० — अ, ई, उ, ए.
[8] प्रत्यस्तमयसर्व० — ऐ.
[9] ज्ञानानन्तरो० — ई, उ.
[10] ०कालेऽस्तमयत्वात् — अ, आ, ई, उ, ए; कालास्तमयस्थत्वात् — ऐ.
[11] 'कः' इत्यत्र 'कर्म' इति दृश्यते — ए.
[12] प्रवर्तते — आ, ई, उ, ऋ.
[13] 'कुत्र' इत्यत्र 'अतः इति दृश्यते — अ.
[14] तदयमपाहवनीय — ऐ.
[15] ०नीयमेव —अ.
[16] ०रूपं प्रकाशो — अ; ०रूपप्रकाशो — आ.
[17] व्यवहारेण हेतु० — ए.
[18] ०फलवृत्तिः कारणं — ऐ.
[19] अत्र 'नापि बाधः' इत्यधिकम् — ऊ, ऋ, ॠ.
[20] न्यायबिन्दुटीकायां १९ तमे पृष्ठे 'इति योगाचारमते' इति निर्दिश्य, एतत्सदृशमर्धं लभ्यते — 'सर्वमालम्बने भ्रान्तं मुक्त्वा तथागतज्ञानम्' इति।
[21] ०लम्बने — आ, ई, उ, ए.
[22] भ्रान्तं न — ऊ, ऋ, ॠ.
[23] 'कदाचन। इति' इत्यस्य स्थाने 'यतः' इति दृश्यते — ऊ, ऋ, ॠ.
[24] ०पत्तिर्बाधकम् — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए; ०पत्तिव्यापकम् — ऐ.
[25] ०वस्थैर्यं — ऊ, ऋ, ॠ; ०वस्थैर्युक्तं — ए.
[26] सस्थैर्यं — आ, ऊ; 'सत्' इत्येतन्नास्ति — ऋ, ॠ; सत्स्थैर्यं — ए.
[27] यदा — ऐ.
[28] ०मानं संशयस्थैर्यं — ऐ.
[29] तद्धर्मत्वम् — अ, आ, ई, उ, ए, ऐ.
[30] अपिशब्दो नास्ति — ऐ.
[31] यद्यपि — अ, ऋ.
[32] आकरो न लभ्यते।
[33] 'नार्थरूपाः' इत्यारभ्य 'भावनाविशेषेण' इत्यन्तं नास्ति — आ.
[34] संविद्धर्मानु० – अ, ऋ.
[35] प्रत्यक्षत्वादयुक्तमेव — ऊ, ॠ; अप्रत्यक्षविरुद्धत्वादयुक्तमेव — ऐ.

विशेष[1]सिद्ध्या तेषां विशेषस्यान्यथासिद्धत्वाच्च। [2]एवं च ज्ञान[3]शब्देन भवतां यद्यत्र ग्राहकात्मसंविदेव विवक्षिता [4]तदासिद्धो हेतुः। तत्रोत्पत्त्यपवर्गयोः [5]संवेदनाभावाद्युगपत् प्रतिभासे [6]इव क्रमप्रतिभासेऽपि ग्रमेय[7]भेदेन [8]घटज्ञानादिभेदस्यात्र[9] कल्पितत्वादिति ॥

अथ तद्ग्रहणोत्तरकालभाविनी या [10]अध्यवसायात्मिका संवित्, [11]सात्र [12]ज्ञानशब्देनोच्यत इति। [13]तत्राप्युच्यते — 'मनःसंकल्पिता' इत्यादि।

**[14]मनः संकल्पिता सती।**
**बुभोज [14]भोक्ता तां पश्चादहं भोक्ता [15]च नान्यथा ॥३५॥**

सैव [16]ग्राहकात्मसंविद् मनःप्रणिधानेन विषयीकृता **सती** यदा भवति तदा **ताम्** एवात्मा **पश्चाद्**[17] [18]अर्थग्रहणोत्तरकालं **बुभोज**[19] भुक्तवान्। [20]भोगस्य [21]संवेदनात्मकत्वात्, "घटमहं [22]जानामि" [23]इत्यादाविव **अहम्** इति परामर्शेन विषयीकृतवानित्यर्थः। तस्य [24]गौरोऽहमित्यादि[25]विशेषणयुक्तस्य शरीरादिविषयत्वेन [26]निर्विशेषेण **नान्यथो**पपत्तिः। यतः [27]सोऽपि परामर्शः प्रत्यक्ष एव। यदाहुः[28] —

[29]अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।
[30]बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥

---

[1] ०सिद्धा तेषां — अ, ऊ.
[2] 'एवं च' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[3] ०शब्दे च भवतां — ॠ.
[4] तदपि सिद्धो — ऊ, ॠ.
[5] संवेदनभावा० — अ, आ.
[6] एव — ऐ.
[7] 'भेदेन' इत्यत्र 'भेदेऽपि' इति दृश्यते — ऊ, ऋ, ॠ.
[8] 'घट' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[9] 'अत्र' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[10] अध्यवसायात्मकसंवित् — अ; व्यवसायात्मिका संवित् — ऊ, ऋ; व्यवसायात्मिकसंवित् — ॠ.
[11] मनसात्र — आ.
[12] क्रमशब्देनोच्यत — ऐ.
[13] तत्रोच्यते — अ, ई, उ, ऊ.
[14] भोक्तृतां — मु, उ; भोक्तातः — ओ.
[15] न चान्यथा — ऊ, ऋ, ॠ.
[16] ग्राहात्म० — आ, ऋ; ग्रहात्म० — ऊ, ॠ.
[17] अत्र इतिशब्दोऽधिकः — आ, ई, उ, ऋ, ॠ, ए, ऐ.
[18] अग्रहणोत्तर० — ऊ, ऋ, ॠ; अर्थः ग्रहणोत्तर० — ऐ.
[19] अत्र इतिशब्दोऽधिकः — ऊ, ऋ, ॠ.
[20] भोग्यस्य — ऐ.
[21] असंवेदना० — ऊ; संवेदनात्मत्वात् — ॠ.
[22] वेद्मि — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[23] इत्यादावेव — ऊ, ऋ, ॠ.
[24] परोऽहमि० — ऊ, ऋ, ॠ.
[25] विशेषयुक्तस्य — आ.
[26] निर्विशेषणस्य नान्य० — आ, ई, उ, ए, ऐ; विशेषणस्य नान्य० — ऊ, ऋ, ॠ.
[27] सोऽपि च परामर्शप्रत्ययः प्रत्यक्ष — ऊ, ऋ, ॠ.
[28] श्लोकवार्तिके — १. १. ४. ११२, १२०.
[29] अस्मिन् हि लोचनं ज्ञानं — अ; अस्ति ह्यालोचनज्ञानं — ऊ, ऋ; अस्ति ह्यालोचनज्ञानं — ॠ; अस्ति ह्यालोचनाज्ञानं — श्लोकवार्तिकपाठः।
[30] बालमोहादि — ऐ.

ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया[1]।
बुद्ध्यावमीयते नापि प्रत्यक्षत्वेन संमता ॥'' इति ।

ततश्च घटोऽयमितिवदनुभव[2]पृष्ठभाविना निश्चयप्रत्ययेन विषयी[3]कृतत्वादात्मापि प्रत्यक्षेण [4]निश्चित एव । तस्य [5]च परामर्शात्मनो ज्ञानस्योत्पत्त्यपवर्गयोगसिद्धावपि बुद्ध्यहंकारधर्मत्वेन व्यधिकरणत्वान्न[6] ग्राहकात्मन्यनित्यत्वसाधने सामर्थ्यं यथा चास्य बुद्ध्यहंकारप्रकरणयोर्वक्ष्यामः[7]। तदपेक्षया च —

[8]घटज्ञानमिति ज्ञानं [9]घटज्ञानविलक्षणम् ।''

[10]इत्यादिज्ञानभेदो वास्तव [11]एवेत्यविरोधः । एवं [12]स्वपरात्म[13]प्रकाशकतया ज्ञानशक्तिरूपेण [14]परामर्शाच्च आत्मा प्रत्यक्ष उक्तः ॥३५॥

अधुना [15]प्राक् प्रति[16]ज्ञातेन क्रियाशक्तिरूपत्वे[17]नाप्युच्यते — 'प्रत्यक्षतोऽथवा' इत्यादि ।

**प्रत्यक्षतोऽथवा सिद्धा या प्रयत्नेन नित्यशः ।**
[18]**नादात्मकेन भावेन वायुभूतेन लक्ष्यते ॥३६॥**
**आधाराधेयसामर्थ्याज्जगत्यस्मिन् महामुने ।**

प्रकारान्तरार्थः **अथवेति**। **या** चितिः संवित् **प्रयत्नेन** क्रिया[19]शक्त्यात्मना उद्योगरूपेण प्रत्यक्ष-सिद्धा । [20]**तां** [21]**पश्चाद् बुभोज भोक्ता** इत्यनुवर्तते । ''पश्चादिदमहं करोमि'' इति परामर्शेन विषयीकृतवानित्यर्थः ।

किं चानुमानेनापि सा[22] चेतना आत्म[23]स्वभावो लक्ष्यत इति वैशेषि[24]कच्छायया आत्मनः

---

[1] ०भिर्यथा — ऊ, ऋ, ए, ऐ.
[2] ०दृष्टभाविनां — ए.
[3] ०कृतत्वेनात्मप्रत्यक्षेण — अ; ०कृतत्वेनात्मा प्रत्यक्षेण — आ, ई, उ, ए; कृतत्वेन नात्मा प्रत्यक्षेण — ऐ.
[4] निश्चीयत एव — अ.
[5] चशब्दो नास्ति — ऊ, ऋ.
[6] व्यधिकरणासिद्धत्वान्न — आ, ई, उ, ए; व्यधिकरणसिद्धत्वान्नतु० — ऊ, ऋ, ॠ; विषयीकरणसिद्धत्वान्न — ऐ.
[7] मतङ्ग० विद्या० १७. २; १८. ५ उ०—११ वृत्तौ ।
[8] वाक्यपदीये ३.१.१०५ पू०.
[9] पटज्ञानाद्विलक्षणम् — अ, आ, ई, उ, ऐ; पटज्ञानविलक्षणम् — ऊ, ऋ, ॠ; अपर-ज्ञानाद्विलक्षणम् — ए.
[10] इत्यदिविज्ञान० — ऊ, ऋ, ॠ.
[11] एवाविरोधः — अ.
[12] स्वपरमात्म० — अ, ई, उ, ऋ, ॠ, ऐ.
[13] ०प्रकाशतया — ऐ.
[14] परामर्शश्चात्मा — ऊ, ऋ, ॠ; परार्थश्चात्मा — ए; परामर्शात्मा — ऐ.
[15] मतङ्ग० विद्या० ६. ३२ – ३४ पू०.
[16] ज्ञानेन — ए; ज्ञातः — ऐ.
[17] ०नाप्यथोच्यते — ऋ, ॠ.
[18] नादात्मिकेन — ओ.
[19] ०शक्त्यात्मनो योगरूपेण — ए; ०शक्त्या नात्मनोद्योगरूपेण — ऐ.
[20] ताः — अ.
[21] 'पश्चाद्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[22] 'सा' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[23] ०स्वभावाल्लक्ष्यते — अ, आ, ई, उ, ऐ; ०स्वभावाल्लक्ष्यन्ते — ऐ.
[24] ०काशयात्मनः — अ.

संवेद्यत्व[1]मभ्युपगम्योच्यते — 'नादात्मकेन भावेन' इति, वाग्व्यवहारात्मना। यदाहुः[2] —

"आकाशवायुप्रभवः शरीरात् समुच्चरन्वक्त्रमुपैति नादः।
स्थानान्तरेषु प्रविभज्यमानो [3]वर्णत्वमागच्छति [4]यः स शब्दः॥"

[5]तथा वायुभूतेन भावेन [6]प्राणापानप्रेरणरूपेण [7]कायव्यवहारात्मना [8]जगति जन्मवज्जन्तुचक्रे अस्मिन् [9]सा क्रियाशक्तिरात्मस्वभावतया[10] लक्ष्यते। यतः [11]आधारेण कारणेन [12]विना आधेयं कार्यं न संभवत्येव। न च [13]कायकरणानां तत्र कारणत्वम्। तेषां [14]तत्प्रेर्यत्वेनैव सिद्धेः, पारिशेष्याद् आत्मन एवेति। तदेव [15]च कर्तृत्व[16]मनुभवादात्मनोऽनुमानसिद्धं न क्षणिकस्योपपद्यते इति [17]नैरात्म्याभावः॥

[18]अथ मतङ्गमुनिः सांख्यच्छायया सर्वथा आत्मनो[19]ऽनुमानेन [20]कर्तृत्वासमर्थनाय [21]हेतोरस्य अन्यथासिद्धत्वमाह — 'वायोः प्रवृत्तिः' इत्यादि।

**मतङ्ग उवाच —**

**वायोः प्रवृत्तिरत्रापि तच्च भूतमचेतनम्॥३७॥**
**[22]अयस्कान्तेऽपि [23]सामर्थ्याद् दृष्टं यद्भ्रमणादिकम्।**
**तस्मादयं न [24]नियमः स्फुटः [25]प्रस्पन्दनादिकः॥३८॥**

यत्र ह्यन्यस्य हेतुत्वं [26]न संभवति सः [27]पारिशेष्यस्य विषयः। **वायोस्तु** अचेतनस्यास्य बाह्यवृक्षादिकम्पादाविव **अत्रापि** आध्यात्मिके [28]वाक्शरीर[29]परिस्पन्दादौ [30]**प्रवृत्तिः** संभवत्येव। नाप्यचेतनस्य **प्रवृत्तिहेतुत्वमसिद्धम्**। अयस्कान्ततृणमणिखण्डानामयस्तृण[31]भ्रमणादिप्रवृत्तिहेतुत्वेन

---

[1] ०मप्यभ्युप० — ऊ, ऋ, ॠ.
[2] आकरो न लभ्यते।
[3] वक्तृत्वमागच्छति — ए.
[4] यस्तु शब्दः — ए.
[5] तथाभूतेन — ऐ.
[6] प्राणापानप्रेरणा० — ऊ, ऋ; प्राणापाने प्रेरणा० — ॠ.
[7] कार्यस्य व्यव० — अ, आ; कार्यव्यव० — ऐ.
[8] जगज्जन्म० — आ.
[9] या — ऐ.
[10] अत्र चशब्दोऽधिकः — ऐ.
[11] आधारे न कारणेन — ऊ, ॠ.
[12] विना ध्येयं — ऊ; विनाध्येयं — ऋ, ॠ.
[13] कार्यकरणानां — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[14] तत्प्रेर्यत्वेन सिद्धेः — अ, आ, ई, उ, ए; यत्प्रेर्यत्वेन सिद्धिः — ऐ.
[15] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[16] ०मनुभवात्मनो — आ, ई, उ, ऊ, ऋ, ॠ, ए; ०मनुभावात्मनो — ऐ.
[17] नैरात्म्यभावः — अ, ई, उ.
[18] अत्र — ऊ, ऋ, ॠ, ए, ऐ.
[19] अनुमानेन' इत्येतन्नास्ति — ऊ, ऋ, ॠ; अनुमाने कर्तृत्वे समर्थनाय — ए.
[20] कर्तृत्वसमर्थनाय — आ, ई, उ, ऊ, ऋ, ॠ, ए.
[21] हेतोरन्यथा० — ऊ, ॠ; हेतुरन्यथा — ऋ.
[22] अयस्कान्तोऽपि — ओ.
[23] सामर्थ्यं दृष्टं — ऊ, ऋ, ॠ.
[24] नियमं — ऐ.
[25] प्रस्पन्दनात्मकः — मु, उ, ओ; प्रस्पन्दनादिकाः — ॠ; प्रस्यन्दनात्मकम् — ऐ.
[26] नकारो नास्ति — ऊ, ॠ.
[27] परिशेष्यस्य — ऊ, ऋ, ॠ.
[28] वा तच्छरीरे परि० — ऐ.
[29] 'परि' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[30] वृत्तिः — ऊ, ऋ.
[31] ०भ्रमणादिषु प्रवृत्ति० — ऊ; ०भ्रमणादिषु वृत्ति० — ॠ.

दर्शनात्। यतश्चैवं तस्मात् [1]न स्फुटः चिदात्म[2]स्वभाव [3]एव प्रस्पन्दनादिकः क्रियाशक्ति[4]रूप [5]इत्ययं नियमः [6]अस्मादनुमाना[7]दसिद्ध इति. [8]कुतश्चेतनस्य कर्तृत्वान्यथानुपपत्त्या नैरात्म्याभावः प्रागुक्त इति ।। ३७-३८।।

अत्रोत्तरम् — 'वायुः प्रवाहकत्वाद्' इति।

**परमेश्वर उवाच —**

**वायुः प्रवाहकत्वात्तु सदोपात्तगतिः स्मृतः।**
**निश्चलत्वं हि वैधर्म्यं [9]तच्चैवात्रोभयोरपि ।।३९।।**
**[10]यथाभिमानिके ह्यात्मा बाह्येऽप्येवानुमीयते।**
**अस्ति धारयिता तस्मात्प्रेरकश्च न संशयः ।।४०।।**
**अयस्कान्तप्रवृत्तौ च [11]नासमाधिः कदाचन।**
**[12]तस्यैवापेक्षते नित्यं योक्तारं मुनिपुङ्गव ।।४१।।**

यदि हि वायुरत्र कारणं स्यात्। तदासौ प्रवहतीति, [13]प्रवाहकैकस्वभावत्वात् **सदोपात्तगतिः** [14]प्रवहणस्वभाव एव भवेत्। न च [15]भवति। [16]तस्माद् **वैधर्म्यं निश्चलत्वम्** [17]अप्रवहणस्वभावत्वं यत् **तद् उभयोरपि** बाह्याध्यात्मिकयोर्वाय्वोः[18] कदाचिद् दृश्यते यतः। **तस्माद्** अत्रापि तन्निमित्तेन कारणान्तरेण भवितव्यम्। तच्च न कर्म। तस्य [19]कृष्यादिकर्मवत् स्व[20]फलमात्रजनन एव उपयोगादित्युक्तम्[21]। एवं चान्यथानुपपत्त्या अस्मिन् **यथाभिमानिके**[22] अहंकारवृत्तितया वक्ष्यमाणे[23] न तु सांख्यानामिव [24]सामान्यकरणवृत्तित्वेन। [25]आन्तरे प्राणाद्यात्मके वायौ, **अपि**शब्दात् प्रागुक्ते वाक्शरीर[26]स्पन्दात्मके कार्ये च **आत्मा प्रेरकोऽनुमीयते**। तथा[27] **बाह्येऽपि** वायौ [28]कदा-

[1] नकारो नास्ति — अ, आ.
[2] ०स्वभावप्रस्पन्द० — ए.
[3] 'एव' इत्येतन्नास्ति — अ, आ, ई, उ, ऐ.
[4] ०रूपं — ए.
[5] इत्यनियमो — ऐ.
[6] अस्मदनुमानात्सिद्धः — ऊ, ऋ, ॠ.
[7] ०दसिद्धमिति — ए.
[8] कुतश्चेत् न स्वतन्त्रकर्तृत्वा० — ऊ, ऋ, ॠ.
[9] तच्चैवेहोभयोरपि — ऊ, ऋ, ॠ.
[10] यथाभिमानिते — मु, उ; यथाभिमानिको — ऊ, ऋ, ॠ, ऐ.
[11] न समाधिः — मु, ऊ, ऋ, ॠ, ऐ, ओ.
[12] तच्चैवापेक्षते — मु, उ, ऊ, ऋ, ॠ; तच्चैवापेक्ष्यते — ऐ.
[13] प्रवाहैकस्वभाव० — आ.
[14] प्रवहनस्व० — आ, ई, उ, ऐ.
[15] भवतीति — ए.
[16] तद्वैधर्म्यं — ऊ, ऋ, ॠ; तस्माच्छक्त्यैव धर्मत्वात् निश्चलत्वम् — ए; तस्माद्वैधर्म्यत्वं निश्चलत्वम् — ऐ.
[17] प्रवहणस्व० — अ, ए; प्रवहनस्व० — आ, ई, ऊ, ऐ.
[18] 'वाय्वोः' इत्येतन्नास्ति — अ, आ, ऐ.
[19] कृष्यादिवत्कर्मवत् — अ.
[20] ०फलजननमात्र एव — ऊ, ऋ, ॠ.
[21] मतङ्ग० विद्या० ६. ९३ उ० वृत्तौ।
[22] ०मानिते — आ, ई, उ, ऐ.
[23] मतङ्ग० विद्या० १८. १ उ०, २, ४, ५ पू०, ७९ उ० वृत्तौ।
[24] सामान्यकरणनिवृत्ति० — आ, सामान्यान्तवृत्ति० — ऐ.
[25] आन्तरप्राणा० — आ.
[26] ०स्पन्दनात्मके — ए, ऐ.
[27] तथैव — ऊ, ऋ, ॠ.
[28] कादाचित्कप्रवाहादि० — ऊ; कदाचित्कप्रवाहादि०—ऋ, ॠ; कादाचित्कं बाह्यादि—ऐ.

चित्कम्पादिदर्शनात् प्रेरको[1]ऽन्योऽनुमीयत इतीश्वरसिद्धौ वक्ष्यामः[2] — "[3]गतौ [4]वायोर्न [5]संयमे।" इत्यत्र। ततश्च[6] [7]वायोरप्यत्र [8]प्रेर्यत्वेन [9]कारकत्वासिद्धेः, चिदात्मन [10]एव कर्तृत्वसिद्धिरित्यर्थः।

[11]न चायमयस्कान्तादिभिरप्युक्तैरत्रानैकान्तः[12]। यतः **अयस्कान्तप्रवृत्तौ** [13]**न असमाधिः** अनिश्चयो विद्यते। अपि [14]तु तद्योजकस्य देवदत्तादेर्निश्चय एव। न हि योजकेन विना [15]स्वत एवायस्कान्तादिः [16]अयस्तादिसमाकर्षणाय गच्छन् दृष्टः। ततश्च व्याप्तिदर्शनविषयत्वेनात्र[17] अयस्कान्तादेः प्रत्युत [18]दृष्टान्तत्वम्। न त्वनैकान्तिकविषयता इत्यर्थः। तदेवं वाक्शरीर[19]स्पन्दाद्यात्मनः पूर्वोक्तस्य हेतोः [20]अत्रानन्यथा[21]सिद्धत्वाद् अनुमानेनापि सिद्धं चेतनस्य कर्तृत्वं क्षणिक[22]पक्षे[23] नोपपद्यते। यदाहुः — "[24]क्रियापलापनिबन्धनः क्षणिकवादः।" इति। अनेनापि [25]प्रकारेण [26]नैरात्म्याभाव एवेति। एवं च पशुपदार्थोऽत्रैव [27]विचारितः ॥३९-४१॥

तदियता "[28]पाश्यः पाशयिता पाशास्त्रयमेतत्", "[29]प्रवक्तव्यम्" इत्यत्र मतङ्ग[30]मुनेः प्रश्नसूत्रात् [31]चार्वाकसौगतादिप्रतिक्षेपेण पाश्यमभिहितमुपसंहर्तुं, पाशपाशयित्रोश्च [32]प्रदर्शनायोपोद्घातार्थं सूत्रम्[33] —'तस्मादात्मास्ति' इत्यादि।

**तस्मादात्मास्त्यसंदेहाच्छरीरेऽस्मिन्नचेतने।**
**भुङ्क्ते [34]प्राधानिकान्भोगान्सततं कारणेरणात् ॥४२॥**

---

[1] 'अन्यो' इत्येतन्नास्ति — ऋ, ए.
[2] मतङ्ग० विद्या० ६. ९२ उ० वृत्तौ।
[3] गते — ए; गतो —ऐ.
[4] वायौ न — अ.
[5] संगमे — अ; संशयं — आ, ई, उ; संशये — ऊ, ऋ, ॠ, ए, ऐ.
[6] तच्च — ॠ.
[7] वायोरत्र — आ.
[8] प्रेरकत्वेन — ए.
[9] कारकत्वसिद्धेः — आ, ई, उ, ए, ऐ; कारणत्वसिद्धेः — ऊ, ऋ, ॠ.
[10] 'एव' इत्यत्र 'सर्व' इति दृश्यते — ऐ.
[11] न चायस्कान्तादिभि० — अ, ई, उ, ए, ऐ; न चायस्कान्तादिरप्युक्तोऽत्रा० — आ.
[12] ०त्रानेकान्तः — ऊ, ऋ, ॠ.
[13] न समाधिरनिश्चयो — ऋ; नासमाधिनिश्चयो — ऐ.
[14] तुशब्दो नास्ति — आ, ई, उ.
[15] स्वतन्त्र एवा० — अ, आ, ई, उ, ए, ऐ.
[16] अयस्समाकर्षणाय — अ, ई, उ, ऊ, ऋ, ऐ.
[17] 'अत्र' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[18] दृष्टान्तत्वेनैकान्तिक० — अ; दृष्टान्तत्वमनैकान्तिक० — ए.
[19] ०स्पन्दनाद्यात्मनः — ऐ.
[20] अन्यत्रानन्यथा० — आ; अत्रान्यथा० — ऋ, ॠ.
[21] ०सिद्धत्वाभावाद् — ऊ, ऋ, ॠ.
[22] ०पक्षेणोपपद्यते — अ.
[23] अत्र 'स' इत्यधिकम् — ऋ.
[24] क्रियाफलापलाप० — अ, आ, ई, उ, ए, ऐ.
[25] प्रकरणेन — अ, आ, ई, उ, ए, ऐ.
[26] नैरात्म्यभाव — ऋ.
[27] विचार्यते — अ.
[28] मतङ्ग० विद्या० ६. २ पू०.
[29] मतङ्ग० विद्या० ६. ३. पू०.
[30] ०मुनिप्रश्न० — ऊ, ऋ, ॠ.
[31] चार्वाके सौगतप्रतिक्षेपेण — ऊ, ऋ, ॠ.
[32] प्रकथनायो० — ऊ, ऋ, ॠ; दर्शनायो० — ए.
[33] 'उपोद्घातार्थं सूत्रम्' इत्यत्र उपोद्घातः' इति दृश्यते — अ, ऋ,
[34] प्रधानजान् — ऊ, ऋ, ॠ, ऐ, ओ.

तत्र **शरीरेऽस्मिन्नचेतने** इत्यनेन चार्वाकनिरा[1]लम्बनवादप्रतिक्षेपयोरुपसंहारः। **आत्मास्ति** इत्यनेन नैरात्म्यवादप्रतिक्षेपस्येति। **भुङ्क्ते** [2]**प्राधानिकान्** इत्यनेन, **कारणेरणाद्** इत्यनेन च [3]वक्ष्यमाणयोः [4]पाशपाशयित्रोरुपोद्घातः। प्रधानपदमस्यात्र सर्वपाशोपलक्षणार्थत्वात्। अत एव मलस्यात्र[5] निर्णयो भविष्यति[6]। प्रधानसमानन्यायत्वाच्च मायादेरप्यभिधानम्। यद्वक्ष्यत्यत्रैवोपसंहारे[7] —

"सति मायात्मके पुंसः संनिकृष्टे [8]मलेऽपरे।
[9]स्थूलः प्राधानिको [10]बन्धः स च कर्मवशास्स्थितः"॥ इति।

तत्सिद्धौ [11]हि सर्वेषां चार्वाकसौगतार्हतनैयायिकवैशेषिकमीमांसकानां पशूनां प्रति[12]पक्षित्वात् [13]पारमेश्वरो [14]न्यायो निषिद्धत्वान्न प्रदर्शनीय इति, तन्न्यायसमानतान्त्रिकसांख्य[15]पाञ्चरात्रवेदान्तभूमिकया दर्शयितुं [16]तत्सिद्धप्रधानतत्त्वनिष्ठमेव प्रदर्श्यते॥ ४२॥

अत एव मतङ्गमुनिः सर्वप्रतिवादिदृशात्र [17]दृष्टानां तावत् [18]शरीरादिपाशानां दृष्टान्येव महाभूतादीनि कारणानि सन्तीति, कुतोऽत्यन्तादृष्टप्रधानजत्वसिद्धिरिति चोदयति —'भूताणुसङ्घसंयोगाद्' इत्यादि।

**मतङ्ग उवाच —**

**भूताणुसङ्घसंयोगाच्छरीरं कारणेरणात्।**
**यदि नाम [19]भवत्येव प्रधानस्य किमागतम्॥४३॥**

भूतानि च [20]अणवश्च [21]सङ्घाश्च, तेषां [22]संयोगात्। तत्र चार्वाकाः "यत्कठिनं सा पृथिवी, [23]यद् द्रव[24]स्वरूपं तज्जलम्, [25]यदुष्णं तत्तेजः" इत्यादिपृथिव्यादिमहा[26]भूतचतुष्टयोपलब्धेर्भूतानां संयोगादेव दृश्यमानात् शरीरं भवतीत्याहुः।

---

[1] ०लम्बवाद० — ऊ, ॠ, ॠ.
[2] प्रधानजान् — ऐ.
[3] मतङ्ग० विद्या० ६.४४, ६१–९०, १०२ उ० — १०४ वृत्तौ पाशा वक्ष्यन्ते। ६. ९२–१०२ पू० वृत्तौ पाशयिता वक्ष्यते।
[4] पाश्यपाश० — ए.
[5] मलस्यात्रैव — ऊ, ॠ, ॠ.
[6] मतङ्ग० विद्या० ६. ६२ उ० –९० वृत्तौ।
[7] मतङ्ग० विद्या० ६. १०२ उ०, १०३ पू०.
[8] परे मले — ऊ, ॠ, ॠ.
[9] स्थूलप्राधा० — ॠ; स्थूले प्राधा० — ऐ.
[10] ज्ञेयः — अ.
[11] च — ऊ, ॠ, ॠ.
[12] ०पक्षत्वात् — ऊ, ॠ, ॠ, ऐ.
[13] पारमेशो — ऊ, ॠ, ॠ.
[14] न्यायोऽपि शुद्धत्वान्न — अ, ए, ऐ; न्यायो विशुद्धत्वान्न — आ, ई, उ.
[15] ०पञ्चरात्र० — ऊ, ॠ, ॠ.
[16] तत्प्रसिद्धं प्रधानत्वमिहैव प्र० — अ, आ, ई, उ, ए; तत्प्रसिद्धप्रधानजत्वमिष्टमेव — ऐ.
[17] दृष्टान्तानां — ऐ.
[18] शरीरनाशानां — अ.
[19] भवत्येवं — ऊ, ॠ, ॠ.
[20] अणुसंघश्च — ऐ.
[21] संघातश्च — अ.
[22] संयोगः — आ, ई, ऊ, ए, ऐ.
[23] 'यद् द्रवस्वरूपं तज्जलं' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[24] ०स्वभावं — ऐ.
[25] 'यदुष्णं तत्तेजः' इत्येतन्नास्ति — ए.
[26] ०भूतरूपोपलब्धभूतानां — ऊ, ॠ.

नैयायिकवैशेषिकास्तु परमाणूनामनुमानसिद्धानां द्व्यणुकादिसंयोगक्रमेण [1]योऽन्त्यः संयोगः, [2]तस्मात् शरीरमिति प्रतिपन्नाः।

[3]सौगताः पुनः [4]निरालम्बनशून्यवादयोर्निरस्तत्वाद्बाह्यार्थवादिनः शुक्रशोणिताद्यात्मनामणूनां ये [5]सङ्घाः समूहाः, तेषां यः संयोगः, एकार्थक्रियाकारितया परस्परोपकारात्मकः, तत एव शरीरं भवति। न द्व्यणुकादिक्रमेण संबध्यमानानामित्याहुः।

एवमार्हतमीमांसकादयोऽपि संहता एव जायन्ते, संहता एव निरुध्यन्ते, संयुज्यन्ते च भावा इति।

[6]शुक्लशोणितादिसङ्घसंयोगादेव **शरीरम्। यदि नामेति** संभावनायाम्[7]। प्रमाणसिद्ध[8]त्वादेषां पक्षाणाम्। **कारणेरणादिति** [9]प्रागुपन्यस्तेश्वर[10]सिद्ध्यनु[11]भाषणेन च इयत्तावत् [12]प्रश्नजातमिति दर्शयति। पश्चात् [13]प्रकारान्तरेण तत्प्रश्नस्य [14]वक्ष्यमाणत्वात्। एवं च [15]"न कदाचिदनीदृशं जगद्" इति [16]न्यायेन नित्यानामेवैषां दृश्यमानानां [17]भूतानां साक्षात् पारंपर्येणापि वा संयोगात् [18]शरीरं भवद्दृश्यते। नित्यानां [19]वा अनुमानसिद्धानां परमाणूनां [20]संयोगात्, अनित्यानां वा अनादिसन्तत्या [21]प्रवृत्तानामिति। **प्रधानस्य किमागतमिति** सर्वेषां गत्यर्थानां ज्ञानार्थत्वात् [22]तस्य सिद्धौ किं प्रमाणम्। येन "भुङ्क्ते [23]प्राधानिकान् भोगान्" [24]इत्यत्रोक्तं तत्र भवतेति प्रश्नार्थः॥ ४३॥

अत्र प्रतिविधानम् — 'लीयन्ते यत्र संहारे' इत्यादि।

**मतङ्ग उवाच —**

> **लीयन्ते यत्र संहारे [25]यतश्चोत्पद्य चात्मनः।**
> **शरीरघटनारम्भस्तत्प्रधानमिहोच्यते॥४४॥**

---

[1] 'योऽन्त्यः' इत्यारभ्य 'द्व्यणुकादिक्रमेण' इत्यन्तं नास्ति — ए.

[2] 'तस्मात्' इत्येतन्नास्ति — अ.

[3] 'सौगताः' इत्यारभ्य 'शुक्रशोणिताद्यात्मनामणूनां' इत्यन्तस्य ग्रन्थस्य स्थाने 'सौगताश्च रूपाद्यात्मनामणूनाम्' इति दृश्यते — अ, आ, ई, उ, ऐ.

[4] मतङ्ग० विद्या० ६. २१ उ०, २२ वृत्तौ शून्यवादनिरालम्बवादयोर्निरासो दृश्यते।

[5] संघाताः — ऐ.

[6] शुक्रशोणितसंयोगादेव — ऊ, ऋ, ॠ.

[7] संभावना — अ, आ, ई, उ, ए, ऐ.

[8] ०त्वादेतेषां — ऐ.

[9] मतङ्ग० विद्या० ३. १० उ० –१६ पू० वृत्तौ।

[10] 'सिद्ध्यनु' इत्येतन्नास्ति — आ.

[11] ०भाषणेनायं तावत् — ऊ, ऋ, ॠ.

[12] प्रश्नो जात इति — ऊ, ॠ.

[13] प्रकरणान्तरेण — ऐ.

[14] मतङ्ग० विद्या० ६. ९१ वृत्तौ।

[15] आकरो न लभ्यते।

[16] 'न्यायेन' इत्येतन्नास्ति — ऐ.

[17] 'भूतानां' इत्येतन्नास्ति — ऐ.

[18] शरीरमभवद्दृश्यते — ऐ.

[19] चानुमान० — ए.

[20] संघात् — अ.

[21] प्रभूताना० — ए.

[22] अस्य — ऐ.

[23] प्रधानजान् — ऊ, ऋ, ॠ, ए, ऐ.

[24] मतङ्ग० विद्या० ६. ४२ उ०.

[25] यतो वागत्य — ऊ, ऋ, ॠ; यतश्चोत्पाद्य — ऐ, ओ.

**यत्र** यस्मिन् कारणे [1]प्रागुक्तभूताणुसङ्घा अपि [2]**लीयन्ते**। **यतश्च** कारणाद् [3]**उत्पद्य**, तैर्भूताणु[4]सङ्घैः **आत्मनः शरीरघटनारम्भः** क्रियते **तत् प्रधानम्** इति।

अयमर्थः—नैव शरीरादीनां साक्षात् कारणं प्रधानमस्माभिरुच्यते। महाभूतादि[5]भुवनजत्वेन [6]एषां [7]वक्ष्यमाणत्वात्। अपि तु [8]कारणकारणं सर्गप्रलययोर्वक्ष्यमाणनयेन[9]। तत एव कार्यकरणादीनां [10]क्रमेण भावात्, तत्रैवोपसंहाराच्च। यदुक्तं सांख्यैरपि[11]—

"प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च[12] षोडशकः।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि॥" इति।

ततश्च शरीर[13]कारणत्वेनोक्तानां भूतानाम् [14]अचैतन्ये सत्यनेकत्वात्, घटादिवन्न[15] [16]नित्यत्वम्। अपि तु [17]कारणान्तरादेवोत्पादः, तत्रैव [18]च तिरोधानमिति। यच्च [19]तत् कारणान्तरं तत् प्रधानं [20]प्रधानकार्यं वा भविष्यतीत्यविरोधः।

ननु [21]"न कदाचिदनीदृशं जगद्" इत्युक्तम्। सत्यम्। प्रतिज्ञामात्रं [22]चैतत्। न च [23]ततोऽर्थसिद्धिः। ननूत्पत्तिविनाशयोरदर्शनादित्यत्र हेतुरस्त्येव। न। असिद्धत्वात्। न हि कल्पाद्यन्तर्भाविनोरुत्पत्तिविनाशयोरदर्शनं सिद्धम्। [24]अस्मदादीनां जीर्णमठकूपादिभिरनै[25]कान्तिकश्च।

यद्येवं परमाणव एव द्व्यणुकादिक्रमेण संयुज्यमाना भूतानामपि कारणं [26]भविष्यन्तीत्युक्तम्। ते [27]च भवद्भिरपि [28]सूक्ष्मभूततयाध्वप्रमाणश्रुतिभिश्चाप्युप[29]गता एव।

सत्यम्। [30]अत एवै[31]षाम् [32]अचैतन्ये सत्यनेकत्वादिति हेतोर्नित्य[33]त्वाभावेन कारणान्तरपूर्व-

---

[1] प्रागुक्ता भू० — ऊ, ऋ, ॠ.
[2] विलीयन्ते — ए.
[3] उत्पाद्य — अ, आ, ई, उ, ऊ, ए.
[4] ०संघेनात्मक्षेत्रशरीर० — ऋ; ०संघैरात्मक्षेत्रशरीर० — ॠ.
[5] ०भुवनजनितत्वेन — ऊ, ॠ.
[6] नैषां — ऐ.
[7] मतङ्ग० विद्या० १९. २–४, २५ उ०–३२पू० वृत्तौ।
[8] 'कारण' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[9] मतङ्ग० विद्या० १५. ३उ०–६, ८–१३ वृत्तौ।
[10] 'क्रमेण भावात्' इत्यत्र 'क्रमात्' इति दृश्यते — अ.
[11] सांख्यका० २२.
[12] गुणश्च — आ, ई, उ, ॠ.
[13] ०कारणेनो० — आ.
[14] आचैतन्ये — अ, आ, ई, उ, ऊ, ए.
[15] नकारो नास्ति — अ, ए.
[16] अनित्यत्वम् — ए.
[17] कारणान्तरेणैवोत्पादः — ऐ.
[18] चशब्दो नास्ति — ऐ.
[19] 'तत्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[20] प्राधानान्तरकार्यं — आ, ई, उ, ए, ऐ; प्रधानान्तरकार्यं — ए.
[21] आकरो न लभ्यते।
[22] त्वेतत् — ऊ, ऋ, ॠ.
[23] तद्वदतोऽर्थ० — ए.
[24] अस्मदादेर्जीर्ण० — ऊ, ऋ, ॠ.
[25] ०कान्तिकं च — ऋ, ॠ.
[26] भविष्यतीत्युक्तम् — आ.
[27] चशब्दो नास्ति — ऐ.
[28] सूक्ष्मतयाध्व० — अ, आ, ई, उ; सूक्ष्म्यत साम्यप्रमाण० — ए.
[29] ०गत एव — ऊ.
[30] अत्र 'तेषां तु' इत्येतदधिकम् — ऊ, ऋ, ॠ.
[31] 'एषाम्' इत्यारभ्य 'अनेकत्वादिति' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[32] आचैतन्ये — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[33] ०त्वाकारेण भावेन — अ.

कल्पसिद्धया पूर्वनयेन प्रधानकारणत्वं [१]सिद्धयत्येव। न च सामान्यादिभिर्व्यभिचारः[२]। तेषामपि पक्षीकृतत्वात्।

ननु [३]कालात्ययापदिष्टोऽयं हेतुः [४]प्रत्यक्षागमबाधितत्वात्। यो [५]हेतोः प्रयोगकालः, तमतीत्यापदिष्टो यतः। तथा हि — [६]अस्मदागम[७]सिद्धान् [८]परमाणून् धर्मित्वेन कुर्वतोऽस्मदागमाभ्युपगमोऽवश्यं[९]भावी भवतः। तद्बाधितं चानित्यत्वमत्रेति।

तदयुक्तम्। अस्मदागमेऽपि परमाणूनां सिद्धत्वाद्, युष्मदागमाभ्युपगमासिद्धेः, कुतस्तद्बाधेन कालात्ययापदिष्टः स्यात्। तथा हि — [१०]यथा[११] सामान्ये धर्मिणि नैयायिकोक्त[१२]सर्वगतत्वधर्मबाधेन वैशेषिकाणां व्यक्तिसर्वगतत्वं साधयतां व्यक्तिभ्योऽन्यत्रानुपलम्भादिति हेतुः, यथा च [१३]नैयायिकानां [१४]समवाये धर्मिणि वैशेषिकाभ्युपगतप्रत्यक्षत्व[१५]समवेताश्रितत्वधर्मद्वयबाधनाय नित्यानुमेयत्वं [१६]स्वातन्त्र्यं च साधयतां [१७]परमाणुसमवायान्यतरत्वादित्यादिहेतुर्न कालात्ययापदिष्टो भवद्भिरुच्यते [१८]धर्मिणस्तत्रोभयवादिसिद्धत्वादिति[१९]। [२०]सिद्धेषु परमाणुषु [२१]अनित्यत्वं [२२]नित्यत्वं च [२३]साधयतो[२४]रस्मदागमयुष्मदागमयोर्न हेतुः [२५]कालात्ययापदिष्टः शक्य. प्रतिपादयितुम्। अन्यतरागमसिद्धे तु [२६]धर्मिणि स दोषः स्थित एव। यथा न्यायवैशेषिकसिद्धे समवायाख्ये धर्मिणि अनित्यत्वं [२७]साधयतः सांख्यस्य "संबन्धत्वात् संयोगवत्" इति हेतुः, यथा च सांख्यसिद्धे प्रधानाख्ये धर्मिणि [२८]महदाद्यकारणत्वं साधयतां भवतां "प्रकृति[२९]त्वात्तन्त्वादिवत्" इति हेतुः कालात्ययापदिष्ट एव। [३०]यदाहुः[३१] —

---

[१] सिद्धयतीव — ऊ, ॠ, ॡ.
[२] ०भिर्व्यवहारः — ॡ.
[३] काल्पाद्यया परिदृष्टोऽयं — ऐ.
[४] प्रत्यागमाबाधितत्वं हि हेतुप्रयोगं — ऊ, ॠ; प्रत्यागमाबाधित्वं हेतुप्रयोग० — ॡ.
[५] हेतुप्रयोग० — ऐ.
[६] अमदागम० — अ.
[७] ०सिद्धात् — ॠ, ॡ.
[८] परमाणुर्धर्मि० — ऐ.
[९] ०भावि — आ, ई, उ, ऐ.
[१०] 'यथा' इत्येतन्नास्ति — ऐ.
[११] अत्र 'हि' इत्यधिकम् — अ, ए.
[१२] सर्वसर्वगतत्व — ऊ, ॠ, ॡ.
[१३] नैयायिकादीनां — आ.
[१४] समवायधर्मिणि — ऊ, ॠ, ॡ; 'समवाये' इत्येतन्नास्ति — ए.
[१५] समवेतत्वाश्रितत्व० — अ, आ; समवेताश्रितत्वं — ऐ.
[१६] स्वातन्त्र्यत्वं साधयतां — ए.
[१७] 'परमाणुसमवायान्यतरत्वादित्यादि' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ॠ, ॡ, ए.
[१८] धर्मिणस्त्वनुभयवादि० — ए.
[१९] इतिशब्दो नास्ति — ऊ, ॠ, ॡ.
[२०] 'सिद्धेषु' इत्यतः पूर्वं 'अत्रोभयवाद' इत्येतदधिकम् — ऊ, ॠ, ॡ.
[२१] अनित्यत्वनित्यत्वं — ऊ, ॠ, ॡ; अनित्यं नित्यं च — ऐ.
[२२] अत्र चशब्दोऽधिकः — ए.
[२३] समाधयतो० — आ, ई, उ.
[२४] ०रस्मदागमस्थयोर्न — ऊ, ॠ, ॡ; ०रस्मत्तदागमस्थयोर्न — ऐ.
[२५] 'कालात्ययापदिष्टः शक्यः' इत्यस्य स्थाने 'दृष्टः' इति दृश्यते — अ.
[२६] धर्मिणः — अ.
[२७] साधनतः — अ, ऐ.
[२८] महदादिकारणत्वं — आ, ई, उ, ए, ऐ; अमहदधिकरणत्वं — ऊ, ॠ, ॡ.
[२९] ०त्वात्तत्त्वादिवत् — ऊ, ॠ, ॡ, ए; त्वात्तन्त्रादिहेतुः — ऐ.
[३०] तदाहुः — ऊ, ॡ.
[३१] प्रमाणवार्तिके ४. ५१ पू०

"तद्विरोधेन चिन्तायां[1]स्तत्सिद्धार्थेष्वयोगतः।" इति।

ननु [2]न समानतान्त्रिकान् प्रत्ययं हेतुदोषः। अपि तु भिन्नतान्त्रिकान्प्रत्येव।

यद्येवं वयमपि भवद्भिः सहात्र [3]परमाण्वभ्युप[4]गमेन समानत्वात् समानतान्त्रिका एव। [5]न हि सर्वथा कश्चित् कस्यचित् समानतान्त्रिकः संभवति। एकत्वं हि तदानीं तयोर्भवेत्, न समानतेत्यदोषः। न च परमाणूनामागमसिद्धत्वमेव; अनुमानेन भवद्भिः [6]साधितत्वाद् धूमादेरग्न्यादीनामिव[7]। तत् कुतस्तदभ्युपगमसामर्थ्याच्छास्त्राभ्युपगमः, येन तद्विरोधात्कालात्ययापदिष्टोऽयं [8]हेतुरित्युच्यते। [9]तथान्ये च यदाहुः[10] —

"केनेयं सर्वचिन्तासु शास्त्रं ग्राह्यमिति स्थितिः।
[11]कृतेदानी[12]मसिद्धान्तैर्ग्राह्यो धूमेन नानलः॥" इति।

एतेन 'कारणपूर्वकाः परमाणवः मूर्तत्वात्, [13]घटादिवत्' इत्ययमपि हेतुर्न कालात्ययापदिष्टोऽस्माकम्। अपि [14]तु अनभ्युपगतपरमाणूनां [15]चार्वाका[16]दीनामेवेति मन्तव्यम्।

[17]नन्वप्रयोजकोऽयं हेत्वाभास इति [18]न्यायभाष्यटीकाकारः कश्चिदुदाहृतवान्। किं नाम नोदाह्रियते[19] मूढमतिना। येन "[20]तत्प्रयोजको हेतुश्च" [21]इत्येतच्छब्दलक्षणमेव [22]मौढ्यात् खण्डिकोपाध्यायेनेव हेतु[23]लक्षणत्वेनावसीयते। अन्यथा तर्कशास्त्रे क्वचिदपि प्रयोजकस्य हेतु[24]लक्षणत्वेनानभिधाना[25]दन्य एव [26]स स्यात्।

न्यायसूत्रकारोऽपि पञ्चलक्षणाल्लिङ्गात् परोक्षलिङ्गिनि ज्ञानमनुमानमिति लिङ्गलक्षणमभिधाय, [27]तद्व्यावृत्तान् असिद्ध[28]विरुद्धानैकान्तिककालात्य[29]यापदिष्टप्रकरणसमान् पञ्चैव हेत्वाभासानाह[30]।

---

[1] ०स्तत्सिद्धार्थेषु योगतः — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.

[2] नकारो नास्ति — आ, ई, ऊ.

[3] परमात्मवदभ्युपगमेन — ए.

[4] ०गमसमानत्वात् — ऊ, ऋ, ॠ.

[5] नकारो नास्ति — अ.

[6] साधयित्वा धूमा० — ऊ, ऋ, ॠ.

[7] 'इव' इत्यत्र 'एव' इति दृश्यते — ऊ, ऋ, ॠ.

[8] हेतुरुच्यते — आ, ई, उ, ए.

[9] 'तथान्ये च' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[10] प्रमाणवार्तिके — ४. ५३.

[11] कृतेदानी हि सिद्धार्थे ग्राह्यो — अ; कृतेदानीं हि सिद्धार्थैर्ग्राह्यो — आ, ई, उ; कृतेदानीं हि सिद्धा तैर्ग्राह्यो — ऋ; अत्रेदानीं हि सिद्धार्थैर्ग्राह्यो — ए; कृतेदानीं हि सिध्यान्ते ग्राह्यो — ऐ.

[12] ०मसिद्धान्ते ग्राह्यो — ऊ, ऋ.

[13] घटवत् — अ, ई, उ, ऋ.

[14] 'तु' इत्येतन्नास्ति — ए.

[15] चार्वाकाणामेवेति — अ, आ, ई, उ, ए, ऐ.

[16] ०दीनामपि तु मन्त०— ऊ, ऋ, ॠ.

[17] 'नन्वप्रयोजकोऽयं' इत्यत्र 'कोऽयं' इति दृश्यते — अ, ऋ.

[18] आकरो न लभ्यते।

[19] नोदाहृतं — ऊ, ऋ, ॠ.

[20] पा० सू० १. ४. ५५.

[21] इत्येतत्संबन्धलक्षण० — अ, आ, ई, उ, ए, ऐ.

[22] मौर्ख्यात् — ऋ, ॠ.

[23] ०लक्षणत्वेनाप्यवसीयते — आ, ई, उ, ए, ऐ; लक्षणत्वेन व्यवसीयते — ऊ, ऋ, ॠ.

[24] 'लक्षण' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[25] ०दवाध्य एव सत्। — ऊ, ॠ; ०दबाध्य एव तत्। — ऋ.

[26] 'स' इत्येतन्नास्ति — ए.

[27] ते व्यावर्तनाद्व्यावृत्तानसिद्ध० — अ; तद्व्यावर्तनाद्व्यावृत्तानसिद्ध० — आ, ई, उ, ऐ; तद्व्यावर्तनव्यावृत्त्या असिद्ध—उ पाठान्तरम्; तद्व्यावर्तनसिद्ध० — ऊ, ऋ, ॠ; तद्व्यावर्तनाद्वाभ्यक्तानसिद्ध० — ए.

[28] ०विच्छेदनेकान्तिक० — ए.

[29] व्यापादितप्रकरण० — ई, उ.

[30] न्यायसूत्रे १. २. ४–९.

भाष्यकारोऽपि न [1]ह्यप्रयोजकं नामेति। [2]नन्वन्यथास्य हेतोर्हेतुत्वं [3]भवेत्। [4]यद्यप्रयोजको नाभ्युपगम्यते इति। तन्न। चार्वाकादीनां [5]तावन्नायं हेतुरेवेत्युक्तम्। त एव[6] [7]भवतां निराकार्यत्वेनाभिप्रेताः। न नु वयम्। पशुदृशामगोचरत्वादित्यभिहितम्। ततोऽस्माकमयं हेतुरेव। युष्मदीयहेतु[8]लक्षणेनाप्यनिरस्तत्वादित्यदोषः[9]।

[10]किं चेदं नाप्रयोजकत्वम् [11]येनास्माकमयं हेत्वाभासः [12]संभाव्येत भवद्भिः। न तावदसं[13]बन्धत्वं कृतक[14]त्वस्येव अस्यापि स्वसाध्येन महैकार्थसमवायात्। [15]असर्वगतद्रव्य[16]परिमाणवतां हि मूर्तत्वम्। तद्घटादौ कारण[17]पूर्वकत्वेना[18]व्यभि[19]चरितं निश्चितमेव। नाप्यन्यथासिद्धत्वम्। घटाद्यभाव[20]साधनप्रवृत्तानुपलम्भस्य [21]सन्तमस इव [22]तस्यासिद्धभेदत्वेनाप्रयोजकस्य [23]हेत्वाभासान्तरत्वायोगात्। [24]तद्भेदत्वं च तथाभूते विषये [25]विशिष्टस्यैवानुपलम्भस्य[26] हेतुत्वात्। न चान्यथासिद्धत्वमप्यस्य [27]प्रकृतहेतोर्विद्यते।

ननु नावयवत्वाद् घटादौ अनित्यत्वं [28]न मूर्तत्वादिति, कथं [29]नान्यथासिद्धता। सत्यम्। [30]यदप्यनुपलम्भमात्रस्याभावसिद्धाविव प्रमाणान्तरेणास्यापि हेतोः साध्य[31]व्यभिचारोऽनिश्चितो भवेत्। तदभावे [32]तु द्वयोरपि [33]सावयवत्वमूर्तत्वयोः साध्याव्यभिचारात्, [34]कृतकत्व[35]प्रयत्नानन्तरीयकत्वयोः

---

[1] ह्यप्रयोजकत्वं — अ, आ, ई, उ, ऋ, ऐ; त्वप्रयोजकं — ऊ, ॠ; स्वप्रयोजकत्वं — ए.
[2] नन्वथास्य — ई, उ, ए, ऐ.
[3] 'भवेत्' इत्येतन्नास्ति — ए, ऐ.
[4] द्रव्यप्रयोजको — अ; वेद्यप्रयोजको — ऐ.
[5] तावन्नायमहेतु० — अ, ई, उ; ताव. . यं न हेतु० — ऊ, ऋ, ॠ.
[6] अत्र चशब्दोऽधिकः — ऊ, ऋ, ॠ.
[7] भवता — अ, आ, ई, उ, ए, ऐ.
[8] लक्षणं नाप्य० — ऊ, ऋ, ॠ.
[9] ०त्वादिति दोषः — ऐ.
[10] किं चेदमप्रयोजकत्वं — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ; किं चेदमन्यप्रयोजकत्वं — ए;
[11] येन युष्माकमप्ययं — ऊ, ऋ, ॠ.
[12] संभाव्यते — ई, उ, ऊ, ऋ, ॠ, ऐ.
[13] ०बद्धत्वं — उ; ०बद्धता — ऊ, ऋ, ॠ.
[14] ०त्वस्यैव — ई, उ.
[15] असंगत० — ए.
[16] ०परिमाणवत्ता हि — ऊ, ऋ, ॠ.
[17] पूर्वकत्वेन व्यभिचारितं — ऐ.
[18] 'व्यभिचरितं' इत्येतन्नास्ति — अ;
[19] ०चारितनिश्चित० — ई, उ; ०चारितं निश्चित — ऊ, ऋ, ए; ०चारितत्वं निश्चित० — ॠ.
[20] ०साधनपूर्वकानुप० — ऊ, ऋ, ॠ.
[21] सन्तमसेऽपिव — ऐ.
[22] तदास्य सिद्धभेदत्वेना० — ऊ, ऋ, ॠ; तस्मात्सिद्धभेदकत्वेना० — ए.
[23] हेतुत्वाभासा० — ई, उ; हेत्वाभासान्तरं तत्त्वा० — ए.
[24] 'तद्भेदत्वं' इत्यारभ्य 'हेतुत्वात्' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[25] विशिष्टस्येवानुप० — अ, आ, ए.
[26] अत्र चशब्दोऽधिकः — ऐ.
[27] प्रकृतस्य हेतो० — ऊ, ऋ, ॠ.
[28] न मूर्तित्वा० — अ; न तु मूर्तित्वा० — ऊ, ऋ, ॠ.
[29] 'नान्यथा' इत्यारभ्य 'मूर्तत्वयोस्साध्या' इत्यन्तं नास्ति — ऐ.
[30] यद्यनुपलम्भ० — ऊ, ऋ, ॠ; यद्यप्यनुपलम्भ — ए.
[31] -व्यवहारो० — ऊ, ऋ, ॠ.
[32] 'तु' इत्येतन्नास्ति — ऊ, ऋ, ॠ; तु' इत्यस्य स्थाने 'अपि' इति दृश्यते — ए.
[33] सावयवमूर्त० — अ, ॠ.
[34] कृतत्व० — ऐ.
[35] ०प्रयत्नान्तरीयत्वयोः — अ, ऐ; प्रत्यत्नानन्तरीयत्वयोः — ए.

शब्दानित्यत्वसाधनायोपात्तयोरिव हेतुत्वं देवैरप्यनिवार्यमेव। [1]यदप्युक्तम् "साध्यधर्म[2]कारणप्रयुक्ता यस्य पक्षे वृत्तिर्नास्ति [3]सोऽप्यप्रयोजकः" इति। तदप्ययुक्तम्। एवं हि कार्यमेव हेतुः स्यात्। तस्यैव हि पक्षे साध्यधर्मकारणप्रयुक्ता वृत्तिः। यतः संयोगिसमवाय्यादिलक्षणाः कृतकत्वाद-योऽप्रयोजका एव स्युरिति सर्वमसमञ्जसम्।

यैरपि "नित्या पृथिवी [4]गन्धवत्त्वाद्" इत्यसाधारणानै[5]कान्तिकस्यैवाप्रयोजकत्वमुच्यते। तैर-प्युदाहरणमात्रमेव केवलं [6]दर्श्यते। अस्य हेतोस्तथात्वस्याभावात्, हेतुत्वमनिवार्यमेवेति। अत एव यदाहुः — "परमाणुत्वादेव तेषां नित्यत्वसिद्धिः" इति। तदयुक्तम्। अनित्यानामपि परमाणूनामस्माभिः सौगतैश्चाभ्युप[7]गमात्।

तर्हि निरवयवत्वान्नित्याः परमाणवः[8] आत्मवदिति [9]विरुद्धव्यभिचार्यनैकान्तत्वादहेतुत्वं[10] पूर्वो-क्तयोर्हेत्वोरिति। तदयुक्तम्। आकाशमनोबुद्धिभिरनैकान्तिकत्वात्। [11]यथा चैतेषामनित्यत्वं तथा तत्प्रकरणेषु [12]वक्ष्यामः।

नन्ववयवविभागपूर्वकत्वेन सर्वस्य [13]नाशाद् निरवयवस्य अवयवासंभवादेव विनाशाभावः। न। आमलक[14]स्य सत्त्वादिभिरवयव[15]विभागाभावेन [16]स्वत एव [17]विनाशस्वभावै[18]रनैकान्तिकत्वात्। [19]न द्रव्यत्वे सतीति विशेषितत्वादिति चेत्, सिद्धे गुणद्रव्ययोर्भेद एवं स्यात्[20]। स तु नास्त्येव। विशिष्टादेव परिणामाद् विशिष्टस्यैव परिणामस्य [21]क्रमेणैवोत्पत्ति[22]सिद्धिरिति सत्कार्यसिद्धौ [23]वक्ष्यामः। एवं [24]चाप्रति[25]पक्षावेतौ परमाणूनां कारणपूर्वकत्व[26]साधने[27] हेतू [28]इति।

यद्येवं परमाणव एव परमाणूनां सन्तत्या जनका भविष्यन्ति। ततो न प्रधानसिद्धिरिति सौगताः।

---

[1] यदुक्तम् — अ, आ, ई, उ, ऋ, ए, ऐ.
[2] 'कारण' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[3] सोऽप्रयोजकः — ऊ, ऋ, ॠ, ए, ऐ.
[4] गन्धत्वाद् — आ; गन्धवद् — ऐ.
[5] ०कान्तिकत्वमुच्यते — ऊ, ॠ, ॠ.
[6] दृश्यते — अ, आ, ॠ, ए, ऐ.
[7] ०गमत्वात् — ऊ, ॠ, ॠ.
[8] अत्र एवकारोऽधिकः — आ.
[9] विरुद्धाव्यभि० — अ, आ, ई, उ, ऊ, ॠ, ॠ, ए, ऐ.
[10] ०दहेतुकं — ऊ, ॠ, ॠ.
[11] यथा च नित्यत्वं — अ; यथा च तेषाम-नित्यत्वं — आ, ॠ, ए, ऐ; यथा च तेषां नित्यत्वं — ई, उ; यथैतेषामनित्यत्वं — ऊ,
[12] मतङ्ग० विद्या० १९. १७, १८ पू० वृत्तौ आकाशस्यानित्यत्वम्; १८. ४९ उ०, ५० वृत्तौ मनसोऽनित्यत्वम्; १७. ७, ८ वृत्तौ बुद्धे-रनित्यत्वम्।
[13] विनाशाद् — अ, आ, ई, उ, ऐ.
[14] ०स्यासत्त्वादि० — ॠ.
[15] ०विभागादभावत एव — अ.
[16] स्वभावत एव — आ, ई, उ, ए, ऐ.
[17] विनाशस्याभावै० — ऊ, ॠ, ॠ.
[18] ०रनैकान्तित्वात् — ॠ; ०रनेकत्वात् — ए; ०रनैकान्तिकत्वम् — ऐ.
[19] न द्रव्यत्वे सति वि० — अ; तद्द्रव्यत्वे — आ; न द्रव्यस्येति वि० — ऊ, ॠ ॠ, ऐ.
[20] 'भेद एवं स्यात्' इत्यत्र 'भेदात्' इति दृश्यते — अ; भेद एतत् स्यात् इति दृश्यते — ऊ, ॠ, ॠ.
[21] क्रमाक्रमेण चोत्पत्ति० — अ, आ, ई, उ, ए; क्रमात्क्रमेण चोत्पत्ति — ऐ.
[22] सिद्धेरिति — अ, आ, ई, उ, ए, ऐ.
[23] मतङ्ग० विद्या० ६. ४६ उ०, ४७, ५४ वृत्तौ।
[24] च प्रति० — ऐ.
[25] ०पक्षावेवैतौ — ऊ, ॠ, ॠ, ऐ.
[26] साधनौ — अ, आ, ई, उ, ऊ, ॠ, ॠ, ए.
[27] हेतुः — अ, ई, उ.
[28] इतिशब्दो नास्ति — अ, आ, ई, उ.

न। सदृशानां [1]जनकत्वासिद्धेः। न[2] हि [3]घटादय एव घटादीनां जनकाः सिद्धाः यतः। ननु शरीरेभ्यः शरीराण्युत्पद्यमानानि दृश्यन्ते। [4]न। शुक्लशोणितादिभ्यस्तेषामुत्पत्तिरिति [5]वक्ष्यामः। [6]ननु क्षणिकत्वाद् अर्थानां घटादयोऽपि [7]घटादीनां जनका [8]एव। न। तस्यासंभवादित्युक्तम्[9]।

तदेवं भूताणु[10]सङ्घातानामनित्यत्वेन कारणपूर्वकत्वसिद्धेर्यत्[11]तत्कारणं [12]तत् प्रधानमिति प्रधान[13]सिद्धिः। यद्वक्ष्यति[14] — "कार्यमेतत्प्रधानस्य" इति। [15]अन्यान्यपि च [16]प्रधानसिद्धौ साधनानि सांख्यैरुपात्तानि[17], तान्यपि तत एवावधार्याणि। यदाहुः[18] —

"भेदानां [19]परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद् [20]वैश्वरूप्यस्य॥
कारणमस्त्यव्यक्तम्" इति॥ ४४॥

अत्र मतङ्गमुनिः — 'असदुत्पत्तिरुद्दिष्टा' इति।

**मतङ्ग उवाच —**

**असदुत्पत्तिरुद्दिष्टा सतः प्रख्याप्यते कथम्।**

[21]अस्त्वेवं [22]भूताणुसङ्घातानां कारण[23]पूर्वकत्वेन प्रधानादुत्पत्तिः। तेषां तु उपलब्धिलक्षणप्राप्तत्वेन कारणकालेऽनुपलम्भाद् असतामेवोत्पत्तिः प्रमाणोपपन्नत्वाद् [24]**उद्दिष्टा** वादिभिः। [25]न तु सतां सत्त्वे प्रमाणाभावात्। त्वया[26] [27]"लीयन्ते [28]यत्र संहारे" इत्यादिना **सतः** [29]उत्पत्तिर्व्याहृतेति विरोधः॥

किं च सत्कार्यपक्षे कारकव्यापारवैयर्थ्यमित्युच्यते — 'स्थितः संस्थाप्यत' इत्यादिना।

---

[1] जननासिद्धेः — ॠ, ॠ.
[2] न तर्हि — ऐ.
[3] घटादयः पटादीनां जनकाः — अ.
[4] नकारो नास्ति — अ.
[5] मतङ्ग० विद्या० १९. २५ उ० – ३२ वृत्तौ।
[6] नन्वक्षणिक० — अ.
[7] पटादीनां — अ.
[8] येन तस्यासं — ऐ.
[9] मतङ्ग० विद्या० ६. २३ –२८, ३०–४१ वृत्तौ क्षणिकत्वासंभव उक्तः।
[10] संघातानां० — ऐ.
[11] 'तत्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[12] 'तत्' इत्येतन्नास्ति — ऊ, ॠ, ॠ.
[13] ०सिद्धेः — ऊ, ॠ.
[14] मतङ्ग० विद्या० ६. ६१ पू०.
[15] यान्यपि च — अ, आ, ई, उ, ए, ऐ.
[16] प्रधानानि सिद्धसाधनानि — अ, आ, ई, उ, ऐ.
[17] अत्र इतिशब्दोऽधिकः — ऊ, ॠ, ॠ.
[18] सांख्यका० — १५, १६ पू०.
[19] परिणामात् — अ, आ, ई, उ, ए, ऐ.
[20] वैश्वरूपस्य — ॠ, ॠ, ऐ.
[21] अस्त्येवं — अ, आ, ई, उ, ऊ, ॠ, ए, ऐ.
[22] अणुभूतसं० — अ, आ, ई, उ, ॠ, ऐ; भूतसंघातानां — ए.
[23] ०पूर्वकप्रभावादुत्पत्तिः—अ; पूर्वकत्वं प्रधाना० — ऊ.
[24] उद्दिष्टं — ऊ, ॠ, ॠ.
[25] 'न तु' इत्यत्र 'ननु' इति दृश्यते — आ, ई, उ, ऊ, ॠ, ए.
[26] अत्र 'तु' इत्येतदधिकम् — ऊ, ॠ, ॠ.
[27] मतङ्ग० विद्या० ६. ४४ पू०.
[28] सर्वसंहारे — ऊ, ॠ, ॠ.
[29] उत्पत्तिर्वा वृतेति — अ; उत्पत्तिः ख्यापितेति —ऊ, ॠ, ॠ.

स्थितः संस्थाप्यते यस्मात्पर्वतोऽयं महीतले ॥४५॥
[1]नष्टस्यापीष्यते नाशो [2]न्यायेनानेन शंकर।

सत्कार्यवादिनां [3]हि चत्वारः पक्षाः। केचित् शक्तिसमाहारात्मकं [4]कारणं, शक्तय एव व्यक्तीभूताः कार्यमित्यभ्युपगतवन्तः[5]। यदाहुः[6] —

"शक्ति[7]मात्रसमूहस्य भावस्य परिणामतः।
कदाचिद्व्यज्यते काचिच्छक्तिः काचित्प्रलीयते॥" इति।

[8]परे तु अभि[9]व्यक्तिर्भावानां [10]न रूपान्तरपरावृत्तिः, अपि तु उपलभ्यमानतैव। [11]अतो नित्यत्वात् प्रधानात्मनि तेषां समाहारः, स्वचिद्वा धर्मिविशेषे केषांचित्। ततश्च क्रमेणाभिव्यक्तिरेव जन्म कथ्यत इति प्रतिपन्नाः। यदूचुः[12] —

"[13]क्रमावगाह्यरूपेषु [14]स्वातन्त्र्यात्क्वापि [15]वाश्रयात्।
भावेषु प्रतिभासेन जन्मसंज्ञा निवेश्यते॥" इति।

अन्ये पुनः संनिवेशविशेषमात्रं कारणस्य कार्यं, हेम्नः कटक[16]केयूरादिवदिति कथयन्ति। यदुक्तम्[17] —

"[18]हेम्नस्तु कुण्डलीभावो व्यग्राणां वा[19] समग्रता।
तथैव [20]जन्मनाशौ तु [21]मतामेके प्रचक्षते॥" इति।

तदपरेऽपि क्रमविचित्रस्वभावत्वाद्भावाः [22]क्रमेण तं तमवस्थाविशेषमनुभवन्तो जन्मादिव्यपदेशं [23]भजन्तीत्युक्तवन्तः। यदाहुः[24] —

"कारणं कार्यभावेन [25]यदा वा व्यवतिष्ठते।
कार्यशब्दं तदा लब्ध्वा [26]कार्यत्वेनाथ जायते॥" इति।

चतुर्ष्वपि चैतेषु पक्षेषु
"[27]नासतो विद्यते भावो नाभावो विद्यते सतः।"

---

[1] नष्टं वापीष्यते नाथ — उ, ऐ.
[2] न्यायेनान्येन — मु, उ, ओ.
[3] हिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[4] करणं — ऊ, ऋ, ॠ.
[5] ०गमवन्तः — ऊ, ऋ, ॠ; ०मित्युपगतवन्तः — ऐ.
[6] आकरो न लभ्यते।
[7] ०मात्रा समूहस्य — ऊ, ऋ.
[8] 'परे तु' इत्यत्र 'परत्वे' इति दृश्यते — ॠ.
[9] ०व्यक्तिर्भावनात् न — अ, आ, ई, उ.
[10] न रूपेतरपरा० — ॠ. न तु रूपान्तर० — ऐ.
[11] ततो — ऊ. ऋ, ॠ.
[12] आकरो न लभ्यते।
[13] क्रमादग्राह्य — अ, ऊ; क्रमावग्राह्य — आ, ई, उ, ऋ, ए;
[14] स्वातन्त्र्याद्वापि — अ, आ, ई, उ, ऊ, ए, ऐ; स्वातन्त्र्यात्कापि — ॠ.
[15] चाश्रयात् — ऐ.
[16] केयूरादिति — ॠ; केयूरादिवत्तदिति — ऐ.
[17] वाक्यपदीये — ३. ७. १०७.
[18] अहेस्तु कुण्डली० — ऊ, ऋ, ॠ; यथाहेः कुण्डली० — वाक्यपदीय पाठः।
[19] च — वाक्यपदीयपाठः।
[20] जन्मरूपत्वं — वाक्यपदीयपाठः।
[21] सतामेते — ऊ, ऋ, ॠ.
[22] क्रमेणानन्तमवस्था० — आ, ई, उ, ए.
[23] भजन्त इत्युक्त० — ऊ, ऋ, ॠ.
[24] वाक्यपदीये ३. ७. १०६.
[25] यथा — वाक्यपदीयपाठः।
[26] कार्यत्वेनानुजायते — अ, आ, ई, उ, ए, ऐ.
[27] पौष्करे विद्या० ४. ३०४ पू०; भगवद्गीता २. १६.

इत्ययमेव सत्कार्यसिद्धौ न्यायः। स चायुक्तः। यस्मादनेन न्यायेन स्थितः एव [१]स्थाप्यते। [२]न कारकैर्जन्यते। अपि तु [३]पिष्टमेव पिष्यते। [४]नष्टमेव बाध्यत इति प्रसक्तम्। [५]मात्र-याप्यन्यथात्वकरणे सत्कार्यपक्षव्याघातात्। न [६]चैतद्युक्तं पर्वतादेः कृतस्य करणायोगात्, नष्टस्य वा[७] नाशानुपपत्तेः, कारकव्यापार[८]वैयर्थ्याज्जननसामर्थ्यानुपपत्तेश्च। अथैतद्दोषपरिहाराय येन रूपेणासौ [९]भावो व्यवस्थितः, तेन क्रियत इत्युच्यते। यद्येवमसदुत्पत्तिरेवेति न सत्कार्य[१०]पक्षः। प्रथमे च पक्षे शक्तिव्यक्त्यो[११]रत्यन्तस्वरूपभेदाद् घटपटयोरिव भेद एवेति [१२]न [१३]शक्तिसत्तया[१४] व्यक्तिसत्तासिद्धि[१५]रित्यसत्तैव कार्यस्य। द्वितीयेऽपि क्षीरादि दध्यादेरकारणं स्यादि[१६]त्यनुभव-विरोधः। तृतीयस्तु पक्षः क्षीर[१७]दध्यादिष्वसंभवादव्यापक एव। तत्र हि माधुर्याम्लतादिरन्य एवोत्पद्यते। न तु तस्य संनिवेशः। चतुर्थे [१८]च पक्षे कार्यकारणयोरिव घटपटादेरप्यैक्यप्रसङ्गाद् भेदाभेदव्यवस्थानुपपत्तिरिति सर्वथा [१९]सत्कार्यपक्षक्षतेरसत्कार्यपक्ष एव युक्त इति [२०]पूर्वपक्षः॥

[२१]सिद्धान्ते तु यथा सत्कार्यसिद्धिः, न च कारकव्यापारवैयर्थ्यं तथा तावदुच्यते — 'मृद्' इत्यादि।

**परमेश्वर उवाच —**

> **मृत्पिण्डेऽस्तित्वसामर्थ्याद्घटोऽभिव्यज्यते यथा॥४६॥**
> **लोकेऽपि"**

अत्र [२२]च प्रकरणे "मृत्पिण्डेऽस्तित्व[२३]सामर्थ्याद्" इत्यादिना [२४]शक्तिव्यक्तिदृशा, [२५]शाकल्याया[२६]मव-स्थायाम्" इत्यनेन, तथा "[२७]प्रादुर्भवति यद्यस्मात्" इत्यादिना च क्रम[२८]विचित्रस्वभावदृशा व्यवहरन्

---

[१] व्यवस्थाप्यते — ऐ.

[२] नकारो नास्ति — ऊ, ऋ, ॠ.

[३] इष्टमेव भविष्यतीति प्रसक्तम् — अ, आ, ई, ऐ; विशिष्टमेव भविष्यतीति प्रसक्तम् — ए.

[४] 'नष्टमेव बाध्यते' इत्येतन्नास्ति — उ.

[५] यत्किंच मात्रयाप्ययथात्वकरणे — ऐ.

[६] चेत्युक्तं — अ, आ, ई, उ, ए, ऐ; चैतदुक्तं — ॠ.

[७] वाशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ. नाशानुत्पत्तेः — उ.

[८] ०वैयर्थ्यजनन० — अ; ०वैयर्थ्याज्जन्मनाशानुप० — ऊ; वैयर्थ्याज्जन्मनाशार्थानुप० — ऋ, ॠ.

[९] 'भावो' इत्येतन्नास्ति — ए; भावोऽप्यवस्थितेः — आ; भावो न स्थितः — ऊ, ऋ, ॠ.

[१०] ०पक्षः — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.

[११] ०रत्यन्तं स्वरूप० — ॠ.

[१२] नकारो नास्ति — ऋ, ॠ.

[१३] शक्तशक्त्या — ई, उ.

[१४] अत्र एवकारोऽधिकः — ऐ.

[१५] ०रित्यसत्येव — आ, ई, उ; ०रिति सत्तैव ऋ; ०रित्यसतैव — ॠ.

[१६] ०त्यनुमानविरोधः — ऊ, ऋ, ॠ.

[१७] दध्यादिषु व्यापक — उ; दध्यादिष्वव्यापक ऋ, ॠ.

[१८] 'च' इत्यत्र 'अपि' इति दृश्यते — ऐ.

[१९] 'सत्कार्यपक्षक्षतेः' इत्येतन्नास्ति — ॠ.

[२०] पूर्वः पक्षः — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ.

[२१] सिद्धान्तस्तु — आ.

[२२] चशब्दो नास्ति — ऋ, ॠ.

[२३] सामर्थ्यादिना — ऋ, ॠ.

[२४] शक्तिदृशा — ॠ.

[२५] मतङ्ग० विद्या० ६. ४७ उ०.

[२६] 'अवस्थायां' इत्येतन्नास्ति — अ.

[२७] मतङ्ग० विद्या० ६. ५४ पू०.

[२८] ०विचित्रभाव० — ऊ, ऋ, ॠ.

सूत्रकारः पक्षयोरेतयोः '[1]अत्राभ्युपगमे[2] न चात्यन्तं भेद इति दर्शयति। तथा हि — कारणमेव [3]कार्यं भवति, तदीया वा शक्तिरिति कोऽनयोर्वचन[4]व्यत्ययः। भेदः[5] सर्वथा तु न[6]। [7]तयोरभेदसाधनायां '[8]प्रमाणं सत्कार्यवादिभि[9]र्वक्तव्यमिति [10]तदिदमभिधीयते — **मृत्पिण्डे** धर्मिणि" [11]**घटोऽभिव्यज्यते** न त्वस[12]दुत्पद्यते इति साध्यम्। [13]तत्र अस्तित्वं विद्यमानत्वं यत्कार्यस्य, तदेव वक्ष्यमाणनयेन कारणस्य सामर्थ्यं तत [14]इति हेतुः। **यथा लोकेऽपि** इति दृष्टान्तः। [15]यत्र प्रमाणान्तरेण सिद्धास्तित्वं[16] वस्तु नोप[17]लभ्यते [18]तत्र कारकैर्व्यज्यते। न [19]तूत्पाद्यते। [20]यथा लोके निशादौ [21]घटादि दीपादिभिः प्रमाणान्तरसिद्ध[22]सत्ताकं तथा मृत्पिण्डादौ घटादि नोपलभ्यते[23]। [24]ततः कारकैस्तत्र व्यज्यते, न तूत्पाद्यते इति न कारकव्यापारवैयर्थ्य[25]मभिव्यक्तेरस्तित्वादिति। [26]बाधक[27]निरास उत्सूत्रेणैव [28]भविष्यतीति अस्मिन्सूत्रे तत्साधकमेव प्रमाणमुपक्षिप्तम्।

अथ केन प्रमाणेन घटादेः कार्यस्य [29]तत्रास्तित्वसिद्धिः, [30]कारणत्वसामर्थ्यादेव। [31]तथाहि — किमिदं कारणत्वं मृत्पिण्डादेरत्रेति वक्तव्यम्। ननु प्राग्भावित्वमात्रमेव। [32]यद्येवं [33]सर्वं सर्वस्य कारणं स्यात् प्राग्भावित्वस्याविशेषात्। अस्तु तर्हि सहकारिसंनिधानमेव। न। घटादेरङ्कुरादिजनकसहकारिसंनिधानेऽप्यङ्कुरादिकार्यादर्शनात्। तर्हि [34]शक्तत्वमेव कारणत्वम्। [35]तदापि

---

[1] तत्रा० — अ, आ, ई, उ, ए, ऐ.

[2] ०गमो — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.

[3] कार्या भवति — ऊ; कार्यीभवति — ऋ, ॠ.

[4] ०व्यत्ययोर्भेदः — अ, आ, ई, उ, ए, ऐ; ०व्यक्त्योर्भेदः — ऊ; ०शक्त्योर्भेदः — ऋ, ॠ.

[5] अत्र इतिशब्दोऽधिकः — ए.

[6] नकारो नास्ति — ऊ, ऋ, ॠ.

[7] तयोर्भेद० — अ, आ, ई, ए, ऐ; तयोर्हेतुसाध० — उ, तयोरभेदसाधनाय — ऊ, ऋ.

[8] प्रमाणमसत्कार्य० — ए.

[9] ०र्व्यक्तमिति — ऐ.

[10] तदभिधीयते — अ, आ, ई, उ, ए, ऐ.

[11] घटेऽभि० — ऋ.

[12] ०दुत्पाद्यते — ऊ, ऋ, ॠ.

[13] अत्र — ॠ.

[14] एव — ऊ, ऋ, ॠ.

[15] यद्यत्र — ऊ, ऋ, ॠ.

[16] अत्र 'प्रमाणान्तरे' इत्येतदधिकम् — ऊ.

[17] ०लभ्यन्ते — ए.

[18] तत्तत्र कारकं व्यज्यते — ऊ, ऋ, ॠ.

[19] तूत्पद्यते — ऐ.

[20] यथा निशाघटादि — ए.

[21] घटादिर्दीपा० — ई, उ.

[22] ०सत्ताकं कथं मृत्पिण्डा० — अ, ०सत्ताकं च मृत्पिण्डा० — ऊ, ऋ, ॠ; ०सत्ताकं मृत्पिण्डा० — ऐ.

[23] अत्र 'सत्यत्वात्' इत्येतदधिकम् — ऊ, ऋ, ॠ.

[24] 'ततः' इत्यारभ्य 'तूत्पाद्यते' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.

[25] ०मभिव्यक्तस्सत्यत्वादि बाधक० — ऊ, ॠ; ०मभिव्यक्तेस्सत्यत्वादिबाधक० ऋ; ०मभिव्यक्तोऽस्तित्वादिति — ऐ.

[26] साधक० — ए.

[27] ०निरासादुत्सूत्रेणैव — अ, ए; ०निरासोऽत्र सूत्रैरेव — ऊ, ऋ, ॠ.

[28] मतङ्ग० विद्या० ६. ४७.

[29] अत्रा० — ऋ.

[30] कारणसामर्थ्या० — आ; कारणत्वं सामर्थ्या० — ऊ, ऋ, ॠ.

[31] 'तथाहि' इत्येतन्नास्ति — ए.

[32] यदेवं — ऋ.

[33] 'सर्वं' इत्येतन्नास्ति — अ.

[34] शक्तित्वमेव — अ, ए; शाक्तत्वमेव — ऊ, ऋ, ॠ.

[35] 'तदापि' इत्यत्र 'एवमपि' इति दृश्यते — ऊ, ऋ, ॠ; 'अपि' इति दृश्यते — ऐ.

सर्वस्मात् सर्वसंभवः। नाशक्तं नाम वस्तु संभवति यतः। एवं तर्हि विशिष्टकार्य[1]जनकत्वमेव शक्तत्वम्। यदाहुः[2] —

> "धूमहेतुस्वभावो हि वह्निस्तच्छक्तिभेदवान्।
> अधूम[3]हेतोर्धूमस्य भावे स स्यादहेतुकः॥" इति।

तर्हि अत एव कारणावच्छेदकत्वात् प्रागपि कार्यस्यास्तित्वसिद्धिः। असतो[4]ऽवच्छेदकत्वासंभवात्, अनवच्छिन्नस्य [5]कारणत्वायोगादिति। यद् यदा यदवच्छेदकं [6]न तत् तदा तत्रासत्। यथा ग्राहकादि [7]ग्राह्याद्यवच्छेदकम्, [8]अवच्छेदकं च कार्य कारणस्य प्रागपीति सत्कार्यसिद्धिः। यथा च ग्राह्याद्भिन्नं [9]ग्राहकं ग्राहकस्वभावमेव[10] तथोक्तं [11]शून्य[12]वादिनिरास इति न [13]दृष्टान्तासिद्धिः।

ननु कल्पितमेवात्र [14]कार्यस्य कारणावच्छेदकत्वम्। यद्येवं कारणत्वमपि कल्पितमेवेति कथं ततो वन्ध्यासुतादेरिव [15]कार्योत्पत्तिः। परापेक्षस्य हि[16] [17]भिन्नस्वभावस्य असति परस्मिन् वास्तवत्वानुपपत्तेः। सिद्धेऽभ्युपगते वा[18] वास्तवे कारणत्वे सत्कार्य[19]वादप्रस्तावात् तत्कल्पनाभिधानमत्राभ्युपगतनिराकृतमेव। प्रत्यक्षविरुद्धं च। [20]घटमृदादीनां कार्यकारणभावस्य प्रत्यक्षसिद्धत्वाद् अनुमाननिराकृतमपि। [21]तनुकरण[22]भुवनादेर्विश्वस्या[23]स्याहेतुकत्वप्रसङ्गात्। अहेतोश्च [24]देशकालप्रकृतिनियमायोगादित्युक्तम्[25]।

> [26]"नित्यं [27]सत्त्वमसत्त्वं वाहेतोरन्यानपेक्षणात्।
> [28]अपेक्षातो हि भावानां कादाचित्कत्वसंभवः॥" इति।

ननु [29]न ब्रूमः [30]कारणत्वं कल्पितम्। अपि तु तस्य कार्यावच्छेदमात्रमेवेति न तदवच्छेद-

---

[1] ०जननशक्तत्वमेव सत्। यदाहुः — ऊ, ऋ, ॠ.
[2] आकरो न लभ्यते।
[3] ०हेतुर्धूमस्य — ॠ.
[4] ०ऽवच्छेदत्वा० — ऊ, ऋ, ॠ.
[5] कारकत्वा० — ऊ, ॠ.
[6] नकारो नास्ति — अ, ई, उ.
[7] ग्राह्याद्यवच्छेदकत्वम् — ऐ.
[8] 'अवच्छेदकं च' इत्यारभ्य 'कारणावच्छेदकत्वम्' इत्यन्तं नास्ति — ऐ.
[9] 'ग्राहकं' इत्येतन्नास्ति — ए.
[10] अत्र चशब्दोऽधिकः — ऋ, ॠ.
[11] मतङ्ग० विद्या० ६. २१ उ०, २२ वृत्तौ।
[12] ०वादनिरास इति — ऊ, ऋ.
[13] दृष्टान्तसिद्धिः — ऊ, ऋ, ॠ.
[14] 'कार्यस्य' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[15] कार्यस्योत्पत्तिः — ऊ, ॠ.
[16] हिशब्दो नास्ति — ए.
[17] 'भिन्न' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[18] वाशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[19] ०वास्तवप्रस्तावात् — अ; वादप्रस्ताववत्-कल्पना — ऐ.
[20] घटादिमृदा० — ऐ.
[21] तनुभुवनकरणादे० — ए.
[22] ०भुवनादिविश्व० — ऊ, ऋ, ॠ.
[23] ०स्याहेतुत्व० — ऊ, ऋ, ॠ.
[24] देशकालसमायोगा० — अ; देशकालप्रतिनियमायोगा० — आ, ई, उ, ए.
[25] मतङ्ग० विद्या० ६. २५ उ०, २६ पू० वृत्तौ।
[26] प्रमाणवार्तिके २. १८१ पू०.
[27] सत्यमसत्यं वा — अ, ऋ.
[28] कादाचित्कतया सिद्धा दुःखस्यास्य सहेतुता (प्रमाणवार्तिकम् २. १८०उ, इदमर्धमेतदर्धसदृशार्थकमिव भाति।
[29] नकारो नास्ति — अ, आ, ई, उ, ए, ऐ.
[30] 'कारणत्वं' इत्यारभ्य 'तदवच्छेदव्यतिरेकेण' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.

व्यतिरेकेण [1]कारणत्वस्याभावात्, तस्यापि कल्पितत्वमित्युक्तम्[2]। [3]तदयुक्तम्। न हि पूर्वादेः कल्पितत्वे पराद्यकल्पि[4]तमिति युक्तम्।

[5]नन्वसत्यपि पितरि पुत्रे तदवच्छेदोऽस्त्येव। न। आत्मन एव कर्तृत्वेन परमार्थतः पितृत्वात्तस्य [6]चासत्यत्वाभावात्।

[7]ननु [8]न कार्यापेक्षं [9]कारणत्वम्। अपि तु [10]विशिष्टपदार्थस्वरूपमेव तदपेक्षया[11] व्यवह्रियते। कीदृशं तदिति वक्तव्यम्। [12]ननु [13]नेदमियत्तया निर्देष्टुं शक्यमनिरूपितेन। [14]न। मायात्मना भावान्व्यव[15]स्थापयन्तीति [16]सुव्यवस्थिता भावाः।

ननु राहोः शिर इत्यादिवत्कल्पनयापि भावव्यवहारो दृश्यत एव। सत्यम्। तत्र हि शिरो[17]मात्रव्यतिरेके[18]णान्वयस्य राहोरनुपलम्भाद्युक्तैव कल्पना। अत्र तु मृत्पिण्डादि[19]स्वरूपातिरिक्त[20]मन्यदेव विशिष्टार्थकारित्व[21]मर्थव्यवस्थापकं [22]ग्राहकत्वं ग्राहक[23]पदेनेव कारकं कारकपदेन व्यवस्थाप्यमानमपूर्ववस्तुविषयत्वान्न काल्पनिकमिति शक्यते वक्तुम्। सर्वस्य काल्पनिकत्वप्रसङ्गात्। [24]प्रत्युक्तश्च एष पक्षः [25]शून्यवादप्रतिक्षेपेण। प्रोक्तं च भवद्भिः[26] —

"अर्थक्रियासमर्थं यत्तदत्र [27]परमार्थसत्" इति।

न च [28]तत् [29]कार्यावच्छेदकं [30]विनाप्यवतिष्ठते इत्युक्तम्[31]। [32]अतः कारणस्येव तदवच्छेदकस्यापि कार्यस्य[33] पूर्वभावः[34] सिद्ध इति सत्कार्यसिद्धिः।

---

[1] 'कारणत्वस्याभावात् तस्यापि' इत्यस्य स्थाने 'कारणस्यापि' इति दृश्यते — ॠ.

[2] 'उक्तम्' इत्येतन्नास्ति—अ, आ, ई, उ, ए, ऐ.

[3] 'तदयुक्तम्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[4] ०तत्त्वमिति — ऊ, ऋ, ॠ.

[5] ननु सत्यपि — ऐ.

[6] चासत्त्वाभावात् — अ, आ; च सत्यत्वाभावात् — ऐ.

[7] 'ननु न कार्यापेक्षं' इत्यत्र 'प्रत्यक्षं' इति दृश्यते — अ.

[8] नकारो नास्ति — आ, ई, उ, ए.

[9] कारणत्वात् — ऊ, ऋ.

[10] विशिष्टं पदार्थ० — ऊ, ऋ, ॠ.

[11] अत्र तुशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.

[12] 'ननु' इत्येतन्नास्ति — ए.

[13] नेदमिदं तथा शक्यं निर्देष्टुं निरूपितेन — अ, ऋ, ए; नेदमिदं तया शक्यं निर्देष्टुं निरूपितेन — आ, ई, उ; नेदमिदं तया शक्यं निर्दोषमनिरूपितेन — ऐ.

[14] नामायमात्मना — ऊ, ऋ, ॠ, ऐ.

[15] ०स्थापयतीति — ऊ, ऋ, ॠ.

[16] स्वव्यवस्थिताभावः — ऋ; स्वव्यवस्थिता भावाः — ॠ.

[17] ०मात्रा० — ऊ, ऋ, ॠ.

[18] ०णान्यस्य — आ, ऊ, ऋ, ॠ, ए, ऐ.

[19] स्वरूपादिरिक्त० — आ; स्वरूपाद्यतिरिक्त० — ऋ; स्वरूपव्यतिरिक्त — ॠ.

[20] ०मात्रार्थकारित्व० — अ;

[21] ०मर्थानामर्थत्वव्यवस्थापकं — अ, आ, ई, उ, ऊ, ए, ऐ.

[22] 'ग्राहकत्वं' इत्येतन्नास्ति — अ, आ, ई, उ, ए.

[23] पदेनैव — आ, ऐ; पदेन कारकपदेन — ऊ, ऋ, ॠ.

[24] प्रत्युक्तं च — अ, ई, उ.

[25] मतङ्ग० विद्या० ६. १४, १५, पू०, २१ उ० २२ वृत्तौ शून्यवादप्रतिक्षेपः।

[26] प्रमाणवार्तिके ३. ३ पू०.

[27] परमार्थ सत् — अ, परमार्थवत् — ए.

[28] 'तत्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.

[29] कार्यावच्छेदं — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ.

[30] विना व्यवतिष्ठते — ऊ, ऋ, ॠ; विनाप्युपतिष्ठते — ए.

[31] अत्र चशब्दोऽधिकः — ऐ.

[32] सतः — ऊ, ॠ.

[33] अत्र अपिशब्दोऽधिकः — ऐ.

[34] पूर्वं भावः — ऊ, ऋ, ॠ.

अत्र च सांख्यैरन्यान्यपि साधनान्युक्तानीति तान्यपि तत[1]एवावगन्तव्यानि। यदाहुः[2] —

"असदकरणादुपादानग्रहणात्सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥" इति।

एतेन यैरपि [3]सत्कार्यासत्कार्यपक्षयोः प्रतिक्षेपेण पक्षान्तरमवलम्ब्यते। यदाहुः[4] —

"[5]अपदेऽर्थे [6]पदन्यासः कारणस्य न विद्यते।
अथ च प्रागसद्[7]भावः कारणे सति दृश्यते॥
[8]अत्यद्भुता त्वियं वृत्तिर्यदभागं यदक्रमम्।
भावानां प्राग[9]भूतानामात्मतत्त्वं प्रकाशते॥" इति।

तेऽपि पराकार्याः। यतोऽनेन[10] क्रमेण तैः शून्यवादे एव प्रविश्यते। तस्य [11]प्रत्युक्तत्वादयुक्तमेतत्।

[12]तथान्यदेव सत्कार्यासत्कार्यात्मकं पक्षान्तरं तृतीय[13]मवलम्ब्यते। तदप्ययुक्तमेव। विधिनिषेधयोरत्रान्योन्यव्यतिरेके[14]णावस्थितेः, पक्षान्तरासंभवाद् [15]भावाभावयोरिवेत्युक्तम्। न च प्रागपि कार्यात्मनो भावस्यासत्तेति कुतोऽसत्कार्यपक्षः॥

यत्तु[16] सत्कार्यपक्षे जन्मनाशानुपपत्तिरित्युक्तम्[17]। तत्रोच्यते — 'अर्थक्रियायुक्तः' इत्यादि।

**"अर्थक्रियायुक्त [18]उत्पन्नो यत्प्रभाष्यते।**
**शाकल्यायामवस्थायां [19]नष्ट इत्युपचर्यते॥४७॥**

अत्रापि "[20]**यथा लोकेऽपि**[21]" इत्यनुवर्तते। लोकशब्देन चात्र वादन्तराण्युच्यन्ते। यथा [22]च [23]तत्राप्यनादित्वेऽप्यात्मनो विज्ञानसन्ततेर्वा शरीरसंयोगेन अभिव्यक्तितोऽर्थक्रियायुक्तत्वात्, [24]**उत्पन्नः**

---

[1] एवानुगन्तव्यानि — अ, आ, ई, उ,
[2] सांख्यका० ९.
[3] सदसत्कार्य० — अ, आ, ई, उ, ए, ऐ.
[4] वाक्यपदीये ३. ७८, ८१.
[5] अपदार्थे — ऊ, ऋ.
[6] पदं न्यासः — ऐ.
[7] ०द्भावकारणे — अ, ए; ०द्भावः करणे ई, उ, ऐ.
[8] अन्यभूता — अ, आ, ई, उ, ऐ; अत्र भूतादियं — ए.
[9] ०भूतानां मानसत्वं — अ, आ, ई, उ, ए, ऐ.
[10] 'अनेन' इत्यत्र 'यद्यनेन' इति दृश्यते — ऊ, ऋ, ॠ; 'तेन' इति दृश्यते — ऐ.
[11] मतङ्ग० विद्या० ६. २१ उ० –२२ वृत्तौ शून्यवादप्रतिक्षेपः।
[12] अथान्यदेव — ऊ, ऋ, ॠ; यथान्यदेव — ऐ.
[13] ०मालम्ब्यते — अ, आ, ई, उ, ए, ऐ.
[14] ०ण वावस्थितेः — अ.
[15] 'भावाभावयोः' इत्यारभ्य 'भावस्यासत्तेति' इत्यन्तस्य ग्रन्थस्य स्थाने 'भावाभावयोरिति' इति दृश्यते — ऊ, ऋ, ॠ.
[16] 'तु' शब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[17] मतङ्ग० विद्या० ६. ४५उ०, ४६ पू० वृत्तौ।
[18] उत्पन्नेयं प्रभाष्यते — ऊ, ऋ, ॠ.
[19] नष्टम् — मु. उ. ऐ.
[20] 'यथा' इत्येतन्नास्ति — अ, ए.
[21] अपिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[22] चशब्दो नास्ति — ए.
[23] तत्रानादित्वे — ऊ, ऋ, ॠ.
[24] तदुत्पन्नः — आ, ई, उ, ए.

पुत्र [1]इत्युच्यते। तस्यैव [2]च [3]शरीरस्य [4]शकलानि भागाः, तेषां भावः शाकल्यं, तद्विद्यते अवस्था[5] यस्याः सा शाकल्यावस्था। मत्वर्थीयोऽच्प्रत्ययः। तस्यां [6]**शाकल्यायामवस्थायां** शरीरस्य भागशो गमने सति "[7]दस्युर्मृतः" इत्युपचारेणोच्यते। न त्वात्मनो[8] विज्ञानसन्ततेर्वा परमार्थतो जन्म-मरणयोः संभवः। [9]यदाहुः[10] —

"अजो नित्यः[11] शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे"। इति।

तथैव कार्यस्य प्रागपि कारणरूपतया सत्त्वे[12]ऽपीदानीं [13]कार्यात्मिकामवस्थामनुभवतः पूर्वापर-योरवस्थयोर्नाशोत्पादावुपचरितावेव। अत एवात्र [14]अवस्थानामसत्यत्वेऽप्यव[15]स्थातृसत्यतया [16]सत्कार्यतासमर्थन[17]मप्यव्याख्यैव। [18]तद्व्यतिरेकेण चावस्थातुरस्य[19]स्यासिद्धेः। अवस्था [20]एव हि क्षीरदध्यादि[21]रूपाः [22]तदन्तराभाव[23]विकला एव, वक्ष्यमाणनयेनाभेदेन प्रतीयमानत्वात्। अवस्थातोऽ-वस्थान्तरमेव च प्रागव[24]स्थाया अभावो [25]नान्यस्तु स्वरूप [26]इति। सत्यासत्यत्वे सत्ताब्रह्मवाद [27]एवाश्रितो भवेत्। यदाहुः[28] —

"सत्यासत्यौ तु यौ [29]भागौ [30]प्रतिभागं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः"॥ इति।

[31]न तु सत्कार्यपक्षः। ततश्चोत्पादविनाशयोरसंभवात् कल्पोपचरितार्थतेति।

---

[1] इतिशब्दो नास्ति — अ.
[2] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[3] 'शरीरस्य' इत्येतन्नास्ति — ऐ.
[4] शकलविभागाः — ऊ, ऋ, ॠ.
[5] अत्र 'या' इत्यधिकम् — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[6] शाकल्यावस्थायां — आ, ई, उ, ए.
[7] इदं स्मृतम् — अ.
[8] अत्र अपिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[9] 'यदाहुः' इत्येतन्नास्ति — अ, आ, ई, उ, ॠ, ए, ऐ.
[10] कठोपनिषदि २. १८; भगवद्गीतायाम् — २. २० उ०.
[11] 'शाश्वतोऽयं' इत्यारभ्य ४८ तमश्लोकान्तं पठितुमशक्यत्वात् 'ऊ' कोशस्थपाठभेदो न लिख्यते।
[12] अपिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[13] कार्यात्मिकावस्था० — ऋ, ॠ; कार्यात्मि-कामवस्था० — ए.
[14] अवस्थानां सत्य० — उ.
[15] ०स्थात्रसत्यतया —अ, आ, ई, उ, ॠ, ऐ; ०स्थाप्यसत्यतया — ऋ; ०स्थात्रावश्यतया — ए.
[16] असत्कार्यतासमर्थन० — अ, ऋ; सत्कार्या-समर्थन० — आ, ई, ऐ; असत्कार्यसमर्थन० — उ; सत्कार्यसमर्थन० — ॠ, ए.
[17] ०मप्यपव्याख्यैव — ऋ; ०मपव्याख्यैव — ॠ.
[18] तद्व्यतिरिक्तेन — अ, आ, ई, उ, ऋ.
[19] ०स्यासिद्धिः — ऋ, ॠ.
[20] 'एव' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] ०रूपा — ए.
[22] तदनन्तराभाव० — अ, ई, उ.
[23] ०विकलास्य वक्ष्यमाण० — ए.
[24] ०स्थाया भावो —अ, आ; ०स्थायामन्तराभावे — उ.
[25] नान्यस्तु शब्दरूपः—अ; नान्यस्तुच्छरूपः — आ, ई, उ, ऋ, ॠ; नान्यस्तुशश इव — ए; नान्यस्तु शक्तिरूपः —ऐ.
[26] तासां त्वसत्यत्वे — ऋ, ॠ.
[27] एवान्यतो — ए.
[28] वाक्यपदीये — ३. १. ३२.
[29] भावौ — वाक्यपदीयपाठः।
[30] प्रतिभावं — ई, उ, ए, वाक्यपदीयपाठश्च।
[31] 'न तु' इत्यत्र 'ननु' इति दृश्यते — अ.

एतच्च पराभ्युपगमेनोच्यते। परमार्थतस्त्वाविर्भावतिरोभावावेव जन्मनाशौ। तयोरेव [1]प्रत्यक्षसिद्धत्वात्। तथा हि — प्रत्यक्षेण क्षीराद्येव [2]दध्याद्यात्मना [3]भवद्दृश्यते। लोकोऽपि[4] क्षीरं नष्टमम्लीभूतमित्याह। न च क्षणिकत्वाद्भावानां क्षीरस्य तथाभावगमनं [5]नोपपद्यते इति वाच्यम्। क्षणिकत्वस्य [6]पूर्वमेव निरस्तत्वात्।

[7]यद्येवं क्षीरकाले दध्नो[8]ऽसत्त्वादसदुत्पत्तिरेव। क्षीरात्मना[9] [10]तत्तदास्तीति चेत् कथमन्य-[11]भावेन [12]तदस्ति, अतिप्रसङ्गात्। भवेदेवं [13]यद्यन्यदेव [14]तत्ततो भवेत्। [15]तदेव तु [16]दध्यात्मना यतो भवद्दृश्यते इत्युक्तम्। वक्ष्यति च —

"[17]प्रादुर्भवति यद्यस्मात्तदेवात्मानमादरात्।
साधयेत्" इति।

ननु क्षीरपरिच्छेदेन घटादिवद् दध्यपि व्यवच्छिन्नत्वात् क्षीरादन्यदेव[18]। सत्यम्। यदि क्षीरान्तरजन्य[19]दधिवद् व्यवच्छिन्नं तत्स्यात्। इदं तु तज्जन्यं तदभिन्नस्वभावत्वात् तदानीं क्षीरस्वभावत्वेन परिच्छिन्नमेव। धूमपरिच्छेदेन वह्निकार्यतापरिच्छेदवत्। विभ्रमात्तु न निश्चीयते। यदुक्तं [20]भवद्भिः[21] —

"एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम्।
कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते॥
[22]नो चेद्भ्रान्तिनिमित्तेन [23]संयोज्येत गुणान्तरम्।
[24]शुक्तेस्तु रजताकारो रूपसाधर्म्यदर्शनात्॥" इति।

एतेन भेदाभेदव्यवस्थिति[25]दोषोऽप्यत्र प्रत्युक्तः। [26]तत्कार्यकारणस्य ततो भेदाभावाद् [27]अत-त्कारणस्य [28]ततोऽन्यत्वादिति।

अथ [29]तत्स्वभावत्वे दध्यात्मना तदानीं [30]कथं क्षीरं नोपलभ्यत इति चेत्। न। [31]तदानीम-

---

[1] प्रत्यक्षत्वात् — अ, आ, ई, उ, ए, ऐ.
[2] दध्यात्मना — आ, ई, उ, ऋ, ॠ, ऐ; दध्यात्मा भवद्० — ए.
[3] भाववद्दृश्यते — अ; संभवदृश्यन्ते — ऐ.
[4] 'अपि' इत्यत्र 'हि' इति दृश्यते — ऋ, ॠ.
[5] नोपलभ्यते — अ; चोपपद्यते — ऐ.
[6] मतङ्ग० विद्या० ६. २३–२८, ३०–४१ वृत्तौ।
[7] यदेवं — ऐ.
[8] ०ऽसत्वात्तदसदुत्पत्ति० — अ.
[9] क्षीरात्मा — आ.
[10] तदस्तीति — अ; स तदास्तीति — ऐ.
[11] ०भावे तदस्ति — ऋ, ॠ.
[12] तदास्ति — आ, ई, उ.
[13] यदन्यदेव — आ, ई, उ.
[14] ततो — अ, आ, ई, उ, ए, ऐ.
[15] 'तदेव तु' इत्यत्र 'तदेतत्' इति दृश्यते — अ.
[16] तद्दध्यात्मना—ऋ, ॠ; दुग्धदध्यात्मना—ऐ.
[17] मतङ्ग० विद्या० ६. ५४.
[18] क्षीरादिना — अ; क्षीरान्यदेव — ऐ.
[19] ०दधिवच्च तदवच्छिन्नं — ऐ.
[20] भवद्भिरपि — ऋ, ॠ.
[21] प्रमाणवार्तिकभाष्ये ४. २९१.
[22] आकरो न लभ्यते; न चेद्भ्रान्ति० — ऋ, ॠ.
[23] संयोज्येन — अ, आ, ई, उ, ऊ, ए, ऐ.
[24] शुक्तौ वा रजताकारो — ऋ, ॠ; शुक्तौ तु रजताकारे — ऐ.
[25] ०भेदोऽप्यत्र — ऐ.
[26] तत्कारणस्य — ई, उ, ऋ, ॠ, ए, ऐ.
[27] एतत्कारणस्य — ऋ.
[28] तदन्यत्वादिति — ऋ, ॠ.
[29] तत्स्वभावे — ए.
[30] 'कथं' इत्येतन्नास्ति — अ, आ, ई, उ, ऋ, ए, ऐ.
[31] 'तदानीं' इत्यत्र 'तदा' इति दृश्यते — ऋ, ॠ.

नभिव्यक्तदधिस्वभावत्वात् । यो हि यदा यत्संनिधौ [१]चाभि[२]व्यक्तस्वभावः सः कथ[३]मधुनानभिव्यक्ततद्रूपो भवेत् । स्थिर[४]भाववादिभिः [५]सहकारि[६]संनिधानाभ्युपगतविशिष्टार्थ[७]क्रियाकारिस्वभाववत् । न ह्यन्यथा विरुद्धधर्माध्यासापत्तेः सतां क्षणिकत्वं परिहर्तुं [८]शक्यमित्युक्तमात्मसिद्धौ[९] । क्षणिकवाद्यभ्युपगततत्तत्स्वभावयुगपच्चित्रविज्ञानवच्च । अन्यथा तेषामपि प्रतिपरमाणु ज्ञानभेदप्रसङ्गात् स्थौल्याभासाभावप्रसङ्ग [१०]इत्युक्तं **नरेश्वरपरीक्षाप्रकाशे**[११] ।

[१२]नन्वनुपलब्धेः क्षीरे दधि नास्त्येव । सत्यम् । घटवन्न[१३] [१४]व्यतिरिक्तम् । न तु[१५] [१६]तत्स्वभावमप्यतत्स्वभावम् । पश्चादपि तत्स्वभावाभि[१७]व्यक्त्यनुपपत्तेः । दृश्यते च सा । ततः प्रागपि [१८]क्षीरात्मना सत्त्वसिद्धिः ।

अत एव तयोरवस्थयोर्भेद इति चेत् । न । तदेवेदं [१९]क्षीरं [२०]दधीभूतम् । [२१]क्षीरादि क्रमेणाव्यतिरिक्तनवनीतादि[२२]स्वभावमेकमेवेत्यपर्यनुयोज्यमेव । न[२३]च क्षीरकाले दध्नः, दधिकाले [२४]वा क्षीरस्य असत्ता । [२५]तदैक्येनैवाव[२६]भासनादित्युक्तम् । न हि "घटो लोहितो मृण्मयः परिवर्तुल" इत्येकत्वेन घटधर्माणा[२७]मन्योन्यमशक्यपरिहारमन्यत्वं शक्यावगमम् ।

---

[१] चशब्दो नास्ति — ऋ, ॠ.

[२] व्यक्तस्तत्स्वभावः — अ; व्यक्तं तत्स्वभावः — आ.

[३] ०मधुनाभिव्यक्त० — अ, आ, ई, उ, ऋ, ॠ, ए, ऐ.

[४] भावादिभिः—अ, आ, ई, उ, ए; पदार्थवादिभिः — ऋ, ॠ.

[५] सहकार० — ऋ, ॠ.

[६] ०संनिधौ विशिष्टार्थ० — अ; संनिधानादुपगतविशिष्टार्थ० — ए.

[७] क्रियाविभागस्व० — ऋ; क्रियाविभावस्व० — ॠ.

[८] शक्यमित्यध्यात्म० — अ, ॠ.

[९] मतङ्ग० विद्या० ६. २७ उ० वृत्तौ ।

[१०] इत्युक्तौ प्रत्यक्षाप्रकाशे — अ.

[११] १. ३६ पू० विवरणे ।

[१२] नानुपलब्धेः — अ, ऐ.

[१३] 'न' इत्येतन्नास्ति — ऋ, ॠ.

[१४] व्यतिरिक्तेः — अ, ऐ.

[१५] अत्र नशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.

[१६] तत्स्वभावत्वमतत्स्वभावस्य पश्चादपि — अ, आ, ई, उ, ए, ऐ.

[१७] व्याप्त्यनुपपत्तेः — ऐ.

[१८] क्षीरदध्यात्मना — ऋ, ॠ.

[१९] क्षीरदधिभूतं — अ, आ, ई, उ, ए; क्षीरं दधिभूतं — ऐ.

[२०] 'दधीभूतं' इत्यस्यानन्तरं 'इति प्रत्यक्षसिद्धत्वादभेदस्य । एतेनाभिव्यक्तेरप्यसत्त्वं प्रत्युक्तम् । एकत्वेऽपि वस्तुनस्तदा तदभिव्यक्त्यनुपपत्तिर्न, तथा दृष्टत्वात् । न हि दृष्टेऽनुपपन्नं नाम, युगपदिव तथास्वभावत्वात् । न हि स्वभावाभावानां पर्यनुयोगमर्हति । तथा हि — अत्यन्तशीतस्पर्शवतोऽपि हिमस्य दाहकत्वं प्रत्यक्षसिद्धत्वादपर्यनुयोज्यम् । एवं प्रत्यक्षेण तत् तथाभूतं' इत्यधिकम् — ऋ, ॠ.

[२१] क्षीरादिवस्तुसिद्धं यत्क्रमेणाव्यतिरिक्तदधिनवनीतादि० — आ, ई, उ, ए, ऐ; क्षीरादिवत्सिद्धं यत्क्रमेणाभिव्यक्त्या दधिनवनीतादि० —ऋ, ॠ.

[२२] स्वभावमेवेत्य० — ऋ, ॠ.

[२३] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.

[२४] वाशब्दो नास्ति — ऋ, ॠ.

[२५] तदैक्येनाव० — ऋ, ॠ.

[२६] ०भासमाना० — आ.

[२७] ०मन्योन्यसमत्वादन्यत्वमशक्यावगमम् — — ऋ, ॠ.

[1]ननु युगपत्तेषामवस्थितिरन्योन्यपरिहाराभावादविरोध एव । न[2] । [3]युगपद्व्यवस्थितैश्च[4] [5]घटपटादिभिरनेकान्तात् । [6]ननु तेषां भेदेनैव वेदनादिति चेत् । [7]न । [8]तर्हि [9]युगपत्तेषामवस्थितेरन्योन्यपरिहाराभावोऽपि त्वभेदवेदनादेव । तच्च[10] क्रमव्यवस्थितयोरपि क्षीरदध्यात्मनोस्तद्वर्तयोरस्तीत्युक्तम् । अत[11]स्तयोरपि न परस्परपरिहारेणाव[12]स्थितिः । विभ्रमात्तथा प्रतिपत्तिः । [13]परमार्थतस्तु क्षीरपरिच्छेदेन तदात्मतया दध्यादि तत्कार्यं सर्वं परिच्छिन्नमेवेत्युक्तम् । क्षीरात्मनस्तेषां [14]भेदाभावादित्यनया [15]दिशान्येषामसत्कार्यपक्षे स्थितानां [16]प्रलापाः [17]परिहार्या इति ॥४७ ॥

[18]अथायं सत्कार्यवादः [19]प्रकृते प्रधाननिर्णये कुत्रोपयुज्यते इति । तदर्थमेतत् — 'न्यग्रोधकणिकायां तु' इत्यादि ।

**न्यग्रोधकणिकायां तु यद्वद्वृक्षोऽखिलः स्थितः ।**
**तद्वत्प्रधाने तत्त्वानां लयो [20]ज्ञेयश्च सुव्रत ॥४८॥**

[21]प्रागुक्तनयेन यथा [22]कारणात्मनि न्यग्रोधबीजेऽत्यन्ताणीयसि [23]कार्यरूपोऽनेकस्कन्ध[24]विटपशाखा[25]प्रकारोऽत्यन्तविस्तीर्णो न्यग्रोध[26]वृक्षः प्रागवस्थितः, तथैव प्रधानात्मन्येव सर्वाणि [27]पृथिव्यादीनि तत्त्वानि स्थितानीति[28] [29]प्रधान[30]स्यैवावशिष्टतत्त्वानां सौक्ष्म्यावस्थात्मकं स्वरूपं नियतमित्थं सिद्धचतीति ॥ ४८ ॥

अत एव [31]नियतमसहमानोऽ[32]त्र मतङ्गमुनिः — 'स्फुटोऽयं नियमो न स्याद्' इत्यादिना ।

---

[1] न तु — अ.
[2] नशब्दो नास्ति — अ, ई, उ, ए, ऐ.
[3] युगपदव० — अ, आ.
[4] स्थितेः — ऋ, ॠ; स्थितैः — ए.
[5] घटादिभिरनैकान्तादि — अ, आ; घटादिभिरनेकात् — ई, उ; घटादिभिरनैकान्तिकात् — ए; घटादिभिरनैकान्तात् — ऐ.
[6] न तु तेषां — अ, आ, ई, उ, ऐ; न तेषां — ऋ, ॠ.
[7] नशब्दो नास्ति — ऋ.
[8] 'तर्हि' इत्यस्यानन्तरं नशब्दोऽधिकः — अ, आ, ई, उ, ए.
[9] युगपद्व्यवस्थितेऽन्योन्य० — अ, ऋ; युगपदवस्थितेरन्योन्य० — आ, ई, उ, ॠ, ए.
[10] तद्वच्च — ऐ.
[11] 'तयोरपि' इत्यारभ्य 'प्रतिपत्तिः' इत्यन्तं नास्ति — ऋ.
[12] स्थितिभ्रमात् — आ; स्थितिविभ्रमात् — ऋ.
[13] परमार्थस्तु — ऋ.
[14] भेदाभेदादित्यनया — ऋ.
[15] दिशान्यस्य सत्कार्यपक्षस्थितानां — ऋ, ॠ.
[16] प्रलापात् — ऋ, ॠ.
[17] परिहाराः — अ, ऐ.
[18] आहार्यं — ऋ, ॠ.
[19] प्रकृतप्रधानविज्ञेये — ऋ, ॠ.
[20] ज्ञेयस्तु — ऋ, ॠ.
[21] मतङ्ग० विद्या० ६. ४६, ४७ वृत्तौ ।
[22] कारणात्मना — ऊ, ऋ, ॠ.
[23] तत्कार्य० — ऋ, ॠ.
[24] विटपोऽत्यन्त० — ऋ, ॠ.
[25] ०प्रकारात्यन्त० — अ.
[26] ०वृक्ष इवावस्थितः — अ.
[27] पृथ्व्यादीनि — ऐ.
[28] इतिशब्दो नास्ति — ऊ, ऋ.
[29] प्रधानस्यैवाव० — ऐ.
[30] ०स्यैव विशिष्टं तत्त्वानां — ऊ, ऋ; ०स्यैव विशिष्टतत्त्वानां — ॠ.
[31] नियममसह० — ऋ.
[32] 'अत्र' इत्येतन्नास्ति — अ, ऊ, ऋ, ॠ.

**मतङ्ग उवाच —**

> [1]स्फुटोऽयं [2]नियमो न स्याद् गोशृङ्गात्तु शरो यथा ।
> [3]दूर्वाजागोऽविलोमभ्यो गोमयाच्च यथोत्पलम् ॥४९॥
> दृष्टं युक्तिविचारज्ञैर्निस्सं[4]दिग्धं वदेश्वर ।

[5]"प्रधानात्मन्येव तत्त्वानां [6]लय इति" **नायं नियमः**, कारणान्तरस्यापि संभवात् । [7]तथा हि —**गोशृङ्गात्** [8]**शरो** [9]भवन्दृष्टः, शराच्च शरः । **यथा**[10] [11]अजा च गौश्च अविश्च [12]तासाम् अजागोऽवीनां लोमभ्यो [13]**दूर्वा** दृष्टा, [14]दूर्वातश्च दूर्वा । **यथा गोमयाद् उत्पलं दृष्टम्**, [15]उत्पला-च्चोत्पलमत्यन्तनियम[16]निपुणैरिति । तथैव प्रधानादपि[17] तत्त्वानामुद्भवोऽन्यतश्च भविष्यतीति कारणान्तरे[18]ऽपि तत्त्वानां लय[19]संभावनयात्र नियमानुपपत्तिरिति पूर्वः पक्षः ॥

सिद्धान्तम्नु — 'अनेनैवानुमानेन' इत्यादि ।

**परमेश्वर उवाच —**

> अनेनैवानुमानेन कार्यकारणसन्ततौ ॥५०॥
> [20]**प्रवक्तव्यं मुनिव्याघ्र धर्मो** [21]**वैधर्म्यमेव** [22]**च** ।

[23]यदेतत्कार्यकारणसन्ताने कारणस्य [24]कार्यात्मकत्वसाधनमनुमानं प्रागुक्तम्[25], **अनेनैवानुमानेन**[26] अन्यस्यान्यात्मनि[27] [28]निषेधः सिद्धः । सजातीयात् शरादे[29]रुत्पन्नानां शरादीनां **धर्मः** समानता ।

---

[1] स्पष्टोऽयं — ओ.
[2] नियमोऽन्यस्य गोशृङ्गात्तु — ऐ.
[3] ऊर्णाजागो० — मु.
[4] ०दिग्धवदीश्वर — मु, उ.
[5] अत्र 'अनेन' इत्यधिकम् — ऐ.
[6] न्याय इति — ए.
[7] यथाहि — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए.
[8] अत्र चशब्दोऽधिकः — ई, उ.
[9] भवद्दृष्टः — ऊ, ऋ, ॠ, ए.
[10] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ऊ, ऋ, ॠ, ऐ.
[11] अजश्च — ऊ, ऋ, ॠ.
[12] तेषां — ऊ, ऋ, ॠ.
[13] 'दूर्वा दृष्टा' इत्येतन्नास्ति — ॠ.
[14] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[15] 'उत्पलाच्चोत्पलं' इत्येतन्नास्ति — ऊ, ऋ, ॠ, ए.
[16] ०निपुणैरुत्पलमूलाच्चोत्पलं तथैव — ऊ, ऋ, ॠ.
[17] अत्र 'तत्त्वानां तदपि' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[18] अपिशब्दो नास्ति — ऊ, ॠ.
[19] ०संभावनायां तत्र—अ, ई, उ, ए, ऐ; ०संभावनां तत्र — आ.
[20] प्रवक्तव्यं — मु, उ, ओ; प्रवर्तव्यं — ऐ.
[21] वैधर्ममेव — ओ.
[22] वा — ऐ, ओ.
[23] यदेतत्कर्तव्यकारण० — ए.
[24] कार्यात्मत्व० — अ, ई, उ, ऊ, ऋ, ॠ; कार्यात्मकत्वं — ऐ.
[25] मतङ्ग० विद्या० ६. ४६ उ०, ४७ पू० वृत्तौ ।
[26] अत्र इतिशब्दोऽधिकः — आ; नशब्दोऽधिकः — ऊ, ऋ, ॠ.
[27] अन्यस्याध्यात्मत्व० — ऊ; अन्यस्याप्यात्मत्व० — ऋ, ॠ; अन्यस्यान्यात्म० — ऐ.
[28] निषेधसिद्धेः — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[29] ०रुत्पत्तेरुत्पन्नानां — ऊ, ॠ.

विजानीयाच्च गोशृङ्गादेरुत्पन्नानां **वैधर्म्यम्**। समानाकारयोगेऽपि स्पर्शोपयोग[1]शृङ्गिणीनां हरीत-कीनामिव [2]प्रतिपत्तव्यमिति नानियमोऽत्र प्रधानजन्य[3]स्यान्येनाजननादन्यजन्यस्य च तेनेति ॥

[4]यद्येवं [5]शरीरादेरिव पृथिव्यादेरपि तत्त्वान्तरस्य कारणान्तरा[6]दुद्भवसंभावना स्यादेव। न। यतः — 'न च यन्नास्ति' इति।

[7]**न च यन्नास्ति तत्तस्माद्वयज्यते निश्चिता मतिः ॥५१॥**

भवेदेतत्। यदि यथादृष्टपृथिव्यादितत्त्ववैधर्म्येण [8]अन्यत् पृथिव्यादितत्त्वान्तरमस्तीति नि-श्चितम्[9]। [10]**तत् तस्मात्** संभाव्यमानात् कारणान्तरादुद्भविष्यतीति निश्चेतुं शक्यम्। [11]यदाहुः[12] — "तदसिद्धं [13]यदसिद्धेन साध्यते।" इति कुतस्तत्संभावना ॥ ५१ ॥

[14]ननु प्रधानेन, अस्तित्वादेव सर्वस्मिन् काले जनयितव्यमिति प्रलयासिद्धेः [15]कथमत्रोक्तं[16] "**तद्वत्प्रधाने तत्त्वानां लयः**" इति। प्रोक्तं चान्यैः[17] —

"प्रलयेऽपि प्रमाणं [18]वः सर्वोच्छेदात्मके न हि" इति।

तदर्थमेतत् — 'अस्तित्वादपि' इत्यादि।

**अस्तित्वादपि सर्वत्र न समा सूतिरिष्यते।**
**यथोषरे तु बीजानामस्तित्वादप्यसंभवः ॥५२॥**
[19]**समानत्वेऽपि नारीणां [20]सूतेर्यद्वन्न संभवः।**
[21]**वन्ध्यायाः सन्ततौ किं स्या[22]द्विचारो ह्युभयात्मकः ॥५३॥**

---

[1] ०स्रंसिनीनां — आ, ई, ऊ, ॠ, ॠ; ०संसृतीनां — उ; ०स्यासिनीनां — ए; स्वच्छनीकां — ऐ.
[2] प्रवक्तव्यमिति — ए.
[3] स्यान्येनाजननमन्यजन्यस्य — ऊ; स्यान्ये-नाजननमन्यजनस्य — ॠ, ॠ; स्यान्येन जननादन्यजन्यस्य — ऐ.
[4] 'यद्येवं' इत्यारभ्य 'न यत.' इत्यन्तं नास्ति — ऊ, ॠ, ॠ.
[5] शब्दादेरिव — ऐ.
[6] ०दुद्भवासंभावना — अ, ऐ.
[7] न यन्नास्ति न तत्तस्मा० — ऊ, ॠ, ॠ; न चायं नास्ति यद्यस्मा० — ऐ.
[8] अन्यत्र — अ, ॠ, ऐ.
[9] अत्र 'स्यात्तन्न चास्तीति निश्चितम्' इत्य-धिकम् — ई, उ; 'स्यात् न च यन्नास्तीति निश्चितम्' इत्यधिकम् — ऊ, ॠ, ॠ; 'हृतात् न चास्तीति निश्चितम्' इत्यधिकम् — ए; 'स्यान्न चास्तीति निश्चितम्' इत्यधिकम् — ऐ.
[10] न तस्मात् — अ, आ, ई, उ, ऐ; नास्मात् — ए.
[11] 'यदाहुः' इत्यारभ्य 'तत्संभावना' इत्यन्तो भागः ५२, ५३ तमश्लोकव्याख्यानप्रारम्भे दृश्यते। — ऊ, ॠ, ॠ.
[12] आकरो न लभ्यते।
[13] यदसिद्धौ न साध्यते — ऊ, ॠ, ॠ.
[14] ननु यदि प्रधानात्मनीदं पृथिव्याद्युद्भव-तत्त्वे (पृथिव्याद्युद्भवं तत्तत्त्वे-ॠ) नास्ती-त्युक्तं तत्प्रधाने नास्ति। तदेव सर्वस्मिन् — ऊ, ॠ, ॠ.
[15] कथं केनोक्तं — ए.
[16] मतङ्ग० विद्या० ६. ४८. उ०.
[17] श्लोकवा० संबन्धाक्षेपपरि० ६८ पू०.
[18] यत् — अ, आ, ई, उ, ए, ऐ; नः — श्लोक-वार्तिकपाठः।
[19] सामान्यार्थेऽपि — मु, उ, ऐ, ओ.
[20] सूतेर्यद्वशसंभवः — मु, उ; सूतेर्यद्वदसंभवः — ऐ, ओ.
[21] वन्ध्यायां — मु, उ, ऐ, ओ.
[22] ०द्विचारोऽप्युभयात्मकः — मु, उ, ऐ, ओ.

[1]अनैकान्तिकत्वाद् न हि [2]यद्यज्जननसमर्थं[3] [4]तत्तज्जनयत्येव, सहकारिवैकल्ये [5]कदाचिदजननात्। यथा[6] बीजं [7]दृष्टसहकारिक्षेत्रादिवैकल्ये [8]सिक्तस्थलेऽप्युप्तम्, [9]यथा च दृष्टसहकारिसमानत्वेऽपि स्त्रीणामदृष्टस्य शुभाशुभस्य कर्मणो वैकल्यात् कदाचित् पुत्रादिसन्ततेरजननम्। यदि च सहकार्यपेक्षोपादानकारणस्य नेष्यते तदा [10]**वन्ध्यायाः** सन्ततिविषये **किमिति** कस्माद् **विचारः विदुषां स्यात्**; नैव स्यात्। **उभयात्मकः** इति किं दृष्टस्य [11]सहकारिणो वात[12]पित्तकफादेर्दोषाद्वन्ध्यायाः [13]सन्ततेरनुत्पादः, अथादृष्टस्य प्रागार्जितस्य कर्मणो दोषादित्येवंरूपः[14]। [15]अस्ति चासौ। ततः सहकार्य[16]पेक्षामुपादानकारणस्य साधयति। तस्यां च सिद्धायां [17]तद्वदेव दृष्टस्य सहकारिण-[18]स्तदानीमनवरतानन्तपुरुषभोगसंपादनेन प्रकृतीनां सुकुमारवनितानामिव [19]पुंभोगप्रदस्य सामर्थ्यस्य वैकल्यात्, [20]अदृष्टस्य वा [21]धर्माधर्मात्मनः [22]कर्मणः [23]चक्षुषोऽञ्जनदानादेरिव [24]परिपाकापेक्षया विशिष्टपरिपाकापेक्षिणो वैकल्यादवश्यं वनितानां स्वापादिवत्[25] सामर्थ्यप्रबोधहेतोः[26] प्रलयोऽभ्युपगन्तव्य इति। प्रोक्तं च श्रीमन्मृगेन्द्रे[27]—

"स्वापेऽप्यास्ते बोधयन्बोधयोग्यान्
रोध्यान् रुन्धन् पाचयन् कर्मिकर्म।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
[28]पश्यन्सर्वं यद्यथा वस्तुजातम्॥" इति॥५२–५३॥

[29]एवं प्रासङ्गिकं प्रलयमभिधाय प्रकृतं सत्कार्यवादमुपसंहरति — 'प्रादुर्भवति यद्यस्माद्' इत्यादि।

**प्रादुर्भवति यद्यस्मात्तदेवात्मानमादरात्।**
**साधयेन्मुनिशार्दूल स्थानमप्यविचारतः॥५४॥**

---

[1] नानैकान्तिक० — ऊ, ऋ, ॠ, ऐ.
[2] यज्जनन० — ऋ, ॠ.
[3] अत्र 'यत्' इत्यधिकम् — ऊ, ऋ, ॠ, ऐ.
[4] तज्जनयत्येव — आ.
[5] कदाचिदप्यजननात् — ऊ, ऋ, ॠ.
[6] अत्र हिशब्दोऽधिकः — उ.
[7] दृष्टं सहकारिवैकल्ये — ऊ, ऋ, ॠ.
[8] सिकतास्थलव्युप्तं — ऊ, ऋ, ॠ; सिक्ते स्थलेऽप्युप्तम् —ऐ.
[9] यथा चाह दृष्ट० — ऊ, ऋ, ॠ.
[10] वन्ध्यायां — अ, आ, ई, उ, ऊ, ए, ऐ.
[11] सहकारिकारिणो — ऊ, ऋ, ॠ.
[12] ०पित्ताद्दोषाद् — आ, ई, उ; ०पित्तादेर्दोषाद् — ऊ, ऋ, ॠ, ए, ऐ.
[13] संततेरनुत्पत्तिदोषोऽदृष्टस्य — अ, आ, ई, उ, ए, ऐ.
[14] ०रूपम् — ऐ.
[15] अतश्चासौ — उ.
[16] ०पेक्षमुपादानकारणं साधयति — अ, आ, ई, उ, ए, ऐ.
[17] तद्वदेवं — आ.
[18] ०स्तदानीमभावतदनवतारतानन्त० — अ; ०स्तदानीं भावादनवरतानन्त० — ए.
[19] पुंभोगप्रदसामर्थ्यस्य—अ, आ, ई, उ, ऊ, ए, ऐ.
[20] दृष्टस्य वा — ऐ.
[21] धर्माधर्मात्मकर्मणः — अ; धर्माधर्मात्मना कर्मणः — ए.
[22] 'कर्मणः' इत्येतन्नास्ति — आ.
[23] चक्षुषो जननादेरिव — ए.
[24] परिवासापेक्षया — अ, आ, ई, ए, ऐ; परिवसनापेक्षया — उ.
[25] स्वापादिव — ऊ, ऋ, ॠ; स्वरूपादिवत् — ऐ.
[26] हेतुः — ऊ, ऋ, ॠ.
[27] मृगेन्द्रे विद्या० ४. १५.
[28] सर्वं पश्यन् — अ, आ, ई, उ, ए, ऐ.
[29] एवमाङ्गिकं — अ.

यत् कार्यं यस्मात् कारणविशेषात् [1]**प्रादुर्भवति**। [2]तत् **तदेव** [3]कारणमेव[4] **आत्मानं** कार्यरूपं [5]कारणस्थानं च **आदरात्** [6]तथा[7]स्वभावत्वेन **साधयेदिति** संभाव्यते। दध्यादेः [8]क्षीराद्यात्मन एव भवतः प्रत्यक्षसिद्धत्वात्। कारणस्थाने एव च कुण्डादावभि[9]व्यक्तेः। [10]न हि क्षीरादि नष्टम्, [11]अन्यत्रैव वा गतं, दध्यादि [12]तु [13]असदेवोत्पन्नं, कुतश्चिदा[14]गतं वेति प्रत्यक्षेण प्रतीयते। अपि [15]तु तदेव दध्यादिभूमिकात्मनाप्यभिन्नमत्यन्तनिपुणै[16]रवहितैर्नरैर्बहुभिश्च प्रतीयत इति सुविचारितः सत्कार्यपक्ष एवेति ॥५४॥

अथ असत्कार्यपक्षनिषेधः — 'प्रादुर्भावोऽसतः' इत्यादि।

**प्रादुर्भावोऽसतः सिद्धः स्फुटोऽयं [17]नियमः कुतः।**

असत एव कार्यस्य कारणादुत्पाद इति **अयं नियमः** भवतां **कुतः**॥

[18]अत्र पराभिप्रायः — 'उपलब्धेरभावाद्वा' इति।

**उपलब्धेरभावाद्वा कारणा[19]त्प्रत्यवस्थितः ॥५५॥**

**वा**शब्दो वक्ष्यमाणप्रकारान्तरापेक्षया। यद्वक्ष्यति[20] — "**अभावोऽर्थक्रियाभावादेवं चेत्**" इति। तत्र कारणकाले कार्यस्यानुपलम्भाद्धेतोरयं नियमः [21]**प्रत्यवस्थितो**[22] व्यवस्थितो भवताम्। स [23]चायुक्तः। उपलब्ध्यभावमात्रस्यान्यथासिद्धत्वेनानैकान्तिकत्वात् ॥५५॥

तथा हि — 'अतिसूक्ष्मनिकृष्टत्वाद्' इत्यादि।

**अतिसूक्ष्मनिकृष्ट[24]त्वाद्वैकल्याद्वाथ चक्षुषः ॥**
**तस्य तस्य तदाभावो यच्च द्रष्टुं न शक्यते ॥५६॥**

---

[1] उद्भवति — ऊ, ऋ, ॠ.
[2] 'तत्' इत्यत्र इतिशब्दो दृश्यते—ऐ.
[3] कारणानां कार्यरूपं — अ.
[4] एवकारो नास्ति — आ, ई, उ, ए.
[5] कारणं स्थानं — ऐ
[6] 'तथा' इत्येतन्नास्ति — अ.
[7] 'स्व' इत्येतन्नास्ति — ॠ.
[8] क्षीराद्यात्मनैव — ऊ, ऋ, ॠ; क्षीरात्मन एव — ऐ.
[9] ०व्यक्तिः — अ, आ, ई, उ, ए, ऐ.
[10] 'न हि क्षीरादि नष्टम्' इत्यत्र 'नन्वेवम्' इति दृश्यते — अ.
[11] अन्यत्रैवापगतं — अ, ए; अन्यत्रैवावगतं — आ, ई, उ; अन्यत्रेव गतं — ए.
[12] तुशब्दो नास्ति — ए.
[13] सदेवोत्पन्नं — ए.
[14] ०गतं भवतीति प्रत्यक्षेण — अ, आ, ई, उ, ए, ऐ.
[15] तुशब्दो नास्ति — ऐ.
[16] ०रवहिततरैर्बहु०—ऊ, ऋ, ॠ; ०रवहितनरैर्बहु० — ए, ऐ.
[17] निश्चयः — मु, उ, ऐ.
[18] तत्र — आ, ई, उ.
[19] ०त्प्रत्युत स्थितः — ऊ, ऋ, ॠ.
[20] मतङ्ग० विद्या० ६. ५७ पू०.
[21] प्रत्युपस्थितो — ऊ, ऋ, ॠ.
[22] ०स्थितोऽप्यवस्थितो — अ.
[23] स चायुक्तम् — अ, ऐ; सदायुक्तः — ॠ.
[24] त्वाद्वैकल्यत्वादचक्षुषः — ऊ, ऋ, ॠ.

सूक्ष्माश्च निकृष्टाश्च [1]सूक्ष्मनिकृष्टाः। विप्रकृष्टाश्च[2] [3]निकृष्टाः। अतीव सूक्ष्माः परमाणवः। अतीव विप्रकृष्टा मेर्वादय.। [4]तेषां भावः, [5]तस्मादप्युपलब्धेरभावो दृष्टः [6]परमाणुमेर्वादौ। तथा चक्षुरादिवैकल्याद् [7]यथा अन्धादेः [8]रूपादिषु [9]विषयेषु [10]यच्च [11]**द्रष्टुं न शक्यते** स्वभावविप्रकृष्टं[12] पिशाचादि। **तस्य तस्य** अर्थस्य परमाण्वादेः [13]पिशाचादेश्च उप[14]लब्ध्यभाव[15]मात्राद् **अभावः** प्रसक्तो भवताम्। अथ [16]उपलम्भाभावमात्रा[17]त्तेषामेवाभावः। [18]तर्हि वक्ष्यमाणनयेन [19]तस्या गमकत्वात् कारण[20]कालेऽपि[21] ततः कार्यस्य नाभाव इति संशय एव [22]युक्तः। न त्वसत्तानियमः। [23]तदिदमुक्तं सांख्यैरपि[24] —

> [25]"अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।
> सौक्ष्म्याद्व्यवधाना[26]दभिभवात्समानाभिहाराच्च ॥
> सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्" इति।

[27]विशिष्टा[28]नुपलब्धिलक्षणप्राप्तानुपलब्धिरेवार्था[29]भावे हेतु.। सा चात्र न संभवति। कारणात्मनैव तदा [30]कार्यस्योपलम्भादित्युक्तम्[31] ॥५६॥

प्रकारान्तरेण पराभिप्रायः — 'अभावोऽर्थक्रियाभावाद्' इत्यादि।

**अभावोऽर्थक्रियाभावादेवं चेन्मन्यसे यदा।**

कार्येण हि धर्मिणोऽत्यन्तातीन्द्रियस्यापि सत्त्वमिन्द्रियादेरिव सिद्ध्यति। कारणकाले च कार्य-

---

[1] 'सूक्ष्मनिकृष्टाः' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए.
[2] चशब्दो नास्ति — ऊ, ऋ, ॠ, ऐ.
[3] निराकृष्टाः — अ; सूक्ष्मनिकृष्टाः — आ, ई, उ, ऊ, ऋ, ॠ, ए; 'निकृष्टाः' इत्येतन्नास्ति — ऐ.
[4] 'तेषां भावः' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[5] अस्मादप्युप० — अ, आ, ई, उ, ऐ; अस्मादुप० — ए.
[6] परमाण्वादौ — आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[7] यथान्नादिरूपादिषु — ऊ, ऋ, ॠ.
[8] रवादिषु — ऐ.
[9] विषयादिषु — ऊ, ऋ, ॠ.
[10] तच्च — ऊ, ऋ, ॠ; यश्च — ऐ.
[11] दृष्टिः — ऐ.
[12] स्वभावाद्द्रष्टुं — अ; स्वभावदृष्टं — आ, ई, उ, ए; स्वभावनिकृष्टं — ऐ.
[13] पिशाचात्तस्याप्युप० — ऊ, ऋ, ॠ; पिशाचादेश्च तस्मादप्युप० — ऐ.
[14] ०लब्धभाव० — ॠ.
[15] ०मात्राद्यभावः — ऊ, ऋ, ॠ.
[16] नोपलम्भाभाव० — अ, आ, ई, उ, ए; नोपालम्भाभाव० — ऊ, ऋ, ॠ.
[17] ०तेषामभावः — ऊ, ऋ, ॠ.
[18] 'तर्हि' इत्येतन्नास्ति — ऊ, ऋ, ॠ, ऐ.
[19] तस्य — ऐ.
[20] ०कालोऽपि — अ.
[21] अत्र 'तर्हि' इत्यधिकम् — ऋ, ॠ.
[22] युक्ता — अ.
[23] तदिदमयुक्तम् — अ.
[24] अपिशब्दो नास्ति — ऋ.
[25] सांख्यका० — ७. ८ पू०.
[26] ०दभिभावात् — आ, ए; ०दभिभावनात् — ई, उ.
[27] विशिष्टमत्र पशुस्त्रीलक्षण — ए.
[28] ०तूपलब्धि० — आ, ई, उ, ऐ; ०त्वनुपलब्धि — ऊ; ०त्वनुरूपलब्धि — ऋ, ॠ.
[29] ०भावहेतुः — ऊ, ऋ, ॠ.
[30] तस्योप० — ऊ, ऋ, ॠ.
[31] मतङ्ग० विद्या० — ६. ४६–४८ वृत्तौ।

स्यार्थ[1]क्रियाया अभावाद् बुद्धीन्द्रियादेः [2]षष्ठस्येवाभावः सिद्ध इति। **एवं** [3]**चेद्** असत्कार्य-साधनाय **मन्यसे** [4]**यदा** यस्मिन्पक्षे ॥

'तदा तं प्रति' इति।

**तदा तं [5]प्रत्यभावः स्यादन्यत्रास्ति"**

**तदा** तस्मिन्नपि पक्षे यं पुरुषं प्रति[6] तत्कार्य नार्थक्रियां करोति, **तं** प्रत्येवाभावः तस्य स्यात्। **अन्यत्र** तु पुरुषान्तरे [7]प्रागुक्तनयेन [8]कारणभावात्मना [9]अर्थक्रियां [10]तदा [11]तत् कुर्वद् **अस्ति** इति स्यात्। [12]ततो नाभावस्तस्य[13] प्रत्येतुं शक्यत इत्यर्थः। षष्ठस्य [14]तु [15]बुद्धीन्द्रियादेः सर्वथा साधक-प्रमाणाभावाद् अत्यन्ताभाव एव [16]युक्तः ॥

[17]अत्र दष्टान्तः — 'यथाम्भसः सतः' इत्यादि।

**"यथाम्भसः ॥५७॥**
**सतः साधारणस्यापि दृष्टं लोके न चान्यथा।**

**यथा** [18]तोयस्य **सतः** विद्यमानस्यैव सकललोकसाधारणस्यापि **लोके दृष्टम्** एतत् [19]कंचित् पुरुषं प्रति सत्त्वं, कंचि[20]त्प्रत्यसत्त्वमिति। तद् **न चान्यथा** इति नार्थक्रियाभावाद् असत्त्वपक्षे तदुपपद्यते इत्यर्थः॥

कथं तर्हि तदम्भः सच्च, असच्च लोके इत्युच्यते — 'वैकल्याच्चक्षुषोऽसत्तद्' इत्यादि।

**वैकल्याच्चक्षुषोऽसत्तदागमस्याप्यभावतः ॥५८॥**
**पिपासार्तस्य चोपायः स्वयमेवावधारितम्[21]।**

[22]**तद्** अम्भः **पिपासार्तस्य** कस्यचित् **चक्षुषो वैकल्यात्**, पुरुषान्तरोपदेशात्मनश्च **आगमस्य** अभावादसिद्धसत्ताकं पिपासानिवृत्त्यादिकार्याकरणादसदेव। तदेव तु **पिपासार्तस्य च उपायः**

---

[1] ०क्रियायास्तत्कार्यभूताया अभावात् — ऊ, ऋ, ॠ.
[2] षष्ठस्याभावः — ऊ, ऋ, ॠ; षष्ठस्यैवाभावः — ए.
[3] चेदकार्य० — ऋ; चेदसत्यकार्य० — ॠ; त्वेतदसत्कार्य — ऐ.
[4] 'यदा' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[5] प्रत्यभावं — मु, उ.
[6] अत्र इतिशब्दोऽधिकः — ऐ.
[7] मतङ्ग० विद्या० ६. ४६–४८.
[8] कारणस्वभावात्मना — ऋ, ॠ.
[9] 'अर्थक्रियां' इत्येतन्नास्ति — ऊ, ॠ.
[10] तथा — ऊ, ऋ, ॠ.
[11] 'तत्' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[12] ततो भावः — अ, आ, ई, उ, ए; ततो न भावः — ऐ.
[13] 'तस्य' इत्येतन्नास्ति — ॠ.
[14] तुशब्दो नास्ति — ऊ, ऋ, ॠ.
[15] बुद्धीन्द्रिया देवाः सर्वथा — ऊ, ऋ, ॠ.
[16] युक्तम् — अ.
[17] तत्र — ऐ.
[18] जलस्य — ऊ, ऋ, ॠ.
[19] किंचित्पुरुषं — अ, आ, ई, उ, ए.
[20] ०त्प्रति त्वसत्त्व० — ऊ, ऋ, ॠ.
[21] ०धारितः — ऊ, ऋ, ॠ, ओ.
[22] एतदम्भः — ऊ, ऋ, ॠ.

अन्यस्य पिपासानिवृत्तौ **स्वयमेवावधारितं** प्रत्यक्षेण साक्षात्कृतमिति सदेवोच्यते। ज्ञानाभावस्य [१]वस्त्वभावनान्तरीयकत्वासिद्धेः॥

तथा हि — 'यस्य यस्य' इत्यादि।

**यस्य यस्येन्द्रियस्याथ वैकल्यं दृश्यते मुने॥५९॥**
**तस्य तस्य [२]तदाभावो विषयस्य [३]किमागतः।**

[४]इन्द्रियाभावाद्यनुत्पादो [५]ज्ञानस्य नार्थाभावहेतुः। तदाहुः[६] — [७]"नैष [८]स्थाणोरपराधो यदेनमन्धो न पश्यति" इति॥

यद्येवं सर्वज्ञानामपि ज्ञानाभावेन[९] [१०]वस्त्वभावासिद्धेरज्ञातस्य विषयान्तरस्य संभवात्, अस्मदादिवदसर्वज्ञता। तदयुक्तम्। [११]यतः — 'ज्ञानचक्षुर्विहीनानाम्' इति।

**ज्ञानचक्षुर्विहीनानां प्रत्यक्षादपरं कुतः॥६०॥**

[१२]ये हि ज्ञानचक्षुर्विहीनाः असर्वज्ञाः तेषाम्। [१३]**प्रत्यक्षाद्** इत्युपलक्षणम्। प्रत्यक्षानुमानागमेभ्यः **अपरं** प्रमाणं नास्ति[१४]। प्रत्यक्षादीनि च [१५]नार्थसत्ताव्यापकानीति कुतो ज्ञानाभावादर्थाभावसिद्धिरित्युक्तम्। ज्ञानचक्षुर्युक्तानां तु सर्वज्ञानां यज्ज्ञानं तद् अर्थसत्ताव्यापकमिति, युक्तैव तद[१६]भावादर्थाभावसिद्धिरिति, नास्मदादि[१७]वदज्ञातविषयसंभव इति। [१८]तदेवं [१९]नार्थक्रियाभावादभावो[२०] [२१]भावानां वास्तवोऽत्र पुरुषविषये। अपि तूपचरित इति। [२२]नातः कार्यस्यासत्ता [२३]प्राक् कारणकाले[२४] सिद्धयतीति[२५]॥ ६०॥

---

[१] वस्त्वभावा नान्तरीयक० — आ; वस्त्वभावान्तरीयकत्वसिद्धेः — ए.
[२] तदाभावे — ऊ, ऋ, ॠ.
[३] किमागतम् — ऊ, ऋ, ॠ.
[४] 'इन्द्रियाभावा०' इत्यारभ्य 'न पश्यति इति' इत्येतत्पर्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[५] ज्ञानस्यार्थाभावहेतुः — ऊ, ऋ, ॠ.
[६] लौ० न्या० — ३. ७६ पृष्ठे.
[७] न ह्येष स्थाणोरप० — लौकिकन्यायाञ्जलिपाठः।
[८] स्थूणैरपराधो — ऊ, ऋ, ॠ.
[९] ०भावेऽपि — ऊ, ऋ, ॠ.
[१०] न स्वभावासिद्धे० — ॠ.
[११] 'यतः' इत्येतन्नास्ति — आ.
[१२] ये विज्ञान० — ऊ, ऋ, ॠ.
[१३] प्रत्यक्षाभ्युप० — ऊ; प्रत्यक्षाद्युप० — ऋ, ॠ.
[१४] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[१५] नार्थं सत्ता० — ऊ, ऋ, ॠ.
[१६] ०भावात्तदभाव० — अ, आ, ई, उ, ए, ऐ; ०भावादर्थभाव० — ॠ.
[१७] ०वदज्ञानविषय० — ऐ.
[१८] तदेव — ऐ.
[१९] नार्थता क्रिया० — ऊ, ऋ, ॠ.
[२०] अत्र 'भावो' इत्यधिकम् — ऋ, ॠ.
[२१] 'भावानां' इत्यत्र 'भावा न संशयाः' इति दृश्यते — ए.
[२२] न तत्कार्यस्यासत्ता — ऊ, ऋ, ॠ; नातः कार्यसत्ता — ए, ऐ.
[२३] 'प्राक्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[२४] अत्र नकारोऽधिकः — ऐ.
[२५] इतिशब्दो नास्ति — अ.

एवं प्रासङ्गिकमसत्कार्य[1]पक्षनिषेधमपि कृत्वा, अथ प्रकृतमत्र [2]प्रधानात्मकपाशनिर्णयमुपसंहृत्य, पाशान्तरस्य, पाशयितुश्च निर्णयायोपोद्घातं कर्तुं सूत्रम् — 'कार्यमेतत्' इत्यादि।

**कार्यमेतत्प्रधानस्य दृश्यं यत्सचराचरम्।**
**कार्येण [3]कारणं सिद्धं तच्च भोक्तुरभीप्सितम् ॥६१॥**
**[4]भोग्यं भोजयिता देवो भगवान् परमेश्वरः।**

पूर्वं हि[5] "[6]तस्मादात्मास्ति" इत्यन्तेन आत्मा साधितः। भोक्तृत्वं [7]तु तस्य न अविद्यात्मकं पाशान्तरं विनोपपद्यते इति [8]भोक्तृपदेन तदुपोद्घातः। यथा चैतत् तनुकरणभुवनादि सर्वमेव प्रधानोपादानं, तथोक्तं परमाणूनां तत्कार्यत्व[9]साधनेन [10]प्रागिति॥

अथ मतङ्गमुनिः [11]पाशयितृनिर्णयं तावदवधीर्य, [12]पाशान्तरमसंभावयन् सांख्यभूमिकया चोदयति — 'एवं वदन्ति मुनयः' इत्यादिना।

**एवं वदन्ति मुनयो ह्यात्मा शुद्धः सदैव तु ॥६२॥**
**विरागी स च [13]मुक्तात्मा न च [14]तस्मात्परं क्वचित्।**
**प्रधानस्येष्यते सर्गः स च सर्वत्र संस्थितः॥६३॥**
**न कश्चिद्बध्यते लोके न च कश्चिद्विमुच्यते।**

आत्मनः [15]सततनिर्मलत्वात्, रागादेश्च मलस्य प्रकृति[16]गतत्वात्, ततः परस्य [17]मलात्मनो बन्धस्य च क्वचिदप्यसिद्धेः, प्रधानमेव पुरुष[18]स्यात्मदर्शनाय तत्स्वभावत्वाद् यदा [19]प्रवर्तते तदा संसार उच्यते। यदा निवर्तते तदा मोक्षः। न त्वात्मनः पाश्यता, प्रधानस्य [20]च पाशत्वं [21]प्रागुक्तमुपपद्यते इति [22]प्रतिज्ञातार्थविरोधः। यदाहुः सांख्याः[23] —

"तस्मान्न [24]बध्यते नापि मुच्यते नैव संसरति कश्चित्।

---

[1] 'पक्ष' इत्येतन्नास्ति — ए.
[2] प्रधानात्मपाश० — ऊ, ॠ, ॠ.
[3] कारणासिद्धिः — उ.
[4] भोज्यं भोजयिता — मु; भोक्तुर्भोजयिता ऊ, ॠ, ॠ.
[5] मतङ्ग० विद्या० ६. ४२ पू०.
[6] तस्मादात्मेत्यन्तेन — अ, आ, ई, उ, ए; तस्मादस्त्यात्मेत्यन्तेन — ऊ, ऐ; तस्मादस्त्यात्मेत्येतेन — ॠ,ॠ.
[7] तुशब्दो नास्ति — ऊ, ॠ, ॠ.
[8] भोक्तृत्वपदेन — आ, ई, उ, ए.
[9] ०साधने प्रागिति — अ, आ, ई, उ, ए, ऐ.
[10] मतङ्ग० विद्या० ६. ४४ वृत्तौ।
[11] पाशयितुर्निर्णयं — ॠ.
[12] पाशान्तरं संभावयन् — ऐ.
[13] युक्तात्मा — ऊ, ॠ, ॠ.
[14] तस्मात्परः — ऊ, ॠ, ॠ.
[15] स्वभावनिर्मल० — ऊ, ॠ, ॠ; सतो निर्मल० —ऐ.
[16] ०भूतत्वात् — ए.
[17] कालात्मनो — अ; मलात्मनां — ऊ, ॠ, ॠ.
[18] ०स्यादर्शनाय — अ, आ, ई, उ, ए, ऐ.
[19] प्रवर्तेत — अ, आ, ई, उ, ॠ.
[20] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] मतङ्ग० विद्या० ६. ४२ वृत्तौ।
[22] प्रतिज्ञार्थ० — ॠ, ॠ.
[23] सांख्यका० — ६२, ६१.
[24] बध्यतेऽद्धा न मुच्यते नापि सं० — सांख्यकारिकापाठः।

संसरति [1]बध्यते [2]सा विमुच्यते च नानाश्रया प्रकृतिः ॥
प्रकृतेः सुकुमारतरं न [3]किंचिदस्तीति मे [4]मतिर्भाति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥" इति ॥

अत्रोत्तरम् — 'यद्यात्मा' इत्यादि ।

**परमेश्वर उवाच —**

**यद्यात्मा केवलः स्वस्थः प्रधानं चाप्यचेतनम् ॥६४॥**
**अनयोर्व्यतिरिक्तत्वादीशः सोऽप्यत्र नेष्यते ।**
**सर्गस्यापि तदाभावो युक्तितोऽभ्युपगम्यते ॥६५॥**

अनेन पूर्वपक्षार्थमेवानुभाष्य सर्गाभावोऽत्र **युक्तितो** [5]वक्ष्यमाण[6]कारणाभावात् प्रसक्त इति दर्शयति । यतः पुंप्रधानव्यतिरिक्तत्वाद् मलवदीश्वरोऽपि [7]**नात्र** [8]कारणं भवद्भिः **इष्यते** ॥६४–६५ ॥

अत्र [9]पूर्वपक्षिकारणाशङ्का — 'संयोगश्चेत्' इति ।

**संयोगश्चेत्"**

पुंप्रधानयोः यः **संयोगः** [10]द्रष्टृदृश्यलक्षणः, स एवात्र हेतुः । [11]तत्किमन्येनेति ।

अत्र सिद्धान्तवादी — 'तदा रागी' इत्यादि ।

**"तदा रागी [12]साक्षः सावयवः [13]स्फुटः ।**

[14]अस्यापि संयोगस्य जतुकाष्ठसंयोगस्येव अनादित्वं न युज्यते एव । न च भवद्भिरिष्यते, [15]सर्ग-[16]महाप्रलयाभ्युपगमादिति कारणं वक्तव्यम् । तच्च पुरुषो वा स्यात्, प्रधानं वा । तत्र यदा पुरुष एव स्वात्मनः प्रकृति[17]संयोगहेतुः, **तदा रागी** सहाक्षैरिन्द्रियैरवयवैश्च कार्यकारणैर्वर्तते इति, [18]तद्वान् पाश्यः [19]प्रलये सिद्धः । शुद्धस्य [20]पुंसः प्रकृति[21]संयोगकारणत्वाभावात् । तदुक्तं श्रीमत्**स्वायंभुवे**[22]—

[1] बध्यते सा विच्यते च नाना० अ.
[2] सापि मुच्यते — आ, ई, उ.
[3] कश्चिदस्तीति — ऊ, ऋ.
[4] मतिर्भवति — सांख्यकारिकापाठः ।
[5] मतङ्ग० विद्या० ६. ६६–७० पू० वृत्तौ ।
[6] कारणात्प्रसक्त — अ, आ, ई, उ, ए, ऐ.
[7] 'नात्र' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[8] भवद्भिः कारणमिष्यते — ऊ, ऋ.
[9] पूर्वपक्षकारणा० — ऊ, ऋ, ॠ, ऐ.
[10] दृष्टः दृश्यलक्षणं — अ.
[11] तत्किमन्येति — ऊ, ऋ, ॠ.
[12] साक्षात्सावयवः — मु, उ.
[13] स्फुटम् — मु, उ, ऊ, ऋ, ॠ.
[14] तस्यापि — ऊ, ऋ, ॠ.
[15] 'सर्ग' इत्येतन्नास्ति — अ, ए, ऐ.
[16] 'महा' इत्येतन्नास्ति — आ.
[17] ०संयोगग्रहहेतुः — ऊ, ऋ, ॠ; ०संयोगे हेतुः — ए.
[18] यद्वत्पाश्यः प्रागपि सिद्धः — ऊ, ऋ, ॠ.
[19] प्रलयसिद्धः — आ, ई, उ, ऐ.
[20] 'पुंसः' इत्यत्र 'मुक्तपुंसः' इति दृश्यते — ऊ, ऋ, ॠ.
[21] ०संयोगकरणत्वाभावात् — अ; ०संयोग-कारणाभावात् — आ, ई, उ, ए, ऐ; ०संयोगः कारणाभावात् — ऊ, ऋ, ॠ.
[22] स्वायम्भुवे ३३. ४

"यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किंकृता।
शुद्धे पुंसि न तद्भोगो जाघटीति विपश्चितः॥" इति॥

नापि द्वितीयः पक्षो [1]'यतः — 'न स्वतः' इत्यादि।

**न स्वत**[2]**श्चाप्यचैतन्यात्प्रधानस्येष्यते जगत्॥६६॥**

[3]न चापि स्वत एव **प्रधानस्य** प्रवृत्तेः जगत्पुंसंसर्गोऽचेतनत्वात्। भूनिहितनिधानवत्। प्रवृत्तौ वा मुक्तेष्वपि प्रसङ्गात्। किं च "माता च वन्ध्या च" इतिवत् स्ववचननिराकृतोऽयं भवतः पक्षः॥६६॥

तथा हि — 'अज्ञत्वम्' इत्यादि।

**अज्ञत्वं कारणत्वं च** [4]**पारार्थ्यं** [5]**चाप्यनर्थिनः।**
**प्रतिपत्तिरियं प्रौढी भवतः** [6]**सुविचारिता॥६७॥**

यदि **अज्ञत्वमेव** प्रधानस्य न तदा कारणता कर्तृतोपपद्यते। अथ कर्तृत्वं [7]नाज्ञता; **कर्तुः** कारकान्तरप्रवृत्ति[8]निवृत्तिहेतुत्वेन[9] चैतन्याव्यभिचारात्। यदाहुः[10] —

"प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः।
अप्रवृत्तः [11]प्रवृत्तो वा स कर्ता नाम कारकः॥" इति।

तथा [12]यदपि **पारार्थ्यं** प्रधानस्योच्यते भवता तदपि **अनर्थिनः** पुरुषान् प्रति विरुद्धम्। तथा हि — "यदि पुरुषार्थमेव [13]प्रधानं प्रवर्तते [14]कथमनर्थिनः पुरुषाः। [15]अथ अनर्थिन एव पुरुषाः, ततो मुक्ता एवेति कथं [16]तादर्थ्यं प्रधानस्य" [17]इत्येवंविधवाक्यजनिता **इयं प्रतिपत्तिः** परस्परविरुद्धत्वेन[18] [19]निरूप्यमाणेति[20] [21]प्रौढिर्हि अत्यन्ता प्रौढता भवतामित्यर्थः॥ ६७॥

---

[1] 'यतः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[2] ०श्चाप्यतः पाश्यः प्रधाने नेष्यते — मु; श्चाप्यचैतन्यात्प्रधाने नेष्यते — उ.
[3] 'न चापि' इत्यारभ्य 'भवतः पक्षः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[4] परार्थं — ओ.
[5] प्रत्यनर्थिनः — ऊ, ऋ, ॠ.
[6] सुनिवारिता — ऊ, ऋ, ॠ.
[7] नाकृता — ऐ.
[8] 'निवृत्ति' इत्येतन्नास्ति—अ, आ, ई, उ, ए, ऐ.
[9] हेतुत्वे — ॠ.
[10] आकरो न लभ्यते।
[11] प्रवृत्तौ — आ, ऊ.
[12] 'यदपि' इत्यत्र 'यदि' इति दृश्यते—ऊ, ऋ, ॠ.
[13] 'प्रधानं' इत्येतन्नास्ति — ऊ, ऋ, ॠ.
[14] 'कथं' इत्यारभ्य 'पुरुषाः ततो' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[15] 'अथ अनर्थिन एव पुरुषाः' इत्येतन्नास्ति — अ; 'अथ अनर्थिनः' इत्यत्र 'अथार्थिनः' इति दृश्यते — आ, ई, उ; 'अर्थानर्थिनः' इति दृश्यते — ऐ.
[16] तादार्थ्यं — ऊ, ऋ; तादात्म्यं — ॠ.
[17] इत्येवं वा वाक्यजनितेयं प्रतीतिः — ऊ, ऋ; इत्येयं प्रतीतिः — ॠ
[18] ०विरुद्धत्वे — अ, आ, ई, उ, ऐ.
[19] निरूप्यमाणाः — ऊ. ॠ.
[20] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[21] प्रौढीत्यन्ताः प्रौढा भवता० — ऊ, ऋ; प्रौढीत्यन्ता प्रौढा भवता० — ॠ; प्रौढस्यात्यन्ता प्रौढता — ए.

अथ [1]प्रधानस्याज्ञत्वेनैतत्कर्तृत्वं, तदेव [2]च [3]पारार्थ्यमनर्थिनः प्रति चेत्येतद्द्वयं[4] जलादेः प्रवाह-[5]रूपस्येव अनुमानसिद्धत्वादविरुद्धमित्युच्यते । तदप्ययुक्तम् । [6]साध्यद्वयेनाप्यनेन रहितत्वादस्य दृष्टान्तस्य । तथा हि — 'पिपासयोज्झितस्य' इत्यादि ।

**पिपासयोज्झितस्येत्थं[7] यद्यत्राम्भः स्वयं क्वचित् ।**
**[8]प्रवृत्तं दृश्यते तस्मात्प्रधानस्यापि शोभनम् ।।६८।।**

**यद्यत्र** प्रवाहरूपमपि **अम्भः क्वचित्** लोके अनर्थिनं प्रति **इत्थं** कर्तृतया स्वयमेव [9]**प्रवृत्तं** दृष्टं भवेत्, [10]तदा **प्रधानस्य** एतदनु[11]मीयमानं दृष्टान्तसिद्धत्वात् **शोभनं** भवेत् । यावता अनर्थिनः पुरुषान्प्रत्यम्भसो नैतद्दृष्टमिति प्रधानस्यैतदुच्यमानं परस्परविरुद्धत्वादशोभनमेव ।। ६८ ।।

अत्र परः — 'पारार्थ्येनाथवा' इति ।

**[12]पारार्थ्येनाथवा गोश्च [13]क्षीरं वत्सविवृद्धये ।**

**अथवा** [14]नैष दृष्टान्तः । अपि तु क्षीरमेव । [15]तद्धि **गोः**, **च**शब्दात् स्त्र्यादेश्च[16] पुत्रादि-वृद्ध्यर्थं स्वयं प्रवर्तमानं दृष्टमिति । तदिदमुक्तम्[17] —

"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
[18]पुरुषविमोक्षनिमित्तं [19]तथा प्रवृत्तिः प्रधानस्य[20] ।। इति ।।

[21]अत्र [22]सिद्धान्तवादी — 'गवि तत्रास्ति चैतन्यम्' इत्यादि ।

**गवि तत्रास्ति चैतन्यं प्रेरकं पयसो हि तत् ।।६९।।**
**वत्सस्याप्यभिलाषित्वं न च [23]तत्पुंप्रधानयोः ।**

यद्येवं विरुद्धोऽयं हेतुः; [24]दृष्टान्तेऽस्मिन् साध्यविपर्ययेण [25]सह सिद्धव्याप्तिकत्वात् । [26]अचेतनं

---

[1] प्राज्ञत्वेनैतत्कर्तृत्वं — अ.
[2] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[3] परमार्थत्वमर्थिनः — अ; परार्थत्वमनर्थिनः आ, ई, उ, ए, ऐ.
[4] 'द्वयं' इत्यत्र 'यथा' इति दृश्यते — ए.
[5] रूपस्यैव — ई, उ.
[6] साध्यत्वेनाप्यनेन — अ, आ, ई, उ, ए.
[7] ०योत्थितस्येत्थं — उ.
[8] प्रवृत्तिर्दृश्यते यस्मात् — मु, उ, ओ.
[9] प्रदृष्टं भवेत् — अ.
[10] तथा — अ.
[11] ०मीयमानदृष्टान्तसिद्धत्वमेव । तानर्थिनः–अ.
[12] परार्थेनाथवा — ऋ, ओ.
[13] कृतीयं वत्सवृद्धये — उ.
[14] नैष दधि क्षीरमेव — अ.
[15] तच्च — ऊ.
[16] पुत्रादि प्रत्यर्थं — अ; पुत्रादिविवृद्ध्यर्थं — ऊ, ऋ, ॠ.
[17] सांख्यका० ५७.
[18] पुरुषविवक्षानिमित्तं — ऊ, ऋ, ॠ; पुरुषस्य मोक्षनिमित्तं — ऐ.
[19] तदा — आ.
[20] इत्यादि — अ.
[21] 'अत्र सिद्धान्तवादी' इत्येतन्नास्ति — अ.
[22] दृष्टान्तवादी — ऊ, ऋ, ॠ.
[23] तत्पुंप्रधानयेत् — मु.
[24] दृष्टं तस्मिन् — आ; दृष्टान्तोऽस्मिन् —ॠ.
[25] 'सह' इत्येतन्नास्ति — अ.
[26] 'अचेतनं हि' इत्यारभ्य 'तथा यदर्थम्' इत्यन्तं नास्ति — अ.

हि क्षीरादि चेतनाधिष्ठितं प्रवर्तमानं सिद्धमिति, प्रधानस्याप्यचेतनत्वात् प्रवर्तकेन चेतनेन भवितव्यमिति, पाशयितुरीश्वरस्य सिद्धिरिति [1]दर्शयिष्यामः[2]। [3]तथा यदर्थमचेतनं [4]हि क्षीरादि प्रवर्तते, तद् वत्सादि साभिलाषं [5]सिद्धमिति प्रधानप्रवृत्तिविषयस्य पुंसोऽप्यभिलाषसिद्धेः [6]पाश्यत्वसिद्धिरित्यविरोधः ॥

अत एवात्र मतङ्गमुनि[7]रुभयवादिसिद्धे पाशान्तरे संभवति किं मलेन कल्पितेनेति चोदयति — 'अनादिकालसंरूढाद्' इति ।

**मतङ्ग उवाच —**

**अनादि[8]कालसंरूढाद्वासितान्मनसः सदा ॥७०॥**
**प्रपञ्चोऽयमविद्याख्यो न पुंसः परिपठ्यते ॥**

मनःशब्देनात्र महत्तत्त्वमुच्यते। तत्रैव अविद्यास्मितारागद्वेषाभिनिवेशात्मकः [9]पञ्चपर्वो विपर्ययसमो वासनात्वेन सांख्यैरभ्युपगतः पाशः प्रकृतिगतो विद्यत इति किं तदन्येनानेन पुंसो मलाख्येन पाशेन कल्पितेनेति[10]। यदाहुः सांख्याः[11] —

"एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात्[12] तस्य च भेदास्तु पञ्चाशत् ॥" इति ॥

सांख्यार्थानुभाषणेन सिद्धान्तः — 'मनः प्राधानिकम्' इत्यादि ।

**परमेश्वर उवाच —**

**मनः प्राधानिकं [13]प्रोक्तमचेतनमनातुरम् ॥७१॥**
**[14]युज्यते सुखदुःखोत्थवासनाभिरनेकधा ।**
**[15]यदा तदाश्मलोष्टादौ न भवेत्केन हेतुना ॥७२॥**

सत्यम्। उभयवादिसिद्धो [16]बुद्धिगतो विपर्ययात्मकः पाशोऽस्त्येव। सा तु बुद्धिः सदोषत्वेनातुरत्व[17]करणहेतुतया स्वतो नातुरापि कस्माद्धेतोः अश्मलोष्टादिसदृशे[18]नात्यन्तनिरपेक्षेण [19]मुक्ता-

---

[1] 'दर्शयिष्यामः' इत्यारभ्य 'पाश्यत्वसिद्धिः' इत्यन्तं नास्ति — ऊ, ऋ, ॠ.
[2] मतङ्ग० विद्या० ६. ९२–९५ वृत्तौ ।
[3] यथा — ऐ.
[4] हिशब्दो नास्ति — आ, ई, उ, ऐ.
[5] 'सिद्धमिति' इत्येतन्नास्ति — अ.
[6] पाशत्व० — ऐ.
[7] ०रुभयथा वादि० — ऊ, ऋ, ॠ.
[8] ०कालं संरूढाद्वासितात्मा मनः सदा — मु, उ; कालसंरूढवासना यन्मनः सदा — ऊ, ऋ, ॠ.
[9] पञ्चपौर्वा विपर्यस्तं सा वासनात्वेन — ऊ; पञ्चपौर्वा विपर्यस्तं वासनात्वेन — ऋ, ॠ; पञ्चपर्वा विपर्ययः संमोहवासनात्वेन — ऐ.
[10] इतिशब्दो नास्ति — ऊ, ऋ, ॠ.
[11] सांख्यका० — ४६.
[12] ०विमर्देन — अ, आ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ.
[13] सिद्धमचेतन० — उ, ओ.
[14] उच्यते सुखदुःखार्थं वासना० — मु, उ, ओ.
[15] यथा यथाश्म० — मु.
[16] बुद्धिभूतो — ए.
[17] कारण० — अ, ऋ, ॠ, ए.
[18] ०नात्यन्तं नि० — ई, उ, ए.
[19] युक्तात्मना — ऊ, ऋ.

त्मना सह न संबध्यते। [1]अपि तु [2]बद्धात्मनैव, [3]मलानभ्युपगमे तयोर्विशेषाभावात् ॥ ७१-७२॥

अत्र पराभिप्रायः — 'आत्मना च' इत्यादि ।

**आत्मना चोपरक्तस्य मनसश्चेत्प्रवृत्तयः ।**

न मनः [4]प्रागुक्तमात्मना संबध्यते। अपि तु [5]आत्मा मनसेति, [6]ततो न मनसः [7]पूर्वोक्त-दोषः ॥

अत्रोत्तरम् — 'तदा रागी' इत्यादि ।

**तदा रागी पुमान् न स्यात्प्रधानं [8]वाप्यचेतनम् ॥७३॥**

यद्येवं मलानभ्युपगमे तुल्यत्वात्पुरुषाणां कस्मात्तदा [9]संसार्यात्मिवन्मुक्तात्मापि मनसा [10]न संबध्यत इति स एव दोषः। तस्माद्दोषपरिहारार्थं संसार्यात्मा रागी समलोऽभ्युपगन्तव्य इति मल-सिद्धिः ।

अथ रागी [11]पुमान्नाभ्युपगम्यते । [12]बद्धमुक्तविभागस्य प्रकृत्यधिकारसमाप्त्यसमाप्तिभ्यामेवोपपत्तेः। यदाहुः सांख्याः[13] —

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा [14]नृत्यात् ।
पुरुषस्य [15]तथात्मानं [16]प्रकाश्य विनिवर्तते प्रकृतिः ॥" इति ।

तदा नर्तक्यादिवदेव **प्रधानम् अचेतनं** [17]**न** स्यात्। न ह्यचेतनस्य [18]कंचित्पुरुषं प्रत्यहमुपरताधिकारो, न [19]त्वन्यं प्रतीति विवेकः संभवतीति [20]बद्धवन्मुक्त[21]स्यापि प्रवर्तेत । [22]न वा द्वयोरपीति, सर्वे [23]एव मुक्ताः संसारिणो वा भवेयुरिति, [24]बद्धमुक्तविभागाभाव एव। तस्मात्तन्निर्वाहार्थं [25]**रागी वा** पुरुषोऽभ्युपगन्तव्यः, प्रधानं वा चेतनमिति विकल्पार्थः ॥ ७३ ॥

---

[1] 'अपि तु' इत्येतन्नास्ति — ॠ.
[2] बन्धनात्मनैव — अ; बद्धात्मनेव — ऊ, ऋ, ॠ; बन्धात्मनैव — ए. बुद्धात्मनैव — ऐ.
[3] मलानामभ्युपगमे तयोर्वि० — अ; मलानभ्युपगमेन तयोर्वि० — ए; मलानभ्युपगमेऽनयोर्वि० — ऐ.
[4] मतङ्ग० विद्या० ६. ७० उ, ७१ पू० वृत्तौ।
[5] आत्मना मनसेति — ऐ.
[6] 'ततो' इत्येतन्नास्ति — ऊ, ऋ; 'ततो न' इत्येतन्नास्ति — ॠ.
[7] मतङ्ग० विद्या० ६. ७१ उ०, ७२ वृत्तौ; पूर्वोक्तो दोषः — ऊ, ऋ.
[8] वा सचेतनम् — मु, उ, ओ.
[9] संसार्यात्मा मुक्तात्मापि — अ, आ, ई, उ, ए; संसार्यात्मा मुक्तात्मनापि — ऐ.
[10] नशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[11] पुमानभ्युप० — ऊ, ऋ, ॠ.
[12] बन्धमुक्त० — अ.
[13] सांख्यका० — ५९.
[14] नृत्तात् — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[15] तथात्मनां — आ; तथात्मनि — ऊ, ॠ.
[16] प्रकाश्यं — ऊ, ऋ, ॠ.
[17] नकारो नास्ति — ऐ.
[18] किंचित्पुरुषं—आ, ए; एनं पुरुषं—ऊ, ऋ, ॠ.
[19] त्वेन — ऊ, ऋ, ॠ.
[20] बन्ध० — अ, ई, उ, ऊ, ॠ, ए.
[21] ०स्यास्यापि — ऊ, ऋ, ॠ.
[22] न यावद्द्वयो० — अ, आ, ई, उ, ए, ऐ.
[23] एवकारो नास्ति — आ, ई, उ.
[24] बन्धमुक्त०—अ, आ, ई, उ, ए; बद्धविमुक्ति—ऐ.
[25] रागीव — अ, ऐ.

ननु प्रधानस्य [1]अचेतनत्वेऽपि तदुद्भूतस्य महत्तत्त्वस्य चेतनत्वात् तदेव स्व[2]प्रवृत्तिहेतुभूतायाः[3] स्वप्रकृतेरुपरताधिकार[4]तानुपरताधिकारते प्रत्येष्यतीति किं प्रधानस्य [5]चैतन्येन, पुंसो वा मलेनाभ्युपगतेनेति। तदुक्तं सांख्यैः[6] —

"[7]अध्यवसायो [8]बुद्धिर्धर्मो [9]ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद्रूपम्" [10]इति।

[11]तत्रोच्यते — 'मनः प्राधानिकम्' इति।

**मनः प्राधानिकं सिद्धम्"**

यदुक्तं भवद्भिरपि[12] — "प्रकृतेर्महांस्ततोऽहंकार" इति। ततश्च यद् उपादानवत् तद् [13]अचेतनं यथा घटादीति, तदप्युपादान[14]कारणवत्त्वाद् [15]अचेतनमेव। तथा प्रधानमप्युपादानकारणत्वाद् [16]मृत्तन्तुवदचेतनमिति, अतस्तयोरत्र न व्यवस्थापकत्वमुपपद्यत इत्युक्तं भवति॥

[17]अत्र पराभिप्रायः — 'उपधाननिदर्शनाद्' इत्यादि।

**"[18]उपधाननिदर्शनात्।**
**मन्यसे स्फटिकोक्त्या वा"**

स्फटिकस्य उक्तिः दृष्टान्त[19]त्वेनोपादानं, तया हेतुभूतया। यथा[20] स्फटिको नीला[21]द्युपधानवशात् तन्मयो [22]दृष्टः, तथा [23]मनोऽपि ज्ञातृस्वभाव[24]पुरुषोपधानवशाद् [25]ज्ञानरूपं भवि[26]ष्यतीत्येवं यदि **मन्यसे**। यथोक्तं सांख्यैः[27] — "तस्मात् तत्संयोगादचेतनं [28]चेतनादिवल्लिङ्गम्।" इति॥

---

[1] चेतनत्वेऽपि — ऊ, ॠ, ॠ.
[2] ०प्रवृत्तिनिवृत्तिहेतु० — ऊ, ॠ, ॠ.
[3] ०भूतया — आ; ०भूतं — ऊ, ॠ, ॠ.
[4] ०तानुपरताधिकारतेति प्रत्येष्य० — अ, आ, ई, उ, ए, ऐ; ०तानुपरता प्रत्येष्य० — ऊ; ०तानुसरतां प्रत्येष्य० — ॠ; ०तानुपरतां प्रत्येष्य० — ॠ.
[5] चेतनत्वेन — ए.
[6] सांख्यका० — २३.
[7] अध्यवसायबुद्धेर्धर्मो — ऊ, ॠ, ॠ.
[8] बुद्धेर्धर्मो — आ, ई, उ, ए, ऐ.
[9] ज्ञाने — ऊ, ॠ, ॠ; ज्ञानविरागते . . . ऐश्वर्यम् — ऐ.
[10] इतिशब्दो नास्ति — अ.
[11] अत्रोच्यते — आ, ई, उ, ऊ, ॠ.
[12] सांख्यका० — २२ पू०.
[13] 'अचेतनं' इत्यारभ्य 'तदप्युपादानकारणवत्वाद्' इत्यन्तं नास्ति — अ; 'अचेतनं' इत्यारभ्य 'मृत्तन्तुवत्' इत्यन्तं नास्ति — आ.
[14] ०कारणत्वाद् — ए, ऐ.
[15] अचेतना एव — ऐ.
[16] मृद्वदित्यतस्तयोरत्र — ऊ, ॠ.
[17] तत्र — अ.
[18] उपादाननिदर्शनात् — मु; उपाधाननिदर्शनात् —ओ.
[19] ०त्वेन पिधानं — अ, ई, उ.
[20] अत्र हिशब्दोऽधिकः — आ, ई, उ, ऊ, ॠ.
[21] ०द्युपाधानवशात् — अ.
[22] दृष्टान्तः तथा — अ.
[23] मनोऽपि विज्ञातृस्वभाव० — आ, ई, उ; मनो विज्ञानमात्रस्वभाव० — ऐ.
[24] ०पुरुषोपादानवशाद् — ऐ.
[25] ज्ञानं रूपं–अ; ज्ञानरूपो–ऊ, ॠ; ज्ञानस्वरूपं–ऐ.
[26] ०ष्यतीत्येतदेवं — ऊ, ॠ.
[27] सांख्यका० २० पू०.
[28] चेतनावदिव लिङ्गम् — सांख्यकारिकापाठः।

"तच्च तस्य न युज्यते ॥७४॥

इति सिद्धान्तः। तद् विज्ञानं तस्य [1]मनसो न युज्यते। ॥७४॥

कुतः? यतः — 'सत्त्वादन्यः पुमान् सिद्धः' इति।

**सत्त्वादन्यः पुमान् [2]सिद्धः स्फटिकश्चातिसामलः।**

बौद्धस्य हि ज्ञानस्य "[3]सात्त्विकमेतद्रूपम्" इत्युक्त्वा[4] [5]सत्त्वात्मकत्वं भवद्भिरभ्युपगतम्। तस्माच्च **अन्यः** पुरुषः [6]**सिद्धः** चेतनः प्रोक्तः। यदुक्तम्[7] — "पुरुषोऽस्ति [8]भोक्तृभावात्" इति। यदि च महतोऽपि तथा ज्ञानं स्यात्, ततः स एव पुरुषः स्याद् भोक्तृत्वादिति न पुरुषान्तरसिद्धिः। [9]अतश्चाभ्युपगमविरोधः। [10]सत्त्वात्मकश्च स्फटिकादिः अतीव समले भवः [11]**सामलः** [12]जडप्रकृतिरेव[13] सिद्ध इति, ततोऽपि न महतो ज्ञानं [14]वास्तवं ज्ञप्तिरूपं सिद्ध्यति। अपि तु ज्ञायतेऽनेनेति ज्ञानं प्रकाशरूपतैवोपचारादुच्यत [15]इति। यदुक्तं भवद्भिः[16] — "सत्त्वं लघु प्रकाशकमिष्टम्" इति॥

तदेवं [17]प्रधानवत् तद्विकारस्य मनसोऽपि चैतन्यासं[18]भवात्, तत्प्रवृत्तिनिमित्तं तदा रागी पुमान् समलोऽभ्युपगन्तव्य इति प्रसङ्गार्थोपसंहारः — 'युक्तश्चेत् समलः' इत्यादि।

**युक्तश्चेत् समलस्तस्मान्न [19]वासोऽस्त्यमलीमसे॥७५॥**

यदि मनसा **युक्तः** [20]संसारी पुरुषः, ततः **समलः** एव। [21]अथ अमलीमसो मुक्तः, तस्मिन् **अमलीमसे** [22]मनसा [23]सह **वासः** संबन्धो **नास्तीत्युक्तम्**[24]। अतोऽवश्यं संसारिणो मलोऽभ्युपगन्तव्यः ॥७५॥

---

[1] मनसा — ऊ, ऋ.
[2] शुद्धः — ऊ, ऋ.
[3] सांख्यका० २३ उ०;
[4] सात्त्विकम् इत्युक्त्या — अ, आ, इ, ए, ऐ; सात्त्विकत्वमित्युक्त्या — उ.
[5] सत्त्वात्मकं — ऐ.
[6] सिद्धचेतनः — अ, ऐ; शुद्धचेतनः — ऊ, ऋ.
[7] सांख्यका० — १७ उ०.
[8] भोक्तृत्वात् — ऊ, ऋ.
[9] तथा तच्चाभ्युप० — ऊ; ततश्चाभ्युप० — ऋ.
[10] सत्त्वात्मकादिरतीव — अ.
[11] समलः — अ.
[12] बद्धप्रकृति० — ए.
[13] अत्र 'सिद्ध एव' इत्यधिकम् — ऐ.
[14] वा संज्ञप्तिरूपं — ऐ.
[15] इतिशब्दो नास्ति — ऋ.
[16] सांख्यका १३ पू०.
[17] प्रधानत्वाद्विकारस्य —ऐ.
[18] ०भवात्मकप्रवृत्तिनिमित्तस्तदा — ए.
[19] वसेदमलीमसे — मु; वासोऽस्वमलीमसे — ओ.
[20] संसारिपुरुषः — ए.
[21] तथा — अ, आ, ई, उ, ए, ऐ.
[22] मनसो — ऐ.
[23] सह वा संबन्धो — ऊ, ऋ.
[24] मतङ्ग० विद्या० ६.७५ पू०.

ननु [1]वक्ष्यमाणरागतत्त्वात्मकपाशप्रवृत्ति[2]निवृत्तिभ्यां [3]बन्ध[4]मुक्तिविभागोपपत्तौ किं व्यतिरिक्तेन मलेन कल्पितेनेति। अत्रोच्यते — 'न च' इत्यादि।

**न च रागविरागाभ्यामुदासीनोऽधिवास्यते।**

विशेषा[5]भावाद् **न तु उदासीन** एव [6]संसार्या[7]त्मा वास्यते इति, ततोऽन्यथानुपपत्त्या [8]तस्य मलोऽभ्युपगन्तव्यः॥

अपि [9]च — 'विद्याख्यश्च' इत्यादि।

**विद्याख्य[10]श्चाप्युपायोऽयं योऽविद्यायाः प्रमार्जकः॥७६॥**
**[11]अनेनैवानुमानेन कृतकृत्यस्य कृत्यता।**
**न वक्तुं युज्यते यस्मात्तस्माच्छास्त्रमकारणम्॥७७॥**
**वासनाविनिवृत्त्यर्थमुपादेयं महामुने।**
**ज्ञानं तस्योपकाराय ततः [12]पुंसां मलः स्मृतः॥७८॥**

**ज्ञानं** हि प्रतिपक्ष[13]भूतसवासनाविद्यानिवर्तनेन मोक्षोपायो भवद्भिरुक्तः। तदुक्तम्[14] —

"एवं तत्त्वाभ्या[15]सान्नास्मि न मे नाहमित्यपरि[16]शेषात्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते[17] ज्ञानम्॥" इति।

न च मलानभ्युपगमे पुंसः **कृतकृत्यस्य** मुक्तस्येव ज्ञानाभ्यासलक्षणा कर्तव्यता प्रयोजनाभावादुपपद्यते [18]इति [19]सांख्यशास्त्रमनारम्भणीयमेव[20]। आरब्धं च, [21]ततः शास्त्रारम्भान्यथानुपपत्तिलक्षणेन **अनुमानेन** भवद्भिः **पुंसां मलः** अभ्युपगन्तव्य [22]इति॥ ७६ — ७८॥

---

[1] एकादशे प्रकरणे।
[2] 'निवृत्तिभ्यां' इत्यनन्तरं 'अधिवास्येत' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[3] 'बन्धमुक्ति' इत्यारभ्य 'अत्रोच्यते' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[4] ०शक्ति० — ऊ.
[5] ०भावात्तत्र आसीन एव — अ, ऐ; ०भावादनुदासीन एव — ऊ, ॠ.
[6] अत्र तुशब्दोऽधिकः — ऊ, ॠ.
[7] ०त्माधिवास्यते — ऊ, ॠ.
[8] 'तस्य' इत्येतन्नास्ति — ऐ.
[9] चशब्दो नास्ति — अ, आ, ई, उ, ऐ.
[10] -श्चाप्युपायो यः सोऽविद्यायाः — ऊ, ॠ.
[11] अनेन वानु० — ॠ.
[12] पुंसो — ओ.
[13] ०भूतवासनाविद्या० ई, उ, ऊ, ॠ.
[14] सांख्यका० — ६४.
[15] ०सान्नास्ति न मे नाह० — अ; ०सान्नास्ति न मनोऽह० — आ; ०सान्नस्मिन्न मे नाह० — ई, उ, ऊ, ॠ, ऐ.
[16] शेषम् — सांख्यकारिकापाठः।
[17] अत्र 'स' इत्येतदधिकम् — ऊ, ॠ.
[18] इतिशब्दानन्तरं 'चेतनाधिष्ठितं प्रवर्तमानं सिद्धमिति प्रधानस्यापि अचेतनत्वात् प्रवर्तकेन चेतनेन भवितव्यमिति पाशयितुरीश्वर[सिद्धि]रिति दर्शयिष्यामः' इत्येतदधिकम् — अ.
[19] 'सांख्यशास्त्रमनारम्भणीयमेव। आरब्ध च' इत्येतन्नास्ति — अ.
[20] 'एव' इत्यत्र इतिशब्दो दृश्यते — ऊ, ॠ.
[21] तथात्रारम्भा० — अ.
[22] इतिशब्दो नास्ति — अ, ई, उ, ऊ, ॠ, ए, ऐ.

स्यादेतत्। [1]अस्त्येवास्माकं [2]ज्ञाननिवर्त्यः क्लेशभूताविद्यात्मको मलः। [3]यदुक्तम्[4] —
"अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति।

तदयुक्तं। यतः — 'संसारे' इत्यादि।

**संसारे युज्यते मुक्तो न च बन्धोऽस्ति मुच्यते।**
**ज्ञानेन वासनातोऽयं प्रतिपत्तिर्न शोभना ॥७९॥**

नास्ति पुंसो मलः, तस्य शुद्धत्वेनैव भवद्भिरभ्युपगमात्। [5]यदुक्तम्[6] —
"तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च॥" इति।
अपि तु बुद्धिधर्मत्वेन भोग्य[7]त्वादवैराग्यादिवत् [8]संसारात्मक एव। यद्दर्शितम्[9] —
"एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।" इति।
ततश्च [10]**अयं** निर्मलत्वाद् **मुक्तः** एव भवद्दर्शने[11] पुरुषः। स कथं **संसारे** नियुज्यते[12]; नापि तस्य **बन्धोऽस्ति**; ज्ञानाभ्यासाच्च [13]ततो **मुच्यते**॥ [14]यदुक्तम्[15] —
"सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ।
तिष्ठति संस्कारवशाच्चक्र[16]भ्रमवद्धृतशरीरः॥" इति।
ततः परस्परविरुद्धार्थप्रतिपत्तिरियमपि भवताम् "एष वन्ध्यासुतो याति" इति वाक्यादिवदयुक्तैवेति॥ ७९॥

[17]तदेवं पाशान्तरस्य प्रकृत्यात्मनः संभवेऽप्यवश्यं [18]सांख्यैः [19]पुंसां मलोऽभ्युपगन्तव्य इति [20]साधिते, अधुना मतङ्गमुनिः [21]मल[22]स्वरूपजिज्ञासया प्रश्नयति — 'न्यायेनानेन' इत्यादिना।

**मतङ्ग उवाच—**

[23]**न्यायेनानेन भवता मलौघोऽस्तोऽभिधीयते।**
**मलः [24]किमात्मकस्तस्य सहजो भाक्त एव वा॥८०॥**

---

[1] अस्त्येवमस्माकं — ई, उ, ए, ऐ.
[2] ज्ञानं निवर्त्यमक्लेश० — अ; ज्ञाननिवर्त्य-क्लेश० — आ.
[3] 'यदुक्तं' इत्येतन्नास्ति — ऐ.
[4] योगसूत्रे — २. ३.
[5] तदुक्तम् — ऐ.
[6] सांख्यका० — १९.
[7] ०त्वाद्गर्वेर्ष्यादिवत् — ऊ, ऋ.
[8] संसारात्मकमेव — ऊ, ऋ.
[9] सांख्यका० ४६ पू०.
[10] यो — ऊ, ऋ.
[11] भवद्दर्शनेन — आ.
[12] नियुक्तः — अ.
[13] 'ततो मुच्यते' इत्यत्र 'मोक्ष उक्तः' इति दृश्यते — ऊ, ऋ.
[14] तदुक्तम् — अ, आ, ई उ, ए, ऐ.
[15] सांख्यका० ६७.
[16] ०भ्रमिवद्धृत० — सांख्यकारिकापाठः।
[17] तदेव — ऊ, ऋ, ए.
[18] 'सांख्यैः' इत्येतन्नास्ति — ऊ, ऋ.
[19] पुंसः — आ; पुंसा — ऊ, ऋ.
[20] साधितेनामुना — ऐ.
[21] 'मल' इति नास्ति — अ.
[22] ०स्वरूपया जिज्ञासया — ऊ, ऋ.
[23] न्यायेन भवता ह्यात्मा मलोपेतोऽभि० — ऊ, ऋ, ओ.
[24] क्रियात्मकस्तस्य — मु, उ.

[1]बन्ध[2]मुक्तिविभागान्यथानुपपत्तिलक्षणेन **अनेन न्यायेन भवता** मलः पुंसां साधितः। सिद्धेऽपि तस्मिन् तदनुपपत्तिदोषः [3]तदवस्थ एव। तथा हि — **मलः** पुंसां [4]वस्तु, अवस्तु वा। वस्तुत्वेऽपि व्यतिरिक्तो वा, अव्यतिरिक्तो वा। [5]तत्र यदि व्यतिरिक्तो मलः, **तस्य** पुंसः **किमात्मकः** संबन्धाभावादकिंचित्कर एवेति बन्धमोक्षानुपपत्तिरेव[6]। अथ अव्यतिरिक्तः **सहजः** एव। [7]ततो नित्यत्वव्यापकत्ववद् अनिवर्त्यत्वादनिर्मोक्षः। अथावस्त्वेवोप[8]चरितो [9]**भाक्त** उच्यते। [10]ततस्तस्याप्यकिंचित्करत्वान्मुक्त एव पुरुषः, ततो बन्धानुपपत्तिरिति पूर्वः पक्षः॥ ८०॥

अथ सिद्धान्तः — 'चितेश्चित्सहजो धर्मः' इत्यादि।

**परमेश्वर उवाच —**

**चितेश्चित्सहजो धर्मः स चानादिमलावृतः।**

**चितिः** आत्मा तन्त्रान्तरेऽपि तथा [11]प्रसिद्धेः। यदाहुः[12] — "चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च" इति। तस्याः **चित्** ज्ञानं सैव [13]**धर्मः** प्रोक्त इति क्रियाशक्त्यात्मकोऽपीत्युक्तम्[14]। धर्मश्च **सहजः** असौ; अपृथक्[15]सिद्धेर्न व्यतिरिक्तः। [16]नापि नैयायिकाद्युक्तवन्मनःसंयोगादुत्पद्यते इत्यर्थः। अन्यकृतधर्मस्य नित्यधर्म्यव्यतिरेकायोगात्। व्यतिरेके वा नासौ ज्ञातेति कस्य बन्धो मोक्षो वा। न च तद्व्यतिरिक्तोऽन्यो ज्ञाता। नाप्यभावस्तस्य; संवेद्यत [17]इत्युक्तमात्म[18]सिद्धावित्यतः सहज [19]एवासावभ्युपगन्तव्यः। **स च** धर्मो ज्ञानक्रियात्मकः [20]**अनादिमलावृतः**, तस्य युगपत् सर्वत्रानभिव्यक्तेः। ततश्च सहज[21]धर्मावारकत्वाद् न अवस्तु मलः। नाप्यात्मस्वभावः। अपि तु व्यतिरिक्तं वस्त्वेवेत्युक्तं भवति॥

यत्तु व्यतिरेकपक्षे[22] पुंसः कथमावारक इत्युक्तम्[23]। तत्रोच्यते — 'ताम्रकालिकवद्' इत्यादि।

---

[1] बद्ध० — ऋ.
[2] ०मुक्तिभावान्यथा० — अ; ०मुक्तिभागान्यथा — अ; ०मुक्तविभागान्यथा — ऊ, ऋ.
[3] तदत्रस्थ एव — ऊ, ऋ.
[4] वस्त्ववस्तुत्वेऽपि व्यतिरिक्तोऽव्यतिरिक्तो वा — उ, ऋ.
[5] 'तत्र' इति नास्ति — आ; 'तत्र' इत्यत्र 'यत्र' इति दृश्यते — ऐ.
[6] एवकारो नास्ति — अ.
[7] अतो — अ.
[8] ०चारितो — ऐ.
[9] भोक्तेत्युच्यते — अ, आ, ई, उ, ए, ऐ.
[10] ततस्त्वस्याप्यकिंचित्० — आ, ई, उ; ततस्तस्य किंचित्० — ऊ, ऋ; ततस्तस्याकिंचित्० — ए.
[11] सिद्धेः — अ, आ, ई, उ, ए, ऐ.
[12] योगसूत्रे पा० १. सू० २ व्यासभाष्ये।
[13] धर्मो धत्त इति — ऊ, ऋ.
[14] मतङ्ग० विद्या० ६. ३२ — ३४ पू०.
[15] ०सिद्धो न — ऊ, ऋ.
[16] 'नापि' इत्यारभ्य 'तद्व्यतिरिक्तो' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[17] मतङ्ग० विद्या० ६. १२, १३, २४, २५ पू०, ३१ — ३७ पू० वृत्तौ; 'इत्युक्तम्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[18] ०सिद्धावपि ततः — अ, आ, ई, उ, ए, ऐ.
[19] एवाभ्युप० — ऐ.
[20] अनादीति मला० — अ; अनादिमलादिवृतः — ऊ, ऋ.
[21] धर्मावितारकत्वाद् — अ.
[22] अत्र तुशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[23] मतङ्ग० विद्या० ६. ८० वृत्तौ।

**ताम्रकालिकवद्योगात् सहजः समुदाहृतः ॥८१॥**

**योगात्** [1]संबन्धाद् आवार्यावारक[2]लक्षणाद् व्यतिरिक्तोऽपि [3]तदावारकस्वभाव इत्यर्थः। तत्स्वभावतैव संबन्धः। नान्यो व्यतिरिक्तः। अत्र दृष्टान्तः — यथा ताम्रस्य नाकालिकेन कालिकयाव्यतिरिक्तेन नाद्यावार्यावारकस्वभावतैव संबन्धोऽनादित्वाच्च **सहजः** [4]मलोऽप्युच्यत इति ॥ ८१ ॥

अत्र पुनर्मतङ्गमुनिः — 'सहजो यस्य' इत्यादि।

**मतङ्ग उवाच —**

**सहजो यस्य यो भावः सोऽग्निमारुतयोरिव।**
**धर्माभावा[5]दभावः स्या[6]द्धर्माद्धर्मी [7]कुतोऽपरः ॥८२॥**

**यस्य** वस्तुनो [8]**यो** [9]**भावः** स्वभावः सहजः, [10]**सः अग्निमारुतयोरिव** यावद्द्रव्य[11]भावी; [12]न निवर्तयितुं [13]शक्य इत्यर्थः। यतो धर्मस्य स्वभावस्य सहजस्य **अभावः स्यात्।** अभाव एव वस्तुनः सहजस्वभावव्यतिरिक्तस्य, तस्याभावात्। तदयमर्थः — यो यस्य सहजः स्वभावः, स तस्य निवर्तयितुमशक्यः; यथाग्नेरूर्ध्वज्वलनात्मकः, वायोस्तिर्यग्गमनात्मकश्च। मलस्य [14]चात्मावारकस्वभावः सहज एवेष्यते भवद्भिः। अतः [15]सोऽप्यनिवार्य एवेति [16]तत्राप्यनिर्मोक्षदोष इति ॥८२॥

सिद्धान्तस्तु नैतदनैकान्तिकत्वादित्युच्यते — 'ग्रन्थेर्विषम्' इत्यादि।

**परमेश्वर उवाच—**

**ग्रन्थेर्विषं यथा ताम्रात्कालिका तण्डुलादधि।**
**कम्बुकं शक्यते [17]भेत्तुं न [18]चाभावोऽस्ति वस्तुनः ॥८३॥**

---

[1] संबन्धत्वाद् — ऐ.
[2] ०लक्षणया तद्व्यतिरिक्तोऽपि — ऐ.
[3] 'तदावारकस्वभाव' इत्यारभ्य 'नाद्यावार्यावारकस्वभावतैव' इत्यन्तस्य ग्रन्थस्य स्थाने 'तदावारकस्वभावोऽपि तथैव' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[4] मल इत्युच्यते — अ, आ, ई, उ, ए, ऐ.
[5] ०दधर्मी स्याद् — मु, उ; ०दधर्मः स्याद् — ओ.
[6] द्धर्मी धर्मी — मु, उ, ऊ, ऋ.
[7] कुतः परः — ऊ, ऋ.
[8] योऽभावः — अ.
[9] भावः स्वभावसहजः — आ; भावस्वभावः सहजः — ए; भावः सहजः — ऐ.
[10] 'सः' इत्यत्र 'सोऽपि' इति दृश्यते — ए.
[11] ०भावि — आ, ई, उ, ए, ऐ.
[12] 'न निवर्तयितुं' इत्यारभ्य 'स्वभावः, स तस्य' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[13] शक्यत इत्यर्थः — ऋ.
[14] तदात्मतावारकस्वभावः — ऊ; तदात्मतावारकस्स्वभावः — ऋ.
[15] सोऽनिवार्य — आ, ई, उ; सोऽप्यनिवारित एव — ऐ.
[16] अत्राप्यनिर्मोक्ष० — आ, ई, उ, ए ऐ; अत्रानिर्मोक्ष — ऊ, ऋ.
[17] हर्तुं — ओ.
[18] स्वभावोऽस्ति — मु, उ.

सहजोऽपि स्वभाव.[1] [2]विषग्रन्थे[3]विषमारकत्वं, कालिका[4]कम्बुकयोश्च ताम्रतण्डुलावारकत्वं यथा निवर्तते। तदनिवृत्तौ तत्स्वभावस्यापि वस्तुनः [5]कम्बुकादेः तण्डुलादिभ्यो न निवृत्तिर्भवेत्। न चापि तत्र सहजस्वभावनिवृत्त्या [6]कम्बुकादिवत्स्वभावः, तस्य रूपान्तरेण [7]परिणतेः। [8]तथा मलस्य सहजा[9]त्मावारक[10]स्वभावनिवृत्तिः। तन्निवृत्त्या च न [11]तत्स्वरूपाभावो रूपान्तरेण [12]परिणति-र्भवत्यनीत्यदोषः ॥८३॥

यद्येवं मलस्य आवारकत्वमिव[13] तदानीं [14]चात्मनोऽपि सहजस्वभावः [15]आवार्यत्वं निवर्तत इति परिणामित्वप्रसङ्ग इत्यत्रोच्यते — 'पशुत्वानादिसंबन्धाद्' इत्यादि।

**पशुत्वानादिसंबन्धात्सति बीजे [16]मलात्मके।**
**[17]अज्ञानवासना पुंसो [18]नान्यथा चोपजायते ॥८४॥**

सत्यम्। यदि **अज्ञानवासना पुंसः** [19]आवार्यत्वं सहज एव स्वभावः स्यात्। स तु पाशत्वेन मलेन योऽनादिसंबन्धः, तस्मात्तस्योपजायते। मलापेक्षोऽसौ। [20]तस्य स्वभावोऽसन् [21]मलो भवन्नपि न किंचित्करः। तत्कृतः परिणामित्वापादक इत्यदोषः॥८४॥

ननु मलापेक्ष[त्व]मपि तत्सहजस्वभावविरुद्धत्वात् [22]तदानीमनुपपन्नमिति पुनर्मतङ्गमुनिः — 'शिवत्वमतिशुद्धं स्याद्' इत्यादि।

**मतङ्ग उवाच —**

**शिवत्व[23]मतिशुद्धं स्यात्पशु[24]त्वमतिसामलम्।**
**[25]द्वयोर्विरोधादेकत्वं भगवन् गम्यते कथम् ॥८५॥**

---

[1] अत्र अपिशब्दोऽधिकः — ऐ.
[2] षड्ग्रन्थेः — अ, आ, ई, उ, ए; षड्गन्धैर्विषम-मारकत्वं — ऐ.
[3] ०विषमानवत्वं — ऊ; ०विषमानत्वं — ऋ.
[4] ०कम्बूकायां च ताम्र० — ऊ, ऋ; ०कम्बु-कयोस्ताम्र — ऐ.
[5] कम्बूकादेः — ऊ, ऋ.
[6] कम्बुकादिस्वरूपस्य रूपान्तरेण — अ; कम्बु-कादिस्वभावस्तस्य रूपान्तरेण — आ; कम्बु-कादिव स्वभावस्तस्यैव रूपान्तरेण—ऊ, ऋ; कम्बुकादिवत्स्वभावस्तस्य रूपान्तरेण — ऐ.
[7] परिणतः — ऊ, ऋ.
[8] 'तथा' इत्येतन्नास्ति — अ.
[9] ०त्मावारकत्वस्वभाव० — ऋ.
[10] ०स्वभाववृत्तेः — अ.
[11] स्वभावाभावो — ऊ, ऋ; तत्स्वरूपभावो — ऐ.
[12] 'परिणतिः' इत्येतन्नास्ति — अ; परिणतेः — ऊ, ऋ.
[13] 'इव' इत्यत्र इतिशब्दो दृश्यते — अ, आ, ई, उ, ए, ऐ.
[14] चशब्दो नास्ति — ऊ, ऋ.
[15] अवार्यत्वं — ई, उ; आचार्यत्वं — ऊ, ए, ऐ.
[16] मलात्मकः — ऊ, ऋ.
[17] यज्ञानवासना — ऊ, ऋ.
[18] नान्यवाचोप० — ऊ, ऋ.
[19] आचार्यत्वं — ऊ, ऋ, ऐ; अव्याप्यत्वं — ए.
[20] सत्यस्वभावो सति मलो — ऊ, ऋ.
[21] मलेन भावात् नाप्यकिंचित्करः — अ, आ, ई, उ, ए; मलो भवन्नपि अकिंचित्करः—ऊ, ऋ; मलेन स्वभावात् नाप्यकिंचित्करः — ऐ.
[22] 'तदानीं' इत्येतन्नास्ति — अ.
[23] ०मिति शुद्धं — ऊ, ऋ.
[24] ०त्वमपि सामलम् — मु, उ; त्वे सति सामलम् — ऊ, ऋ.
[25] अस्माद्विरोधा० — ऊ, ऋ, ओ.

"[1]चितेश्चित्सहजो धर्मः" [2]इत्यादिनोक्तं [3]पुंसो ज्ञानक्रियात्मकं [4]**शिवत्वं** सहजत्वादेव निर्मलं स्यादिति संभाव्यते। [5]**पशुत्वं** [6]चाज्ञत्वाकर्तृत्वात्मकं [7]यत् तदतीव समले ज्ञान[8]क्रियावारके भवं सामलं मलोपाधिकं तत्रेत्युक्तत्वात्[9], [10]ततः सहजमलोपाधिकयोः चेतनाचेतनस्वभावयोः परस्परविरुद्धत्वाद् घटतदभावयोरिव **न एकत्वम्** एकात्म[11]वर्तित्वमुपपद्यत इति [12]सहजस्य स्वभावस्य निवर्तयितुमशक्यत्वाद् विद्यमानोऽप्यकिंचित्कर एव तस्य मलः। अथ सहज[13]स्वभावनिवर्तनेन [14]किंचित्कर [15]इत्युच्यते। तदा स्वभावाभावात्तस्याप्यभाव इति प्रोक्त एव प्रसङ्गः ॥८५॥

अत्र सिद्धान्तः — 'अनादिकालसंरूढाः' इत्यादि।

**परमेश्वर उवाच —**

**अनादिकालसंरूढाः पशवः [16]पाशवेष्टिताः।**

[17]भवेदेषः प्रसङ्गः यद्यादिमांस्तयोः संबन्धः[18]। [19]अनादित्वेन तु [20]तस्य सिद्धत्वात् कोऽयं प्रसङ्गः। न च मलस्यात्र सहजस्वभावनिवर्तकत्वमिष्यते। अपि तु कार्यान्तर[21]हेतुत्वमेव। [22]तच्च विरुद्धस्याप्युपपद्यते। यतः — 'विरुद्धमग्निना' इत्यादि।

**विरुद्धमग्निना तोयं युक्तं [23]दहति तत्क्षणात् ॥८६॥**

यथाग्नेः **विरुद्धमपि तोयमग्निना** संयुक्तमेव स्वविरुद्धं [24]दाहलक्षणं कार्यं करोति। तथा मलेन विरुद्धेन युक्तं तच्छिवत्वं स्वविरुद्धमर्थविषयाज्ञानलक्षणं [25]कार्यं [26]स्वसंनिविष्टतया करोतीति न कस्यचित् [27]सहजस्य स्वभाव[28]स्यात्र अभावः। येन वस्त्वभावप्रसङ्ग इति ॥८६॥

---

[1] मतङ्ग० विद्या० ६. ८१ पू०.
[2] इत्यादि तेनोक्तं — अ.
[3] पुंसां — ऊ, ऋ.
[4] शुद्धत्वं — ए.
[5] पशुत्वाज्ञत्वाकर्तृ० — आ; पाशत्वं चाज्ञत्वाकर्तृ० — ए.
[6] त्वज्ञत्वाकर्तृ० — ई, उ; तज्ज्ञात्वाकर्तृ० —उ; . . . कर्तृकात्मकम् — ऋ; च ज्ञत्वाकर्तृ० — ऐ.
[7] सदतीव — ए.
[8] ०क्रियाकारके — अ, ०क्रियावारको — ऋ.
[9] मतङ्ग० विद्या० ६. ८४ वृत्तौ।
[10] ततश्च सहज० — अ, आ, ई, उ, ऋ, ए, ऐ.
[11] ०वृत्तित्व० — ऐ.
[12] सहजस्वभावस्य — ऊ, ऋ.
[13] '०स्वभावनिवर्तनेन' इत्यत्र 'स्वभावो निवर्तते' इति दृश्यते — अ.
[14] 'किंचित्कर इत्युच्यते' इत्येतन्नास्ति — अ.
[15] इतिशब्दो नास्ति — आ, ई, उ, ऊ, ऋ, ए.
[16] पशवे स्थिताः — ऊ, ऋ.
[17] भावदोषप्रसङ्गः — आ; भवेद्दोषप्रसङ्गः — ऐ.
[18] अत्र 'स्यात्' इत्यधिकम् — ऊ, ऋ.
[19] अनादित्वे तु — ऊ, ऋ; अनादिमत्वेन तु — ए.
[20] 'तस्य' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] हेतुत्वादेव — ऊ, ऋ.
[22] न च — ऐ.
[23] भवति — ऊ, ऋ.
[24] दाहकलक्षणं — ए, ऐ.
[25] 'कार्यं' इत्यत्र 'कस्य' इति दृश्यते — ऊ, ऋ.
[26] स्वसंविन्निष्टतया — ऋ.
[27] सहजस्वभाव० — ऐ.
[28] ०स्यार्थाभावः — ऊ, ऋ.

'अत एव — 'अस्तित्वाद्' इति।

**अस्तित्वान्मुनिशार्दूल विरोधोऽत्र न युज्यते।**

स्वात्मनि ज्ञत्वस्य [1]विषये त्वज्ञत्वात्मनः, शिवत्वस्य [3]च पुरुषेषु विद्यमानत्वाद् **न शिवत्व-पशुत्वयोः** [4]सहानवस्थानलक्षणो **विरोधः**। [5]भिन्नविषयत्वेनोभयोरपि तत्र विद्यमानत्वात्। परस्परपरिहारा[6]त्मकस्त्वविरुद्धयोर्घटपटयोरपि दृश्यत एवान्यत्र न [7]दोषहेतुरुक्तः॥

न चायं [8]विरुद्धस्वभावलक्षणोऽत्र अस्माकमेव पर्यनुयोगः। भवतामपि[9] संभवात्। यतः — 'भवतापि हि' इत्यादि।

**भवतापि हि यत्रोक्तमविद्याख्यो मलः सदा॥८७॥**
**न समानेन धर्मेण चैकः पर्यनुयुज्यते।**

अत्यन्तशुद्धात्म[10]वादिनापि हि[11] त्वया [12]सांख्येन **यत्र** आत्मनि **उक्तम्**। किमुक्तं [13]तत्रेत्युच्यते — **अविद्याख्यो मल इति**। यदुक्तम्[14] — "अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इत्यभिधाय, "[15]अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति। तत्रास्माक[16]मशुद्धात्मवादिनां कः पर्यनुयोगः। तथाहि — यदि शुद्धः पुरुषो भवतां कथं तस्य विपरीतप्रतिपत्तिरविद्या। अथ अविद्या कथं शुद्धत्वमिति विरोधस्तदवस्थ एव।

[17]अथ [18]स्वात्मनि शुद्धत्वं, [19]विषये तु विपरीतप्रतिपत्तिरविद्येति भिन्नविषयत्वेनात्र विरोधः परिह्रियते भवद्भिः। यदुक्तम्[20] —

"सर्वमा[21]लम्बनं भ्रान्तिर्न स्वात्मनि कथंचन।" इति।

तदितरत्रापि समानमिति कः पर्यनुयोगः। तदिदमुक्तम्[22] —

---

[1] तत एव — अ.
[2] विजये ज्ञत्वात्मनोऽशिवत्वस्य — अ.
[3] चशब्दो नास्ति — ऊ, ऋ, ऐ.
[4] संहारावस्थान० — ऊ, ऋ.
[5] विभिन्नविषय० — ए.
[6] ०त्मकस्वविरुद्धयो० — अ, आ, ई, उ, ए, ऐ.
[7] दोषो युक्तः — अ, आ, ई, उ, ए; दोषो निरुक्तः — ऐ.
[8] पुरुषस्वभाव० — ए.
[9] 'अपि' इत्यत्र एवकारो दृश्यते — ऊ, ऋ.
[10] ०वादिनोऽपि — आ.
[11] हिशब्दो नास्ति — ऊ, ऋ.
[12] सांख्यैरत्र ०—अ; सांख्यैर्न यत्र — ए.
[13] तत्रोच्यते — ऐ.
[14] योगसू० २. ३; तदुक्तम् — ऊ, ऋ.
[15] योगसू० २. ५.
[16] ०मथ चात्मवादिना० — ए.
[17] 'अथ' इत्येतन्नास्ति — ए.
[18] शुद्धात्मनि — ए.
[19] विषयविपरीत०—अ; विषयेषु विपरीत०—ऐ
[20] न्यायबिन्दुटीकायां १९ तमे पृष्ठे 'इति योगाचारमते' इति निर्दिश्य, एतत्सदृशमर्धं लभ्यते — 'सर्वमालम्बने भ्रान्तं मुक्त्वा तथागतज्ञानम्' इति।
[21] ०लम्बने भ्रान्तिर्न — अ; ०लम्बने भ्रान्तं न — आ, ई, उ, ए, ऐ; ०लम्बने भ्रान्ते न — ऊ; ०लम्बनं भ्रान्ते न — ऋ, ०लम्बिनि भ्रान्तिर्न — ऐ.
[22] लौ० न्या० साहस्री १३९.

"[1]यत्र स्यादुभयोर्दोषः परिहारोऽपि वा समः ।
[2]नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे[3] ॥" इति ।

अत एव[4] [5]मायाप्रकरणान्तरेऽत्र [6]च मलं साधयता भगवतैतज्ज्ञाप्यते ततोऽन्यो मल इति। यद्वक्ष्यति[7] — "सति मायात्मके पुंसः संनिकृष्टे मलेऽपरे।" इति। नापि तत्त्वान्तरमिति च पशुतत्त्वे एवान्तर्भावाद्, मलेन विना पशुत्वायोगादिति ॥

तदेवं [8]मलस्वरूपमपि प्रतिपाद्य, प्रकृतं "[9]एवं वदन्ति मुनयः" इत्यादि प्रश्नपूर्व सांख्यप्रतिक्षेपेण पुंपाशयोः पाश्यपाशत्वं प्रतिपादितमुपसंहर्तुं, [10]प्रकरणप्रारम्भ[11]प्रश्नाच्च शिष्टस्य[12] पाशयितुर्निर्णयायोपोद्घातं कर्तुं सूत्रम् — 'तस्माद्रागी मलोपेतः' इत्यादि ।

**तस्माद्रागी मलोपेतो भोगभुक् पुरुषः स्मृतः ॥८८॥**
**कर्मी च कर्मसामर्थ्याद्यतो [13]भोगेष्वभिप्लुतः ।**
**शिवत्वाद्युज्यते मोक्षे पशुत्वाद्युज्यते तनौ ॥८९॥**
**भोगेष्वपि हि सामर्थ्यात्कर्मणां मुनिसत्तम ।**
**ईश्वराधिष्ठितात्मासावस्वतन्त्रो यतः सदा ॥९०॥**

**तस्मात्** सांख्यभूमिकया यदुक्तं भवता — "[14]विरागी [15]स च मुक्तात्मा" इति। तन्न। अपि तु [16]प्रोक्तयुक्तितो **रागी** मलयुक्त एव **पुरुषः**। मलयुक्त [17]एवात्र प्रकरणे रागी [18]कथ्यत इति दर्शितम्[19] — "तदा रागी पुमान्" इत्यत्र। एवं च विज्ञानकेवलः प्रतिपादित [20]इति। **भोगभुगिति** सकलः। **कर्मी चेति** [21]प्रलयाकलः। सोऽपि[22] मलोपेत एव। यतो **भोगेषु** [23]आभिमुख्येन गच्छति। अन्यथा मुक्त एव स्यादित्युक्तम्। अत एव [24]नात्र [25]बन्धमुक्तिविभागानुपपत्तिदोषः। यस्मात् शिवत्वम् अशिवत्व[26]निवृत्तिः मलपरिणामः, ततो [27]**मोक्षे युज्यते**। यदुक्तं श्रीमत**स्वायंभुवे**[28] —

---

[1] यत्रोभयोस्समो दोषः — लौकिकन्यायसाहस्रीपाठः।
[2] हा नैकः परियोक्तव्य० — ऐ.
[3] 'तादृगर्थविचारणे' इत्येतन्नास्ति — अ, आ, ई, उ, ऊ, ऋ, ए.
[4] अत्र चशब्दोऽधिकः — ऊ, ऋ, ए, ऐ.
[5] मतङ्ग० विद्या० ८. १८ उ०, १९ पू० वृत्तौ।
[6] चशब्दो नास्ति — ऊ, ऋ, ए.
[7] मतङ्ग० विद्या० ६. १०२ उ०.
[8] मले स्वरूप० — अ.
[9] मतङ्ग० विद्या० ६. ६२ उ०.
[10] प्रकरण एव प्रारम्भ० — ए.
[11] प्रश्नावशिष्टस्य — ऊ, ऋ, ऐ.
[12] अत्र चशब्दोऽधिकः — ऋ.
[13] भोगेष्वभीप्सितः — मु, उ.
[14] मतङ्ग० विद्या० ६. ६३ पू०.
[15] मति युक्तात्मा — ऊ, ऋ.
[16] प्रोक्तनियुक्तितो — आ.
[17] एव चात्र — अ, आ, ई, उ, ए, ऐ.
[18] कार्यते — आ, ई, उ.
[19] मतङ्ग० विद्या० ६. ७३ उ०.
[20] इतिशब्दो नास्ति — ऊ, ऋ.
[21] भूयोऽकलः — ए.
[22] अत्र चशब्दोऽधिकः — ऊ, ऋ.
[23] अभिमुख्येन — ऊ, ऋ.
[24] 'नात्र' इत्यस्य स्थाने 'अत्र' इति दृश्यते—आ.
[25] बन्धमुक्त० — ऊ; बद्धमुक्त० — ऋ.
[26] ०निवृत्तमलपरिणामः ततो — ऊ, ऋ; ०निवृत्तिशीलपरिणामतो — ए.
[27] मोक्षः — ऐ.
[28] ३२. १७ उ०.

"क्षीणे तस्मिन् [1]धियासा स्यात्परं [2]निःश्रेयसं प्रति।" इति।

**पशुत्वात्** [3]तु मलसंबन्धाद् [4]**युज्यते तनौ** [5]स्वमूर्ताविव विज्ञानकेवलविषय इत्यर्थः। **'भोगेष्वपि हि'** इति अपिशब्दाद् भोगसाधनेषु शरीरेन्द्रियविषयेषु [6]कर्मसामर्थ्यात्[7] प्रलयकेवली[8] युज्यत इति पाश्यपाशानामुपसंहारः। पाशयितृनिर्णयाय तु उपोद्घातः। ईश्वरेण अधिष्ठितः आत्मा स्वरूपं यस्य **असौ** एवंविधः समलः संसारी प्रतिपादितः। मुक्तस्य ईश्वरा[9]धिष्ठानाभावादिति ॥ ८८-९० ॥

अत एव ईश्वरोपो[10]द्घातादनन्तरं [11]तत्स्वरूपनिर्णयाय प्रश्नः—'स्वभावेनैव जगतः' इत्यादिना।

**मतङ्ग उवाच —**

**स्वभावेनैव जगतः प्रवृत्तिर्दृश्यते यतः।**
**ततः कर्ता न युक्तः स्याद्व्यपदेष्टुं सुरेश्वर ॥९१॥**

[12]ननु पूर्वं पतिपदार्थ[13]विचारे एव "[14]धूमादग्नेर्यथा पत्युः [15]शक्तयो विद्धि साधनम्" इत्यादिनैव ईश्वरसिद्धेरुक्तत्वात् पुनरुक्तमिदं प्रकरणम्। नैतत्। तत्र हि "[16]न कदाचिदनीदृशं जगद्" इति मीमांसकदृशा जगतस्तत्त्वभुवनादेर्नित्यत्वमभ्युपगम्य, भोगमोक्षयोः कर्तृपूर्वकत्वेन [17]मेषादौ सिद्धेः, तदुपगमादीश्वरसिद्धिरुक्ता[18]। अत्र तु पुंप्रधान[19]साधनपर्यन्तेनानेन [20]प्रकरणेन जगन्नित्यत्वपक्षस्य[21], [22]क्षणिकत्वपक्षस्य च [23]प्रतिक्षेपेण चात्मनामकर्तृत्वस्य [24]निरस्तत्वात्, केवलमीश्वरः साध्यो विशिष्यत इति पतिपदार्थविशिष्टविचारार्थत्वेन पुनरुपन्यास इत्युक्तं प्राक्[25]। [26]अत एव मतङ्गमुनिः पातञ्जलभूमिकया भोगमोक्षकर्तृत्वमात्रं गुरूणामिव ईश्वरस्य, सौगतभूमिकया[27] सुगत[28]स्येव वाभ्युपगम्य प्रकृतिस्वभावादेव **जगतः** तत्त्वभुवनात्मनः पृथिव्यादेरुत्पत्तिः परिदृश्यमानस्य वनतृणादेरिव भविष्य-

---

[1] यया सा स्यात् — ऋ; हि या सा स्यात् — ए; धिया सा स्यात् — ऐ.
[2] नैश्श्रेयसं — ऊ, ऋ.
[3] तुशब्दो नास्ति — अ, ए.
[4] उच्यते — ऐ.
[5] 'स्व' इति नास्ति — ए; सुमूर्ताविव — ऐ.
[6] प्रलयसामर्थ्यात् — ऊ, ऋ.
[7] अत्र तुशब्दोऽधिकः — ऐ.
[8] प्रलये केवली — ऐ.
[9] ०धिष्ठानादिति — ए.
[10] ०द्घातानन्तरं — अ, ऊ, ऋ.
[11] 'तत्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[12] 'ननु' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[13] ०विचारणे एव — अ.
[14] मतङ्ग० विद्या० ३. ८ उ०; धूमा अग्नेर्यथा — ई, उ, ऐ; धूमादग्निर्यथा — ऊ, ऋ.
[15] शक्तयः सिद्धि० — ए, ऐ.
[16] आकरो न लभ्यते।
[17] मोक्षादौ — ए.
[18] मतङ्ग० विद्या० ३. १२, १३ पू० वृत्तौ।
[19] 'साधन' इत्येतन्नास्ति — अ.
[20] प्रकारेण — ऊ, ऋ.
[21] ०नित्यपक्षस्य — ऊ, ऋ.
[22] क्षणिकप्रतिक्षेपेण — ऊ, ऋ.
[23] जगन्नित्यत्वपक्षप्रतिक्षेपः — मतङ्ग० विद्या० ६. ४४ वृत्तौ, क्षणिकत्वपक्षप्रतिक्षेपः — मतङ्ग० विद्या० ६. २३–५१ वृत्तौ।
[24] आत्मनामकर्तृत्वनिरासः — मतङ्ग० विद्या० ६. ३९–४१ वृत्तौ।
[25] मतङ्ग० विद्या० ३. १२, १३ पू० वृत्तौ।
[26] तत एव — अ, आ, ई, उ, ए, ऐ.
[27] अत्र वाशब्दोऽधिकः — ऊ, ऋ.
[28] ०स्येवाभ्युपगम्य—आ; स्याभ्युपगम्या—ऊ, ऋ.

तीति प्रत्यवस्थितः। [1]यदाहुः पातञ्जलाः "[2]क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः", "[3]स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात्" इति। सौगता अपि[4] — "श्रीमानकलङ्कधीः स्वय-[5]मुपेत्य [6]योऽनुजग्राह यम्" इति।

अत एव भोगमोक्षयोः कर्ताप्यसौ जगतः **कर्ता न युक्तः स्याद्** कल्पयितुं[7] न युज्यत इति पूर्वः पक्षः॥ ९१॥

[8]अत्र सिद्धान्तः — 'स्वभावस्य' इत्यादि।

**परमेश्वर उवाच —**

**स्वभावस्य विपर्यासो भूतानामपि दृश्यते।**

तत्र तावत् "[9]कार्यमेतज्जगत्सदा" इत्यत्र कार्यस्य कर्तृपूर्वकत्वेन [10]घटादौ व्याप्तिसिद्धेः, जगतः कार्यत्वादेव [11]कर्तृपूर्वकत्वेन ईश्वरसिद्धिं वक्ष्यतीति, अत्र [12]प्रकारान्तरं व्युत्पादयितुं [13]स्वभावभेदान्यथानुपपत्तिलक्षणेन कार्यपरिशेषानुमानेन रूपादिदर्शनान्यथा[14]नुपपत्त्या नयनेन्द्रियादेरिव ईश्वरस्य सिद्धिरुपक्रान्ता। तथा हि — यदि पृथिवीस्वभावादेव वनतृणादिकार्यं भवेत् [15]स्वभावत्वाविशेषात् [16]कस्मात्तस्य कदाचिद् **विपर्यासः** अनुत्पादो भवेत्। **दृश्यते** चासौ। ततस्तत्कारणस्य पृथिवीस्वभावस्यापि विपर्यासिसिद्धेः,[17]यस्तस्य हेतुः [18]स ईश्वर इति दर्शयिष्यति[19] —

"एवं हि [20]परतन्त्रत्वाज्जगतोऽस्याखिलस्य तु[21]।
प्रवृत्तिर्नेष्यते यस्मात्तस्मात्कर्ता महेश्वरः॥" इति॥

[22]ननु दृष्टस्यैव सहकारिणो वातातपादेः महाभूतान्तरस्याभावात् तदानीं [23]पृथिव्याः वनतृणादिजनकस्य स्वभावस्य विपर्यास इति, कुतोऽत्यन्तादृष्टस्य [24]ईश्वराख्यस्य [25]हेत्वन्तरस्य सिद्धिः। तदयुक्तं तेषामपि स्वभावविपर्यासस्य भावात्तस्य सिद्धेः। तथा हि — 'प्रदाहेऽग्नेः' इत्यादि।

---

[1] पातञ्जला यदाहुः — ऊ, ऋ.
[2] योगसू० १. २४.
[3] योगसू० १. २६.
[4] आकरो न लभ्यते।
[5] ०मुपेत्यार्योऽनुग्राह... मित्यादि। अत एव — ऊ, ऋ.
[6] योऽनुजग्राहायमिति — आ; योऽनुग्रहयतीति — ऐ.
[7] अत्र तुशब्दोऽधिकः — ऊ, ऋ.
[8] 'अत्र सिद्धान्तः' इत्यत्र 'सिद्धान्तस्तु' इति दृश्यते — ऊ, ऋ.
[9] मतङ्ग० विद्या० ६. १०० पू०.
[10] सर्गान्तरव्याप्ति० — ए.
[11] 'कर्तृपूर्वकत्वेन' इत्येतन्नास्ति — ऐ.
[12] प्रकरणान्तरं — अ, ऋ.
[13] स्वभावबाधान्यथा० — ऋ.
[14] ०नुपपत्त्यात्मन इन्द्रियादेरिव — ऊ, ऋ.
[15] स्वभावस्याविशेषात् — ऊ, ऋ; स्वभावत्वविशेषात् — ऐ.
[16] तस्मात्तस्य — अ.
[17] यतस्तस्य — अ, आ, ई, उ, ए.
[18] 'स' इति नास्ति — अ; सर्वेश्वरः — ऊ, ऋ.
[19] मतङ्ग० विद्या० ६. ९५.
[20] चरितं कृत्वा जगतो० — ए.
[21] च — अ, आ, ई, उ, ए, ऐ.
[22] 'ननु' इत्यारभ्य 'तथा हि' इत्यन्तं नास्ति — ऊ, ऋ.
[23] पृथिव्यां — आ.
[24] ईश्वरस्यास्य — ऐ.
[25] हेत्वन्तरसिद्धिः — अ, ए, ऐ.

**प्रदाहेऽग्नेर्न निर्वाणे [1]गतौ वायोर्न संयमे ॥९२॥**

[2]आतपात्मनो हि **अग्नेः** वन[3]तृणाद्युत्पादानुगुणे [4]**प्रदाहे** स्वेदात्मके कर्तव्ये स्वभावः सिद्धः। **न** तु **निर्वाणे** जलस्येव दाहोप[5]शमलक्षणे। तथा **वायोरपि** [6]वनतृणाद्युत्पादानुगुणे प्रवाह इव कर्तव्ये स्वभावः सिद्धः। **न** तु तदभावात्मके **संयमे** इति, तस्य स्वभावस्य तयोः कुतो विपर्यासः। [7]येन कदाचिद् वनतृणादयो भवन्ति, कदाचिद् नेति[8] यतो विपर्यासः स ईश्वर इत्युक्तम् ॥ ९२ ॥

न केवलं महाभूतानामेव स्वभावस्य विपर्यासो दृश्यते। यावत् प्राणिनामपि यतः — 'प्रवृत्तिः' इत्यादि।

**प्रवृत्तिः प्राणिनां सौख्ये न च दुःखे कदाचन।**

सर्वे एव हि प्रेक्षावन्तो [9]हितसाधने दृष्टेऽदृष्टे वा कर्मणि प्रवर्तन्ते इति [10]तत्स्वभावा एव सिद्धाः। ते कदाचिदक्षक्रीडाब्रह्महत्यादि[11]ष्वप्यहितसाधनेषु प्रवर्तमाना दृश्यन्ते इति [12]सः स्वभाव-[13]विपर्यासस्तेषां नाहेतुकः। यस्तस्य हेतुः स ईश्वरः [14]इति। यदाहुः[15] —

"ईश्वरप्रेरितो गच्छेत् [16]स्वर्गं वा श्वभ्रमेव वा।" इति ॥

ननु किमत्र कारणान्तरेण ईश्वराख्येन कल्पितेनेति। [17]कर्मैव धर्माधर्मात्मक[18]मुभयवादिसिद्धमत्र कारणं भविष्यतीति। [19]तदपि न। यतः — 'कर्मणश्चापि' इत्यादि।

**कर्मणश्चाप्यचैतन्यात्प्राधान्यं नेष्यते मुने ॥९३॥**

सत्यम्। कर्म विद्यते एव। तस्य तु अस्मै पुरुषायानेन साधनेन [20]इयन्तं [21]कालमेवं फल-

---

[1] यतो वायोर्न — मु, उ; गते वायोर्न — ऊ, ऋ.

[2] अद्रवात्मनो — अ, आ, ई, उ, ए, ऐ.

[3] ०तृणोत्पादानु० — आ.

[4] प्रवाहे — ई, उ.

[5] ०शमनलक्षणे — ऊ, ऋ.

[6] न तृणोत्पादानु० — अ, ऋ; वनतृणोत्पादानु० — आ, ई, उ, ऊ, ए, ऐ.

[7] 'येन' इत्यारभ्य 'विपर्यासः' इत्यन्तं नास्ति — अ.

[8] इतिशब्दो नास्ति — आ, ई, उ, ए, ऐ.

[9] हि तत्साधने — ऐ.

[10] तत्स्वभावा एवासिद्धाः — ऊ; तत्स्वभाव एव सिद्धाः — ऋ; तत्स्वभावसिद्धाः — ऐ.

[11] ०ष्वप्यहितान्यहितसाधनेषु — ऊ, ऋ; ०ष्वप्यभिहितसाधनेषु — ऐ.

[12] 'सः' इति नास्ति — अ.

[13] विपर्ययस्तेषां — ऊ, ऋ.

[14] इतिशब्दो नास्ति — आ, ई, उ, ऊ, ऋ, ए, ऐ.

[15] महाभारते ३. ३१. २८ उ०.

[16] कुलं वा श्वभ्रमेव वा — ऊ, ऋ; स्वर्गं वा स्वतामेव वा — ऐ; स्वर्गं नरकमेव च — मुद्रितमहाभारतपाठः।

[17] 'कर्मैव' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[18] ०मुभयथा सिद्ध० — ऊ, ऋ.

[19] यदपि न — ई, उ.

[20] 'इत्यन्तं कालमेवं फलमनेन' इत्येतन्नास्ति — ऊ, ऋ.

[21] कालमद्येदं फलमनेन — आ, ई, उ, ए, ऐ.

मनेन फलान्तरेण सह पृथग् वा दास्यामीत्येवंविधसमस्तज्ञानशून्यत्वात् कृष्यादि[1]कर्मण इव **प्राधान्यं** कर्तृत्वं **न** युक्तमिति, अवश्यमेवंविधज्ञानयुक्तेनात्र कर्त्रा भवितव्यमितीश्वरसिद्धिः ॥ ९३ ॥

ननु पिशाचादिपिता[2]महान्तोऽष्टभेदो देवयोनिवर्गोऽत्र कर्ता विद्यते । [3]किमीश्वरान्तरेणेति सांख्याः । यदाहुः[4] —

"अष्टविकल्पो दैवस्तैर्यग्योनश्च[5] पञ्चधा भवति ।
मानुषश्चैकविधः समासतो भौतिकः सर्गः ॥" इति ।

सौगता अपि[6] —

"काम[7]धातौ [8]प्राणिनोऽमी रूपाख्ये देवयोनयः ।
[9]अरूपे वीतरागास्तु धातौ तिष्ठन्ति ते क्रमात् ॥" [10]इति ।

तदयुक्तम् । यतः — 'इच्छाविघातिनः' इत्यादिना ।

**इच्छाविघातिनः सर्वे न च [11]मुक्ता बुभुक्षवः ।**
**जगदेतत्सदा[12]यत्तमीश्वरस्य [13]महामुने ॥९४॥**

[14]न अस्माभिर्देवयोनयो नेष्यन्ते । अध्वनि [15]वक्ष्यमाणत्वात् । किं तु [16]इच्छा विघातो येषां ते तथाभूताः कर्मफल[17]भोक्तृत्वादस्मदादिवद् महाप्रलये चोपसंहारभाजः । यदुक्तं भवद्भिरपि[18] —

"ऊर्ध्वं सत्त्वविशालस्तमो[19]विशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादि[20]स्तम्बपर्यन्तः ॥" इति ।

[21]ततः **एतद्** अपि देवयोन्यात्मकं **जगत्** स्वभावविपर्यासियोगाद् [22]ईश्वरायत्तमेवेति ॥ ९४ ॥

प्रकरणार्थोपसंहारः — 'एवं हि परतन्त्रत्वाद्' इत्यादि ।

**एवं हि परतन्त्रत्वा[23]ज्जगतोऽस्याखिलस्य तु ।**
**प्रवृत्तिर्नेष्यते यस्मात्तस्मात्कर्ता महेश्वरः ॥९५॥**

---

[1] कर्मणैव — ऐ.
[2] ०महान्तेऽष्टभेदे — ऊ, ॠ.
[3] अत्र 'तत्' इत्यधिकम् — ऊ, ॠ.
[4] सांख्यका० — ५३.
[5] ०स्तिर्यग्योनिश्च — अ, आ, ई, उ, ए, ऐ.
[6] आकरो न लभ्यते ।
[7] ०यातो — अ; ०यातौ — ए, ऐ.
[8] प्राणिनामी — अ.
[9] आरूप्ये — ॠ, ऐ.
[10] 'इति तदयुक्तं' इत्येतन्नास्ति — अ.
[11] तृप्ता — मु, उ, ओ.
[12] ०युक्तमीश्वरस्य — उ.
[13] महात्मनः — ऊ, ॠ.
[14] 'न' इति नास्ति — अ, आ, ई, उ, ए.
[15] लक्ष्य० — अ, आ, ई, उ, ए, ऐ; मतङ्ग० विद्या० १७. १२६उ० — १३२पू०; २३. ६ उ० वृत्तौ ।
[16] 'इच्छा' इत्यत्र 'स्थितीच्छया' इति दृश्यते— ऊ, ॠ.
[17] भोक्तृत्वमस्मदादि० — अ.
[18] सांख्यका० — ५४.
[19] ०विशालस्तु — अ, आ, ई, उ, ए, ऐ.
[20] ०स्तम्भपर्यन्तः — ऊ, ॠ, ऐ.
[21] तत एव योन्यात्मकं — अ; तत एतदेव देव० — ऊ, ॠ; तत एव तदपि देव० —ऐ.
[22] ईश्वरायत्तमिति — अ; ईश्वराय समेवेति —ऐ.
[23] ०ज्जगतश्चाखिलस्य — मु, उ, ओ.

[1]प्रोक्तनयेन सर्वस्यैव [2]जगतः स्वभाव[3]विपर्ययदर्शनाद्, अहेतोश्च देशकालप्रकृतिनियमायोग-स्योक्तत्वात्[4], कर्मादीनां च [5]हेतुत्वासिद्धेरवश्यं हेत्वन्तरेण भवितव्यम्। योऽसौ हेतुः स ईश्वर [6]इतीश्वरसिद्धिः। तदिदमुक्तमनुभवस्तोत्रे गुरुभिः[7] —

आहितास्म[8]दुदयप्रतीरणा यद्विघातरहिता मरीचयः।
[9]एतदेव वयमात्मनोऽधिकं [10]रूपमीश तव संगिरामहे॥" इति॥ ९५॥

"यद्यस्ति भगवानीशः" इत्यादिना अनीश्वरवादिगीत[11]दूषणानुसारेण पुनश्चोदकः —

**मतङ्ग उवाच —**

**यद्यस्ति भगवानीशः कर्तृत्वे [12]संमतः सदा।**
**जगतः परिपूर्णत्वाद्वैचित्र्याच्चापि[13] युज्यते॥९६॥**
**[14]रागद्वेषादिभिर्दोषै[15]स्तस्मादीशोऽस्मदादिवत्।**

**यदि** एवं [16]**जगतः**[17] स्वभाव[18]विपर्यासभावाद्दोषस्तदवस्थ एव। तत्कर्तुरीश्वरस्य परिपूर्णत्वेन रागद्वेषादेः [19]अभावात् प्राणिनां [20]सुखदुःखादिभोगवैचित्र्यं न[21] प्राप्नोति। दृश्यते च तत्। ततो **वैचित्र्यात्** सोऽपि **रागद्वेषादिभिर्दोषैर्युज्यते। तस्माद् अस्मदादिवद्** [22]अनीश्वरः प्रसज्यत इति॥

अत्र सिद्धान्तः — 'वैचित्र्यं जगतः' इत्यादिना।

**परमेश्वर उवाच —**

**वैचित्र्यं जगतः प्रोक्तं स्वकर्मगुणभेदतः॥९७॥**

भवेदेष दोषः यदि ईश्वरहेतुकमेव [23]जगतां वैचित्र्यमेतत् सिद्धं स्यात्। तत्तु असिद्धम्। यतो [24]यस्य **जगतः** [25]जन्मवज्जन्तुचक्रस्य यत् स्वधर्माधर्मात्मकं कर्म, तस्य यो गुणः अग्निहोत्रब्रह्महत्यादि-

---

[1] मतङ्ग० विद्या० ६. ९२ उ०–९४.
[2] 'जगतः' इत्येतन्नास्ति — अ.
[3] ०विपर्यासदर्शनात् — ऐ.
[4] मतङ्ग० विद्या० ६, २५ उ, २६ पू० वृत्तौ।
[5] हेतुत्वादसिद्धेरवश्यं — ऊ, ऋ; हेतुत्वासिद्धेनावश्यं — ऐ.
[6] इति सिद्धिः — अ.
[7] आकरो न लभ्यते।
[8] ०दुभयप्रतीरणा —ऋ.
[9] एतदेव च यमात्मनो — आ, ई, उ; तदेव वयमात्मनो — ऊ, ऋ.
[10] रूपमीशितत्वं सं० — अ.
[11] ०रूपणानुसारेण—अ; ०भूषणानुसारेण—आ.
[12] समता तदा — ऊ, ऋ.
[13] ०च्चाभि० — ऊ, ऋ.
[14] राजद्वेषादि० — मु.
[15] ०स्तस्मादेषो० — ऊ, ऋ.
[16] 'जगतः' इत्येतन्नास्ति — आ, ई, उ, ऊ, ऋ.
[17] अत्र 'स्वभावकर्तृत्वनिमित्तमीश्वरोऽभ्युपगम्यते। तदा जगतः समत्वमेकरूपता' इत्यधिकम् — ऊ, ऋ.
[18] ०विपर्यासाभावदोषः — ऊ, ऋ; ०विपर्यासभावादेर्दोषः — ए.
[19] 'अभावात्' इत्येतन्नास्ति — अ.
[20] 'सुख' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] अत्र चशब्दोऽधिकः — ए.
[22] 'अनीश्वरः' इत्यत्र 'ईश्वरः' इति दृश्यते ऊ, ऋ.
[23] जगतः — ऋ.
[24] 'यस्य जगतः इत्यस्य स्थाने 'कर्मत एवास्य जगतः' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[25] 'जन्मवज्जन्तुचक्रस्य' इत्यारभ्य 'तज्जगतो' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.

साधनवैचित्र्येण विचित्रस्वभावत्वं, तस्य भेदाद् वैचित्र्याद्वेतोः तज्जगतो **वैचित्र्यं** [1]सिद्धम् ॥१७॥

ननु कर्मणः शक्तिरूपत्वेन [2]मायाया इव वैचित्र्यानुपपत्तिः। अत्रोच्यते — 'आधेयाधारभावेन' इत्यादि।

**आधेयाधारभावेन विभिन्नमुपचर्यते।**

अत एव मायावद् जगतः [3]कार्यकरणादेरत्यन्तविचित्रस्य प्रतिपुरुषम् [4]**आधेयस्य आधारभावेन** धारकतया उत्पादकत्वेन स्थितम्। ततो[5] विचित्रजगदुत्पादकस्वभावत्वाद्विचित्रमुपचाराद्रुच्यते। [6]न तु मुख्यतः। यदुक्तम्[7] —

"कर्मतश्च शरीराणि विषयाः करणानि च।
भोगसंसिद्धये भोक्तुर्भवन्ति न भवन्ति च॥" इति॥

ननु अन्यतरासिद्धोऽयं हेतुः, सांख्यैः पुंसः कर्म[8]कर्तृत्वानभ्युपगमात्। तदयुक्तम्। [9]यतः — 'कर्मकृत् पुरुषः' इत्यादि।

**कर्मकृत् [10]पुरुषः प्रोक्तस्तद्विभागभुगेव सः॥१८॥**

[11]यथा चैतत्तथा प्रतिपादितं [12]शून्यवादप्रतिक्षेपे[13]॥ १८॥

[14]क्व तर्हि ईश्वरः कर्तेति। अत्रोच्यते — 'ईश्वरः' इत्यादि।

**ईश्वरः सृष्टिसंहारे रक्षणे च [15]प्रभुः स्मृतः।**

पुरुषैरनुष्ठितान्यपि कर्माणि तनुकरणभुवननिर्माणं विना न भोगाय तेषां [16]पर्यवस्यन्तीति, [17]तदनुसारेणैव तनुकरणभुवनात्मनो जगतः सृष्टिसंहारादिके **प्रभुः** कर्ता **स्मृतः** शक्तिपटले[18] प्रतिपादित इत्यर्थः। ततश्च पुंसां स्वकर्मानुसारेण सुखदुःखादि[19]भोगवैचित्र्यं [20]सृजतः कुतस्तस्य राग-[21]द्वेषादिदोषयोगेन अनीश्वरताप्रसङ्ग इति॥

---

[1] अत्र 'एतत्' इत्यधिकम् — ऊ.
[2] 'मायाया' इत्यारभ्य 'अत एव' इत्यन्तं नास्ति — ऊ, ऋ.
[3] तस्य करणादे० — ए.
[4] आख्यातस्य — अ.
[5] अत्र अपिशब्दोऽधिकः — अ.
[6] न मुख्यः। तदयुक्तम् — ऐ.
[7] स्वायम्भुवे — ३२. १३.
[8] ०कर्तृत्वाभ्युपगमात् — अ.
[9] 'यतः' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[10] पूरुषः — मु.
[11] तथा — अ, ऋ.
[12] मतङ्ग० विद्या० ६. २३ पू, २८ वृत्तौ।
[13] प्रतिक्षेपेण — अ, ऐ.
[14] 'क्व' इत्यत्र 'न' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[15] विभुः — मु.
[16] पर्यवस्यतीति — ऊ, ऋ.
[17] तदनुसरणेनैव — ई, उ.
[18] मतङ्ग० विद्या० ४. ३२–४३ वृत्तौ।
[19] 'भोग' इति नास्ति — अ, आ, ई, उ, ऊ, ऋ, ए.
[20] सृजते कुतः — ऊ, ऋ.
[21] ०द्वेषादिति दोष० — ऐ.

नन्वेवं जगत्स्वभावविपर्यासस्यास्मिन् प्रकरणे[1], भोगमोक्षयोश्च पतिपदार्थप्रकरणे[2] हेतुत्वेन ईश्वरः सिद्धः। [3]जगद्धेतुत्वेन कुतोऽवगम्यते। [4]जगद्धेतुत्वेऽपि च कस्मादसौ महेश्वर उक्तः। [5]न तु दर्शनान्तरदृष्टो ब्रह्मविष्ण्वादिः, तस्यापि प्रधान[6]पर्यन्तस्यैश्वर्यस्य तैरुक्तत्वेन विशेष[7]हेतुत्वाभावात्। [8]जगच्च सृजतस्तस्य किमुपा[9]दानकारणं, [10]सहकारिकारणं वा[11]। यदाहुः[12] —

"न [13]हि निःसाधनः कर्ता [14]कश्चित्सृजति किंचन।" इति।

तदर्थमेतत् — 'निमित्तकारणं त्वीशः' इत्यादि।

**निमित्तकारणं त्वीशो ह्युपादानं [15]तु शक्तयः ॥९९॥**
**[16]समवायि तथा माया कार्यमेतज्जगत्सदा।**

ब्रह्मादेस्तावत्[17] [18]तद्रूपत्वमसिद्धमेव, उपादानकारणत्वेन[19] [20]तत्र श्रुतेः। यच्चोपादानकारणं तदचेतनमेव [21]यथा मृदादि। [22]यदि चोपादानकारणमीश्वरः स्यादचेतन एव स्यात्। न च[23] अचेतनः। तस्मान्नोपादानकारणम्। अपि तु घटादेः कुम्भकारादिवन्निमित्तकारणमेव [24]**सदेति** स्वापेऽपि कर्तृत्वानुपसंहारादित्युक्तम्[25]। उपादीयते कार्यार्थिमिति **उपादानं** सहकारिण्यः **शक्तयः** शक्तिप्रकरणे[26] प्रतिपादिता ईशान्याद्याः। किं च [27]समवैति स्वधर्मान्वियेन कार्यमिति, उपादानकारगमेव समवायिकारणमुच्यते। [28]न तु परिणाम[29]पक्षे कार्यकाले कारणस्य नैयायिकादिगीतवद-

---

[1] मतङ्ग० विद्या० ६. ९१–९५ वृत्तौ।
[2] मतङ्ग० विद्या० ३. १२–१६ पू० वृत्तौ।
[3] जगतो हेतुत्वेन — ए.
[4] जगतो हेतुत्वे० — ए.
[5] 'न तु' इत्यत्र 'ननु' इति दृश्यते — अ, आ ई, उ, ए, ऐ.
[6] पर्यन्तस्तस्यैश्वर्यस्य — ऐ.
[7] हेतुत्वेऽभावात् — अ; हेतुभावात् — आ, ई, उ, ए; हेतुत्वेनाभावात् — ऊ, ऋ.
[8] जगतश्च — अ.
[9] ०दानं करणं — अ, ऐ; ०दानकरणं — आ, ई, उ, ऊ, ऋ.
[10] 'सहकारिकारणं' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[11] वाशब्दो नास्ति — ऊ, ऋ.
[12] श्लोकवा० संबन्धाक्षेपपरि० ५० उ०.
[13] च — श्लोकवार्तिकपाठः।
[14] कञ्चित् — अ, ऐ.
[15] च — मु, ओ.
[16] समवायितया माया — ऊ, ऋ.
[17] 'तावत्' इत्येतन्नास्ति — ऐ.
[18] तद्रूपमसिद्ध० — ऊ.
[19] ०कारणत्वे — ऊ, ऋ.
[20] ततः — अ, ए.
[21] 'यथा मृदादि' इत्यस्य स्थाने 'मृदादिवत्' इति दृश्यते — अ; 'मृदादीव' इति दृश्यते — आ, ई, उ, ए.
[22] 'यदि च' इत्येतन्नास्ति — अ, आ, ई, उ, ए.
[23] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[24] 'सदेति' इत्यत्र 'सदपि' इति दृश्यते — अ.
[25] मतङ्ग० विद्या० ६. ५२, ५३ वृत्तौ।
[26] मतङ्ग० विद्या० ४. ५ उ०, ६, १५ उ०, १६ पू० वृत्तौ।
[27] समवेति — ऊ, ऋ.
[28] 'न तु' इत्यत्र 'ननु' इति दृश्यते — ऐ.
[29] ०पक्षकार्यकाले — अ, ऊ, ऋ.

युतसिद्धत्वादिना समवायि[1]कारणत्वमुपपद्यते [2]इत्युक्तं सत्कार्यवादे[3]। सा[4] च माया [5]मोहान्वयाज्जगत इति वक्ष्यामो[6] मायाप्रकरणे। ननु प्रधानमेवात्र जगतः उपादानकारणमित्युक्तम्[7]। सत्यम्। तस्यापि च त्रिगुणात्मकत्वेन अचैतन्ये सत्यनेकत्वेन कारणपूर्वकत्वेन [8]मायोपादानत्वं [9]वक्ष्यतीत्यविरोधः। **कार्यमेतज्जगत्** [10]यदत्र मायाकार्यत्वेनोक्तं पृथिव्यादिकलाप्रान्तं तत्त्वं [11]तत् सदैव कार्यम्, अवान्तरपरिणामेनापि परिणामादिति, न निःसाधनः। नापि ब्रह्मादीनामन्यतमः। तेषां निमित्तकारणत्वाभ्युपगमेऽपि [12]मायायोऽधिष्ठातृत्वेन परमेश्वरत्वासिद्धेः। ततश्च [13]यत् कार्यं तत् कर्तृपूर्वकमेव, यथा घटादि[14]। कार्यं चादृष्ट[15]कर्तृकं सर्वमेव [16]तनुकरणभुवनादिकं सतृण[17]वनस्पत्युदकं जगत्। तस्मात् तस्यापि कर्त्रा भवितव्यमिति जगतोऽपि कर्तृपूर्वकत्वसिद्धेः कर्तुरीश्वरस्य सिद्धिः। न [18]च कार्यत्वमसिद्धं [19]जगतः। [20]अत्रैव पृथिव्यादेः प्रधानोपादानत्वेनोक्तत्वात्, प्रधानादिकलान्तस्य च मायोपादानत्वेन [21]वक्ष्यमाणत्वात्। [22]नाप्यदृष्टकर्तृकेषु पृथिवीपर्वतादिष्वत्यन्तवैलक्ष्यण्यात् तस्यासिद्धत्वं[23] चोदनीयम्। यदाहुः[24] —

> "सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत्।
> संनिवेशादि तद्युक्तं तस्माद्यदनुमीयते॥
> वस्तु[25]भेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः।
> न [26]युक्तानुमितिः पाण्डु[27]द्रव्यादिव हुताशने॥" इति।

विशेष[28]स्याहेतुत्वात् कार्यमात्रस्यैव कर्तृमात्रेण धूममात्रस्य [29]वह्निमात्रेणेव, [30]कृतकत्वमात्रस्य

---

[1] ०कारणमुप० — अ, आ.
[2] इत्युक्ति — ऊ, ऋ.
[3] मतङ्ग० विद्या० ६. ४६ उ०, ४७, ५४ वृत्तौ सत्कार्यसिद्धिर्वर्ण्यते। तत्रायं विषयः स्पष्टतया नोपलभ्यते।
[4] 'सा च माया' इत्यस्य स्थाने 'पिशाचमायेव' इति दृश्यते — ऊ, ऋ.
[5] मोहनान्वया० — ऊ, ऋ, ऐ.
[6] मतङ्ग० विद्या० ८. २–५ वृत्तौ।
[7] मतङ्ग० विद्या० ६. ४४ वृत्तौ।
[8] मायोपादानत्वमित्यविरोधः — अ; मायोपादानं वक्ष्यती० — आ.
[9] मतङ्ग० विद्या० ६. १०४ उ०; ८. ५५उ०, ५६ पू०; १४. ९ उ०—१२ वृत्तौ।
[10] 'यदत्र' इत्यस्य स्थाने 'यत्र' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[11] 'तत्' इति नास्ति — अ.
[12] मायातोऽधो० — ऋ.
[13] 'यत्' इति नास्ति — ऊ, ऋ.
[14] अत्र इतिशब्दोऽधिकः — ऐ.
[15] ०पूर्वकं — ऊ.
[16] 'तनुकरण' इत्यत्र 'क्रमेण' इति दृश्यते — आ, ऐ.
[17] ०वान० — ऊ, ऋ.
[18] चाकार्यत्व० — ऋ.
[19] 'जगतः' इत्यारभ्य 'तस्यासिद्धत्वं' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] मतङ्ग० विद्या० ६. ४४ वृत्तौ।
[21] मतङ्ग० विद्या० ६. १०४ उ०; ८. ५५ उ०, ५६ पू० १४. ९ उ०—१२ वृत्तौ.
[22] 'नाप्यदृष्टकर्तृकेषु' इत्यस्य स्थाने 'नापि दृष्टकर्तृकस्याकार्यत्वस्यात्र हेतुत्वाददृष्टकर्तृकेषु' इति दृश्यते — ऋ.
[23] अत्र इतिशब्दोऽधिकः —ऐ.
[24] प्रमाणवार्तिके २. ११, १२.
[25] ०भेदप्रसिद्धस्य — अ, आ.
[26] शक्यानुमितिः — अ, आ, ई, उ, ए, ऐ.
[27] द्रव्यादिवद्धुताशने — प्रमाणवार्तिकपाठः।
[28] ०स्याहेतुकत्वात् — आ; ०स्य हेतुत्वात् — ऐ.
[29] वह्निमात्रेणैव — आ, ऐ; वह्नेरेव — ऊ, ऋ.
[30] कृतकमात्रस्य — ऊ, ऋ.

अनित्यत्वेनेव[1] व्याप्तेः सिद्धत्वात्। अन्यथा महानसवर्तिनो धूमस्य अग्निकार्यत्वसिद्धावपि पर्वतादिवर्तिनस्ततोऽन्यत्वाद् अग्निकार्यत्वासिद्धेः, घटगतस्य[2] कृतकत्वस्य अनित्यत्वसिद्धावपि शब्दसंबन्धिनोऽसिद्धेः सर्व[3]त्रासिद्धत्वस्य संभवात् [4]सर्वानुमानाभाव एव। [5]अथ तत्र धूम[6]मात्रं वह्निमात्रेण, [7]कृतकत्वमात्रं वानित्यत्वमात्रेण व्याप्तं सिद्धमिति [8]नासिद्धतेत्युच्यते। तदिहापि कार्यमात्रं कर्तृमात्रेण व्याप्तं सिद्धमिति कुतोऽसिद्धत्वदोषः। पाण्डुत्वादीनां तु [9]अवह्निकार्येऽपि [10]हिममक्कोलादौ [11]दर्शनात् तज्जन्य[12]विशेषासिद्धौ युक्तमेवागमकत्वम्। नाप्यनैकान्तिकः। सर्वस्य [13]अदृष्टकर्तृकस्य कार्यस्य वनतृणादेरपि पक्षीकरणादित्युक्तम्। [14]नन्वयं विरुद्धः। यदाहुः[15] —

"[16]यथासिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता[17]।
[18]अनीश्वरविनाश्यादिकर्तृकत्वं प्रसज्यते॥" इति।

तदयुक्तम्। साध्य[19]विपर्ययव्याप्तो हि [20]हेतुर्विरुद्धः। न चायं [21]दृष्टान्तोऽनीश्वर[22]कर्तृत्वेन व्याप्तः सिद्धः। कुम्भकारादेः [23]स्वकार्यसर्वज्ञसर्वकर्तृत्वसिद्धेः। तदेव [24]चेश्वरत्वम्। न हि [25]तत्र तस्याज्ञत्वे, शक्तिवैकल्ये [26]वा कुम्भः ततोऽकुम्भकारादिव[27], व्याध्याद्युप[28]हतकुम्भ[29]कारादिव वा भवेत्। नापि तस्य [30]विनाशित्वम्। आत्मनो [31]नित्यत्वेनैवोक्तत्वात्[32]। तस्यैव च [33]कर्तृत्वात्। नापि धर्मिस्वरूपविपरीतसाधनोऽयं विरुद्धः। यदाहुः[34] —

---

[1] अनित्यत्वेन — अ, आ, ई, उ, ए; अनित्यत्वेनैव — ऐ.
[2] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[3] ०त्रासिद्धस्य — ऊ, ऋ.
[4] सर्वत्रानुमानाभाव एव — आ; सर्वानुमानभावनेव — ऊ, ऋ.
[5] कथं — अ.
[6] ०मात्रवह्नि० — आ.
[7] कृतकमात्रं चानित्यत्व० — ऊ, ऋ.
[8] नासिद्धतोच्यते — ऐ.
[9] वह्निकार्यत्वेऽपि — आ, ई, उ, ए.
[10] 'हिममक्कोलादौ' इत्यत्र 'हिमकालादावपि' इति दृश्यते — अ, आ, ई, उ, ए; 'मक्कोलादौ' इति दृश्यते — ऊ, ऋ; 'मृत्तत्कपालादावपि' इति दृश्यते — ऐ.
[11] तद्दर्शनाज्जन्य० — अ.
[12] ०विशेषसिद्धौ — अ, ई, उ.
[13] दृष्टकर्तृकस्य — ऊ, ऋ.
[14] नत्वयं — ऊ, ऋ.
[15] श्लोकवा० संबन्धाक्षेपपरि० ८०.
[16] यथादृष्टे च सिद्धान्ते — आ; यथा सिद्धे न दृष्टान्ते — ऊ, ऋ; यदासिद्धे च दृष्टान्ते — ऐ.
[17] ०विरुद्धतः — ऐ.
[18] ह्यनीश्वर० — ऐ.
[19] ०विपर्यये हि — अ; ०विपर्ययव्याप्त्या हि — ऋ; ०सिद्धाय व्याप्तो हि — ए; ०विपर्ययव्याप्ते हि — ऐ.
[20] 'हेतुः' इति नास्ति — ऐ.
[21] दृष्टान्तेऽनीश्वर० — अ, ऊ, ऋ, ऐ.
[22] ०कर्तृत्वेनाव्याप्तः — अ, आ; कर्तृकत्वेन व्यापिनः — ऐ.
[23] सर्वकार्य० — ऐ.
[24] चेदीश्वरत्वम् — ए.
[25] तस्य तत्राज्ञत्वे — आ, ई, उ, ए, ऐ.
[26] वा वस्तुतोऽकुम्भ० — आ, ई, उ.
[27] ०कारादिवत् — ऐ.
[28] ०हतात्कुम्भ० — ऊ, ऋ.
[29] कारादिव व्यापारोऽपि तस्य — अ; कारादिवद्वा भवेत् नापि तस्य — आ, ई, उ, ए, ऐ.
[30] विनाशिवत्वम् — ऐ.
[31] नित्यत्वे वोक्तत्वात् — ऊ; नित्यत्वेनोक्तत्वात् — ऋ, ए, ऐ.
[32] मतङ्ग० विद्या० ६. ४ उ०, ५ वृत्तौ।
[33] कर्तृत्वं नापि — अ; कर्तृत्वे नापि — ऐ.
[34] आकरो न लभ्यते।

[1]कार्यं[2] शरीरयुक्तेन कर्त्रा व्याप्तं घटादि यत्।
कार्यत्वात्तेन जगतः कर्ता देही प्रसज्यते ॥" इति।

कार्यस्य शरीरव्यभिचारान् स्वदेहस्पन्दादिकार्येण देहान्तरपूर्वक[त्वं] सिद्धं यतः। नापि क्षणिकत्वाच्छरीरस्य पूर्वशरीरक्षणापेक्षणापेक्षया चलदवस्थशरीरक्षणान्तरक्षणान्तरजननादत्र तदव्यभिचारो वाच्यः। क्षणिकस्य [3]निराकृतत्वादभ्युपगमविरुद्धत्वाच्च। अभ्युपगमे ह्यात्मनि कर्तृकत्वे चेश्वरपरीक्षाप्रस्तावः। तच्च क्षणिकत्वे नोपपद्यते यतः। अत एव

"अशरीरो ह्यधिष्ठाता नात्मा मुक्तात्मवद्भवेत्।"

इत्येतदपि [न], [5]अनेनैव व्यभिचारात्। दृष्टान्तश्चायं साधनधर्मासिद्धः। मुक्तात्मनां सर्वाधिष्ठातृत्वेनोक्तत्वात्। नापि धर्मिविशेषविपरीतसाधनोऽयं विरुद्धः। यदाहुः[6] —

"संनिवेशादिमत्सर्वं बुद्धिमद्धेतु [7]यद्यपि।
[8]प्रसिद्धेः संनिवेशादेरेककारणता कुतः ॥
[9]रथाद्यवयवा नानातक्ष[10]निर्मापिता अपि।
दृश्यन्ते जगति प्राय उपकार्योपकारकाः ॥" इति।

यतो रथाद्यवयवानामनेक[11]तक्षनिर्मितानामपि [12]एकस्थपतिबुद्ध्या विना [13]परस्परोपकार्योपकारकभावेन एकरथादिद्रव्यारम्भकत्वं नोपपद्यते एव। इहापि च जगतोऽस्य सर्वस्य

[14]"कलोद्बलितचैतन्यो विद्यादर्शितगोचरः"

इत्यादि[15]वक्ष्य[16]माणतत्त्वभावभूतभुवनात्मनः [17]परस्परोपकारेणैव [18]सिद्धेः, धर्मिणो [19]विशेषाद् रथादेरिव एक[20]कर्तृकत्वमेव सिद्ध्यति। [21]न त्वनेक[22]कर्तृकत्वमित्यविरोधः।

नापि "अनीश्वरकर्तृकं जगत् कार्यत्वात्, घटादिवत्" [23]इत्यादिविरुद्धाव्यभिचार्यनैकान्तत्वात्, अहेतुरयमिति वाच्यम्। धूमादेरिव कार्य[24]हेतोरस्य वस्तुबल[25]प्रवृत्तत्वात्। न च वस्तुबल[26]प्रवृत्ते

---

[1] 'कार्य' इत्यारभ्य 'यदाहुः' इत्यन्तं नास्ति— अ, आ, ई, उ, ए, ऐ.

[2] अत्र चशब्दोऽधिकः — ऊ, ऋ.

[3] मतङ्ग० विद्या० ६. २३—४१ वृत्तौ।

[4] श्लोकवार्तिके संबन्धाक्षेपपरि० ७८ उ०.

[5] अनेनैवमव्यभिचारं — ऊ, ऋ.

[6] विधिविवेके पृ. २१९, २२४.

[7] यद्यदि — ऋ.

[8] प्रसिद्धसं० — अ, आ, ई, उ, ए, ऐ.

[9] रथाङ्गाद्यवयवा नानातक्षनिर्मिता अपि — विधिविवेकपाठः।

[10] निर्मिता अपि — ई, उ, ए.

[11] तक्षकारनिर्मिता० — ऊ, ऋ; तक्षकनिर्मिता० — ऐ.

[12] एकस्य पतिबुद्ध्या — अ, एकस्थापितबुद्ध्या ऊ, ऋ.

[13] परस्परोपकारक० — अ,

[14] स्वायम्भुवे ३२. १० पू०.

[15] मतङ्ग० विद्या० ८. १७—२० वृत्तौ।

[16] ०माणावधिना तत्त्व० — ऊ, ऋ.

[17] परस्परेणैव — अ.

[18] सिद्धे धर्मिणः — ऊ.

[19] 'विशेषाद्' इत्यत्र 'विशेषो' इति दृश्यते — ऊ, ऋ.

[20] ०कर्तृतयैव सिद्ध्यति — ऊ, ऋ; ०कर्तृत्वमेव सिद्ध्यति — ऐ.

[21] 'न तु' इत्यत्र 'ननु' इति दृश्यते — अ.

[22] ०कर्तृत्वमि० —अ, आ, ई, उ, ऐ; ०कर्तृकमि० — ऊ, ऋ.

[23] 'इत्यादि' इत्यत्र 'विद्यादि' इति दृश्यते — अ.

[24] हेतुत्वेनास्य — ऊ, ऋ.

[25] ०प्रावृतत्वात् — अ, ऋ.

[26] प्रवृत्तेः — अ.

[1]हेतौ[2]विरुद्धाव्यभिचारिणः संभवः। वस्तुनो रूपान्तराभावादिति [3]भवतामप्यभ्युपगमः। अन्यथा पर्वतादावग्न्यनुमानेऽपि "अत्र अपर्वत[4]वर्ती [5]वह्निः धूमवत्वाद् महानसवद्" इति सर्वत्र विरुद्धा-[6]व्यभिचारिप्रतिप्रयोगावस्करस्य संभवाद् अनुमानाभावप्रसङ्ग इति। एवमादयोऽत्र हेतुदोषा विस्तरेणास्माभिः [7]**नरेश्वरपरीक्षाप्रकाशे** निराकृता इति तत एवावधार्याः॥

अथ यदुक्तम्[8] — "उपादानं तु शक्तयः" इत्येतदयुक्तम्। स्वशक्ति[9]मात्रस्य सहकारित्वेन क्वचिदप्यसिद्धेरिति। [10]अत्रोच्यते — 'यथा' इत्यादि।

**यथार्करश्मयो दीप्ता निरपेक्षास्तपन्ति हि॥१००॥**
**विकासाकुञ्चने [11]दृष्टे कुमुदेष्वम्बुजेषु ते[12]।**
**शक्तीनां परमेशस्य स्वभावो ह्युपवर्णितः॥१०१॥**
**तेनै[13]वावसरप्राप्ते त्वं मुने प्रत्यवस्थितः।**

[14]अर्कस्य रश्मयश्च तच्छक्तिस्वभावाः। **ते** [15]**यथा** [16]पद्मादिविकासादिकार्येषु [17]**निरपेक्षाः** तद्व-च्छक्तयोऽपि निरपेक्षाः पुरुषेषु [18]बन्धमोक्षादिकार्यसंपादिकाः परस्परापेक्षयैव स्वभावसिद्धा [19]इति पूर्वनीशान्यादिप्रतिपादनप्रकरणे[20]ऽस्माभिरुपवर्णितम्। [21]येनैवमुपवर्णितं तेनैव हेतुना **त्वमप्यत्र अवसरप्राप्ते** —

[22]"अथ शक्तिसमूहस्य चरतोऽस्य जगत्पतेः।"

इत्यादिना **प्रत्यवस्थितः** [23]प्रश्नाय प्रवृत्त इति॥

---

[1] हेतौ विरुद्धा० — आ, ई, उ, ऊ, ऋ, ए.
[2] ०विरुद्धो व्यभि० — अ.
[3] भवतामभ्युप० — अ.
[4] ०वर्तिवह्निः — अ, ऐ.
[5] वह्निधूमाद्यत्र धूमस्तत्रापर्वतवर्तिवह्निर्महानस० — ऊ, ऋ.
[6] ०व्यभिचारिप्रयोगा० — ऊ, ऋ; ०व्यभिचार-वृत्तिप्रयोगा० — ए; ०व्यभिचारिणं प्रति प्रयोगा० — ऐ.
[7] द्वितीयकाण्डे श्लो० ९–१३ विवरणे।
[8] मतङ्ग ० विद्या० ६. ९९ उ०.
[9] ०मात्रसह० — अ, आ, ई, उ, ऐ.
[10] तत्रोच्यते — ऐ.
[11] दृष्टाः — ऊ, ऋ, ओ.
[12] च — ऊ, ऋ, ओ.
[13] ०वावसरे प्राप्ते — ओ.
[14] अर्कश्च — ऊ.
[15] 'यथा' इत्यारभ्य 'स्वभावसिद्धाः' इत्यन्तस्य ग्रन्थस्य स्थाने 'यथा सहकार्यान्तरनिरपेक्षाः स्वभावेनैव परस्परापेक्षात्मना कुमुदादिषु संकोचविकासादिकार्यमातपात्मना व्यापारेण विदधति, तथा यत्तदोर्नित्यमभिसंबन्धादीश्वरस्य शक्तीनां च सहकार्यन्तरनिरपेक्षाणां पुरुषेषु बन्धमोक्षादिकार्यसंपादकः परस्परा-पेक्षयैष स्वभावः सिद्धः' इति दृश्यते — ऊ, ऋ.
[16] पद्मादिषु विकासादि० — आ, ई, उ, ऐ.
[17] निरपेक्षत्वात्तच्छक्तयो० — अ, ऐ; निरपेक्षा-वन्यच्छक्तयो० — ए.
[18] 'बन्ध' इत्येतन्नास्ति — अ, ऐ.
[19] इतिशब्दो नास्ति — ऊ, ऋ.
[20] मतङ्ग० विद्या० ४. १–५०; ५. १, २ वृत्तौ।
[21] तेनैवोप० — अ, ए; 'येनैवोपवर्णितं' इत्येतन्नास्ति — ऊ, ऋ.
[22] मतङ्ग० विद्या० ६. १ पू०.
[23] प्रश्नायाभिप्रवृत्त — ऊ, ऋ; प्रश्नाय प्रवर्तत — ए.

तदियता "[1]पाश्यः पाशयिता पाशास्त्रयमेतत्", "प्रवक्तव्यम्" इति प्रागुक्तादत्र मतङ्गमुनिप्रश्नसूत्रात् पाश्यपाशानामिव पाशयितुरपि स्वरूपं [2]पतिपदार्थविचारद्योपभूतमुक्त्वा, अधुना पाशानां प्रधानमलकर्ममायोपादानानामनेकविधानां प्रकरणान्तरेऽपि पाश्यपाशयितृप्रसङ्गेषु [3]उक्तत्वाद् विक्षिप्तानां संक्षेपेण स्वरूपं, [4]प्रवृत्तिवैचित्र्यपाशान्तराणि चाभिधातुं शिष्टं प्रकरणम् — 'सति मायात्मके पुंसः' इत्यादि।

**सति मायात्मके पुंसः संनिकृष्टे [5]मलेऽपरे ॥१०२॥**
**[6]स्थूलः प्राधानिको [7]बन्धः स च कर्मवशात्स्थितः।**

मायैव [8]आत्मा कारणं यस्य तस्मिन् [9]कलादिके बन्धे **पुंसः** प्रवृत्ते सति [10]**प्राधानिको बन्धः** स्थितः। नासति विज्ञानकेवलिनः तथा **संनिकृष्टे** [11]परिपाकं प्राप्ते, ततः **अपरे** [12]मायाव्यतिरिक्ते मलाख्ये बन्धे सति। यदुक्तम्[13] — "स चानादिमलावृतः" इति। तस्मिन् सति प्राधानिको बन्धः स्थितः। न तु तस्मिन् असन्निकृष्टे, तदानीं तस्य दीक्षया क्षपणीयत्वात्। अत एव अपरश्रुतेः [14]मायात्मकाद् बन्धाद् अन्यो मलाख्यो बन्धः सिद्ध इति। [15]एतच्च मायाप्रकरणेऽपि [16]स्फुटयिष्यामः। मलस्यात्र रात्रिकृत्येष्वन्धकारस्येव सहकारिकारणत्वम्। [17]न तु उपादानकारणता। मायाया एवोपादानकारणत्वात्। ततश्च मायामलवादिना योऽत्र हेतुरुक्तः — "उपादान[18]कारणात् [19]कार्यस्योपपत्तेर्न मायाव्यतिरिक्तो मल इति। सः 'अनित्यः शब्दः काकस्य [20]कार्ष्ण्याद्' [21]इतिवद्व्यधिकरणासिद्ध एवेति। [22]स तु प्राधानिको बन्धः तत्त्वभावभूतभुवनात्मकः **स्थूलः**। मायीयस्य [23]कलाद्यात्मनोऽध्वनि सूक्ष्मस्य [24]वक्ष्यमाणत्वात्। **स च कर्मवशात् स्थितः**। न प्रकृतिस्वभावात्[25]। **च**शब्दाद्[26] मायात्मकोऽपि[27] [28]कलादिको बन्धः कर्मवशात् स्थितः। एवं पाशानां संक्षेप उक्तः॥

---

[1] मतङ्ग० विद्या० ६. २ पू०, ३ पू०.
[2] पतिपदार्थशेषमुक्त्वा — अ; पतिपदार्थविशेषभूतमुक्त्वा — आ.
[3] मतङ्ग० विद्या० २. १७ उ०, १८; ३. १०उ० — १३; ५. ६ पू० वृत्तौ।
[4] प्रवृत्तौ च वैचित्र्य० — ऊ, ॠ.
[5] परे मले — मु, उ.
[6] स्थूलप्राधानिको — ऊ, ॠ.
[7] बद्धः — ओ.
[8] आत्माकारेण यस्य — अ; आत्मकारणं यस्य — ॠ.
[9] कालादिके — ऐ.
[10] 'प्राधानिको बन्धः स्थितः नासति' इत्येतन्नास्ति — अ.
[11] परिपाकमप्राप्ते — अ, ऊ, ॠ, ए.
[12] मायातो व्यति० — ऊ, ॠ.
[13] मतङ्ग० विद्या० ६. ८१ पू०
[14] मलात्म० — ऊ, ॠ.
[15] तच्च — अ; अतश्च — ऊ, ॠ
[16] मतङ्ग० विद्या० ८. १८ उ०, १९ वृत्तौ।
[17] न कारणता — ऐ.
[18] ०कारणाभावे कार्यानुत्पत्तेर्न — ऊ, ॠ.
[19] कार्यस्योत्पत्तेर्न — ए, ऐ.
[20] कार्ष्ण्यादिवद्व्यधि० — ऊ, ॠ.
[21] इत्यधिकरणा० — अ.
[22] वस्तुप्राधानिको — अ; स च प्राधानिको —ऊ, ॠ.
[23] कालाद्यात्मनो — अ, आ, ई, उ, ऊ, ऐ.
[24] मतङ्ग० विद्या० ८. १७ वृत्तौ।
[25] अत्र 'इत्युक्तं' इत्यधिकम् — ऊ, ॠ; 'उक्तम्' इत्यधिकम् — ऐ.
[26] चशब्दो — ऐ.
[27] अपिशब्दो नास्ति — ऐ.
[28] कलादिभुवनान्तः कर्म० — ऊ, ॠ; द्विकलाभुवनान्तः कर्म० — ऐ.

अधुना पाशान्तरमुच्यते — 'मोहो मदश्च' इत्यादि।

**मोहो [1]मदश्च रागश्च विषादः शोष एव च ॥१०३॥**
**[2]वैचित्र्यं चैव हर्षाख्यः सप्तैते सहजा मलाः ।**

**एते च सप्त** सहजमलकार्यत्वात् **सहजाः मलाः** इति [3]वक्ष्यति **मायातत्त्वप्रकरणे**। प्रोक्तं च [4]'श्रीमत्स्वायंभुवे'[5] —

"अथानादिमलः पुंसां पशुत्वं परिकीर्तितम्।"

इत्युक्त्वा, "[6]तत्सद्भाववशो[7]ऽज्ञादिपाशौघः पौरुषः [8]स्थितः।" इति ॥

कथं तर्हि एषु [9]पाशत्वमिति[10]। तत्रोच्यते — 'सत्स्वेतेषु' इत्यादि।

**सत्स्वेतेष्वपि [11]ये पाशा मायातः [12]क्षुरिताः कलाः ॥**

[13]यथा मलकर्ममायाख्यपाशसंभवे सति **मायातः** कलादयः **पाशाः** प्रवृत्ताः, तथैव[14] **एतेष्वपि सत्सु** इत्येतेऽपि पाशा उच्यन्ते। न तु परमार्थतः एषां पाशत्वमित्यर्थः। कलाशब्देन [15]चात्र [16]साहचर्याद् विद्यादिपृथिव्यन्ताः प्रतिपुरुषनियतास्तत्त्वमात्रा उच्यन्ते। यदनन्तरमाह[17] — "तदुद्वलितवीर्योऽणुः" इति[18]। [19]एवं पाशान्तरमपि प्रतिपादितमलपाशानामेव प्रवृत्तिवैचित्र्यमुच्यते ॥

**तदुद्वलितवीर्योऽणुर्भुङ्क्ते प्रकृतिजान्गुणान् ॥१०४॥**

ताभिः मायातः समुत्पन्नाभिः [20]कलादिभिः **उद्वलितम्** उत्तेजितं वीर्यं ज्ञानक्रियात्मकं यस्य। [21]यच्छ्रूयते[22] —

"कलोद्वलितचैतन्यो विद्यादर्शितगोचरः।" इत्यादि।

सः **अणुः** आत्मा। **प्रकृतिजान्** इति प्रधानादधः कालाग्निभुवनं यावत् प्रधान[23]लक्षणप्रकृतिजान्। प्रधानादूर्ध्वं तु मायारूपप्रकृतिजान्। **गुणान्** इति भावभूतभुवनात्मकान् **भुङ्क्ते** इति [24]प्रतिपद्यते ॥१०४॥

---

[1] मलश्च — ऊ, ॠ.
[2] वैचित्र्यमथ हर्षश्च — ऊ, ॠ; वैचित्र्यं हर्षणाख्यं च — ओ.
[3] मतङ्ग० विद्या० ८. ३२ उ०.
[4] 'श्रीमत्' इत्यत्र 'श्री' इति दृश्यते — ऊ, ॠ.
[5] स्वायम्भुवे — ३३. १ पू०, २ पू०.
[6] तत्संभाव० — आ, ई, उ, ए.
[7] ऽज्ञादिः पाशौघः — ॠ.
[8] स्मृतः — ऊ, ॠ.
[9] 'पाशत्वं' इत्यारभ्य 'न तु परमार्थतः एषां' इत्यन्तं नास्ति — ए.
[10] इतिशब्दो नास्ति — अ, आ, ई, उ, ऐ.
[11] 'ये पाशाः' इत्यस्य स्थाने 'पाशेषु' इति दृश्यते — ऊ, ॠ.
[12] क्षरिताः — ओ.
[13] यदा मलकर्माख्य० — ऊ, ॠ.
[14] एवकारो नास्ति — अ, ऊ, ॠ.
[15] चशब्दो नास्ति — ऐ.
[16] कलासाहचर्याद् — ऊ, ॠ.
[17] मतङ्ग० विद्या० ६. १०४
[18] 'इति' इत्यस्य स्थाने 'इत्यादि' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[19] 'एवं' इत्यारभ्य 'वैचित्र्यमुच्यते' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] कलाभिः — अ, आ, ई, उ, ऊ, ॠ, ऐ.
[21] यच्छ्रूयन्ते — अ, ई, उ.
[22] स्वायम्भुवे — ३२. १० पू०.
[23] ०प्रकृतिलक्षणजान् — ऊ, ॠ.
[24] प्रतिपाद्यते — आ, ई, उ, ए.

एवं पतिपदार्थे [1]एव प्रसङ्गतो [2]विचारशेषमपि निर्वर्त्य[3], [4]व्याख्यातार्थोपसंहाराय, प्रकरणान्तर-व्याख्येयोपक्रमाय [5]च श्लोकः — 'प्रोक्तः पुमान्' इति।

**प्रोक्तः पुमानीश्वरचोदितो बलाद्**
**भुङ्क्ते गुणान्कर्मविपाकसंभवान्।**
**तेभ्यो [6]वियोक्ता स शिवो हि शक्तिमान्**
**मन्त्रैर्महद्भिः शिवशक्तिसंभवैः॥१०५॥**

**प्रोक्तः पुमान्** [7]इति अनेन चार्वाकमार्गगतप्रतिक्षेपोपसंहारः। [8]स च पुमान् मलयुक्तः। न तु सांख्यपक्ष-वच्छुद्ध इति मलसिद्धेरुपसंहारः। स च **ईश्वरचोदितः** इति ईश्वरसिद्धेः। **बलादिति** ज्ञान[9]क्रियात्मकात् स्वसामर्थ्याद्धेतोः[10]। न तु मनःसंयोगादिनेति "[11]चितेश्चित् सहजो धर्मः" इत्यादिनोक्तस्योपसंहारः। **गुणानिति**[12] गुणकार्याणि **भुङ्क्ते**। न तु परमाण्वादिकार्याणीत्यप्यत्रोक्तम्[13]। एतच्चोपलक्षणम्। यतो गुणेभ्यः ऊर्ध्वं कलाभुवनं यावन्मायाकार्यमपि [14]भुङ्क्ते इत्युक्तम्[15]। **कर्मविपाकसंभवानिति** यदुक्तम्[16]— "भोगेष्वपि हि सामर्थ्यात् कर्मणाम्" इति। [17]अथ व्याख्येयार्थोपक्रमः — **तेभ्यः** मलकर्ममायादिभ्यो [18]बन्धेभ्यः यो वियोजकः पुंसः स [19]एव भगवान् योऽत्र साधितः। [20]**शक्तिमान् मन्त्रैर्महद्भिः** शुद्धविद्यावर्तिभिरणुभिः शिव[21]शक्त्या समभिव्यक्तसामर्थ्यैः करणभूतैः, नान्यैः। यदुक्तम्[22]—

"अन्ये प्राधानिका मन्त्रा ब्रह्मविष्ण्वादयोऽपराः।" इत्यादि।

एवं च विद्यातत्त्वस्य [23]प्राक् शक्तिपदार्थत्वेन संगृहीततया वक्ष्यमाणस्योपक्रम इति सिद्धम्॥१०५॥

[24]इति [श्री] [25]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ [26]विद्यापादे [27]पतिपदार्थविचारे प्रासङ्गिकं पुंपाशेश्वरप्रकरणं [षष्ठं] समाप्तम्॥

षष्ठः पटलः

---

[1] एवं — आ.
[2] विचारसहितमभिनिर्वर्त्य — ऊ, ऋ.
[3] अत्र 'अथ प्रकरणान्ते' इत्यधिकम् — ऊ, ऋ.
[4] व्याख्यातोप० — ऊ, ऋ.
[5] चशब्दो नास्ति — ऐ.
[6] वियुक्तास्य शिवो—ऊ; नियुक्तास्य शिवो—ऋ.
[7] इति तत्रानेन — ऊ, ऋ.
[8] 'स च' इत्यारभ्य 'मलसिद्धेरुपसंहारः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[9] ०क्रियात्मकस्व० — ए.
[10] अत्र 'भुङ्क्ते जानाति' इत्यधिकम् — ऊ, ऋ; 'भुङ्क्ते प्रकृतिजान्' इत्यधिकम् —ऐ.
[11] मतङ्ग० विद्या० ६. ८१ पू०.
[12] इतिशब्दो नास्ति — ऐ.
[13] मतङ्ग० विद्या० ६. ४४ वृत्तौ।
[14] भुक्तं — अ.
[15] मतङ्ग० विद्या० ६. १०४
[16] मतङ्ग० विद्या० ६. ९० पू०.
[17] अन्यथा — अ.
[18] 'बन्धेभ्यः' इत्येतन्नास्ति — अ; मलेभ्यः — आ, ई, उ, ए, ऐ.
[19] एवं — ऐ.
[20] 'शक्तिमान्' इत्यत्र 'सशक्तिकः' इति दृश्यते ऊ, ऋ.
[21] ०शक्तिभ्यामभिव्यक्त० — ऊ, ऋ.
[22] इदमर्धं 'श्रीमद्रौरवेऽप्युक्तम्' इति निर्दिश्य ४९, ५० तमपृष्ठयोर्मृगेन्द्रवृत्तिदीपिकायामुदाहृतम्। परं तु मुद्रितरौरवे नोपलभ्यते।
[23] मतङ्ग० विद्या० २. १५. १६ पू० वृत्तौ।
[24] इतिशब्दो नास्ति — ऊ, ऋ.
[25] 'भट्ट' इत्येतन्नास्ति—अ, आ, ई, उ, ऊ, ए, ऐ.
[26] 'विद्यापादे' इत्येतन्नास्ति—अ, आ, ई, उ, ए, ऐ.
[27] 'पतिपदार्थविचारे' इत्येतन्नास्ति — ऊ, ऋ.

## सप्तमः पटलः

# विद्यातत्त्वप्रकरणम्

**अथ विद्याधिकारोऽयं न्या[1]यप्राप्तोऽत्र वर्ण्यते ।**

तदियता पतिपदार्थे प्रसङ्गतो विशिष्टविचारयुक्ते प्रतिपादिते [2]च, [3]अनन्तरं विद्यायाः [4]परापरायाः, यदुक्तं [5]श्रीमत्पौष्करे[6] —

"परा वागीश्वरी विद्या माया विद्यापरा स्मृता ।" इति ।

अधिक्रियते विचार्यतयानेन सा विद्येत्यधिकारः शक्त्याह्वयः[7] पदार्थः । [8]तत्त्वद्वय[9]संग्रहात्मत्वेन पूर्वमेव [10]शक्त्याह्वयस्य पदार्थस्योक्तत्वात्[11] । **अयं च न्यायप्राप्तः ।** यतः एष एव [12]प्राक्, [13]पतिपदार्थ[14]विचारानन्तरं "[15]विद्यामिदानीं शृणु विप्रमुख्य"[16]इत्युक्त्या वर्णयितुमुपक्रान्तोऽपि, "[17]तावद्विद्यावधार्यताम्[18]" इत्यन्तेन प्रश्नेन मतङ्गमुनिना पुंपाशेश्वरविचारान्तं [19]यावदवधारितो [20]विज्ञातः । अधुना [21]तु [22]तद्विचारे कृते पति[23]पदार्थानन्तरमेष [24]शक्त्याह्वयः पदार्थो वर्णयितुमुपक्रान्तत्वाद् [25]**वर्ण्यते** इति पदार्थसंबन्धः । सौत्रस्तु पदपङ्क्तिपदेन ज्ञेयः । वाक्यात्मकस्तु[26] —

"न केवलं महेशाना विद्याश्चामितविक्रमाः ।",

"विद्यातत्त्वविधौ वाच्यास्तासामेव विभूतयः ।"

इत्याद्यनेकविधः । पादगतः, पाटलिकश्च पतिपदार्थप्रकरणे एव सर्वेषां [27]दर्शितः[28] ॥

---

[1] ०प्राप्तोऽभिवर्ण्यते — ऊ, ऋ.

[2] वा — ई, उ.

[3] अनन्तविद्यायाः — अ.

[4] परम्परायाः — ए.

[5] श्रीपौष्करे — ऊ, ऋ.

[6] शतरत्नसंग्रहे २३ तमश्लोकव्याख्यायां 'तदुक्तं श्रीमत्पौष्करे' इति निर्दिश्यार्धमिदमुदाहृतम् । परं तु मुद्रितपौष्करे नोपलभ्यते ।

[7] शक्यः — अ; शक्त्याह्वः — ऊ, ऋ.

[8] तत्त्वद्वयं सं० — ऐ.

[9] ०संगृहीतात्मकत्वेन — अ; ०संग्रहकात्मत्वेन —आ, ई, ऊ, ए, ऐ; संग्रहात्मनो न — ऋ.

[10] शक्त्या एव यस्य — अ.

[11] मतङ्ग० विद्या० २. १५, १६ पू० वृत्तौ ।

[12] 'प्राक्' इति नास्ति — ऋ.

[13] प्रकृतिपदार्थ० — ऊ, ऋ.

[14] ०विचारादनन्तरं — ऊ, ऋ, ऐ.

[15] मतङ्ग० विद्या० ५. ७७ उ०.

[16] इत्युक्त्वा — अ, आ, ई, उ, ऊ, ऋ, ऐ.

[17] मतङ्ग० विद्या० ६. ३. पू०.

[18] विद्या विचार्यताम् — ऊ, ऋ; विद्यावधारितम् — ए.

[19] यावदवधीरितो — अ, आ, ई, उ, ऊ, ऋ, ए.

[20] अवज्ञातः—अ, आ, ई, उ, ऐ; जातः —ऊ, ऋ.

[21] तुशब्दो नास्ति — ए.

[22] तद्विचारकृते — आ.

[23] ०पदार्थादनन्तरमेव — ऊ, ऋ; पदार्थान्तरमेष — ऐ.

[24] शक्त्या यः पदार्थो — अ; शक्त्याह्वपदार्थो — ऊ, ऋ; शक्त्याह्वयपदार्थो — ऐ.

[25] वर्ण्यन्त इति — ऊ, ऋ, ऐ.

[26] मतङ्ग० विद्या० ५. १७ उ०, १८ उ०

[27] दर्शितम् — अ, आ, ई, उ, ए, ऐ

[28] तृतीयप्रकरणोपक्रमे दर्शितः ।

[1]एतत्संग्रहस्य [2]संगृह्यमाणद्वारेण वर्णयितुं शक्यत्वात् [3]शक्तचाह्वयपदार्थे पूर्वं परा विद्या [4]वर्ण्यते — 'तस्य' इत्यादि ।

**तस्य पत्युरमोघात्मा शक्तिव्यूहोऽतिरस्कृतः ॥१॥**
**प्रवृत्तः सर्वदिक्केन [5]माहात्म्येनातिसर्पिणा ।**
**तेनोपोद्वलिताः सर्वे शुद्धाध्वभुवनेश्वराः ॥२॥**
**रुद्राणवो महाभागा मन्त्राणां सप्तकोटयः ।**

**तस्य** इत्थं पति[6]पदार्थात्मना साधितस्य [7]परमेश्वरस्य ईशान्यादिकोऽयं शक्तिसमूहो विद्येश-शक्तिसमूहवन्नान्येनाधिष्ठितो नित्यव्यापकलक्षणेन च **माहात्म्येन** परोपकाराय **प्रवृत्तः** प्रागुक्तः[8]। **तेन** अभि[9]व्यक्तशक्तयः शुद्धविद्याभुवनेषु [10]ईश्वराः[11]। न त्वनन्तशक्तिसमूहेन। प्रोक्तं च श्री-मत्**किरणे**[12] —

[13]"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः।" इति।

ते च मायागर्भाधिकारिरुद्रवद् अणुः आत्मा येषां शिवाद्भिन्ना एव अणव इत्यर्थः। [14]न तु [15]ब्रह्माङ्गादिवच्छक्तिपक्षे वर्तन्ते। [16]रुद्रेभ्यश्च [17]विशेषो **महाभागाः** इति; [18]मायोर्ध्वमप्यधिकार-भागित्वात् । ये [19]चैते प्रोक्ताः, ते न विद्येशाः। तेषामतोऽप्यतिशयस्य प्रतिपादितत्वात्। यदुक्तम्[20] —

"तस्मिन्नेवेश्वरे तत्त्वे संस्थिताः परमेश्वराः।" इति।

अपि तु ता एता **मन्त्राणां सप्तकोटयः** इति॥

कथं तर्हि [21]एतेषां विद्यातत्त्व[22]त्वमुच्यते — 'विवेको यत्' इत्यादि।

**विवेको यत्सुशुद्धानां मन्त्राणां सर्वतोमुखः॥ ३॥**
**विवेकात्तत्स्वरूपेण विद्यातत्त्वमतः [23]स्मृतम् ।**

---

[1] तत्र संग्रहस्य — ऊ, ऋ.
[2] संग्रहीष्यमाण० — ऐ.
[3] शक्त्याह्वयः पदार्थो — आ; शक्त्याह्वातपदार्थात् — ऊ, ऋ.
[4] वक्ष्यते — ए.
[5] माहात्म्येनापिसर्पिणा — ऊ, ऋ.
[6] ०पदार्थात्मनः — ऊ, ऋ.
[7] परमेश्वरेशान्यादिको यः — ऊ, ऋ; परमेश्वरस्य शान्त्यादिकोऽयं — ए.
[8] मतङ्ग० विद्या० ३. १८, १९ वृत्तौ. ।
[9] ०व्यक्तिशक्तयः — ऐ.
[10] अधीशाः — ऐ.
[11] अत्र 'ते' इत्यधिकम् — अ.
[12] किरणे विद्या० ३. २७ उ०.
[13] शुद्धाध्वनि — ऋ.
[14] 'न तु' इत्यत्र 'ननु' इति दृश्यते—अ, ऊ, ऋ.
[15] ब्रह्मादिवच्छक्ति० — आ, ई, उ; अङ्ग।ब्रह्मादिवच्छक्ति० — ऊ; अङ्गब्रह्मादिवच्छक्ति० — ऋ; ब्रह्माङ्गवच्छक्ति० — ए; ब्रह्माङ्गादीव शक्ति० — ऐ.
[16] अत्र 'माया' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[17] विशेषमहाभागाः — ऐ.
[18] 'मायोर्ध्वं' इत्यारभ्य 'सप्तकोटय इति' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[19] चैनं — ऊ.
[20] मतङ्ग० विद्या० ५. ५. पू०.
[21] 'एतेषां' इत्यत्र 'एकं' इति दृश्यते — ऊ, ऋ; 'एषां' इति दृश्यते — ऐ
[22] ०त्वमित्युच्यते — ऊ, ऋ, ए.
[23] स्मृतः — ओ.

यद् यस्मात् तस्मिन् विद्यातत्त्वे स्थितानां [1]**मन्त्राणां विवेकः सर्वतोमुखः** सर्वज्ञत्वं भवति । **शुद्धानामिति** निवृत्ताशुद्धीनाम् । अतश्च समलानां विज्ञानां विज्ञानकेवलिनां सतां मन्त्राणामप्यधिकार इति सिद्धम् । [2]**अतो विवेकात्** समानाद्धेतोः तेन मन्त्रस्वरूपेण सह **तद् विद्यातत्त्वम्** [3]उच्यते । [4]तत्त्वदीक्षायां मन्त्रैः सह [5]एतत्तत्त्वं शोध्यमित्यर्थः ॥

अथ किमेता विद्येशेभ्यः प्राग्, अनन्तरं वा उत्पन्नाः । [6]**उच्यन्ते** — 'तस्मिन् याः' इत्यादि ।

**तस्मिन्याः [7]संस्थिता विद्याः [8]शिवसद्भावदायिकाः ॥४॥**
**[9]नियुक्तास्ता महाभागाः पाशविच्छित्ति[10]कारणम् ।**
**पशूनां [11]परमेशेन शुद्धसर्गादनन्तरम् ॥५॥**

**तस्मिन्** विद्यातत्त्वे [12]**याः** अवस्थिताः **विद्याः** मन्त्राणां सप्तकोटयः शिवकृताः [13]पाशनिवृत्त्यर्थं शिवत्वाभिव्यक्तये **च पशूनाम्** [14]उक्ताः [15]**ताः** विद्येशसृष्टेः **अनन्तरं नियुक्ताः** सृष्टा इत्यर्थः ॥४–५॥

'ततस्ताः' इत्यादि ।

**ततस्ताश्च[16] स्ववीर्येण सर्वदुष्कृत[17]हारिणा ।**
**आशु संस्पर्शनादेव सृष्टिं कमलजन्मनः ॥६॥**
**संहृत्योपरताः सर्वा विरक्ताश्चातिकिल्बिषात् ।**
**सर्गात्पैतामहाद्विप्र जन्ममृत्युभयावहात् ॥७॥**

ततः जन्मसमनन्तरम्, अत्यन्तपापाकुलामिमां पितामहकृतां पिण्डसृष्टि[18]मवलोक्य, एवं **विरक्ताः** — "नात्र अत्य[19]न्तोपहते सर्गे वयं [20]भोग[21]पालनात्मकमधिकारमीश्वरादिष्टमपि कर्तुं क्षमाः" इति [22]निरूप्य, [23]तथापि परमेश्वराज्ञावश्यकर्तव्येति **ताः** विद्याः **स्ववीर्येणैव** आचार्यान्तरप्रयोज्यतानपेक्षेण

---

[1] 'मन्त्राणां' इत्यारभ्य 'अधिकार इति सिद्धम्' इत्यन्तस्य स्थाने 'मन्त्राणां शुद्धानामपि विवेक इति सिद्धम्' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[2] ततः — अ, आ, ई, उ, ए, ऐ.
[3] इत्युच्यते — ए.
[4] तद्वद्दीक्षायां — ऐ.
[5] 'एतत्' इत्येतन्नास्ति — ऊ, ऋ.
[6] इत्युच्यते — अ, आ, ई, उ, ए, ऐ.
[7] संस्थितास्ताश्च शिव० — उ.
[8] ताश्च सद्भाव० मु० पाठान्तरम्; शैव्यस्तद्भाव० — ऊ, ऋ.
[9] वियुक्तास्तु — मु, उ, ओ.
[10] कारणात् — ऊ, ऋ.
[11] परमेशान० — ओ.
[12] या एता विद्याः — ऊ, ऋ.
[13] पाशविनि० — ऊ, ऋ.
[14] उक्तविद्येश० — ऐ.
[15] 'ताः' इति नास्ति — अ, आ, ई, उ, ऊ, ए.
[16] ततस्तास्तु — ऊ, ऋ.
[17] कारिणी — उ.
[18] ०मवलोक्यैव वि० — ऊ, ऋ, ऐ.
[19] ०न्तोपसंहते — ऊ, ऋ.
[20] अत्र 'कथं' इत्यधिकन् — ए.
[21] ०पालात्म० — ई, उ.
[22] निरूपितास्तथापि — अ, आ, ई, उ, ए.
[23] अत्र 'ताः' इत्यधिकम् — ऐ.

ब्रह्मसृष्टिमेतां स्थूलशरीर[1]संबद्धानणून् आश्विवति तत्कालमेव शक्तिपातेन [2]संस्पृष्टां संहृत्येति विमोच्य, अनन्तरं [3]तस्माद्व्यापाराद् उपरताः ॥६–७॥

'ततोऽधिकारम्' इत्यादि ।

ततोऽधिकारं निर्वर्त्य स्वभावेनैव ताः कलाः ।
प्रतिसंचरमापन्नास्तत्तेजः पारमेश्वरम् ॥८॥
[4]प्रवेष्टुमुद्यताः [5]सद्यः कारणेन [6]महात्मना ।
[7]वारिता विनियोगार्थमनन्तेन शिवेरणात् ॥९॥
ततस्ताः प्रष्टुमारब्धाः कारणं मन्त्रनायकम् ।
भगवन्य[8]स्त्वयास्मभ्यमधिकारोऽतिदुष्करः ॥१०॥
[9]प्राग्दत्तः स समस्तोऽयं सम्यङ्‌ निर्वर्तितोऽधुना ।
गच्छामः स्वोचितं स्थानं किमर्थं [10]विनिवार्यसे ॥११॥
ततोऽनन्तेन ताः [11]प्रोक्ता विद्या [12]वेद्यार्थदायिकाः ।
भवत्यः स्वोचितं स्थानं प्रयान्त्वर्धेन शोभनाः ॥१२॥
मत्प्रीत्या विनियोगार्थं धार्यतामेकवासरम् ।
ततः स्वाचारवर्तिन्यो भर्तुराज्ञानु[13]पालिकाः ॥१३॥
स्थितास्त्वर्धेन सेनाया [14]गताः शिष्टाः परस्परम् ।
[15]संप्रधार्य महावीर्या भर्तुः शासनतत्पराः ॥ १४॥

ततः ताः [16]मन्त्ररूपाः [17]कलाः विरक्ताः, [18]सद्यः तं[19]प्रागुक्त[20]मीश्वराज्ञानुरूपम् अधिकारं स्वशक्त्यैव [21]निर्वर्त्य, प्रति[22]संचरस्याधिकारं [23]प्रतिनिवृत्त्यात्मनो हेतुत्वात् प्रति[24]संचरं [25]परमेश्वराभ्यर्थनानुरूपं

---

[1] ०संबन्धानामणूनां तत्कालमेव — अ, आ, ई, उ, ए, ऐ.
[2] संसृष्टां — अ, ऐ; संस्पृष्ट्वा — आ; संसृष्टं — ऊ, ऋ.
[3] अस्माद्व्या० — ऐ.
[4] विवेष्टुमुद्य० — मु, उ.
[5] सत्यः — मु, उ, ओ.
[6] महात्मनाम् — ऊ, ऋ.
[7] धारिता — अ, आ, ई, उ, ए, ऐ.
[8] ०स्त्वया मह्यमधि० — मु, उ.
[9] प्रागुक्तः — मु, उ, ओ.
[10] विनिवारिताः — ऊ.
[11] प्रीत्या — मु, उ, ओ.
[12] वेदार्थदायिकाः — मु; विद्यार्थदायिकाः—उ. पाठान्तरम्
[13] ०पालिताः — ऊ; पाल्काः — ओ.
[14] गतास्त्विष्टाः — ऊ, ऋ.
[15] संप्रधाय — ऋ.
[16] मनुरूपाः — ऋ.
[17] अत्र 'विद्याः' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[18] सन्यस्तं — अ, आ, ई, उ, ए, ऐ; सत्यस्तं — ऋ.
[19] मतङ्ग० विद्या० ५. १७ उ०, १८ वृत्तौ ।
[20] ०मीश्वराज्ञारूप० — ऋ.
[21] निर्वर्त्याप्रति० — ऊ, ऋ.
[22] ०संचारस्याधि० — ए.
[23] प्रवृत्तिनिवृत्त्यात्मनो — ऊ, ऋ.
[24] ०संचारं — ए.
[25] परमेश्वरार्थना० — ऊ, ऋ.

[1]प्राप्ताः। यतस्तत्प्रसादं विना तासामपि [2]च परां मुक्तिं [3]प्रवेष्टुमसामर्थ्यमिति। तास्तथाभूताः **सत्यः** परमेश्वरचोदितेनानन्तेशेन[4] अधिकारार्थमेव [5]धृताः।

ततस्ताभिरनन्तेशः पृष्टः — "**भगवन्** अत्यन्तकुत्सितोऽपि [6]**अयम् अधिकारो**ऽस्माभिः पाशच्छेद-शिवत्वव्यक्त्यात्मकत्वेन [7]**समस्तः** एव ईश्वरादिष्टत्वात् कृतः। **अधुना** [8]मोक्षाधिष्ठानप्रवृत्ताः। तत् **किमर्थं** [9]वयं [10]**वारिताः**" इति।

ततोऽनन्तेशः प्रत्युवाच — "[11]भवतीषु मध्याद् याः [12]प्रकृष्टतर[13]मलपरिपाकयुक्तत्वात् **शोभनाः**, ताः परमेश्वराज्ञयैव मोक्षं यान्तु। यास्तु तद्विपरीतत्वाद् अधिकाराभिलाषिण्यस्ता महाप्रलयं यावत्तिष्ठन्तु" इति।

"सर्वभूतसुखप्रदो हि पतिः। स कथ[14]मस्मदादीन् अनभिमते विषये प्रवर्तयति [15]इत्युपश्रुत्य, **परस्परं** कस्याः कुत्र रतिरिति संमन्त्र्य, याः **स्वाचारवर्तिन्यः** अधिकारकामाः, ताः सप्तकोटिसंख्या-याः [16]**सेनायाः अर्धेन स्थिताः**। **गताः शिष्टाः इति** [17]अतोऽन्यार्धेन [18]या **महावीर्याः** परमुक्तिभाजः, ताः [19]**भर्तुः** [20]शासनपराः मुक्तिं गताः इति॥ ८—१४॥

'तासां भुवनविन्यासम्' इत्यादि।

> **तासां भुवनविन्यासं कृतवान्परमेश्वरः।**
> **नानारत्नविचित्राणि दिव्याचारगुणानि तु॥१५॥**
> [21]**भवनानां सहस्राणि मन्त्राणाममितौजसाम्।**

**तासाम्** [22]अधिकारार्थं स्थितानां विद्यानाम्, अशुद्धभोगपरिहारार्थमत्रैवाध्वनि विद्यातत्त्वे **भुवन-विन्यासं कृतवान् परमेश्वरः**। [23]प्रतिभुवनं च नानाशोभायुक्तानां **भवनानां** गृहाणां **सहस्राणि मन्त्राणां** तत्परिवारात्मनां सहस्राणि तद्वाचकाक्षररूपाणां कृतवान् परमेश्वरः॥

[24]अथ कियन्ति तत्र तासां भुवनानि भगवता निर्मितानीत्युच्यते — 'विद्यानामधिपः' इत्यादि।

---

[1] प्राप्तः — ऋ.
[2] न — ऊ, ऋ.
[3] प्रवेष्टुं सामर्थ्यं — ऊ, ऋ.
[4] ०नानन्तेन — अ, आ, ई, उ, ए, ऐ.
[5] वृताः — ऊ.
[6] 'अयम्' इत्येतन्नास्ति — ऐ.
[7] पशूनामेव—अ, आ, ई, उ, ए, ऐ; समस्तमेव—ऊ.
[8] मोक्षानुष्ठान० — अ. आ, ई, उ, ऊ, ऋ, ए.
[9] 'वयं' इत्येतन्नास्ति — ऊ, ऋ.
[10] धारिताः — अ, आ, ई, उ, ऋ, ए, ऐ.
[11] भगवतीषु — ऐ.
[12] तीव्रतर० — ऐ.
[13] ०मलपाक० — आ, ए.
[14] ०मस्मदादीनामनभि० — अ, आ, ई, उ, ए, ऐ.
[15] इतिशब्दो नास्ति — ऊ, ऋ.
[16] सेवनेन स्थिताः — ऊ, ऋ.
[17] अन्येनानेन या — ऊ; अनेनार्धेन या — ऋ.
[18] 'या' इत्यत्र 'माया' इति वर्तते — अ.
[19] भर्तृशासन० — ऐ.
[20] ०शासनपरां — अ, आ, ए, ऐ; ०शासनात्परां — ऊ, ऋ.
[21] 'भुवनानां' इति सर्वासु मातृकासु मुद्रित-पुस्तके च दृश्यते। वृत्त्यनुसारेण 'भवनानां' इति पाठः संपादितः।
[22] अधिकारार्थंस्थितानां — अ; अधिकारार्थं वृतानां—ऊ, ऋ; अधिकारार्थममृतानां—ए.
[23] 'प्रतिभुवनं' इत्यारभ्य 'परमेश्वरः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[24] आह — ऊ, ऋ.

**विद्यानामधिपः श्रीमान् यत्रासौ मन्त्रनायकः ॥१६॥**
**स्थितवान् स्वेन वीर्येण शिरश्चामित[1]तेजसा।**
**दिव्यं ब्रह्म[2]शिरो [3]नाम्ना रुद्राणी च यशस्विनी ॥१७॥**
**पुरुष्टुतश्च दीप्तात्मा रक्षाकर्मणि [4]पेशलः।**
**अस्त्र[5]मप्यतितेजस्कं यत्तत्पाशुपतं महत् ॥१८॥**
**छेदने भेदने दाहे रक्षणे च सुपेशलम्।**

प्रथमं तावद्विद्याङ्गानां[6] पञ्चानां सृष्टिक्रमेण पञ्चैव[7] भुवनानि। अत एवात्र विद्याङ्गानामणुपक्षस्यैव[8] मुख्यत्वाद् न[9] शिवाङ्गब्रह्मणामिव सकली[10]करणे प्रयोगः॥ [11]यद्वक्ष्यति क्रियापादे[12] —

"[13]भक्त्या संपूज्य यत्नात्तु ब्रह्माङ्गसहितं शिवम्।
वन्दनादीनि गायत्र्या स्नानकर्म च कारयेत्" ॥ इति।

[14]किंतु आसने एव। यद्वक्ष्यति तत्रैव [15]—

"विद्यातत्त्वमयीं तस्य कर्णिकां [16]तु विचिन्तयेत्।
[17]मन्त्राणि केसराणि स्युर्विद्यायां ये प्रतिष्ठिताः॥" इति।

संहितान्तरेषु [18]तु शिवाङ्ग[19]ब्रह्मवद्विद्याङ्गानामपि[20] [21]शिवतनुत्वमुक्तम्॥

'विद्या भानुमती' इत्यादि।

**विद्या भानुमती [22]नाम्ना भाभिरप्रतिमा तु सा ॥१९॥**
**ततोऽन्यापि महाभागा [23]रौद्री रौद्रेण कर्मणा।**

---

[1] ०तेजसः — मु, उ, ओ.
[2] ०शिखो — ओ.
[3] नाम — ऊ, ऋ.
[4] पाटलः — मु.
[5] ०मप्यथ तेजाढ्यं — मु, उ०; ०मप्यतितेजाढ्यं — ओ.
[6] तावत्कृतानां — मु.
[7] अत्र चशब्दोऽधिकः — ऋ.
[8] ०पक्ष एव — अ, आ, ई, उ.
[9] अत्र हिशब्दोऽधिकः — ऐ.
[10] ०करणप्रयोगः — अ, आ, ई, उ, ए, ऐ.
[11] 'यद्वक्ष्यति क्रियापादे' इत्यारभ्य 'किं तु आसने एव' इत्यन्तं नास्ति — ऊ, ऋ.
[12] मतङ्ग० क्रिया० अर्चनाप्रकरणे श्लो० ३१.
[13] स्मृत्वा संपूजयित्वा तु — टि. २१, १८६ मातृकापाठः; प्रीत्या संपूजयित्वा तु — टि. ६७८ मातृकापाठः; प्रीत्या तं पूजयित्वा तु — टि. ६७९ मातृकापाठः
[14] किं च — ए, ऐ.
[15] मतङ्ग० क्रिया० अर्चनाप्रकरणे श्लो. ४३ उ०, ४४ पू०.
[16] परिचिन्तयेत् — टि. २१, १८६, ६७८, ६७९ मातृकापाठः।
[17] मन्त्राश्च — टि. २१, १८६, ६७८, ६७९. मातृकापाठः।
[18] तुशब्दो नास्ति — ऊ, ऋ.
[19] ०ब्रह्मविद्याङ्गानामपि — आ, ई, उ, ए, ऐ.
[20] अत्र "सकलीकरणेन विनियुक्तत्वादेभ्योऽन्यत्वे न शाक्तत्वमिति। (सार्थत्वमिति —ऋ) यदुक्तं श्रीमत्पौष्करे—'ब्रह्मभिः सकलीकुर्याद्विद्याङ्गैः परतः शिवम्' (शिवः — ऋ) इत्यविरोधः॥" इत्यधिकम् — ऊ, ऋ.
[21] 'शिवतनुत्वमुक्तम्' इत्येतन्नास्ति — ऊ.
[22] नाम — मु, उ, ऊ.
[23] रौद्रा — ऊ, ऋ.

विश्वा च काली कापाली [1]विद्यान्यापि महोदया ॥२०॥
सुखोदयान्या विख्याता तथा वज्रीति कीर्तिता ।
अष्टावेता यशस्विन्यो विद्येशानां महात्मनाम् ॥२१॥
क्रीडनार्थं विलासिन्यः पशूनां [2]पाशमोचिकाः ।

[3]ततः अनन्तरम् अनन्तादि[4]विद्येश्वरराज्ञीनाम् अष्टौ क्रमेण भुवनानि ॥

'अघोरो घोर' इत्यादि ।

अघोरो घोरनामा च तथा घोरतरोऽपरः ॥२२॥
अघोरश्चातिघोरश्च [5]सुघोरश्चातिवीर्यवान् ।
महाघोरो विघोरश्च [6]रुद्रास्त्वेते महाबलाः ॥२३॥

ततोऽनन्तरमघोरादीनाम[7]ष्टानां विद्यारुद्राणामष्टौ [8]क्रमेण भुवनानि । एवमत्र एकविंशति-भुवनानि भुवनदीक्षायां शोध्यानि । तत्त्वदीक्षायां [9]त्वेकमेव विद्यातत्त्वमित्युक्तम्[10] ॥ २२–२३ ॥

अथ यदुक्तं भोग[11]तत्त्वनिरूपणायां बिन्दुस्वरूपोपसंहारे [12]"योनिः स्यादक्षराणाम्" इति । तद् बिन्दुकार्यस्य विद्या[13]तत्त्वस्याप्यक्षरयोनित्वाद् बोद्धव्यम् । न तु साक्षात्तस्येत्युच्यते — 'शिव-स्याङ्गानि' इति ।

शिवस्याङ्गानि [14]हान्तानि संनिकृष्टानि नित्यशः ।
ब्रह्माणी चैव नाथस्य यैर्निबद्धा तनुः शिवा ॥२४॥
तान्यत्रापररूपेण नियुक्तानि महात्मना ।
[15]ब्रह्माण्यङ्गानि यानि स्युस्तानि सादाख्यगोचरे ॥२५॥
तथाप्यनुग्रहार्थं तु तत्त्वे विद्याह्वये मुने ।
द्रष्टव्यान्यधिकारेण तेषां नामान्यमूनि तु ॥२६॥
सर्वात्मा हृदयं मुख्यं सुशिवाख्यं शिरः प्रभोः ।
ज्वालिनीति [16]शिखा ज्ञेया कवचं पिङ्गलं महत् ॥२७॥

---

[1] विद्या चान्यमहो० — ऊ; विद्या चान्या महो० — ऋ.
[2] पाशमोचकाः — ओ.
[3] 'ततः' इत्यारभ्य 'भुवनानि' इत्यन्तं नास्ति — ऊ.
[4] विद्येश्वराणामष्टौ — ऐ.
[5] दृग्घोरश्चाति० — ऊ, ऋ.
[6] रुद्रा ह्येते — ऊ, ऋ.
[7] 'अष्टानां' इत्येतन्नास्ति — ऋ.
[8] कनिष्ठेन — ऐ.
[9] 'त्वेकमेव' इत्यस्य स्थाने 'तत्त्वमेकमेव' इति दृश्यते — अ, आ, ई, उ; एकमेव — ए; त्वैकमेव — ऐ.
[10] 'इत्युक्तम्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ; मतङ्ग० विद्या० ७. ३. उ०, ४. पू० वृत्तौ ।
[11] ०तत्त्वे निरूपणायां — आ, ई, उ.
[12] मतङ्ग० विद्या० ३. ३५ पू०.
[13] ०तत्त्वस्याक्षर० — ऊ, ऋ; ०तत्त्वस्याप्य-परयोनि० — ऐ.
[14] सान्तानि — मु, उ, ऊ, ऋ.
[15] ब्राह्माण्यङ्गानि— उ.
[16] शिवो — ऊ, ऋ.

शिवास्त्रं [1]च [2]महादीप्तमग्निज्वालाकुलं [3]परम् ।
एते मन्त्राः समाख्याताः प्राधान्येन शिवात्मकाः ॥२८॥
[4]ईशानं [5]प्रथमं ब्रह्म [6]द्वितीयं पुरुषात्मकम् ।
तृतीयमप्यघोराख्यं [7]वामदेवं तुरीयकम् ॥२९॥
पञ्चमं [8]सद्य इत्युक्तं ब्रह्म सर्वार्थसाधकम् ।
प्राधान्येन स्थिता [9]ह्येते विद्या मन्त्राश्च सुव्रत ॥३०॥

शिवाङ्गब्रह्मणां शिव[10]मूर्तित्वे सति शक्तिरूपत्वेन उक्तत्वाद्[11] वस्तुतः सदाशिवपदे एव स्थितिः। अत्र तु विद्यातत्त्वात्मनि [12]अपररूपेण [13]अधिकारिणां जपादि[14]सिद्धये भगवतैव नियुक्तानि । ततोऽङ्गब्रह्माणि [15]वाचकान्युत्पादितानीति [16]विद्यातत्त्वमेव अक्षरयोनिरिति ॥२४—३०॥

एवं [17]व्योमव्याप्यादेरप्यक्षरजातस्येत्युच्यते —

एकाशीतिपदा देवी या सा शक्तिः शिवात्मिका ।
शान्तौ विनिर्गता पूर्वं स्थानं तस्यास्तदात्मकम् ॥३१॥
लये च शिवतत्त्वाख्यं [18]व्यक्तौ बिन्द्वात्मकं [19]परम् ।
[20]भोगः सदाशिवस्थाने ईश्वराख्ये च [21]शासनम् ॥३२॥
विद्यातत्त्वे[22]ऽधिकारोऽस्या [23]योनिर्ज्ञेया सदैव हि ।
[24]अस्यामेव स्थिता [25]मन्त्रा विद्याश्च विविधा मुने ॥३३॥
इयं तावन्महाशक्तिः शिवस्य परमात्मनः ।

---

[1] तु — ऊ, ऋ.
[2] महादीप्तमग्निं ज्वालातुरं — मु, उ; महातेजं ह्यग्निज्वालाकुलं — ऊ, ऋ.
[3] महत् — ऊ, ऋ.
[4] ईशानः — मु, ऊ, ऋ.
[5] परमं — ओ.
[6] ततस्तत्पुरुषा० — मु, उ, ओ.
[7] वामदेवात्मकं ततः — मु, ओ; वामदेवात्मकं महत् — ऊ, ऋ.
[8] सत्यमित्युक्तं — मु, उ.
[9] ह्येता — मु, उ, ओ.
[10] ०मूर्तिमत्वे — ए.
[11] मतङ्ग० विद्या० ३. ३५ वृत्तौ ।
[12] 'अपररूपेण' इत्यस्य स्थाने 'अपरेण' इति दृश्यते — ऊ.
[13] 'अधिकारिणां' इत्यारभ्य 'ततोऽङ्गब्रह्माणि' इत्यन्तं नास्ति — ऊ.
[14] ०सिद्धयो — अ, ऋ.
[15] 'वाचकानि' इत्यत्र 'तद्वाचकात्मानि' इति दृश्यते — ऊ.
[16] अविद्यातत्त्वमेव — ऋ.
[17] व्योमव्याप्यक्षर० — अ, आ, ई, उ, ए, ऐ; व्योमव्याप्यादेरव्याप्यादेरक्षर० — ऊ; व्योमव्याप्यादेरव्याप्यादेरप्यक्षर० — ऋ.
[18] व्यक्तं विद्याह्वयं पदम् — ऊ, ऋ.
[19] परः — ओ.
[20] भोग्यः सदाशिवे स्थाने — ऊ, ऋ.
[21] शासने — ऊ, ऋ, ओ.
[22] ०ऽधिकारः स्याद्योनि० — मु, उ.
[23] योनेर्ज्ञेयः — ऊ, ऋ.
[24] तस्यामेव — ऊ, ऋ.
[25] मन्त्रास्ता विद्या विविधा — ऊ, ऋ.

या व्योम[1]व्याप्याद्यक्षरसंहतिः सा परिग्रहवर्तिनी **शक्तिः**। शिवस्य [2]आत्मा शरीरम्, अभि-[3]व्यक्ति[4]स्थानत्वात्। आत्मनां भौवनशरीरवत्। [5]तत्राभिव्यक्तो भगवान् पुंसामर्थसाधको भवतीति। [6]तस्याश्च लयभोगाधिकारपदप्राप्तिहेतुत्वादत्र लयभोगाधिकारसंबन्ध उक्तः। न तु मन्त्राक्षराणामपि सयोनित्वान्मायीयानामक्षराणामिवाचेतनत्वेन [7]स्वाभाविको [8]लयभोगाधि[9]कार-संयोग इति। [10]तथा **विद्यातत्त्वे अधिकारो** जन्म [11]**अस्याः। योनिरिति** [12]योनित्वमस्या [13]व्योम-व्याप्याद्यक्षर[14]संहतेरेव सर्वमन्त्राणामुद्धारादिति वक्ष्यति क्रियापादे[15] — "प्राक् पदं [16]प्रणवस्तस्याः" इत्यादिना॥

एतच्छ्रुत्वा मतङ्गमुनिः —

**एवमुक्ते [17]ततोऽर्थेऽस्मिन् मतङ्गः पृष्टवान्मुनिः॥३४॥**
**तत्त्वधर्मेण विद्याख्यं विद्यानां संनिवेशतः।**
**प्रसिद्धं सर्वतन्त्रेषु विशेषेण निगद्यताम्॥३५॥**

एवं **तत्त्वधर्मेण** मन्त्राक्षराणां मन्त्राणां च भुवनानां [18]च [19]योनितया [20]**विद्याख्यं** तत्त्वं **विद्यानां** [21]**संनिवेशतः** भुवनधर्मेण [22]च [23]अत्रोक्तत्वात् **प्रसिद्धम्**; निश्चितमित्यर्थः। अधुना[24] [25]सर्वाणि च तानि तन्त्र्यन्ते अधिक्रियन्ते इति तन्त्राणि; [26]प्रागुक्तार्धहीनचतुष्कोटिसंख्यातानि[27] मन्त्रात्मकानि वस्तूनि, तेषु [28]**सर्वतन्त्रेषु विशेषेण** यथा स्थितं तद् [29]विद्याख्यं तत्त्वं तथा **निगद्यताम्** इति। न तु "प्रसिद्धं

---

[1] ०व्याप्यक्षरसहितपरिग्रह० — अ, आ, ई, उ, ए; व्याप्यक्षरपरिग्रह० — ऐ.
[2] आत्मशरीरम् — अ.
[3] व्यक्त० — अ, आ.
[4] ०स्थानत्वात्मनां शोभनशरीर० — ऊ, ऋ.
[5] तत्राप्यभिव्यक्तो — ई, उ, ए; तत्र ह्यभि-व्यक्ते — ऊ; तत्र ह्यभिव्यक्तो — ऋ; अत्राभिव्यक्तो — ऐ.
[6] तस्यां च — अ; अस्याश्च — ऊ, ऋ.
[7] तात्त्विको — ऊ, ऋ.
[8] 'लय' इति नास्ति — ऊ, ऋ.
[9] ०कारसंग इति — आ, ई, उ; ०कारयोग इति — ऊ, ऋ.
[10] ततथा — ए.
[11] यस्य योनिरिति — अ; स्याद्योनिरिति — आ, ऐ; अस्या योनेरिति — ऊ, ऋ; अर्थस्य योनिरिति — ए.
[12] योनित्वं तस्या — ऊ, ऋ.
[13] योनिव्याप्याक्षर० — ऊ; योनिव्याप्याद्य-क्षर० — ऋ.
[14] ०संहतेनेव — अ; ०संगतेरेव — आ; ०संहते-रिव — ऊ, ऋ.
[15] मतङ्ग० क्रिया० दीक्षापटले श्लो० ५८. पू०.
[16] प्रणवं तस्याः — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[17] तथार्थेऽस्मिन् — मु, उ.
[18] चशब्दो नास्ति — ऊ, ऋ.
[19] योनित्वतया — ऊ, ऋ.
[20] विद्याख्यतत्त्वं — अ, आ, ई, उ, ऊ, ए, ऐ.
[21] संनिवेशेन — ऐ.
[22] चशब्दो नास्ति — ऐ.
[23] 'अत्रोक्तत्वात्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[24] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[25] सर्वाण्येनानि — अ; सर्वाण्येतानि — आ, ई, उ, ए, ऐ.
[26] प्रागुक्तार्थचतुर्थकोटि० — ऊ, ऋ.
[27] अत्र 'मन्त्राः' इत्यधिकम् — ऐ.
[28] 'सर्वतन्त्रेषु' इत्यत्र 'सर्वेषु' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[29] विद्याख्यतत्त्वं — आ, ई, उ, ए, ऐ.

सर्वतन्त्रेषु[1]" इति [2]व्याख्येयम्; असंभवात्। न [3]हि पशुतन्त्रेषु एवमत्रोक्तं विद्यातत्त्वं [4]तत्त्वधर्मेण भुवनधर्मेण वा क्वचिदपि प्रसिद्धम्। सिद्धान्ततन्त्रेषु प्रसिद्धमपि[5] मतङ्गमुनेस्तेषु [6]ज्ञानाभावस्योक्तत्वाद[7]प्रसिद्धं चैवेति[8] ॥३४–३५॥

अत्र सिद्धान्तः — 'ततः प्रोवाच' इत्यादि।

**ततः प्रोवाच भगवांस्त्र्यम्बकः पार्वतीपतिः।**

**परमेश्वर उवाच —**

**विद्या वेदनशीलत्वात्सामान्येयम्"**

[9]विदन्ति अनया मन्त्राः सर्वमर्थजातं [10]मायात्मिकयेव मायागर्भाधिकारिण [11]इति **विद्या**। [12]ततश्च [13]मन्त्राणामपि [14]कार्य[15]करणयोगे हेतुः सा विद्या सामान्यरूपा[16] [17]सिद्धाप्येवम् **इयं** [18]विशेषेण प्रतिपत्तव्येत्यध्याहारः। न च [19]मन्त्रेश्वरादिभिर्व्यभिचारः। [20]तेषामपि [21]कार्यकरणादेरुक्तत्वादिति[22]॥

अत्र पराशङ्कापरिहारः — 'न जातुचित्' इत्यादि।

**"न जातुचित् ॥३६॥**

**[23]सामान्यापि प्रवक्तव्या वेद्यार्थप्रतिपादिका।**

**[24]शुद्धेऽध्वनि [25]विवेको यः साधकानां महात्मनाम् ॥३७॥**

**निर्विकल्पशिवत्वे [26]तु स धर्मस्तात्त्विको मतः।**

---

[1] अत्र अपिशब्दोऽधिकः — अ, आ, ई, उ, ए.

[2] व्याख्येयसंभवात् — अ, ऊ, ऋ.

[3] तु — अ.

[4] त्वधर्मेण — आ; तावद्धर्मेण — ए.

[5] अपिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.

[6] मतङ्ग० विद्या० १.५ वृत्तौ।

[7] ०सिद्धमेवेति — ऊ, ऋ.

[8] इतिशब्दो नास्ति — अ.

[9] वेद्यन्तेऽनया मन्त्राः — अ, आ, ई, उ, ए, ऐ.

[10] अमायात्मिके माया० — अ, ऋ; मायात्मिकेयं माया०—आ; मायात्मिके माया० —ए; मायात्मिक एव माया० — ऐ.

[11] इवेति — अ, आ, ई, उ, ए.

[12] तत्त्वमन्त्राणामपि — ए.

[13] मन्त्रा अपि — ऊ, ऋ.

[14] अत्र 'कारणयोगिनः समलत्वे सत्यधिकारित्वात् मायागर्भाधिकारिवदिति तेषां' इत्यधिकम् — ऊ, ऋ.

[15] ०कारणयोगे हेतुः — अ, आ, ई, उ, ए; ०कारणहेतुः — ऊ, ऋ; ०करणयोगहेतुः — ऐ.

[16] सामान्या — ऊ, ऋ.

[17] सिद्धोऽप्येवमियं — आ; सिद्धचाप्येवमियं —ई, उ.

[18] विशेषे प्रति० — अ.

[19] महेश्वरादिभिः — ए.

[20] 'तेषामपि' इत्यारभ्य 'पराशङ्कापरिहारः' इत्यन्तं नास्ति — ऊ, ऋ.

[21] कार्यकारणादेः — अ, ए, ऐ.

[22] मतङ्ग० विद्या० ४.५३.उ० वृत्तौ; ५.६उ०, ७ वृत्तौ च।

[23] सामान्यात्मापि वक्तव्या — ओ.

[24] शुद्धाध्वनि — ओ.

[25] विवेकोऽयं — ऊ, ऋ.

[26] निर्विकल्पः शिवत्वेऽपि — ऊ; निर्विकल्पशिवत्वेऽपि — ऋ.

[1]न चैतद्वक्तव्यं यथा [2]प्राग् मन्त्राक्षर[3]भुवनयोनित्वेनोक्ताया [4]विद्याया इय[5]मन्यैवेति। यात्र मन्त्राणां कार्यकरणादिजननद्वारेण वेद्यार्थदायिकेत्युक्ता। यतः **शुद्धेऽध्वनि** अवस्थिता ये, कार्यं साधयन्तीति साधकाः मन्त्राः तेषाम्, अभिव्यक्तदृक्क्रियात्मकत्वेऽपि **यो विवेकः** [6]मायागर्भाधिकारिणामिव सर्वज्ञत्वाद्यात्मकः [7]प्रागुक्तः [8]स कार्यकरणादिभि[9]रिव विद्यात्मकैर्वर्णभुवनैरपि [10]क्रियते इति, वर्णभुवनैः सहास्य [11]कार्यकरणादेरपि तेन [12]तत्त्वधर्मेण शुद्धविवे[13]कात्मनान्वितत्वादेकैव शुद्धविद्या कारणं सिद्धयति। न त्वन्येति॥

किं च — 'न केवलम्' इत्यादि।

**न केवलं तत्त्वधर्मो [14]मन्त्राणाममितौजसाम्॥३८॥**
**भुक्तिमुक्तिप्रदा [15]मन्त्रास्तर्पिताः सम्यगध्वरे।**
**जप्ताश्च विधिवद्विप्र कामभेदेन साधकैः॥३९॥**
**[16]ददत्यभिमतान्भोगान्नात्र कार्या विचारणा।**

**न केवलं मन्त्राणाम्** [17]एवायं विवे[18]कात्मकः **तत्त्वधर्मः** अक्षरभुवनशरीरजननेन[19] विद्याहेतुकः प्रागुक्तः[20]। यावत् तर्पणादिकर्मभिराराधितैर्मन्त्रैः **अत्र** विद्यात्मनि येभ्यः साधकेभ्यो भोगा दीयन्ते [21]तेषामपीति, **न कार्या विचारणा**। [22]अतश्च वास्तवादत्र [23]शरीर[24]भुवनादेर्दीक्षायां वास्तवान्येव[25] संयोजनादीनि कर्माणि। न तु कल्पितानीति सिद्धम्॥

अत्र मतङ्गमुनिः, भोगमोक्षप्रदत्वमुक्तं मन्त्राणामसंभावयन् विद्या[26]तत्त्वहेतूनां [27]प्रागुक्तानामाश्र[28]यासिद्धत्वमिति मीमांसकच्छायया चोदयति — 'मन्त्रो नाम' इत्यादि।

---

[1] नैव चैतद्वक्तव्यं — ऊ, ॠ.
[2] मतङ्ग० विद्या० ७. ३ उ०–२३ वृत्तौ।
[3] भुवनत्वेनोक्ताया — ऊ, ॠ.
[4] विद्या इयम् — अ.
[5] ०मन्यैव या मन्त्राणां — ऊ, ॠ; ०मन्यथेति यात्र — ए.
[6] मायादिकारिणामिव — ऊ, ॠ.
[7] मतङ्ग० विद्या० ७. ३.उ०, ४ पू० वृत्तौ; प्रागुक्तसर्वकार्य० — ऐ.
[8] सर्वकार्य० — अ, आ, ई, उ.
[9] ०रिवाविद्या० — अ, ॠ
[10] क्रियन्ते — आ, ई, उ.
[11] कार्यकारणादेरपि — अ, आ, ऊ, ॠ, ए.
[12] ततत्त्व० — ऊ, ॠ.
[13] ०कात्मना अद्वैतत्वा० — अ; ०कात्मना अद्वितत्वा० — आ, ई, उ, ऐ; ०कात्मना अर्चितत्वा० — ए.
[14] विद्यानाममितौ० — ऊ, ॠ.
[15] मन्त्रास्त्वर्चिताः — मु, उ, ओ.
[16] ददात्यभि० — मु, उ.
[17] एवेयं — अ.
[18] ०कात्मकतत्त्व० — अ.
[19] ०जनने — ऊ, ॠ.
[20] मतङ्ग० विद्या० ७. २४–३०.
[21] अत्र नशब्दोऽधिकः — अ, ई, उ.
[22] ततश्च — ऊ, ॠ.
[23] भुवनशरीरादेर्दीक्षायां — ए.
[24] ०भुवनादिदीक्षायां — ऊ; भुवनादिदीक्षया ॠ; भुवनादेर्दीक्षया — ऐ.
[25] अत्र 'अत्र' इत्येतदधिकम् — ऊ, ॠ.
[26] ०तत्त्वे हेतूनां — अ, आ, ई, उ, ए, ऐ.
[27] मतङ्ग० विद्या० ७. ३उ० — ५, २४–३४ पू०, ३६–४० पू० वृत्तौ।
[28] ०यासिद्धत्वादिति — ए; ०यासिद्धेनेति — ऐ.

**मतङ्ग उवाच —**

> **मन्त्रो [1]नाम जगन्नाथ वर्णानां रचना [2]स्फुटा ॥४०॥**
> **स च शब्द इति ख्यातो [3]विषयोऽम्बरकारणम् ।**
> **इन्द्रियं च [4]तमेवाहुर्मुनयः शास्त्रवित्तमाः ॥४१॥**
> **तेन यः साध्यते मोक्षः स मोक्षः कीदृशो भवेत् ।**

यदि हि शब्दव्यतिरिक्ताः आत्म[5]विशेषाः [6]एव मन्त्राः स्युः, परिदृश्यमानाक्षरव्यतिरिक्तानि [7]च [8]मन्त्राकाराण्यक्षराणि । ततश्च[9] [10]तच्छरीरभुवनानां तद्वर्णानां च या योनिस्तद् विद्यातत्त्वं सिद्धं स्यात् । यावता शब्द एव मन्त्रः सिद्धः । स च आकाशवायुप्रभवः । यदाहुः[11] —

> "आकाशवायुप्रभवः शरीरात् समुच्चरन्वक्त्रमुपैति नादः ।
> स्थानान्तरेषु प्रविभज्यमानो [12]वर्णत्वमागच्छति यः स शब्दः ।" इति ।

[13]ततो[14]ऽनुभूय[15]माननादविशिष्टादस्माच्छब्दात् कुतो भोग[16]मोक्षप्रदत्वसिद्धिः ॥

[17]तत्रोत्तरम् — 'वाच्यवाचकभेदोऽयम्' इत्यादि ।

**परमेश्वर उवाच —**

> **वाच्यवाचकभेदोऽयं सुप्रसिद्धो महामुने ॥४२॥**
> **मोक्षार्थं [18]सुनियुक्तानां वाच्यानां कारणेच्छया ।**
> **नियुक्ता वाचकत्वेन वर्णाः शास्त्रे शिवोदये ॥४३॥**

श्रुतौ —[19] "रौद्रं चरुं निर्वपेत् प्रजाकामः", "[20]विष्णुरुपांशु यष्टव्यः", "[21]ब्रह्मणे ब्राह्मण[22]-मालभते । इत्यादि[23]नानाविधविभक्त्यन्वयदर्शनान्न शब्दो मन्त्रः । अपि तु [24]तद्वाच्योऽन्य एव । शब्दस्तु तद्वाचकत्वान्मन्त्र इति प्रसिद्धो यथा सामान्यशास्त्रेषु, [25]तद्वदिहापि

---

[1] नाथ — ओ.
[2] स्फुटम् — मु, उ; स्फुटः — ऊ, ओ.
[3] विषयो बन्धकारणम् — मु, उ, ऊ, ऋ.
[4] तदेत्याहु० — ऊ, ऋ.
[5] विशेषः — अ.
[6] 'एव मन्त्राः स्युः' इत्येतन्नास्ति — अ.
[7] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] मन्त्राण्यक्षराणि — ऊ; मन्त्राक्षराणि — ऋ; मन्त्राकाराक्षराणि — ए.
[9] चशब्दो नास्ति — ऊ, ऋ.
[10] तद्धर्मशरीर० — ऐ.
[11] आकरो न लभ्यते ।
[12] वक्तृत्व० — ए.
[13] अतो — आ, ई, उ, ए, ऐ.
[14] रूपसाध्यविशिष्टा० — ऊ, ऋ.
[15] ०मानादविशिष्टात्तस्मा० — अ, आ, ई, उ, ऐ.
[16] ०मोक्षदत्वसिद्धिः — अ, आ, ई, उ, ऋ, ए; ०मोक्षफलसिद्धिः — ऊ.
[17] अत्रोत्तरम् — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[18] संनियुक्तानां — ऊ, ऋ.
[19] तैत्तिरीयसंहिता २. २. १०. ३.
[20] मीमांसासूत्रे (१०. ८. ६३.) शाबरभाष्ये उदाहृतम् ; 'विष्णुः' इत्यारभ्य 'इत्यादि' इत्यन्तं नास्ति — ए.
[21] तै० ब्राह्मणे ३. ४. १.
[22] ०मालभेत — अ, आ, ई, उ, ऊ, ऋ, ऐ.
[23] ०नानाविभक्त्यन्वय० — अ, आ, ई, उ, ए; ०नानाविभक्त्यन्तत्वदर्शनात् — ऐ.
[24] तद्वाच्य एव शब्दस्तु — ऊ, ऋ; तद्वाच्योऽन्यशब्दस्तु — ऐ.
[25] तद्वदितीहापि — आ, ई, उ, ए; एवमिहापि — ऊ, ऋ; अयमिहापि — ऐ.

**वाच्यानां** मन्त्राणां ये **वर्णाः** [1]वाचकाः कारणेन **नियुक्ताः**, तेऽपि मन्त्रा उच्यन्ते । ततश्च [2]वाच्यानां दृक्क्रिययोरतिशयसिद्धेर्मुक्तिमुक्ति[3]प्रदत्वसिद्धिः । अत एव च तेषां शरीर[4]भुवनादिना भवितव्यमिति, तस्य योनिर्विद्यातत्त्वम् । [5]"शुद्धेऽध्वनि शिवः कर्ता" इत्युक्तत्वात्, परमेश्वरकृतानां[6] वर्णानां [7]न [8]मिथ्यातेति नाश्रयासिद्धत्वदोषः ॥४२–४३॥

यद्येवमीश्वरकृता वर्णाः, कथमेभ्यो भेदेन अस्मदादिभिर्नोप[9]लभ्यन्ते इति । [10]अत्रोच्यते — 'अस्वतन्त्रम्' इत्यादि ।

**अस्वतन्त्रं जगद्यस्मात् स्वतन्त्रः परमेश्वरः ।**
**[11]तदीरिताः साधकानां [12]विद्याः संनिहिता गिरि ॥४४॥**

सर्वशक्तित्वेन प्रागीश्वरसिद्धौ[13] भगवतः प्रोक्तत्वात्, परमेश्वरकृता एव **साधकानां** शब्द[14]रूपाः [15]अर्थात्मिकाश्च [16]**विद्याः संनिहिताः गिरि** वाचीति । एतदुक्तं भवति — एतेष्वङ्गार[17]स्थानेषु यतोऽग्निकल्पास्ते वर्णाः [18]संनिहिताः, ततो भेदेन नोप[19]लभ्यन्ते । यतश्च [20]अर्थरूपाः अपि विद्याः, ईश्वरचोदिताः एव गिरि [21]वर्णात्मके संनिहिताः [22]शरीरे इवात्मानः । ततः साधकानामुच्चारणमात्रेणैव भोगमोक्षदा भवन्तीति । ॥४४॥

यस्त्वाह[23] —

[24]षण्मूलां षडधिष्ठानां षड्रन्ध्रां च षडत्ययाम् ।

---

[1] 'वाचकाः' इत्येतन्नास्ति — ऊ, ऋ.
[2] व्याप्यानां — ई, उ.
[3] ०प्रदायकः स एव च — अ.
[4] ०भुवनादि भवि० — ई, उ.
[5] किरणे विद्या० ३. २७ उ० .
[6] अत्र चशब्दोऽधिकः — ऊ, ऋ .
[7] 'न मिथ्यातेति' इत्यत्र 'सिद्धीति' इति दृश्यते ऊ, ऋ.
[8] मिथ्यतेति — ए.
[9] ०लक्ष्यन्ते — ए.
[10] तत्रोच्यते — ऊ, ऋ.
[11] तदीरिता — मु, उ.
[12] नित्यं संनिहिता — मु, उ, ओ.
[13] मतङ्ग० विद्या० ३. १० उ० –१६ पू०; ६. ९२–९५, ९९—१०२ पू० वृत्तौ ।
[14] 'रूपाः' इत्यत्र 'रूपाणां' इति दृश्यते — अ.
[15] अर्थात्मकश्च — अ; अर्थात्मिकाश्च — ऋ.
[16] 'विद्याः' इत्यत्र 'नित्यं' इति दृश्यते — अ, आ, ई, उ, ऋ, ए, ऐ.
[17] स्थानीयेषु — ऊ, ऋ.
[18] सहिता — ऐ.
[19] ०लभन्ते — ऊ; लभ्यते — ऐ.
[20] आत्मरूपाः — ए.
[21] वर्णात्मनि — ऊ, ऋ.
[22] शरीररूपात्मनः — अ, आ; शरीररूपात्मानः ई, उ, ए, ऐ.
[23] वाक्यपदीये १. ११८ तमश्लोकटीकायामेतत्सदृशः श्लोक उपलभ्यते — "षड्द्वारां षडधिष्ठानां षट्प्रबोधां षडव्ययाम् । ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते" इति ।
[24] 'षण्मूलां' इत्यारभ्य 'जडामतिवर्तन्ते' इत्यन्तं ऊ, ऋ. कोशयोरधस्तनरीत्या पाठ उपलभ्यते स यथामातृकमत्र लिख्यते — 'षट्प्रकाराणि षट्स्वनां षडधिष्ठानां षट्प्रभावविकाराः ।

ते [1]जडामतिवर्तन्ते ये वै[2] वाचमुपासते ॥"

इत्यादिश्रुतेः, वागेव [3]स्वतन्त्रत्वान्मन्त्रः[4] । [5]तत्किमीश्वराधिष्ठानेनेति । [6]तत्रोच्यते — 'इन्द्रियाणाम्' इत्यादि ।

**इन्द्रियाणामचैतन्याद्वर्णाना[7]मप्यमूर्तता ।**
**मनोश्च परतन्त्रत्वात्साधक[8]स्यापि शासने ॥४५॥**
**शक्त्यावेशात्ततः [9]सिद्धो [10]मन्त्राणां वाचि संनिधिः ।**

वाक्शब्देनात्र[11] यदि वागिन्द्रियमेव विवक्षितं [12]तदचेतनमिति वक्ष्यामः[13]। अथ तदुत्पाद्या वर्णाः, तेऽप्यविद्यमानमूर्तयः, उच्चारित[14]प्रध्वंसितत्वेन सिद्धेः। [15]अथ [16]तदधिष्ठात्री देवता, सापि यदि सर्वज्ञत्वादिधर्मिणी[17] [18]तदास्मत्पक्ष एव। अथ ततोऽन्या [19]साप्यस्वतन्त्रत्वान्न[20] [21]मन्त्रः। अथ स्थूलशब्दहेतुरात्मन एवावस्थाविशेषः [22]कश्चिद् वागित्युच्यते। यदाहुः[23] —

"[24]अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ।
[25]स्वरूपज्योतिरेवान्तः [26]सूक्ष्मा वागनपायिनी ॥
तस्यां दृष्टस्व[27]रूपायामधिकारो निवर्तते ।
पुरुषे षोडशकले तामाहुरमृतां कलाम् ॥" इति ।

---

तानत्येत्यतिक्रामति, तेन व्ययावा *स्वभाववरणाभ्यासयोगा संयोगा दृष्टोपपादिका। पट्प्रतिविदुरिति। षट्प्रतिभालक्षणाः प्रवोधाः यस्याः सेति। मनष्षष्ठानीन्द्रियाणि षट्प्रविशिष्टे परता चेति प्रतिभा षड्विधा, षडव्ययात् ते स्मभ्युमतिवर्तन्ते' इति ।

*'स्वभाववरणाभ्यासयोगा' इत्यारभ्य 'षट्प्रतिविदुः' इत्यस्य ग्रन्थस्य सदृशत्वेन वाक्य पदीयश्लोको लभ्यते — "स्वभाववरणाभ्यासयोगाद् दृष्टोपपादिताम् । विशिष्टोपगतां चेति प्रतिभां षड्विधां विदुः" ॥ इति । वाक्यपदीये — २. १५२.

[1] जडमति० — आ; जडुमति० — ई, उ; कृत्यमति० — ऐ.

[2] च — अ, आ, ई, उ, ऋ, ए; चैव — ऐ.

[3] स्वातन्त्र्यत्वा० — आ.

[4] मन्त्राः — ए; मन्त्रस्य — ऐ.

[5] 'तत्' इति नास्ति — ए.

[6] अत्रोच्यते — ऐ.

[7] ०मप्यमूर्तितः — ऊ, ऋ.

[8] ०स्याप्यशासने — मु, उ०.

[9] सिद्धा — मु, उ, ओ.

[10] वाचि साम्निध्यता मनोः — मु, उ, ओ.

[11] 'अत्र' इति नास्ति — अ, आ, ई, उ, ए, ऐ.

[12] 'तदचेतनमिति' इत्यारभ्य 'सिद्धेः' इत्यन्तं नास्ति — अ, आ, ई, उ, ऋ, ए, ऐ.

[13] मतङ्ग० विद्या० १८. ९६ उ०, ९७ वृत्तौ इन्द्रियाणामचेतनत्वसूचनोपलभ्यते ।

[14] प्रध्वंसितेन न सिद्धेः — ऊ.

[15] तदा — अ, आ, ई, उ, ए, ऐ.

[16] 'तद्' इति नास्ति — ए.

[17] अत्र इतिशब्दोऽधिकः — ए.

[18] तदा तदस्मत्पक्ष — ऋ; तदस्मत्पक्ष — ऐ.

[19] सास्वतन्त्र० — अ, आ, ई, उ, ए, ऐ.

[20] नकारो नास्ति — ए, ऐ.

[21] मन्त्राः — आ, ई, उ.

[22] काचिद् — अ, आ, ई, उ, ऊ, ए.

[23] वाक्यपदीये १. १४४ टीकायामिमौ श्लोकौ दृश्येते; रत्नत्रये पृ० ३१, ६२

[24] अविभागा तु — ऐ.

[25] स्वरूपं ज्योति० — ऊ, ऋ.

[26] सैषा — वाक्यपदीयटीकापाठः ।

[27] ०स्वभावायामधि० — ऊ, ऋ.

यद्येवं साधकात्मनोऽपि परतन्त्रत्वेनोक्तत्वात्[1] [2]साप्यस्वतन्त्रैवेति न मन्त्रः। तस्मात् परमेश्वरशक्तिसमावेशादेव [3]**सिद्धो मन्त्राणां** [4]**वाचि संनिधि**रित्यदोषः। यदाहुः[5] —

"इत्थं कृतगरुडतनुर्यत्कथयेत्तदेव मन्त्रपदम्।" इति।

शुष्कतार्किका अपि[6] —

"येऽपि तन्त्रविदः केचिन्मन्त्रान्कांश्चन कुर्वते।
[7]प्रभुप्रभावतस्तेषां [8]तदुक्ता न्याय[9]सिद्धयः॥" इति॥

अत्र [10]मतङ्गमुनिः — 'वाच्यस्य' इत्यादि।

**मतङ्ग उवाच —**

**वाच्यस्य वस्तुनो यस्माद्वाचि सान्निध्यता भवेत्॥४६॥**
**खड्गोच्चारेण जिह्वायाश्छेदः केन निवार्यते।**

[11]**वाच्यस्य वस्तुनो वाचि** सान्निध्यं यदि तद्भवेत्। ततः सान्निध्यस्याविशेषात् क्षुरमोदक [12]शब्दोच्चारणेन मुखस्य पाटनपूरणे स्याताम्। [13]तस्य तद्वाच्यत्वाविशेषात्। न वाचि संनिधिर्मन्त्रत्वम्। अपि तु [14]शब्दविशेष एव कश्चिदिति॥

अत्र सिद्धान्तः — 'यस्य यत्र' इत्यादि।

**परमेश्वर उवाच —**

**यस्य यत्राधिकारोऽस्ति [15]चेतनस्य महामुने॥४७॥**
**लोकेऽपि यो [16]यदायत्तो [17]वाङ्मात्रेण स तत्र वै।**
**आशु [18]सान्निध्यतामेति निश्चितेयं [19]मतिर्मम॥४८॥**

[20]**यस्य** यत्रैव नियोगः पारमेशश्चिदात्मनो मन्त्रस्य, [21]स तत्रैव संनिहितो भवति[22]। नान्यत्रा-

---

[1] मतङ्ग० विद्या० २. १७ उ०, १८ पू०. वृत्तौ।
[2] सोऽप्यस्वतन्त्र एवेति — अ, आ, ई, उ, ऋ, ए, ऐ.
[3] सिद्धौ — ऊ; सिद्धे — ऐ.
[4] वादिसंनिधि० — ऊ; वापि संनिधि० — ऐ.
[5] आकरो न लभ्यते।
[6] आकरो न लभ्यते।
[7] न तु प्रभाव० — ऊ, ॠ.
[8] तदुक्तन्याय० — आ, ए; तदुक्तं न्याय० — ई, उ, ऊ, ॠ, ऐ.
[9] सिद्धये — आ, ई, उ, ए, ऐ; सिद्धितः — ऊ, ॠ.
[10] 'मतङ्गमुनिः' इत्यारभ्य 'सांनिध्यं' इत्यन्तं नास्ति — ऊ, ॠ.
[11] वाच्यस्यास्य — ऐ.
[12] शब्दोच्चारणे मुखस्य — अ; शब्दोच्चारेण मुखस्य — ऊ, ॠ.
[13] तस्माद्वाच्यत्वविशेषात् न वाच्यसंनिधिः — ऊ, ॠ.
[14] शब्दाविशेष एव — आ.
[15] चैतन्यस्य — ऊ, ॠ.
[16] यदा दत्तो — ओ.
[17] यन्मात्रेण — मु, उ, ओ.
[18] सांनिध्यमायाति — ऊ, ॠ.
[19] मतिस्सदा — मु, उ, ॠ; मुनिस्सदा — ऊ,.
[20] 'यस्य' इति नास्ति — अ, ए, ऐ.
[21] 'स' इति नास्ति — अ, ए, ऐ.
[22] अत्र इतिशब्दोऽधिकः — आ, ई, उ.

न्येषाम्[1]। यथा लोके विशिष्टादेव शब्दाद्विशिष्ट एव नियोज्यो नियोक्तुः संनिहितो भवतीति, कुतो [2]वाच्यत्वाविशेषान्मन्त्रेभ्योऽन्येषां क्षुरमोदकादिशब्दानामपि प्रसङ्गः ॥४७–४८॥

यत्तूक्तं शब्दविशेष एव कश्चिन्मन्त्र इति। तदयुक्तम्। यतः — 'वागिन्द्रिये' इत्यादि।

**वागिन्द्रिये[3]ऽधिकारोऽस्मिन्वर्णानां दृश्यते यतः।**

[4]'मन्त्रस्वरूपेण[5] तावच्छब्दानां शब्दान्तरेभ्यो विशेषो न दृश्यत एव। [6]कारणे तु **वागिन्द्रिये वर्णानाम्** उत्पत्तावेव **अधिकारः दृश्यते**। सा च सर्वेषामविशिष्टेति, न ततोऽपि विशेषः॥

अथोच्यते [7]शक्त्या विशेषो [8]मण्यादीनामिव। यदाहुः[9] — "[10]अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः।" इति। तदप्ययुक्तम्। यतः — 'वर्णोपोद्बलिनी' इत्यादि।

**वर्णोपोद्बलिनी शक्तिः शक्त्याधाराश्च देवताः ॥४९॥**
**तस्मात्सं[11]निहिताश्चापि समाधानबलान्विताः।**
**[12]यत्र यत्र नियुज्यन्ते तत्र तत्र फलप्रदाः ॥५०॥**

युक्तो मण्यादीनां [13]शक्तिभेदे [14]हेतुः, स्वरूपभेदात्। वर्णानां तु [15]तदभेदस्योक्तत्वात् केषांचिदेव [16]पुरुषश्रेयोऽभिव्यञ्जिका **शक्तिः**, नान्येषामिति, न निमित्तान्तरं तदधिष्ठानं [17]विनावतिष्ठते इति, शक्तेराधारभूताः **देवताः** एव [18]सिद्ध्यन्ति। यस्मात् स एव शब्दो लेखकाद्यसमाहितपुरुषप्रयुक्तोऽफल एव। समाहितप्रयुक्तस्तु सफलो दृश्यते। ततो न मण्यादीनामिव तस्याधिष्ठानं विना शक्तिसिद्धिरिति ॥४९–५०॥

[19]यदि त्वेतन्नाभ्युपगम्यते। तदा — 'बाह्येष्वपि' इत्यादि।

**बाह्येष्वपि [20]हि लक्ष्येषु गन्धधूपस्रगादिभिः।**
**आराध्यमाना विधिवद्यथेप्सितफलप्रदाः ॥५१॥**

---

[1] 'अन्येषाम्' इति नास्ति — अ, आ, ई, उ, ए, ऐ; अन्यो वा — ऊ.
[2] वाचकत्वविशेषाद् — ऊ, ऋ.
[3] ०ऽधिकारः स्याद्वर्णानां — ऊ, ऋ.
[4] अत्र 'विना' इत्यधिकम् — ऐ.
[5] तत्र स्वरूपेण — ऊ, ऋ; तन्त्रस्वरूपेण — ऐ.
[6] करणे तु — ऐ.
[7] शक्त्यादिविशेषो — ऐ.
[8] मण्यादीनामपि — ऊ, ऋ.
[9] रत्नावल्यां द्वितीयेऽङ्के राजवाक्यम्. पृष्ठम् — ३९.
[10] अविचिन्त्यो — ऊ, ऋ.
[11] ०निहिता वाचि — उ, ओ; ०निहिता वापि — ऊ, ऋ.
[12] 'यत्र' इत्यारभ्य 'स्वरूपभेदात्' इत्यन्तं नास्ति — ऊ, ऋ.
[13] शक्तिभेदो — अ, आ, ई, उ, ए.
[14] हेतुस्वरूप० — आ, ई, उ, ए, ऐ.
[15] तदा भेद० — ऊ, ऋ.
[16] पुरुषाश्रयोऽभिव्यञ्जिका — ऊ, ऋ; पुरुषाश्रयाभिव्यञ्जिका — ऐ.
[17] 'विनावतिष्ठते' इत्यारभ्य 'तस्याधिष्ठानं' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[18] सिद्ध्यति — ऊ.
[19] यदित्येतन्नाभ्युप० — अ.
[20] च — ओ.

[1]रूपरसादिष्वपि प्रतिमाद्याकार[2]निविष्टेषु अचेतनत्वात् [3]चिद्वाह्येषु [4]सर्वेष्वाराधितेषु फलदर्शनान्मन्त्रत्वप्रसङ्गः। [5]अथ तत्र देवताधिष्ठानात् फलमित्युच्यते। तदितरत्रापि समानमिति [6]न शब्दविशेषस्य [7]मन्त्रत्वसिद्धिः ॥५१॥

किं च — 'नित्यम्' इत्यादि।

**नित्यं [8]शब्दात्मका मन्त्रा विलयोत्पत्तिधर्मिणः।**
**ईश्वराधिष्ठिताः सन्तो न च स्वेच्छाविधायिनः ॥५२॥**

शब्दानां सदैवानित्यत्वेन पुरुष[9]कर्तृकत्वसिद्धेः स्वातन्त्र्याभावान्न मन्त्रत्वं प्रतिमादीनामिव। अपि तु ईश्वराधि[10]ष्ठानादेवेति ॥५२॥

अत [11]एवात्र जैमिनीय[12]च्छाययाक्षेपपरिहारः — 'येषाम्' इत्यादि।

**येषां स्वभावतः सिद्धो नित्यः शब्दोऽप्रयत्नतः।**
**कर्तृत्वे नेश्वरः सिद्धो युक्तिस्तेषां न युज्यते ॥५३॥**

[13]**येषां** तु वादिनां नित्यत्वादक्षराणां न [14]योनिर्विद्यातत्त्वं सिद्धं, नापि [15]तत्कर्तृत्वनिमित्तम् **ईश्वरः सिद्धः** इति [16]प्रतिज्ञातार्थः। "**युक्तिस्तेषां न युज्यते**" अनुमाननिरा[17]कृतत्वादस्य पक्षस्य[18] ॥५३॥

तथा हि — 'यस्माद्' इत्यादि।

**यस्मादचेतनः शब्दस्ताल्वोष्ठ[19]पुटयोगतः।**
**व्यज्यते नान्यथा कर्तुरभावान्मुनिसत्तम ॥५४॥**

[20]**शब्दो** हि, **अचेतनो**ऽभिव्यज्यते। कारणान्वय[21]व्यतिरेकानुविधायी च[22] दृश्यते। तस्मात्

---

[1] अत्र 'रस' इत्यधिकम् — ऊ, ऋ.
[2] ०निविष्टेऽस्तु चेतनत्वात् — ऊ; ०विशिष्टेऽस्तु चेतनत्वात् — ऋ; ०निविष्टेऽप्यचेतनत्वात् —ऐ.
[3] क्वचिद्वाह्येषु — ऐ.
[4] सर्वेष्वेवाराधितेष्वफल० — अ; सर्वेष्वेवाराधितेषु — आ, ई, उ, ऋ, ऐ; शब्दे वाराधितेषु — ऊ.
[5] कथं — ए.
[6] नकारो नास्ति — ई, उ.
[7] तन्त्रत्व० — ऐ.
[8] शब्दात्मिका — ऊ, ऋ.
[9] कर्तृत्वसिद्धेः — अ; कर्तृत्वसिद्धे — आ, ई, उ; कर्तृत्वे सिद्धे — ऐ.
[10] ०ष्ठानमेवेति — अ, आ, ई, उ, ए, ऐ.
[11] एव चात्र — आ, ई, उ.
[12] ०च्छायाक्षेप० — ऊ, ऋ.
[13] ये तु — ऊ, ऋ.
[14] योनिरविद्या० — ऐ.
[15] तत्कर्तृत्वान्निमित्तम् — अ, आ, ई, उ, ए; तत्कर्तृत्वं निमित्तम् — ऐ.
[16] प्रतिज्ञार्थः — ऋ, ए.
[17] ०कृतत्वाददृश्यपक्षस्य — ऐ.
[18] मतङ्ग० विद्या० ३. १२–१९ वृत्तौ।
[19] ०पुटयोर्गतः — ओ.
[20] यो हि — ऊ, ऋ.
[21] व्यतिरेकविधायी — आ; व्यतिरेकानुविधा च — ए; व्यतिरेकानुविधायि — ऐ.
[22] चशब्दो नास्ति — अ, आ, ई, उ, ऐ.

तस्यापि उपादानकारणेन [1]कर्त्रा च भवितव्यमिति, विद्यातत्त्वेश्वरतत्त्वसिद्धिरिति, तदभावात्मनः पक्षस्य निरासः ॥५४ ॥

[2]अथ मन्त्रव्यापारविचारप्रसङ्गान्मतङ्गमुनेः [3]दीक्षाविषयप्रश्नः — 'मन्त्रातीतो हि' इत्यादि ।

**मतङ्ग उवाच —**

**मन्त्रातीतो हि भगवान्निर्विकल्पः शिवोऽव्ययः ।**
**मन्त्रैश्च क्रियते दीक्षा प्रपञ्चेऽस्मिन्सनातने[4] ॥५५॥**
**[5]पुंसो योजयितुं [6]शक्ताः कथं मन्त्राः शिवे पदे ।**

एवं हि मन्त्राणां विद्यातत्त्वे[7]ऽवस्थितेः, [8]तदधश्च व्यापारस्योक्तत्वात्, [9]कथं तत ऊर्ध्वभाविनि निर्विकल्पे समस्तव्यापारोपसंहारात्मनि [10]लयतत्त्वे प्रगमो, व्यापारो वेति ॥

[11]अत्र प्रतिविधानम् — 'व्यापारः' इत्यादि ।

**परमेश्वर उवाच —**

**व्यापारोऽध्वनि मन्त्राणामखिलेऽस्मिन्महेश्वरात्[12] ॥५६॥**
**[13]प्राप्तोऽखिलोऽखिलैर्मन्त्रै[14]रध्वा बन्धस्य कारणम् ।**
**तस्मिञ्शुद्धे विशुद्धास्ते शेषं वस्तु सुनिर्मलम् ॥५७॥**
**न [15]मन्त्राः कारणं तत्र [16]व्यक्तं निर्वाति [17]सर्वतः ।**
**कालिकाहरणे यद्वत्कारणं सर्वदा रसः ॥५८॥**
**न स्यात्काञ्चनदाने तु स तथाप्युपचर्यते ।**

**मन्त्रैः** विद्या[18]तत्त्वान्ताध्वशुद्ध्या मलान्तपाशेभ्यः सर्वेभ्य एव [19]विमोच्य, ततो विद्यातत्त्वे [20]सर्वज्ञत्वतदव[21]धिकर्तृत्वात्मकशिवत्वस्य व्यक्त्या [22]पुमांसः शोधिता एव । [23]अतस्तेषां यत् कर्तव्य-

---

[1] कर्तृतया च — ऐ.
[2] अथात्र मन्त्र० — ए.
[3] दीक्षया विषयः प्रश्नः — आ; दीक्षाविषयः प्रश्नः — ऊ, ऋ.
[4] सनातन — उ, ऊ ऋ.
[5] पुंसां — उ.
[6] मन्त्राः कथं शक्ताः — मु, उ, ओ.
[7] ऽवस्थिते — ए, ऐ.
[8] तदयं च — अ.
[9] कथित ऊर्ध्व० — ऊ, ऋ; कथं तदध ऊर्ध्वव्यापिनि० — ऐ.
[10] 'लय' इति नास्ति — ऐ.
[11] अत्र विधानम् — ऋ.
[12] महेश्वराः — उ, पाठान्तरम् ।
[13] प्रोक्तोऽखिलो — ऊ, ऋ.
[14] ०रध्वबन्धस्य — ओ.
[15] मन्त्रैः कारणैस्तत्र — मु; मन्त्राः कारणास्तत्र — उ; मनुः कारणं तत्र — ऊ, ऋ.
[16] व्यक्ति — मु, उ.
[17] तन्वतः — ओ.
[18] ०तत्त्वान्ताध्वविशुद्ध्या — ऊ, ऋ; ०तत्त्वान्ताध्वनि शुद्ध्या — ए, ऐ.
[19] विमुच्य — ऋ.
[20] सर्वज्ञ तदवधि — ऐ.
[21] ०कर्तृत्वात्मशिवत्वव्यक्त्या — ऊ, ऋ, ए.
[22] पुंसा — ऐ.
[23] ततस्तेषां — ऊ, ऋ.

**शेषं वस्तु** [1]सर्वकर्तृत्वाभिव्यक्त्यात्मकं, [2]**तत्र न** [3]**मन्त्राः कारणं** [4]प्रगमाभावात्। अपि तु [5]**सु-निर्मलं** लयभोगाधिकाराख्यं तत्त्वत्रयमेव। [6]तदुक्तमन्यत्र[7] —

"शिवेन त्वाहुतीर्दद्याद्ब्रह्मभिश्च" इति।

इहापि च[8] — [9]शुद्धेऽध्वनि [10]प्रकर्तव्या शक्त्या [11]पञ्चाहुतिः क्रमात्।" इति।

यतस्तत्र लयतत्त्वात्मनि **व्यक्तं** योजितं दीक्ष्यवस्तु **सर्वतो निर्वाति** समभिव्यक्त[12]लयावस्थात्मकं संपद्यत इति, तस्यैव [13]तत्र कारणत्वम्। [14]मन्त्राणां तु उपचारादुच्यते। यथा[15] येनैव रसेन्द्रेण शुल्बात् कालिकापनीयते, तेनैव न[16] तस्य हेमत्वमभिव्यज्यते। अपि [17]तु तत्पाकादिसंस्का[18]राहित-सामर्थ्य रसेन्द्रान्तरमेव तत्र हेतुः। पूर्वस्य [19]तु तद्धेतुत्वमुपचारादुच्यत इति॥

पुनरत्रैव मतङ्गमुनिः — 'अध्वपाश' इत्यादि।

**मतङ्ग उवाच —**

**अध्वपाश[20]निबद्धानां शरीराणां महेश्वर ॥५९॥**
**तद्विशुद्धेऽपि नाभावः समाधिर्जायते कथम्।**

अध्वा पृथिव्यादिकलाप्रान्तस्तत्त्वभुवनात्मकः, [21]तन्निबद्धानि शरीराणि सूक्ष्मस्थूलात्मकानि पुंसाम्। तथा पाशाः मलकर्मलक्षणाः, [22]तन्निबद्धानि चेत्युक्तम्। ततश्च, तेऽध्वपाशाः दीक्षया [23]विशुद्धाः यस्मिन् पुंसि तस्मिन्। [24]**न अभावः शरीराणाम्** इत्यत्र **समाधिर्जायते कथम्;** [25]नात्र समाधिरस्तीत्यर्थः। [26]निमित्ताभावान्नैमित्तिकाभावतस्तदैव शरीरपातप्रसङ्गो यतः॥

---

[1] ०कर्तृत्वात्मकाभि० — ए.
[2] 'तत्र' इति नास्ति — अ.
[3] 'मन्त्राः कारणं' इत्येतन्नास्ति — अ; मन्त्रः कारणं — ऐ.
[4] प्रागभावात् — ऊ, ऋ.
[5] निर्मलं — ऊ, ऋ.
[6] यदुक्तमन्यत्र — ऊ, ऋ.
[7] आकरो न लभ्यते।
[8] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[9] मतङ्ग० क्रिया० दीक्षापटले — ३३ पू०.
[10] प्रकर्तव्यं — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[11] पञ्चाहुतिक्रमात् — अ, आ, ई, उ, ए, ऐ; पञ्चाहुतीः क्रमात् — ऋ.
[12] ०लयात्मकं — अ; ०लयतत्त्वात्मकं — ए.
[13] 'तत्र' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[14] 'मन्त्राणां' इत्यारभ्य 'पूर्वस्य तु तद्धेतुत्वम्' इत्यन्तं नास्ति — ए.
[15] अत्र नशब्दोऽधिकः — आ, ई, उ, ऊ, ऋ, ऐ.
[16] नशब्दो नास्ति — ऊ, ऋ, ऐ.
[17] तुशब्दो नास्ति — आ.
[18] ०राहितासामर्थ्यं — ऋ.
[19] तुशब्दो नास्ति — अ, आ, ई, उ, ऊ, ऋ.
[20] निबन्धानां — ओ.
[21] तन्निबन्धानि — अ, आ, ई, उ, ऊ, ऐ; तन्नि-मित्तानि — ए.
[22] तन्निबन्धानि — अ, ई, उ, ए, ऐ; तन्निबन्ध-नानि — आ.
[23] विमुक्ताः शुद्धाः — अ, ई, उ; मुक्ताः शुद्धाः —आ.
[24] नशब्दो नास्ति — आ, ऋ.
[25] तत्र — ऐ.
[26] निमित्ताभावे नैमित्तिकस्याप्यभावः — अ; निमित्ताभावे नैमित्तिकाभावः — आ, ई, उ; निमित्ताभावे नैमित्तिकाभावमुक्तास्तदैव — ए; निमित्ताभावे नैमित्ताभावास्तदेव — ऐ.

अत्र समाधिः — 'प्राक्संस्कारवशाद्' इत्यादि ।

**परमेश्वर उवाच —**

**प्राक्संस्कारवशाद्यद्वच्चक्रं निर्वर्ततेऽपि हि ॥६०॥**
**घटे [1]तद्वद्भ्रमत्यन्तः शरीरं ध्रियते मुने ।**
**लोकेऽपि [2]सुप्रतीतं [3]स्याद्द्विविधं कर्म कर्मिणाम् ॥६१॥**
**क्रिया[4]वसानिकं दृष्टमदृष्टं तत्र संक्षये ।**
**न चेदेवं [5]तदाभावः शास्त्रस्य सह कर्मणा ॥६२॥**

[6]द्विविधा हि दीक्षा सद्योनिर्वाणफला,[7] [8]असद्योनिर्वाणफला च। तत्र पूर्वस्यां सर्वबन्धक्षयेऽपि कियन्तं कालं "[9]तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः" इत्युक्तम्[10]। द्वितीयस्यां तु **द्विविधं कर्म** [11]अनारब्धकार्यम्, आरब्ध[12]कार्यं चेति[13]। तत्र यदनारब्धकार्यं जन्मान्तर[14]भोग्यत्वाद् **अदृष्टं** कर्म तस्यैव दीक्षया क्षयः। न तु क्रियाया अवमाने [15]भवं [16]फलदं [17]शरीरादि **दृष्टम्** यस्मात्तस्यापीति, [18]कुतस्तस्य शरीरादेरभावः। अन्यथा सर्वस्यैव दीक्षा[19]कर्मणो[20]ऽभिचारवच्छरीराभावफलत्वाद्, आचार्यादेरपि दीक्षित[21]त्वादभावतः, [22]अनुष्ठातुरभावेन पारमेशस्यास्य **शास्त्रस्य** दीक्षा[23]कर्मणश्चोच्छेद-प्रसङ्गः। तस्मादवश्यं तदवस्थित्यन्यथानुपपत्त्या [24]प्रारब्धकार्याणां [25]कर्मणां न क्षयः सर्वस्माद्दीक्षा-कर्मण [26]इत्यभ्युपगन्तव्यम् ॥ ६०–६२ ॥

अत्र [27]पुनर्मतङ्गमुनिः — 'धर्माधर्मात्मकम्' इत्यादि ।

**मतङ्ग उवाच —**

**धर्माधर्मात्मकं कर्म तच्च बन्धस्य कारणम् ।**
**मुक्तिस्तेनैव शास्त्रेऽस्मिंस्तत्कथं गम्यते विभो ॥६३॥**

---

[1] भ्रमत्यतः पुंसः शरीरं — ऊ, ऋ.
[2] सुप्रसिद्धं — ओ.
[3] स्याद् विविधं — मु, उ, ओ.
[4] ०वसानिको — ऊ, ऋ; ०वसानकं — ओ.
[5] ततोऽभावः मन्त्रस्य — ऊ, ऋ.
[6] द्विधा — अ, ऊ.
[7] अत्र चशब्दोऽधिकः — ऊ, ऋ.
[8] 'असद्योनिर्वाणफला' इत्येतन्नास्ति — अ.
[9] सांख्यका० — ६७ उ०.
[10] मतङ्ग० विद्या० २. १, २ पू० वृत्तौ ।
[11] आरब्धकार्यमनारब्धकार्यं चेति—आ; 'अनारब्धकार्यं' इत्येतन्नास्ति — ऊ, ऋ.
[12] कार्ये — ऐ.
[13] इतिशब्दो नास्ति — ऊ, ऋ, ऐ.
[14] ०भोग्यत्वाददृष्टं — ऐ.
[15] इहैव फलमिदानीं शरीरादि — ऐ.
[16] फलमिदं — अ, आ, ऊ, ऋ, ए.
[17] 'शरीरादि दृष्टम्' इत्यारभ्य 'दीक्षाकर्मणोऽभिचारवत्' इत्यन्तं नास्ति — ऊ, ऋ.
[18] कुतोऽप्यस्य — अ, आ, ई, उ, ए.
[19] कर्मणो व्यभिचार० — अ.
[20] ऽभिचारवशाच्छरीरा० —ए.
[21] ०त्वाभावतः — ऐ.
[22] अनुष्ठान्तरभावेन — ऊ, ऋ.
[23] ०कर्मणोच्छेद० — अ.
[24] अत्रारब्ध० — ऊ.
[25] 'कर्मणां' इति नास्ति — आ.
[26] इत्युपगन्तव्यम् — ऋ, ऐ.
[27] 'पुनः' इति नास्ति — ऊ, ऋ, ए.

यत् **कर्म** तद्, बन्धहेतुः। [1]यथा ज्योतिष्टोमब्रह्महत्यादि। कर्म च दीक्षाख्यम्। [2]अतस्तस्यापि बन्धहेतुत्वाद् न मुक्ति[3]साधनत्वमिति ॥ ६३॥

अत्र सिद्धान्तः — 'न कर्मतः' इत्यादि।

**परमेश्वर उवाच —**

**[4]न कर्मतः [5]फलावाप्तिरशुभस्य शुभस्य वा।**

बन्धात्मनः [6]फलस्यास्तिता **कर्मतः** इति व्याप्तिः [न] युक्ता। [7]न तु कर्मावश्यं फलहेतुरिति। व्यभिचारात्। यदाहुः[8] —

"नावश्यं कारणानि कार्यवन्ति भवन्ति।" इति।

इतश्चैतदयुक्तम् — 'शुभाच्च' इत्यादि।

**शुभाच्च यद्भवेन्मोक्षः कर्मणः प्रतिपद्यते ॥६४॥**

[9]यस्मात् प्रायश्चित्तादेः **शुभाद्** विशिष्टात्[10] **कर्मणः**, दुष्कृतेभ्यो ब्रह्म[11]हत्यादिभ्यः कर्मबन्धेभ्यः पुरुषो मुच्यत इति **प्रतिपद्यते** स्वयमेवा[12]भ्युपगच्छत्ययं पूर्वपक्षवादी। ततस्तद्वद्दीक्षात्मकस्यापि कर्मणो मोक्षहेतुत्वसंभवात् [13]पूर्वपक्षोक्तस्य हेतोरनैकान्तिकता ॥६४॥

किं च — 'शत्रुभिः' इत्यादि।

**शत्रुभि[14]र्बध्यते [15]यद्वत्कर्मभिर्निगलादिना।**
**तद्वदेव [16]पुमान्सद्भिः [17]कर्मभिश्च विमुच्यते ॥६५॥**

[18]प्रत्यक्षेणापि शत्रुकर्मणां बन्धहेतुत्वेन, साधुकर्मणां च मोक्षहेतुत्वेन सिद्धेरनैकान्तिकतैव ॥६५॥

---

[1] तथा — ऐ.
[2] 'अतः' इति नास्ति — ऐ.
[3] ०साधनत्वादिति — ऊ, ॠ.
[4] नाकर्मतः — मु, उ, ऊ, ॠ, ओ; अत्र वृत्त्यनुसारेण 'न कर्मतः' इति पाठः शोधितः।
[5] फलस्यास्ति नाशुभस्य — ऊ, ॠ; फलप्राप्तिरशुभस्य — ओ.
[6] फलस्यास्ति नानाकर्मत इति — ऊ, ॠ;
[7] फलस्याप्तिकर्मत इत्यव्याप्तिर्युक्ता — ऐ. स तु — ऊ, ॠ.
[8] आकरो न लभ्यते।
[9] 'यस्मात्' इत्यत्र 'यद्यस्मात्कारणात्' इति दृश्यते — आ; 'यद्यस्मात्' इति दृश्यते — ई, उ, ए, ऐ.
[10] अत्र 'विशिष्टे' इत्यधिकम् — ऐ.
[11] ०हत्यादिकर्म० — ऊ, ॠ.
[12] ०वाभ्युपागच्छत्ययं — आ, ई, उ.
[13] पूर्वपक्षस्योक्तस्य — ऐ.
[14] ०र्बाध्यते — ओ.
[15] यद्वत्कर्मणा निगदादिना — ऊ, ॠ.
[16] क्रमात्सद्भिः — मु, उ.
[17] कर्मणैव — मु, उ, ओ.
[18] अत्र 'अतश्च' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ; 'प्रत्यक्षेणापि' इत्यारभ्य 'आगमान्तरेऽप्युक्तत्वादित्युच्यते' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.

न चैतत् कर्मणो मोक्षहेतुत्वमत्यन्तापूर्वत्वेनात्रोच्यमानमाश्चर्यत्वेन मन्तव्यम्। आगमान्तरेऽप्युक्तत्वादित्युच्यते — 'संबोधादपि' इत्यादि।

> **संबोधादपि यत्रोक्तो [1]वाग्व्यापाराद्गरीयसः।**
> **क्लेशेन चावबोधः स्यान्न स्याद्वा तच्च दुष्करम्॥६६॥**
> **यदुत्तरमतीतस्य कर्मणस्[2]तद्विभेदकम्।**
> **दृश्यते च किमाश्चर्यं तत्कर्म [3]बलवत्तरम्॥६७॥**
> **यस्मादमूर्तं सापेक्षमस्वतन्त्रमचेतनम्।**

**यत्र** आगम[4]विशेषे, **संबोधादपीति** "[5]आत्मा [6]ज्ञातव्यो मन्तव्यो निदिध्यासितव्यः" [7]इत्यात्मविषय[8]प्रतिपत्तिकर्तव्य[9]तात्मकज्ञानानुष्ठानकर्मविशेषादपि **उक्तो** [10]भवेद् **अवबोधो** मोक्षः। यन्तदो[11]र्नित्याभिसंबन्धात् तत्रास्मिञ्शास्त्रे किमाश्चर्यम्। [12]यद् दीक्षाख्यादसौ उक्त इति। [13]यथा यत्रागमविशेषे **वाग्व्यापाराद्** [14]जपस्वाध्यायात्मकाद् **गरीयसः** [15]अनेकावृत्तिरूपात् कर्मविशेषादेव मोक्ष उक्तः। [16]तत्रास्मिञ्शास्त्रे **किमाश्चर्यम्**। यदुक्तम्[17]—

> "मन्त्राणामेव जपतः स्वाध्यायाध्ययनात्तथा।
> दुष्कृतेभ्यो विमुच्यन्ते कर्मणः सुकृतादपि॥" इति।

[18]यथा यत्रागम[19]विशेषे **क्लेशेन** शरीरेन्द्रियपरितापात्मना तपोलक्षणेन च कर्मणा **अवबोधः** मोक्षः **स्यात्**। [20]तत्र किमाश्चर्यम्। यद् [21]दीक्षाख्याद् **न स्याद्वेति** संशयो भवताम्। [22]यच्छ्रूयते[23] —

> "तपोभिरुग्रैः प्रविजित्य दोषान्
> सुकेवलं [24]ब्रह्म परं विशन्ति।" इति।

[25]यथा यत्रागमे **यदुत्तरं** कर्म प्रकृतत्वाद् [26]अतीतकर्मणः। **तच्च** [27]अतिदुष्करं [28]शूरतरपुरुषसाध्यत्वात्। **तद् विभेदकम् अतीतस्य कर्मणः दृश्यते**। यदुक्तम्[29] —

---

[1] वाग्व्यापारगरीयसः — ऊ, ऋ.
[2] ०स्तद्विभेदतः — मु, उ, ओ.
[3] फलवत्तरम् — ऊ, ऋ.
[4] ०विशेषसंबोधा० — ऐ.
[5] बृहदारण्ये ४.५.६. 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यस्योपनिषद्वाक्यस्यानुवादरूपोऽयमिति भाति।
[6] 'ज्ञातव्यो मन्तव्यो' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[7] इत्याद्यात्म० — ए.
[8] ०प्रतिपत्तिः कर्तव्यता० — अ, ऊ, ऋ.
[9] ०तात्मकाज्ज्ञानानु० — आ, ई, उ; ०तात्मकत्वाज्ज्ञानानु० — ए.
[10] भवेदेव बोधो — ए.
[11] ०र्नित्यसंबन्धात् — आ.
[12] 'यद्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[13] तथा — ऊ, ऋ.
[14] जपः स्वाध्याया० — अ, ई, उ, ऐ.
[15] 'अनेकावृत्तिरूपात्' इत्येतन्नास्ति — अ.
[16] तत्रास्मिंश्च शास्त्रे — ए.
[17] आकरो न लभ्यते।
[18] तथा — ऊ, ऋ.
[19] ०विशेषेण — ऋ.
[20] अत्र — आ, ई, उ, ए.
[21] दीक्षाख्या न स्याद्वेति — ऊ, ऋ, ऐ.
[22] 'यत्' इति नास्ति — अ.
[23] आकरो न लभ्यते।
[24] ब्रह्मपदं — ऐ.
[25] तथा — ए, ऐ.
[26] 'अतीत' इति नास्ति — अ, आ, ई, उ, ऋ, ए, ऐ.
[27] अपि दुष्करं — ए.
[28] शूरधीरपुरुष० — ए.
[29] आकरो न लभ्यते।

"संग्रामे निहतः शूरो [1]निर्भिद्यादित्यमण्डलम् ।
दुष्कृतान्यवधूयाशु याति ब्रह्म सनातनम् ॥" इति ।

[2]तत्र किमाश्चर्यं यत्तत्कर्म दीक्षालक्षणं तथा दृश्यते इति । **यस्मात्** [3]**तत् कर्म बलवत्तरम्** ईश्वरशक्त्यात्मकत्वात् । यत्पुनः पुरुषानुष्ठानात्मक[4]मेतत्कर्म [5]तत्तु भूतपरिस्पन्दात्मकत्वाद् अविद्यमानमूर्ति [6]क्षणिकमित्यर्थः । इतिकर्तव्य[7]तापेक्षित्वाच्च **सापेक्षम्** । अस्वतन्त्रपशु[8]जन्यत्वाद् **अस्वतन्त्रम्** । **अचेतनं** चेति । ततोऽस्य ईश्वरशक्तिरूपत्वेन बलवत्तरत्वात् किमाश्चर्यं यन्मोक्षहेतुत्वं दृश्यते इति ॥

[9]अत्र [10]पुनर्मतङ्गमुनिः — 'प्रध्वंसि' इत्यादि ।

**मतङ्ग उवाच —**

**प्रध्वंसि प्राक्तनं कर्म बलवच्च यदुत्तरम् ॥६८॥**
**तद्विपाक[11]भुजो भोगो [12]मोक्षः कुत्र समागतः ।**

एवं हि [13]प्राक्तनस्य कर्मणो दीक्षाद्वारे[14]णोपभोगाद् अस्तु प्रध्वंसः । यत्तु दीक्षोत्तरमनुष्ठितं [15]शुभाशुभं कर्म, तस्यानुपभुक्तत्वेन बलवत्त्वात् [16]तद्विपाकं पुरुषो भुङ्क्ते एवेति, कुतोऽस्य दीक्षया मोक्षः ॥

सिद्धान्तस्तु — 'मन्त्राः कृत्स्नस्य' इत्यादि ।

**परमेश्वर उवाच —**

**मन्त्राः कृत्स्नस्य बन्धस्य [17]छेत्तारः [18]कर्तुरिच्छया ॥६९॥**
**[19]मायोत्थस्यापि कुशलाः [20]किं पुनः कर्म[21]सन्ततेः ।**

परमेश्वर[22]शक्तिप्रयुक्ता **मन्त्राः** कृत्स्नस्यैव कर्मणः प्राक्तनस्य,[23] दीक्षोत्तरस्य **च** छेत्तारः ।

---

[1] निर्भेद्यादित्य० — ऊ, ॠ.
[2] अत्र — आ, ई, उ, ए.
[3] 'तत्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[4] ०मेव तत्कर्म — ए.
[5] तत्तु भूते परि० — अ; तद्भूतपरि० — ऊ, ॠ.
[6] क्षणिकत्वमित्यर्थः — अ, ई, उ.
[7] ०तापेक्षिततत्वाच्च — ई, उ, ए; ०तापेक्षत्वाच्च — ऊ, ॠ.
[8] ०जातत्वाद् — ए.
[9] 'अत्र पुनः' इत्येतन्नास्ति — ऊ, ॠ.
[10] 'पुनः' इति नास्ति — आ.
[11] भुजां योगो — मु, उ; भुजां भोग० — ओ.
[12] मोक्षस्यात्र किमागतम् — ऊ, ॠ, ओ.
[13] प्राक् तस्य कर्मणो — अ.
[14] ०णोपभुक्तत्वाद् — ऊ, ॠ.
[15] शुभाशुभकर्म — अ, ऐ.
[16] द्विकर्मपाकं — ऐ.
[17] मोक्तारः — मु, उ; भेत्तारः — ओ.
[18] पत्युरिच्छया — मु, उ, ओ.
[19] मायार्थस्यापि — उ.
[20] ते पुनः — उ.
[21] ०सन्ततौ — मु, उ, ओ.
[22] ०शक्तियुक्ता हि कृत्स्नस्यैव — ऊ, ॠ.
[23] अत्र 'एव' इत्यधिकम् — ऊ, ॠ.

ये हि सद्योनिर्वाणदीक्षायाम् [1]अभिचार[2]कर्मणीवात्यन्तस्थूलस्य[3] मायीयस्य शरीरात्मनो **बन्धस्य** भोग्यतया भाविनः[4] छेत्तृत्वेन **कुशलाः** सिद्धाः, ते कथं भाविनो वासनारूपत्वेन सूक्ष्मस्य कर्म-सन्तानात्मनो [5]न भवेयुः। [6]कार्यफलं विना [7]तस्य कारणस्य छेत्तुमशक्यत्वात् केवलं प्राक्तनस्य [8]दीक्षयोपभोगेन क्षयः। तदुत्तरस्य[9] [10]तया दग्धबीजत्वेन [11]संस्कारारम्भणसामर्थ्यविघातादित्य-दोषः॥

नन्वेवं दीक्षोत्तरकालं साधकस्यापि फलं न स्यादिति। तदर्थमेतत् — 'सापेक्षाः सिद्धये' इत्यादि।

**सापेक्षाः [12]सिद्धये यस्मान्निरपेक्षा विमुक्तये॥७०॥**
**तद्विपाको विरक्तस्य नोपसर्पति [13]कर्हिचित्।**
**रागिणः साधकस्येत्थमुपभोगाय [14]सर्पति॥७१॥**

**साधकस्य** [15]ह्यपरिपक्वकषायत्वात् सबीजैव दीक्षा। न [16]त्वत्यन्तपरिपक्व[17]कषायस्यमु मुक्षो-रिव[18] निर्बीजेति। अतस्तं प्रति [19]**मन्त्राः** [20]**सापेक्षाः** एव। ततस्तस्य स्वशास्त्रविहितकाम्यकर्म-विपाकफलभोक्तृत्वमुपपद्यत एव॥ ७०–७१॥

एतच्च[21] दीक्षायाः [22]कर्मत्वमभ्युप[23]गम्योक्तम्। परमार्थतस्तु — 'मन्त्रशक्तिः' इत्यादि।

**मन्त्रशक्तिरमोघा स्याद्विकल्प[24]विषयोज्झिता।**

मननत्राणात्मनः परमेश्वरस्य [25]आचार्याधिकरणस्येयम् **अमोघा** शक्तिः, [26]आज्यानलाद्यभिव्यक्ता [27]संस्कार्यपुरुषविषया दीक्षाख्या निश्चिता। न तु पुरुषकर्मेति, कुतः पूर्वोक्तप्रश्नावकाशः॥

---

[1] आभिचारकर्मणा चात्यन्त० — अ, आ, ई, उ; आभिचारकर्मणेवात्यन्त० — ए.
[2] कर्मणि चात्यन्त० — ऊ, ऋ, ऐ.
[3] अत्र 'अस्य' इत्यधिकम् — आ, ई, उ, ऊ, ऋ.
[4] अत्र अपिशब्दोऽधिकः — ऊ, ऋ.
[5] नकारो नास्ति — ऊ, ऋ.
[6] कारणविच्छेदं विना — ऊ, ऋ.
[7] तस्यापि विच्छेत्तु० — ऊ, ऋ; कारणस्यापि छेत्तु० — ऐ.
[8] देवयोगायोपभोगेन — ऊ, ऋ.
[9] अत्र तुशब्दोऽधिकः — ऊ, ऋ.
[10] मायाया दग्धबीज० — ऊ, ऋ; तयाबीज० — ऐ.
[11] संस्कारारम्भसामर्थ्य० — ऊ, ऋ.
[12] सिद्धयोऽस्माकं निरपेक्षा — मु, उ.
[13] कुत्रचित् — ऊ, ऋ.
[14] सर्पते — मु, उ, ओ.
[15] हि परिपक्व० — अ, आ, ई, उ, ए, ऐ.
[16] 'अन्यन्त' इति नास्ति — ऊ, ऋ.
[17] कषाया मुमुक्षो० — ऊ, ऋ.
[18] इवशब्दो नास्ति — ऊ, ऋ.
[19] 'मन्त्राः' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] सापेक्षैव — अ, आ, ई, उ, ए, ऐ.
[21] चशब्दो नास्ति — आ.
[22] कार्यत्व० — ए.
[23] ०गम्योत्तरम् — ए.
[24] विषयोत्थिता — मु, उ.
[25] आचार्यत्वे ह्ययममोघशक्तिः — अ; आचार्य-स्येयममोघा — आ, ई, उ, ए, ऐ.
[26] आज्यानलादभि० — ऐ.
[27] संस्कारस्य पुरुषविषयत्वाद्दीक्षाख्या — अ, आ, ई, उ, ए, ऐ.

न च मन्त्राणां [1]शक्तिर्विचारयितुं शक्या। तथा हि — 'वृश्चिकाद्यपवर्गान्ते' इत्यादि।

**[2]वृश्चिकाद्यपवर्गान्ते कर्मण्यत्र स्वके स्वके ॥७२॥**
**नियुक्ताः परमेशेन न मीमांस्याः कथंचन।**
**यस्मादचिन्त्यफलदाः प्रत्यक्षेणापि संस्फुटाः ॥७३॥**

मन्त्रा हि परमेश्वरेण वृश्चिकादिदंशादेरारभ्य अपवर्गान्ते **कर्मणि** [3]बन्धनान्निवृत्त्यर्थं भेदेन **नियुक्ताः**। तत्कर्म [4]ते कथं साधयन्तीति न कुतर्क[5]दृशा विचार्याः। यतो विषग्रहनिवृत्त्यादि-कमत्यन्ताश्चर्यभूतं कार्यं [6]कुर्वन्तस्ते प्रत्यक्षेणैव सिद्धाः॥ ७२–७३॥

प्रासङ्गिकस्यार्थस्य [7]सातिरेकस्योपसंहारः — 'तस्मान्मन्त्र' इत्यादि।

**तस्मान्मन्त्रक्रिया मुख्या सेश्वरी भुक्तिमुक्तिदा।**

**तस्माद्** मन्त्राणां [8]या [9]आराधनक्रिया [10]सा प्रधाना पुरुषकर्मभ्यः। या च सहेश्वरेण वर्तते इति आचार्याधिकरणशिवकर्तृका दीक्षाख्या भुक्तिमुक्तिप्रदत्वेनात्र विचारयितुमुपक्रान्ता [11]क्रिया-शक्तिः सापि मुख्यैवेति ज्ञानादिभ्योऽपि। तेषां दीक्षितपुरुषार्थत्वेन [12]वक्ष्यमाणत्वादिति सूक्तं दीक्षा-ख्यं कर्म [13]बलवत्तरमिति॥

तथा हि — 'यस्माद्' इत्यादि।

**यस्मादचेतनामूर्ता [14]निर्दया निरहंकृता ॥७४॥**
**येषामनीश्वरी तेषां फलदानं [15]प्रमीयते।**

यतो या ज्योति[16]ष्टोमादिका पुरुषकर्तृका क्रिया, [17]सा भूत[18]परिस्पन्दरूपत्वाद् **अचेतना**, क्षणि-कत्वाच्च [19]अविद्यमानमूर्तिः, कर्म[20]स्वाभाव्यादेव फलं कुर्वती, कृष्यादिकर्मवत् कारणान्तरयोगात् कदाचिद् न [21]कुर्यादपीति, [22]अतः [23]प्रधानैषा॥

---

[1] शक्तिर्वारयितुं — अ, ए.
[2] वृश्चिकाद्याप० — मु, उ, ऋ.
[3] बन्धानां निवृत्त्यर्थं — ऊ, ऋ, ए.
[4] 'ते' इति नास्ति — ऊ.
[5] 'दृशा' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[6] कुर्वन्ति ते — अ, आ, ई, उ, ए, ऐ.
[7] अस्यातिरेकस्योप० — ऊ; अतिरेकस्योप० — ऋ.
[8] 'या' इति नास्ति — ए, ऐ.
[9] पारायणक्रिया — ए.
[10] सप्रधाना — ऐ.
[11] 'क्रिया' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[12] मतङ्ग० विद्या० २६. ६३ वृत्तौ।
[13] फलवत्तरमिति — अ, उ, ऋ; बलं परमिति — ऐ.
[14] निर्भया — उ; निर्मदा — ऊ, ऋ.
[15] प्रतीयते — ऊ, ऋ.
[16] ०ष्टोमात्मका — ए.
[17] 'सा' इति नास्ति — अ.
[18] ०परिस्पन्दत्वाद् — ऐ.
[19] अविद्यमाना मूर्तिः — आ, ई, उ, ए; विद्य-मानमूर्तिः — ऊ, ऋ; विद्यमाना मूर्तिः — ऐ.
[20] ०स्वभावादेव — आ, ऊ, ऋ.
[21] कुर्यादिति — ए.
[22] ततः — अ, आ, ई, उ, ए, ऐ.
[23] प्रधानैव — अ, ई, उ, ऐ; प्रधानैवं — आ; अप्रधानैव — ए.

किं च — 'वणिक्कृष्यादय' इत्यादि ।

**वणिक्कृष्यादयोऽप्यत्र किंचिदाश्रित्य कारणम् ।।७५।।**
**प्रपद्यन्तेऽन्यथा हानिः प्राक्तनस्यापि जायते ।**

येऽपि [1]हि **कृष्यादयः** पुरुषव्यापाराः, तेऽपि ग्रामेश्वरादिपुरुषसंश्रयेण फलदा दृश्यन्ते । **अन्यथा** तद्रक्षणासंभवादर्थहानिरेव तत इति, तेभ्योऽपीश्वरसेवाया मुख्यत्वम् ।।

तथा — 'लोष्टादिकल्पितैः' इत्यादि ।

**लोष्टादिकल्पितैरीशैः सम्यगाराधनक्रिया ।**
**सफला दृश्यते यस्मात्तस्मादीशात्फलं ध्रुवम् ।।७६।।**

यदपि [2]पुत्रपश्वन्नादिरक्षात्मकं सर्वमेव लौकिकं कर्म,[3] [4]तदपि सर्वदेशेषु प्रतिगृहं समाचारसिद्धाद् मृद्गोमयाद्याकारगृहदेवताराधनाद्, गृहाद्बहिर्वा यक्षाद्याराधनात् सफलं दृश्यत इति, तस्माल्लौकिककर्मभ्यां [5]सेवा प्रधानेति ।।७६।।

तदियता प्रासङ्गिकं परिसमाप्य, प्रकृतस्य विद्यातत्त्वस्योपसंहाराय, [6]प्रकरणान्तरव्याख्येयस्य चोपक्रमाय[7] श्लोकः — 'विद्यात्मकं तत्त्वम्' इत्यादि ।

**विद्यात्मकं तत्त्वमुदारवृत्तं [8]समासतस्ते निखिलं मयोक्तम् ।**
**मायात्मकस्यावसरागतस्य स्वरूपमेत[9]द्विधिनाधुनोच्यते ।।७७।।**

तच्च **उदारवृत्तं** भुक्ति[10]मुक्तिसाधनत्वेनोक्तत्वात्[11] । मायातत्त्वस्य [12]तु स्वरूपं [13]वर्णयिष्यतीति प्रकरणान्तरव्याख्येयोपक्रमः ।।७७।।

[14]इति [श्री][15]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
[विद्यापादे] शक्तिपदार्थविचारे विद्यातत्त्वप्रकरणं [सप्तमं] समाप्तम् ।।
**सप्तमः पटलः**

---

[1] हिशब्दो नास्ति — अ, ई, उ.
[2] पुत्रवत्वादि० — ए; पुत्रपश्वनादिवृक्षात्मकं — ऐ.
[3] अत्र 'तेभ्यः' इत्यधिकम् — अ, आ, ई, उ, ऋ, ए, ऐ.
[4] 'तदपि' इत्यारभ्य 'लौकिककर्मभ्यां' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[5] सैव प्रधानेति — अ, आ, ई, उ, ए, ऐ.
[6] प्रकरणान्तरस्य व्या० — ए.
[7] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए.
[8] समासतस्तन्निखिलं — ऊ, ऋ.
[9] ०द्विधिनाभिधास्ये — ऊ, ऋ.
[10] 'मुक्ति' इति नास्ति — ऐ.
[11] मतङ्ग० विद्या० — ७. ३९ पू.
[12] तुशब्दो नास्ति — आ, ऊ ऋ.
[13] वर्णयिष्ये इति — ऊ, ऋ.
[14] इतिशब्दो नास्ति — ऊ, ऋ.
[15] 'भट्ट' इति नास्ति — अ, आ, ई, उ, ए, ऐ.

## अष्टमः पटलः

# मायातत्त्वप्रकरणम्

अथ मायात्मकं [1]चक्रमुदीर्णममितात्मकम् ।
वर्णयिष्यामि संक्षेपाद्यथावत्सु[2]विचारितम् ॥१॥

**अथेति** [3]शक्त्याह्वयपदार्थसंगृहीतविद्या[4]तत्त्वव्याख्यानादनन्तरं तत्संग्रहावशिष्टं **मायातत्त्वं** [5]**वर्णयिष्यामीति** पदार्थसंबन्धः । वाक्यात्मकस्तु [6]"समवायि तथा माया" इत्याद्यनेकविधः । अन्ये तु संबन्धाः [7]पूर्ववद्द्रष्टव्याः । मायैव आत्मा यस्य चक्रस्य सकल[8]संसारोद्भवाभिभवभ्रमणहेतोः । तच्च **उदीर्णं** सर्वस्वकार्यव्यापकम् । अमितश्च आत्मा स्वरूपं कालतो यस्य[9] तद्, नित्यमित्यर्थः । तत् **सुविचारितम्** अनुमानेन वर्णयिष्यामीति ॥१॥

अथ तद्वर्णनम् — 'यत्कर्मण' इत्यादि ।

[10]**यत्कर्मणो विपक्वस्य कर्मिणश्चाभिलाषिणः ।**
[11]**भोक्तुमभ्युद्यतस्येह शरीरोत्पत्तिकारणम् ॥२॥**
[12]**ततस्त्वनादिमध्यान्तं स्ववृत्तिगुणसंकुलम् ।**
**स्फुटमत्यन्तगहनं व्यक्तं कर्तुः समीरणात् ॥३॥**
**सूक्ष्मं सर्वगतं नित्यमत्यद्भुतगुणावहम् ।**
**चैतन्यनिलयं विश्वमचेतनमरूपकम् ॥४॥**
**रूपं** [13]**चैतस्य यत्प्रोक्तमुपचारवशात्स्थितम् ।**
**नान्यथा शक्यते वक्तुं मायातत्त्वमिदं** [14]**यतः ॥५॥**

[15]प्रागुक्तमहाप्रलयविश्रान्त्या **कर्मणः** [16]परिपाकं प्राप्तस्य [17]सतः **यद्** अहर्मुखे [18]**कर्मिणः** प्रलय-

---

[1] तत्त्वमुदीर्णं० — उ, ऊ, ऋ.
[2] ०विचार्यताम् — ओ.
[3] शक्त्याह्वपदार्थ० — ऊ, ऋ.
[4] ०तत्त्वाख्यानादनन्तरं — अ, आ, ई, उ, ऐ.
[5] वर्णयतीति — ऐ.
[6] मतङ्ग० विद्या० ६. १०० पू०.
[7] मतङ्ग० विद्या० तृतीयप्रकरणारम्भोक्तवत् ।
[8] ०संस्कारोद्भवाभिभव० — अ; ०संसारोद्भवादिति भवभ्रमण० — ऐ.
[9] अत्र 'सः' इत्यधिकम् — अ, ऊ.
[10] यत्कर्मणोऽपि पक्वस्य — मु, उ.
[11] भोक्तुमप्युद्यतस्येह — मु, उ; भोक्तुमभ्युत्थितेऽस्येह — ओ.
[12] यतस्तन्नादि० — उ; ततस्तन्नादि० — ऊ, ऋ, ओ.
[13] चैतन्यवत्प्रोक्त० — मु, उ.
[14] वचः — ओ.
[15] मतङ्ग० विद्या० ६. ५२, ५३ वृत्तौ; प्रागुक्तं महा० — अ.
[16] परिपाकप्राप्तस्य — ऊ, ऋ.
[17] ततः — ऐ.
[18] कर्मणः — ए, ऐ.

केवलिनः सूक्ष्मशरीरोत्पत्तिकारणं तद् **इदं मायातत्त्वम्** इति संबन्धः। [1]यच्च **अभिलाषिणः** रागादि-सूक्ष्मशरीरसंबन्धस्य [2]अप्राप्तबाह्य[3]शरीरस्य, प्रणष्टबाह्यशरीरस्य [4]च बाह्यस्थूलशरीरोत्पत्तिकारणम् । **यच्च भोक्तुमभ्युद्यतस्य** [5]इह योगिनः प्राकाम्यशक्तियुक्तस्य [6]**कर्मिणः** सकलस्यापि **शरीरोत्पत्तिकारणं** तदिदं मायातत्त्वमिति। [7]यदाहुः[8] —

"प्रकृतिभ्यः शरीराणि निर्माय स्वात्मनः प्रभुः।
युगपत्स्त्रीसहस्राणि भुङ्क्ते [9]प्राकाम्यशक्तितः॥" [10]इति।

अत एव हेतोस्तद् **अनादिमध्यान्तं** कर्मशरीर[11]संतानस्य बीजाङ्कुरसंततेरिवादिमध्यान्तनि-रस्तत्वात्। यदाहुः[12] —

"इदं पूर्वमिदं पश्चादिति वक्तुं न पार्यते।" इति।

[13]स्ववृत्तयः, तस्य कलाद्याः गुणाश्च, तद्द्वारेण [14]चैतन्योपोद्बलनादयः पुरुषार्थाः, तैः संकुलम्। असंख्यातानां शक्तिरूपत्वेन तत्रावस्थानात्। अत एव **च स्फुटं** कृत्वा **अत्यन्तगहनम्**। तच्च, **कर्तुरिति** अनन्तेशस्य। यद्वक्ष्यति[15] —

"क्षोभितोऽनन्तनाथेन ग्रन्थिर्मायात्मको यदा।" इति

यत्प्रेरणं तस्माद्धेतोः [16]शक्तिरूपतां विहाय **व्यक्तं** साक्षाद् द्वादश[17]कपालेशाष्टग्रन्थीशभुवनात्मना सूक्ष्म[18]कलारूपेण [19]च परिणतम्। तच्च [20]**सूक्ष्मं** न्यग्रोध[21]बीजकणिकावत् कारणत्वेन [22]प्राक् प्रति-पादितत्वात्[23]। न तु स्थूलं पुर[24]प्राकारादिमत्; यथा महाव्रतै[25]र्ग्रन्थितत्त्वमभ्युपगतम्। तथात्वे हि कार्यत्वात् परमकारणत्वानुपपत्तिः। कथं तर्हि [26]कपालेशादिभुवनानि तत्रोक्तानि। अत एव न तदात्मनि। अपि तु तत्कार्य[27]मूर्धन्येवेति [28]वक्ष्यामः। प्रोक्तं च श्री**मृगेन्द्रे**[29] —

"मायायामपि पठ्यन्ते गहनेशादयो[30]ऽधिपाः।
[31]तत्त्वशुद्धिश्च दीक्षायां सर्वं तत्कृतिमस्तके॥" इति।

---

[1] यद्वा अभि० — ए.
[2] प्राप्तबाह्य० — ऊ, ऋ.
[3] ०शरीरप्रणष्ट० — अ.
[4] चशब्दो नास्ति — ऊ, ऋ.
[5] इष्टयोगिनः — अ.
[6] कर्मणः — ई, उ, ए.
[7] 'यदाहुः' इत्यत्र 'आहुः' इति दृश्यते — अ.
[8] आकरो न लभ्यते।
[9] प्राकाम्यमस्य तत् — ऊ, ऋ.
[10] इतिशब्दो नास्ति — अ, आ, ई, उ.
[11] ०संपातनस्य — ए; 'संतानस्य बीजाङ्कुर०' इत्येतन्नास्ति — ऊ, ऋ.
[12] आकरो न लभ्यते।
[13] सुवृत्तयः — अ, ऐ.
[14] चैतन्योद्बलनादयः — आ, ई, उ.
[15] मतङ्ग० विद्या० ९. २ पू०.
[16] शक्तिपातरूपतां — ऊ, ऋ.
[17] ०कपालीशाष्ट० — अ, आ, ई, उ, ए, ऐ.
[18] ०कलातत्त्वरूपेण — ऊ, ऋ.
[19] चशब्दो नास्ति — ऊ, ऋ, ऐ.
[20] सूक्ष्मन्यग्रोध० — अ, आ, ई, उ, ए, ऐ.
[21] बीजकरणिकावत् — अ; बीजकावत् — ऋ; बीजकर्णिकावत् — ऐ.
[22] मतङ्ग० विद्या० ६. ४८ वृत्तौ।
[23] अत्र चशब्दोऽधिकः — आ.
[24] ०प्राकारादित्वाद्यथा — अ, आ, ई, उ, ए, ऐ.
[25] ०र्ग्रथितत्वमभ्युपगतः — ऐ.
[26] कपालीशादि० — अ, आ, ई, उ, ए, ऐ.
[27] ०वर्त्मन्येवेति — ऊ, ऋ.
[28] मतङ्ग० विद्या० ८. ६७—६९ पू० वृत्तौ।
[29] मृगेन्द्रे० विद्या० १. १३. ३.
[30] ०ऽमराः — आ, ऊ, ऋ.
[31] भोगशुद्धिस्तु — ऊ, ऋ.

[1]**सर्वगतं** च [2]असंख्यातस्वकार्यव्याप्तेः। **नित्यं** च तत्कार्याणामनिदंप्रथमतया प्रवृत्तेः। [3]तस्य च दधिक्षीरवत् सर्वात्मना परिणामाभावाद् [4]अत्यद्भुतान् गुणान् [5]प्रागुक्तान् [6]सत्त्वादीन् आवहति धारयतीति, तद्रूपं तत्कारणत्वेन [7]वक्ष्यमाणमित्यर्थः। '[8]चैतन्यस्य[9]' निलयं [10]भोग्यसाधन[11]भोगाधि[12]करणजननेन व्यञ्जकम्। न तु मलवत् तदा[13]वारकमित्यर्थः। अत एव **विश्वम्** एवंरूपत्वादेव सर्वस्य संसारस्य। **अचेतनं** च [14]तत्कार्यस्याचैतन्यात्। [15]**अरूपकं** च अनेक[16]शक्त्यात्मकत्वाद् [17]नैकस्वभावत्वेन रूपयितुं शक्यमित्यर्थः। [18]यदि तस्य रूपं योगिनां भावनार्थमवश्यं योगपादे वक्तव्यं तदा कार्यगतेन [19]मोहान्वयेनोपात्तं [20]सिद्धम्। यतो मायाकार्यस्य कलादिक्षित्यन्तस्य अनात्म[21]न्यात्मप्रतिपत्त्यात्मक[22]मोहान्वयात् [23]तस्य [24]परमकारणत्वेनोपचारादुच्यते। **यतो नान्यथा** तस्य साक्षान्मोहकत्वं **शक्यते वक्तुम्** [25]अप्रत्यक्षत्वादिति [26]वक्ष्यामः। तद् **इदम्** एतल्लक्षणं यत् तत्त्वं [27]तद्, माति अस्मिन् प्रलये सर्वं जगदिति कृत्वा [28]माया शक्तिशब्देनोच्यते ॥२–५॥

लौकिकोऽप्यत्रार्थो मायाशब्दस्य प्रवृत्तावस्तीत्युच्यते — 'यद्वा मायात्मकम्' इत्यादि।

**[29]यद्वा मायात्मकं लोके वस्तु[30]रूपं सकुत्सितम्।**
**[31]नादृष्टं शक्यते [32]वक्तुं दृष्टं वा शक्रजालवत् ॥६॥**
**[33]तस्माद्द्रष्टास्य सर्वस्य [34]चैक एव जगत्पतिः।**
**न चान्यैः शक्यते द्रष्टुं हेतु[35]जालशतैरपि ॥७॥**

---

[1] सर्वगतश्च — ए.
[2] संख्यातसर्वकार्य० — ऐ.
[3] तत्र च — ऊ, ऋ.
[4] अद्भुतान् — अ, आ, ई, उ, ए, ऐ.
[5] मतङ्ग० विद्या० ६. १०४ वृत्तौ।
[6] सत्त्वादिना वहति — अ.
[7] मतङ्ग० विद्या० ८. ९ उ०.
[8] चैतन्यस्यानिलयं — अ,
[9] अत्र चशब्दोऽधिकः — ए, ऐ.
[10] भोग्यभोगसाधन० — ऊ, ऋ.
[11] ०भोग्याधिकारजननेन — अ.
[12] ०कारणजननेन — ए.
[13] ०वारकत्वमित्यर्थः — अ.
[14] तत्तत्कार्य० — ऐ.
[15] अरूपं च — ऊ, ऋ.
[16] ०मात्रात्मकत्वात् — ऊ, ऋ.
[17] अत्र 'नैकत्वात्' इत्यधिकम् — ऊ, ऋ.
[18] अनादि च तस्य — ऊ, ऋ.
[19] मोहात्मनान्वयेनोपात्तं — ऊ, ऋ.
[20] 'सिद्धम्' इति नास्ति — ऋ.
[21] ०न्यात्मप्रतिबन्धक० — अ; ०न्यात्माभिमानाद्यात्मक० — ऊ, ऋ; ०न्यात्मप्रतिपक्वात्मक० — ए.
[22] ०मोहनान्वयात् — ऊ, ऋ.
[23] तत्तस्य — अ, आ, ई, उ, ऊ, ऋ; तत्त्वस्य — ऐ.
[24] 'परम' इति नास्ति — ऊ, ऋ.
[25] अप्रत्यक्षादिति — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[26] मतङ्ग० विद्या० ८. ११–२० वृत्तौ।
[27] 'तद्' इति नास्ति — ई, उ, ऊ, ऋ, ए, ऐ.
[28] मायाशब्देनोच्यते — ऊ, ऋ, ऐ.
[29] यदा — उ; यच्च — ऊ, ऋ.
[30] ०रूपमकुत्सितम् — उ. पाठान्तरम्, ऊ, ऋ.
[31] न दृष्टं — ओ.
[32] वक्तुमदृष्टं शक्र० — मु, ओ; वक्तुमदृष्टं शक्ति० — उ.
[33] तस्माद्दृष्टास्य — मु; तस्माद्दृष्टस्य — उ.
[34] एक एव — ऊ, ऋ, ओ.
[35] ०जालान्वितैरपि — उ.

[1]**यद्वा सकुत्सितं**[2] [3]यद्वस्तु [4]अस्मदादिभिः **दृष्टं, अदृष्टं वा** युक्तिभिर्[5]विशेषेण एवंरूपमेतदिति **न** व्यपदेष्टुं [6]**शक्यते,** [7]तद् **लोके** मायाशब्देनोच्यते इन्द्रजालादिवत्। **न च** [8]प्राक्प्रमाधितेश्वरलक्षण-सर्वज्ञव्यतिरेकेणास्मदादिभिरेतत् तत्त्वरूपेण विशेषात्मना हेतुभिर्व्यपदेष्टुं शक्यते। [9]ततोऽपि मायाशब्देनोच्यत इति ॥६-७॥

केन तर्हि तथा [10]व्यपदिश्यत इत्युच्यते — 'तद्वक्त्राम्बुजनिष्क्रान्तैः' इत्यादि।

**तद्वक्त्राम्बुज[11]निष्क्रान्तैर्ज्ञानोद्गारमरीचिभिः।**
**जगत्प्रदीपकैः शुद्धैस्त[12]त्प्रसादोपसर्पिभिः ॥८॥**
**बुद्धावधिष्ठितैर्विप्र दृश्यते नान्यथा क्वचित्।**

तस्य परमेश्वरस्य यद् वक्त्रं परिग्रहवर्तिनी शुद्धविद्याशक्तिः [13]प्रागुक्ता, तदेव सर्वतो [14]विकसितत्वादम्बुजं, ततो[15] [16]निष्क्रान्तैरभिव्यक्तैः। ज्ञानस्य उद्गिरणमुद्गारः प्रतिपादनं, तस्य मरीचयः प्रकाशकाः शब्दाः, तैरागमवाक्यैः। परमेश्वरप्रसादादेव उपसर्पणशीलैः। **बुद्धौ** पुरुषेण **अधिष्ठितैः** [17]विमृश्यतां नीतैः। तन्मायातत्त्वं [18]तथा **दृश्यते** इति॥

अत एवात्र मतङ्गमुनिः, तद्धेतुस्वरूपजिज्ञासयैव प्रश्नयति — 'मायेयम्' इत्यादि।

**मतङ्ग उवाच —**

**मायेयं भवता युक्त्या [19]स्वकार्यगुणविस्तृतेः ॥९॥**
**वक्तव्या स्वेन रूपेण तच्च [20]रूपमनिश्चितम्।**
**मायेयं शक्रजालं स्यान्न च प्राप्ताक्षगोचरम् ॥१०॥**

यद्यप्यत्यन्तातीन्द्रियत्वान्न प्रत्यक्षेण, नापीद्रन्जालवदनुमानेन **मायेयं** विशेषतो व्यपदेष्टुं शक्यत [21]इत्युक्तम्। तथापि **स्वेन** मायामात्रेण सामान्येन **रूपेण** अनुमानतो **वक्तव्या**। त्वया [22]**सुवि-**

---

[1] यद्वचकुत्सितं — ऊ, ऋ.
[2] अत्र 'मया' इत्यधिकम् — ऐ.
[3] वस्त्वेव — ऊ, ऋ.
[4] 'अस्मदादिभिः' इत्येतन्नास्ति — ऊ, ऋ.
[5] ०विशेषेणैव रूप० — अ, ऐ.
[6] शक्यम् — ऊ, ऋ.
[7] 'तल्लोके' इत्यारभ्य 'हेतुभिर्व्यपदेष्टुं शक्यते' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] मतङ्ग० विद्या० ३. ६ उ० –२० पू०, ६. ९२–१०० पू० वृत्तौ।
[9] तदपि — अ;
[10] व्यपदेश्यत — ऐ.
[11] ०निष्क्रान्तज्ञानोद्गार० — ओ.
[12] ०त्प्रसादात्प्रसर्पिभिः — मु, उ; ०त्प्रसादाव-सर्पिभिः — ऊ, ऋ.
[13] मतङ्ग० विद्या० ४. २० उ०–२३ पू० वृत्तौ।
[14] विकासित० — ऋ.
[15] अत्र अपिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[16] विनिष्क्रान्तै० — ऐ.
[17] विमृश्यतान्वितैः — ए; विमृश्यान्वितैः — ऐ.
[18] 'तथा' इति नास्ति — ऊ, ऋ.
[19] स्वकार्यगुणविस्तरात् — मु; बहूनि गुण-विस्तरात् — उ; स्वसूतिगुणविस्तरात् — ओ; स्वमूर्तिगुणविस्तृतेः — ऊ, ऋ.
[20] रूपं विनिश्चितम् — उ.
[21] 'इत्युक्तम्' इति नास्ति — आ; मतङ्ग० विद्या० ८. ६, ७ वृत्तौ।
[22] मतङ्ग० विद्या० ८. १ उ०.

चारितपदेन [1]तथैवात्र वक्तव्यतया [2]प्रतिज्ञातत्वात् । [3]सा च **स्वकार्य**लक्षणस्य [4]**गुणस्य** या **विस्तृतिः** प्रकटीभावो निश्चयः, ततो हेतोः [5]**युक्त्या** अनुमानेन स्वकार्यान्वयिना [6]प्रागुक्तप्रधानवद् वक्तव्या[7]। **तच्च रूपम्**, अद्य [8]यावद् मायाकार्यस्य [9]कस्यचिदप्यनिश्चयाद् **अनिश्चितम्**, इति कुतो मायासिद्धिरिति पूर्वः पक्षः ॥९–१०॥

सिद्धान्तस्तु — 'प्राकृतैः' इत्यादि ।

**परमेश्वर उवाच —**

**प्राकृतैरिन्द्रियैर्विप्र प्रकृतेर[10]प्यनात्मनः ।**
**नोपलब्धमिदं रूपं यत्तत्सूक्ष्मगुणात्मकम् ॥११॥**
**अस्याः सूक्ष्मतरा [11]दूरा माया केनोपलभ्यते ।**

[12]यदुक्तं प्रधानकार्येन्द्रियप्रत्यक्षगोचरा माया न भवतीति । तत् सिद्धसाधनमेव । योगिप्रत्यक्ष[13]गोचरत्वेन तस्या [14]वक्ष्यमाणत्वात् । न च इन्द्रिय[15]प्रत्यक्षागोचरत्वमात्रेण वस्तुनोऽसत्ता सिद्धयति । प्रधानादीनां तथात्वेऽपि सत्त्वस्य [16]प्रतिपादितत्वात् ॥

[17]यत्तूक्तं मायासिद्धौ युक्तिर्नास्तीति तत्रोच्यते — 'तथापि युक्तित' इत्यादि ।

**तथापि युक्तितो वाच्या शृणुष्वैकमना मुने ॥१२॥**

[18]तत्र [19]प्राक् प्रतिपादितात् प्रधानतत्त्वाद् मायातत्त्वं भेदेन प्रतिपादयितुं सामान्यशास्त्रसिद्धमपि प्रधानकार्यं तावदुच्यते — 'अणोर्मल' इत्यादि ।

**[20]अणोर्मलः प्रधानाख्यो विभूत्यै स्थूलतां गतः ।**
**बहिरङ्गोपचारेण पञ्चधा संस्थितः पुनः ॥१३॥**
**योऽयं भूतात्मको वर्गः स्थूलः स परिविस्तरः ।**
**तस्मात्सूक्ष्मतरो वर्गः प्रोक्तस्तन्मात्रसंज्ञकः ॥१४॥**

---

[1] तवैवात्र — ऊ.
[2] प्रतिज्ञानात् — अ, आ, ई, उ, ऊ, ऋ, ए.
[3] 'सा च' इत्यत्र 'तथापि' इति दृश्यते —ऐ.
[4] 'गुणस्य' इति नास्ति — ऊ, ऋ.
[5] युक्तानुमानेन — ई, उ.
[6] मतङ्ग० विद्या० ६. ४४ वृत्तौ ।
[7] वक्तव्यता — आ, ए.
[8] 'यावद्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[9] क्वचित्तदप्यनिश्चयाद् — ऐ.
[10] ०प्यनात्मकम् — मु, ओ; ०प्यनामकम् — उ; ०प्यथात्मजम् — ऊ, ऋ.
[11] दूरात् — ऊ, ऋ.
[12] मतङ्ग० विद्या० ८, ९ उ०, १० पू०.
[13] 'गोचरत्वेन' इत्यारभ्य 'न च इन्द्रियप्रत्यक्षा०' इत्यन्तं नास्ति — ई, उ, ऊ, ऋ.
[14] मतङ्ग० योगपादे शिवतत्त्वोपलब्धिपटले १६–२८ श्लोकेषु मायातत्त्वप्रस्तावो दृश्यते ।
[15] ०प्रत्यक्षगोचरमात्रेण — ऐ.
[16] मतङ्ग० विद्या० ६. ४४ वृत्तौ ।
[17] यदुक्तं — ऋ; यत्रोक्तं — ऐ; मतङ्ग० विद्या० ८. ९ उ०, १० पू०.
[18] 'तत्र' इत्यारभ्य 'तावदुच्यते' इत्यन्तं नास्ति — ऊ, ऋ.
[19] मतङ्ग० विद्या० ६. ४४ वृत्तौ ।
[20] अणुर्मलः — ऊ, ऋ.

[1]पश्चाद्घटमयोऽन्योऽपि वर्गः कर्मेन्द्रियाह्वयः।
बुद्धीन्द्रियात्मकस्तस्माद्वर्गः सूक्ष्मोऽथ [2]पञ्चमः॥१५॥
त्रिधान्तः[3]करणाख्योऽन्यो वर्गः शास्त्रे शिवोदये।
इदं तावच्छरीरं स्याद्गौणं भोक्तुः शरीरिणः॥१६॥

मलिनीकरोति पुंसो दृक्क्रियात्मकं [4]तेजः [5]स्ववृत्त्यभेदेन दर्शयतीति मलः प्रधानाख्यः विभूत्यर्थं भोगसाधनाय स्थूलत्वं [6]प्राप्तो बाह्येनोपचारेण। [7]कलादेरान्तरोपचारत्वेन [8]वक्ष्यमाणत्वात्। पञ्चधा भूततन्मात्रकर्मेन्द्रियबुद्धीन्द्रियान्तःकरणवर्गपञ्चकभेदेन [9]व्यवस्थितः। [10]घटः चेष्टा कर्मेन्द्रियवृत्तिः। तद् इदं तावत् [11]कार्यकरणात्मकं शरीरम् आतिवाहिकं सांख्यैरपि गौणं चतुर्विंशतितत्त्वात्मकमिष्यते। [12]गुणानामत्रापूरकत्वेनावस्थितेः, मायीय[13]स्यात्रैव कलादेर्वक्ष्यमाणत्वात्[14] [15]तावच्छब्दोपादानम्। अत्र च भूतानि पञ्चतन्मात्राणि [16]च कार्यशब्दवाच्यानि [17]इन्द्रियाधिकरणत्वेन वर्तन्ते। इन्द्रियाणि[18] दश, अन्तः[19]करणत्रयं च एतत्कार्याश्रितानि योनितो योन्यन्तरगमनादिकार्यमारभन्ते। इत्येवमेतत् शरीरं स्यात् भोक्तुरिति [20]प्राक्साधितमलयुक्तस्य। अन्यथा भोक्तृत्वाभावादित्युक्तम्[21] ॥१३–१६॥

ततः किमित्युच्यते — 'भोक्तृत्वाद्' इत्यादि।

भोक्तृत्वाल्लक्ष्यते माया [22]चितेरासन्नगोचरा।
षोढा [23]व्यवस्थिता चेयं स्वेन [24]रूपेण सर्पिता॥१७॥

समलस्य [25]हि [26]प्रागुक्तस्य [27]ज्ञत्वकर्तृत्वयोरावृतत्वात्, प्रलयकेवलिन [28]इव न भोक्तृत्वमिति,

---

[1] पञ्चाघाटमयो० — ऊ, ऋ; पश्चाद्घाटमयो ओ.
[2] पञ्चधा — ऊ, ऋ.
[3] ०करणं चान्यो — मु, उ, ओ.
[4] तेजसे स्ववृत्त्यभेदेन — अ.
[5] स्वप्रत्ययभेदेन — ए; स्वं प्रत्यभेदेन — ऐ.
[6] प्राप्तं — अ.
[7] कलादेरन्तरोप० — ऊ, ऋ.
[8] मतङ्ग० विद्या० ८. १७ वृत्तौ।
[9] व्यवस्थितघाटश्चेष्टा — आ, ई, उ.
[10] आघाटश्चेष्टा — ऊ, ऋ, ए, ऐ.
[11] कार्यकं शरीरम् — ऊ, ऋ, ए.
[12] गुणानामापूरकत्वेन — आ; गुणानामत्रापूरत्वेन – ऊ, ऋ; गुणानामत्र पूरकत्वेन — ऐ.
[13] ०स्य चात्र कलादे० — ऊ, ऋ; ०स्यात्र च कलादे० — ऐ.
[14] मतङ्ग० विद्या० ८. १७, १८ पू० वृत्तौ।
[15] 'तावत्' इति नास्ति — अ.
[16] चशब्दो नास्ति — ऐ.
[17] इन्द्रियादिकरण० — ए.
[18] अत्र तुशब्दोऽधिकः — ऊ, ऋ, ए, ऐ.
[19] ०करणं चैतत्० — अ, आ, ई, उ, ए, ऐ.
[20] मतङ्ग० विद्या० ६. ७१ उ०–९० वृत्तौ।
[21] मतङ्ग० विद्या० ३. ११ उ०, १२ पू० वृत्तौ 'पतितशरीरस्य भोगसंवित्त्यभावात्' इत्युक्तम्।
[22] स्थितेरासन्न० — उ.
[23] व्यवस्थितेनेयं — मु, उ, ओ.
[24] वीर्येण — उ० पाठान्तरम्, ओ.
[25] 'हि प्रागुक्तस्य' इत्येतन्नास्ति — अ, आ, ई, उ, ए.
[26] मतङ्ग० विद्या० ६. ७१ उ०–९० वृत्तौ; 'प्रागुक्तस्य' इति नास्ति — ऐ.
[27] अज्ञत्व० — अ.
[28] इवाभोक्तृत्वमिति — ए, ऐ.

अवश्यं तयोर्व्यञ्जकत्वेन[1] तत्त्वद्वयेन भवितव्यमिति, कलाविद्ये[2] सिद्धचतः। अभिव्यक्ततद्रूपस्य च वीत[3]रागस्येव [4]नाभिप्रवृत्तिरिति, तत्प्रवृत्त्यर्थमवश्यंभावाद् रागः सिद्धः। [5]भोगायाभिप्रवृत्तस्य [6]कलननियमयोश्च [7]अवश्यंभावात् [8]कालनियती सिद्धे। नियमश्च [9]कार्य[10]करणादिविषयापेक्ष इति, तत्कारणानां [11]प्रागुक्तानां [12]गुणानामाचैतन्ये सति अनेकत्वाद् इन्द्रियाणामिव कारणान्तरेण भवितव्यमिति, [13]तदव्यक्ताख्यं कारणं गुणजननद्वारेण कार्य[14]करणाद्युत्पादनाय प्रवर्तत इति, षड्भिरेभिः प्रकारैः **माया** भोक्तुः **आसन्ना** भोक्तृस्वरूपनिष्पादकत्वेन अन्तरङ्गोपचारेण **व्यवस्थिता** इति कलादिप्रकरणे सुविस्तरेण [15]वक्ष्यामः ॥१७॥

तदेवं वक्ष्यमाणानुमान[16]सिद्धिः — 'रूपैर्नियामिका' इत्यादि।

**रूपैर्नियामिका भोक्तुर्मलोपेतस्य सुव्रत।**

ततः समलस्य पुंसः प्रलयकेवलिन इव भोगव्यवस्थानुपपत्तेरवश्यं तद्व्यवस्थापकैः [17]कलादिभिः षड्भिः, बुद्ध्यादिवत् [18]प्रतिपुरुषं भिन्नैर्भवितव्यम्। तेषां च आचैतन्ये सति अनेकत्वात् तद्वदेव कारणान्तर[19]पूर्वकत्वसिद्धिः। या तु पुंसो भोक्तृत्वसंपादिका सा परमकारणं मायेति, कार्यानुमानादेव मायातत्त्वसिद्धिः॥

यद्येवं सैव मलो भविष्यतीति, व्यतिरिक्तमलकल्पनाप्रयासः [20]प्राक् पुंपाशेश्वरप्रकरणरचितो निष्फल एवेति मायामलवादिनः। [21]तान्प्रतिक्षेप्तुमत्र साधनव्याप्तिविषयदृष्टान्तमाह — 'सुसत्यामाशये यद्वद्' इत्यादि।

**सुसत्यामाशये यद्वत्क्षीरं दोषविवृद्धये ॥१८॥**
**दीप्ताग्नेर्न तथा यस्मात्तस्मादत्रापि [22]निश्चितः।**
**[23]पुंसोऽपि लक्ष्यते दोषः सहजः स्वगुणात्मकः ॥१९॥**

---

[1] ०र्व्यञ्जकेन — अ, ई, उ, ऊ, ॠ, ए, ऐ.
[2] अत्र 'ते' इत्यधिकम् — ऐ.
[3] ०रागस्यैव — आ, ऐ.
[4] 'नाभिप्रवृत्तिरिति' इत्यारभ्य 'रागः सिद्ध.' इत्यन्तस्य ग्रन्थस्य स्थाने 'नाभिष्वङ्गं विना भोग इति वक्ष्यमाणनयेन रागतत्त्वसिद्धिः' इति दृश्यते — ऊ, ॠ.
[5] 'भोगाय' इति नास्ति — अ,आ, ई, उ, ए, ऐ.
[6] कलानियमयोश्च — अ; कलना नियमश्च — ऊ, ॠ.
[7] अवश्यंभावीति — ऊ, ॠ.
[8] कालनियतिसिद्धेः — अ, ऐ.
[9] 'कार्य' इति नास्ति — आ.
[10] ०कारणादि० — ए.
[11] मतङ्ग० विद्या० ८. १३–१६; 'प्रागुक्तानां' इति नास्ति — ए.
[12] गुणानां चैतन्यानामचैतन्ये — अ, ऐ.
[13] तदप्यव्यक्ताख्यं — ऐ.
[14] ०कारणाद्युत्पादनाय — अ, आ, ए.
[15] मतङ्ग० विद्या० ९–१५ प्रकरणेषु।
[16] ०सिद्धेः — ऊ, ॠ.
[17] कालादिभिः षड्भिः — ई, उ, ए; कलादिषड्भिः — ऐ.
[18] प्रतिपुरुषभिन्नैः — अ, ई, उ, ए, ऐ; प्रतिपुरुषमभिन्नैः — आ.
[19] ०पूर्वत्वसिद्धिः — अ, आ, ई, उ, ए; ०पूरकत्वसिद्धे कृतैः पुंसो — ऊ, ॠ.
[20] मतङ्ग० विद्या० ६. ७१ उ०–७९ वृत्तौ।
[21] तत्प्रतिक्षेप्तु० — अ, ई, उ, ॠ, ए; तत्प्रक्षेप्तु० — आ; तत्प्रतिक्षेप० — ऐ.
[22] निश्चितम् — ऊ, ॠ.
[23] पुंसोऽभिलक्ष्यते — ऊ, ॠ; पुंसोपलक्ष्यते—ओ.

आमः एव [1]आशयः स्थानं मन्दाग्नितायाः, तस्मिन् सुष्ठु सति विद्यमाने **पुंसः क्षीरं** दोषहेतुः। **न** [2]त्वामाभावे **दीप्ताग्नेः** यथा। तद्वदत्रापि [3]मायाप्रवृत्तौ' [4]हेतुभूतः **सहजः** पुरुषगत एवान्यो मलोऽभ्युपगन्तव्यः। मायायाः स्वप्रवृत्तौ [5]क्षीरस्येव [6]निमित्तत्वानुपपत्तेरिति। एकत्वे प्रमाणाभावाच्च[7]। अत्यन्तातीन्द्रियं [8]हि वस्तु कार्यभेदादेव वस्त्वन्तराद्भिन्नमवसीयते कलादिरूपमिव बुद्ध्यादेः। इह [9]च [10]मायाकार्य[11]कलादिभिन्नमेव कार्यं दृक्क्रियावारकत्वम्। यत् [12]कलाद्युपसंहारेऽपि प्रलयकेवलिनां, मायोर्ध्वं च मन्त्रादीनां भागशो भवद्भिरभ्युप[13]गन्तव्यं [14]युक्तिसिद्धत्वादिति कथं [15]तयोर्मायामलयोरभेदसिद्धिः। [16]मायायाश्च कार्यद्वारेण [17]दृक्क्रिययोरुपोद्बलनस्वभावः सिद्धः। यदुक्तम्[18] —

> "कलोद्बलितचैतन्यो विद्यादर्शितगोचरः।
> रागेण रञ्जितश्चापि बुद्ध्यादि[19]करणैस्ततः॥",
> "भुङ्क्ते तत्र [20]स्थितान्भोगान्भोगैकरसिकः पुमान्।" इति।

[21]तद्विरुद्धं च दृक्क्रिया[22]वारकत्वमिति। ततः [23]कार्यविरुद्धोपलब्ध्या तदभावो मलात्मनि प्रतीयत इति, [24]तयोर्भेदसिद्धिः॥१८–१९॥

एवं च — 'तत्तिरस्कारवशग' इत्यादि।

> **तत्तिरस्कारवशगः [25]कर्मयुग्भोगतत्परः।**
> **ततः प्राधानिकैः स्थूलैर्गौणैः स परिभूयते॥२०॥**

मलतिरस्कारवशं प्राप्तः पुरुषः कर्मयुक्तः सन् [26]भोगपरः प्रथमं मायीयैः कलादिभिः संबध्यते। **ततः गौणैः** कार्यकरणैराक्रम्यत इति॥२०॥

---

[1] आशयस्थानं — अ, आ, ई, उ, ए, ऐ.
[2] तुशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[3] मायावृत्तौ — अ.
[4] 'हेतुभूतः' इत्यारभ्य 'स्वप्रवृत्तौ' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[5] क्षीरस्यैव — ऐ.
[6] निर्मितत्वानुप० — अ; निमित्तानुप० — आ.
[7] चशब्दो नास्ति — आ.
[8] हिशब्दो नास्ति — आ, ई, उ.
[9] चशब्दो नास्ति — ए.
[10] मायाकार्यात्कलादेर्भिन्न० — ऊ, ऋ;
[11] ०कलाभिन्नमेव — ए; कलादिकार्याद्भिन्नमेव — ऐ.
[12] कालाद्युप० — ऐ.
[13] ०गन्तव्यः — अ, आ, ई, उ, ऐ; गतम् — ऊ, ऋ.
[14] यद्धि सिद्धत्वाद् — ऊ, ऋ.
[15] ततो माया० — ऊ, ऋ.
[16] अत्र 'कथं' इत्यधिकम् — ए.
[17] दृक्क्रियोद्बलनस्वभावः सिद्धः — अ, ई, उ, ए; दृक्क्रियोद्बलस्वभावः सिद्धः — आ; दृक्क्रियोपोद्बलनं स्वभावसिद्धम् — ऊ, ऋ; दृक्क्रिययोरुपोद्बलनं स्वभावसिद्धम् — ऐ.
[18] स्वायम्भुवे ३२. १०, ११ उ०; 'यदुक्तं' इत्येतन्नास्ति — अ, ऐ.
[19] ०करणस्ततः — ऊ, ऋ; ०करणैर्युतः — स्वायम्भुवमातृकापाठः।
[20] स्थितो भोगान् — ऊ, ऋ.
[21] 'तद्विरुद्धं च' इत्यस्य स्थाने 'न विरुद्धं च' इति दृश्यते — अ, ई, उ, ऐ; 'विरुद्धं च इति दृश्यते — आ, ए.
[22] ०कारकत्वमिति — अ, ऋ; ०वारकमिति — आ.
[23] कार्ये विरुद्धोप० — अ.
[24] तयोर्भेदः सिद्धः — अ.
[25] भोगभुग्भोग० — उ.
[26] भोगतत्परः — ऊ, ऋ; भोगे तत्परः — ऐ.

अत्र मल[1]स्यावारकत्वं नोपपद्यत इति प्रसङ्गाद् मतङ्गमुनिः — 'अणुश्चिच्छक्तिमान्' इत्यादिना।

**मतङ्ग उवाच —**

**अणुश्चिच्छक्तिमां[2]श्चैतन्मलात्सूक्ष्मतरः स्थितः ।**
**[3]मलः प्रध्वस्त[4]चैतन्यः स्थूलः स्वातन्त्र्यवर्जितः ॥२१॥**
**तिरस्कर्तात्मनः[5] प्रोक्तो न्यायेनानेन नेष्यते ।**

न [6]व्यापकात्मनः तिरस्कर्ता मलः; अचेतनत्वाद्, अव्यापकत्वात्, स्वातन्त्र्यवर्जितत्वाच्च। [7]तद्धि आत्मतिरस्कर्तृत्वं चेतनत्वेन व्यापकत्वेन स्वातन्त्र्येण च व्याप्तमीश्वरे सिद्धमिति नात्र। शीतस्पर्शो वह्नेरितिवद्व्यापकविरुद्धोपलम्भाद् [8]मले निषिध्यत इति॥

नैतदनैकान्तिकत्वादिति सिद्धान्तः — 'ततः प्रोवाच' इत्यादि।

**परमेश्वर उवाच —**

**ततः प्रोवाच विश्वात्मा [9]यद्वत्पुंश्चेतनः क्षितौ ॥२२॥**
**वारुण्यात्मवशीकृत्य [10]धृष्यतेऽविकलेन्द्रियः ।**

यतः कादम्बर्यादि[11]गतानाम् अचेतनत्वाव्यापकत्वास्वतन्त्र[12]त्वानामपि धर्माणाम् आत्मवशीकरणस्य, [13]धर्षणस्य च, चैतन्यतिरस्कारात्मनो दृष्टत्वादनैकान्तिकत्वेन [14]नात्र व्यापकविरुद्धोपलम्भोपपत्तिरिति॥

[15]तत्र अनैकान्तिकत्वपरिहाराय पुनर्मतङ्गमुनिः — 'मुनिः प्रोवाच' इत्यादिना।

**मतङ्ग उवाच —**

**मुनिः प्रोवाच भगवन् भूतपिण्डमचेतनम् ॥२३॥**
**[16]तन्मद्यवशगं दृष्टं चैतन्यस्य किमागतम् ।**

---

[1] ०स्यावारकत्वे नोप० — ए, ऐ.
[2] ०श्चैतान् मलान् सूक्ष्म० — मु, उ; ०श्छेत्ता मलात् — ऊ, ऋ.
[3] मलप्रध्वस्त० — मु, उ, ओ.
[4] ०चैतन्योऽबलः स्वा० — मु, उ.
[5] तिरस्कर्ता मलः — मु, उ, ओ.
[6] व्यापकतरात्मतिरस्कर्ता — ऊ, ऋ.
[7] 'तद्धि आत्मतिरस्कर्तृत्वं' इत्यत्र 'तिरस्कर्तृत्वं' इति दृश्यते — अ, आ, ई, उ, ए; 'तिरस्कर्तु' इति दृश्यते — ऐ.
[8] मलो — अ, आ, ई, उ, ऋ, ए, ऐ.
[9] तद्वत्पुं० — ऊ, ऋ.
[10] दृश्यते — ऊ, ऋ.
[11] ०तोयानाम् — ऐ.
[12] ०त्वादीनामपि — अ, आ, ई, उ, ए.
[13] 'धर्षणस्य' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[14] नात्राव्यापकविरुद्धोपलब्ध्या सोपपत्तिरिति—ऐ.
[15] अत्र अनैकान्तिकपरि — ऊ, ऋ; तत्र अनैकान्तिकपरि० — ऐ.
[16] तन्मध्यवशगं — मु, उ, ओ.

न हि [1]वारुण्यादीनां [2]चैतन्य[3]तिरस्कारकत्वं सिद्धम्। अपि तु वात[4]श्लेष्मादिना शरीरेन्द्रिय-योरिव तत्रैव कम्पादिविकारदर्शनात्[5] तत्कृतोऽत्रानैकान्तिकता ॥

अत्र सिद्धान्तः — 'अचेतने स्थितः पात्र' इत्यादिना।

**परमेश्वर उवाच —**

**अचेतने [6]स्थितः पात्रे सुचिरं [7]वेगवानपि ॥२४॥**
**न पात्रस्य विकारः [8]स्यान्मन्यसे केन हेतुना ।**

सत्यम्। यदि [9]अचेतनमदहेतुत्वमचेतनस्य। तीव्रतरमदशक्तेरपि [10]तत्पात्रमदहेतुत्वासिद्धेः। [11]वातश्लेष्मादीनां तु मृतशरीरविकार[12]हेतुत्वेनादर्शनाच्च [13]चेतनतिरस्कारकत्वं सिद्धं यतः ॥

कथं तर्हि पीतमद्यस्य शरीरविकारा दृश्यन्ते। तत्रोच्यते — 'भोगात्मा' इत्यादि।

**भोगात्मा [14]चेतनः सिद्धस्तन्निषङ्गेण चेतनम् ॥२५॥**
**[15]पिण्डमत्रोदितं तस्माद्विशेषाद्धर्षणादिभिः ।**
**[16]ग्लानोत्कृष्टवपुष्मत्या छाययैवोपलक्ष्यते ॥२६॥**
**नेत्रादिभिर्विकारैश्च रक्षन्नपि विचक्षणैः ।**
**लक्ष्यते कारणं [17]कर्तुर्बाह्यै[18]रप्यन्तराश्रितम् ॥२७॥**

[19]भोक्तृपुरुषचैतन्य[20]विकारद्वारेणैवास्य [21]द्वेषहर्षादेरिव शरीरविकारहेतुत्वम्। न [22]तु साक्षात्। द्वेषहर्षादिभिर्बुद्धिगतैरपि चैतन्यविकारद्वारेण शरीरस्य ग्लानिविकासादि[23]दुःखसुखनेत्रच्छाया तथा-

---

[1] वारुणादीनां —अ, आ, ऋ, ए; वारुण्यादिना—ऐ.
[2] चैतन्यस्य तिरस्कार० — ए, ऐ.
[3] ०तिरस्कारत्वं० — अ.
[4] ०श्लेष्मादीनामिव शरीरेन्द्रिय० — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[5] ०दर्शनम् तत्कृतोऽत्र — अ.
[6] स्थिते मात्रे — ऊ, ऋ.
[7] वेगवत्त्वपि — ऊ; वेगवत्स्वपि — ऋ.
[8] स्यान्मद्यन्ते केन — ऊ, ऋ.
[9] 'अचेतनमदहेतुत्वमचेतनस्य' इत्यस्य स्थाने 'अचेतनमदहेतुत्वं मद्यस्य स्यात्। ततः शरीरमदहेतुत्वं सिद्धचेत्। तत्त्वसिद्धमेव। अचेतनमात्रस्थिरस्य' इति दृश्यते — ऊ, ऋ.
[10] तन्मात्रमद० — ऊ, ऋ.
[11] वातश्लेष्ममृतशरीर० — अ.
[12] ०हेतुत्वेन दर्शनादचेतनग्राह्यतिरस्कारकत्वं — ऊ, ऋ.
[13] चेतनतिरस्कारत्वं — अ; चेतनतिरस्कारकं — आ; चेतनग्राह्यतिरस्कारत्वं — ऐ.
[14] वै नरः सिद्धः — उ० पाठान्तरम्।
[15] पिण्डमात्रोदितं यस्माद्विपादप्रमदादिभिः — ऊ, ऋ.
[16] म्लानोत्कृष्ट० — ऊ, ऋ.
[17] कर्तुं बाह्यै० — ओ.
[18] ०रभ्यन्तराश्रितम् — मु, उ; ०राभ्यन्तरा-श्रितम् — ओ.
[19] भोगपुरुषे चैतन्य० — ए; भोक्तृपुरुषश्चै-तन्य० — ऐ.
[20] ०विकारेणैवास्य — ऊ, ऋ; ०विकारद्वारेणैव तस्य — ए.
[21] 'द्वेष' इति नास्ति — ऊ, ऋ.
[22] तुशब्दो नास्ति — ऊ, ऋ.
[23] ०दुःखसुखच्छाया — आ; ०मुखनेत्रच्छाया — ऊ, ऋ; ०दुःखैर्नेत्रच्छाया — ऐ.

भूता [1]दृश्यन्ते । [2]ययातिगूहिताभिप्रायाणामपि तद्द्वेष[3]हर्षादिकारणं [4]**लक्ष्यते** इत्यनैकान्तिकत्वादेषां हेतूनामत्र [5]वारुण्यादेरिव मलस्यापि चैतन्यावारकत्वं युक्तमेवेति ॥ २५–२७॥

न्यायसिद्धोऽयमर्थो[6]ऽन्यत्राप्यतिदिश्यते — 'एवम्' इत्यादि ।

**एवं विकारैः सहजैः सुखदुःखोपसर्पिभिः ।**
**समलोऽणुः किमाश्चर्यं [7]वास्यतेऽनादिकर्मणा ॥२८॥**
**तद्विपाकाभि[8]लाषित्वं नेच्छन्नपि प्रयाति हि ।**

यथा मलतिरस्कृत [9]एव मायीयैः, प्राधानिकैश्च पाशैः परिभूयत इत्युक्तम्[10]। **एवं** [11]कर्मणापि स्वविकारैः [12]**सहजैः** अनादिप्रवृत्तैः **सुखदुःखोपसर्पिभिः** भावप्रत्ययात्मकैः **वास्यते**। [13]न तु निर्मल इति। एवं मायीयकार्मयोर्बन्धयोः [14]अनादिहेतुहेतुमद्भावः प्रदर्शितः [15]प्रागुक्तो भवतीति ॥

एवं [16]च व्यतिरिक्ते मले सति, [17]न महाप्रलयतो मायोपसहारमात्रेण पुंसां [18]मोक्षप्रसङ्गः। अन्यथा [19]तु दुष्परिहार एवेत्युच्यते — 'तस्मिन्मायात्मक' इत्यादि ।

**तस्मिन्मायात्मके ग्रन्थौ [20]सुसूक्ष्मोऽतितिरस्कृतः ॥२९॥**
**पति[21]शक्त्युद्धृतो [22]भोगात्सुषुप्त इव लक्ष्यते ।**
**न विजानाति शब्दादीन्नात्मानं न च कारणम् ॥३०॥**
**स्थानं च [23]लुप्तवृत्तित्वाद्यावत्कालमहर्मुखम् ।**

[24]व्यापको हि आत्मा मायायां भोगाधिकारित्वेन तिरस्कृत [25]इत्युच्यते। ततश्च महाप्रलये

---

[1] दृश्यन्ते — अ, ऐ.
[2] यथा गृहीताभि० — अ; यया गृहीताभि० — आ; यया गूहिताभि० — ई, उ; यया गूढाभि० — ऐ.
[3] ०हर्षादिभिः कारणं — अ, ऐ.
[4] दृश्यते — ॠ.
[5] वारुणादेरिव — ए.
[6] ०ऽप्यन्यत्राप्यतिदिश्यते — अ, ए; ०ऽप्यन्यत्रातिदिश्यते — आ, ई, उ; ०ऽन्यत्रापि दृश्यते — ऐ.
[7] वासितोऽनादि० — मु, उ, ओ.
[8] ०लाषित्वान्नेच्छन्नापि — मु, उ.
[9] एवं — अ, आ, ई, उ, ए, ऐ.
[10] मतङ्ग० विद्या० ८. २० वृत्तौ ।
[11] कर्मणोऽपि — अ, आ.
[12] 'सहजैरनादिप्रवृत्तैः' इत्यारभ्य 'वास्यते' इत्यन्तस्य ग्रन्थस्य स्थाने 'सहजैः सुखदुःखमोहैः परिभूयते' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[13] 'न तु' इत्यारभ्य 'बन्धयोः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[14] अन्येनादिर्हेतुमद्भावः — अ; अनेन नादिहेतुमद्भावः — आ; अनेनानादिहेतुमद्भावः — ई, उ, ए; अनेनादिहेतुमद्भावः — ऐ.
[15] मतङ्ग० विद्या० ८. १७ –२० वृत्तौ ।
[16] चाव्यतिरिक्ते — अ, आ, ई, उ, ए, ऐ.
[17] नशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[18] दोषप्रसङ्गः — ए.
[19] तुशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] सुसूक्ष्मो न तिरस्कृतः — उ. पाठान्तरम् ; सुसूक्ष्मेऽपि तिरस्कृतः — उ, ॠ.
[21] ०शक्त्युज्झितो – ऊ, ॠ; ०शक्त्युत्थितो –ओ.
[22] भोक्ता प्रसुप्त इव — ऊ, ॠ.
[23] लब्धवृत्तित्वाद् — मु, उ; वृत्तिलुप्तत्वाद्- उ; लुप्तशक्तित्वाद् — ऊ, ॠ.
[24] व्यापकात्मा — ऊ, ॠ.
[25] इतिशब्दो नास्ति — आ, ई, उ, ऊ, ॠ, ऐ.

कार्य[1]कारणयोरुप[2]संहाराद् [3]भोगेभ्यः समुद्धृतो[4]ऽत्यन्तं मलावृतत्वाद् विनिवृत्तसमस्तसंवित् [5]सुषुप्तपदावस्थ इव भवति यावत् पुनः [6]सर्गारम्भकालमिति ॥

[7]यद्येवमेक एवायं[8] मलः। तत्कथं **पुंपाशेश्वरप्रकरणे** "[9]मोहो मदश्च रागश्च" इत्यादिना सप्तधा प्रोक्त इति मतङ्गमुनिश्चोदयति —'मलोऽर्णाः सप्तधा पूर्वम्' इत्यादि ।

**मतङ्ग उवाच —**

**मलोऽणोः सप्तधा पूर्वं भवता सूचितो मम ॥३१॥**
**[10]यथावत्तं स्वरूपेण भगवन् वक्तुमर्हसि ।**

अत्र सिद्धान्तः — 'मोहो नाम' इत्यादि ।

**परमेश्वर उवाच —**

**मोहो नाम मलः [11]पुंसः सहजोऽनादिमानिति ॥३२॥**
**[12]योनिः षण्णां [13]मदादीनां प्रधानत्वाद्द्विजोत्तम ।**

[14]सत्यम् । एक एवायं मोहाख्यो मलः। तस्मिंस्तु [15]सत्येव मदादयो[16] भवन्ति। [17]तदभावे च परिणतमलस्य मायीयबन्धसद्भावेऽपि दीक्षितस्य यतो न [18]भवन्ति । ततस्तेऽपि तत्स्वभावाः कथ्यन्ते इत्युक्तं [19]प्राक् ॥

यथा च मोहनिबन्धनैव तेषां प्रवृत्तिस्तथा मोहस्वरूपप्रतिपादनं [20]पूर्वमुच्यते —'सति मोह' इत्यादि ।

**सति मोहे [21]प्रकृष्टोऽणुर्मायातः पतिशक्तिभिः ॥३३॥**
**मोहशक्तिनिरुद्धात्मा मुह्य[22]त्यात्मार्थ एव हि ।**
**धर्मे[23]ऽप्यधिवसन्मोहाद्विपरीतेषु भावितः ॥३४॥**

---

[1] ०करणयोरुप० — आ, ई, उ, ए.
[2] ०संहारे — अ, आ, ई, उ, ए, ऐ.
[3] योगेभ्यः — ऊ.
[4] ०ऽत्यन्तमलावृत० —ऊ, ऋ, ए, ऐ.
[5] सुषुप्ततावस्थ — अ, आ, ई, उ, ए; सुषुप्तावस्थैव — ऐ.
[6] समारम्भ० — ऊ, ऋ.
[7] यद्येक एवायं — ऐ.
[8] अत्र 'मोहाख्यो' इत्यधिकम् — ए.
[9] मतङ्ग० विद्या० ६. १०३ उ०,१०४ पू०.
[10] यथावत्त्वं — उ, ओ; यथावत्तत्स्वरूपेण — ऊ, ऋ.
[11] पुंसां — ऊ, ऋ.
[12] यो हि षण्णां — मु, उ, ओ.
[13] अनादीनां — उ.
[14] सत्यमेव चायं — ऊ, ऋ.
[15] सत्येवं — आ.
[16] अत्र 'यतः' इत्यधिकम् — ऊ, ऋ.
[17] तदभावेन — अ, आ, ई, उ, ए; तदाभवेन — ऐ.
[18] भवति — ऋ.
[19] मतङ्ग० विद्या० — ६. १०२ उ०, १०३ पू० वृत्तौ ।
[20] पूर्वमुक्तमित्युच्यते — ऐ.
[21] प्रकृष्टेऽणु० — मु. उ.
[22] ०त्यात्मार्थमेव हि — ऊ, ऋ.
[23] ०ऽप्यधिवसेन्मोहाद् — मु, ओ; ०ऽप्यध्यवसेन्मोहाद् — उ; ०प्यध्यवसन्मोहाद् — ऊ,ऋ.

असत्कर्म[१]ण्यनायासात्सद्बुद्धया संप्रवर्तते ।
[२]विण्मूत्ररुधिरक्लिन्नां त्वगस्थिशकलीकृताम् ॥३५॥
भुक्तामपि स्त्रियं प्रीत्या तान्येवाङ्गानि मुद्रत ।
जुगुप्सते विरक्तोऽत्र[३] क्षणादन्यां [४]सुशोभनाम् ॥३६॥
दृष्ट्वा मोह[५]मलाविष्टो बाह्यावयवशोभया ।
आकृष्यमाणो मूढात्मा [६]साभिमानो विभावितः ॥३७॥
शिरश्छेदात्परं दुःखं तद्वियोगात्प्रपद्यते ।

[७]ज्ञत्व[८]कर्तृत्वनिरोधात्मके मलाख्ये **मोहे सति** कलादिभिरभिव्यक्तचेतनोऽपि, **मायातः मुह्यति** [९]अनात्म[१०]धर्मासत्कर्मादिषु विपरीतबुद्धया प्रवर्तते इति, मलात्मकान्मोहादन्यो माया[११]मोहस्तन्निमित्तक इत्यर्थः ॥

अधुना मलात्मकमोहनिमित्तत्वं षण्णामपि मदादीनां क्रमेणोच्यते — 'अस्मान्मोहवशाद्' इत्यादि ।

अस्मान्मोहवशात्क्षिप्रं मदेनैवाभिभूयते ॥३८॥
निर्भर्त्स्यमानोऽपि तदा ताड्य[१२]मानोऽपि भूरिशः ।
[१३]अन्धीकृतो मदेनाशु विरूपामपि रूपिणीम् ॥३९॥
[१४]मन्वानोऽस्याः परा भद्रा [१५]स्वर्गे नास्ति यशस्विनी ।
ततोऽभिभूयते [१६]गाढं [१७]रागेणातिबलीयसा ॥४०॥
नियम्यते यथा पङ्कः [१८]सकषायेऽपि वाससि ।
[१९]न जहाति क्षणं [२०]रागं नो च तृप्तिं [२१]प्रयाति हि ॥४१॥
क्षीणशक्तिर्यदा पश्चात्क्षीणद्रव्योऽथ मानवः ।

---

[१] ०ण्यनायासं सद् — ऊ, ऋ.
[२] विण्मूत्रपूयरुधिरसंक्लिन्नां शकलीकृताम् — ऊ, ऋ; विण्मूत्रपूयरुधिरक्लिन्नास्थिशकलीकृताः — ओ.
[३] जुगुप्सितवदुक्तात्मा — मु; जुगुप्सितविलुप्तात्मा — ऊ, ऋ.
[४] सुशोभनः — ऊ, ऋ.
[५] ०मदाविष्टो — मु; ०बलाविष्टो — ऊ, ऋ.
[६] सानुरागानुभावितः — ऊ, ऋ.
[७] अत्र नकारोऽधिकः — ऊ, ऋ.
[८] ०कर्तृत्वं तिरोधात्मके — ऐ.
[९] अनात्मो धर्माधर्मसत्कर्मादिषु — ऊ; अनात्मो धर्मासत्कर्मादिषु — ऋ.
[१०] ०धर्मासद्धर्मादिषु — ऐ.
[११] ०मोहस्तन्निमित्तीकृदित्यर्थः — अ, आ, ई, उ, ए, ऐ.
[१२] ०मानश्च भूरिशः — मु, उ, ओ.
[१३] अन्धीकृतमदेनाशु — ऊ, ऋ.
[१४] मन्येताभ्योऽपरा — मु, उ; मन्वन्नास्याः परा — उ० पाठभेदः; मन्यन्तेऽस्याः परा —ऊ, ऋ; मन्यन्नास्याः — ओ.
[१५] स्वर्गेऽप्यस्ति — मु, उ, ओ.
[१६] गाहं — ऊ, ऋ.
[१७] रागेणापि — मु, उ.
[१८] सकषाये तु वाससी — मु; सकषाये तु वाससि — उ, ओ.
[१९] तच्च जह्यात्क्षणं — मु, उ, ओ.
[२०] रागान्न च — मु, उ, ओ.
[२१] च याति हि — उ, ऋ.

तदा [1]विषादमाविश्य विषण्णवदनः सदा ॥४२॥
[2]स्वसूतौ स्नेहमाविश्य विषादमलपीडितः ।
त्यक्तुं [3]नोत्सहते [4]चित्तमियमेवाहमात्मनः ॥४३॥
[5]पश्यन्विषीदते पश्चाद्विषादेनाकुलीकृतः ।
विषादे च भवेच्छोषो मलश्चाणोः सुदुस्तरः ॥४४॥
शुष्यमाणस्य वैचित्र्यं [6]महान्पाशो न संशयः ।
[7]वियुज्ये त्वधुना येन बन्धु[8]वर्गात्सुलालितात् ॥४५॥
[9]कस्त्रातास्य कुटुम्बस्य गते वै पञ्चतां मयि ।
एवं संचिन्त्य संचिन्त्य वैचित्र्याकुलितेक्षणः ॥४६॥
कृतकृत्योऽहमथवा [10]पुत्रपौत्रस्नुषादिभिः ।
किमद्यापि मया कार्यं [11]हृष्टिमायाति तत्क्षणात् ॥४७॥
[12]विधात्रा सर्वजगतः स्थापितो[13]ऽहमनुक्रमात् ।
एवं संचिन्त्यमानोऽपि चिनोति च पुनः पुनः ॥४८॥
एवं दृष्ट्वा तु विभवमात्मीयं हृष्यते मुहुः ।
यद्यप्यन्ते मया प्रोक्तो [14]मलोऽयं हर्षणात्मकः ॥४९॥
तथापि व्यापकत्वेन द्रष्टव्यो मुनिपुङ्गव ।
[15]यतो दुःखावसानेषु हृष्टिः सर्वत्र दृश्यते ॥५०॥
लाभे चेप्सितवस्तूनामिष्टस्यापि समागमे ।

ननु बुद्धिधर्मा [16]एवैते धर्मज्ञानादिप्रत्ययरूपत्वेन तत्प्रकरणे [17]वक्ष्यमाणा मदादयः। तत्कथं मल[18]स्वभावा इति। तत्रोच्यते — 'सत्स्वेतेषु' इत्यादि।

सत्स्वेतेषु [19]पशोः पाशा मायातः [20]क्षुरिताः [21]सदा ॥५१॥
नान्यथा प्राकृतान्भोगान्भोक्तुं शक्नोति पुद्गलः ।

---

[1] विषयमाविश्य — मु.
[2] स्वस्मृतेः स्नेह० — उ.
[3] नो सहते — उ.
[4] चितादियमेवा० — ऊ, ऋ.
[5] पश्यन्निषीदते — ओ.
[6] महत्पापं न — मु, ओ; मलात्पापं न — उ.
[7] वियुज्यामोऽधुना — ओ.
[8] ०वर्गान् सुलालितान् — मु, उ, ओ.
[9] कस्त्राताद्य — ऊ.
[10] पौत्रपुत्र — ऊ, ऋ.
[11] दृष्टिमायाति — ऊ, ऋ; सृष्टिमायाति — ओ.
[12] विधातुः सर्व० — मु, उ, ओ.
[13] ०ऽयमनु० — मु, उ, ऊ, ऋ.
[14] मनसो हर्ष० — उ.
[15] यदा — ओ.
[16] एव ते — अ, आ, ई, उ.
[17] वक्ष्यमाणमदादयः — अ; वक्ष्यमाणान्मदादयः — आ; मतङ्ग० विद्या० १७. १३३ उ० — १५७.
[18] ०स्वभाव इति — अ.
[19] पशोर्भोगो — मु, उ; पशोर्भोगा — ओ.
[20] क्षुरितः — मु, उ; क्षरिताः — ओ.
[21] कलाः — ऊ, ऋ.

बुद्ध्युपसंहारेऽपि तेषां प्रकृतिसंस्काररूपत्वेन अवस्थितेः, [1]मले सतीव तेष्वपि सत्सु [2]यतो मायीयाः [3]पाशाः [4]भोगार्थं पुंसो भवन्ति। ततस्तेऽपि मलस्वभावा इत्युच्यन्ते ॥

तथा हि — 'एवंविधैः' इत्यादि।

**एवंविधैरसंख्यातैरणुभिः परि[5]पूरिता ॥५२॥**
**माया मायाविनी यस्माज्जगतः [6]परिकीर्तिता ।**

समलैरेव **असंख्यातैः** पुरुषैः संबद्धा **माया** विपरी[7]तार्थप्रदर्शकत्वेन मोहिका कीर्तिता। [8]न तु [9]अनेकविधैर्निर्मलैः [10]संबद्धेति ॥

किं तत् [11]जगत्। [12]यस्य सा मायाविनीत्युच्यते — 'जगच्चराचरम्' इत्यादि।

**जगच्चरा[13]चरं सैव विधात्रा क्षोभिता सती ॥५३॥**

**सैव** माया, [14]यदा तत्त्वभूतभुवनविकारैरनन्तेशेन **क्षोभिता** भवति तदा पुंसां जन्मगमनहेतुत्वाद् जगच्छब्देनोच्यते। न तु तेषां स्वतो [15]जगद्रूपतेत्यर्थः ॥५३॥

जगदात्मना चास्याः [16]क्षोभे क्रमः — 'तद्वासनाभिः' इत्यादि।

**तद्वासनाभिः सूक्ष्माभिर्बहु[17]कालानुसारिभिः ।**
**प्रवास्यन्तेऽणवः सूक्ष्माः पाशानां वशवर्तिनः ॥५४॥**
**[18]पश्चात्कलादिभिः [19]स्थूलैर्बध्यन्तेऽध्वनि संस्थिताः ।**

तस्याः मायायाः [20]वासनाः शक्तिरूपत्वात् [21]सूक्ष्माः चिरकालानुबन्धिन्यो महाप्रलयं याव[22]दवस्थिताः, ताभिः [23]कलादितत्त्वरूपाभिः प्रथमं[24] व्यापका अपि **अणवः** यतः कर्मयोगात् **पाशानां**

---

[1] मलीमसैव तेष्वपि — ऋ; मले सति एतेष्वपि — ऐ.
[2] 'यतः' इत्यत्र 'सन्तः' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[3] पाशभोगार्थाः — अ.
[4] भोगार्थाः — आ, ई, उ, ए, ऐ.
[5] ०पूरितम् — ओ.
[6] परिपूरिता — ऊ, ऋ.
[7] ०तार्थदर्शक० — ऊ, ऋ.
[8] नकारो नास्ति — अ.
[9] अनेवंविधैः — ऊ, ऋ.
[10] संबन्धेति — अ, ए.
[11] 'जगत्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[12] यस्याः सा — आ.
[13] ०चरा सैव — ऊ, ऋ.
[14] या तत्त्व० — ऐ.
[15] जगद्दृश्यत इत्यर्थः — ए.
[16] क्षोभक्रमः — ऊ; क्षोभे क्रमाः — ए; क्षोभोपक्रमः — ऐ.
[17] ०कालाभिसारिभिः — उ; ०कालानुवर्तिभिः — उ० पाठान्तरम्, ओ.
[18] पश्चात्कालादिभिः — ऊ, ऋ.
[19] स्थूलैर्भुज्यन्ते — ऊ, ऋ.
[20] 'वासनाः' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] सूक्ष्मात् — ऐ.
[22] ०दवस्थितेः — अ, आ, ई, उ, ए, ऐ.
[23] कालतत्त्व० — आ, ई, उ.
[24] अत्र 'भोगार्थं' इत्यधिकम् — ऋ.

**वशवर्तिनः**, ततः प्रकर्षेण वास्यन्ते भोगार्थं [1]संस्क्रियन्ते। **पश्चात् तु**[2] **स्थूलैः** [3]**कलादिभिः** [4]भुवनरूपैर्भुवनजशरीररूपैश्च [5]संयोज्यन्ते इति। एतदुक्तं भवति — तत्त्वसृष्टेरनन्तरं भुवनादिसृष्टिरिति ॥

तथा — 'प्रधानमपि' इत्यादि।

**प्रधानमपि मायोत्थं कलातः स्थूलतां [6]गतम् ॥५५॥**
**तस्य याः सूतयः पुंसः संबन्धोऽतिगरीयसः ।**

[7]**प्रधानं** यद् [8]**मायोत्थम्** अव्यक्ताख्यं [9]वक्ष्यमाणम्। न तु सांख्यप्रसिद्धं गुणात्मकमित्यर्थः। तदपि **कलातः** एव **स्थूलतां गतम्** क्रमेग व्यक्तीभूतम्। साक्षात्कला[10]जातमित्यर्थः। **तस्य** च प्रधानस्य **अतिगरीयसः** गुणकारणत्वेन [11]वक्ष्यमाणस्य **याः** [12]**सूतयः** गुणबुद्ध्याद्याः महाभूतपर्यन्ताः, ताभिः मह **पुंसः संबन्धः** तथैव क्रमेणेति ॥

तदेवम् — 'पुंबन्धो जगतः' इत्यादि।

**पुंबन्धो जगतः कृत्स्नो [13]मायोत्थः परिभाष्यते ॥५६॥**

**जगतः** प्रागुक्तस्य संबन्धी यः पुंसां बन्धः तत्त्वभुवनाद्यात्मकः प्राधानिकः, [14]तत्प्रसूत्यात्मकश्चोक्तः [15]स [16]सकलो [17]मायोत्थत्वेन **परिभाष्यते** ।

"[18]मायीयमाणवं कार्ममेतावदणुबन्धनम्।" इत्यादौ मायीयत्वेन कारणकारणत्वादुच्यते। न तु कालादिवत् साक्षान्माया[19]जन्यतयेति ॥५६॥

अत एव — 'हारिणी' इत्यादि।

**हारिणी या शिवस्योक्ता तयात्मनि [20]वशीकृता ।**
**प्रवर्तते तु संहारे मायाणूनां महामुने ॥५७॥**

---

[1] सत्क्रियन्ते — ए.
[2] तुशब्दो नास्ति — ऐ.
[3] कलादिभुवनरूपैर्भवनशरीर० — ए.
[4] भुवनरूपान्भुवनजनशरीर० — ऊ; भुवनाद्रूपान्भुवनजनशरीर० — ऋ.
[5] संयुज्यन्ते — ऊ, ऋ.
[6] गतः — उ, ओ.
[7] 'प्रधानं' इत्यारभ्य 'अतिगरीयसः' इत्यन्तं नास्ति — ऊ.
[8] मायार्थम् — अ, ऋ; मायोक्तम् — ए.
[9] मतङ्ग० विद्या० १४. ९ उ०–१२ ; १५. १–१३ वृत्तौ. ।
[10] ०जनकमित्यर्थः — ऐ.
[11] मतङ्ग० विद्या० १५. ३ उ० — ५ पू०.
[12] स्थूलरूपतया बुद्ध्याद्याः — अ.
[13] मायातः — ऊ, ऋ.
[14] तत्स्फूर्त्यात्मक० — अ, ऊ, ऋ; तत्सूत्रात्मक० — ए; तत्प्रसृत्यात्मक० — ऐ.
[15] 'स' इति नास्ति — अ.
[16] सर्वो — ऊ, ऋ.
[17] मायोक्तत्वेन — ऊ, ऋ.
[18] स्वायम्भुवे — ३३. २३ पू०; 'मायीयमाणवं' इत्यारभ्य 'कारणत्वादुच्यते' इत्यन्तं नास्ति — ऊ; मायेयमाणवं — स्वायम्भुवमातृकापाठः।
[19] ०जन्यतेति — अ, आ, ई, उ, ए, ऐ.
[20] परीकृतः — मु० पाठान्तरम्, उ.

साक्षात्पारम्पर्येण च समस्त[1]जगदुपादानकारणत्वाद् **माया** [2]महाप्रलयेऽपि ईश्वरप्रेरिता, **अणूनां** सर्वेषामेव पुरुषाणां सर्वात्मना तत्त्वभुवनाद्युपसंहारे [3]**प्रवर्तते**। न तु [4]वक्ष्यमाणावान्तरगुणादिप्रलयवत् [5]सर्वेषामसर्वात्मना, [6]केषांचिच्च नैवेति [7]वक्ष्यामः ॥५७॥

अत्र प्रसङ्गान्मतङ्गमुनिः — 'स्वभाव' इत्यादि।

**मतङ्ग उवाच —**

> **स्वभावो रश्मयः पत्युर्ग्रन्थेरपि तदीरणात् ।**
> **व्यक्तये जगतः [8]सिद्धाः संहारः केन हेतुना ॥५८॥**
> **संकोचश्चे[9]त्तदायत्तः [10]पत्युस्ते रश्मयस्तदा ।**
> **[11]ध्रुवं संकोच[12]धर्माणो न च सर्वगतः प्रभुः ॥५९॥**
> **[13]व्यक्तये नो भवेन्नाशे कुलालस्य यथा तथा ।**

भगवतो **रश्मयः** ये शक्त्यात्मकाः, न ते व्यतिरिक्ताः। अपि तु जगत्कारणाय स्वभाव एवासौ [14]इत्युक्तम्। एवं मायाया अपि ईश्वरप्रेरणेन जगदुपादान[15]कारणात्मक[16]स्वभाव एव शक्तय इति, स्वभावस्यान्यथात्वा[17]भावतः संहारानुपपत्तिः। अथ यदि [18]संहारोऽपि [19]तयोः स्वभावान्तरायत्त एवेत्युच्यते। यद्येवं **रश्मयस्ते** प्रलयधर्माण [20]इत्यनित्याः। यश्चानित्यो **न** असौ **सर्वगतः**, यथा घटादिरिति, [21]तदव्यतिरेकाद् ईश्वरोऽप्यनित्योऽसर्वगतश्च प्रसज्यते। यस्य च यदुत्पत्तौ हेतुत्वं[22] न तस्य तन्नाशे, **यथा** घटे **कुलालस्य**। तन्नाशे तु जलवाहकस्य। [23]ननु कुम्भ[24]कारस्यात्रापि हेतुत्वं दृश्यते। सत्यम्। [25]तस्य रूपान्तर[26]परिणतेर्युक्तम्। [27]न त्वीश्वर-

---

[1] ०जगदुत्पादनकारणत्वाद् — अ, आ, ई, उ.
[2] 'महाप्रलयेऽपि' इत्यत्र 'प्रलयेऽपि' इति दृश्यते — ऊ, ऋ, ए.
[3] वर्तते — ऊ, ऋ.
[4] वक्ष्यमाणान्तर० — ऐ.
[5] 'सर्वेषां' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[6] केषांचिद्बन्धेनैवेति — अ, आ, ई, उ, ए; केषांचिद्बन्धनेनैवेति — ऐ.
[7] कनिष्ठमध्यमप्रलययोरुक्तिः—मतङ्ग० विद्या० २५. २०—५३ पू० वृत्तौ। महाप्रलयोक्तिः — मतङ्ग० विद्या० २५. ५३ पू० — ५८ पू० वृत्तौ।
[8] सिद्धः — ऊ, ऋ; सिद्धा — ओ.
[9] ०त्तदा पत्युः पत्युस्ते — ऊ, ऋ.
[10] तदा ते रश्मयः पते — मु, उ, ओ.
[11] यूयं — मु.
[12] ०धर्मिण्यो — मु; ०धर्माणां — ऊ, ऋ.
[13] मुक्तये वा न खे नाशं — ऊ, ऋ.
[14] मतङ्ग० विद्या० ३. १ पू० 'स्वशक्तिकिरणात्मकम्' इत्यस्य वृत्तौ, ४. ७ उ० 'स्वयोगोद्भूतरिकणैः' इत्यस्य वृत्तौ च।
[15] ०कारणस्वभावशक्तयः — आ; कारणात्मस्वभावः — ऋ.
[16] ०स्वभावशक्तयः — अ, ई, उ. ए, ऐ.
[17] ०भावात् संहारानुप० — ऊ, ऋ.
[18] संहारेऽपि — ऊ, ऋ.
[19] तया — ऐ.
[20] इत्यनित्याश्चानित्येनासर्वगता यथा — अ, आ, ई, उ, ए; इत्यनित्यतश्च नित्यो नासौ —ऐ.
[21] तदप्यतिरेकाद् — ए.
[22] अत्र 'यदि ईश्वरस्य' इत्यधिकम् — ए.
[23] 'ननु' इति नास्ति — अ, आ, ई, उ, ए.
[24] ०कारकस्यात्रापि — ए.
[25] 'तस्य' इति नास्ति — ऊ, ऋ.
[26] परिणामं युक्तम् — ऐ.
[27] नेश्वरस्यानित्यप्रसङ्गात् — अ; न त्वीश्वरस्यानित्यप्रसङ्गात् — आ, ई, उ, ए; न त्वीश्वरस्य नित्यत्वप्रसङ्गात् — ऐ.

स्यानित्यत्वप्रसङ्गादित्यभिप्रायः। ततश्च जगदुत्पत्तौ [1]यदीश्वरस्य हेतुत्वं, न हि तन्नाशे। [2]अथ जगन्नाशे हेतुत्वं, न [3]तर्हि तदुत्पत्ताविति, तत्रेश्वरान्तरं वाच्यमिति[4] [5]एकेश्वराभ्युपगमविरोधः। न चैतत् [6]प्राक् पतिपदार्थप्रकरणादौ विचारित[7]मित्यधिगतार्थता प्रश्नस्य॥

अत्र सिद्धान्तः — 'कर्तृत्वमिष्यत' इत्यादि।

**परमेश्वर उवाच —**

**कर्तृत्व[8]मिष्यते [9]सृष्टौ शक्तिभिः परमेष्ठिनः ॥६०॥**
**[10]संहारे [11]नेष्यते कस्माद्यथा भानोर्गभस्तिभिः।**
**अम्भसः सृष्टिसंहारे न [12]कुलालनिदर्शनात् ॥६१॥**

भवेदेष [13]दोषप्रसङ्गः यदि सृष्टिसंहारयोरिव [14]तत्कर्तृत्वस्यापि भेदः सिद्धः स्यात्। तत्तु [15]ज्ञत्ववद् विषय[16]वैचित्र्येऽप्यभिन्नमेव। [17]न चानित्य[18]त्वापादकमित्युक्तं [19]प्रागात्म[20]सिद्धौ। ततश्च सृष्टाविव संहारेऽपि [21]तदेव शक्तिभिर्भगवतः कर्तृत्वमिति, [22]कस्य केन विरोधः। [23]यदप्युक्तम् — "यस्योत्पत्तौ हेतुत्वं न तस्य विनाशे, यथा कुलालस्य" इति। तदपि न[24]। भानुनानैकान्तिकत्वात्। भानोः हि [25]एकस्यैव एकरूपैश्च गभस्तिलक्षणैः किरणैः, उदकादेः [26]सृष्टौ संहारे च कर्तृत्वं सिद्धमिति। एवमीश्वरस्यैकस्यैव भविष्यतीति [27]न दोषः कश्चित् ॥६०–६१॥

अपि च महाप्रलयानभ्युप[28]गमे स एवायं "[29]न कदाचिदनीदृशं जगद्" इति जैमिनीयपक्ष एवोक्तः स्यात्। ततश्च मायेश्वरयोरप्यसिद्धिः। तत्साधनेनैव [30]च स [31]निराकृतः। तथा हि — 'कृतकस्य' इत्यादि।

---

[1] यद्वेश्वरस्य हेतुत्वं — ऊ, ॠ; यदीश्वरहेतुत्वं ए.
[2] 'अथ' इति नास्ति — आ, ई, उ, ए.
[3] तर्त्तहि — ऐ.
[4] अत्र 'तद्व्यतिरेकादीश्व[रः[' इत्यधिकम् —अ.
[5] एकेश्वरस्याभ्युप० — ऐ.
[6] मतङ्ग० विद्या० ३–६ प्रकरणेषु।
[7] ०मित्यगतार्थता — आ, ई, उ, ए, ऐ.
[8] ०मीप्ससे — मु, ओ.
[9] सृष्टेः — मु, उ, ओ.
[10] संहारो — ऊ, ॠ.
[11] नेप्सितः — मु.
[12] कुलालादिदर्शनात् — उ, ॠ.
[13] 'दोष' इति नास्ति — ऊ, ॠ, ऐ.
[14] 'तत्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[15] ज्ञत्वविषय० — आ; ज्ञत्वविषये — ऐ.
[16] वैचित्रेऽप्यभिन्न० — ऐ.
[17] तच्चानित्य — अ.
[18] ०त्वापादकत्वमित्युक्तं — अ, आ, ई, उ, ऊ, ॠ, ॠ, ए.
[19] मतङ्ग० विद्या० ६. ३१, ३४ उ०, ३५ पू०, ९९ पू० वृत्तौ।
[20] ०वुद्धौ — अ.
[21] 'तदेव' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[22] तस्य — ए.
[23] यदुक्तं — अ, आ, ई, उ, ऊ, ए, ऐ.
[24] नकारो नास्ति — आ, ए.
[25] एकस्य वैक० — ऊ; एकस्य नैक० — ॠ.
[26] सृष्टावुपसंहारे — अ, आ, ई, उ, ए, ऐ.
[27] नकारो नास्ति — ऐ.
[28] ०गमे वायं — अ, आ, ई, उ, ए.
[29] आकरो न लभ्यते।
[30] स च निरा० — अ, आ, ई, उ, ए.
[31] मतङ्ग० विद्या० — ६.४४ वृत्तौ।

**कृतकस्य विनाशोऽस्ति सर्वत्रैव न च स्वयम् ।**
**[1]नानिमित्तो[2]ऽथवाकर्ता निमित्तं शक्तिपूर्वकम् ॥६२॥**
**शक्तयश्चात्र[3] संपूर्णाः स्वव्यापारसुपेशलाः ।**
**अव्याहतगुणाकीर्णा यस्यासौ परमेश्वरः ॥६३॥**
**स्वतन्त्रः सर्वकर्तृत्वे तस्य किं प्रविचार्यते ।**
**मायापि [4]तद्वशा यस्मान्नित्यं प्रसवधर्मिणी ॥६४॥**

कार्यं तावज्जगत् [5]संनिवेशवत्त्वाद् घटादिवद् इत्युक्तम् । कार्यत्वे चास्य घटादेरिव [6]**सर्वत्र** [7]दृक्क्रियाशक्तियुक्तकर्तृ[8]पूर्वको **विनाशः** सिद्धः । **न** स्वतो [9]निर्हेतुको वा इत्युक्तं [10]सौगतप्रतिक्षेपे । यश्चासौ [11]दृक्क्रियाशक्ति[12]युक्तः कर्ता [13]सः, जगदुत्पत्ताविव तत्संहारेऽप्येक एव **स्वतन्त्रः** सिद्ध्यतीत्युक्तमीश्वर[14]परीक्षायामिति, कुतो "[15]न कदाचिदनीदृशं जगद्" इत्यस्य पक्षस्य **पुनर्विचारा**वकाशः । तथा जगतः कार्यत्वादेव उपादानकारणेन घटादेरिव [16]भाव्यमिति मायासिद्धिरुक्तैव "[17]उपादानं", "[18]तथा माया" इत्यादिना **पुंपाशेश्वरप्रकरणे** इति, नैष प्रसङ्गः । एवं तत्त्वरूपेण मायोक्ता ॥६२–६४॥

भुवनरूपेणोच्यते — 'मधुकोशपुटाकारा' इत्यादि ।

**मधुकोशपुटाकारा निचिता परमाणुभिः ।**

मधुनः संभवस्थानानां कोशानां पुटानीव आकारो यस्याः । **निचिता** च व्याप्ता [19]सर्गकालेऽपि प्रलयाकलैरसंख्यातैः । यद्वक्ष्यति "[20]शक्तिसंमूर्च्छितात्मानः" इत्यादि ॥

अत एव — 'कृष्णाम्बुमुक् चित' इत्यादि ।

**कृष्णाम्बुमुक्चिते व्योम्नि मायाख्ये शिवशक्तयः ॥६५॥**
**विभान्ति कारणत्वेन रात्राविव तडिल्लताः ।**
**रुद्राश्च भुवनाधारा [21]वृता रुद्रैः सहस्रधा ॥६६॥**

---

[1] न निमित्तौ — उ.
[2] ०ऽथवा कर्तुर्निमित्तं — ऊ, ॠ.
[3] ०श्चापि — ऊ, ॠ.
[4] तद्वशाद्यस्मा० — ऊ, ॠ.
[5] संनिवेशवशाद् — ॠ; संनिवेशत्वाद् — ऐ.
[6] सर्वकर्तृकक्रियाशक्ति० — ऐ.
[7] चित्क्रियाशक्ति० — ऊ, ॠ.
[8] पूर्वकोऽपि नाशः — अ, ॠ, ए; पूर्वकोत्पत्तिविनाशौ सिद्धौ — ऐ.
[9] निर्हेतुकौ — ऐ.
[10] मतङ्ग० विद्या० ६. ९९ उ०, १०० पू० वृत्तौ ।
[11] दृक्क्रियायुक्तः — ऊ, ॠ.
[12] ०युक्तकर्ता — अ, ए.
[13] 'सः' इति नास्ति — आ.
[14] मतङ्ग० विद्या० ६. ९९, १०० पू० वृत्तौ ।
[15] आकरो न लभ्यते ।
[16] भाव्यमिति सिद्धि० — अ.
[17] मतङ्ग० विद्या० ६. ९९ उ०.
[18] मतङ्ग० विद्या० ६. १०० पू०.
[19] सर्वकालेऽपि — ऊ.
[20] मतङ्ग० विद्या० ८. ९३ पू०.
[21] भान्ति रुद्रैः — उ.

तस्यामवस्थायां [1]**कृष्णाः** चैतन्योद्वलनसमर्थत्वाद् **अम्बुमुचश्चैव** कलादि[2]क्षित्यन्तानां तत्स्रोत-सामुद्गमनयोग्यत्वात्, तैः शक्त्यात्मकैः **चिते** व्याप्ते तस्मिन् मायाव्योम्नि शिवशक्तिजन्यत्वात् **शिवशक्तयः** अनन्तादिविद्येशाः कारणत्वेन [3]प्रकाशन्ते [4]दीप्तिभिः **रात्राविव** विद्युल्लताः। तथा भुवनानि आधारो येषां ते भुवनेशाः संख्यारहितैः **रुद्रैः वृताः** तत्र [5]भान्तीति। ते च[6] भुवनेशा अपि उत्सर्गतोऽनन्तेशकृता [7]एवेति गम्यते ॥६५-६६॥

अथ कियन्ति तद्भुवनानि। कथं च स्थितानीत्युच्यते — 'ग्रन्थेरूर्ध्वम्' इत्यादि।

**ग्रन्थेरूर्ध्वं कपालानि षट्संख्यातानि सुव्रत ।**
**तावन्त्यधस्ताद्दिव्यानि [9]रचितानि च धातुभिः ॥६७॥**
**नानारत्नविचित्राणि [10]ह्येतावन्त्यधुनोच्यते ।**
**विभागो भुवनेशानां क्रीडाभूमिस्थितात्मनाम् ॥६८॥**
**भुवनानामियं माला मायान्तर्वर्तिनी शुभा ।**

ग्रन्थिशब्देनात्र [11]न मायोच्यते। अपि तु [12]कार्यग्रन्थिः। [13]वक्ष्यमाणानां [14]विग्रहेशानादीना-मष्टानां [15]रुद्राणां[16] निवासस्थानमेव। ततश्च, **ऊर्ध्वं** षड् भुवनानि, अधश्च षड् इत्येवं द्वादश स्थितानीति[17]। **इयं** च भुवन[18]माला न मायात्मनि, शक्तिरूपत्वेन [19]भुवनाधारत्वासंभवात्। [20]तत्-संभवे वा कारणान्तरपूर्वकत्वेन [21]परमकारणत्वायोगादित्युक्तम्[22]। अपि तु तत्प्रान्तर्वर्तिनी, कलादिभ्यः [23]प्रागुत्पन्ना तदूर्ध्वं च वर्तत [24]इत्युच्यते॥

अथ तद्भुवनेशानां कीदृशानि शरीराणीत्युच्यते[25] — 'रुद्राणां कार्यकरणम्' इत्यादि।

---

[1] कृष्णाश्च तेऽम्बुमुचश्चेतनोपोद्वलना० — ऊ, ऋ.
[2] ०क्षित्यन्तानन्तस्रोतसा० — ऊ, ऋ.
[3] प्रकाश्यन्ते — ऊ, ऋ.
[4] योगिनां रात्राविव — ऊ, ऋ; दीप्तादिभिः रात्राविव — ऐ.
[5] भवन्तीति — आ.
[6] अत्र 'भुवनवद्' इत्यधिकम् — ऊ, ऋ.
[7] एव गम्यन्ते — ऊ, ऋ.
[8] ०स्ताद्रम्याणि — ऊ, ऋ.
[9] रचितानीव धातुभिः — ऊ, ऋ.
[10] एतावन्त्य० — उ, ऊ, ऋ.
[11] नकारो नास्ति — ऋ, ए.
[12] तत्कार्य० — ऊ, ऋ.
[13] मतङ्ग० विद्या० ८. ८३-८५ वृत्तौ।
[14] विग्रहेशादीना० — ए, ऐ.
[15] 'रुद्राणां' इति नास्ति — अ,
[16] अत्र 'तथा' इत्यधिकम् — ए.
[17] इतिशब्दो नास्ति — ऊ, ऋ.
[18] ०मालानां मायात्मनि — अ.
[19] 'भुवनाधार' इत्यारभ्य 'पूर्वकत्वेन' इत्यन्तं नास्ति — ऊ, ऋ; भुवनाधारत्वसंभवात् — अ; भुवनासंभवात् — ऐ.
[20] तत्स्वभावे — आ, ई, उ.
[21] परमकारणत्यागाद् — अ, आ, ई, उ, ए, ऐ.
[22] मतङ्ग० विद्या० ८. २-५ वृत्तौ।
[23] प्रागुत्पन्नत्वादूर्ध्वं — अ, आ, ई, उ, ए, ऐ.
[24] इत्युक्तम् — अ, आ, ई, उ, ए, ऐ.
[25] ०णीत्युच्यन्ते — ऐ.

**रुद्राणां [1]कार्यकरणं [2]ब्रह्माख्यमतिनिर्मलम् ॥६९॥**
**[3]अन्योन्यापेक्षया [4]संस्थं क्रमशो [5]गुणवत्तरम् ।**

ब्रह्म बृहत् सर्वस्मात् [6]स्वकार्यात्, स्वकार्य[7]बृंहकत्वाच्च मायैव ब्रह्मोच्यते, तेन [8]यदाख्यायते तद् [9]मायीयमित्यर्थः । यद्वक्ष्यति —

[10]"सूक्ष्मपाशावृताः सर्वे न च स्थूलैस्तिरस्कृताः" इति ।

[11]न तु ब्रह्माण्यत्र सद्योजातादीनि, तदानीं हि रुद्राणामपि[12] शिववन्मान्त्रशरीरेण व्यापकेन योगात् प्रतिनियतभुवनेश्वरत्वभोक्तृत्वादेरनुपपत्तिः । शरीराविनाभावात्तस्येति । शक्यते [13]च वक्तुं तेषामपि [14]मायीयान्येव कार्य[15]करणानि मायागर्भाधिकारित्वाद् [16]ब्रह्मेन्द्रादिवदिति ।

तच्च तेषाम् [17]**अतिनिर्मलं** मायीयत्वेऽपि मोहकमलशून्यत्वाद्[18] अस्मदादीनामिव च [19]परस्परापेक्षयैव स्थितम् । [20]तदुक्तम् — [21]"न विना भावैर्लिङ्गम्" इत्यादि । **गुणवत्तरमिति** अणिमादिगुणयुक्तम् ॥

अथ किं तेषां कर्मनिबन्धनमेव[22] [23]तत्कार्यकरणम् । [24]नेत्युच्यते — 'स्वेन स्वेन' इत्यादि ।

**स्वेन स्वेन तु वीर्येण रुद्रा भोगभुजः शिवाः ॥७०॥**
**विशुद्धकारणत्वेन [25]मायाञ्जनविवर्जिताः**
**भुवनेषु विचित्रेषु क्रीडन्त्यमिततेजसः ॥७१॥**

[26]यतस्तैः कलोत्तीर्णत्वात् **स्वेन स्वेन** अधिकारित्वलक्षणेन **वीर्येण** भोगा भुज्यन्ते । तत-

---

[1] कार्यकरणाद् — मु, उ.
[2] ब्रह्माख्यमिति — ऊ, ऋ.
[3] अन्योन्यापेक्षं — ऊ, ऋ; अन्योन्यापेक्षा —ओ.
[4] क्रमशः संस्थितं गुण० — ऊ, ऋ, ओ.
[5] गुणवर्जिताः — उ० पाठान्तरम् ।
[6] 'स्वकार्यात्' इति नास्ति — अ.
[7] ०ब्रह्मकत्वाच्च — अ, आ, ई, उ, ऊ, ए; ०बृंहणत्वाच्च — ऐ.
[8] यथाख्यायते — ऐ.
[9] मायेयमित्यर्थः — अ, आ, ई, उ, ए, ऐ.
[10] मतङ्ग० विद्या० ८. ७९ पू०.
[11] 'न तु' इत्यत्र 'यदि' इति दृश्यते —अ, आ, ई, उ, ए, ऐ.
[12] अत्र 'मायीयान्येव' इत्यधिकम् — ऐ.
[13] चशब्दो नास्ति — आ.
[14] मायीयानीव — ऊ, ऋ.
[15] ०करणादीनि — अ.
[16] ब्रह्मेन्द्रवदिति — ऊ, ऋ.
[17] अपि निर्मलं — ऊ, ऋ; इति निर्मलं — ऐ.
[18] मोहकत्वमलशून्यं — ऊ, ऋ; मोहकत्वमलाशून्यत्वाद् — ऐ.
[19] परस्परमापेक्षयैव — ऐ.
[20] यदुक्तम् — ऊ, ऋ.
[21] सांख्यका० ५२ पू०.
[22] ०निबन्धतो — ऊ; निबन्धनो — ऋ.
[23] तत्कार्यकारणं — अ; 'तत्कार्यकरणं' इत्यत्र 'भोगः' इति दृश्यते — ऊ, ऋ; तत्कार्यकारणा — ऐ.
[24] नकारो नास्ति — ऐ.
[25] मायाञ्जनविवर्जिताः — मु, उ; मायाज्ञानविवर्जिताः — ऊ, ऋ.
[26] 'यतस्तैः' इत्यारभ्य 'वेदितव्यम्' इत्यन्तस्य ग्रन्थस्य स्थाने 'आत्मीयेनैव अधिकारात्मना वीर्येण भोगभुजः । यतो विशुद्धसमोऽहङ्कार्यकरणं तेषामित्युक्तम् ।' इति दृश्यते —ऊ, ऋ.

स्तेषां [1]कार्यकरणमपि न कर्मनिबन्धनम् । अपि तु [2]निर्मलत्वेनोक्तत्वाद् [3]विशुद्धेन शिवाराधनाद्यात्मना [4]कारणेनावस्थितं वेदितव्यम् । कर्मनि[5]बन्धनत्वे हि अशुद्धमेव स्यात् । अत-एव **शिवाः** [6]इत्युच्यन्ते । [7]**मायाञ्जनविवर्जिताः** इति सकलाः [8]सन्तोऽधिकृता अपि[9] न [10]मायाया वश्या इत्यर्थः । ते च भुवनेष्वधिकारिणः । अत एव [11]तद्भुवनेशत्वमेव तेपाममिततेजस्त्व-मुक्तम् ॥७०–७१ ॥

[12]अथ किमेते सर्वज्ञाः । [13]नेत्युच्यते — 'ऐश्वर्यमदम्' इत्यादि ।

**ऐश्वर्य[14]मदमाविश्य मन्यमाना महोदयाः ।**
**[15]मत्तः श्रेष्ठतरं नान्यत्कारणं जगतः परम् ॥७२॥**
**अहमेव समस्तस्य जगतोऽस्य जगत्पतिः ।**
**तस्मादधःस्थितस्यापि [16]गर्वोऽयं नात्र संशयः ॥७३॥**

एवमेते[17], [18]एतदधोवर्तिन[19]श्चान्येऽपि भुवनेशाः समलाः सन्तोऽधिकारे नियुक्ता इत्यर्थः ॥ ७२–७३॥

अत्र मतङ्गमुनिः — 'नियुक्ता' इत्यादि ।

**मतङ्ग उवाच —**

**नियुक्ताः कारणेनैते रुद्रा भुवनपालकाः ।**
**कर्तारो[20]ऽधिकवीर्यास्तु प्रबुद्धाः शुद्धवृत्तयः ॥७४॥**
**कारणं स्वं न जानन्ति भगवन् केन हेतुना ।**

यदि **कारणेन** [21]अनन्तेशेन अधिकारे **नियुक्ताः**, तत्कथं [22]न शुद्धाः [23]सर्वज्ञाः सर्वकर्तारः । अथ [24]अशुद्धाः, कथमधिकारे नियुक्ता इति ॥

---

[1] कार्यकारणमपि — ए.
[2] मलत्वेनोक्तत्वाद् — ऐ.
[3] विरुद्धेन — ऐ.
[4] 'कारणेनावस्थितं' इत्यत्र 'कारणेन' इति नास्ति — आ; कारणेनावस्थितिः — ऐ.
[5] ०बन्धनकत्वे — ऐ.
[6] इतिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[7] मायाशन० — ई, उ.
[8] सन्तो विकृता अपि — अ, आ, ई, उ, ए, ऐ.
[9] अत्र तुशब्दोऽधिकः — ऐ.
[10] मायया अञ्जन्ते इत्यर्थः — ऊ, ऋ.
[11] तद्भुवनेषु तेषाम् — अ, आ, ई, उ, ए, ऐ.
[12] 'अथ' इति नास्ति — आ, ई, उ; अहो — ऊ, ऋ.
[13] नेत्युच्यन्ते — अ.
[14] ०पदमाविश्य — ऊ, ऋ.
[15] अतः श्रेष्ठ० — उ.
[16] शर्वोऽयं — मु० पाठान्तरम्, उ.
[17] 'एते' इति नास्ति — अ.
[18] तदधो० — ए.
[19] ०श्चाप्यधोभुवनेशाः — उ; ०श्चाप्यधोऽपि भुवनेशाः — ऋ.
[20] ०ऽमितवीर्यास्तु — ऊ, ऋ.
[21] अनन्तेशादिनाधिकारे — ए; अनन्तेशाधिकारे — ऐ.
[22] विशुद्धाः — ए.
[23] 'सर्वज्ञाः' इति नास्ति — ऐ.
[24] कथमशुद्धाधिकारे — आ; शुद्धाः कथमधिकारे — ऐ.

अत्र सिद्धान्तः — 'यतोऽधोदृष्टय' इत्यादि।

**परमेश्वर उवाच —**

**[1]यतोऽधोदृष्टयः सर्वे स्वसृष्टिमदमोहिताः ॥७५॥**
**तस्मिन्नभिरताः सन्तः क्रीडा[2]भोगेष्वनिन्दिताः ।**

समलत्वेऽपि अधिकारोपयोगिज्ञत्वकर्तृत्वयोगाद् ब्रह्मेन्द्रादीनामिव तेषां नाधिकारविरोधः॥

किं च — 'स्वकारणकरैः' इत्यादि।

**[3]स्वकारणकरैः सम्यक् संहारे [4]स्वापमागताः ॥७६॥**
**ततः क्षोभिकयाविष्टाः संप्रबुद्धाः परस्परम् ।**
**तद्विधामेव [5]पश्यन्तः स्वां [6]सृष्टिं रचनोज्ज्वलाम् ॥७७॥**
**[7]सुप्तोत्थिता वयं किं तु स्वनिद्रावशवर्तिनः ।**
**क्रीडामो विगलत्क्लेशाः स्वार्जितेषु बुभुक्षवः ॥७८॥**

[8]पूर्वकल्पोपसंहारे [9]हि ते तत्संहारकारणानन्तशक्तेरेव [10]**स्वापं** प्रलयकेवलित्वं प्राप्ताः। ततः अहर्मुखे [11]तत्कारणानन्तान्तरशक्त्या समधिष्ठिताः। तदन्यपुरुषवत् कर्मानुसारेण संप्राप्तकार्य-[12]करणाः सन्तो भुवनेश्वरत्वेन तत्प्रसादादेव [13]**संप्रबुद्धाः** संपन्नाः। [14]ततश्चापरिणत[15]मलत्वाच्च अशुद्धा एव [16]तदधोभुवनपतयश्चेति ॥७६–७८॥

अत एव [17]च — 'सूक्ष्मपाशावृताः सर्वे' इत्यादि।

**सूक्ष्मपाशावृताः सर्वे न च स्थूलैस्तिरस्कृताः ।**

कलादिक्षित्यन्तैः कार्य[18]करणैर्युक्ताः। **न च** बाह्यैर्भुवनजैरपि शरीरैः [19]**तिरस्कृताः**। असंबद्धा एवेत्युक्तम्[20]॥

[21]त एव भुवन[22]क्रमेणोच्यन्ते — 'अनन्तोऽनन्तवीर्यात्मा' इत्यादि।

---

[1] यतो ययृषयः — मु; यतो या दृष्टयः—उ.
[2] ०भोगेषु निन्दिताः — उ.
[3] स्वकार्यकरणैः — ऊ, ऋ.
[4] स्वापमाप्नुयुः — मु, उ, ओ.
[5] पश्यन्ति — मु,उ, ऊ, ऋ.
[6] सृष्टिरचनो० — मु, उ.
[7] सुप्त्वोत्थिता — मु.
[8] पूर्वं कल्पोप० — आ, ई, उ.
[9] हि नः संहारकारणानन्तशक्तिभिरेव—ऊ, ऋ.
[10] स्वापे — अ.
[11] तत्कारणानन्तरशक्त्या — आ.
[12] ०कारणाः — अ, ऐ.
[13] संबुद्धाः — अ, ऐ.
[14] ततश्च परिणत० — ऊ, ऋ.
[15] ०मलत्वादशुद्धा—ऊ, ऋ; ०मलत्वाच्च शुद्धा-एव — ऐ.
[16] 'तदधो' इति नास्ति — ऊ, ऋ.
[17] चशब्दो नास्ति — ऋ.
[18] ०करणैर्युताः — अ.
[19] तिरस्कृताः तैस्संबद्धाः — ऊ, ऋ.
[20] मतङ्ग० विद्या० ८. ६९ उ०–७२ वृत्तौ।
[21] अत एव — अ, आ, ई, उ, ए, ऐ.
[22] क्रमेणोच्यते — अ, ऐ.

अनन्तोऽनन्तवीर्यात्मा सर्वेषां [1]मूर्धनि स्थितः ॥७९॥
ततोऽधस्ताच्छिवो [2]नाम्ना रुद्रो भुवनभृत्प्रभुः ।
[3]विश्वेशश्च महातेजा विद्येशानोऽपरस्ततः ॥८०॥
ततोऽन्यो ब्रह्मणः स्वामी [4]क्षेमीशश्चा[5]प्यनन्तरम् ।
एते षड् भुवनेशानाः [6]स्वतेजोऽद्भुतवृत्तयः ॥८१॥
मायानिशीथतमसि निष्कम्पाश्च सुनिर्मलाः ।
द्योतयन्तो जगत्सर्वं [7]प्रविभान्ति महेश्वराः ॥८२॥

'एभ्योऽधः संस्थित' इत्यादि ।

[8]एभ्योऽधः संस्थितो ग्रन्थिर्दुर्भेद्यश्चातिविस्तृतः ।
यत्रासौ विग्रहेशानः स्थितः परमदुर्जयः ॥८३॥
वृतो [9]रुद्रैर्महाभागैः [10]स्वशक्ति[11]बलशालिभिः ।
भुवनं भुवनेशस्य [12]विनोदशतसंकुलम् ॥८४॥
यत्र शर्वो भवश्चैव [13]ह्युग्रो भीमश्च वीर्यवान् ।
भस्मान्तको दुन्दुभिश्च श्रीवत्सश्च महाबलः ॥८५॥

एभ्यः पुटक्रमेणावस्थितेभ्यः षड्भ्यो भुवनेभ्योऽनन्तरं मायायाः कार्यभूतो [14]ग्रन्थ्याकारो ग्रन्थ्यभिधानो भुवनसमूहोऽवस्थितः । यत्र [15]पूर्वादिदिक्क्रमेण [16]विग्रहेशानादिश्रीवत्सान्ताः भुवने[17]ष्वष्टस्वष्टौ रुद्राः स्थिताः । [18]यदाह — "भुवनं भुवनेशस्य" इत्यादि ॥८३–८५॥

'अस्माद्ग्रन्थेरध' इत्यादि ।

अस्माद्ग्रन्थेरधश्चक्रं षट्कपालमयं महत् ।
[19]चितं भुवन[20]मालाभिर्भोगौत्सुक्य[21]परिप्लुतम् ॥८६॥
गोपतेर्भुवनं दिव्यं त्रिकलस्याप्यनन्तरम् ।
तदधस्ताद्दशेशस्य भुवनं चारु निर्मलम् ॥८७॥

---

[1] मूर्ध्नि संस्थितः — ऊ, ऋ, ओ.
[2] नाम — ऊ, ऋ.
[3] विश्वेशस्तु — ऊ, ऋ.
[4] क्षोभीश० — मु, उ.
[5] ०प्यनन्तरः — ओ.
[6] स्वतेजोद्भूत० — मु, उ, ऊ, ऋ.
[7] ये विभान्ति — ऊ, ऋ.
[8] एभ्यो यः — मु, उ.
[9] रुद्रो महाभोगैः — मु, उ.
[10] सशक्ति० — ऊ, ऋ.
[11] बलवादिभिः — उ० पाठान्तरम् ।
[12] विद्येशाद्दशसंकुलम् — उ.
[13] उग्रो — ऊ, ऋ, ओ.
[14] ग्रन्थ्याकारत्वे ग्रन्थ्यभिधानं — ऊ; ग्रन्थ्याकारत्वे ग्रन्थ्यभिधाने — ऋ.
[15] पूर्वादिक्रमेण — ऋ.
[16] विग्रहेशानाद्याः श्री० — ऊ, ऋ.
[17] ०ष्वष्टास्वष्टौ — ऊ.
[18] यदाहुः — ऐ.
[19] चित्रं — ऊ, ऋ.
[20] ०मायाभिर्योगौत्सुक्य० — ओ.
[21] ०परिष्कृतम् — मु, उ, ओ.

**हरेर्हरस्य देवस्य तथा हरिहरस्य च ।**
**[1]भुवनानामियं माला चतुर्थभुवनाश्रिता ॥८८॥**
**असाध्यस्य ततोऽधस्ताद्भुवनं रुद्रसेवितम् ।**
**[2]यत्तदत्यन्तगहनं गहनेशस्य धीमतः ॥८९॥**

[3]**अस्मादधः** पुट[4]क्रमेणैव षड् गोपत्यादीनां भुवनानि ॥८६–८९॥

कथं तर्ह्यत्र[5] विद्येशा [6]विभान्तीत्युक्तम्[7]। तदर्थमेतत् — 'पुद्गलानां लयो यत्र' इत्यादि।

**पुद्गलानां लयो यत्र प्रधानस्य च सुव्रत ।**
**तत्रासौ भुवनेशानो भुवनेशैर्महाबलैः ॥९०॥**
**वृतो [8]विराजते तत्त्वे मायाख्येऽतीव गह्वरे ।**
**कालानलान्तमध्वानं [9]येनात्तं स्वेन तेजसा ॥९१॥**

**यत्र** महाप्रलये केवलाणूनां **लयः**, अव्यक्तस्य **च** मायाकार्यस्य, **तत्रासौ** मायातत्त्वे समस्ताशुद्धाध्वप्रभुरनन्तेशः[10] विद्याभुवनेश्वरत्वेन सहान्यैर्विद्येशैः [11]परिवारितो **विराजते** इत्युक्तम्। न तु मायाभुवनेष्वित्यविरोधः ॥९०–९१॥

अथ भुवनोपसंहारः — 'भुवनानि दश द्वे च' इत्यादि।

**भुवनानि दश द्वे च [12]यान्यशुद्धे तु वर्त्मनि ।**
**एभ्योऽन्यद्भुवनं नास्ति मायोत्थं मुनिसत्तम ॥९२॥**

पुटक्रमेण [13]द्वादश एव कपालेशभुवनानि सृष्टिसंहारवर्त्मविषये स्थितानि। ग्रन्थीशभुवनानां [14]तद्वर्त्मक्रमतिरस्कारेण युगपदवस्थानस्योक्तत्वात्[15], तैस्तु सह विंशतिभुवनानीत्युक्तम्। **एभ्योऽन्यद् भुवनं नास्ति मायोत्थम्** इति ॥९२॥

[16]अथ महाप्रलये [17]केवलादीनामिव किमेषां भुवनानामुपसंहारोऽस्ति [18]वा न वा। अत्रोच्यते — 'शक्तिसंमूर्च्छितात्मानो' इत्यादि।

---

[1] भुवनानामधोमाला — उ.
[2] त्यक्तमत्यन्त० — उ; पञ्चपञ्चातिगहनं — ऊ, ऋ.
[3] तस्मादधः — ऊ, ऋ.
[4] ०क्रमेणैव तु गोपत्यादीनां — अ, आ, ई, उ, ए ऐ.
[5] अत्र 'ते' इत्यधिकम् — ऊ, ऋ.
[6] अपि भान्ती० — अ.
[7] मतङ्ग० विद्या० ८. ६५ उ०, ६६ वृत्तौ।
[8] विराजितस्तत्त्वे — उ.
[9] येनोतं — ऊ, ऋ.
[10] अत्र अपिशब्दोऽधिकः — ऊ, ऋ.
[11] प्रतिपादितो — ऊ, ऋ.
[12] यान्यशुद्धानि वर्त्मनि — ऊ, ऋ.
[13] द्वादशकपाले भुवनानि — अ, आ, ई, उ, ए, ऐ.
[14] 'तद्वर्त्मक्रमतिरस्कारेण' इत्यारभ्य 'किमेषां भुवनानाम्' इत्यन्तं नास्ति–ए; तद्धर्मक्रमतिरस्कारेण–अ, आ, ई, उ; तत्तद्धर्मतिरस्कारेण–ऐ.
[15] मतङ्ग० विद्या० ८. ८३–८५ वृत्तौ।
[16] आह — ऊ, ऋ; 'अथ' इति नास्ति –ऐ.
[17] कलादीनामिव — आ, ई, उ, ऊ, ऋ.
[18] वाशब्दो नास्ति — आ, ई, उ, ऊ, ऋ, ए, ऐ.

[1]शक्तिसंमूर्च्छितात्मानो लुप्तव्यापारवृत्तयः ।
[2]यत्राणवः प्रलीयन्ते तदिदं गहनाह्वयम् ॥९३॥

**यत्र** मायात्मनि, **अणवः** अपि प्रलयकेवलिनो मलकर्मेश[3]शक्तिसंमूर्च्छिताः [4]**प्रलीयन्ते** [5]तदेत्युक्तम्[6]। तत्र भुवनानामेषां लयो दण्डापूपिकयैव[7] सिद्धः। अत [8]एव **इदं** मायातत्त्वं प्रविलीनमसमस्त[9][10]तत्त्वभुवनादिरूपत्वाद् गहनमित्युच्यते शास्त्रे ॥९३॥

[11]अथैकतत्त्वकारणम् — 'माया' इत्यादि ।

**माया [12]मन्त्रेश्वरस्यैषा [13]क्रीडनाय विसर्पिता ।**
**नानारूपधरा विश्वा विश्वस्य [14]जगतोऽरणिः ॥९४॥**
**यादृक्कर्म[15]विपाकः स्याद्भोक्तुः [16]स्थानविभूतये ।**
**तदात्मकेन रूपेण [17]तादृशं प्रति पेशला ॥९५॥**

या **एषा** अनेकभुवनयुक्ता **माया** उक्ता[18], सा तत्त्वदीक्षायां प्रोक्त[19]भुवनान्तर्भावेन अनेकस्रोतोरूपजननापूरणस्वभावा, निखिलविश्व[20]कारणम्, अनवच्छिन्नकर्माधारतया तत्तत्कर्मविपाकानुसारेण [21]असंख्येयपुरुषभोगदानचतुरा, **मन्त्रेश्वरस्य** [22]अधिकारस्थानम्, इत्येवं संचिन्त्य सकृत्प्रयोगादेव विनियोज्येत्यर्थः ॥९४–९५॥

[23]अथ प्रसङ्गात्कर्म[24]विषयप्रश्नः — 'भोक्तुः' इत्यादि ।

[1] अत्र संमूर्च्छिता० — ऊ, ऋ.
[2] यत्राणवो विलीयन्ते — ऊ, ऋ; यत्राणवोऽपि लीयन्ते — ओ.
[3] ०शक्तिभिः संमूर्च्छिताः – आ, ई, उ, ऊ, ऋ, ए, ऐ.
[4] प्रविलीयन्ते — ऊ, ऋ.
[5] तदिदमुक्तम् — आ, ई, उ; तदिष्टमुक्तम् — ए; तदेवेत्युक्तम् — ऐ.
[6] मतङ्ग० विद्या० ८. ५७, ९०, ९१ वृत्तौ ।
[7] 'एव' इत्यत्र 'इव' इति दृश्यते — अ, ई, उ, ए.
[8] एवं मायातत्त्वं — ऊ, ऋ.
[9] प्रविलीनं समस्त० — ई, उ; विलीनसमस्त० — ऊ, ऋ.
[10] 'तत्त्व' इति नास्ति — अ.
[11] अथैकतत्त्वकरणम् — अ, ऊ, ए; अथैकत्वनिराकरणम् — आ, ई, उ; अथैकत्वकरणम् — ऐ.
[12] मायेश्वर० — उ, ऊ, ऋ.
[13] कथं नाम विसर्पिता — उ.
[14] जगतोऽरणी — ऊ, ऋ, ओ.
[15] ०विपाकस्य भोक्तुः — मु, उ, ओ.
[16] स्थानं विभूतये — उ, ऋ, ओ.
[17] तादृक्तं प्रति — मु, उ, ओ.
[18] मतङ्ग० विद्या० ८. ९२ वृत्तौ ।
[19] ०भुवनान्तरभावेन — ऐ.
[20] ०कारणानवच्छिन्न० — अ.
[21] असंख्येयचतुरा — अ, ई, उ, ए; असांख्येयचतुरा — आ; संख्येयकार्योत्पादनचतुरा — ऐ.
[22] अत्र इवशब्दोऽधिकः — ऊ, ऋ.
[23] अत्र — ऋ.
[24] विषयः प्रश्नः — ऊ, ऋ, ए.

मतङ्ग उवाच —

> भोक्तुः शरीरमत्रोक्तं [1]स्थानभूत्यै महेश्वर ।
> [2]कर्मणा वासितस्येत्थमशुभेन शुभेन वा ॥९६॥
> किमर्थं सुखदुःखाभ्यां [3]बाध्यते [4]तत्र संस्थितः ।
> [5]एकस्यामेव मे [6]भ्रान्तिश्छिन्धि शास्त्रार्णवोदरे ॥९७॥

[7]अनेककर्मसद्भावेऽपि हि पुंसोऽवश्यमेकेन केनचित् **कर्मणा शुभेन अशुभेन वा** विपक्वेन **शरीरम्** इदं भोगाधि[8]करणत्वेनारभ्यमित्येवाभ्युपगन्तव्यम्। न तु शुभाशुभाभ्याम्। विरुद्धयोरेकारम्भकत्वायोगात्। ततश्च क्वचिच्छरीरे सुखस्यैव, क्वचिच्च दुःखस्यैव अनुभवः स्यात्। दृश्यते च सर्वस्मिन् सुखदुःखयोर्विरुद्धयोरेवेति। अतः कथमेतदुपपद्यते तनौ एतस्याम् **एकस्यामेव** इति मम **भ्रान्तिः**। ततः प्रश्नः ॥९६–९७॥

उत्तरं तु — 'जगत' इत्यादि।

**परमेश्वर उवाच —**

> **जगतः सुप्रसिद्धे द्वे धर्माधर्मौ तु कर्मणी ।**
> **अनादिकाल[9]संरूढे ताभ्यां [10]पुंवासितः सदा ॥९८॥**

ब्रह्मादिस्थावरान्तेऽत्र[11] जगति प्रतिशरीरं धर्माधर्मकार्ययोः सुखदुःखयोः प्रमाणतः सिद्धेः, तत्कारणयोः [12]स्थिरे विरोधेऽपि एककार्यानारम्भकत्वमसिद्धम्। न च विरुद्धयो[13]रवश्यमेककार्यानारम्भकत्वमेव। पित्तश्लेष्मादिभि[14]रनैकान्तात् ॥९८॥

अपि च — 'यद्येकेन' इत्यादि।

> **यद्येकेन विपाकेन शरीरं भोगिनः स्थितम् ।**
> **तदा [15]भोगस्य [16]नारम्भः कर्मणो वाथ जायते ॥९९॥**

एककर्मारम्भपक्षे हि [17]जातिप्रदेनैव शरीरस्यावस्थितेः, भोगप्रदस्य कर्मणोऽनपेक्षणाद् भोगाभाव-

---

[1] स्थानं भूत्यै — ऊ, ऋ, ओ.
[2] कर्मणावस्थितस्येत्थम् — मु, उ.
[3] बाध्यन्ते — ऊ.
[4] तनुसंस्थितः — ऊ, ऋ.
[5] एतस्यामेव — ऊ, ऋ.
[6] भ्रान्तिं छिन्धि — ऊ, ओ.
[7] 'अनेककर्मसद्भावेऽपि' इत्यारभ्य 'ततः प्रश्नः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] ०कारणत्वेन — ऊ.
[9] ०संरूढाः — उ; ०संरूढं — ऊ, ऋ.
[10] पुंवासिताः सदा — मु, उ.
[11] 'अत्र' इत्यस्य स्थाने तुशब्दो दृश्यते — अ, आ, ई, उ, ए, ऐ.
[12] 'स्थिरे' इति नास्ति — ऋ; स्थितेरविरोधेऽपि — ऐ.
[13] ०रवश्यकार्यारम्भकत्वमेव — अ, आ, ई, उ; ०रस्य कार्यारम्भकत्वमेव — ए; ०रवश्यकार्यानारम्भकत्वमेव — ऐ.
[14] ०रनेकान्तात् — ऊ, ऋ.
[15] कार्यस्य — मु, उ, ओ.
[16] नारब्धः — ऊ.
[17] 'जातिप्रदेनैव' इत्यारभ्य 'शरीरमभ्युपगन्तव्यमिति' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.

प्रसङ्गः शरीरिणां स्यात्। आयुःप्रदस्य चानपेक्षणाद्, भोगाभावप्रसङ्गाच्चेत्यवश्यमने[क]कर्मजं शरीरमभ्युपगन्तव्यमिति [1]"नामिश्रं परिणमते"[2] इति न्यायेन [3]भोग्यस्यानारम्भ एव **जायते। कर्मणो वेति** दुष्कृतारब्धशरीरिणां हि बहुवित्तव्ययसाध्यस्य ज्योतिष्टोमादेः [4]सर्वकर्मणोऽनारम्भः। तत एव तस्य तदसंभवात्। सुकृतारब्धशरीरिणां भोगनिष्ठत्वाद् अनेकब्रह्मचर्यादिव्रतनियमक्लेशसाध्यस्य ज्योतिष्टोमादेरनारम्भो यतः ॥९९॥

[5]कथं तर्हि तीव्रवेग[6]स्यैकस्यैव फलारम्भकत्वं श्रूयत इति। उच्यते — 'जात्युत्कटेन' इत्यादि।

**जात्युत्कटेन तज्जातेः कर्मणो देह[7]संभवः।**
**प्राक्संचितसमूहस्य वासनाख्यस्य कर्मणः ॥१००॥**

उपलक्षणत्वादस्य जात्यायुर्भोगेष्वन्यतमोत्कटेन यदा जन्माद्यारभ्यते। तदा [8]प्रागार्जितानेक[9]फलप्रदस्य वासनात्मनः [10]कर्मसमूहस्य मध्यात्, [11]सा जातिः जन्म यस्मात् [12]तज्जातिकर्म, तस्य अनुरूपतया [13]यत्संबन्धि यत् प्रागार्जित[14]कर्मान्तरमायुर्भोगप्रदं तेन सहारभ्यते। एवं भोगोत्कटेनारभ्यमाणं जात्यायुःप्रदेन सह, [15]आयुरुत्कटेन वारभ्यमाणं जातिभोगप्रदेन सहारभ्यते। न तु उत्कटेनाप्येकैकेनारब्धुं शक्यमिति ॥१००॥

तथा हि — 'यत्कर्म' इत्यादि।

**यत्कर्म [16]सहकारि स्याद्यस्य यस्य [17]तदात्मकम्।**
**तेनोपबृंहितं भूत्यै भोक्तुर्व्यक्तिमुपैति हि ॥१०१॥**

जात्यायुर्भोगप्रदाना[18]मन्यतमे हि [19]तीव्रवेगेऽवश्यं तदपरप्रदेनान्येन शुभेनाशुभेन वा तस्य सह[20]कारिणा भाव्यम्। त्रयाणामन्यतममात्रप्रदस्यानुपपत्तेः।

---

[1] 'नामिश्रं' इत्यारभ्य 'ज्योतिष्टोमादेरनारम्भो यतः' इत्यन्तं नास्ति — ऊ, ऋ.
[2] आकरो न लभ्यते।
[3] दाहस्य नारम्भः — ऐ.
[4] 'सर्वकर्मणः' इति नास्ति — आ.
[5] अत्र 'अथ' इत्यधिकम् — ऐ.
[6] ०स्यैकफलस्यैवारम्भकत्वं — अ, ऋ.
[7] ०संभवम् — ओ.
[8] 'प्रागार्जित' इत्यारभ्य 'यत्संबन्धि यत्' इत्यन्तं नास्ति — आ.
[9] ०जन्मप्रदस्य — उ, ऋ.
[10] कर्मणः समूहमध्यात् — ऊ, ऋ.
[11] स जातिजन्म यस्मात् — अ, ई, उ; सा जातिर्यस्मात् — ऊ, ऋ; स जन्मादिजन्म यस्मात् — ए; यज्जातिजन्म यस्मात् — ऐ.
[12] तत्तज्जाति० — ऊ, ऋ.
[13] 'यत्संबन्धि यत्प्रागार्जितकर्मान्तरम्' इत्येतन्नास्ति — ऊ, ऋ; 'यत्' इति नास्ति— अ, ई, उ, ए.
[14] ०कर्मान्तरायुर्भोग० — ऐ.
[15] 'आयुरुत्कटेन' इत्यारभ्य 'आरब्धुं शक्यमिति' इत्यन्तस्य ग्रन्थस्य स्थाने 'आयुरुत्कटेनाप्येकं फलमारब्धुं शक्यमिति' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[16] सहकारी — उ.
[17] तदात्मनः — उ. पाठान्तरम्।
[18] ०मन्यतमं हि — अ, आ, ई, उ, ए, ऐ.
[19] 'तीव्रवेगेऽवश्यं' इत्यारभ्य श्लो १०२ वृत्तौ 'यद् गुरु' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] ०कारिणावश्यं त्रयाणा० — ऊ.

[1]"प्रतिग्रहधनत्यागे विप्रो जायति मर्कटः ।"
इत्यादिश्रुतेः जन्मोपपत्तावपि, आयुर्भोगकर्माभावाज्जन्मसमनन्तरमेव विनाशप्रसङ्गः ॥१०१॥

अत एव — 'न्यग्भूतम्' इत्यादि ।

**[2]न्यग्भूतमन्यदपरं यदवष्टम्भकं [3]गुरु ।**
**तेनातिगुरुणा [4]पूर्वमशुभेन शुभेन वा ॥१०२॥**

**यद् गुरु** [5]तीव्रम् **अवष्टम्भकं** कर्मान्तरफलस्येत्युक्तं[6], [7]**तेन** यथा **पूर्वमिति** [8]प्रागार्जितं [9]कर्म **न्यग्भूतं**, तथैव **अपरम्** अपि इदानीमनुष्ठितं चित्राकारीर्यादि दृष्टपशुवृष्टयादिफलमिति । सहकारिभूतं तु नाभिभूतमित्यर्थः । तदिदमाहुः[10] —
फलति यदि न सर्वं तत्कदाचित्तदैव । ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते ॥" इति ॥१०२॥

[11]अथ न्यग्भूतस्यास्य द्विरूपस्यापि कर्मणः तदानीं किं नाश [12]एव । नेत्युच्यते — 'व्यक्तीभूत' इत्यादि ।

**व्यक्ती[13]भूतेऽनुभूते च ततोऽन्यदुपसर्पति ।**

भावप्रत्ययात्मना भोग्यतां [14]प्राप्ते भुक्ते [15]चावष्टम्भके तस्मिन् [16]तदन्यदिहैव, जन्मान्तरे[17] [18]वा भोग्यत्वेन **उपसर्पति** । प्रायश्चित्तकर्मणो दुष्कृतक्षयकृत्ये इव तस्य एतन्नाशकत्वे प्रमाणाभावात् । तथा च श्रुतिः[19] — "नाभुक्तं कर्म नश्यति" ॥ इति ॥

न [20]केवलमनारब्धकार्यमेव यावत् — 'क्षिप्रं बलवता' इत्यादि ।

---

[1] आकरो न लभ्यते ।
[2] कर्म न्यग्भूतमपरं — मु, ओ; किमन्यद्भूतमपरं — उ.
[3] गुरुः — ऊ, ऋ.
[4] पूर्वं शुभेनाप्यशुभेन वा — मु, उ, ओ.
[5] तीव्रवेगमवष्टम्भकं — अ, आ, ई, उ, ऐ; क्षिप्रमेवावष्टम्भकं — ए.
[6] कर्मान्तरफलस्येत्युक्तत्वात् — अ, आ, ई, उ, ए; कर्मानिन्तफलमित्युक्तं — ऊ; कर्मानन्तफलस्येत्युक्तं — ऋ; कर्मफलस्येत्युक्तत्वात् — ऐ.
[7] 'तेन' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] प्रार्गजितं — ऊ, ऋ.
[9] कर्मान्यद्भूतं — अ.
[10] श्लोकवार्तिके चित्राक्षेपपरिहारे श्लो० २६.
[11] अथान्यद्भूत० — अ; अन्यथान्यद्भूत० — आ; आह न्यग्भूत० — ऊ, ऋ.
[12] एवेत्युच्यते — ए; एव नोच्यते — ऐ.
[13] ०भूते न भुक्ते च — मु; भूते न भूते च — उ; भूते अभूते च — ऊ, ऋ.
[14] प्राप्तेऽभूते — अ.
[15] वावष्टम्भके — अ, आ, ई, उ, ऋ, ए, ऐ.
[16] तदन्यतर एव — ए.
[17] जन्मान्तरेण — अ, आ, ई, उ.
[18] वाशब्दो नास्ति — आ, ई, उ.
[19] पौष्करे० विद्या० बिन्दुपटले ४५ उ. 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति दृश्यते ।
[20] केवलमारब्ध० — अ, आ, ई, उ, ऊ.

**क्षिप्रं बलवता वापि तीव्रेणातिगरीयसा ॥१०३॥**
**प्रत्यग्रेण विधार्येत[1] प्राक्तनं लघु [2]तद्यदा।**
**तस्मिन्नेवोप[3]भुक्ते तु [4]भूयस्तदुपसर्पति ॥१०४॥**

आरब्धकार्यमपि कर्म **यदा** लघु भवति, तदा तीव्र[5]वेगेन केनापि [6]विरुद्धेनायुष्यानायुष्यादि-[7]कर्मणा विधार्यते एव, [8]नन्दीश्वरनहुषकर्मणा यथा। अयमेव [9]च दैवपुरुषकारयोः प्रविवेक इति [10]दर्शितं [11]प्रागेव। तस्मिंस्तु भुक्ते पुनर्भोग्यत्वेन तदन्यदुपतिष्ठत इत्युक्तम्। यदा पुनर्द्वयोरपि तीव्रवेगिता[12] विरुद्धत्वादेव च युगपद्भोग[13]प्रदत्वानुपपत्तिः, [14]तदा ईश्वरशक्तिपातात् तयोर्नाश एव नान्या गतिरस्तीति [15]वक्ष्यामः ॥१०३–१०४॥

[16]अथ प्राक्तनं कर्म किं सर्वत्रैव प्रत्यग्रेण कर्मणा विधार्यते। [17]नेत्युच्यते — 'युगपच्च' इत्यादि।

**युगपच्च न [18]भोगस्तु [19]कर्मणो जायते क्वचित्।**
**[20]यस्माद्दुःखे सुखं नास्ति न च दुःखं सुखे क्वचित् ॥१०५॥**
**अन्योन्यमनयोर्यस्मादुप[21]लब्धिर्व्यवस्थिता।**

यत्र प्राक्तनस्य वर्तमानस्य च **कर्मणः** विरोधः, तत्र **क्वचिद्** न [22]युगपद्भोगः उपजायते। न हि [23]नहुषस्य अजगरशरीरदुःखदेन कर्मणा [24]सह स्वर्गराज्यसुखं संभवति। भगवतो [25]नन्दीश्वरस्य [26]च उमापतिभुवनसुखेन [27]सह [28]बहुमनुष्यलोक[29]सुखदुःखभोगः इति। यत्र तु [30]तयो-

---

[1] विधार्यैतत् — मु, उ.
[2] तद्यथा — मु, उ, ओ.
[3] ०भुङ्क्ते तु — उ.
[4] भूयस्तमुप० — मु, उ.
[5] ०वेगेन न हि केनापि — अ; ०वेगैरैहि-केनापि — ऊ, ऋ; ०वेगेन ह केनापि — ऐ.
[6] विरुद्धेनानायुष्यादि० — अ, आ, ई, उ, ए; विरुद्धेनायुष्यादि ०— ऐ.
[7] ०कर्मणापि साध्यत एव — ए.
[8] नन्दीश्वरकथा कूर्मपुराणे उत्तरार्धे ४३ तमेऽध्याये। नहुषकथा महाभारते वनपर्वणि १८१ तमेऽध्याये।
[9] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[10] दर्शितः — ए.
[11] मतङ्ग० विद्या० ६. २९ वृत्तौ।
[12] ०वेगत्वाद्—अ; वेगित्वाद्—आ, ई, उ, ए, ऐ.
[13] ०प्रदानत्वानुप० — ऐ.
[14] 'तदा' इत्यत्र 'तदैव' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[15] मतङ्ग० विद्या० १३. १५-१७ वृत्तौ।
[16] आह — ऊ, ऋ.
[17] 'नेत्युच्यते' इति नास्ति — ए.
[18] भोक्तुस्तु — उ; भोगोऽस्य — ऊ, ऋ.
[19] कर्मणोर्जायते — मु, उ.
[20] यस्मात्सुखे दुःखं नास्ति — ऊ, ऋ.
[21] ०लब्धिः सुनिश्चिता — ऊ, ऋ.
[22] युगपद्भोगा जायन्ते — ऊ, ऋ.
[23] नहुषकथा — महाभारते वनपर्वणि १८१ तमेऽध्याये दृश्यते।
[24] 'सह' इति नास्ति — अ, आ, ई, उ, ऊ, ऋ, ऐ.
[25] नन्दीश्वरकथा — कूर्मपुराणे उत्तरार्धे ४३ तमेऽध्याये दृश्यते।
[26] वा — ऊ, ऋ.
[27] 'सह' इति नास्ति — अ.
[28] 'बहु' इति नास्ति — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[29] 'सुख' इति नास्ति — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[30] तयोरपि विरोधो — आ, ई, उ; अनयोरवि-रोधो — ऊ, ऋ.

रविरोधो यथा चित्रादिफले, तत्र युगपद् भोगोऽस्त्येव। **अन्योन्यमनयोर्यस्मादुपलब्धिर्व्यवस्थिता** इत्यदोषः ॥

यद्येवं पूर्वापरविरोध इति पुनर्मतङ्गमुनिः — 'प्राग्वासनाभिभूतस्य' इत्यादि।

**मतङ्ग उवाच—**

**प्राग्वासनाभिभूतस्य भोक्तुमभ्युद्यतस्य हि[1] ॥१०६॥**
**तद्रोधयित्री [2]या त्वन्या स्वेन रूपेण सर्पिता।**
**[3]सा लक्ष्यते यथा तत्त्वं तथा [4]वद महेश्वर ॥१०७॥**

रोधो हि नियम एव। **प्राक्** च तत्कारणतया रोधयित्री शक्तिः साधिता। यदुक्तम्[5] —
"रोधयित्री च या पत्युरावृत्य जगदातुरम्।
रुणद्धि स्थितयेऽत्यर्थम्" इति।

अधुना तु तत्कारणं कर्मोक्तमिति विरोधः। ततस्तत्परिहाराय कर्मणः **अन्या सा रोधयित्री** [6]**यथा लक्ष्यते** [7]तथा [8]तत् त्वं कथयेति पूर्वः पक्षः ॥१०६–१०७॥

अन्य एवायं नियम इति सिद्धान्तः — 'उपकारापकाराभ्याम्' इत्यादिना।

**परमेश्वर उवाच —**

**उपकारापकाराभ्यां वासितस्य [9]शरीरिणः।**
**[10]वासनाभिर्युतस्यापि बह्वीभिः कालपर्ययात् ॥१०८॥**
**[11]यत्संगम[12]समावेशः [13]क्षणात्तत्प्रति कारणम्।**

न फलनियमे रोधयित्र्याः कारणत्वम्। कर्मणामेवात्र कारणत्वात्। अपि तु[14] बहुभिर्वासनात्मकैः कर्मभिर्युक्तस्यापि पुंसो यदा कालवशात् कदाचित् [15]पाकविशेषात्, तीव्र[16]वेगानुष्ठान[17]विशेषाच्च युगपदेव शुभाशुभाभ्यां भोगदानाय [18]पुरुषोऽधिवास्यते, [19]तदा तस्यात्यन्त[20]विरुद्ध[21]कर्मद्व-

---

[1] वा — मु, उ.
[2] सा — मु, उ.
[3] संलक्ष्यते — मु, उ.
[4] वेह — मु; वेत्ति — उ; वेद्मि — ओ.
[5] मतङ्ग० विद्या० ५. ३८ उ०, ३९ पू०.
[6] यद्वा — ए.
[7] यथार्थत्वं कथयेति — ऐ.
[8] 'तत्' इति नास्ति — अ, आ, ई, उ, ए.
[9] शरीरिणाम् — ओ.
[10] वासनान्तरितस्यापि — उ, ऊ, ऋ.
[11] यद्यत्कर्मवशाविष्टः — उ; सत्संगमवशावेशः — ऊ, ऋ.
[12] ०समावेशा — ओ.
[13] क्षणात्तं प्रति — ऊ, ऋ.
[14] अत्र 'स' इत्यधिकम् — ए.
[15] परिपाकवेशतः तीव्र० — उ; परिपाकावेशतः तीव्र० — ऋ.
[16] ०प्रवेगानुष्ठानवशाच्च — आ; ०वेगादनुष्ठानविशेषाच्च — ऐ.
[17] ०वशाच्च — ई, उ; ०विशेषाद्वा — ऊ, ऋ.
[18] पुरुषो विवास्यते — ए.
[19] 'तदा तस्यात्यन्त' इत्यत्र 'तदान्यत्र' इति दृश्यते — ए.
[20] विशुद्ध० — ए.
[21] ०कर्मद्वयावासितस्य — ऊ, ऋ; ०कर्मद्वयाभ्यां हि तस्य — ए.

याध्यासितस्य **तद्** एकं शुभमशुभं वा प्रति[1] कारणम्[2]; [3]**यत्संगमसमावेशः** [4]भोगसंयोगनियमयोग्यता भवति। न तु द्वितीयं प्रति। सा विरुद्धद्वितीयकर्मरोधनाद्रोधयित्रीति, अन्य एवायं नियमः। यस्मिन् रोधयित्री कारणमित्यविरोधः ॥

किं च — 'द्वेषेण' इत्यादि।

**द्वेषेण [5]वाथ रागेण साटोपेन प्रवर्तते ॥१०९॥**
**द्वेषकाले न रागोऽस्ति न च द्वेषोऽस्ति रागतः।**
**द्वेषाद्दुःखमवाप्नोति सुखमाप्नोति रागतः ॥११०॥**
**एवं रागविरागाभ्यां [6]लोकोऽयं दृश्यते मुने।**

[7]फले हि कर्मणो [8]नियामकत्वमुक्तम्। [9]कर्मणि तु ज्योतिष्टोमब्रह्म[10]हत्यादिके रागद्वेषादेः। रागद्वेषाभ्यां [11]तु येन कर्मान्तरभोगोपरोधः [12]प्रागलब्धः क्रियते, सा तु[13] रोधयित्रीति प्रागेवोक्तम् — [14]"अथ कार्येषु प्रस्थितस्य [15]क्रियावतः। [16]प्रवृत्तौ धारयेच्चितम्" इत्यविरोधः। नियतेश्चान्य एव नियमव्यापार इति [17]तत्प्रकरणे [18]दर्शयिष्यामः ॥

तदेवं प्रासङ्गिकं परिसमाप्य [19]प्रकृतेर्मायाकार्यविशेषः एव कर्म। नान्यदिति सांख्यच्छायया मतङ्गमुनिः — 'रागद्वेषात्मिका' इत्यादि।

**मतङ्ग उवाच —**

**रागद्वेषात्मिका येयं वासना चोदिता त्वया ॥ १११॥**
**असतोऽपि [20]हि दृश्येत तस्मादनियमो ह्ययम्।**

यदि [21]रागद्वेषवासनाप्रयुक्तकर्मनियमात् फलनियमः। तर्हि किं कर्मणा। **असतोऽपि कर्मणो**

---

[1] अत्र 'यस्मात्' इत्यधिकम् — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[2] कारणात् — आ, ई, उ, ए, ऐ; 'कारणं' इत्यारभ्य 'यस्मिन् रोधयित्री' इत्यन्तं नास्ति— ऊ, ऋ.
[3] संगमवशावेशः — आ; तत्संगमवशावेशः — ई, उ; यत्संगमं यथावेशो — ए; तत्संगमवासनावेशः — ऐ.
[4] भोगनियम० — ए
[5] चाथ — मु, उ; वापि — ओ.
[6] लोके यन्मृष्यते — मु, उ; लोकोऽयं मृष्यते — ओ.
[7] फलेति कर्मणो — ऊ, ऋ.
[8] नियमात्मकत्व० — ऐ.
[9] कर्माणि तु — ए.
[10] ०हत्यादीनि रागद्वेषादेः — अ, आ, ई, उ, ए; हत्यादिरागद्वेषादे : — ऐ.
[11] तुशब्दो नास्ति — ऊ, ऋ.
[12] प्रकल्पः क्रियते — अ, आ, ई, उ, ए, ऐ.
[13] तुशब्दो नास्ति — ऊ, ऋ.
[14] मतङ्ग० विद्या० ५. ३९ उ०, ४० पू.
[15] क्रिया यतः — आ, ए, ऐ.
[16] प्रवृत्तं — ऊ, ऋ.
[17] 'तत्प्रकरणे' इति नास्ति — ऊ, ऋ.
[18] मतङ्ग० विद्या० १३. ४-१७ वृत्तौ।
[19] प्रकृते मायाकार्य० — आ, ई, उ, ऊ, ऋ.
[20] प्रदृश्येत— उ.
[21] 'रागद्वेषवासना' इत्यारभ्य 'असतोऽपि कर्मणो' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.

[1]रागद्वेषवासनात्मकात् प्रकृति[2]स्वभावादेव कर्म[3]स्वभावादिव फलं भविष्यतीति, **तस्माद् न अयं** कर्मनिबन्धनो नियम इति ॥

अत्र सिद्धान्तः — 'यदलीकेन' इत्यादि ।

**परमेश्वर उवाच —**

**यदलीकेन भावेन वर्तनं मन्दमेधसाम् ॥११२॥**
**परैर्वा प्रेर्यमाणानां कुशलैश्च परं प्रति ।**
**तथापि [4]तत्प्रपत्तव्यमुभयोरपि कर्मजम् ॥११३॥**
**तत्फलं मुनिशार्दूल नान्यथा निश्चितं मनः ।**

अत्र [5]तथापीत्यभिसंबन्धाद् यच्छब्दोऽयं यद्यपीत्येतदर्थपरामर्शकः । तदयमर्थः —यद्यपि नास्ति कर्मेत्येवं [6]स्वकल्पितेन असत्येनैवाशयेन **वर्तनं** सांख्यानां, **परैर्वा** चार्वाकैः [7]प्रेरितानाम् । **परं प्रति** [8]**कुशलैः**; चशब्दादात्मानं प्रति च । [9]पूर्वं निराकृतत्वादुभयत्रापि [10]अकुशलैरित्यर्थः । **तथापि** अवश्यं **तत्** कर्म [11]प्रतिपत्तव्यम् । यतः **उभयोरपि** [12]सांख्यचार्वाकयोः **कर्मजम्** एव तत्फलम् । **अन्यथा** [13]स्वभावस्याप्यविशेषाज्जगद्वैचित्र्यस्य को हेतुरित्यत्र [14]**न** तयोर्निश्चयप्रत्ययो[15] विद्यत इत्यवश्यं [16]तद्धेतुनिश्चयाय कर्माभ्युपगन्तव्यमिति ॥

कर्माभ्युपगमे तु न जगद्वैचित्र्यानुपपत्तिरित्युच्यते — 'येनोपायेन' इत्यादि ।

**येनोपायेन यस्येह [17]यद्विपाकस्य सुव्रत ॥११४॥**
[18]**संभवस्तादृगेव [19]स्यान्मनो बुद्धिश्च नान्यथा ।**

**येन** [20]कर्मलक्षणेन **उपायेन** [21]**यस्य** पुंसो यादृशस्य कर्मविपाकस्य [22]**संभवः**,[23] **तादृगेव**[24] फलं मनो-

---

[1] रागद्वेषादिवासनात् — ऊ, ऋ.
[2] ०संभवादेव — ऐ.
[3] ०स्वभावात्फलं — अ, आ, ई, उ; ०स्वभावादिफलं — ऐ.
[4] तत्प्रवक्तव्यम् — मु.
[5] तथापीत्यपिसंबन्धाद् — अ, आ, ई, उ, ऊ, ए, ऐ.
[6] स्वकल्पिते सत्यनेनैवाशयेन — अ, स्वकल्पितेनासत्यनेनैवाशयेन — आ.
[7] पूरितानां — अ; प्रतिपद्यमानानां — ऊ, ऋ.
[8] कुशीलैः — ऐ.
[9] मतङ्ग० विद्या० ६. ७ उ० — १५ वृत्तौ चार्वाकनिराकरणम्; ६. ७१ उ० — ७९ वृत्तौ सांख्यनिराकरणम् ।
[10] कुशलैरित्यर्थः — ए.
[11] 'प्रतिपत्तव्यं' इति नास्ति — अ.
[12] चार्वाकसांख्ययोः — अ, आ, ई, उ, ए, ऐ.
[13] स्वभावस्याविशेषा० — आ, ई, उ, ऊ, ऋ.
[14] नकारो नास्ति — ऊ, ऋ, ऐ.
[15] 'निश्चयप्रत्ययो' इति नास्ति — ऊ, ऋ.
[16] 'तद्धेतु' इति नास्ति — अ.
[17] प्राग्विपाकस्य — उ० पाठान्तरम्, ऊ, ऋ.
[18] उद्भवस्तादृगेव — ऊ, ऋ; संभूतस्तादृगेव — ओ.
[19] स्यान्नानाबुद्धिश्च — उ० पाठान्तरम् ।
[20] 'कर्मलक्षणेन' इति नास्ति — ऊ, ऋ.
[21] अस्य — ऐ.
[22] 'संभवः' इति नास्ति — अ, ए.
[23] अत्र 'तस्य' इत्यधिकम् — ऊ, ऋ.
[24] प्रागेव — अ, ए.

[1]वृद्धिलक्षणं भाव[2]प्रत्ययात्मकभोग्यसंविद्रूपं स्यात्। न अन्यस्य अन्यथा [3]चेति जगद्वैचित्र्योपपत्तिः ॥

तथा हि — 'सामान्य' इत्यादि।

**सामान्ये [4]परिणामेऽस्मिन्मायाख्ये मुनिसत्तम ॥११५॥**
**आत्मन[5]श्चाविकारि[6]त्वाद्विचित्रं कर्मणः फलम्।**

यदि [7]प्रकृति[8]स्वभाव एव फलप्रदत्वात् कर्म स्यात् तस्य [9]सर्वान्प्रत्यविशेषात्, पुरुषाणां च निष्कर्मत्वेन विशेषाभावाज्जगद्वैचित्र्यानुपपत्तिरिति,[10] तदन्यथानुपपत्त्या [11]कर्मणः सत्त्वसिद्धिः ॥

स्यादेतत्। प्रकृतेरेव [12]सः तथाविधस्वभावविपर्ययः। येन [13]कर्मवत् पुरुषस्य तथाभूतं भोग्यं संपादयति कस्यचित्; नान्यस्येति। पुरुषस्य वा [14]सः तथाभूतस्वभावविपर्ययः, येन कश्चिदेव [15]किंचिद्भोग[16]मास्वादयति; न [17]सर्वः सर्वमिति। तत् किं कर्मणा। तत्रोच्यते — 'चिदचित्तत्त्वयोः' इत्यादि।

**चिदचित्तत्त्वयोर्यस्मात्स्वभावस्य विपर्ययः ॥११६॥**
**नेष्यते [18]कर्मणोऽभावस्तच्चैवेच्छाविघातिनः।**
**अन्यो[19]न्यातिशयो लोके [20]तस्मात्कर्मवशाद्ध्रुवम् ॥११७॥**
**जगदेतत्समस्तं स्यात्कर्म कर्तृवशाद्ध्रुवम्।**
**कर्मणः कारणं कर्ता स पुमानत्र कीर्तितः ॥११८॥**
**भोगस्य कारणं कर्म भोगो बन्धस्य कारणम्।**
**भोगभुग्भोगसन्ताने बन्धेनैव कलादिना ॥११९॥**
**[21]बद्धः संतिष्ठते यस्मात्तस्माद्बन्धो[22]ऽतिदुर्भिदः।**
**प्रादुर्भूतं जगत्कृत्स्नं मायातः सचराचरम् ॥१२०॥**

अस्तु स्वभावविपर्यय[23]स्तयोः। स तु यदि स्वभावमात्र[24]निमित्तस्तस्य सर्वान्प्रत्यविशेषात्[25]

---

[1] ०वृद्धिलक्षणम् — अ, ई, उ, ए.
[2] ०वृत्त्यात्मक० — अ, आ, ए.
[3] वेति — ऊ, ॠ.
[4] परिमाणेऽस्मिन् — मु, उ.
[5] ०श्चाधिकारित्वाद् — उ.
[6] ०त्वाद्वैचित्र्यं — ऊ, ॠ.
[7] प्रकृतेः स्वभावः — ऊ, ॠ.
[8] ०स्वभावादेव — ऐ.
[9] सत्यान् — अ, ऐ.
[10] अत्र 'उक्तमिति' इत्यधिकम् — ऐ.
[11] कर्मसत्त्व० — आ, ऐ.
[12] 'सः' इति नास्ति — अ.
[13] तत्कर्मवत् — अ, आ, ई, उ, ए, ऐ.
[14] 'सः' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[15] 'किंचिद्' इति नास्ति —अ; कंचिद् — ई, उ.
[16] ०मापादयति — ऊ, ॠ.
[17] 'सर्वः' इत्यत्र 'सः' इति दृश्यते — ऐ.
[18] कर्मणोऽभावात्तच्छैवेच्छा० — मु, उ; कर्मणोऽभावान्नचैवेच्छा० — ऊ, ॠ.
[19] ०न्यातिशयाल्लोके — मु, उ, ओ.
[20] भोगे कर्म० — उ० पाठान्तरम्।
[21] वध्यः — मु, आ; संबन्धस्तिष्ठते — उ.
[22] ०ऽतिदुस्तरः — मु, उ.
[23] ०स्तयोस्तु यदि — अ.
[24] ०निमित्तं तस्य — अ, ऊ; ०निमित्ततस्तस्य — ए.
[25] सर्वान् प्रविशेत् — ऊ, ॠ.

सर्वेषां [1]प्रसज्यते इत्युक्तम्[2]। अथ [3]हेत्वन्तरात्, तदेव तर्हि कर्म इति न कर्माभावो भवद्भिरपि[4] इष्यते। [5]समानमधीयानानां च [6]ब्राह्मणादीनां [7]केचित्फलवन्तो दृश्यन्ते। [8]परे तु, इच्छाया विघातः स विद्यते [9]येषां [10]ते तथाभूताः, निष्फला एवेष्यन्ते। न चैतत् कर्माभावे युज्यते। [11]तथा आढ्यदरिद्राद्यतिशयोऽपीष्यते। सोऽपि न विना कर्मणोपपद्यत इति। [12]**तस्मात्** प्रकृति[13]प्रवृत्त्यात्मकजगन्निमित्तभूतं मायातोऽन्यत् कर्मेष्टव्यम्। अत एव च पुंसोऽपि कर्तृत्वसिद्धिरित्युक्तमात्मसिद्धौ[14]। एवं **च भोगस्य** [15]**कारणं कर्म** उक्तम्। **भोगस्तु बन्धस्य** कार्यकरणादेः **कारणं**, तेन विना तस्याभावादिति। **भोगभुग् एव** [16]**बद्धः सन् संतिष्ठते** इति [17]यतः प्रोक्तः, **तस्माद् बन्धः** [18]यः कलादिकोऽति[19]दुर्भेद्यः। कर्मण एव पारम्पर्येण [20]संबन्धः। यदुक्तं [21]श्रीमत्स्वायम्भुवे[22] —

"कर्मतश्च शरीराणि [23]विषयाः करणानि च"। इति।

[24]तत्तु कर्माक्षिप्तमपि जगद् [25]मायात उपा[26]दानाद्भवतीत्युक्तम् ॥११६–१२०॥

एवं माया[27]मलपक्षवद् माया[28]कर्मपक्षमपि प्रतिक्षिप्योपसंहारः — 'जगतः कारणं माया' इत्यादि।

**जगतः कारणं माया मायायाः कारणं मुने।**
[29]**प्रवृत्तौ शक्तयः सिद्धाः शक्तीनां कारणं शिवः।**
**अकारणः शिवः प्रोक्तस्तन्त्रेऽस्मिन्पारमेश्वरे ॥१२१॥**

---

[1] प्रयुज्यते — ऋ.
[2] मतङ्ग० विद्या० ८. ११५ उ०, ११६ पू० वृत्तौ।
[3] हेत्वन्तत्वात् — ऊ.
[4] अपिशब्दो नास्ति — ए.
[5] एतत्सदृशं वाक्यं महाभाष्ये (२.२.२९) दृश्यते— 'समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न।' इति; समानधर्ममायीनां — अ, आ; समानवर्ममायीयानां — ई, उ; समानधर्माधीयानां — ए; समानधर्मीयानां — ऐ.
[6] ब्राह्मणानां — ऊ, ऋ, ऐ.
[7] केचिद्बलवन्तो — ए.
[8] परे तु इच्छया — ऊ; परे तत्त्वेच्छया — ऋ; परेच्छाया — ए; परे तु इच्छाविघातः — ऐ.
[9] एषां — अ, आ, ई, उ, ऐ.
[10] 'ते' इति नास्ति — ऊ, ऋ.
[11] तथा स दरिद्रा० — ऐ.
[12] यस्मात् — ऊ, ऋ.
[13] ०प्रवृत्त्यात्मकं जग०—अ, आ, ई, उ, ऋ, ऐ; ०प्रकृत्यात्मकं जगदिति इत्थंभूतं — ए.
[14] मतङ्ग० विद्या० ६. ३१, ९८ उ०.
[15] कारणकर्म — ऊ, ऋ.
[16] बन्धः संतिष्ठते — उ, ऋ, ऐ; बन्धः सद्यस्तिष्ठते — ए.
[17] 'यतः' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[18] 'यः' इत्यत्र 'अयं' इति दृश्यते — ऊ, ऋ.
[19] दुर्भेदः — अ, ई, उ, ऊ, ऋ, ए, ऐ.
[20] संबन्धी — ऊ, ऋ.
[21] 'श्रीमत्' इति नास्ति — अ, ऐ.
[22] स्वायम्भुवे — ३२. १३ पू०.
[23] विषयः — ऊ, ऋ.
[24] तत्कर्माक्षिप्त० — अ.
[25] माया तदुपादानाद् — अ, ए.
[26] ०दानादभवदित्युक्तम् — आ, ई, उ; ०दानात्तद्भवतीत्युक्तम् — ऐ.
[27] ०कर्मपक्षवत् — ऊ, ऋ.
[28] ०मलपक्षमपि — ऊ, ऋ; ०मलकर्मपक्षावपि — ऐ.
[29] प्रवृत्ताः शक्तयः — ओ.

**मायायास्तु** [1]नित्यत्वाद् नोत्पत्तौ ईश्वरशक्तयः **कारणम्**। अपि [2]तु **प्रवृत्तौ**। तासां तु परमेश्वरः। स तु स्वतन्त्रो [3]नान्यप्रेर्य इत्युक्तम्[4]॥१२१॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय, व्याख्येयस्य [5]चोपक्रमाय[6] श्लोकः — 'मायेयम्' इत्यादि।

> **मायेयमाद्या जगतो धरित्री स्वरूपतः [7]सा [8]कथिता यथावत्।**
> **[9]कलादिकोऽस्या विभवः समस्तः सोऽप्युच्यते कारणकार्यभावात्॥१२२॥**

**मायेयम्** आद्या कारणं **जगतः**। [10]**धरित्री** च धारिका[11]। अकृतस्य करणं, कृतस्य परिवर्धनं [12]प्रकृतिकर्म यतः। **सा च स्वरूपतः**, भुवनाकारेणापि **यथावत्** प्रमाणसिद्धा [13]**कथिता**। अधुना तु [14]**अस्याः** संबन्धी कलादि[15]क्षित्यन्तो **विभवः** तत्त्व[16]भूतभुवनात्मकः [17]कार्यविस्तारस्त्रिपर्वपदार्थत्वेन यः [18]प्राक् प्रतिज्ञातः, **सोऽपि** अवान्तरकार्यकारणभावप्रदर्शनेन **उच्यते** इति व्याख्येयोपक्रमः॥१२२॥

[19]इति [श्री][20]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
[विद्यापादे] शक्तिपदार्थविचारे [21]मायातत्त्वप्रकरणम्
[अष्टमं] समाप्तम्॥
**अष्टमः पटलः**

---

[1] प्रवाहनित्यत्वाद् — ऊ, ऋ, ऐ.
[2] तुशब्दो नास्ति — ऐ.
[3] नान्यप्रेष्यः — ऐ.
[4] मतङ्ग० विद्या० ३. १८, १९ वृत्तौ।
[5] चशब्दो नास्ति — ए.
[6] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[7] तैः — उ; ते — ऊ, ऋ, ओ.
[8] कथितं — ओ.
[9] कलादिकस्यापि भवः — उ.
[10] धात्री — अ.
[11] आधारिका — ई, उ, ऋ; आपूरिका — ऊ.
[12] 'प्रकृतिकर्म यतः' इत्यत्र 'प्रकृतिकर्मतः' इति दृश्यते — अ.
[13] मतङ्ग० विद्या० ८. १–२० वृत्तौ स्वरूपतस्तत्त्वरूपेणोक्ता; ८. ६५-९५ वृत्तौ भुवनाकारेणोक्ता।
[14] तस्याः — ए.
[15] ०क्षित्यन्तविभवः — अ, आ, ई, उ, ए, ऐ.
[16] ०कृतभुवनात्मकः — ऐ.
[17] कार्यविस्तर० — ऊ, ऋ; कार्यविस्तरत्रिपर्व० — ऐ.
[18] मतङ्ग० विद्या० २. १६ उ०, १७ पू० वृत्तौ।
[19] इतिशब्दो नास्ति — ऊ, ऋ.
[20] भट्टशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] मायाप्रकरणम् — ऊ, ऋ, ए.

# नवमः पटलः

## कलातत्त्वप्रकरणम्

**अथातो जगदुत्पत्तिं विचित्ररचनोज्ज्वलाम् ।**
**[1]समासेनाभिधास्यामि शृण्वेकाग्रमना मुने ॥१॥**

**अथेति** [2]शक्त्याह्वयपदार्थव्याख्यानादनन्तरं [3]यतस्त्रिपर्वाभि[4]धानपदार्थः प्रतिज्ञातः,[5] ततो हेतोः । [6]**जगदुत्पत्तिम्** इति तत्त्वभूतभुवनात्मकत्वेन त्रिपर्वणो जगतः कलादिकत्वेन [7]प्रागुक्तस्योत्पत्तिरवधार्यतामिति पदार्थसंबन्धः । वाक्यात्मकस्तु [8]"मायातः [9]क्षुरिताः कलाः" इत्यादिभिरनेकविधः । अन्ये [10]तु संबन्धाः [11]पूर्वोक्ता एवेति ॥१॥

अथ महा[12]मायावन्मायापि किं परमेश्वरक्षोभ्यैव । [13]तत्कार्यं चैतत् त्रिपर्वात्मकं जगत् [14]किं सर्वमेव साक्षान्मायात उत्पन्नम् । [15]उत किंचिदेव, किंचिच्च[16] पारम्पर्येणेति । [17]उभयत्राप्युच्यते — 'क्षोभितोऽनन्तनाथेन' इत्यादि ।

**क्षोभितोऽनन्तनाथेन ग्रन्थिर्मायात्मको यदा ।**
**तदा स्वेन विकारेण [18]करोति विपुलं जगत् ॥२॥**
**षट्[19]कपालेश्वरा रुद्रा लुप्तव्यापारशक्तयः ।**
**शिवार्ककिरणव्यूहबलेनोन्मीलितेक्षणाः ॥३॥**
**सहसा बोधमायान्ति त्यक्त[20]निद्रा गतक्लमाः ।**
**[21]ऐश्वर्यमदमाविश्य स्वव्यापारसुपेशलाः ॥४॥**
**क्रीडन्त्यमितभोगेषु शिवतेजोप[22]बृंहिताः ।**
**येऽप्यधस्तान्महाभागा रुद्राः षड् भुवनेश्वराः ॥५॥**

---

[1] समासतोऽभि० — ऊ, ऋ.
[2] शक्त्याह्वपदार्थ० — ऊ, ऋ.
[3] 'यतः' इति नास्ति — अ; यस्त्रिपर्वाभि० — आ, ई, उ, ए, ऐ.
[4] ०धानः पदार्थः — ऊ.
[5] मतङ्ग० विद्या० ८. १२२ वृत्तौ ।
[6] 'जगदुत्पत्तिमिति' इत्यारभ्य 'प्रागुक्तस्योत्पत्ति' इत्यस्य स्थाने जगदुत्पत्ति' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[7] मतङ्ग० विद्या० २. १६ उ०, १७ पू० वृत्तौ ।
[8] मतङ्ग० विद्या० ६. १०४ उ०.
[9] क्षुरिता कलेत्यादिभिः — आ, ई, उ; क्षरिताः कलाः — ऊ, ऋ, ऐ.
[10] तुशब्दो नास्ति — ऊ, ऋ.
[11] मतङ्ग० विद्या० तृतीयप्रकरणोपक्रमोक्ताः ।
[12] ०मायावन्मायाकर्म किं — ए.
[13] तत्त्रिपर्वात्मकं — अ.
[14] 'किं' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[15] 'उत' इति नास्ति — ए.
[16] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[17] 'उभयत्राप्युच्यते' इत्येतन्नास्ति — ऊ, ऋ.
[18] तनोति — ऊ, ऋ, ओ.
[19] कपालीश्वरा रुद्रा — मु, उ; कपालेश्वरनेत्रा — ऊ, ऋ.
[20] ०निद्रामदक्लमाः — ऊ, ऋ.
[21] ऐश्वर्यपद० — ऊ, ऋ.
[22] ०बृंहितम् — ओ.

**प्रध्वस्तावयवाङ्गास्तु शक्त्यामृत[1]निषेचिताः ।**
**प्रादुर्भवन्ति [2]संसिद्धाः [3]स्वमदोद्दामगर्विताः ॥६॥**

अनन्तेश [4]एव तस्य क्षोभकः । न तु परमेश्वर इत्यर्थः । ग्रन्थिश्चायं न कार्यात्मकः [5]प्रागुक्तः यतो विशेष्यते **मायात्मकः** इति, मायैव समस्त[6]जगद्ग्रहणस्वगहनात्मकत्वाद् [7]**ग्रन्थिः** [8]इत्युक्ता । सा च तेन क्षोभिता साक्षात्स्वविकारेण [9]पट्कपालेश्वरोपलक्षित[10]भुवनात्मना, तदधश्चाष्टग्रन्थीश-रुद्रभुवनरूपेण, तदधोऽपि च पट्[11]कपालेश्वरभुवन[12]लक्षणेन प्राक् [13]कलादिकार्यादूर्ध्वं च **जगद्** विस्तारयतीत्युक्तम्[14] । **प्रध्वस्तावयवाङ्गाः** इति प्रध्वस्तमवयवेषु [15]कलादिषु [16]अङ्गं मोहकत्वं [17]येषां रुद्राणामित्युक्तम्[18] ॥२–६॥

ततश्च — 'कृत्स्नवैनाशिका' इत्यादि ।

**कृत्स्नवैनाशिका येऽपि [19]क्षेत्रिणो मूढचेतसः ।**
**विषसंमूर्च्छितात्मानो ध्वस्तसंज्ञा विचेतसः ॥७॥**
**निरुद्धशक्तयः सर्वे शिवार्ककरचोदिताः ।**
**[20]विकसन्त्यणुपद्मास्तु मायासरसि विस्तृते ॥८॥**
**ईषदुन्मीलितात्मानः [21]कलयाविद्धमूर्तयः ।**
**प्रस्पन्दमानास्तरलाः प्रयान्त्युच्छूनतां मुने ॥९॥**

[22]कृत्स्नविनाशप्रयोजना ये महाप्रलयवशात् केवली[23]भूताः । न तु विज्ञानकेवलिनः । यदुच्यते **क्षेत्रिणः** इति क्षेत्रं शरीरं कर्मवशाद्भोग्यत्वेन विद्यते येषां ते प्रलयकेवलिनः मल[24]कर्मबद्धाः सन्तः **कलया** मलनिवृत्तिद्वारेण [25]**ईषदुन्मीलितात्मानो** भवन्ति । इयमेव उच्छूनता तेषामुच्यते । भोग[26]फलाय उद्योगाभिमुखीभावो यतः ॥७–९॥

---

[1] 'निषेविताः — मु, उ, ओ.
[2] संहृष्टाः — ऊ, ऋ, ओ.
[3] स्वमतोद्दाम० — उ, ओ.
[4] एवकारो नास्ति — ऊ, ऋ.
[5] मतङ्ग० विद्या० ८. ६७.
[6] ०जगद्गणस्थग [हृ] नात्मत्वाद् — ऊ, ऋ; ०जगद्गहनस्थो गणात्मकत्वाद् — ऐ.
[7] 'ग्रन्थिरित्युक्ता' इति नास्ति — ऐ.
[8] इत्युक्त्वा स च — ऊ, ऋ.
[9] 'पट्कपालेश्वरोप' इत्यारभ्य 'तदधोऽपि च' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[10] ०भुवनात्मता — ऊ.
[11] ०कपालीश्वर०—अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[12] 'लक्षणेन' इत्यत्र 'लक्षणे' इति दृश्यते — ऐ.
[13] कालादि० — अ, ऊ, ऋ, ए, ऐ.
[14] मतङ्ग० विद्या० ८. २–५ वृत्तौ ।
[15] कालादिषु — अ, आ, ई, उ, ऐ.
[16] अङ्गमोहकत्वमेषां — आ, ए, ऐ; अङ्गमनोहकत्वमेषां—ई, उ; अङ्गमोहकत्वं येषां—ए.
[17] एषां — अ.
[18] मतङ्ग० विद्या० ८. ७९ पू वृत्तौ ।
[19] क्षेत्रिणोऽदृढचेतसः — ओ.
[20] विकसन्त्यसुपद्मास्तु — मु.
[21] कलयासिद्ध० — ओ.
[22] कृत्स्ना विनाश० — अ, ई, उ, ए.
[23] ०भूतानां तु — ऊ.
[24] ०कर्मबलाः—अ; ०कर्मबन्धाः—आ, ई, उ, ए, ऐ.
[25] इव उन्मीलिता० — ऐ.
[26] ०फलाद्योऽभिमुखीभावो — ऊ, ऋ; ०फलायाद्योऽभिमुखीभावो — ऐ.

अत्र मतङ्गमुनिः कलाभिव्यक्तौ प्रमाणानुपपत्तिरिति चोदयति — 'संनिरुद्ध' इत्यादिना ।

**मतङ्ग उवाच —**

> **संनिरुद्धाणवी शक्तिर्मायोदरवशानुगा ।**
> **कालेन शांकरी तस्या बोधयित्री महाबला ॥१०॥**
> **कलेति या तृतीयोक्ता क्वागता परमेश्वर ।**

मलकर्मनिरुद्धापि हि [1]पुंशक्तिर्महाप्रलयावसाने [2]शिवशक्त्या प्रबोधमेष्यति । [3]तत्कुतोऽधिगता कलेति । तथा क्वागता इति कुतो हेतोरुत्पन्नेत्ययमपि पूर्वः पक्षः ॥

अत्र सिद्धान्तः — 'यथा क्षेत्र' इत्यादि ।

**परमेश्वर उवाच —**

> **यथा क्षेत्राम्बुसंयोगाद्बीजं वायुसमीरितम् ॥११॥**
> **क्षणादुच्छूनतामेति [4]स्वोष्मणा [5]प्रचलीकृतम् ।**
> **मृद्बीजाम्बुसमायोगात्तत्रैवाग्निः समारुतः ॥१२॥**
> **व्यक्तीभूतो विवृद्ध्यर्थं तथा संयोगजा कला ।**
> **विवृद्ध्येऽभिलाषेण यथा युक्तः [6]प्रबुद्ध्यते ॥१३॥**
> **[7]संयोगोन्मीलिनी ज्ञेया पुंसो [8]मायात्मजा कला ।**
> **तुष[9]कम्बुकसंयोगात्तण्डुलाज्जायतेऽङ्कुरः ॥१४॥**
> **तद्वन्मायाणुसंयोगाद्व्यज्यतेऽचेतना कला ।**

यदुक्तम् "आगता कुत" इति तत्र जलक्षेत्रादिसंयोगात् स्वेन चोष्मणा [10]प्रचलीकृतस्य बीज[11]स्योच्छूनतेव मायाकर्मविपाकसंयोगात् कला समुत्पन्ना । यथा [12]उच्छूनतासामर्थ्यादेव पुनर्जलातपादिद्रव्य[13]संयोगाद् अग्निः अङ्कुरानुगुण[14]वृद्धिनिमित्तं भवति । तथा [15]पुंसः भोगविवृद्ध्यर्थं [16]विद्यासंयोगस्य [17]रागादिजन्य[18]प्रबोधस्य [19]च हेतुः सैव संयोगजा कलेति । यथा [20]वा तण्डुलतुषादिसंयोगादङ्कुरो जायते । तथा मायापुरुषयोः कर्मनिमित्त[21]भोग्यभोक्तृत्वसंबन्धाद् अचेतना कला उत्पद्यते ॥

---

[1] पुंशक्तिभिर्महा० — ऐ.
[2] शिवशक्त्यैव बोध० — ऊ, ऋ.
[3] तत्कुत आगमा — अ, आ; तत्कुत आगता — ई, उ, ए; यत्कुत आगता — ऐ.
[4] सोष्मणा — मु, उ, ओ.
[5] प्रबलीकृतम् — मु, उ, ऊ, ऋ.
[6] प्रबुद्धचति — ओ.
[7] संयोगोन्मीलनी — ऊ, ऋ.
[8] मायात्मिका कला — ऊ, ऋ.
[9] ०तण्डुलसंयोगा० — उ.
[10] प्रबलीकृतस्य — ऋ.
[11] ०स्योच्छूनतैव — आ, ऊ, ऋ.
[12] चोच्छूनता० — ऋ, ए, ऐ.
[13] संयोगोऽङ्कुरानुगुण० — ऊ, ऋ; संयोगादङ्कुरानुगुण — ऐ.
[14] ०विवृद्धि० — आ, ई, उ, ऋ, ए, ऐ.
[15] पुंसि — अ, ऐ.
[16] विद्यादिसंयोगस्य — अ, आ, ई, उ, ए, ऐ.
[17] सरागादि० — अ, ऐ.
[18] ०प्रयोगस्य — ए.
[19] चशब्दो नास्ति — ऊ, ऋ, ए.
[20] वाशब्दो नास्ति — ऊ, ऋ.
[21] ०भोक्तृभोग्यत्वसंबन्धाद्—अ, ई, उ; ०भोक्तृभोग्यसंबन्धाद् — ऊ, ऋ, ऐ; ०भोगभोक्तृत्वसंबन्धाद् — ए.

अथोपादानकारणात् कुत आगतेति प्रश्नः । तत्राप्युच्यते — "यद्यपीयम्' इत्यादि ।

**यद्यपीयं कला सूक्ष्मा मायापापसमुद्भवा ॥१५॥**
**उभयोरपि संयोगा[1]च्चेतनाचेतनात्कला ।**

**यद्यपि उभयोरपि**[2] अनयोरमूर्तयोः [3]चेतनाचेतनयोः [4]यः संबन्धः स च [5]न व्यतिरिक्त इति दर्शयितुं [6]चेतनाचेतन उक्तः, तस्मा[7]त्कलेयममूर्तैवोत्पन्ना । [8]तथापि मायायाः क्षोभादुत्पन्ना । न तु पुंसः, चेतनत्वेनोपादानकारणत्वायोगात् ॥

[9]यदुक्तं[10] कलासिद्धौ प्रमाणं नास्तीति । तत्रोच्यते — 'सुखदुःखोपभोगस्य' इत्यादि ।

**सुखदुःखोपभोगस्य द्वारमेत[11]त्सदा चितेः ॥१६॥**

सिद्धे [12]हि मले तेनावृतत्वात् पुंसः [13]प्रलयकेवलावस्थायामिव सुखदुःखवेदनं न संभवतीत्यवश्यं [14]तत्र तदावरणनिवर्तकेन भवितव्यमिति कलातत्त्वसिद्धिः ॥१६॥

[15]प्रागुक्तार्थानुवादेन कलाशब्दप्रवृत्तावत्र हेतुरुच्यते — 'पुमांश्चेतन' इत्यादि ।

**[16]पुमांश्चेतन उद्दिष्टो मायातत्त्वमचेतनम् ।**
**[17]तत्संगमसमुत्थेयं कला कलयते जगत् ॥१७॥**
**न स्वयं मुनिशार्दूल [18]कारणाग्निकरेरणात् ।**

**इयं** च कलयन्ती भोगेषु क्षिपन्ती **जगत् कला** [19]इत्युच्यते । सा च **न स्वयम्** उत्थिता । किं तु **कारणम्** [20]अनन्तेशः जगत्प्र[21]काशदाहादिधर्मयोगाद् **अग्निः**, तस्य [22]**करेरणादिति** ॥

अथ सा [23]किं [24]वक्ष्यमाणविद्यादिवत् [25]करणतयैव पुंस उपयुज्यते । रूपान्तरेण वा । तत्रोच्यते — 'सुसूक्ष्मा' इत्यादि ।

---

[1] ०च्चेतनाचेतना कला — मु, उ, ओ.
[2] अपिशब्दो नास्ति — अ, ए.
[3] 'चेतनाचेतनयोः' इत्येतन्नास्ति —अ, ई, उ.
[4] 'यः इति नास्ति—ऐ.
[5] 'न' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[6] चेतनाचेतनोक्ता — अ, आ, ई, उ, ए, ऐ.
[7] ०त्कलेयं मूर्तैवोत्पन्ना — अ, आ, ई, उ, ए, ऐ.
[8] 'तथापि मायायाः क्षोभादुत्पन्ना' इत्येतन्नास्ति — अ.
[9] यत्तूक्तं — ऋ.
[10] मतङ्ग० विद्या० ९. १०, ११ पू० वृत्तौ ।
[11] ०त्सदोचिता — मु, उ.
[12] हिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[13] प्रलयकैवल्या० — ऊ, ऋ.
[14] अत्र — ऊ, ऋ.
[15] मतङ्ग० विद्या० ९. १५ उ०, १६ पू०, वृत्तौ ।
[16] पुंसां चेतन इत्युक्तो — ऊ, ऋ; पुमांश्चेतनमुद्दिष्टे — ओ.
[17] तत्संयोगात्समुत्थेयं — ऊ, ऋ.
[18] कारणं करणेरणात् — उ.
[19] इतिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[20] अनन्तेशाज्जगत् — अ.
[21] ०काशादिदाहादि० — ऐ.
[22] करणेरणादिति — आ; करणादिति — ऐ.
[23] किंशब्दो नास्ति — ऊ, ऋ.
[24] मतङ्ग० विद्या० १०. ४ उ०, ५ वृत्तौ ।
[25] करणतयेव — ई, उ; कारणतयैव — ए; करणं तथैव — ऐ.

**सुसूक्ष्मा विमला सत्ता या सा ज्ञानक्रियात्मिका ॥१८॥**
**समर्थीकृत्य कलया भोगेषु विनिपात्यते ।**
**यस्मान्मोहादिना [1]व्याप्ता चिन्मात्रासन्नगोचरा ॥१९॥**

यतो व्यापिका **विमला** च भोक्तुः **ज्ञानक्रियात्मिका सत्ता** मोहेन मलेन कर्मणा च **व्याप्ता** [2]प्रलयकेवलिन इव [3]**भोगेषु** न[4] पतति। ततः [5]**कलया** एवेषन्मल[6]निवृत्त्यात्मकचित्समर्थनेन [7]पात्यते इत्यस्मात् कर्तृस्वरूपोप[8]कारकत्वात्, [9]अचेतनत्वेऽपि पुरुषं प्रति प्रयोजककर्तृत्वमुच्यते। न तु [10]करणत्वम्। विद्यादीनामेव कर्तुः [11]कर्मण्युपयोगेन [12]करणत्वात् ॥१८–१९॥

तथा हि — 'यावद्' इत्यादि।

**यावद्विद्यादयो न स्युर्भावाः [13]पुंसः प्रवृत्तये ।**
**[14]अनुमानोत्थितास्तावत्कलेयं त्वग्यथा तरोः[15] ॥२०॥**

[16]**विद्यादयो हि भावाः** प्रवृत्ति[17]विषयदर्शकत्वेन **पुंसः** [18]समुपयुज्यन्त इति [19]करणम् उक्ताः। [20]**कला** तु असंवेद्यमानैव **त्वग्यथा तरोः** तथा पुंसः स्वरूपोप[21]कारिकेति कर्तृत्वेनोक्ता ॥२०॥

तथा हि — 'वेदन' इत्यादि।

**वेदने सुखदुःखानां नान्यत्किंचित् [22]प्रविद्यते ।**
**विद्या[23]रागात्मकैर्यावद्विकारैर्न प्रवर्तते ॥२१॥**
**[24]प्रविकीर्णबलः पश्चात्सर्वं वेत्ति करोति च ।**

---

[1] 'व्याप्ता' इत्यस्य स्थाने 'विद्वान्' इति दृश्यते ऊ, ॠ.
[2] 'प्रलयकेवलिनः' इत्यस्यानन्तरं 'वृत्त्यात्मकचित्समर्थनेन' इत्येव दृश्यते। मध्यस्थो भागो नास्ति — ऊ, ॠ.
[3] न भोगेषु पतति — ए.
[4] नकारो नास्ति — आ, ई, उ, ऐ.
[5] कलैवेपन्मल० — आ.
[6] निवृत्त्या किंचित्समर्थनेन — अ, आ, ई, उ, ए; निवृत्त्यात्मकश्चित्समर्थनेन — ऐ.
[7] व्यज्यते — अ, आ, ई, उ, ऐ; अर्थ्यते — ए.
[8] ०कारत्वात् — अ, ऐ.
[9] 'अचेतनत्वेऽपि पुरुषं प्रति प्रयोजक' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[10] 'करणत्वम्' इति नास्ति — आ; कारणत्वम् — ऊ, ॠ.
[11] कर्माद्युपयोगेन — अ; कर्माभ्युपयोगेन — आ, ई, उ, ऐ; कर्माप्युपभोगेन — ए.
[12] करणत्वम् — अ, आ, ई, उ, ए, ऐ.
[13] पुंसोऽप्रवृत्तये — ओ.
[14] अनुमानोज्झिता तावत् — मु, उ, ऊ, ॠ.
[15] कलेयत्तद्यथातुरैः — मु. पाठान्तरम्; कलेयं तद्यथातुरैः — उ.
[16] 'विद्यादयो हि' इत्येतन्नास्ति — ऊ, ॠ.
[17] ०विषयाः प्रवर्तकत्वेन — अ, आ, ई, उ, ए, ऐ.
[18] समुपयुज्यत इति – आ; स्वमुपयुज्यत इति–ऐ.
[19] कारणम् — आ, ऊ, ॠ.
[20] 'कला तु' इत्यारभ्य 'तरोः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] कारितेति — ऐ.
[22] प्रवेद्यते — ऊ, ॠ; प्रपद्यते — ओ.
[23] ०रागात्मिकैर्यावद् — मु, उ.
[24] विप्रकीर्णबलः — ऊ, ॠ.

**न** हि **यावद्** विद्यादिभिः [1]**प्रवर्तते,** तावद् **अन्यत् किंचिद्** करणं पुंसो भोगे [2]**न** विद्यते। [3]तैस्तु विस्तारितज्ञानक्रियाबलः **पश्चात् सर्वं** भोग्यं **वेत्ति**। तदर्थं धर्मादिकं च **करोति** इति॥

न [4]केवलं विद्यादय एव तस्य [5]करणम्। यावद् [6]बुद्ध्यादयोऽपीत्युच्यते — 'बाह्योऽर्थ' इत्यादि।

> **बाह्योऽर्थोऽतीव [7]यः [8]स्थूलस्तं विकारैः प्रधानजैः ॥२२॥**
> **प्राधानिकेन कायेन [9]प्रधानस्थः स एव हि।**
> **विजानाति मुनिव्याघ्र सति तत्त्वे कलात्मके ॥२३॥**
> **[10]नासत्येवातिसूक्ष्मत्वान्निर्मलत्वाच्च कारणात्।**

एतत्सर्वं यतः **तत्त्वे कलात्मके सति** [11]जानाति, [12]**नासत्येव**। प्रलय[13]केवल्यवस्थायाम् [14]**अति-सूक्ष्मत्वाद्** [15]असर्वज्ञत्वाद्, [16]मुक्तावस्थायां[17] च **निर्मलत्वात्** [18]सर्वज्ञत्वादित्यर्थः। ततस्तस्या एव कर्तृत्वम्। न तु विद्यादीनाम्। तेषां तु [19]करणत्वमेव॥

सा च न ईश्वर[20]शक्त्यनधिष्ठिता प्रवर्तत [21]इत्युच्यते — 'कलान्तर' इत्यादि।

> **कलान्तर्वर्तिनी ज्ञेया कलयित्री महात्मनः ॥२४॥**
> **शक्तिः शक्तिमतः पत्युर्वीर्येणातिबलोत्कटा।**

[22]"न च शक्त्युज्झितं क्वचित्। प्रवर्तते" इत्युक्तमीश्वरसिद्धौ॥

[23]यत्तूक्तम्[24] [25]ईश्वरशक्तिरेव पुंसश्चैतन्योपोद्बलिका अस्तु। किं कलयेति। तत्प्रतिक्षेपायोच्यते — 'तयोपोद्बलिता चित्स्याद्' इत्यादि।

---

[1] अत्र नकारोऽधिकः — अ, आ, ई, उ, ऊ, ऋ, ए.
[2] नकारो नास्ति — अ, आ, ई, उ, ऊ, ऋ, ए.
[3] 'तैस्तु' इत्यारभ्य 'करोति इति' इत्यन्तस्य स्थाने 'ततस्तु विस्तृतज्ञानक्रियाबलकः सर्वं करोति इति' इति दृश्यते—अ, आ, ई, उ, ए.
[4] केवला विद्यादयः — ऐ.
[5] कारणम् — ऊ, ऋ.
[6] विद्यादयोऽपी० — अ.
[7] यत् — ओ.
[8] स्थूलस्तद्विकारैः — मु, उ.
[9] प्रधानस्तु सदैव हि — ऊ, ऋ.
[10] नासत्त्वादति० — मु, उ, ओ.
[11] ज्ञानादिना सत्येव — अ, ए.
[12] न सत्येव—आ, ई, उ; वा सत्येव—ऊ, ऋ.
[13] ०कैवल्यावस्थायां — ऊ, ऋ.
[14] 'अतिसूक्ष्मत्वाद्' इति नास्ति—आ, ई, उ, ए, ऐ.
[15] 'असर्वज्ञत्वाद्' इति नास्ति — आ, ई, उ, ए, ऐ; अनुपलब्धृत्वाद् — ऊ, ऋ.
[16] अत्र 'तस्य' इत्यधिकम् — ऊ, ऋ.
[17] मुक्त्यवस्थायां — ऊ, ऋ, ए; 'मुक्तावस्थायां' इति नास्ति — ऐ.
[18] सर्वत्वादित्यर्थः — आ; सर्वज्ञादित्यर्थः — ई, उ; सर्वज्ञत्वाच्चेत्यर्थः — ऊ, ऋ.
[19] कारणत्वमेव — आ; कारणमेव — ऊ, ऋ.
[20] ०शक्त्यनधिष्ठाना — ऐ.
[21] 'इत्युच्यते' इत्यतः प्रभृति ३४, ३५ तम-श्लोकयोर्वृत्तौ 'प्रकृतिपुरुषविवेकविषयज्ञानवत्' इत्यन्तं लुप्तम् — ऊ, ऋ.
[22] मतङ्ग० विद्या० ३. १२.
[23] यत्रोक्तम् — ऐ.
[24] मतङ्ग० विद्या० ९. १०, ११ पू०
[25] ईश्वरस्यैव पुंसः — अ.

**तयोपोद्बलिता चित्स्याच्चेतनोद्बलने क्षमा ॥२५॥**
**चैतन्यमपि तद्योगादाशु[1] गृह्णाति [2]पुद्गलः ।**

[तया] **चिद् उपोद्बलिता** भवेत् । ततो मुक्तस्येवेयमपि शिवशक्तिव्यक्तत्वात् [3]चेतनस्य पुरुषान्तरस्य उद्बलने **क्षमा** स्यात् । परमेश्वरशक्ति[4]योगाद् [5]ध्यायिनश्चैव [6]पुरुषाः सर्वे मुक्तिं [7]प्रसाधयन्ति । न च [8]तथाभूतोऽयं भोक्ता । ततो नेश्वरशक्त्याभिव्यक्तेति गम्यते । परिमितया कलयैवेति ॥

यद्येवं परिमितेन कर्मणैव चैतन्योपोद्बलनमस्तु । किं कलयेति । [9]तत्राप्युच्यते — 'स्वकर्म' इत्यादि ।

**स्वकर्मवास[10]नायत्तमुद्भूतं चलतः [11]पुरा ॥२६॥**
**तत्त्वान्मायात्मकाद्दुःखं सुखं वापि यदुत्कटम् ।**

[12]**चलतः** संक्षुब्धाद् [13]मायातत्त्वात्[14] पुंसः स्वकर्मवासनानुसारेण सुखदुःखं च **उद्भूतम्** । नान्यत् । एतदुक्तं भवति — [15]कार्यैकगम्यानां हि वस्तूनां [16]हेतुभेदौ कार्यभेदाभ्यामेव सिद्धचतः । कर्मकार्यात् [17]सुखदुःखरूपाद् भिन्नमेव कार्यं [18]चैतन्योपोद्बलनमिति । ततस्तत्र भिन्नेनैव निमित्तेन कलात्मना भवितव्यम् । अन्यथा सर्वस्यैव कर्मनिमित्तत्वसिद्धेर्बुद्ध्यादितत्त्वानामप्यसिद्धिः । कर्मैव सर्वं स्यात् । ततश्च प्रत्यक्षानुमानेन विरोधः ॥

अत्रोपसंहारः — 'एवम्' इत्यादि ।

**एवमादौ [19]प्रवक्तव्या सृष्टिर्ग्रन्थैः कला पशोः ॥२७॥**

तद् **एवम्** अतिप्रसङ्गपरिहारार्थं [20]कर्मणोऽप्यन्या [21]मायातः पुंसां चिच्छक्त्युपोद्बलनाय प्रथमं **कला** उत्पद्यत इत्यभ्युपगन्तव्यम् ॥२७॥

कर्मादि[22]वैलक्षण्येन कलाव्यापारो दृष्टान्तेनोच्यते — 'यथाग्नितप्तम्' इत्यादि ।

---

[1] 'आशु' इत्यत्र 'अनु' इति दृश्यते — मु० पाठान्तरम्, उ, ओ.
[2] पुद्गलम् — मु० पाठान्तरम्, उ, ओ.
[3] चेतसः — ऐ.
[4] योगादध्यात्मनश्चैव — ऐ.
[5] ध्यायिन एव — आ, ई, उ.
[6] पुरुषशब्दमुक्तं — ए.
[7] प्रसादयन्ति — अ, आ, ई, उ, ए, ऐ.
[8] तथाभूतेयं भोक्तुः ततो — अ, आ, ई, उ, ए.
[9] तत्रोच्यते — ई, उ.
[10] ०नायतादुद्भूतं — मु, उ.
[11] पुनः — मु० पाठान्तरम्, उ० पाठान्तरम् ।
[12] चलतः क्षुब्धाद्–ई, उ; प्राग्भिन्नसुषुप्ताद्—ए.
[13] माया तु पुंसः — अ.
[14] अत्र तुशब्दोऽधिकः — ए.
[15] कार्यैकगम्यानि हि वस्तूनि—अ, आ, ई, उ, ए.
[16] भेदविभेदौ — ऐ.
[17] सुखरूपाद् — आ.
[18] चैतन्योद्बलन० — आ.
[19] प्रकर्तव्या — मु, उ.
[20] कर्मणोऽन्या — ऐ.
[21] माया अतः — अ, आ, ई, उ.
[22] ०वैलक्षण्यव्यापारो — अ.

[1]यथाग्नितप्तं मृत्पात्रं जतुनालिङ्गने क्षमम्।
तथाणुः कलयाविद्धो भोगाञ्छक्नोति वासितुम् ॥२८॥
स्वार्जितान्परया प्रीत्या"

**यथा** अग्निसंबद्धं मृदादि पात्रं **जतुना** पलाशनिर्यासस्य **आलिङ्गने** [2]**क्षमं** भवति। न त्वसंबद्धमेव। **तथा** पुमान् कलासंबद्ध एव **भोगान् शक्नोति वासितुं** तेषामालिङ्गने क्षमो भवतीति। न तु [3]तया असंबद्धः॥

अत एव—'कलया' इत्यादि।

"कलयाणुः [4]कलाप्यथ।
स्वालिङ्गिताणुना यस्मात्तयोस्तस्माद्विभागतः॥२९॥
न शक्यते[5]ऽन्तरं द्रष्टुमेकमेवोपलक्ष्यते।
तथापि कारणज्ञान[6]किरणोद्योतिते हृदि॥३०॥
बुद्धिः प्रवर्तते ज्ञातुं स्वभावेनैव पेशला।

[7]**यस्मात्**[8] **कलया** सह **अणुः** भोक्ता, न [9]अकलः। **कलापि अणुना** प्रयोक्त्री, न केवला; सद्योनिर्वाणदीक्षया [10]वियोजिता। **तस्मात् तयोः विभागतः** [11]**अन्तरं द्रष्टुं न** [12]**शक्यते**। संभूय **एकमेव** कारणं लक्ष्यते यद्यपि। **तथापि** मायागर्भाधिकारीश्वरसंप्रदायेन **उद्योतिते** सति **हृदि** चित्ते पुंसः कलादिविवेकेन ज्ञानं **स्वभावेनैव** प्रवर्तते॥

अथ कथं सर्वदैव तथाभूतं ज्ञानं तस्य तथा न प्रवर्तत इति। तत्रोच्यते—'भोगधात्री' इत्यादि।

भोगधात्री कला ज्ञेया कलाधारश्च पुद्गलः॥३१॥
तत्स्थः कर्मविपाकेन [13]भूरिणादिमतापि तु।
[14]वासितो नोत्सहेत्त्यक्तुं भूयो[15]भूयोऽनुरज्यते॥३२॥
भोगानामपि नान्योऽस्ति कलां [16]त्यक्त्वा समाश्रयः।
ततोऽयं नियमः स्पष्टः [17]संसारोऽस्ति[18]दुरुत्तरः॥३३॥

---

[1] अग्नितप्तं यथा पात्रं—ओ.
[2] 'क्षमं भवति' इत्यारभ्य 'तेषामालिङ्गने' इत्यन्तं नास्ति—अ, आ.
[3] तयासंबन्धः—अ, आ, ई, उ; तेनासंबन्धः—ऐ.
[4] कलोऽप्यथ—उ.
[5] ०ऽन्तरा—उ.
[6] ०किरणोद्योतिता—उ.
[7] अत्र 'यत्' इत्यधिकम्—ए.
[8] तस्मात्—ए, ऐ.
[9] अकलाः—आ, ई, उ.
[10] वियोजितात्—अ, आ.
[11] अनन्तरं—आ, ई, उ; अन्तरा—ए.
[12] शक्येत—अ, ऐ.
[13] भूरिणाभिमतेन तु—मु, उ.
[14] वासिते नोत्सहे त्यक्तुं—ओ.
[15] भूयो न रज्यते—उ.
[16] त्यज्य समाश्रयम्—ओ.
[17] संहारेऽस्ति०—उ.
[18] ०दुरुत्तरम्—ओ.

[1]प्रागर्जितभोगसंपादिका हि कला पुंसः। अकलस्य [2]भोगानुत्पत्तेरित्युक्तम् । कला[3]संबद्धश्च पुनः कर्माणि करोतीति। **आदिमतापि कर्मविपाकेन** अतिप्रभूतेन वास्यते। **वासितः च** "[4]नाभुक्तं कर्म नश्यति" इति वा असकृत् [5]सानुरागः संपद्यते। **भोगानामपि** कलाव्यतिरेकेणानुपपत्तेः कलाद्यपेक्षितमित्युक्तम्। **ततः** नद्या जवजविभावेन **अयं संसारः** [6]प्रवृत्त इति नियमेन [7]न [8]कलापुरुष[9]विवेकविषयज्ञान[10]मुत्पद्येत ॥३१–३३॥

[11]यद्येवं न [12]कदाचित्तदुत्पद्येतेति। उच्यते — 'किं तु' इत्यादि।

> **किं तु कारणवक्त्राब्जसमुद्भूतेषु सुव्रत।**
> **ज्ञानचक्षुः[13]प्रदीपेन सम्यगालोक्य सादरम् ॥३४॥**
> **[14]अयं पुमानियं चैषा कला दोषालयाशुभा।**
> **अनयोरन्तरं ज्ञात्वा स्वस्थो[15] निर्वात्य[16]संशयम् ॥३५॥**

कदाचित् मायागर्भाधिकारीश्वरप्रणिधानात्, सांख्ययोगिनां बुद्धिपुरुषभेदोपलम्भतः प्रकृतिपुरुष[17]विवेकविषयज्ञानवत्, [18]**अयं पुमान् इयं च** [19]**एषा कला**" इति [20]कलापुरुष[21]भेदोपलम्भतो मायापुरुषविवेक[22]विषयं ज्ञानमुत्पद्यत एव। तदा च "[23]ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते" इतिन्यायेनासौ [24]परिक्षीणसर्वकर्मत्वाद् **निर्वाति** विज्ञानकेवलित्वम् **असंशयं** प्राप्नोति। प्रकृतिपुरुष-

---

[1] प्रागर्जित० — ऐ.

[2] अत्र 'कलायाः' इत्यधिकम् — अ, आ, ई, उ, ऐ.

[3] ०संबन्धश्च — अ, ऐ.

[4] पौष्करे विद्या० विन्दुपटले ४५ उ०. — 'नाभुक्तं क्षीयते कर्म' इति दृश्यते।

[5] सानुरागत्वं प्रपद्यते — ए.

[6] प्रवर्तेत — ए.

[7] नकारो नास्ति — ए.

[8] कलापुरुषविषयविवेकज्ञानम् — अ, आ, ई, उ.

[9] 'विवेकविषयज्ञानमुत्पद्येत' इत्यारभ्य ३४, ३५ तमश्लोकयोर्व्याख्याने 'भेदोपलम्भतः प्रकृतिपुरुष' इत्यन्तं नास्ति — ए.

[10] ०मुत्पद्यते — आ.

[11] 'यद्येवं न कदाचित्तदुत्पद्येत' इत्येतन्नास्ति— आ.

[12] कदाचिदिदमुत्पद्यतेत्युच्यते — ऐ.

[13] प्रदीप्तेन — ओ.

[14] अयं सुनियमाप्स्येषा — उ.

[15] स्वतो — मु. पाठान्तरम्, ओ.

[16] ०त्यसंशयः — ओ.

[17] विवेकवत्, अयं — ऐ.

[18] 'अयं' इत्यत्र 'चिदयं' इति दृश्यते — ऊ, ऋ.

[19] एषां — ऐ.

[20] अत्र 'स' इत्यधिकम् — ऐ.

[21] ०विभेदोप० — ऊ, ऋ.

[22] ०विषयज्ञानम् — अ, ई, उ, ऐ.

[23] कामिकागमे पूर्वभागे ४. ५५ पू०; भगवद्गीता ४. ३७.

[24] 'परिक्षीणसर्वकर्मत्वाद्' इत्यारभ्य 'असंशयं प्राप्नोति' इत्यन्तस्य ग्रन्थस्य स्थाने 'परिक्षीणकर्माशयं प्राप्नोति' इति दृश्यते — अ, आ, ई, उ, ए. 'परिक्षीणोऽकर्मासंशयं प्राप्नोति' इति दृश्यते — ऐ.

[1]विवेकविषयज्ञानाद्धि[2] न [3]सर्वकर्मक्षयः । [4]तत [5]ऊर्ध्वमनुत्पन्न[6]बुद्धितः कलादि[7]विवेकानुत्पादेन तद्गतस्य कर्मणो[8]ऽपरिक्षयान्मायापुरुष[9][10]विवेकविषयज्ञानादेव सर्वकर्मक्षयसिद्धिः ।

न त्वत्र परो निर्वाणो विवक्षितः । मल[11]स्वरूपापरिज्ञानात् । तस्य च परमेश्वरज्ञानैक-[12]निष्ठत्वादिति [13]वक्ष्यामोऽनन्तरप्रकरणे ॥३४–३५॥

[14]एषा च — 'इत्थम्' इत्यादि ।

**इत्थं [15]गुणवते [16]चेयं [17]स्वधर्मेण स्थिता कला ।**

[18]मलकर्मबद्धायैव **इयं कला** [19]चिद्रूपोद्बलनेन **स्थिता**। न तु विज्ञानकेवलायेत्यर्थः। एवं तत्त्व-रूपेण कलोक्ता ॥

[20]अधुना भुवनरूपेणापि त्रिपर्वपदार्थैकदेशताख्यापनायोच्यते — 'अस्याम्' इत्यादि ।

**अस्यां [21]भुवनमाला तु स्थिता रुद्राणुसन्ततेः ॥३६॥**
**भोगार्थं [22]रचिता [23]धात्रा क्रीडनाय सुखोदया ।**
**प्रह्लादन[24]विनोदाढ्या भुवनैर्दशभिश्चिता ॥३७॥**
**[25]मृगाङ्कमौलयस्तत्र रुद्राः क्रीडन्त्यनिन्दिताः ।**

[26]**रुद्राणुसन्ततेः** संबन्धिनी तत्र **भुवनमाला** । [27]**रुद्राः** तत्र शशाङ्कमौलयो विशिष्टतद्भौवन-शरीरयुक्ताः ॥

---

[1] ०विषयविवेकविषयज्ञानात् — आ; ०विषय-विवेकज्ञानात्—ई, उ, ए, ऐ; ०विवेकज्ञानात् — ऊ, ऋ.
[2] 'हि' इत्यारभ्य 'मायापुरुषविवेकविषयज्ञानाद्' इत्यन्तं नास्ति — आ.
[3] तत्कर्मक्षयः — अ, ई, उ, ए, ऐ.
[4] अतः — ऊ, ऋ.
[5] ऊर्ध्वमुत्पन्न० — अ, ई, उ.
[6] ०बुद्धितत्त्वतः — ऊ, ऋ.
[7] ०विवेकानुत्पादत्वेन तत्कृतस्य कर्मणो — ऐ.
[8] ०ऽपरीक्षयाद् — ई, उ.
[9] ०पुरुषविषयविवेकज्ञानादेव — ऐ.
[10] ०विवेकज्ञानात्तु सर्वमायाविवेकसिद्धेः सर्व० — ऊ; ०विवेकज्ञानात्तु सर्वमायाकार्यविवेक-सिद्धेः सर्व० — ऋ.
[11] ०स्वरूपपरिज्ञानात् — अ, ऐ.
[12] ०निर्वाणितत्वादिति — अ, आ, ई, उ; ०नि-वर्तत्वादिति—ऊ, ऋ; ०निर्वृतत्वादिति —ए.
[13] मतङ्ग० विद्या० १०. २६–२८ वृत्तौ ।
[14] येषां च — ऐ.
[15] गुणवतो — उ.
[16] नेयं — मु; येयं — मु० पाठान्तरम्, उ, ओ.
[17] स्वधर्मेण व्यवस्थिता — मु० पाठान्तरम्, उ.
[18] सकलायैव — अ, आ, ई, उ, ए, ऐ.
[19] चिदुद्बलितेन — ऊ; चिदुद्बलनेन — ऋ.
[20] 'अधुना' इत्यत्र 'अथ' इति दृश्यते — ऊ, ऋ; 'अधुना' इति नास्ति — ऐ.
[21] भुवनमालानां स्थिता — उ.
[22] चरिता — ऊ, ऋ.
[23] धात्री — मु, उ, ओ.
[24] ०विनोदाढ्यभुवनै० — ऊ, ऋ.
[25] प्राप्तकामोदयास्तत्र — मु, उ, ओ.
[26] रुद्राणां सन्ततेः — ऐ.
[27] रुद्राश्च तत्र — ऊ, ऋ.

[1]ते एव[2] भुवनपालकाः क्रमेणोच्यन्ते — 'वामदेव' इत्यादिना।

**वामदेवो महातेजा ज्येष्ठश्चैव महाबलः ॥३८॥**
**[3]रौद्रो रुद्र इति ख्यातः [4]कालश्चेति महाबलः।**
**[5]कलविकरणोऽन्योऽपि [6]पञ्चमोऽतीव पुष्टवान् ॥३९॥**
**[7]बलविकरणः षष्ठो भुवनेशस्ततः [8]परः।**
**बलप्रमथनोऽन्योऽपि विख्यातो भुवनेश्वरः ॥४०॥**
**भूतानां दमनः प्रोक्तो भुवने सुमनोरमे।**
**[9]मनश्चैव महातेजा [10]उन्मनश्चातिवीर्यवान् ॥४१॥**
**एते रुद्राः समाख्याता रुद्रैरात्म[11]समैर्वृताः।**

ततश्च दशैवात्र[12] भुवनानीत्यर्थः[13] ॥

[14]अथ किमेते [15]कपालेशादिवदशुद्धा एव। नेत्युच्यते — 'अलुप्तशक्तय' इत्यादि।

**अलुप्तशक्तयः सर्वे बोद्धारः [16]परमेश्वराः।**
**शिवेच्छानुमताः सर्वे चेष्टन्ते विपुलेऽध्वनि ॥४२॥**

**परमेश्वराः** सर्वज्ञाः सर्वकर्तारश्च[17] शिवेच्छ[18]यैवात्र अनुमताः नियुक्ताः। न तु [19]कपालेशादिवदनन्तनियुक्ता इत्यर्थः ॥

[20]अथ [21]व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य [22]चोपक्रमाय[23] श्लोकद्वयम्[24] —'कला' इत्यादि।

---

[1] तत एव — आ; ता एव — ऊ, ऋ; 'ते एव' इत्येतन्नास्ति — ऐ.
[2] पालाः — ए.
[3] रुद्रो रुद्रबलः ख्यातः — ऊ, ऋ.
[4] कालश्चाति० — ऊ, ऋ.
[5] कलवीकरणो० — मु.
[6] पञ्चमोऽपि वपुष्मता — ऊ, ऋ.
[7] बलवीकरणः — मु.
[8] परम् — मु, उ, ओ.
[9] महश्चैव — मु.० पाठान्तरम्, ओ.
[10] उन्मनाश्चाति० — मु; उत्पन्नश्चाति० — ऊ, ऋ.
[11] ०समावृताः — ओ.
[12] दशैव तत्र — अ, आ, ई, उ, ए, ऐ.
[13] 'इत्यर्थः' इति नास्ति — अ, आ, ई, उ, ऊ, ए, ऐ.
[14] 'अथ किमेते' इत्यस्य स्थाने 'ते' इति दृश्यते — अ, आ, ई, उ, ऊ, ए, ऐ.
[15] कपालीशादि० — आ, ई, उ, ए, ऐ.
[16] पारमेश्वराः — मु, उ.
[17] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[18] ०यैव चात्र मताः — ऊ; ०यैव चानुमताः — ऋ.
[19] कपालीशादि० — आ, ई, उ, ए, ऐ.
[20] 'अथ' इति नास्ति — ऊ; अतः — ए.
[21] व्याख्यातार्थोपसंहाराय — अ, आ, ई, उ, ए, ऐ.
[22] चशब्दो नास्ति — अ, ई, उ, ए, ऐ.
[23] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[24] 'श्लोकद्वयम्' इत्यत्र 'श्लोकः' इति दृश्यते — अ, आ, ई, उ, ऐ.

[1]कलेयमाशाश्रयिणी पशूनां [2]धात्री च भोगे भुवनेश्वराणाम् ।
कृत्स्नं जगत्कालयितुं समर्था भोगेषु योक्तुं कुशलाणुबृन्दम् ॥४३॥
सेयं मया ते कथिता यथावत् समासमार्गेण न विस्तरोक्त्या ।
तत्त्वान्वय[3]प्राप्तिबलेन वाच्यां विद्यां मुने तामवधारयस्व ॥४४॥

[4]**आशा** भोगहेतुत्वात् [5]तत्कर्माशा सैव [6]आश्रयः [7]स विद्यते यस्याः [8]प्रवृत्तिहेतुः। यदुक्तम्[9] —
"[10]कर्मतश्च शरीराणि [11]विषयाः करणानि च।" इति।

[12]**पशूनाम्** अशुद्धानां तद्भुवनभोक्तॄणाम्, **भुवनेश्वराणां** [13]**च** शुद्धत्वेनोक्तानां भोगनिमित्तं [14]**धात्री** धारिका भुवनरूपेत्यर्थः। **कृत्स्नं** [15]**जगत्** चैतन्योपोद्बलनेन [16]**कालयितुम्** [17]अधः क्षेप्तुं [18]**समर्था** इति [19]तत्त्वधर्मप्रदर्शनम्। **भोगेषु** [20]योजयितुमणुसमूहं [21]स्वभुवनभौवनशरीर[22]जातेन समर्थेति त्रि-पर्व[23]पदार्थैकदेशत्वमप्यस्याः [24]समुदाहृतम्।

अथ [25]व्याख्येयोपक्रमः — कलातत्त्वव्याख्याना[26]दनन्तरं क्रमप्राप्तिसामर्थ्याद् [27]विद्यातत्त्वमेव वक्तव्यमिति तदेवोच्यत [28]इति ॥४३–४४॥

[29]इति [श्री][30]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [31]मतङ्गवृत्तौ
[32]विद्यापादे [33]त्रिपर्वपदार्थे कलातत्त्वप्रकरणं [नवमं] समाप्तम् ॥
**नवमः पटलः**

---

[1] येयं कला चाश्रयिणी — ऊ, ऋ.
[2] धात्रीव भोगे — मु.
[3] ०प्राप्तबलेन — उ.
[4] आत्मभोग० — अ, आ, ई, उ, ए, ऐ.
[5] कर्माशयः — ऊ, ऋ; तत्कर्माशया — ए.
[6] आश्रया स विद्यते — अ; आश्रयस्य विद्यते— आ.
[7] सा — ऐ.
[8] वृत्तिहेतुः — अ, आ, ई, उ, ए, ऐ.
[9] स्वायम्भुवे ३२. १३ पू०.
[10] कर्मतस्तु — ऊ, ऋ.
[11] विविधानि शरीरिणाम् — आ, ई, उ, ए, ऐ.
[12] 'पशुनाम्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[13] चात्र शुद्धत्वे० — ऊ, ऋ.
[14] धात्रीव धारिका — ऐ.
[15] जगतश्चैतन्यो० — ऊ.
[16] कलयितुं — अ, आ, ई, उ, ए, ऐ.
[17] 'अधः क्षेप्तुं' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[18] 'समर्थेति' इति नास्ति — ऐ.
[19] 'तत्त्वधर्मप्रदर्शनम्' इत्यस्य स्थाने 'प्रदर्शितम्' इति दृश्यते — अ, आ, ई, उ, ए; 'कर्मप्रदर्शनम्' इति दृश्यते — ऐ.
[20] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[21] स्वभवने — ऊ; स्वभुवने — ऋ.
[22] जननेन — ऊ, ऋ; व्रातेन — ऐ.
[23] ०पदार्थार्थैक० — अ, आ, ई, उ, ऐ.
[24] समुपसंहृतम् — ऊ, ऋ.
[25] व्याख्यातार्थकलातत्त्व० — अ, आ, ई, उ, ए; व्याख्यातार्थोपक्रमः। कलातत्त्व० — ऐ.
[26] ०दनन्तरक्रम० — अ, ऐ.
[27] 'विद्यातत्त्वमेव वक्तव्यमिति तदेवोच्यत इति' इत्यस्य स्थाने 'विद्यातत्त्वमुच्यत इति' इत्येव दृश्यते — ऐ.
[28] इतिशब्दो नास्ति — अ, आ, ई, उ, ऊ, ऋ.
[29] इति श्रीमन्नारायण० — ऐ.
[30] 'भट्ट' इति नास्ति — अ, आ, ई, उ, ए.
[31] श्रीमन्मतङ्ग० —आ.
[32] 'विद्यापादे' इति नास्ति — अ, आ, ई, उ, ऊ, ऋ, ए.
[33] 'त्रिपर्वपदार्थे' इति नास्ति —ऐ.

## दशमः पटलः

## विद्यातत्त्वप्रकरणम्

**अथाणोः [1]कलितस्यास्य कलया प्राग्जगन्निधेः ।**
**कलाधारेऽणु[2] विज्ञानं बुभुक्षोर्विद्ययाभवत् ॥१॥**

[3]इहास्मिन् [4]विद्यातत्त्वप्रकरणे [5]प्राक्प्रकरणोक्ता एव पदार्थादिसंबन्धाः । वाक्यात्मकस्तु संबन्धो "[6]यावद्विद्यादयो न स्युः" इत्यादिनानेकविधः । **अथशब्दस्तु** [7]कलाव्यापारादनन्तरं विद्याव्यापारप्रदर्शनार्थोऽत्रेति [8]सूत्रपदसमन्वयाद्गम्यते । तथा हि — **जगन्निधेः** मायायाः संबन्धिन्या **कलया प्राक् कलितस्य अणोः** [9]**बुभुक्षोः** कर्मयुक्तस्य [10]अथ अनन्तरं[11] कलैव[12] [13]आधारः [14]अधिकरणं तस्मिन् [15]सति या विद्या [16]तत्कारणिकेत्यर्थः । यदुक्तम्[17] —

"कलादिकोऽस्या विभवः समस्तः सोऽप्युच्यते कारणकार्यभावात्" । इति ।

श्रीमद्**रौरवादा**वपि[18] —

"[19]कलातत्त्वाद्रागविद्ये द्वे तत्त्वे संबभूवतुः ।" इति ।

तया **विद्यया अणु** स्वल्पं परिमितं भोग्यविषयं **विज्ञानम् अभवदिति** ॥१॥

अथ किं सर्वेषां पुरुषाणामेकैवासौ विद्या । उत प्रतिपुरुषं भिन्नेति । तत्रोच्यते — 'सत्सु' इत्यादि ।

---

[1] कल्पित० — उ.

[2] कालाधारेण — मु; कालाधारेय — मु० पाठान्तरम्; कलाधारेण — उ; कलाधारेय — उ० पाठान्तरम्; कलाधारे या — ओ.

[3] 'इह' इति नास्ति — अ, आ, ई, उ, ए; 'इहास्मिन्' इत्यत्र 'अथेति' इति दृश्यते — — ऐ.

[4] विद्यातत्त्वप्रकरणोक्ता — ऊ, ऋ; विद्याप्रकरणे — ऐ.

[5] तृतीयनवमप्रकरणयोरुपक्रमे ।

[6] मतङ्ग० विद्या० ९. २० पू०.

[7] कलाव्यापारप्रदर्शनार्थो — अ, आ, ई, उ; कलाव्यापारदर्शनप्रदर्शनार्थो — ए; कलात्मव्यापारप्रदर्शनार्थो — ऐ.

[8] सुपद० — अ, आ, ई, उ, ए.

[9] व्यभुक्षोः कर्म० — ए; भोक्तुः कर्म० — ऐ.

[10] अथशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.

[11] अत्र 'विद्यया सुविज्ञै सम्यग् ज्ञानमुत्पद्यते' इत्येतदधिकम् — ऐ.

[12] कलैवम् — ऐ.

[13] 'आधारः' इति नास्ति — ऐ.

[14] कारणं — ऊ, ऋ.

[15] 'सति' इति नास्ति — अ, आ, ई, उ, ए, ऐ.

[16] तत्कारिकेत्यर्थः — आ, ई, उ; तत्कारिणिकेत्यर्थः — ऋ; तत्त्वकारणिकेत्यर्थः — ए.

[17] मतङ्ग० विद्या० ८. १२२ उ०.

[18] रौरवे विद्या० ३. १५ पू०.

[19] 'कलातत्त्वाद्' इत्यत्र 'कलातत्त्वे' इति दृश्यते । 'रागविद्ये' इत्यारभ्य 'महाप्रलये हि' इत्यन्तं नास्ति — अ, आ, ई, उ, ए; 'कलातत्त्वाद्' इत्यतःप्रभृति 'रचना जायते स्फुटा' इत्यन्तं नास्ति — ऐ.

**सत्सु [1]सत्सु [2]विपाकेषु कलाधारेषु कर्मणाम् ।**
**पृथङ्[3]न्यायाद्विभागाख्या रचना जायते [4]स्फुटा ॥२॥**

[5]महाप्रलये हि [6]धर्माद्याश्रयभूताया बुद्धेरुपसंहारात्, कर्माणि मायायां वर्तन्त इत्युक्तम्[7]। अहर्मुखे तु **कर्मणां** संबन्धिनो विपाकाः प्रतिपुरुषं विद्यमानां भिन्नामेव कलामधिष्ठाय पुनर्बुद्धितत्त्वं कारण[8]क्रमेणाधितिष्ठन्तीति[9] [10]कलाधारा एव। ततस्तेषु तदानीं [11]**कलाधारेषु** पुरुषभेदेनोद्भवत्सु **सत्सु** पृथक्कर्मविपाकाक्षिप्तत्वादित्यनेन[12] भेदसाधकेन न्यायेन विद्याया [13]अपि **विभागाख्या रचना जायते**। [14]ततः प्रतिपुरुषं कर्म[15]विपाकभेदवत् तदाक्षिप्ता [16]विद्यारचनापि भिन्नै-वेत्यर्थः ॥२॥

यदेतद्विद्यामाख्यम् — 'वेदनं द्विविधम्' इत्यादि।

**वेदनं द्विविधं प्रोक्तं तत्प्रवक्ष्यामि विस्तरात्।**
**धर्मात्सुखावहं पुंसो येन रागोऽभिजायते ॥३॥**
**अधर्माद्दुःखदं ज्ञेयं यस्माद्द्वेषेण युज्यते।**

कर्म[17]विपाकप्रयुक्तत्वेन [18]तस्य वेदनस्योक्तत्वात्[19], [20]कर्मविपाकस्य च धर्माधर्मभेदेन [21]द्विविध-वेदनत्वात्, [22]तस्यापि सुखदुःखसाधनद्वय[23]परिच्छेदकत्वेन, तद्वासनान्वयोद्बोधकत्वेन वा सुखदुःखावह-

---

[1] 'सत्सु' इत्यत्र 'शास्ता' इति दृश्यते — उ.
[2] विपाकाख्ये — मु० पाठान्तरम्; विभागेषु— ओ.
[3] ०न्यायविभागाख्या — ऊ, ऋ.
[4] स्फुटम् — उ.
[5] प्रलयकाले कर्माद्याश्रय० — ऐ.
[6] कर्माद्याश्रय० — अ, आ, ई, उ; काष्ठाद्या-श्रय० — ए.
[7] मतङ्ग० विद्या० ४. ३७ उ०–४० वृत्तौ, ८. २९ उ० –३१ पू० वृत्तौ।
[8] ०क्रमेण यास्यन्तीति — ऊ, ऋ; क्रमेणापि तिष्ठन्तीति — ए; क्रमेणाधिगच्छन्त इति — ऐ.
[9] अत्र 'तदानीं' इत्यधिकम् — ऊ, ऋ.
[10] कलाधार एव — अ, ऊ, ऋ; कलाधाराण्येव — ए.
[11] कालाधारेषु — अ, आ, ई, उ, ऊ, ऋ.
[12] ०विपाकाक्षिप्तत्वादनेन — आ; ०विपाक-त्वादित्यनेन — ऊ, ऋ.
[13] 'अपि विभागाख्या' इति नास्ति — अ, आ, ई, उ, ए; 'अपि विभागाख्या रचना' इत्ये-तन्नास्ति — ऐ.
[14] यतः — अ, आ, ई, उ, ए, ऐ.
[15] ०विपाकमभवत् — ए; ०विपाकारब्धभेदवत् — ऐ.
[16] विद्यारचना विभिन्नैव — अ, आ, ई, उ, ऐ विद्यादिरचनापि भिन्नैव — ए.
[17] ०विपाकयुक्तत्वेन — आ, ई, उ, ए.
[18] तस्या विद्याया उक्तत्वात् — ऐ.
[19] मतङ्ग० विद्या० ९. ११ उ० –१५पू० वृत्तौ।
[20] 'कर्मविपाकस्य च' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[21] 'द्विविधवेदनत्वात्' इत्यस्य स्थाने, 'द्विविधः स्यात्' इति दृश्यते — ऊ, ऋ; 'द्विविध-त्वात्कर्मणः' इति दृश्यते — ऐ.
[22] तस्या अपि — ऐ.
[23] ०परिच्छेदवत्वेन — ऊ.

त्वमिति द्वैविध्यमेव। येन कारणेन [1]तद्वेदनं **रागः** सुखवेदनं, द्वेषो दुःखवेदनं [2]चोपयुज्यते। ततश्च धर्माधर्मफल[3]सुखदुःखेन भेदेन, सुखदुःखसाधन[4]विषयभेदेनापि [5]तद्वेदनं द्विविधमेवेत्युक्तं भवति ॥

ननु [6]द्विविधेऽप्यस्मिन्वेदने [7]सामान्यविशेषशास्त्रदृष्टानि बुद्ध्यादीन्येव [8]करणानि सन्ति। [9]तत्कुतस्तद्व्यतिरिक्ता विद्या [10]साध्यत इति। [11]तत्रोच्यते —

**विद्यान्तरङ्गमुद्दिष्टा यया भोगान्प्रपद्यते ॥४॥**

अश्वेन यथा दीपिकया व्रजतीत्यादाविवात्र [12]अनेककरण[13]साध्ये फलेऽपि [14]विद्यैव परं [15]करणम्। यतस्तया **भोगान् प्रपद्यते**[16] पुरुषो[17] जानातीति ॥४॥

ननु बुद्ध्यादिभिरेव भोगान् [18]प्रतिपद्यत इत्युक्तम्। तदयुक्तं यतः — 'सासन्नातीव' इत्यादि।

**सासन्नातीव सततं सर्वाङ्गालिङ्गने क्षमा।**
**न तथा [19]प्राकृती [20]बुद्धिर्बहिरङ्गा यतस्तु सा ॥५॥**

[21]**सततम्** इति [22]प्रतिवेदनं [23]**सा एव आसन्ना**। न तु बुद्ध्यादीनि। बुद्धेरक्षार्थ[24]बोधे[25]ऽक्षाणां

---

[1] 'तद्वेदनं रागः' इत्यत्र 'तत्संवेदनानन्तरमेव रज्यतेऽनेनेति रागः' इति दृश्यते — ऊ, ॠ.
[2] नोपजायते — ऐ.
[3] सुखदुःखभेदेनैव तत्साधनविषयभेदेनापि — ऊ, ॠ.
[4] 'विषय' इति नास्ति — ऐ.
[5] तद्वेदना — ए.
[6] द्वैविध्येऽप्यस्मिन् बोधे — ऊ, ॠ.
[7] 'सामान्यविशेषशास्त्रदृष्टानि' इत्येतन्नास्ति—अ, आ, ई, उ, ए, ऐ.
[8] कारणानि — अ, आ, ई, उ, ऊ, ॠ, ए, ऐ; अत्र मृगेन्द्र० विद्या० १०.९ दीपिकामनुसृत्य 'करणानि' इति शोधितम्। (मृ० वृ० दीपिका पृ० २५९).
[9] तत्कुतो व्यतिरिक्ता — ए.
[10] सिद्ध्यतीति — ऊ, ॠ.
[11] 'तत्रोच्यते' इति नास्ति — ऊ, ॠ.
[12] अनेककारण० — आ.
[13] ०साध्येऽपि फलेव — ॠ; साम्ये फलेऽपि — ए.
[14] 'विद्यैव' इत्यतः प्रभृति 'प्रपद्यते' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[15] कारणम् — ऊ, ॠ; मृगेन्द्र० विद्या० १०.९ दीपिकां, तत्त्वसंग्रहे १२तमश्लोकवृत्तिं चानुसृत्य 'करणम्' इति शोधितम्। (मृ० वृ० दीपिका पृ० २५९, तत्वसंग्रहः पृ० १५)
[16] अत्र 'विद्ययैव' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[17] 'पुरुषो' इत्यत्र 'प्रतिपद्यते पुरुषो' इति दृश्यते — ऐ.
[18] प्रपद्यत — ऊ, ॠ.
[19] प्रकृतिर्बुद्धिः — ओ.
[20] ख्यातिर्बहिरङ्गयुतस्तु सा — ऊ, ॠ.
[21] सन्ततमिति — ए, ऐ.
[22] वेदनं प्रति — ऐ.
[23] सैवानन्तरा न तु — अ; सैवान्तरङ्गा न तु — आ, ई, उ, ए; सैव वासना न तु — ऐ.
[24] ०योगेऽक्षाणां — आ, ई, उ, ए.
[25] 'अक्षाणां च' इत्यारभ्य 'स्मृतिभेदादौ' इत्यन्तं नास्ति — ऐ.

च [1]बुद्ध्यर्थबोधे [2]स्मृतिभेदादौ व्यभिचारादिति वक्ष्यामः[3]। किं च [4]सर्वस्य भोगभोग्यादि-व्यवहारस्य अङ्गं बुद्धिः; अध्यवसायात्मकत्वात्। [5]तस्य आलिङ्गने संवेदने सैव [6]**क्षमा** [7]भवति। एतदुक्तं भवति — [8]अध्यवसायस्मृतिप्रतिभादिप्रत्ययभेदभिन्ना बुद्धिरपि यया वेद्यते [9]"सा विद्या तत् परं करणम्"। यतः [10]प्रकृतिसंबन्धिन्याः बुद्धेः **न** [11]**तथा** [12]स्वात्मानमेव [13]ग्राह्यतापन्नं करण-त्वेन [14]आलिङ्गने क्षमत्वम्; ग्राह्यत्वेन [15]वहिरङ्गत्वादिति, [16]विद्यासिद्धिः ॥५॥

[17]यत्त्वत्रोक्तम् "[18]आसन्ना सैव सततम्। [19]न तु [20]बुद्ध्यादीनि" इति। तदेव सार्धेन श्लोक-सप्तकेनोच्यते — 'अक्षार्थसङ्गमोद्भूत' इत्यादि।

**अक्षार्थसङ्गमोद्भूतः प्रत्ययो [21]योऽवधार्यते।**
**आकृष्टः स कषायेण [22]भोगाख्येनात्मवर्तिना ॥६॥**
**आशयेनातितीव्रेण सम्यग्वेगवता भृशम्।**
**अत्युत्कटाभिलाषेण द्वारमाश्रित्य गर्वजम् ॥७॥**
**क्रमात्संचोदितं चित्तं वहिरङ्गेन वास्यते।**
**वासितं तेन भावेन [23]संकल्प्य च [24]चिकीर्षया ॥८॥**
**[25]संगृह्यानु[26]विशेद्गर्वं [27]गर्वोऽप्याशयगोचरे।**
**प्राप्तो[28]ऽन्तरङ्गतां येन स्वाभिमानेन [29]गर्वितः ॥९॥**
**[30]अभिमानयितुं शक्तः [31]स्वधर्मेण [32]बलीयसा।**
**अभिमानात्मकात्तत्त्वात्ख्यातिरध्यवसायिनी ॥१०॥**

---

[1] बुद्ध्यार्थबोधे — ऋ; 'बुद्ध्यर्थबोधे स्मृति-भेदादौ' इत्येतन्नास्ति — ए.
[2] 'स्मृतिभेदादौ' इति नास्ति — अ, आ, ई, उ.
[3] मतङ्ग० विद्या० १०. ६–१३ पू० वृत्तौ।
[4] सर्वभोग्यभोगादि० — ऊ, ऋ.
[5] तस्यार्थलिङ्गने — ए.
[6] क्षमं — ए.
[7] 'भवति' इति नास्ति — ऋ, ए.
[8] अध्यवसायादिस्मृति० — अ; अध्यवसाया स्मृतिः — ऐ.
[9] तत्त्वसंग्रहे १२ उ०.
[10] प्राकृती ख्यातिः बुद्धिः — ऊ, ऋ; प्रकृति-जन्या बुद्धेः — ऐ.
[11] तथात्वं न हि सैव स्वात्मानमेव — ऐ.
[12] सर्वात्मानमेव — अ; अथात्मानमेव — ऊ.
[13] अग्राह्यापन्नं — ऊ; ग्राह्यापन्नं — ऋ.
[14] आलिङ्गितुं क्षमा — ऊ, ऋ; आलिङ्गिनोऽ-क्षग्राह्यत्वेन — ऐ.
[15] अन्तरङ्गत्वादिति — ऊ, ऋ.
[16] सविद्यासिद्धिः — ऐ.
[17] तत्त्वत्रोक्तम् — ऐ.
[18] 'आसन्ना सैव सततं' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[19] 'न तु' इति नास्ति — ऐ.
[20] बुद्ध्यादीन् इति — ई, उ.
[21] येन धार्यते — उ.
[22] भोगाख्येनातिवर्त्मना — उ, भेदाख्येनात्म० — ऊ, ऋ.
[23] संकल्प्यं च — मु. उ.
[24] जिहीषया — उ; जिगीषया — ऊ, ऋ.
[25] संग्राह्यानु०–उ. पाठान्तरम्; संगृह्याशु–ऊ, ऋ.
[26] ०विशेत्सर्वं — मु, उ.
[27] गर्वोप्याचारगोचरे — उ.
[28] ०ऽन्तरङ्गता येन–उ; ०ऽन्तरङ्गाभावेन–ऊ, ऋ.
[29] गर्विता — उ.
[30] अभिमानयत्यशक्तस्य धर्मेण — उ.
[31] सुधर्मेण — ऋ.
[32] बलीयसः — उ; गरीयसा — ऊ, ऋ.

[1]तमालम्ब्यात्मधर्मेण बोधाख्येन सुमेधसा।
ततस्तदुचितं चित्तं ख्यातिर्व्यायानुवर्तिनी ॥११॥
निवेदयति विद्याया बहिश्चारसुपेशला।
पुंसो[2]ऽन्तश्चारिणी विद्या विवेचयति सादरम् ॥१२॥
एतत्स्रोतः सदा भोक्तुर्भोगोद्वहनतत्परम्।

[3]तत्रोद्घाटिताक्षस्य [4]झटित्येवेन्द्रियार्थसंयोगाद् यः प्रत्ययः जायते न [5]तत्राध्यवसायात्मिकाया [6]बुद्धेर्व्यापारो[7] जायते[8] इत्यर्थः। तदिदमुक्तम्[9]—

"अस्ति [10]ह्यालोचनं ज्ञानं [11]प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥" इति।

**सः** प्रत्ययोऽव्यक्तात्मनाभिलापेण [12]वक्ष्यमाण[13]रागतत्त्वजनितेन; अत एव **आत्मवर्तिना** [14]द्रष्टृगतेन **कषायेण** [15]उपरागेण **अतितीव्रेण**; भुज्यतेऽनेनेति **भोगः** तदभिधानात्मना समाकृष्टः, बाह्यार्थ-[16]भोगवतः किंविषयोऽयं प्रत्यय इत्येवंविधविमर्शयोग्यः पुंसः संपद्यत इत्यर्थः। स च **द्वारमाश्रित्य गर्वजम्** [17]अभिमानमिति [18]तथा संपद्यते। न ह्यहंकारवृत्त्यात्मपरामर्शं विना कश्चिदपि [19]विषयपरामर्श उपपद्यत इति तत्प्रकरणे [20]वक्ष्यामः। एवं च [21]अहंकार[22]कारणकेऽस्मिन्प्रत्यये [23]न बुद्धेरिन्द्रियाणां वा व्यापार इत्युक्तं भवति। ततः पुरुषेण बाह्यार्थ[24]विषयाध्यवसाय[25]चिकीर्षया [26]वक्ष्यमाणनयसिद्धं मनः [27]प्रचोदितमुभयप्रचारमपि **बहिरङ्गेन** प्रचारेण युज्यते।

---

[1] विनिगृह्यात्म०—ऊ; तमालम्ब्यात्म०—ओ.
[2] ०ऽन्तश्चरणी — उ.
[3] तत्रोद्घातेऽक्षस्य — अ, ऊ; तत्रोद्भूतेऽक्षस्य — आ, ई, उ; तत्रोद्भूते सत्येवेन्द्रियार्थ० —ए; तत्रोद्भूतोऽक्षस्य — ऐ.
[4] सत्येवेन्द्रियार्थ० — अ, आ, ई, उ; संवित्त्येवेद्यसंयोगाख्यः प्रत्ययः — ऐ.
[5] तदध्यवसायात्मि० — ए.
[6] बुद्धेरध्यवसायत इत्यर्थः —ऐ.
[7] अत्र 'अहङ्कारस्य वा' इत्यधिकम् — ऊ, ऋ.
[8] धार्यते — ऊ, ऋ.
[9] श्लोकवार्तिके प्रत्यक्षसूत्रे ११२.
[10] ह्यालोचनाज्ञानं — ऊ, ऐ; मुद्रितश्लोकवार्तिकपाठः।
[11] परमं — अ.
[12] एकादशप्रकरणे।
[13] ०रागद्वेषजनितेन — ए.
[14] दृष्टेन कषायेण — अ, आ, ई, उ, ए; दृष्टरूपेण कषायेण — ऐ.
[15] अत्र 'संस्काररूपेण' इत्यधिकम् — ऊ, ऋ.
[16] ०भोगवत् किं — अ, आ, ई, उ, ए, ऐ.
[17] 'अभिमानमिति' इत्येतन्नास्ति — ऊ, ऋ.
[18] अत्र 'आत्मपरामर्शः' इत्यधिकम् — ऐ.
[19] 'विषय' इति नास्ति — ऊ, ऋ.
[20] मतङ्ग० विद्या० १८. १२, १३ वृत्तौ।
[21] अहंकारकेऽप्यस्मिन् — ऊ, ऋ, ऐ.
[22] ०कारणकेऽप्यस्मिन् — आ, ई, उ, ए.
[23] 'न बुद्धेरिन्द्रियाणां वा व्यापारः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[24] ०विषयानध्यवसाय० — ऊ, ऋ.
[25] ०जिगीर्षया — अ, ई, उ, ऐ; ०जिगीषया — आ, ऊ, ऋ, ए.
[26] मतङ्ग० विद्या० १८. ८०-८२ वृत्तौ।
[27] 'प्रचोदितम्' इत्यत्र 'चोदितम्' इति दृश्यते —ऊ, ऋ.

[1]तेन च बहिः प्रचारात्मना स्वभावेन युक्तं [2]**संकल्प्य** इत्यवधानात्मना [3]वक्ष्यमाणेन स्वव्यापारेण बाह्येन्द्रियाण्यधिष्ठाय, तदधिष्ठानेन च विषयान् सम्यग् गृहीत्वा, आशुसंचारित्वाद् [4]**अनुविशेद्** [5]**गर्वमिति** मया [6]एतत्परिग्राह्यमित्यात्म[7]परामर्शमवधानेन तदेकनिष्ठं विदधातीत्यर्थः। अहंकारोऽपि [8]स्वसामर्थ्येन वासनागोचरतां प्राप्ते विषये सति, [9]अन्तरङ्गरूपेण ग्राहकात्मना[10]अहंकारममकारात्मकमभिमानमुत्पादयितुं [11]शक्त इति [12]वक्ष्यामः। [13]ततः **अभिमानात्मकात् तत्त्वाद्** अहंकारवृत्त्यात्मनो ग्राहकरूपपरामर्शाद्धेतोः **ख्यातिः** [14]बुद्धिः **स्वधर्मेण** [15]पूर्वदृष्टाकारपरिग्रहात्मना पटीयसा [16]तमेवाक्षार्थं[17]सङ्गमोद्भूतप्रत्ययमवलम्ब्य अयमिति[18] **अध्यवसायिनी** भवति। यदाहुः[19] —

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया[20]।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता॥" इति।

[21]आलोचनज्ञानादनन्तरं [22]परामर्शबुद्ध्युत्पादे मनोव्यापारः कार्यसिद्ध इति [23]तत्प्रकरणे [24]वक्ष्यामः। न च तत्समनन्तरमेव परामर्शप्रत्ययानुभवादस्य व्यापारस्याभावो वाच्यः। [25]अभ्यस्ते[26] युगपद्भावाद्, अनभ्यस्ते [27]तु विषये क्रमेण परामर्श[28]प्रत्ययोत्पत्तेस्तत्सत्त्वं[29] भवत्येवेति[30] [31]वक्ष्यति[32] —

---

[1] तेन च बहुलेन युक्तं — अ; तेन न च बहुलेन युक्तं — आ, ई, उ; तेन न तत्त्वबहुलेन युक्तं—ए; तेन च बहिरङ्गेनोक्तं–ऐ.
[2] संकल्पे व्यवधाना०–अ; संकल्पेत्यवधाना०–ए.
[3] मतङ्ग० विद्या० १८. ८०–८२ वृत्तौ।
[4] 'अनुविशेद्' इत्यत्र 'विशेद्' इति दृश्यते — ऊ, ऋ; 'अनुविशेषाद्' इति दृश्यते — ऐ.
[5] सर्वमिति — ए.
[6] एतत्परिच्छिन्नमित्यहंकारवृत्त्यात्म०—ऊ, ऋ.
[7] ०परामर्शमवधानादेकनिष्ठं — अ.
[8] स्वसामर्थ्येन परामर्शवासना० — ऋ; स्वसामर्थ्येन स्वमिति वासना० — ऐ.
[9] अनन्तरङ्गरूपेण — अ; अन्तरूपेण — ऊ; अन्तारूपेण — ऋ.
[10] अहंकारं ममकारात्मक० — अ, ऐ.
[11] शक्यत इति — आ; शक्तं स्वप्नैवेति — ऊ; शक्तः स्वप्नैवेति—ऋ; शक्तमिति—ए.
[12] मतङ्ग० विद्या० १८. ५ उ० – ११ वृत्तौ।
[13] अनेनात्मकात्तत्वाद् — अ; अथोऽभिमानात्मकतत्त्वाद् — आ, ई, उ; अथोऽभिमानात्मकात्तत्वाद् — ए, ऐ.
[14] बुद्ध्या स्व० — ए.
[15] पूर्वं दृष्टाकार० — अ.
[16] तमेवायमित्यध्यवसायिनी — ऊ; तमेवायमित्यवसायिनी — ऋ.
[17] ०सङ्गमोद्भूतं प्रत्ययम् — आ, ई, उ, ए; ०सङ्गमोऽयं प्रत्ययम् — ऐ.
[18] 'अवलम्ब्य अयमिति' इत्यस्य स्थाने 'अवश्यं न्यायमिति' इति दृश्यते — ए; 'तमेवायमिति' इति दृश्यते — ऐ.
[19] श्लोकवार्तिके प्रत्यक्षसूत्रे १२०.
[20] ०र्यथा — अ, ऊ, ऋ, ए.
[21] आलोचनविज्ञानाद् — अ, आ, ई, उ, ए, ऐ.
[22] 'परामर्शबुद्ध्युत्पादे मनोव्यापारः' इत्यस्य ग्रन्थस्य स्थाने 'परामर्श एव बुद्धिरुत्पद्यते। बुद्ध्योत्पादेऽस्यैतावतः कारण (करण—ऋ) चक्रच्छायमन्योन्यमपेक्षागर्भो व्यापारः' इति दृश्यते —ऊ, ऋ; 'परामर्शबुद्ध्युत्पादे बुद्धेरनहंकारमन्यो न्यायगर्भो व्यापारः' इति दृश्यते — ऐ.
[23] तत्प्रकरणेषु — ऊ, ऋ, ए, ऐ.
[24] मतङ्ग० विद्या० १८. ५५, ५६ पू० वृत्तौ।
[25] 'अभ्यस्ते युगपद्भावाद्' इत्यस्य स्थाने 'अत्यन्ताभ्यासादाश्वेव तस्य संपत्तेः' इति दृश्यते — ऊ, ऋ.
[26] अत्र 'तु' इत्यधिकम् — ए.
[27] 'तु' इति नास्ति — ए.
[28] ०प्रत्ययोत्पादात्तत्सत्त्वं — ऊ, ऋ.
[29] ०स्तत्स्वत्वं — ऐ.
[30] संभवत्येवेति — ऋ, ऐ.
[31] वक्ष्यते — अ, आ, ई, उ, ए, ऐ.
[32] मतङ्ग० विद्या० १०. १३ पू०.

"करणस्रोतः सदा भोक्तुर्भोगोद्वहनतत्परम्"।

इत्यर्थः। न तु सांख्य[1]दर्शनप्रसिद्धोऽयं [2]पूर्वः पक्ष इति। अत्र यथाश्रुतान्येव सूत्राणि व्याख्येयानि। [3]प्रतिदर्शनमर्थप्रतीतिभेदाभावात्। [4]न हि "सांख्यैर्घट एव पट" इति शक्यं वक्तुम्। वस्तुविषयत्वात् प्रतीतेः। वस्तुनश्च [5]नियतरूपत्वात्। [6]तदाहुः[7] —

ज्ञानं [8]प्रत्यभिलापं च सदृशौ बालपण्डितौ।" इति।

[9]पूर्वैव व्याख्या युक्ता। ततश्च [10]भोग्यत्वेनोचितं वस्तु **चित्तम्** इति चित्ता[11]धिष्ठितं बुद्धीन्द्रियवृन्दं कर्तृ, **निवेदयति**[12] विद्याया[13] [14]विषयत्वेनोपस्थापयति। **ख्यातिः** बुद्धिः [15]अन्यानुवर्तिनीति[16]न्याय[17]सिद्धाहंकारवृत्त्यात्मपरामर्शपूर्विकेत्युक्तम्। [18]यतोऽसावपि [19]बुद्धीन्द्रियवद्बाह्यार्थविषये प्रचारेऽहंकारवृत्त्यविनाभावेन सुपेशला [20]प्रवृत्तियोग्या। यदाहुः[21] —

"बुद्ध्यध्य[22]वसितमर्थं पुरुष[23]श्चेतयते" [24]इति। [25]बुद्ध्यादीनां रूपाद्यन्यतम[26]नियतानियतसंनिहितत्वासंनिहितत्वादिविषयोपस्थापकत्वेनोपयोगः। न तु संविज्जनकत्वेन। [27]तत्रोपस्थापितं विषयं बुद्ध्यहंकारेन्द्रिय[28]भेदैः सह या [29]**विवेचयति** सासन्नत्वादन्तरङ्गकरणमित्युक्तम्। **एतच्चेन्द्रियादि**-[30]**विद्यान्तं करणस्रोतः सदा भोक्तुर्भोगोद्वहनतत्परम्** इति। यथा च विद्यादिव्यतिरिक्तं[31] बुद्ध्यादि[32]करणस्रोतो[33]ऽत्यन्तानीन्द्रियं भोक्तुर्भोगोद्वहन[34]तत्परं तथा तत्प्रकरणेषु[35] वक्ष्यामः[36]॥

---

[1] ०दर्शनाप्रसिद्धोऽयमपूर्वार्थपरामर्शक्रमः इति — ऊ, ऋ; ०दर्शनाप्रसिद्धोऽयं पूर्वपक्षः इति — ऐ.

[2] पूर्वपक्षः इति — आ, ई, उ.

[3] प्रदर्शितमर्थं प्रति भेदाभावात् — अ, आ, ई, उ; प्रतिदर्शितमर्थं प्रति भेदाभावात् — ए; प्रतिदर्शनमर्थं प्रति भेदाभावात् — ऐ.

[4] न हि घट इव पटः प्रतीयत इति — ऊ, ऋ.

[5] नियतविषयत्वात् — ऊ, ऋ.

[6] यदाहुः — ऊ, ऋ.

[7] वाक्यपदीये ३. ३. ५५ उ०; प्रमाणवार्तिकभाष्ये ४. ५४३ उ०.

[8] प्रति घटस्येहाविभेदौ बाल० — अ, आ, ई, उ; प्रतिपदस्येहाविभेदौ बाल० — ए.

[9] पूर्ववद्व्याख्या — अ, ई, उ, ए, ऐ; पूर्ववदाख्या — आ.

[10] तद्भोग्यत्वेनोचितं — ऊ, ऋ.

[11] ०विष्ठितबुद्धीन्द्रिय० — अ, आ, ई, उ, ए, ऐ.

[12] अत्र इतिशब्दोऽधिकः — ए.

[13] विद्यया — अ, ए, ऐ.

[14] विषयत्वोप० — आ.

[15] न्यायानुवर्तिनी — आ, ई, उ, ऊ, ऋ, ए, ऐ.

[16] ०न्यायेनात्मपरामर्श० — अ, आ, ई, उ, ए; ०न्यायोऽपरामर्श० — ऐ.

[17] ०सिद्ध्याहंकार० — ऊ.

[18] 'यतोऽसावपि' इत्यस्य स्थाने 'तया विना तत्र घटते सापि' इति दृश्यते — ऐ.

[19] बुद्धीन्द्रियतद्बाह्यार्थ० — ऊ, ऋ.

[20] वृत्तियोग्या—अ, आ, ई, उ, ऐ; वृत्तिर्योक्ता—ए.

[21] स्याद्वादरत्नाकरे ३५ तमे पृष्ठे उद्धृतम्।

[22] ०वसितमप्यर्थं — ऊ, ऋ.

[23] ०श्चेतयति — आ, ऊ, ऋ.

[24] इतिशब्दो नास्ति — आ.

[25] अत्र 'अत एवेन्द्रिय' इत्यधिकम् — ऊ, ऋ.

[26] ०नियतानियतसंनिहितत्वादिविषयोप० — ऊ, ऋ; ०नियतसंनिहितत्वादिविषयोप० — ऐ.

[27] तं तूपस्थापितं—ऊ, ऋ; तत्र स्थापितं—ऐ.

[28] ०भेदैः सह विवेचयति —आ; ०भेदैर्यथा विवेचयति — ऊ, ऋ; ०भेदैर्या विवेचयति—ऐ.

[29] विवेचयति पुरुषः सा विद्या सततमासन्नत्वाद् — ऊ, ऋ.

[30] विद्यान्तःकरणस्रोतः — अ, आ, ई, उ, ए, ऐ.

[31] अत्र 'एतद्' इत्यधिकम् — ऊ, ऋ.

[32] ०कारणस्रोतो — ए; ०करणं स्रोतो — ऐ.

[33] ०ऽतीन्द्रियपुंसस्सिध्यति यथा स भोगोद्वहन० —ऊ, ऋ; ०ऽतीन्द्रिये भोक्तुर्भोगोद्वहन०—ऐ.

[34] ०तत्परः — ऐ.

[35] तत्प्रकरणे —आ.

[36] मतङ्ग० विद्या० १८. ८३.

तदेवम् — 'पुमान् प्रत्यागतान्' इत्यादि।

**पुमान्प्रत्यागतान्भोगान्[1]क्रमशो व्यूढगोचरान् ॥१३॥**
**भोगभुक् प्रतिजानाति विद्ययात्मनिषण्णया।**

[2]प्रागुक्तेन क्रमेण बुद्ध्यादि[3]करणैः **व्यूढः** प्रापितः **गोचरः** विषयः स्त्र्यादिर्येषां तान् [4]**भोगान्** संवेदनरूपान् पुरुषः [5]कर्मवासनात्मना विदूरं गतानपि तत्परिपाकतः प्रत्युप[6]स्थापितान् **विद्यया** जानाति। [7]भोगैकसंवेदने तस्याः [8]करणत्वमित्युपसंहारः॥

[9]ननु [10]बुद्धेर्ग्राह्यत्वेऽपीन्द्रियादिवैलक्षण्येन[11] [12]प्रकाशरूपत्वात्[13] करणत्वं भविष्यतीति। तत्रोच्यते — 'गौणी ख्यातिः' इत्यादि।

**गौणी ख्यातिर्यतः [14]स्थूला गुणातीतः पुमान् सदा ॥१४॥**
**इत्थं गुणवती विद्या [15]वेद्यार्थप्रतिपादिका।**

[16]सवितृप्रकाशवद् गौणत्वेन स्थूलत्वाद्, ग्राहकाद् भेदेन [17]ग्राह्यतया च [18]भासमानत्वाच्च [19]करणान्तरं [20]भवतीति[21] तद्वि[22]लक्षणकरणान्तरविद्यासिद्धिः॥

[23]ननु सांख्यादिभिः सर्वज्ञैरदृष्टत्वादश्वविषाणवद्विद्या नास्त्येव। तदयुक्तं हेतोरसिद्धत्वात्। तथा हि — 'वेत्ता येषाम्' इत्यादि।

**वेत्ता [24]येषाममुक्तात्मा समलोऽप्यमलः सदा ॥१५॥**
**न तेषां वेदने विद्या स्वशास्त्रोपात्तगोचरे।**

---

[1] क्रमतो — उ.
[2] मतङ्ग० विद्या० ९. २०–२४ पू० वृत्तौ।
[3] ०कारणैः — अ, ऊ, ऋ; ०कारणे — ऐ.
[4] 'भोगान् संवेदनरूपान् पुरुषः' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[5] कर्मवासना विदूरं — अ, आ, ई, उ, ए, ऐ.
[6] ०स्थितान् — आ, ई, उ, ऋ, ए, ऐ.
[7] विद्याया — अ, आ, ई, उ, ऊ, ऋ.
[8] भोगात्मसंवेदने — ऊ, ऋ.
[9] कारणत्वम् — आ.
[10] न तु बुद्धेर्ग्राहकत्वे — ई, उ; ननु बुद्धेर्ग्राहकत्वे — अ, आ, ए, ऐ.
[11] अत्र 'सत्त्वाधिक्यतः' इत्येदधिकम् — ऊ, ऋ.
[12] प्रकाशवत्कारणत्वं — ऐ.
[13] अत्र 'सवितृप्रकाशवत्' इत्यधिकम् — ऊ, ऋ.
[14] स्थूलगुणा० — उ.
[15] वेत्त्यर्थ० — उ.
[16] अत्र 'अत एव' इत्यधिकम् — ऊ, ऋ.
[17] ग्राह्यतयावभासाच्च — ऊ, ऋ.
[18] भासनत्वाच्च — आ.
[19] कारणान्तरं — अ, ई, उ, ए, ऐ; न कारणान्तरं — ऊ, ऋ.
[20] अत्र 'चक्षुरादि यथा सवितृप्रकाशनात् तथा बुद्धिर्न कारणान्तरविद्यालक्षणा विना कमन्तरेण बुद्धिरात्मानं ग्राहयितुं' इत्येतदधिकम् —ऊ, ऋ.
[21] शक्नोतीति — ऊ, ऋ.
[22] ०लक्षणकरणाविद्यासिद्धिः — ऊ; ०लक्षणाकरणा विद्यासिद्धिः — ऋ.
[23] न तु — ए.
[24] येषां विमुक्तात्मा — ऊ, ऋ.

[1]बुद्धेश्चाविषयः सूक्ष्मस्ततस्तेऽज्ञानमोहिताः ॥१६॥
[2]अयुक्तं मुक्तमात्मानं भावयन्ति कुदृष्टयः ।

येषां ज्ञाता [3]संसारी [4]पुंपाशेश्वरप्रकरणप्रतिपादितनयेन **समलोऽपि अमलः स्वशास्त्रोपात्तगोचरे** [5]विद्यते। [6]तेन हेतुना **अज्ञानमोहिताः** असर्वज्ञा एव [7]**ते**। ततः **तेषाम्** अस्मदादीनामिव[8] वेदनविषये **विद्या न** संभवन्त्येवेति, [9]कुतस्तदतदर्शनात् तस्या अभावः सिद्धयतीति। [10]न च विद्याया विना बुद्धयादिभिः **सूक्ष्मः** भोगसंवेदनात्मकोऽर्थः शक्य उपपादयितुमित्युक्तम्[11]। [12]अतस्तदभाववादिनः [13]**कुबुद्धय** एवोक्ताः ॥

अत एव [14]मलयोगात् — 'कलयोद्वलित' इत्यादि ।

[15]**कलयोद्वलितो भोगे विद्ययोद्वलितः पुमान् ॥१७॥**
**युज्यते नान्यथा यस्माद्वृत्तयस्तु तदुद्भवाः ।**
**ख्यातिः प्राधानिकान्** [16]**भोगान्निवेदयितुमुद्यता ॥१८॥**
**यदा तदात्मवर्तिन्या विद्यया** [17]**सुनिरूपिता ।**

**कलया** मलनिवर्तनेन **विद्यया च** [18]भोग्यविषय[19]ज्ञानोत्पादनेन[20] पुरुषो **युज्यते**। **नान्यथा** यतो ज्ञानक्रियावृत्तयस्तस्य कलाविद्योद्भवा एवेत्युक्तम्[21]। **ख्यातिश्च** बुद्धिः। **प्राधानिकान्** इत्युपलक्षणम् । तदूर्ध्वमपि रागविद्याभुवनेषु तद्भुवनजानपि। [22]**भोगान्** [23]स्त्र्यादीनध्यवसायेन च

---

[1] बुद्धेश्च विषयाः सूक्ष्माः — मु; बुद्धेश्च विषयः सूक्ष्मः — उ; बुद्धेश्चाविषयाः सूक्ष्माः — ऊ, ऋ.
[2] अमुकामुकमुक्तानां — उ; अमुक्तामुक्तमुक्तानां — उ० पाठान्तरम् ; अमुक्तामुक्तमात्मानं — ऊ, ऋ.
[3] 'संसारी' इत्यारभ्य 'नयेन' इत्यन्तग्रन्थस्य स्थाने 'संसारिवदमुक्तात्मा तेन येन' इति दृश्यते — अ, ई, उ; 'संसारीवदमुक्तात्मा तेन येन' इति दृश्यते — आ, ए; 'संसारिवदिति न मुक्तात्मा येन' इति दृश्यते — ऐ.
[4] मतङ्ग० विद्या० ६. ७३ उ० –७५ वृत्तौ।
[5] 'विद्यते' इति नास्ति — अ.
[6] तेऽज्ञानमोहिताः — अ, ऐ; तेन ज्ञानमोहिताः —आ, ई, उ, ए.
[7] 'ते' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] 'इव' इत्यत्र 'एव' इति दृश्यते — ऊ, ऋ.
[9] कुतस्तस्यास्तद्दर्शनादभावः — अ, ई, उ, ए, ऐ; कुतस्तस्यास्तद्दर्शनाभावः — आ.
[10] 'न च' इत्यारभ्य 'सूक्ष्मः' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[11] मतङ्ग० विद्या० १०. ४ उ० –१४ पू० वृत्तौ।
[12] ततः — ऊ, ऋ.
[13] कुत(र्क)बुद्धयः — ई, उ.
[14] मलयोगाः — ऊ, ऋ.
[15] कलोद्वलितभोगेषु विद्योपोद्वलितः — मु, उ; कलोद्वलितो भोगेष्वविद्योपोद्वलितः — ओ.
[16] भोगान्विवेचयितुमुद्यता — मु, उ, ओ.
[17] सुनिरूप्यताम् — मु० पाठान्तरम्, उ० पाठान्तरम्, ऊ, ऋ; सुनिरुप्यते — ओ.
[18] भोगविषय० — ए.
[19] ०ज्ञानोपोद्वलितः समर्थितस्सामर्थ्यः पुरुषोपभोगे युज्यते—ऊ, ऋ; ०ज्ञानोपादानेन पुरुषो—ऐ.
[20] अत्र नकारोऽधिकः — अ.
[21] मतङ्ग० विद्या० १८ उ० –२२ पू० वृत्तौ।
[22] भोगार्थस्त्र्यादीन् — ए.
[23] 'स्त्र्यादीनध्यवसायेन' इत्यत्र 'स्मृतिप्रतिभादिषु तदाकारापत्त्याध्यवसायेन' इति दृश्यते — ऊ, ऋ.

[1]स्ववृत्त्यात्मना **यदा** [2]ग्राह्यत्वेन [3]**निवेदयितुमुद्यता** [4]इत्युक्ता, **तदा** विद्यालक्षणेन करणेन तान् भोगान्निरूप्य पुरुषो भोगेषु युज्यते, नान्यथेति नाभावो विद्यायाः ॥

[5]सापि च — 'तदीरिता' इत्यादि ।

**तदीरिता सती [6]तद्वद्यतः साचेतना मता ॥१९॥**
**पौरुषं भावमाश्रित्य स्वभावोन्मीलिनी मुने ।**
**विद्येयं सर्व[7]भावानां न शिवार्थ[8]प्रदायिका ॥२०॥**
**शिवसद्भावकुशला [9]विद्यान्या शुद्धगोचरे ।**

[10]सर्वज्ञेनेश्वरेण प्रेरिता **सती विद्या** [11]**तद्वदिति** बुद्धिसमैव; [12]अचेतनत्वेन करणं पुंसो भवतीत्यर्थः । [13]अयं त्वस्या विषयः — [14]**पौरुषं भावं** कलयोत्तेजितं ज्ञत्वम् **आश्रित्य** सर्वेषां [15]भोगभोक्तृत्वेन [16]भवतां पुरुषाणां भोगसंवेदनात्मनः स्वभावस्योन्मीलिनी; तत्र करणतां प्रतिपद्यते । न तु [17]बुद्धिवद्वृत्त्यात्मना क्रमस्वभावेनेति । अत एव पौरुषं भावमाश्रित्य पुरुषाणां [18]प्रवृत्तत्वादेषा न तदतीतशिवाद्यर्थ[19]प्रकाशिकेति । तत्प्रकाशिका शुद्धविद्यैव मन्तव्येति दर्शितं तत्प्रकरणे[20] ॥

अत एवैतन्नोपपद्यत इति, अत्र प्रसङ्गान्मतङ्गमुनिः — 'मायान्तर्वर्तिन' इत्यादि ।

**मतङ्ग उवाच —**

**मायान्तर्वर्तिनः प्रोक्ताः पशवः पाशधर्मिणः ॥२१॥**
[21]**मायातत्त्वात्परा विद्या** [22]**शुद्धमार्गप्रदर्शिका ।**
**सा कथं [23]युज्यतेऽणूनां छिन्धि सन्देहजं तमः ॥२२॥**

---

[1] सुवृत्त्यात्मा यदा — ऊ, ॠ; स्वप्रत्ययात्मना यदा — ए.
[2] ग्राहकत्वेन — अ, आ, ई, उ, ए, ऐ.
[3] निवेदितुम् — आ, ई, उ.
[4] इत्युक्तम् — ऊ, ॠ.
[5] 'सापि च' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[6] सम्यक् तत्समाचेतना — ऊ, ॠ.
[7] ०भावानामशिवार्थ० — मु.
[8] ०प्रपादिका — ऊ, ॠ.
[9] विद्या शुद्धाध्वगोचरे — मु, उ, ओ.
[10] 'सर्वज्ञेनेश्वरेण' इत्यत्र 'तेन पुरुषेण' इति दृश्यते — ऊ, ॠ.
[11] तदिति — ऊ, ॠ; तत्त्वादिति — ए.
[12] अचेतनत्वे करणं — ऊ, ॠ.
[13] 'अयं त्वस्या विषयः' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[14] पौरुषभावं — ॠ.
[15] भोग्यभोक्तृत्वेन — ऊ, ॠ.
[16] भवतामात्मानः स्वभावस्योन्मीलिनी — अ, आ, ई, उ, ए. भगवानात्मनः स्वभावोन्मीलिनी — ऐ.
[17] बुद्धिवद्धृत्यात्मना क्रमस्वभावेनेति — अ, ई, उ, ऐ; बुद्धिवद्धृत्या क्रमस्वभावेनेति — आ; बुद्धिवद्वृद्धयात्मना कर्मभावेनेति — ऊ, ॠ; बुद्धिवद्धृत्यात्मना क्रमस्वभावो नेति — ए.
[18] प्रवृत्तत्वादेषां न — अ.
[19] ०प्रकाशिकेत्युक्ता शुद्धविद्यैव मन्तव्येत्युक्तं तत्प्रकरणे — अ, आ, ई, उ, ए, ऐ.
[20] मतङ्ग० विद्या० ७. ३६ उ० – ३८ पू० वृत्तौ ।
[21] मायातीता परा विद्या — ऊ, ॠ.
[22] शुद्धध्वा संप्रदर्शितः — मु; शुद्धाध्वसंप्रदायिका — मु० पाठान्तरम्, उ; शुद्धाध्वसं-[प्रद]र्शिका — ओ.
[23] विद्यतेऽणूनां — उ.

[1]कलादियुक्तानां हि दीक्षितत्वेऽपि[2] मायान्तर्वर्तित्वान्न[3] शुद्ध[4]विद्यायाः [5]प्रगमः, तदन्तर्वर्तिनां वा मायाया इति पूर्वः पक्षः ॥२१–२२॥

सिद्धान्तस्तु नैतच्छिवादिभि[6]रनैकान्तिकत्वादित्युच्यते — 'शिवाद्यवनिपर्यन्त' इत्यादि।

**परमेश्वर उवाच —**

**शिवाद्यवनिपर्यन्तो योऽयमध्वाति[7]विस्तृतः।**
**स [8]सर्वश्च चितौ ज्ञेयो नाशिवत्वाद्विमुच्यते ॥२३॥**

शिवादिपृथिव्यन्तो **योऽयमध्वा** यातव्यमार्गः [9]शुद्धाशुद्धभेदेन प्रतिपाद[10]यितुमतिविस्तारः, [11]स समस्त एव। **चितौ** इति [12]संज्ञानात्मके पुरुषे [13]कलादियुक्ते ज्ञेयः। न त्वकले[14]। तस्मिन् पृथिव्या[15]द्यसंभवान्न समस्तो यतः। नापि मुक्तपुरुषे। तत्र शिवादेर[16]प्यसंभवादिति[17]।

ननु कलादियुक्तेऽपि पुंसि शुद्धेन [18]विद्यातत्त्वेन सह [19]संबन्धाच्छुद्धत्वस्योक्तत्वान्न समस्तोऽसावुपपद्यते। तदयुक्तम्। **नाशिवत्वाद्विमुच्यते** [20]यतः। एतदुक्तं भवति — यद्यशुद्धेऽस्मिन् [21]मायात्मनि शुद्ध[22]विद्याया न प्रगमः, [23]ततः शुद्धत्वादेव स्वतः, बन्धसामर्थ्याद्वा [न] विमुच्यते। अपि तु शिवादेवेत्युक्तं [24]पतिपदार्थप्रकरणे। ततश्च न पूर्वोक्तदोषः। यदुक्तं श्रीमत्कालोत्तरे[25] —

नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम्।
मुक्तिदं परमं दिव्यं सर्वसिद्धिप्रदायकम्॥" इति।

अशुद्धस्य [26]तु शुद्धवर्त्मनि नास्त्येव सः[27], तन्निवृत्तिहेतुत्वात् [28]तत्प्रगमस्येति[29] न दोषः ॥२३॥

---

[1] अत्र नकारोऽधिकः — अ.
[2] अपिशब्दो नास्ति — ऊ, ॠ.
[3] नकारो नास्ति — अ.
[4] ०विद्यायां प्रगमः — ऐ.
[5] प्रगम एव मायायामिति — अ, आ, ई, उ, ए; प्रगम एवं माययामिति — ऐ.
[6] ०रनैकान्तित्वाद् — ऊ, ॠ.
[7] विस्तरः — मु, उ, ओ.
[8] समस्तश्चितौ — ऊ, ॠ.
[9] शुद्धाशुद्धत्वभेदेन — ऊ, ॠ.
[10] ०यितुमुपक्रान्तः स सर्व एव — ऊ, ॠ.
[11] 'स' इति नास्ति — अ, ए, ऐ.
[12] संज्ञातात्मके — ए.
[13] कालादियुक्ते — ऊ.
[14] अत्र इतिशब्दोऽधिकः — ऊ, ॠ.
[15] ०द्यसंपन्नसमयो यतः — ऐ.
[16] ०प्यसंभवतेति — ऐ.
[17] मतङ्ग० विद्या० ६. ८८ उ० ९० वृत्तौ 'मुक्तस्य ईश्वराधिष्ठानाभावादिति' इत्युक्तम्।
[18] 'विद्यातत्त्वेन' इत्यत्र 'अध्वना' इति दृश्यते — ऊ, ॠ; 'विद्यातत्त्वेन' इत्येतन्नास्ति — ए, ऐ.
[19] संबन्धत्वाच्छुद्धत्वस्योक्त० — अ; संबन्धाच्छुद्धस्योक्त० — आ; संभवस्योक्त० — — ऊ, ॠ; संबन्धस्योक्त० — ऐ.
[20] 'यतः' इति नास्ति — ए.
[21] मायावर्तिनि — ऊ, ॠ.
[22] ०विद्यायां न गमः — अ.
[23] 'ततः' इत्यारभ्य 'पूर्वोक्तदोषः' इत्यन्तस्य स्थाने 'ततः शुद्धत्वादेव शिवादेरपि प्रगमाभाव इति पूर्वोक्तदोषः' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[24] मतङ्ग० विद्या० ४. ५९ उ० वृत्तौ।
[25] सार्धत्रिशतिकालोत्तरे — १. ५.
[26] तुशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[27] 'सः' इति नास्ति — अ, आ, ई, उ, ऊ, ॠ, ए.
[28] तत्प्राप्तेरित्येकान्त एषः — ऊ, ॠ.
[29] अत्र 'सः' इत्यधिकम् — ऐ.

न चायं दीक्षित. सकलोऽप्यशुद्धे वर्त्मनि स्थित इत्युच्यते — 'ध्वस्तमायाशयस्य' इत्यादि।

**ध्वस्तमायाशयस्येह पुंसः स परमेश्वरः।**
**शक्त्यात्मवीर्यवर्तिन्या तमः [1]प्रोद्घाटच निर्मलम्॥२४॥**
**करोति विद्यया [2]युक्तं [3]यया जानात्यणुः शिवम्।**

**परमेश्वरो** ह्याचार्याधिकरणो दीक्षालक्षणया [4]स्वशक्त्या प्रथमं [5]मायां [6]सकार्यामाशयरूपं [7]च [8]सकलं कर्म ध्वंसयति। न [9]त्वनाशयरूपं वर्तमानफलम्। तस्य भोगेनैव क्षयात्। अत एव असद्योनिर्वाण[10]दीक्षायां न शरीरपात इत्युक्तम्[11]। ततो **ध्वस्तमायाशयस्य** [12]तस्यास्मिन्नवस्थान एव [13]**तमः प्रोद्घाटच**, **निर्मलं** कृत्वा, **विद्यया युक्तं करोति**; विद्यातत्त्वे संयोजयतीत्यर्थः। तत[14]श्चाशुद्धवर्त्मनो मायादेर्ध्वस्तत्वात् सकलोऽप्ययं दीक्षितः शुद्धविद्यया शिवं पश्यतीति, [15]शुद्ध-वर्त्मस्थ इत्युच्यते॥

[16]अथ भगवान् सर्वदा तस्य तन्न करोतीत्युच्यते — 'संसाराद्' इत्यादि।

[17]**संसारात्स विरज्येत प्रध्वस्तकलुषः सदा॥२५॥**

[18]यावदसौ संसारान्न विरक्तो न तावच्छक्तिपातस्य विषयः [19]प्राकृतपुरुषवत्। **प्रध्वस्तकलुषः** [20]परिणतमलश्च ततो विरज्यत इति। [21]मलपरिपाकापेक्षत्वादनुग्रहस्य [22]न [23]सदा प्रसङ्गः। श्री-**मत्स्वायंभुवे**ऽप्युक्तम्[24] —

"क्षीणे तस्मिन् [25]यियासा स्यात्परं [26]निःश्रेयसं प्रति।" इति॥२५॥

---

[1] प्रोत्पाटचं — ओ.
[2] योगं — ऊ, ऋ.
[3] यथा — उ.
[4] स्वभक्त्या — ए.
[5] मायायां — आ; मायाया — ऐ.
[6] सर्वकार्याशियरूपं — अ; सकार्याशयरूपं — ऋ; कार्याशियरूपं — ऐ.
[7] चशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] 'सकलं कर्म' इत्यत्र 'भविष्यत्फलं कर्म' इति दृश्यते—ऊ, ऋ; 'सकलकर्म' इति दृश्यते—ए.
[9] त्वाशयरूपं — ऊ, ऋ.
[10] दीक्षया न — ऊ, ऋ, ए.
[11] मतङ्ग० विद्या० ७. ६० उ० –६२ वृत्तौ।
[12] तस्यास्थाने — ऊ, ऋ; तस्यावस्थाने — ऐ.
[13] तमो मलात्मकमुद्घाटच तन्निर्मलं — ऊ, ऋ.
[14] ०श्चाशुद्धस्य वर्त्मनो — आ, ई, उ, ऊ, ऋ. ए, ऐ.
[15] 'शुद्धवर्त्मस्थ इत्युच्यते' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[16] 'अथ भगवान् सर्वदा' इत्यस्य स्थाने 'शुद्ध-विद्या किमेवं सति सर्वदा' इति दृश्यते — अ; 'शुद्धविद्या किमेवं सती सर्वदा' इति दृश्यते — आ, ई, उ, ए; 'शुद्धविद्या अस्मिन् सर्वदा' इति दृश्यते — ऐ.
[17] संसाराच्च — मु, ओ; संसारान्न — उ.
[18] यावद्ध्यसौ — ऊ, ऋ.
[19] प्रकृतिपुरुष० — ऋ, ए, ऐ.
[20] 'परिणतमलश्च ततो विरज्यत इति' इत्ये-तस्य स्थाने 'परिणतमलश्च भवति' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[21] शक्तिपातापेक्षत्वादनु० — अ, ई, उ, ए, ऐ; शक्तिपातापेक्षित्वादनु० — आ.
[22] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ए.
[23] तदा — ऐ.
[24] स्वायम्भुवे — ३२. १७ उ० .
[25] धिया सा — ऋ.
[26] नैश्श्रेयसं — ऊ, ऋ.

किं च — 'यदा च' इत्यादि।

> **यदा च निपतेत्तेजस्तच्छिवत्वपशुत्वयोः।**
> **तदा सीमान्तरं कर्तुमुत्सहेत्साधकं[1] प्रति ॥२६॥**
> **शिवत्वमतिशुद्धं स्यात्पशुत्वमतिसामलम्।**
> **विवेकाग्निरमोघात्मा प्रवृत्तः सर्वगोचरः ॥२७॥**
> **निर्दहत्याशयं कृत्स्नं मायोत्थं प्रसवात्मकम्।**
> **ततो निर्वात्यसावग्निः[2] [3]साधकः स न संशयः ॥२८॥**

**तत्** शुद्धविद्यात्मकं **तेजः साधकं प्रति यदा निपतेत्** इति [4]संभावनायाम्। [5]**तदा** [6]साधकस्य [7]तथाभूतो **विवेकाग्निः** प्रवर्तते। [8]यः **प्रवृत्तः** साधक[9]गतशिवत्वस्य दीक्षयात्यन्तशुद्धस्य,[10] पशुत्वस्य [11]च मलस्य प्रकाशको भवेत्। अत एव [12]तेनात्यन्तप्रबलेन तेजसा[13], स्वविरुद्धेन[14] मलेन[15] च सह [16]वर्तमानस्तदानीं [17]तुच्छतां प्राप्तस्य **सीमान्तरं** [18]मर्यादाविवेकं कर्तुं[19] **शक्तो** भवतीति। स च [20]मलविषयोऽस्य विवेकः सर्वविषयत्वात् [21]सर्वबन्धनिवृत्तिहेतुर्भवति। न तु मायाविषयः प्रकृतिविषयो वेत्युक्तम्[22]। येन [23]**असौ** सर्वविषयः तेन [24]कर्माशयं, **मायोत्थं** च कलादि, यच्च [25]तयोः प्रसवस्वभावं[26]मलरूपं प्रागारब्धकार्यकर्म [27]भोगोपरोधेन सर्वथा दीक्षया क्षपितं तत् **कृत्स्नं निर्दहति**। **ततो निर्वाति साधकः**; निर्वाणेन परेण मोक्षेण युज्यत इति ॥२६–२८॥

---

[1] ०मुत्सहे साधकं — ओ.
[2] निर्वासनाग्निस्तु — मु.
[3] साधकश्च न–उ, ओ; साधकस्य न — ऊ, ऋ.
[4] 'संभावनायां' इति नास्ति–अ, आ, ई, उ ए, ऐ.
[5] तथा — अ.
[6] 'साधकस्य' इति नास्ति—अ, आ, ई, उ, ए, ऐ.
[7] 'तथाभूतो' इत्यत्र 'तथा' इति दृश्यते — अ, आ, ई, उ, ए.
[8] यथा प्रवृत्तः–अ, आ, ई, उ; यथा प्रत्युक्तः–ए.
[9] ०गतस्य शिव० — अ, आ, ई, उ, ए, ऐ.
[10] अत्र चशब्दोऽधिकः—अ, आ, ई, उ, ऊ, ऋ, ऐ.
[11] चशब्दो नास्ति — ऊ, ऋ.
[12] तेनासत्यन्तप्रबलेन मलेन तेजसा — अ; तेनात्यन्तप्रबलेन मलेन तेजसा — ई, उ; नात्यन्तप्रबलेनामलेन तेजसा — ऊ, ऋ; तेना . . .न्तबलेन तेजसा — ए; तेनात्यन्तप्रबलेन मलेन स्वतेजसा— ऐ.
[13] अत्र चशब्दोऽधिकः — अ, आ, ई, उ.
[14] 'स्वविरुद्धेन' इत्यत्र 'विरुद्धेन' इति दृश्यते अ, आ, ई, उ, ऐ.
[15] 'मलेन' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[16] वर्तनात्तदानीं — अ, आ, ई, उ, ए; वर्तमाना तदानीं — ऐ.
[17] 'तुच्छतां प्राप्तस्य सीमान्तरं' इत्येतन्नास्ति अ, आ, ई, उ, ए, ऐ.
[18] कार्यादौ विवेकं — ऐ.
[19] अत्र नकारोऽधिकः — ऐ.
[20] मलविषयो विवेकः — अ, आ, ई, उ, ए; मलविषये तस्य विवेकः — ऐ.
[21] 'सर्वबन्ध' इत्यारभ्य 'सर्वविषयस्तेन' इत्यन्तं नास्ति — ऊ, ऋ.
[22] मतङ्ग० विद्या० ९. ३४, ३५ वृत्तौ।
[23] चासौ — आ, ई, उ, ए, ऐ.
[24] 'कर्माशयं' इति नास्ति—अ, आ, ई, उ, ए, ऐ.
[25] तया — ऐ.
[26] ०मलरूपप्रागारब्ध० — अ, आ, ई, उ, ए.
[27] 'भोगोपरोधेन' इत्यतः प्रभृति १७ तमे बुद्धितत्त्वप्रकरणे २४ तमश्लोकपूर्वार्धवृत्तौ 'परमेश्वरेण प्राङ्निरूपिता रूपीकृ०' इत्यन्तो भागः 'ऊ, ऋ' कोशयोरेवोपलभ्यते। यद्यपि 'ऐ' कोशे पूर्वनिर्दिष्टस्थले वृत्तिरुपलभ्यते। तथापि सा विजातीयत्वेन वर्तत इति नात्र पाठभेदायोपयुक्ता।

अथ प्रासङ्गिकप्रसङ्गेन मतङ्गमुनेः सर्वविवेकविषयः प्रश्नः — 'आशयो नाम' इत्यादि।

**मतङ्ग उवाच —**

**आशयो नाम [1]कर्मोत्थः सुखदुःखात्मको हि [2]सः।**
**किमर्थं ध्रियते [3]देहः सति ज्ञानोदयेऽप्यणोः ॥२९॥**

गुणमायामलविवेकविषये त्रिविधेऽप्येतस्मिन् विज्ञाने यथास्वविषयमुदिते **सति अणोः** अविद्यायास्तत्तद्विषयाया निवृत्तत्वात्, तन्निमित्तकर्मतद्वासनादिफलविभागः सर्व एव निवृत्तः इति, तत्तद्विषयज्ञानोदयादनन्त[र]मेव तद्विषया मुक्तिः स्यादिति तदैव विषभक्षणादिव शरीरपातो भवेत्। न च भवति। ज्ञानिनामपि सुखदुःखाद्यनुभवतां व्यवहारदर्शनादाचारोपदेशाच्च। ततश्च ज्ञानात् कर्मक्षयप्रतिपादिकाः श्रुतयः, "अग्निना सिञ्चेद्" इति श्रुतिवदप्रमाणमेवेति पूर्वपक्षः ॥२९॥

सिद्धान्तस्तु — 'यथोष्म' इत्यादि।

**परमेश्वर उवाच —**

**यथोष्मदग्धबीजानि स्थितये न प्रसूतये।**
**लोकेऽस्मिन् मुनिशार्दूल शरीराणि तथैव हि ॥३०॥**

स्यादेव दोषो यदि ज्ञानोदयमात्रेणैव अज्ञानस्येव अज्ञानकार्यस्यापि निवृत्तिर्दृष्टा भवेत्। सा तु न तत्समनन्तरमेव दृश्यते। यथा रज्जुसर्पभ्रमलक्षणाज्ञाननिवृत्तावपि [4]न तत्कार्यस्य भयकम्पादेस्तदैव निवृत्तिः। अपि तु स्वसंस्कारनिवृत्तिक्रमः कालान्तरेणैवेति। ततः [5]भृष्टबीजमिव क्षिप्तमारब्धकार्यकर्मसंस्कारेण ज्ञानिनामपि शरीरं स्वरूपमात्रेणावस्थितम्। न तु कार्यान्तरारम्भककर्मजननेनापीति। तदिदमुक्तं सांख्यैः[6] —

"तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः" इति।

सौगतैरपि[7] —

[8]"अवस्था वीतरागाणां दयया कर्मणापि वा।
[9]आक्षिप्तेऽविनिवृत्तीष्टेः" इति ॥३०॥

ततश्च — 'प्राक्तनस्य' इत्यादि।

**प्राक्तनस्योपभोगाय [10]निबद्धस्योपभोगतः।**
**क्षय[11]श्चागामिनश्चापि दग्धबीजस्य नान्यथा ॥३१॥**

आरब्धकार्यस्य कर्मणो भोगेनैव **क्षयः** सिद्धः। **आगामिनः** तु ज्ञानप्राप्तेरूर्ध्वमनुष्ठीयमानस्य,

---

[1] कर्मोत्थसुख० — ओ.
[2] कः — ऊ, ऋ.
[3] नाथ —मु, ओ.
[4] च — ऋ.
[5] प्रष्ठबीजवाक्षिप्तकार्य० — ऊ, ऋ.
[6] सांख्यका० ६७ उ०.
[7] प्रमाणवार्तिके २. १९४.
[8] 'अवस्था' इत्यारभ्य 'इति' इत्यन्तं नास्ति — ऋ.
[9] आक्षिप्ता विनिवृत्तीष्टेः — ऊ.
[10] निबद्धस्येव भोगतः — ओ.
[11] ०श्चागमिकस्यापि — ऊ, ऋ.

अपिशब्दात् प्राक्तनस्य अनारब्धकार्यस्य च अविद्यानिवृत्तितो दग्धप्ररोहशक्तितया। न त्वन्येन प्रकारेण क्षयः ॥३१॥

[1]ननु ज्ञानस्याहंकारममकारप्रतिक्षेपेण प्रवृत्तेः, अहंकारममकारानुबन्धिना आरब्धकार्येण कर्मणा सहभावो विरोधादेव नोत्पद्यत इति। तदयुक्तं यतः — 'उपाय' इत्यादि।

**[2]उपायोऽप्यपरः सूक्ष्मो [3]भावनातो व्यवस्थितः।**

एकस्तावज्ज्ञानस्य कर्मणा[4] सहभावे भयकम्पादिनेव तत्संस्कारानुवृत्त्यात्मकोऽत्रोपाय उक्तः। अयं त्वन्य **उपायो** य आत्मनात्मस्वरूपभावनया ज्ञानिनः स्थितः॥

कोऽसावित्युच्यते — 'अनात्मनि' इत्यादि।

**अनात्मन्यात्मभावो यः प्रीत्या बन्धस्य कारणम्॥३२॥**
**निर्विशङ्कः [5]पुरावस्थः क्रीडन्नपि न बाध्यते।**

अनात्मन्यात्माभिमानात्मको **यो** मोहः सः, अभिमानविदेहाशयानुग्रहोपघाताभ्यां [6]प्रीत्युपद्वेषजननेन **बन्धस्य कारणम्**। यस्तु निवृत्तानात्मात्माभिमानात्मशङ्कानिवृत्तमोहः, ज्ञाने[न] पुरे शरीरेऽवतिष्ठत इति **पुरावस्थः** सशरीरः **क्रीडन्** विषयानुपयुञ्जन्नपि सः **न बाध्यते**। यदाहुः[7] —

"वसन् विषयमध्येऽपि न वसत्येव बुद्धिमान्।
[8]स वसत्येव दुर्बुद्धि[9]रसत्सु विषयेष्वपि॥" इति॥

तथा हि — 'गतिः' इत्यादि।

**गतिः सर्वत्र विख्याता वासनावशवर्तिनी॥३३॥**
**यथा राग[10]वशात्स्निग्धे [11]विपन्ने [12]म्रियते [13]ध्रुवम्।**
**न तथा बन्धुवर्गेऽपि विरक्तः संयतः [14]सदा॥३४॥**

इह हि सरागवीतरागयोस्तुल्यधनबान्धवादिविप्रयोगे सरागः प्राणान् [15]परित्यजन् दृश्यते। न च वीतरागः। ततोऽवगम्यते बन्धस्य **गतिः** प्राप्तिः [16]**सर्वत्र** अविद्यावासनासंस्कारानुवर्तिन्येवेति। ज्ञानिनिमित्ततदभावाद् विषयवेदनात्मकभोगयोगेऽपि न बन्धगतिः॥३३—३४॥

---

[1] नन्वज्ञान० — ऋ.
[2] उपायोऽस्य परः — ऊ, ऋ.
[3] वासनातो — ऊ, ऋ.
[4] ०ज्ञानकर्मणा — ऊ, ऋ.
[5] परावस्थः — मु, ओ; पुरावस्था — ऋ.
[6] प्रीत्यपद्वेष — ऋ.
[7] महाभारते १२. ३०४. ६.
[8] संवसत्येव — मु० महाभारतपाठः।
[9] ०रसत्स्वविषयेष्वपि — ऋ.
[10] ०वशात्सिद्धे — मु, ओ.
[11] विवशो — मु, ओ.
[12] प्रयते — ऊ, ऋ; ह्रीयते — ओ.
[13] ध्रुवः — ओ.
[14] तदा — मु, ऊ, ऋ.
[15] परित्यज्यन् — ऋ.
[16] सर्वत्र विद्या० — ऊ.

अत एव — 'जीवन्नपि' इत्यादि।

**जीवन्नपि विमुक्तात्मा यो विरक्तो भवार्णवात्।**
**स्थित्यर्थं [1]वर्ततस्तस्य न बन्धो मुनिसत्तम ॥३५॥**

**तस्य** शरीरवृत्त्यर्थं[2]माहारादि वर्तयतो [3]**न बन्धः**। यतोऽसौ विगताविद्यात्मकत्वाद् **विरक्तः** कामक्रोध[4]मोहलोभदोषोज्झितः [5]स्वात्मरूपसंतुष्टो दुःखेष्वनुद्विग्नमनाः, सुखेषु विगतस्पृहः चित्र-लिखितानिव विषयत्वेनोपस्थितान् अनुमन्यत इति जीवन्मुक्त एव कथ्यते। एवं प्रासङ्गिकप्रसङ्गो-पात्तस्त्रिविधविषयः [6]प्रश्नो निराकृतः ॥३५॥

अधुना प्रासङ्गिके एव शुद्धविद्याविषये ये आहुः— "विद्याव्यापारोऽपि बन्धहेतुः व्यापार-त्वाद् अविद्याव्यापारवद्" इति। तत्प्रतिक्षेपायोच्यते — 'चर्या' इत्यादि

**चर्या [7]येयमविद्याख्या सर्वबन्धस्य कारणम्।**
**[8]बन्धप्रध्वंसिनी विद्या शिवत्वोन्मीलने क्षमा ॥३६॥**

**चर्या** व्यापारः, योऽयमविद्यासंबन्धित्वादविद्याख्यः स सर्वो बन्धहेतुरिष्यत एव। न च तस्य तद्रूपत्वे तद्विरुद्धेनापि तद्रूपेण भवितव्यम्। विरुद्धत्वेनानेन विद्याख्येनानैकान्तिकत्वात्। तमः-प्रकाशादिवद्विरुद्धा च विद्या अविद्यायाः। ततः सा बन्धध्वंसिन्येव युक्तेति शिवत्वव्यञ्जि-कोक्ता ॥३६॥

न च विरुद्धत्वमत्रासिद्धम्। यतः — 'तावद्' इत्यादि।

**तावद्बलवती ज्ञेया पाशवी पशुसन्ततौ।**
**[9]भोगोपपादने शक्ता [10]यावद्भोगात्परं न हि ॥३७॥**
**[11]जानाति विद्ययाविष्टस्तदा [12]प्रोत्सार्य सादरम्।**
**[13]अविद्यां [14]व्यज्यते विद्या प्रसन्ने परमेश्वरे ॥३८॥**

**तावद्** अविद्यायाश्चर्या **बलवती यावत्** पुमान् **भोगात्परं न जानाति**; अविद्यया युक्त इत्यर्थः। यदा तु शक्तिपातक्रमतो विद्याव्यापारेणाधिष्ठितो भवति पुरुषः, **तदा** तेन व्यापारेण **अविद्यां प्रोत्सार्य विद्या** पुंसोऽभिव्यज्यत इति, भवत्येवाविद्याविरोधित्वमस्या इत्यदोषः ॥३७–३८॥

अथ प्रासङ्गिकोपसंहारः, प्रकृतस्य चोपक्रमः —

---

[1] वसतस्तस्य — ऊ, ऋ.
[2] ०माहारादिव तु यतो — ऋ.
[3] ०ऽनुबन्धः — ऊ, ऋ.
[4] 'मोह' इति नास्ति — ऋ.
[5] स्वानुबन्धतत्स्वरूप० — ऋ.
[6] प्रश्नः कृतः — ऊ.
[7] ये धर्मविद्याख्या — ओ.
[8] बद्धप्रध्वंसिनी — ओ.
[9] भोगोपवादने — ऊ, ऋ.
[10] यावद्भोगान् समं नहि — मु; यावद्भोगा-न्समश्नुते — मु० पाठान्तरम्।
[11] जानात्यविद्यया० — ओ.
[12] प्रोत्सार्यते सदा — मु, ओ.
[13] अविद्या व्यज्यते — ऊ, ऋ.
[14] त्यजते — मु.

**एवं परा [1]प्रपत्तव्या ह्यपरा भोगसिद्धये।**

तत्र यदुक्तम्[2] —

"शिवसद्भावकुशला विद्यान्या शुद्धगोचरे।" इति।

तस्योपसंहारः। **अपरा भोगसिद्धये** इत्यनेन अशुद्धविद्यायाः प्रकृतस्वरूपोपक्रमः।।

एवं तत्त्वरूपतामस्याः प्रतिपाद्य भुवनरूपत्वमुच्यते — 'तस्याम्' इत्यादि।

**तस्यां [3]ये संस्थिता रुद्रास्तान्प्रवक्ष्यामि तेऽधुना ॥३९॥**
**भुवनेषु विचित्रेषु रमन्तेऽक्लिष्टसंपदः।**
**रुद्रो [4]ह्येकशिवो नाम नायकः परमेश्वरः॥४०॥**
**विद्याभुवनसङ्घस्य ततोऽनन्तः प्रतिष्ठितः।**
**अजेशश्च महातेजा उमाकान्तश्च वीर्यवान्॥४१॥**
**ईश्वरश्चातिविक्रान्तः प्रचण्डो[5]ऽतिप्रचण्डकृत्।**
**[6]एकवीरश्च [7]शर्वश्च सोऽष्टमः [8]परमेश्वरः॥४२॥**
**ततो भवस्य नाथस्य भुवनं भूतिदं महत्।**
**उग्रस्यापि ततोऽधस्ताद्भीमस्यापि ततोऽपरम्॥४३॥**
**भुवनं वामदेवस्य तत्रैवामिततेजसः।**
**एते [9]रुद्रा महाभागा भुक्तिमुक्तिप्रदाः शिवाः॥४४॥**

**एते** च **रुद्राः** द्वादश एकशिवादयो **भुक्तिमुक्तिप्रदाः शिवाः** शुद्धाः; तत्र गुरुत्वेन नियुक्ता इत्यर्थः॥ ३९–४४॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः—

**द्विषट्कमाला भुवनेश्वराणां विद्याश्रिता कारणतुल्यवीर्या।**
**समासतस्ते कथिता विभज्य [10]रागोऽधुना विस्तरतोऽभिधास्ये॥४५॥**

अत्र द्वादशभिर्भुवनैरियं **भुवनेश्वराणां** माला। सा च कारणेन अनन्तेशेन तुल्यवीर्या कपालेश्वरमालावत् सा ह्यनन्तनियुक्तेत्यर्थः। **विद्याश्रिता समासतः कथिता** इति व्याख्यातार्थस्योपसंहारः। **रागोऽधुनेति** व्याख्येयस्योपक्रमः॥४५॥

[इति श्री] भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
[विद्यापादे] त्रिपर्वपदार्थे विद्यातत्त्वप्रकरणं [दशमं समाप्तम्]॥
**दशमः पटलः**

---

[1] प्रवक्तव्या — मु; प्रवक्तव्याप्यपरा — ओ.
[2] मतङ्ग० विद्या० १०. २१ पू०.
[3] मे — मु.
[4] ह्येकः शिवो — मु, ओ.
[5] ०ऽतिनिचण्डकः — मु, ओ.
[6] एकेवीरश्च — ऊ, ऋ.
[7] सर्पश्च — मु; सर्वश्च — ओ.
[8] प्रभुरीश्वरः — मु, ओ.
[9] रुद्रमहाभागाः — ओ.
[10] रागं त्वहं — मु.

# एकादशः पटलः

## रागतत्त्वप्रकरणम्

**अथाणोर्विसृतस्यास्य [1]कलाविद्धस्य वेगतः।**
**प्रवृत्तस्याभिलाषेण विद्ययोन्मीलितस्य च ॥१॥**
**तस्मादेवा[2]शयाद्रागः सूक्ष्म[3]रूपोऽभिजायते।**

**अथेति** विद्यातत्त्वविचारादनन्तरं रागतत्त्वप्रकरणम्। अथ पदार्थादिसंबन्धाः [4]प्राग्वदेव द्रष्टव्याः। वाक्यात्मकस्तु [5]"यथा रागवशाद्" इत्यादिभिर्वाक्यैरनेकविधः। **अणोरिति** पुंसः **अस्य** प्र[क्रृ]तस्य प्रलयकेवलिनः। कलया मलस्य, विद्यातत्त्वाद् **विद्यया** च दृशः समुन्मीलितत्वाद् **विसृतस्य** भोगाय, **प्रवृत्तस्य** उन्मुखीभूतस्य सतः यः, **अभिलाषेण** विषयगवर्त्मिना **वेगतः** युक्तायुक्तपरामर्शतः प्रवृत्तस्य अनुमेयत्वेन [6]वक्ष्यमाणो **रागः** सूक्ष्मः। प्राक्तस्य बुद्धितत्त्वस्य स्थूलत्वेन [7]वक्ष्यमाणत्वात्। सः **तस्मादेव** विद्योपादानकारणाद् [8]**आशयाद्** अतिसूक्ष्मरूपात् कलातत्त्वाज्जायते इति। यदुक्तं श्रीमद्रौरवे[9] —

"कलातत्त्वा[10]द्रागविद्ये द्वे तत्त्वे संबभूवतुः।" इति॥

अथ कथमसौ रागोऽभिलाषेण वेगवता प्रवृत्तस्यानुमीयते इत्युच्यते — 'येनासौ' इत्यादि।

**[11]येनासौ रञ्जितः क्षिप्रं भोगभुग्भोगतत्परः ॥२॥**
**प्रीतिं बध्नाति सहसा यया तेषु निमज्जति।**

इह हि सकलावस्थायां पुंसो योऽयं भोग्यार्थविषयोऽभिलाषो लक्ष्यते, नासौ ज्ञत्वकर्तृत्ववत् स्वभावेनैव। मुक्त्यवस्थायामदर्शनात्। नापि विषयेणान्तःकरणेन वोत्पादयितुं शक्य इति वक्ष्यामः[12]। ततो येनोत्पद्यते स राग इति रागतत्त्वसिद्धिः॥

ननु विषयस्य सुखदुःखमोहात्मना त्रैगुण्येन [13]वक्ष्यमाणत्वात् स एवानन्दात्मा सुखरूपस्तत्राह्लादकहेतुत्वेन रागो भविष्यति। तत्किमनेन ततोऽन्येन कल्पितेनेति। तत्रोच्यते — 'आनन्द' इत्यादि।

---

[1] कलासिद्धस्य — मु, ओ.
[2] ०श्रयाद्रागः — मु, ओ.
[3] ०रूपेण जायते — ओ.
[4] तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत्।
[5] मतङ्ग० विद्या० १०. ३४ पू०.
[6] मतङ्ग० विद्या० ११. २ उ०, ३ पू० वृत्तौ।
[7] मतङ्ग० विद्या० ११. ४ उ०, ५ पू० वृत्तौ।
[8] साशयात् — ऋ.
[9] रौरवे विद्या० २. १५ पू०.
[10] ०द्रागतत्त्वे — ऊ, ऋ.
[11] येनाणू रञ्जितः — मु; येनाणुरञ्जितं — ओ.
[12] मतङ्ग० विद्या० ११. ३ उ० — ५ वृत्तौ।
[13] मतङ्ग० विद्या० १७. १९० वृत्तौ।

**आनन्दाह्लादकत्वेन तन्मयो न विभाव्यते ॥३॥**
**नोत्सहेत परित्यक्तुं भोगान्स्निग्ध[1]तया तदा ।**

मुक्तात्मनो विषयाह्लादकत्वेन सर्वान्प्रत्यविशेषात सर्वे एवाह्लादमयाः स्युः । न च **तन्मयः** कश्चिद् वीतरागो **विभाव्यते** सरागः । स हि उक्तरागितया **भोगान्** नैव **परित्यक्तुं** शक्तः । वीतरागस्ततः परित्यक्तुमुत्सहेत इति स[राग]वीतरागाभावप्रसङ्गात् । विषयस्याभिरमणीयतया मुक्तत्वेऽपि न [2]ग्राहकगतस्पृहात्मकरागहेतुत्वमिति विषयादन्यो [3]रागस्तद्धेतुः सिद्ध्यतीति ॥

[4]यद्येवं [5]प्रागुक्त एव मायाया मोहकस्वभावो रागः । किमन्येनेति । तत्रोच्यते — 'समीपवर्ती' इति ।

**समीप[6]वर्ती मायातः [7]क्षुरितः पशुना सह ॥४॥**
**येनोपरक्तो लौल्येन रागी समुपलक्ष्यते ।**
**सति तस्मिन् [8]प्रधानात्मा स्थूलस्तं प्रति युज्यते ॥५॥**

[9]वक्ष्यमाणनयेन कलादिवदयमात्मनः **समीपवर्ती**; **मायातश्च** पारम्पर्येणाप्युक्त[10] एव । एतदुक्तं भवति — न मायायाः साक्षान्मोहकत्वम् । अपि तु कार्यद्वारेणैवेत्युक्तम्[11] । अतस्ततोऽप्यन्यस्तत्कार्यवर्त्मनि व्यवस्थितो रागः सिद्धः । स च **पशुना** मलेन **सह** रञ्जको भवति । **येन** कारणेन **लौल्येन** मलेन **उपरक्तः** अयं पुरुषो **रागी** लक्ष्यते । न निर्मलो मन्त्रमन्त्रेश्वरादिः । एवं च "[12]मोहो मदश्च रागश्च" इत्यादिना यो मलनिमित्तः प्रागुक्तः, सोऽयमेव नान्य इत्युक्तं भवति ।

[13]बाह्योऽवैराग्यलक्षणो[14] बुद्धिधर्मः प्रधानकार्यत्वेन [15]वक्ष्यमाणो रागोऽस्ति । तत्किमन्येन । तदयुक्तं यतः — **सति तस्मिन्निति** । सति तस्मिन् ग्राहकगते रागे प्रधानकारणकोऽयं [16]करणरागः पुरुषं **प्रति युज्यते** । यतोऽयं गर्वाद्यात्मकः **स्थूलः** ग्राह्यस्वभावः प्रत्ययत्वात्; सर्वेर्ष्यादिप्रत्ययवत् । तथा च सौगता अपि — [17]"अभूतगुणाभिनन्दनं चेतसोऽभिपङ्गं रागम्" आहुः । न च ग्राह्येण घटादिनेव ग्राहकः समाक्रान्तुं शक्यः । प्रत्युत तस्य तदाक्रान्तत्वाद्वह्न्यादिभिरिन्द्रियादिवत् ॥४–५॥

ननु रागादीनां वासनात्मकत्वेनैव भवद्भिः सांख्यैरिव बुद्धिधर्मत्वमिष्यते । नैयायिकादिवत्

---

[1] ०तयान्यथा — मु; ०तया सदा — ओ.
[2] ग्राहकं गत० — ऋ.
[3] रागतद्धेतुः —ऋ.
[4] 'यद्येवं' इत्यारभ्य 'किमन्येनेति' इत्यन्तं नास्ति — ऋ.
[5] मतङ्ग० विद्या० ८. ३३ उ० –३८ पू० वृत्तौ ।
[6] ०वर्तिमायातः — ओ.
[7] क्षरितः — ऊ, ऋ, ओ.
[8] प्रधानार्था — ऋ.
[9] मतङ्ग० विद्या० ११. ३३ उ०, ३४ पू० वृत्तौ ।
[10] मतङ्ग० विद्या० ११. १, २ पू० वृत्तौ ।
[11] मतङ्ग० विद्या० ८. २–५ वृत्तौ ।
[12] मतङ्ग० विद्या० ६. १०३ उ०.
[13] बाह्यं वैराग्य — ऊ; बाह्यवैराग्य — ऋ.
[14] अत्र पाठः भोगकारिकावृत्तौ ४८ तमे पृष्ठे दृश्यमानपाठानुसारेण शोधितः ।
[15] मतङ्ग० विद्या० १७. १४७, १४८ वृत्तौ ।
[16] करणं रागः — ऋ.
[17] आकरो न लभ्यते ।

पुरुषे वासनानभ्युपगमादिति । तस्यापि ग्राहकत्वानुप[प]त्तेर्वासनात्मनैव रञ्जकत्वं भविष्यतीति न व्यतिरिक्तरागसिद्धिः । तत्रोच्यते — 'एकीभूत' इत्यादि ।

[1]एकीभूतस्ततः पश्चाद्बलवाञ्जायते क्षणात् ।
येनाभिभूतो बाह्येषु प्रत्ययेष्वनुरज्यते ॥६॥
तेनायं सुखदः प्रोक्तस्तद्वीर्येणोपबृंहितः ।
[2]संमूढस्तत्परो भूत्वा सुखमेवानुमन्यते ॥७॥

सत्यम् । वासनात्मनैव बुद्धौ धर्मादिवद्रागो वर्तत इति [3]वक्ष्यामः । स तु बुद्धिधर्मत्वादेव तद्वृत्तिलक्षणप्रत्ययान्तरवद्वासनापरिपाकवशात् स्थूलेन प्रत्ययात्मना **एकीभूतः** स्थूलतां प्राप्त इत्यर्थः । **बलवान्** पुरुषस्योपकारायापकाराय वा संपद्यते । **येन** प्रत्ययात्मना अभिभूतरूपेष्वपि सुखरूपेणैवानुरागं [4]भजते । अन्यथा त्रैरूप्येण [5]अविशेषेऽपि बाह्यस्यायं विशेषो न स्यात् । तेनायमेव प्रत्ययात्मको रागो भोगहेतुरुक्तस्तस्य ग्राहकगतस्य रागस्य **वीर्येणोपबृंहितस्सन्** । न तु वासनात्मक एव । बुद्धेः सर्वदानन्तवासनायोगेन पुंसो युगपद्विरुद्धानन्तप्रतिपत्तिवैगमप्रसङ्गादिति, बुद्धिधर्मस्य वासनावस्थायामपि रञ्जकत्वात् तद्व्यतिरिक्तरागतत्त्वसिद्धिः ॥६–७॥

न तु भोक्तृरागेण विनास्य प्रत्ययात्मनो रागस्य रञ्जकत्वमुपपद्यत इत्युच्यते — 'यस्माद्' इत्यादि ।

[6]यस्मादणुर्विरक्तात्मा प्राकृतेन बलीयसा ।
विचेतनेन सान्द्रेण शक्यते नाभिरञ्जितुम् ॥८॥

**न हि अणुः** असति तस्मिन् ग्राहकगते रागे वीतरागः सन्, बुद्धिप्रत्ययात्मना ग्राह्येणानेन रागेण रञ्जयितुं शक्यः सर्वज्ञवत् । तस्य हि तत्प्रतिभासत्त्वेऽपि वीतरागत्वात् । ननु सर्वज्ञस्य मलो नास्ति । अस्य तु विद्यत एव किमतः । न हि मलो रागस्य हेतुः । प्रलय[7]केवलादावदर्शनाद्रागस्य । अपि त्वज्ञस्यैवेत्युक्तम् ॥८॥

अत एव — 'कलया' इत्यादि ।

कलयोद्भूतसंयोगाद्वासना विद्यया यदा ।
[8]प्रदृश्यते विधौ पुंसस्तदा रागवशाद्ध्रुवम् ॥९॥
प्रध्वस्तात्मगुणो भूत्वा न विजानाति मोहितः ।
यत्तत्स्वाभिजनं दिव्य[9]मविनाश्यजुगुप्सितम् ॥१०॥

---

[1] एकीकृतस्ततः — ऊ, ऋ.

[2] समूहस्तत्परो — ऊ, ऋ; स मूढस्तत्परो — ओ.

[3] मतङ्ग० विद्या० १७. २४ उ० —२६ पू०. वृत्तौ ।

[4] भजतोऽन्यथा — ऋ.

[5] 'अविशेषेऽपि' इत्यत्र 'विशेषेऽपि' इति दृश्यते —ऊ.

[6] तस्मादणु० — मु, ओ.

[7] ०केवलादेव दर्शनाद्रागस्य — ऊ, ऋ.

[8] प्रदर्श्यते — ऊ, ऋ.

[9] ०मविनाश्यं जुगुप्सितम् — ओ.

नित्यमत्यन्तममलमसादृश्यगुणान्वितम् ।
[1]अनभिप्लुतसामर्थ्य[2]मनाख्यममितात्मकम् ॥११॥

**कलया विद्यया** च यः समुद्भूतः पुंसः संयोगः, तस्माद्धेतोर्वासनाजनितत्वाद् [3]वासना[त्मा-रागः प्रका]शते । न बुद्धिधर्मरूपो राग उच्यते । स **यदा पुंसः** दृश्यते तदानीं ग्राहकगतस्य रागस्य सामर्थ्यादिव । अन्यथा यदि नाम मलेन प्रध्वस्तगुणत्वतो [4]मोहितत्वाद् **यत् स्वाभिजनं** शिवत्वमविनाशयादिधर्मयुक्तं **तद्** न जानाति । रागस्य [सामर्थ्य] किं वर्तते इति । अतो मलोपयोगेऽपि ग्राहकगतरागाभावात् प्रत्ययात्मकरागवेदनेऽपि सर्वज्ञस्येव तस्य वीतरागत्वप्रसङ्ग इति सूक्तम् ॥९–११॥

अत्र रागस्य सुखदत्वमुक्तमसंभावयन्मतङ्गमुनिः — 'धर्मात् सुखम्' इत्यादि ।

**मतङ्ग उवाच —**

**धर्मात्सुखं ततो रागः [5]स च ह्लादात्मकः स्मृतः ।**
**विरक्तस्य भवेद्दुःखं न्यायेनानेन गम्यते ॥१२॥**

**धर्मात्** हि **सुखम्** उत्पद्यते । सुखाच्च **रागः** बुद्धिधर्मः, **स च ह्लादात्मकः** सुखसंवेदनप्रत्यय-लक्षणः **स्मृतः** सांख्यादिभिः । अस्य चोपलक्षणत्वादेवमधर्माद्दुःखं, ततो विरागः, स च दैन्यात्मकः स्मृत[6]स्तैरेवेति युक्तम् । भवन्मते तु "[7]तेनायं सुखदः प्रोक्तः" इत्यादिना रागादेव सुखमुक्तमिति सामर्थ्यात् तदभावाद्दुःखमिति प्रतीतेः धर्माधर्मयोः सुखदुःखत्वं प्रतिक्षिप्तं [8]भवेदिति **न्यायेनानेन गम्यते** । मुक्तस्य च रागाभावाद्दुःखत्वमिति सर्वागमविरोधः ॥१२॥

अत्र [9]सिद्धान्तः — 'सुखद' इत्यादि ।

**परमेश्वर उवाच —**

**सुखदः सर्वदा रागः किं तु ये [10]यत्र वासिताः ।**

सत्यम् । धर्मादेव सुखमुत्पद्यते । **किं तु** त्रैरूप्येण सर्वेषां प्राधानिकानामविशेषात् सुख-तद्दुःखमोहोऽविरुद्ध इति सुखतयैव पुंसामवभासते । भासते च **ये** यस्मिन्विषये रागेण **वासिताः**, तेषां तद्विषयस्वरूपं **सर्वदा** सुखमयत्वेनैवेति **रागः सुखदः** उक्तः । न तु सुखजनकत्वेनेत्य-विरोधः ॥

अत एव — 'श्वयोनावपि' इति ।

---

[1] अनभीप्सितसामर्थ्य० — मु.
[2] ०मानन्त्यममिता० — मु, ओ.
[3] अत्र पाठः मतङ्ग० विद्या० ११. २२ उ० — २४ वृत्तिमनुसृत्य कल्पितः ।
[4] मोहितत्वाद्यात्माभिजनं — ऊ.
[5] स चाह्लादात्मकः — मु.
[6] ०स्तैरेवेत्ययुक्तम् — ऊ, ऋ.
[7] मतङ्ग० विद्या० ११. ७ पू०.
[8] भावयेदिति — ऊ, ऋ.
[9] दृष्टान्तः — ऊ, ऋ.
[10] तत्र — मु, ऊ, ऋ.

**श्वयोनावपि यो भोगो यश्च [1]राज्ये सुखोदये ॥१३॥**
**सदृशः स तु मन्तव्यः स्वशरीरस्य पालनात् ।**

अत्यन्तमोहमयं रजोमयमपि वा विषयं रागवासिताः सुखमयमेव पश्यन्ति। अन्यथा मोहमयत्वाद्विषयस्य श्वप्रभृतीनां क्रिमीणां च शरीरधारणमेव नोपपद्येत । रागवशात्तु [2]सर्वस्यैवेयमात्माशीः क्रिमेरपि मा न भूवं भूयासम् इति ॥

यदप्युक्तं "[3]विरक्तस्य भवेद्दुःखम्" इति । तदपि न युक्तं यतः — 'न केवलम्' इत्यादि ।

**न केवलं सुखायोक्तो रागो भोगभुजः सदा ॥१४॥**
**दुःखेष्वपि हि बोद्धव्यो वासितस्य सदात्मनः ।**
**स्नेहेन यस्य नावाप्तिर्न च रागाद्वियुज्यते ॥१५॥**
**अणोस्तद्रागजं दुःखं न विरक्तस्य जायते ।**

यथा हि **रागः** सुखस्य हेतुरुक्तः [तथा] दुःखस्यापि मोहस्य। यतो रागवासितस्यैव **आत्मनः** रागेण यद्विषयीकृतं स्त्र्यादि वस्तु, तस्यानवाप्तौ **दुःखम्** उत्पद्यमानं दृश्यते मोहश्च । **न** तु रागाभावादिति । कुतो **विरक्तस्य** दुःखप्रसङ्गः ॥

यद्येवं रागनिबन्धनात्सुखस्य वीतरागावस्थायां तदभावात् पुरुषार्थत्वेन न कश्चित् तत्प्राप्त्यर्थं यतेत। सर्वे हि प्रीत्यर्थं यतन्त इति। तत्रोच्यते — 'यत्सुखम्' इत्यादि ।

**यत्सुखं वीतरागाणां [4]सर्वारम्भेषु सुव्रत ॥१६॥**
**न तत्सुखं कदाचित्स्याद्रागे[5]णाभिहतात्मनाम् ।**

सुखस्येव दुःखस्यापि रागहेतुत्वेनोक्तत्वाद् **वीतरागाणां** रागाभावत एव सर्वदुःखनिवृत्त्यात्मकं **सुखम्** अन्यदेवास्ति। यद्रागिणां **न कदाचिदपि** विद्यत इति ॥

न चेद[म]प्रसिद्धमेव लोके सुखमिति मन्तव्यम् । यतः —

**दुःखं रागाभिभूतस्य [6]यदप्राप्तौ तु जायते ॥१७॥**
**तदपेक्ष्य [7]सुखं प्राप्तौ विद्धयेवं [8]मुनिसत्तम ।**

रागेण विषयीकृतेन वस्त्यादिना पुंसः, तस्य वस्त्यादेरर्थस्य **अप्राप्तौ दुःखम्** उत्पद्यते। तद् **विद्धयेवम्** — दुःखाह्लादात्मनः सुखाभावात्मक[त्व]मेव। न तु ह्लादात्मकप्रत्यक्षरूपं प्रागुक्तम् ।

---

[1] राज्यसुखोदये — मु, ओ.
[2] 'सर्वस्य प्राणिन इयमाशीर्नित्या भवति मा न भूवं भूयासम्' — योगसूत्रभाष्ये २. ९; 'येयमात्माशीर्मा न भूवं भूयासमिति सर्वस्य दृश्यते' योगसूत्रभाष्ये ४. १०.
[3] मतङ्ग० विद्या० ११. १२ उ०.
[4] सर्वारम्भे सुखव्रत — ऊ, ऋ.
[5] ०णाभिहितात्मनाम् — ऊ, ऋ.
[6] यतः प्राप्तस्य जायते — मु; यदा प्राप्तस्य जायते — ओ.
[7] सुखप्राप्तौ — मु, ओ.
[8] मुनिपुङ्गव — ऊ, ऋ.

तस्य संभोगादिना जन्यत्वान्न तु प्राप्तिमात्रेणैव। प्रागप्राप्तिकृतदुःखाभावे तस्यानुत्पादादित्युक्तं **तदपेक्ष्येति**। ततश्चैतदपि लोकप्रसिद्धमेव ॥

एवं प्रसङ्गाद् वीतरागस्य [सरागस्य च] सुखदुःखहेतुत्वं प्रकारान्तरेणापि सिद्धमुच्यते —

**विरक्तं प्रति यो रागः सोऽतिदुःखस्य कारणम् ॥१८॥**
**रक्तेभ्योऽपि [1]विरागो यस्तत्सुखं परमं मतम्।**
**योऽन्योन्यमविरक्तानां [2]विद्विषाणां द्वयोर्भवेत् ॥१९॥**
**योगस्तेन [3]समं नास्ति [4]सुखं वा यदि वासुखम्।**

**द्वयोः** स्त्रीपुंसयोः अन्यतरस्य **रागः** दुःखहेतुः। द्वयोश्चात्यन्तरक्तयोरन्यतरस्य दोषदर्शनादात्यन्तिको यो **[5]विरागो** जायते। यदुक्तम्[6] — "प्रवृद्धस्य प्रेम्णः स्खलित[7]मविषह्यं हि भवति" इति। **तत् परमं सुखम्**। [8]तदर्जनरक्षणादिदुःखाभावात्मकत्वात्। यदाहुः[9] —

"भोगानासञ्जनादेको रक्षातोऽन्योऽपरः क्षयात्।
[10]सङ्गदोषौ निरीक्ष्यान्यो हिंसातोऽन्यो विरज्यते ॥" इति।

यस्तु परस्परानुरक्तयोः **योगः तेन समं सुखं** नास्ति। यस्त्वरक्तयोर्**योगः, तेन समं** दुःखं नास्त्येवेति। एवं रागः सुखद उक्तः ॥

यद्येवं परमेश्वरपदे किं सुखम्। येन दुःखविविक्तमपि मन्त्रमन्त्रेशपदं परित्यज्य, तत्प्राप्तये घटन्त इति। तत्रोच्यते — 'सर्वम्' इत्यादि।

**सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥२०॥**
**न चाणुस्तद्विजानाति मोह[11]शक्त्यातिमोहितः।**

अशक्तत्वाद्धि पुंसः **सर्वं सुखमपि**, कर्मवशत्वाद्यत्नात् प्रार्थितमप्रार्थितं वोपतिष्ठमानं तद्वशादेवापरिपूरिताकाङ्क्षस्य निरस्यं दुःखम्। एवं मन्त्रमन्त्रेशपदे ईश्वरपारतन्त्र्यमेव दुःखम्। परमेश्वरपद[12]प्राप्तौ तु तस्येश्वरस्येव स्वात्मवशमिति, [13]शक्तत्ववृद्ध्या सर्वदुःखनिवृत्तेः परा परिपूर्णता। तस्यान्यदेव सुखं प्राकृतात्सुखादभिव्यज्यते यत्पशूनामगोचर[14]मित्येवं दुःखित्वप्रसङ्गोऽपि परिहृत एवेति ॥

अधुना ग्राहकगतरागप्रतिक्षेपाय मतङ्गमुनिः — 'सुखम्' इत्यादि।

---

[1] विकारो यः — ओ.
[2] विद्विषां न द्वयोः — मु; विद्विष्टानां च यो भवेत् — ऊ, ऋ.
[3] समो — मु, ऊ, ऋ, ओ.
[4] सुखे वा यदि वासुखे — मु, ओ.
[5] विनाशो — ऊ, ऋ.
[6] रत्नावल्याम् ३. १५; 'प्रकृष्टस्य' इति मुद्रितरत्नावलीपाठः।
[7] ०मविषह्ये हि — ऊ; ० मविषह्यो हि — ऋ.
[8] तदञ्जन० — ऋ.
[9] आकरो न लभ्यते।
[10] सङ्गदोषो निरीक्षान्यो — ऊ.
[11] ०शक्त्या नियामितः — ऊ, ऋ.
[12] प्राप्तौ तु स तस्येश्वरस्येव — ऋ.
[13] अशक्तत्ववृद्ध्या — ऊ; शक्तत्ववृत्त्या — ऋ.
[14] ०मित्येवमुक्तस्य दुःखित्व० — ऋ.

**मतङ्ग उवाच —**

**[1]सुखं रागाभिभूतस्य यद्यणोर्दुःखमेव च ॥२१॥**
**रागश्चानादिमान्सिद्धो विरागस्य किमागतम् ।**

एवं **यदि** ग्राहक[2]रागादेव सुखदुःखं, तदा तस्य कलादेरिव सर्गप्रारम्भकालादारभ्यानाद्येव कारणान्तरं विना प्रवृत्तेः, रक्तत्वात् क्षणमात्रमपि पुंसो वैराग्यानुपपत्तिः, रागस्यानिवृत्तेः। दृश्यते च भुक्तभोगस्य पुंसस्तद्विषयं वैराग्यमिति, ततोऽनादिप्रवृत्तग्राहकरागाभावसिद्धया, वैराग्यसहभावी रागो स्थिरप्रत्ययात्मको बुद्धिधर्मः सिद्धयतीति पूर्वः पक्षः ॥

सिद्धान्तस्तु — 'भोग्येन' इत्यादि ।

**परमेश्वर उवाच —**

**भोग्येन [3]भोगायाकृष्टो यावन्न परिहीयते ॥२२॥**
**तावत्तस्मिन्स रागी [4]स्याद्भुक्ते वैराग्य[5]मेति हि ।**
**विरागात्तत्परित्यज्य यदन्यद्रुचितं फलम् ॥२३॥**
**तस्मिन्राग[6]वशाविष्टः प्रीतिं बध्नाति पुद्गलः ।**

द्विविधो हि रागः पुंसो वासनात्मकः प्रत्ययरूपश्चेत्युक्तम् । तत्र प्रत्ययरूपेणैव **भोग्येन** भोगाकाङ्क्षात्मना संवेद्यमानेन भोगार्थम् **आकृष्टः** पुरुषो **यावन्न** त्यज्यते **तावत्तस्मिन्** [7]विषये **रागी** कथ्यते। तेन तु त्यक्तो विरक्त इति स एव प्रत्ययात्मकः। तदानीं पुंसो निवृत्तिः सिद्धयति । न तु वासनारूपोऽपि । विषयान्तरे ततोऽन्यत्राभिरमणीये रागवशेनाभिलाषदर्शनात्। तदुक्तम्[8] —

"विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं [9]रसोऽप्यत्र परं दृष्ट्वा निवर्तते ॥" इति ॥

पुनरपि ग्राहकरागप्रतिक्षेपाय मतङ्गमुनिः — 'रागेण' इत्यादि ।

**मतङ्ग उवाच —**

**रागेण युज्यते प्रीतौ विरागेण वियुज्यते ॥२४॥**
**तत्किमर्थं सरागाणां [10]विरागः प्राक् त्वयोदितः ।**

एवं हि वासनात्मनस्तस्य रागस्याभावप्रसङ्गस्तदवस्थ एव । [अ]भावश्च सिद्धो विषयानभिलाषादिदर्शनेन वीतरागाणामिति। ततस्तस्य रागस्याभावसिद्धिरिति पूर्वः पक्षः ॥

सिद्धान्तस्तु — 'दुःखम्' इत्यादि ।

---

[1] सुखरागाभि० — ऊ, ऋ.
[2] रागादेः सुख० — ऊ, ऋ.
[3] भोगाय कृष्टो — ऊ, ऋ.
[4] स्याद् भुक्तो — मु; स्याद्भुङ्क्ते — ओ.
[5] ०मेव हि — ऊ, ऋ.
[6] ०बलाविष्टः — मु; ओ.
[7] विषयी — ऋ.
[8] भगवद्गीता २. ५९.
[9] रसोऽप्यस्य — मु. भगवद्गीतापाठः ।
[10] विरागाः प्रत्ययोदिताः — ऊ, ऋ.

परमेश्वर उवाच —

**दुःखं [1]प्रति न रागोऽस्ति न च [2]सौख्ये विरागता ॥२५॥**
**तथापि सुखदुःखाभ्यां युज्यते [3]कर्मणो वशात् ।**

यथैव हि पुरुषेच्छानपेक्षया बलात्कारेणैव प्राक्तनं कर्म सुखदुःखैः पुरुषं योजयति । यदाहुः[4] —

"अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥" इति ।

तथैव च विरुद्धभावनात्मकमीश्वरप्रणिधानात्मकं वा कर्म तमनादिप्रवृत्तं वासनात्मकमपि रागं सर्वत्र एकदेशे वा सांख्यादीनामिव [5]कार्ये बध्नातीति नात्र वीतरागाभावप्रसङ्गः । अचिन्त्यत्वात्कर्मशक्तेरित्यर्थः ॥

तथा हि — 'यत्कर्मण' इत्यादि ।

**[6]यत्कर्मणो विपक्वस्य फलमत्युत्कटं पशोः ॥२६॥**
**[7]तत्कारणकराविष्टं न च स्वातन्त्र्यतः क्वचित् ।**
**तस्माद्रागो विरागो वा कारणात्मवशान्मुने ॥२७॥**
**प्रवर्ततेऽणुसङ्घस्य वर्त्मन्यस्मिन्सितासिते ।**

यतो **यदत्यन्ततीव्रवेगकर्मजनितत्वाद्भोगस्य अत्युत्कटमपि फलं** पुंसस्तद् ईश्वरशक्तिप्रेरणात्मना कर्मणा विना **न स्वातन्त्र्येण** भवतीत्युक्तमीश्वरसिद्धौ[8] । [9]ततोऽन्यत्रापि ईश्वरप्रणिधानात्मककर्मवशतो रागशक्तिनिवृत्तेरेव परं वैराग्यमुत्पद्यत इत्युक्तम् ॥

अथ रागनिवृत्त्युपायभूतमेतत्कर्म कस्मात् सर्वः सर्वदा नानुतिष्ठतीति । तदर्थमेतत् — 'स्वाम्नाय' इत्यादि ।

**स्वाम्नायोचितकालस्य मर्यादावसरागता ॥२८॥**
**या यस्य तां न विप्रेन्द्र व्यतिक्रम्य प्रयाति हि ।**

स्वप्रबन्धावस्थानस्य उचितः तथाभूतः कालः यस्य, तस्य वस्तुनः **या मर्यादा** विशिष्टावधियुक्तता [तां] **न** कश्चिदतिक्रामतीति । अतश्च रागस्य मलकर्मनिमित्तत्वात् तयोरन्यथाभाव एव निवृत्तिकालमर्यादा । तत्र मलस्य परिपाकादन्यथात्वे सर्वथा रागनिवृत्तिः शक्तिपातघ्रातानामित्युक्तम्[10] — "संसारात्स विरज्येत प्रध्वस्तकलुषः सदा" । इति ।
कर्मणस्तु [11]"विज्ञानयोग[12]संन्यासैर्भोगाद्वा कर्मणः" [इति] परिक्षयादन्यथात्वे तद्विषयरागनिवृत्तिः

---

[1] प्रकृतिरागोऽस्ति — ऊ, ऋ.
[2] सौख्यं विरागतः — मु, ओ.
[3] कर्मणां — मु, ओ.
[4] सायणग्रथितसुभाषितसुधानिधौ (३२) विधिप्रशंसापद्धत्याम् श्लो० १०.
[5] कार्यं — ऊ, ऋ.
[6] यत्कर्मणोऽपि पक्वस्य — मु.
[7] तत्कार्यकरणाविष्टं — मु, ओ.
[8] मतङ्ग० विद्या० ३. १२, १३ पू० वृत्तौ ।
[9] मतङ्ग० विद्या० ४. ४४–४८ वृत्तौ ।
[10] मतङ्ग० विद्या० १०. २५ उ०.
[11] पौष्करे विद्या २. १४६; परमोक्षनिरासकारिका ५४ उ०.
[12] सन्यस्तेर्भोगाद्वाप्यवधिक्रमेण परिद... द् –ऊ; सन्यस्तैर्भोगाद्वाप्यवधिक्रमेण परिद .. द्–ऋ.

सांख्यसौगतानाम् । दृष्टश्च विषयान्तराद्विरक्तस्य विषयान्तरे रागः । सर्वात्मना कर्मणः परिक्षयेणान्यथात्वे सर्वविषयरागनिवृत्तिविज्ञानकेवलार्हाणां परिपाकापेक्षया वा प्रलयकेवलिनामिति । निमित्ताभावान्न रागनिवृत्त्युपायभूतं कर्म सर्वेण सर्वदानुष्ठीय [त] इति ॥

**तस्मात्सुखं च दुःखं च [1]रागे सत्युपलक्ष्यते ॥२९॥**
**न च रागविरागाभ्यां विना कश्चित्प्रदृश्यते ।**

तदेवं सुखदुःखयोः कर्महेतुत्वेऽपि यथा [2]रागनिमित्तकत्वं तथोक्तम्[3]। तथा च रागेण विरागेण च **विना** [**न**] **कश्चित्** पुरुषो दृश्यते । तथा च रागस्य प्रवृत्तौ निवृत्तावपि हेतुरस्तीति तथा चोक्तम्[4]। एतच्च कलादेरपि ज्ञेयम् । मायागर्भाधिकारिणां कलादियोगेऽपि पशुसंघवत् कलादिवश्यत्वाभावादिति नात्र वीतरागाभावप्रसङ्ग इत्यदोषः ॥

अत्र प्रसङ्गाच्छुद्धोऽत्र रागः प्रोच्यते — 'रागोऽन्योऽपि' इत्यादि ।

**रागोऽन्योऽपि [5]परः सूक्ष्मो विशिष्टो[6]ऽस्मात्तदात्मकात् ॥३०॥**
**येन [7]निःश्रेयसे पुंसां प्रवृत्तिरुपजायते ।**
**दृश्यते च विरक्तानां नराणां बन्धगोचरात् ॥३१॥**
**आचार्यान्वेषणे [8]रागः शिवमुद्दिश्य सादरम् ।**
**प्रवर्तते प्रहृष्टात्मा शिवरागानुरञ्जितः ॥३२॥**
**[9]तस्माद्धेतुपरो रागो मायाजालापनुत्तये ।**

एष च शुद्धविद्यानिमित्तो **रागः** इत्युक्तमशुद्धविद्याप्रकरण एव प्रसङ्गतो [10]"ध्वस्तमायाशयस्य" इत्यादिना, "संसारात्स विरज्येत" इत्यन्तेन । भक्त्यात्मना चायं पुंसामीश्वरविषये ज्ञानविशेषेण गम्यत इति [11]प्रारम्भ एव प्रतिपादितम्[12] —

"अन्योऽपि योग्यतावेश[13]लक्षणोपहृतस्मृतिः ।
भक्तित्वेन समाख्यातो [14]विज्ञानावयवः पृथक् ॥" इति ।

ततश्च हेतुः परः प्रधानं यस्य, स परमेश्वरनिविष्टो **रागो मायाजालापनुत्तये** । यस्तु न **हेतुपरः** स मायाजालप्रवृत्तय एवेत्युक्तम् ॥

---

[1] रागी — मु.
[2] रागे निमित्तं तथोक्तम् — ऊ, ऋ.
[3] मतङ्ग० विद्या० ११. १४ उ –१६ पू० वृत्तौ ।
[4] मतङ्ग० विद्या० ११. २५ उ०–२८ पू०.
[5] वरस्सूक्ष्मो — मु.
[6] ०ऽस्मान्मलात्मकात् — ऊ, ऋ.
[7] नैःश्रेयसं पुंसां — ऊ, ऋ.
[8] रागी — मु, ओ.
[9] तस्माद्धेतुः परो — मु.
[10] मतङ्ग० विद्या० १०. २४, २५.
[11] मतङ्ग० विद्या० १. ११.
[12] अयं श्लोकः मृ० वृ० दीपिकायां २२ तमे पृष्ठे, क्रियाक्रमद्योतिकाव्याख्यायां प्रभायां ३६१ तमे पृष्ठे च प्रमाणत्वेनोद्धृतः ।
[13] ०लक्षणोऽपर उच्यते — मृ० वृ० दीपिकापाठः; लक्षणोपहृतस्मृतिम् — प्रभापाठः ।
[14] विज्ञानावयवोऽप्यथ — मृ० वृ० दीपिकापाठः; विज्ञानावयवं पृथक् — प्रभापाठः ।

[1]अथ समीपवर्ती राग इत्युक्तम्[2]। कस्य समीपवर्तीति वक्तव्यम्। उच्यते — 'रागविद्या' इत्यादि।

**[3]रागविद्याकलाख्येन कञ्चुकत्रितयेन वै ॥३३॥**
**[4]प्रच्छादितः समर्थात्मा क्षेत्री क्षेत्रफलं प्रति।**

सर्पस्य कञ्चुक इव एतत्तत्त्वत्रयमात्मनस्तत्त्वान्तरापेक्षयान्तरङ्गत्वेन समीपवर्त्युच्यते। तथा हि— मलप्रच्छादितोऽनेन युक्तः शरीरात्मकक्षेत्रं प्रति, भोगरूपफलं प्रति चात्मा समर्थो भवति ॥

किं च —

**इदं तावदणोर्ज्ञेयं भोक्तृत्वं नियतं सदा ॥३४॥**

**इदं** च तत्त्वत्रयं **तावदिति** आदौ आत्मनो भोक्तृत्वहेतुत्वाद् **भोक्तृत्वं** ज्ञेयम्। ननु कर्मैव भोक्तृत्वमित्युक्तम्। सत्यम्। न साक्षात्। किं तु एतद्व्यवधानेन ॥३४॥

यतः — 'प्रध्वस्त' इत्यादि।

**प्रध्वस्तावयवः सूक्ष्मो ह्यशक्तश्चातिनिर्गुणः।**
**[5]अनादिमलसंरुद्धः [6]कञ्चुकेन बलीयसा ॥३५॥**
**शक्नोति प्राकृतान्भोगान्भोक्तुं मुनिवरेश्वर।**
**तत्त्वधर्मः समाख्यातो रागस्य परिविस्तरात् ॥३६॥**

कर्मयोगेऽपि[7] प्रध्वस्तकलाद्यवयवः प्रलयकेवलो यतोऽनादिमल[8]रुद्धत्वात् **सूक्ष्मः** अत्यन्तानुपलक्ष्यो ज्ञानक्रियाशक्तिविकलो भोक्तृत्वगुणशून्य एव भवति। पुनश्चानेन **कञ्चुकेन** युक्तो **भोगान् भोक्तुं शक्नोति**। ततः कर्महेतुत्वेऽप्येतत्कर्मत्रयमेव भोक्तृत्वमुच्यते। न कर्मेति। एवं तत्त्वधर्मो रागस्योक्तः ॥३५–३६॥

अधुना भुवनधर्मः प्रोच्यते — 'भुवनार्थ' इत्यादि।

**[9]भुवनार्थोऽपि संक्षेपात्कथयिष्यामि तेऽधुना।**
**रुद्राणां [10]भूमयश्चित्रा भुवनैः परि[11]मण्डिताः ॥३७॥**
**भुवनं तत्र रुद्रस्य गहनेशानु[12]संमतम्।**
**अङ्गुष्ठमात्ररुद्रस्य ततो जातस्य धीमतः ॥३८॥**

---

[1] आह — ऊ, ऋ.
[2] मतङ्ग० विद्या० ११. ४ उ०.
[3] रागी विद्या० — ऊ, ऋ.
[4] प्रच्छादितसमर्थात्मा — ओ.
[5] अनादिकालसंरूढः — मु, ओ; अनादिकालसंरुद्धः — ऊ, ऋ.
[6] काञ्चुकेन — ओ.
[7] अपिशब्दो नास्ति — ऊ.
[8] रुद्धात् — ऊ, ऋ.
[9] भुवनात्मकोऽन्यः सं — मु; भुवनात्मकोऽन्यसं — ओ,
[10] भूमयश्चित्रो — ओ.
[11] ०मण्डितः — ओ.
[12] ०संमतः — ओ.

**ईशानस्य ततोऽधस्ताद्भुवनं [1]भोगभूतिदम् ।**
**[2]एकपिङ्गेक्षणस्यान्यद्भवस्यापि ततोऽपरम् ॥३९॥**
**उद्भवस्य च रुद्रस्य ततो वामस्य धीमतः ।**
**रुद्रोऽन्योऽपि महातेजा भुवनेशोऽतिवीर्यवान् ॥४०॥**
**एते रुद्राः समाख्याता रुद्रैरात्मसमैर्वृताः ।**
**अनौपम्यगुणोपेताः शिवमण्डलतत्पराः ॥४१॥**
**[3]यजन्ति विविधैर्यज्ञै[4]र्मन्त्रतन्त्रविशारदाः ।**
**कारणानुमताः सर्वे सर्वे चामोघशक्तयः ॥४२॥**

एतच्च अङ्गुष्ठमात्रादेर्यस्य **रुद्रस्य** यद् **भुवनम्** अत्र तद् गहनेशानस्य मायाधिकारिणोऽनन्तेशस्य संमतम् । तेन निर्मितमित्यर्थः । एते चाष्टावत्रोक्ता भुवनेश्वराः कारणेशस्यानन्तेशस्यानुमताः तेन नियुक्ताः । न तु परमेश्वरेणेत्यर्थः ॥३७–४२॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय विषमवृत्तेन श्लोकः — 'राग' इत्यादि ।

**रागो [5]यथायं सकषाययुक्त्या**
**प्रवर्ततेऽणोः सुखदुःख[6]भावात् ।**
**तथाखिलोक्तोऽवसरागतोऽयं**
**कालोऽधुना वच्मि [7]किमद्भुतं स्यात् ॥४३॥**

**यथा रागोऽयमणोः प्रवर्तते तथोक्तः** । स च **सकषाययुक्त्या** भोगवासनायोगेन प्रवर्तते । यतः सरागस्यैव सुखदुःखयोर्भावः सुखदुःखत्वमुपपद्यते न वीतरागस्येति व्याख्यातस्योपसंहारः । अथ व्याख्येयस्योपक्रमः — **अवसरागतः** यः **कालः** तम् **अधुना वच्मि** इति । ननु अत्यद्भुतमेतद् यदधुना रागतत्त्वादनन्तरं कालः प्रोच्यते । श्रीमत्**स्वायम्भुवे** हि[8] — "तस्मात्कालकले रागविद्याव्यक्तम्" इत्यादिना कलातत्त्वात्पूर्वं काल उक्तः । सत्यम् । **अद्भुतं स्याद्** यथा तु न भवति तथा [9]वक्ष्यामः ॥४३॥

[इति श्री] भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
[विद्यापादे] त्रिपर्वपदार्थे रागतत्त्वप्रकरणम् [एकादशं समाप्तम्] ॥
**एकादशः पटलः**

---

[1] भूरिभोगदम् — मु; परिभोगदम् — ओ.
[2] एकं पिङ्गेक्षण० — मु.
[3] यजन्ते — ऊ, ऋ.
[4] ०र्मन्त्रं तन्त्रविशारदाः — मु.
[5] यथावत् — मु, ओ.
[6] ०भोगात् — मु; ०भागात् — ओ.
[7] तमद्भुतं — ऊ, ऋ.
[8] स्वायम्भुवे — ३३. ९ पू०.
[9] मतङ्ग० विद्या० १२. १.

## द्वादशः पटलः

# कालतत्त्वप्रकरणम्

अथ कालः क्रमात्प्राप्तः कञ्चुकत्रयदर्शनात् ।
येनासौ कल्प्यते सूक्ष्मः शिवसामर्थ्ययोगतः ॥१॥

**अथे**त्यानन्तर्ये । रागतत्त्वादनन्तरं **कालः** उच्यत इति पूर्वप्रकरणात्कारकप्रत्ययव्यत्ययेन संबन्धः। अत्र च पदार्थादिसंबन्धाः [1]प्राग्वदेव द्रष्टव्याः। वाक्यात्मकस्तु संबन्धः [2]"स्वाम्नायोचितकालस्य" इत्यादिभिर्वाक्यैरनेकविधः । स च [3]वक्ष्यमाणनयेन मायोत्पन्नोऽप्यत्रैव वक्तव्यतया क्रमप्राप्तः। **येन** कारणेन **असौ** पुरुषः **सूक्ष्मः** [4]पुंपाशेश्वरप्रकरणोक्तनयेन कालानवच्छिन्नमूर्तिरपि [5]प्रागुक्तकञ्चुकत्रयजनितदर्शनाद्भोगसंवेदनलक्षणाद्धेतोः कालेन कल्यते भोगादिगत[6]चिरक्षिप्रा[दिप्रत्य]योपाधिद्वारेण आक्षिप्यते । यदाहुः[7] — "कालो धिया विभज्यते" इति। कारणेन समस्तमायाकार्यव्यापकोऽपि कालो[8]ऽत्रैवोपाधियोगवशाद् दीक्षायां [9]शोध्यत्वेनोक्तः पुरुष इवाव्यक्तादूर्ध्वमिति [10]दर्शयिष्यामः । ततश्च श्रीस्वायम्भुवादिभिः सहात्राविरोध एव। ननु तत्रास्योत्पत्तिस्थान एव शुद्धिरुक्ता। किमतः। तत्रैव तथास्तु सा। न त्विह, अन्यथाश्रुतेः। न च क्रियाभेदस्तन्त्रविरोधहेतुः। अपि तु तस्याः क्रियायास्तद्भेदस्यैव। यदुक्तम् —

[11]"क्रियादिभेदभेदेन तन्त्रभेदो यतः स्मृतः ।
तस्मात्तत्र यथैवोक्तं कर्तव्यं [12]नान्यतन्त्रतः ॥" इति ।

---

[1] तृतीयनवमप्रकरणयोः प्रारम्भे प्रोक्तवत् ।

[2] मतङ्ग० विद्या० ११. २८ उ०.

[3] मतङ्ग० विद्या० १२. २० उ०, २१ पू० वृत्तौ ।

[4] मतङ्ग० विद्या० ६. ४ उ०, ५ पू० वृत्तौ ।

[5] मतङ्ग० विद्या० ११. ३३ उ०, ३४ पू० वृत्तौ ।

[6] तत्त्वप्रकाशिकावृत्तौ पृ० ३७; मृ० वृ० दीपिकायाम् पृ० २६६.

[7] कालात् क्रिया विभज्यन्ते — ऊ, ऋ, मुद्रितवाक्यपदीये ३. ७. १७३; अत्र मृ० वृ० दीपिकापाठः स्वीकृतः । (पृ० २६६)

[8] ०ऽत्रैवोपयोगवशाद् — ऊ, ऋ; मृ० वृ० दीपिका (पृ० ३६४) पाठमनुसृत्यात्र 'उपाधियोगवशाद् दीक्षायां शोध्यत्वेनोक्तः' इति शोधितः ।

[9] साध्यत्वेनोक्तः — ऊ, ऋ.

[10] मतङ्ग० विद्या० १२. २५ – ३० पू० वृत्तौ ।

[11] एतच्छ्लोकसदृशः श्लोकः कामिके उत्तरभागे स्नपनविधिपटले (२२७, २२८ पू०) 'क्रियामन्त्रादिभेदेन शास्त्रभेदो न वा भवेत् । क्रियामन्त्रादिभेदेन तन्त्रभेदो यतस्ततः । तस्मात्तत्र च शैवोक्तं कर्तव्यं नान्यशास्त्रतः ।' इति दृश्यते ।

[12] नान्यतत्त्वतः — ऊ, ऋ; 'नान्यतन्त्रतः' इति पाठः मृ वृ० दीपिकामनुसृत्य स्वीकृतः । (पृ० २६४). मतङ्गक्रियापादवृत्तावधिवासनपटले च उद्धृतोऽयं श्लोकः । तत्रापि 'नान्यतन्त्रतः' इत्येव पाठो दृश्यते । (टि० ६७८. पृ० ८८.)

तेन चासौ **शिवसामर्थ्ययोगतः** एव [1]कल्प्यतेऽयम्। यतोऽचेतनस्य चेतनानधिष्ठितस्य व्यापारायोगः प्रोक्त एव [2]ईश्वरसिद्धौ ॥१॥

अत एव [3]यदाहुः — ईश्वरशक्तिरेव कालोऽस्तु। किमन्येन। यद्दर्शितं भगवन्नारायणोक्तितो व्यासमुनिना [4]"कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इति। तत्रोच्यते — 'कलयित्री' इत्यादि।

> [5]**कलयित्री महाशक्तिः कालमाश्रित्य [6]पुद्गलान्।**
> **प्रेरयत्यखिले विश्वे कारणाज्ञानुवर्तिनी ॥२॥**

यद्येवमीश्वरशक्तिरेव सर्वं विधास्यति। किं पृथिव्यादिभिरपि [7]तत्त्वैः। दृश्यन्ते च तानि। ततोऽनुग्रहव्यतिरेकेणान्यत्सर्वमेव स्थित्यादिकं कर्म भगवान्, पशुषु तत्त्वान्तरव्यवधानेन करोतीति प्रतीति[8]सिद्धेरेतदपि तदेकदेशत्वात् प्रेरणात्मकं कर्म **कालमाश्रित्य** करोति न [9]केवलयैव शक्त्येतीश्वरशक्तिव्यतिरिक्तः कालः पुंसां प्रेरकः सिद्धः ॥२॥

अत्र कालस्य तावद् वाद्यन्तरमतभेदेन स्वरूपनिश्चयात् सर्वमेतदसिद्धमिति मतङ्गमुनिः — 'काल' इत्यादि।

**मतङ्ग उवाच —**

> **कालः सर्वगतः सूक्ष्मो ह्यनन्तोऽमूर्तिमान् विभुः।**
> **अकर्ता निरवस्थानो निष्कामश्चाप्यचेतनः ॥३॥**
> **स कथं प्रेरकत्वेन गम्यते परमेश्वर।**

योऽयं **कालः** त्वया प्रतिपादितः, **स** यदि नैयायिकादिभिरिव **सर्वगतः** नित्योऽप्रत्यक्षश्चेष्यते। यदाहुः[10] —

> 'नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम्।
> व्यापारव्यतिरेकेण कालमेके प्रचक्षते ॥" इति।

यदा [11]यदुक्तं — "मायातत्त्वादुत्पद्य अनन्तरं प्रेरयति" इति तदा तन्नोपपद्यते एव। नित्यत्वाद्व्यापकत्वाच्च शिवतत्त्वं यावदवस्थितेः।

अथ ज्योतिश्शास्त्रप्रसिद्ध्या[12] क्रियाविशेषात्मक एवाभ्युपगम्यते। यदाहुः[13] —

> "आदित्यग्रह[14]तारादिपरिस्पन्दमथापरे।
> भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥" इति।

---

[1] कालयते यः — ऊ, ऋ; मृ० वृ० दीपिकामनुसृत्य पाठः कल्पितः(पृ० २६४)।
[2] मतङ्ग० विद्या० ६. ६९उ०, ७० पू० वृत्तौ।
[3] य आहुः — ऊ, ऋ.
[4] भगवद्गीता ११. ३२ पू०.
[5] कालयित्री — ऊ, ऋ.
[6] पुद्गलम् — ऊ, ऋ.
[7] तत्त्वं — ऊ.
[8] ०सिद्धेन तदपि — ऊ, ऋ.
[9] केवलस्यैव — ऊ, ऋ,
[10] वाक्यपदीये ३. ९. १.
[11] मतङ्ग० विद्या० १२. १. २ वृत्तौ।
[12] ०प्रसिद्धा — ऊ.
[13] वाक्यपदीये — ३. ९. ७६.
[14] 'तारादि' इत्यत्र 'नक्षत्र' इति मुद्रिते वाक्यपदीये दृश्यते।

यद्येवन् **अमूर्तिमान्** असर्वगतः कर्मविशेषत्वात् पाकादिवत्। [1]असर्वगतद्रव्यपरिमाणा हि मूर्तिरुच्यते परैः। ततश्च तस्याव्यापकत्वात् पुनरपि [माया]तत्त्वादधोभावेन [सर्व]प्रेरकत्वं नोपपद्यते।

अथ वेदान्तसौगतदृशा व्यवहारनिबन्धन एव कालः। न पारमार्थिक इत्युच्यते। यदाहुः[2] —

"[3]केचिद्बुद्ध्यनुसन्धानपूर्वकत्वं प्रचक्षते।
ज्ञानानुगत[4]शक्तिर्वा [5]बाह्येनासत्यतः स्थितः।
कालात्मानमनाश्रित्य [6]व्यवहारो न शक्यते"[7]। इति।

तथापि **विभुः** एव, शिवतत्त्वं यावद्व्यवहारस्योक्तत्वादिति पूर्वतरपक्षोक्त एव दोषः। **अकर्ता** च अहेतुरेव द्विचन्द्रादिवदविद्यारूपत्वेनासत्यत्वादिति प्रेरकत्वानुपपत्तिरेव।

अथ सांख्यदृशा प्रकृतेः स्वभाव एव [8]परिणत्यात्मकोऽसावित्युच्यते। यदाहुः[9] —

[10]"परिणामः पृथग्भावो व्यवस्थाक्रमतः सदा।
भूतैष्य[11]द्वर्तमानात्मा कालरूपो विभाव्यते॥[12]" इति।

तदाप्यनवस्थितः कालः। परिणतेः [13]क्रियात्वेनावस्थानासंभवादिति, मायातत्त्वादधोभावेन प्रेरकत्वानुपपत्तिरेव। **निष्कामश्च** अनध्यवसायात्मबुद्धिधर्मत्वेनैव कामादेरभ्युपगमात्। **अचेतनश्च** कर्मत्वात् पाकादिवदिति न बुद्धिपुरुषेश्वराणामिव तस्य पुद्गलप्रेरकत्वमुपपद्यते। किं च युक्तितोऽपि मायातत्त्वादूर्ध्वं भोगाह्वयतत्त्वं यावत् कालो गम्यते। तत्रापि सृष्टिसंहारयोगात् तदधोव्यवस्थिततत्त्ववत्। रागाद्यभावे च महाप्रलयेऽपि भावात्। अन्यथा तत्रावधिनियमानुपपत्तिरधमप्रलये यथेति। सर्वथा मायातत्त्वादधोऽवस्थानेन कालस्य प्रेरकत्वानुपपत्तिरिति पूर्वः पक्षः।

कालस्य तु कर्तृत्वनिराकरणायात्र सर्वगतत्वादीनां हेतुत्वव्याख्यानमयुक्तमेव। [14]प्रागुक्तकार्यतः कालसिद्धयैव तस्यापि सिद्धेः। [15]अनुमाननिराकृतत्वादस्य पक्षस्य कालसिद्धौ चाश्रयासिद्धत्वादहेतुत्वमेषाम्। न च कालस्याद्य यावदत्र क्वचित् सर्वगतत्वादीनां धर्माणां सिद्धिरस्तीत्यसिद्धतापि। अनैकान्तिकत्वं चेश्वरादिभिः। पदानां पौनरुक्त्यदोषश्चानिवार्य एवेति पूर्वमेव व्याख्यानं ज्यायः॥

अत्र कालस्वरूपनिर्णयाय सिद्धान्तः— 'यद्यद्विनश्वरम्' इत्यादि।

**परमेश्वर उवाच —**

---

[1] असर्वगतस्य द्रव्यपरिमाणं हि — ऊ, ऋ.
[2] वाक्यपदीये ३. ९. ५७ उ०, ५८.
[3] केचिद्बुद्ध्यनुसंहारलक्षणं तं — ऊ, ऋ, मुद्रितवाक्यपदीयपाठः।
[4] शक्ति वा — ऊ, ऋ, मुद्रितवाक्यपदीयपाठः।
[5] बाह्ये चासत्यतः स्थितम् — ऊ, ऋ; बाह्यं वा सत्यतः स्थितम् — मुद्रितवाक्यपदीयपाठः
[6] व्यवहर्तुं न शक्यते — मुद्रितवाक्यपदीयपाठः।
[7] अर्धत्रयेऽपि मृ० वृ० दीपिकामनुसृत्य पाठस्संपादितः (पृ० २६६)।
[8] (पृ० २६६) मृ० वृ० दीपिकामनुसृत्य पाठः शोधितः। परित्यागात्मकः — ऊ, ऋ.
[9] आकरो न लभ्यते।
[10] परिणामं व्रजन् भावो ह्यवस्था० — ऊ, ऋ.
[11] ०द्वर्तमानाद्वा — ऊ, ऋ.
[12] अस्मिन् श्लोके मृ० वृ० दीपिकामनुसृत्य पाठः संपादितः। (मृ० वृ० दीपिका पृ० २६६).
[13] क्रियात्वेनानवस्थानासं० — ऊ, ऋ.
[14] मतङ्ग० विद्या० १२. १, २ वृत्तौ।
[15] मतङ्ग० विद्या० १२. १७ उ०, १८ वृत्तौ।

**यद्यद्विनश्वरं स्थूलं कृतकं दृश्यमुल्बणम् ॥४॥**
**तस्य तस्य तदावस्था धर्मान्तरविसर्पिणी।**

तत्र सांख्याभ्युपगतस्तावत्कालो न युक्तः। तथा हि — **यद्यद्विनश्वरम्** अनित्यं **स्थूलं** व्यक्तं **कृतकम्** अव्यक्तप्रधानकार्यं **दृश्यं** पृथिव्यादि, **उल्बणम्** च अस्मदाद्यदृश्यशक्तियुक्तं बुद्धयादितन्मात्रान्तं, **तस्य तस्य** परिणतिरस्त्येव। न तु सैव कालः ॥

यतः — 'भोक्तुः' इत्यादि।

**भोक्तुराधारकत्वेन [1]निबद्धा [2]नियता तनुः ॥५॥**
**तस्याः कालकृतावस्था कुमारादिजरान्तिका।**
**तयोपलक्ष्यते कालः"**

**भोक्तुः** आधार एव आधारकः, तत्त्वेन भोगाधिकरणत्वेन या **तनुः** नियमेन स्थिता, **तस्याः** या वृद्धतरुणाद्यवस्था, **तया उपलक्ष्यते** अनुमीयते **कालः**। यदाहुः[3] —

"आषोडशाद्भवेद्बालः तरुणस्तु ततः परः।
आसप्ततेः परो वृद्धः" इति।

तथाहि — [यदि] परिणतिमात्रनिमित्तं वृद्धत्वं, तरुणत्वं वा [स्यात्]; तदा तस्याः सर्वत्र सर्वदा चैकरूपत्वात् सर्वस्य सर्वदा तद्भवेत्। परिणतिविशेषनिमित्तत्वे तु स विशेषः कुतोऽस्याः इति वक्तव्यम्। नाहेतुकः; "[4]नित्यं सत्त्वमसत्त्वं वाहेतोः" इत्युक्तम्। नापि स्वसन्तानमात्रात्, तस्य [5]सर्वदैव भावात्। नाप्यन्नपानादेः, शीतोष्णादेर्वा; तस्यापि सर्वदैव भावेनाविशेषात्। नापि कर्मतः, अवस्थाक्रमनियमेन सर्वदा भावाद् अनन्तरपरिणत्यादिवत्। [6]कर्मनिमित्तं हि अनवस्थितोत्पत्तिक्रमं जात्यायुर्भोगवत्। पारिशेष्याद् यस्तस्य हेतुः, स काल इति। तदिदमुक्तम्[7] —

"जराख्या कालशक्तिर्या शक्त्यन्तरविरोधिनी।
सा शक्तीः प्रतिबध्नाति जायन्ते च विरोधिनः ॥" इति।

एवं चिरक्षिप्रप्रत्यय[8]लिङ्गत्वमपि कालस्यानुमन्तव्यम्। यदाहुः[9] —

"शनैरिदमिदं क्षिप्रमिति तेन प्रतीयते" इति।

अनयैव दृशा वैशेषिकादिभिरपि परापरव्यतिकरप्रत्ययलिङ्गत्वं कालस्य गीयते। परापरदिग्व्यवस्थितयोर्हि युववृद्धयोर्देशकृतपरत्वापरत्वव्यतिकरेण परस्मिन्नपि यून्यपरप्रत्ययः, अपरस्मिंश्च वृद्धे परप्रत्ययः कालविशेषप्रतीतिविवक्षया। न च तस्मादेव निमित्ताद्व्यतिकरो युक्त

---

[1] निबोद्धा — ऊ, ऋ.
[2] प्राकृती — मु, ओ.
[3] शब्दकल्पद्रुमे बालशब्दविवरणे 'इति स्मृतिः इति भरतः' इति निर्दिश्योद्धृतः — 'आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते। वृद्धः स्यात्सप्ततेरूर्ध्वं वर्षीयान् नवतेः परम् ॥' इति।
[4] प्रमाणवार्तिके २. १८१ पू०.
[5] सर्वदैवाभावात् नाप्यनुमानादेः — ऊ, ऋ। मृ० वृ० दीपिकामनुसृत्य पाठः साधितः। (पृ० २६७)
[6] क्रमनिमित्तं — ऊ, ऋ.
[7] वाक्यपदीये ३. ९. २४.
[8] ०लिङ्गत्वेऽपि — ऊ, ऋ.
[9] वाक्यपदीये ३. ९. ३५ उ०.

इति, यन्निमित्ते परत्वापरत्वे स काल इति । एवं च न प्रकृतिपरिणत्यात्मासौ । नापि आदित्यादिपरिस्पन्दात्मकः, तद्वदेव [1]न कल्पत इति सांख्यज्योतिर्विदवेदान्ताभ्युपगतकालप्रतिक्षेपः ॥

[2]अस्तु तर्हि नैयायिकाभ्युपगत एवात्र क्रियाव्यतिरिक्तः कालः । सत्यम् । न तु नित्यो, व्यापको वेति घटयितुं तस्य तावत् [3]सभागत्वमुच्यते — 'त्रिविध' इत्यादि ।

**"त्रिविधः सोऽप्यथोच्यते ॥६॥**

**एष्यन्नतीतो लोकेऽस्मिन् वर्तमानश्च सुव्रत ।**

एकरूपत्वेऽपि हि कालस्य सर्वपदार्थानामेककालता स्यात् । दृश्यन्ते च केचिद्वर्तमानाः, केचिदतीता [4]भावाः, भाविनश्च केचित् । ततः कालस्यानेकत्वं प्रतीयते । तदिदमाहुः[5] —

"तमः[6]प्रकाशवत्तस्य त्रयोऽध्वानो व्यवस्थिताः ।

[7]क्रमास्तेषु च भावानां [8]क्रमात् तदुपजायते ।" इति ।

ननु तदुपाधेः क्रियाया अतीतादिरूपत्वात्तस्यातीतादिभेदो न पारमार्थिक इति नैयायिकादयः । [9]तदयुक्तम् । तस्या[ः] स्वतोऽतीतादिभेदाभावादतीतादिकालयोगादेव ह्यतीतादित्वं तस्याः । अन्यथा सैव कालः स्यादिति, कुतः क्रियाव्यतिरिक्तकालसिद्धिः । तस्मात्तदुपाधेः स्वतोऽतीतादिभेदासंभवादुपाधिमतः कालस्यैवातीतादिभेदेनानेकरूपत्वं दिगात्मनो भुवनस्येवाभ्युपगन्तव्यम् । यथा दिग्भेदेन भुवन[10]भेदः । तदिदमुक्तम्[11] —

"विशिष्टकाल[12]संबन्धाल्लवकाष्ठासु शक्तिषु ।

क्रियाभिव्यज्यते [13]भिन्ना वर्तमानादिभेदतः ॥" इति ।

अत एव इतिहासाद्युक्तं भविष्यतः कालस्य वर्तमानत्वं तद्द्वारेण समुपपद्यते । यदुक्तम्[14] —

"इदं युगसहस्रान्ते भविष्यदभवद्दिनम् ।

तदेवाद्यत्वमायातम्" इति ।

[15]लौकिका अपि "रम्यः कालोऽयमागतो न मुग्धे प्रत्येतुं प्रभवति । गतः कालहरिणः ।" इत्याहुः । न त्वन्यथेत्युक्तम्[16] ।

---

[1] 'न कल्पत' इत्यस्य स्थाने 'अत एव कल्पित' इति दृश्यते — उ, ऋ । अत्र पाठः (पृ० २६७) मृ० वृ० दीपिकामनुसृत्य कृतः ।

[2] अस्ति — ऊ, ऋ.

[3] सुभागत्व० — ऋ.

[4] भावः — ऊ.

[5] वाक्यपदीये ३. ९. ५२.

[6] प्रकाशवत्त्वेते त्रयो०—मुद्रितवाक्यपदीयपाठः ।

[7] अक्रमास्तेषु भावानां—ऊ, मुद्रितवाक्यपदीयपाठः; अक्रमस्तेषु भावानां — ऋ.

[8] क्रमस्समुपजायते — ऊ, ऋ; क्रमस्समुपलभ्यते — मुद्रितवाक्यपदीयपाठः । अस्मिन् श्लोके पृ० २६७ मृ० वृ० दीपिकापाठः स्वीकृतः ।

[9] तदुक्तम् — ऊ, ऋ.

[10] ०भेदे — ऊ, ऋ.

[11] वाक्यपदीये ३. ९. १६; अत्र (पृ० २६७, २६८) मृ० वृ० दीपिकापाठः स्वीकृतः ।

[12] संबन्धाल्लब्धकालासु — ऊ, ऋ; संबन्धाल्लब्धपाकासु — मुद्रितवाक्यपदीयपाठः ।

[13] नित्या प्रयोगाख्येन कर्मणा — मुद्रितवाक्यपदीयपाठः ।

[14] 'शार्ङ्गधरपद्धतौ (४१३२)' इति सुभाषितरत्नभाण्डागारे ३७२ तमे पृष्ठे उद्धृतम् ।

[15] आकरो न लभ्यते ।

[16] वाक्यपदीये ३. ९. १४; अत्र (पृ० २६५) मृ० वृत्तिपाठः स्वीकृतः ।

"जलयन्त्र[1]भ्रमावेगसदृशीभिः प्रवृत्तिभिः ।
स [2]कालः कलयंस्तावत् कालाख्यां लभते [3]ततः ।।" इति ।

एवमेक एव त्रिप्रकारः सिद्धः; पूर्वापरादिदिग्व्यवस्थितानेकावयवप्रकारात्मकभुवनवत् । अत एव न दिशस्तत्त्वता; भुवनसंनिवेश[4]व्यतिकरेण सिद्धेः । कालस्य तु क्रियाव्यतिरेकेण समस्तकलनीयव्यापकतया सिद्धेस्तत्त्वत्वमित्यदोषः ।।

अथापर्यवसित एव सिद्धान्ते प्रसङ्गान्मतङ्गमुनिः — 'एष्यन्नतीत' इत्यादि ।

**मतङ्ग उवाच —**

**एष्यन्नतीतो देवेश [5]कालेऽस्मिन्सुप्रतीयते ।।७।।**
**वर्तमान[6]स्तृतीयो यः स कथं गम्यते विभो ।**

शीघ्रं पचति चिरं पचतीति हि प्रतीतेः क्रियाभिव्यङ्ग्य एव कालः । सा च क्षणप्रचयात्मिका । क्षणाश्च केचिदतीताः, केचिदनागता एवेति । यदि परमेक एव क्रियाक्षणो वर्तमानो विशिष्यते । पौर्वापर्यरहितश्च क्षणोऽत्यन्तसूक्ष्मत्वान्नार्वाग्दर्शनैरधिगन्तुं शक्यत इति, पचति तिष्ठतीत्यादिवर्तमानप्रत्ययो निरालम्बन एव प्राप्नोति । भूतभविष्यत्कालभागद्वयव्यतिरेकेण तृतीयस्य वर्तमानस्य प्रतीत्यसंभवादिति पूर्वः पक्षः ।।

सिद्धान्तस्तु — 'योऽयमर्थ' इत्यादि ।

**परमेश्वर उवाच —**

**योऽयमर्थक्रिया[7]योग्यो घटः सर्वत्र घुष्यते ।।८।।**
**[8]वर्तमान उपादेयः स्थितये मुनिसत्तम ।**
**न [9]तस्य युज्यते[10]ऽतीतः समयोऽर्थप्रसिद्धये ।।९।।**
**मृत्पिण्डकत्वाद्द्विप्रेन्द्र एष्यंश्च शकलात्मकः ।**
**[11]तदपेक्ष्य सदा ग्राह्यो वर्तमानो महात्मभिः ।।१०।।**

अयमर्थः — न क्रियाभिव्यङ्ग्यः कालः । अपि तु [12]प्रागुक्तवृद्धयुवाद्यर्थमिव तां विषयीकरोति । ततश्च तिष्ठतीत्यादौ स्थित्यर्थं स्थितिक्रियाविषयत्वेन योऽवस्थितो **वर्तमानः** कालः, तत्संबन्धादेव [13]घटादिरर्थक्रियार्थिभिः **उपादेयः** । यतः **तस्य** घटादेर्यः **अतीतः** कालसंबन्धी **न** असौ तदर्थक्रियानिमित्तम् । तदानीं तस्य मृत्पिण्डाद्यात्मकत्वात् । नापि **एष्यन्** कालः । तदा-

---

[1] ०भ्रमावेशसदृशीभिः — ऊ, ऋ; मुद्रित वाक्यपदीयपाठः ।
[2] कालं कलयन् भावात् — ऊ, ऋ; सकलाः कलयन् सर्वाः — मुद्रितवाक्यपदीयपाठः ।
[3] विभुः — मुद्रितवाक्यपदीयपाठः ।
[4] व्यतिकरेणासिद्धेः — ऊ, ऋ; अत्र (पृ० २६८) मृ० वृ० दीपिकानुसारेण पाठः शोधितः ।
[5] लोकेऽस्मिन् — ऊ, ऋ; कालोऽस्मिन् — ओ.
[6] ०स्तृतीयोक्तः — मु, ओ.
[7] ०भोग्यो — मु.
[8] वर्तमानादुपादेयः — ऊ, ऋ.
[9] तत्र — मु, ओ.
[10] ०ऽतीतसमयो — मु, ओ.
[11] तदवेक्ष्य मु, ओ.
[12] मतङ्ग० विद्या० १२.५ उ०, ६ वृत्तौ ।
[13] घटादिरप्यत्र क्रियार्थिभिः — ऋ.

नीमपि शकलाद्यात्मकत्वादिति, वर्तमानकालाभावे घटानादेयत्वप्रसङ्गः । उपादीयते च घटादि-रर्थक्रियार्थिभिरिति, तदुपादेयत्वमपेक्ष्य **वर्तमानः** कालः **सदा ग्राह्यः** अनुमाननिपुणैरिति [न] वर्त-मानाभावः । तदिदमाहुः[1] —

"द्वाभ्यां [2]किल सभागाभ्यां भावनावरणात्मकः ।
[3]तृतीयो वर्तमानोऽस्य भोगभावप्रकाशकः ॥" इति ॥८–१०॥

न चास्मदाद्यगोचरक्षणरूपक्रियाव्यङ्ग्यत्वाभ्युपगमेऽपि वर्तमानकालस्य प्रतिशक्तिरित्युच्यते— 'नावस्था' इत्यादि ।

**नावस्थान्तरभेदेन वर्तमानः [4]प्रहीयते ।**

न हि क्षणिकत्वात् क्रियायाः पूर्वक्षणात्मकावस्थातो द्वितीयक्षणाद्यवस्थान्तरयोगेऽपि तद्व्यङ्ग्यस्य वर्तमानस्य काचिद्धानिः । सर्वेषां क्षणानां [5]पूर्वोऽहृतः, तद्व्यङ्ग्यत्वाद् ज्वालादिक्षणानामिव । न हि ज्वालादीनामस्मदाद्यगोचरक्षणरूपत्वेऽपि तद्व्यङ्ग्यघटादेः काचिद्धानिरिति ॥

अन्योऽप्यत्र दृष्टान्तः — 'यथा' इत्यादि ।

**[6]यथातीतस्तु शिशिरो [7]निदाघश्चाप्यथैष्यति ॥११॥**
**वर्तमानो [8]मधुस्तद्वद्येन त्वमपि भावितः ।**
**वेणुं वादितुमारब्धः स कालस्ते सुनिश्चितः ॥१२॥**

आदित्यग्रहतारादिपरिस्पन्दविशेषात्मनः शिशिरस्य अहोरात्राद्यवस्थाभेदेऽपि **यथा** न तद्गता-तीतत्वं, ग्रीष्मगतं चानागतत्वं भिद्यते । तद्वत्क्रियायाः क्षणात्मकत्वावस्थान्तरभेदेऽपि, न तद्विष-यस्य वर्तमानस्य वसन्तादेर्भेदो लोके दृश्यत इति । किमत्र वा दृष्टान्ते । तथापि **सुनिश्चितः** एवायं कालः । **येन** वर्तमानेन वसन्तात्मना **त्वमपि** उत्पादितस्तदानीं **वेणुं** [9]वादितवा-निति ॥११–१२॥

अथोपसंहारः — 'एवम्' इत्यादि ।

**एवं सर्वत्र मन्तव्यः स्थिर एकोऽधुनात्मकः ।**

तिष्ठति पचतीत्यादिक्रियाभेदेऽपि क्रियाणां क्षणिकत्वेन, स्थैर्याद् अधुनेति आत्मा यस्य वर्तमानः कालः सर्वक्रियाविषयतया पचतीत्यादिषु प्रत्ययेषु तत्परिच्छेद[क]त्वेन **एकः स्थिरश्च मन्तव्यः** । सर्वत्राभेदेनैव प्रतीतेरात्मवत् । तदिदमुक्तम्[10] —

---

[1] वाक्यपदीये ३. ९. ५० पू०.
[2] स किल शक्तिभ्यां भावानां वरणात्मकः — मुद्रितवाक्यपदीयपाठः ।
[3] शक्तिस्तु वर्तमानाख्या भोगभावप्रकाशिनी— मुद्रितवाक्यपदीयपाठः ।
[4] प्रगीयते — मु, ओ.
[5] पूर्वाहृतस्तदेव व्यञ्जकत्वाद् — ऊ, ऋ.
[6] यथातीता तु — ऋ.
[7] निदाघश्चाप्यथैष्यते — मु; निदाघश्चेष्य-दिष्यते — ऊ, ऋ.
[8] मधुश्चायं येन त्वमसि — मु, ओ.
[9] मतङ्ग० विद्या० १. ९, १०.
[10] वाक्यपदीये ३. ९. २७.

"क्रिययोरपवर्गिण्योर्नानार्थसमवेतयोः ।
संबन्धिना [1]विनैकेन परिच्छेदः कथं भवेत् ।" इति ।

तदेवं वर्तमानस्य निश्चयानुपपत्तिप्रश्नो निराकृतः ॥

तथाप्ययं तत्र प्रश्नार्थः — 'वर्तमान' इत्यादि ।

**[2]वर्तमानोऽतिसूक्ष्मत्वात्कालो नैवोपलक्ष्यते ॥१३॥**

अत्यन्तातीन्द्रियत्वाद् **वर्तमानः कालो** न निश्चेतुं शक्यते पिशाचादिवत् ॥१३॥

अत्रोत्तरम् — 'तथापि' इत्यादि ।

**[3]तथापि स्थितये सिद्धः [4]प्रपञ्चेऽस्मिन् द्विजोत्तम ।**

**तथापि** वर्तमानं विना पदार्थानां स्थित्यभावात्, तदर्थमनुमेय इत्यतो नित्यानुमेयत्वेन तस्य, इन्द्रियादेरिव नानिश्चय इत्युक्तम् ।

एवं प्रासङ्गिकं प्रश्नमपाकृत्य प्रकृते — 'तस्माद्' इत्यादि ।

**तस्मात्कालयिता कालो नाकाले म्रियते यतः ॥१४॥**
**[5]नाकालाज्जायते [6]कश्चिन्नाकालाद्वृद्धिमेति हि ।**

यस्मात् त्रिविधः कालः सिद्धः, **तस्मात्**, उत्पत्तिस्थितिविनाशैरतीतवर्तमानभविष्यत्संबन्धैः सर्ववस्तूनां **कालयिता** त्रिविध एव । अन्यथैकत्वात् कालस्यातीतादिभेदाभाव इत्युक्तम्[7] ॥

किं च — 'ऋतुमद्भिः' इत्यादि ।

**ऋतुमद्भिः सदा लिङ्गैः स्वैः स्वैः [8]कालोऽभिलक्ष्यते ॥१५॥**

**ऋतूनामपि कालत्रयसंबन्धितैव स्वलिङ्गैरनुमीयते ।** यदुक्तम्[9] —
"रुतैर्मृगशकुन्तानां स्थावराणां च वृत्तिभिः ।
[10]छायादिपरिणामैश्च ऋतु[11]धामानुमीयते ॥" इति ।

एतैः कालत्रैविध्यप्रतिपादनेन एतदपि प्रत्युक्तम् । यदुक्तं "[12]कालस्य सूक्ष्मत्वेनातीन्द्रियत्वात् कर्तृत्वमसिद्धम्" इति ॥१५॥

---

[1] विवेकेन — ऊ, ऋ.
[2] वर्तमानोऽपिसूक्ष्म० — ऊ, ऋ.
[3] तत्रापि सिद्धये सिद्धः — ऊ, ऋ.
[4] प्रपञ्चोऽस्मिन् — ऊ, ऋ.
[5] नाकालो जायते — ऊ, ऋ.
[6] कश्चिन्नाकालो वृद्धिमेव हि — ऊ, ऋ.
[7] मतङ्ग० विद्या० १२. ६ उ०, ७ पू० वृत्तौ ।
[8] कालोऽपि लक्ष्यते — ऊ, ऋ.
[9] वाक्यपदीये ३. ९. ४५.
[10] कायादि० — ऊ, ऋ.
[11] ०धामा निरूप्यते — मुद्रितवाक्यपदीयपाठः ।
[12] मतङ्ग० विद्या० १२. ७ उ०, ८, १३ उ० वृत्तौ ।

यतः — 'अमूर्तस्यापि' इत्यादि ।

**अमूर्तस्यापि कर्तृत्वं [१]लिङ्गी यस्मात्प्रवृत्तितः[२] ।**

**यस्मात्** चिरक्षिप्रादिप्रत्ययवृत्तिलक्षणात् कार्यलिङ्गाद् **लिङ्गी** कालः सिद्ध इत्युक्तम्[३] ।

[४]यदप्युक्तं बुद्धिपुरुषव्यतिरेकेण नान्यस्य प्रेरकत्वमिति । तत्रोच्यते — 'निष्कामस्यापि' इत्यादि ।

**निष्कामस्यापि यो यस्य स्वभावो [५]ह्यनिवृत्तिमान् ॥१६॥**
**स तेन लक्ष्यते कर्ता यथाग्निः पचनादिषु ।**

**यथा** अग्न्यादेस्तद्व्यतिरिक्तस्यापि दाहादिषु कार्येषु अनिवृत्तिमतः स्वभावादेव कर्तृत्वं, तथा कालस्यापि भवतीत्यदोषः ॥

[६]यत्तूक्तं "तत्त्वाध्वनि मायातत्त्वादधोऽवस्थानं कालस्य नोपपद्यत" इति । तत्रोच्यते — 'त्रुटयादिभिः' इत्यादि ।

**त्रुटयादिभिरनित्याभिः कलाभिः प्रवहन् सदा ॥१७॥**
**प्रकरोत्यध्वसंस्थानं नित्यत्वमपि [७]नास्फुटम् ।**
**[८]कलातो व्यतिरिक्तत्वात्सर्वग[९]श्चाप्ययुक्तिमान् ॥१८॥**

न केवलं [१०]प्राक् प्रतिपादिताभिरतीताद्याभिः [११]कलाभिः, यावत् तदवयवभूताभिरपि त्रुटिलवमुहूर्ताद्याभिः **अनित्याभिः कलाभिः** आ सर्गात्प्रतिवासरं **प्रवहन्** अध्वनि मायातत्त्वादधः संस्थानं भूचक्रवत्करोत्येव । तदिदमुक्तम्[१२] —

"तस्माद्बहु[गु]णैर्भिन्नो भेदैर्धर्मान्तराश्रितैः ।" इति ।

ननु नित्यत्वात् कालस्यैतन्नोपपद्यत इत्युक्तम् । तदयुक्तम् । यतः **नित्यत्वमपि न** कालस्य **अपि**शब्दान्न सर्वगतत्वमपि, अत एव सकलत्वाद्भूगोलकादिवत् । ननु नैयायिकादिभिः स्फुटमेव कालस्य नित्यत्वं सर्वगतत्वादात्मवदित्युक्तम् । तदपि **अस्फुटम्** एव; अस्य सर्वगतत्वासिद्धेः सकलत्वाद् भूगोलकादिवदित्युक्तम् । न त्वनेन हेतुनात्रास्य नित्यत्वं सर्वगतत्वं वा साधयितुं शक्यम् । विपक्ष एव वृत्तेर्विरुद्धत्वादिति, कालस्यैकत्वेऽप्यनित्यत्वमसर्वगतत्वं च सिद्धमिति, नाध्वन्यवस्थानुपपत्तिः ।

यस्त्वत्र केनापि, हेतुसाध्यप्रविभागमबुद्ध्वैव, श्रीमत्स्वायम्भुवादिशास्त्रश्रुतमपि च कालस्य मायाकार्यत्वं समर्थयितुमशक्तेन, नैयायिकादिदर्शनमोहतः प्रत्युत कालस्य नित्यत्वसाधनाय भावोत्पत्ति-

---

[१] लिङ्गं — मु.
[२] ०प्रवर्तितः — ओ.
[३] मतङ्ग० विद्या० १२. ५ उ०, ६ वृत्तौ ।
[४] मतङ्ग० विद्या० १२. ३, ४ पू वृत्तौ ।
[५] ह्यनुवर्तिनः — मु; ह्यनिवर्तिनः — ओ.
[६] मतङ्ग० विद्या० १२. ३, ४ पू० वृत्तौ ।
[७] न स्फुटम् — मु, ओ.
[८] कालतो व्यतिरिक्त० — ऊ, ऋ; कलातोऽप्यतिरिक्त० — ओ.
[९] ०श्चाप्यमूर्तिमान् — मु, ओ.
[१०] मतङ्ग० विद्या० १२. ६, ७ पू० वृत्तौ ।
[११] कालाभिः — ऋ.
[१२] आकरो न लभ्यते ।

रिति हेतुरुक्तः। सः "नित्यः शब्दः काकस्य कार्ष्ण्याद्" इ[ति]वद् [1]व्यधिकरणसिद्धत्वादित्यहेतुरेव।

योऽपि अवधिकालाभावे कार्यानुत्पत्तेः, कालोत्पत्तावपि कालान्तरेणावधिना भवितव्यमिति, कालस्य नित्यत्वसिद्धौ हेतुरुक्तः। सोऽप्यसिद्ध एव। स्वकारणकुम्भकाराद्यभावे हि घटादेः कार्यस्यानुपपत्तिः सिद्धा, न पुनरवधिकालाभावात्। तदभावात्तु तत्कार्यस्यैव चिरक्षिप्रादेरनुत्पाद इत्युक्तम्। [2]सिद्धौ वा विरुद्धः; अवधिकालाभावस्य कालानित्यत्वाव्यभिचारादिति।

न चात्र मायास्रोतसामयुगपत्सृष्टिसंहारयोः संभवतः स्रोतोऽन्तरोपसंहारेऽपि स्रोतोऽन्तरेषु कालस्य भावान्नित्यत्वं भविष्यतीति वाच्यम्। [3]तेषामयुगपत्सृष्टिसंहारयोः प्रमाणाभावात्। भावे वा सर्वमायाकार्याणामेवानित्यत्वप्रसङ्गः। अथ स्रोतोभेदेनैतेषां भेदादप्रसङ्ग इत्युच्यते, तदितरत्रापि समानमिति न किञ्चिदेतत्।

स्यादेतत्। न त्रुटचाद्यास्तस्य कलाः, येन सकलत्वाद्भूगोलकादिवदसर्वगतः कालः स्यात्। किं तु कलाभ्यो व्यतिरिक्तोऽकल एव स्वरूपेण; तस्मादात्मवत्सर्वगत एवेति। तदयुक्तम्। यतोऽकलो **व्यतिरिक्तत्वाद्** इति [4]**कलातः** इति जात्यभिप्रायेणैव वचनम्। त्रुटचादिकलाभ्यो व्यतिरिक्तत्वादकलादित्यनेनापि हेतुना सर्वगतः, चशब्दान्नित्योऽपीत्ययं हेतुः **अयुक्तिमान्**। परमाणुबुद्धचादिभि[5]रनैकान्तिकत्वादस्य हेतोरिति भावः। साधितं च परमाणूनामनित्यत्वमपि [6]**पुंपाशेश्वरप्रकरणे**। न च कलाभ्यो व्यतिरिक्तस्य कालस्य प्रतीतौ प्रमाणमस्ति ॥१७–१८॥

यतः —'वस्तुनश्च' इत्यादि।

**वस्तुनश्चोद्भवे नाशे क्षये वृद्धौ च [7]लक्ष्यते।**
**कर्तृत्वं मुनिशार्दूल न च रूपं [8]स्वकं क्वचित्॥१९॥**
**कालस्य [9]शक्यते वक्तुममूर्तत्वान्महामुने।**

वस्तूनां हि उद्भवा[दि]क्रियास्वतीतादिकलात्मन एव **कर्तृत्वं लक्ष्यते**। नान्यस्य कालमात्रेण व्यवहाराभावादित्युक्तम्— [10]"त्रिविधः सोऽप्यथोच्यते" इति। तत्कुतस्तद्व्यतिरिक्तस्य [11]नित्यत्वव्यापकत्वरूपमात्मीयं शक्यं **वक्तुम्**। **अमूर्तत्वात्** प्रमाणं विना तथाभूतस्य, मूर्तेः सत्ताया असिद्धेः। ननु सर्वत्र चिरक्षिप्रादिलिङ्गविशेषादेकः कालः। सत्यम्। अत एवैकोऽप्यनेकरूपः। पूर्वापरादिदिग्व्यवस्थितविभिन्नपर्वताटव्याद्यवयवेषु पृथिव्यादिप्रतिपत्त्यविशेषसिद्धविचित्रभुवनात्मकवदित्युक्तम्[12] —

"उत्पत्तौ[13] संस्थितौ चैव संहारे चैव तद्वताम्।
निमित्तं कालमेवाहु[14]र्विभिन्नेनात्मना स्थितम्"॥ इति।

ततश्चातीतादिकलात्मक एवासौ सिद्धचति। न तु नित्यः, सर्वगतो वेति।

"यद्वस्तु तत् कालाविविक्तम्। कालविविक्तं च खपुष्पवदवस्त्वेव। वस्तु चात्मादि।

---

[1] व्यधिकरणासिद्ध० — ऋ.
[2] सिद्धा वा — ऋ.
[3] तेषामयुगपद्दृष्टि० — ऊ, ऋ.
[4] कालात इति — ऊ.
[5] ०रनेकान्तिकत्वाद् — ऊ.
[6] मतङ्ग० विद्या० ६. ४४ वृत्तौ।
[7] लक्षिते — ऊ, ऋ.
[8] स्वयं — मु, ओ.
[9] शक्तये वक्तुरमूर्त० — मु.
[10] मतङ्ग० विद्या० १२. ६ उ०.
[11] नित्यत्वं व्यापकत्व० — ऋ.
[12] वाक्यपदीये ३. ९. ३.
[13] च स्थितौ चापि विनाशे चापि तद्वताम् — मुद्रितवाक्यपदीयपाठः।
[14] ०र्विभक्तेनात्मना — मुद्रितवाक्यपदीयपाठः।

अतस्ततोऽविवेकसिद्ध्या कालस्य नित्यत्वव्यापकत्वसिद्धिः" इति [1]मण्डनमिश्रः। तस्य कालेनानैकान्तिकोऽयं हेतुरिति, नानेन कालस्य नित्यत्वं सिद्ध्यति। कथं तर्ह्यात्मादीनां नित्यत्वम्। अत एव कालानवच्छेदात् कालस्येव भवत्पक्षे इत्युक्तम्। न च कालात्मनोर्व्यापकत्वात्संयोगः परैरनीष्यते इत्यदोषः।

नन्वेवं सकलत्वाद्वल्ग्यादिवत् कालः प्रत्यक्षः प्रसक्तः। [2]न। पिशाचादिशरीरैर्द्व्यणुकादिभिश्चानैकान्तिकत्वादित्यदोषः॥

यद्येवं कुतस्तर्हि तस्योत्पत्तिरित्युच्यते — 'स तस्माद्' इत्यादि।

**स तस्माद्ग्रन्थिविवराच्चलतोऽणोर्विभाव्यते ॥२०॥**
**तत्त्वानां क्रमशो व्यक्तौ स्थितये च विभागशः।**

यः **चलतः** कञ्चुकत्रययुक्तस्यात्मनः सबन्धी कालः [3]प्रागुक्तः, **सः तस्माद्ग्रन्थिविवराद्** मायास्रोतोमुखाद् ईश्वरेण विशेषतः कलायाः पूर्वमेव **[वि]भाव्यते** क्रियते। श्रीमत्**स्वायम्भुवे**[4] — "तस्मात्कालकले...असृजन्।" इति। श्रीमत्**किरणे**ऽपि[5] — "तस्मात् [6]कला त्रुटिः संस्था" इति। स एव **तत्त्वानां** सबन्धिनी या व्यक्तिः प्रकाशमानता, भोगस्थितिश्च भुवनशरीरात्मिका तदर्थं काल इत्युक्तम्। चिरक्षिप्रप्रत्ययहेतुत्वेनापि कालस्य भोगाङ्गत्वात्। तथा च श्लोकः[7] —

"चिरेण बत लब्धासि न जाने करवाणि किम्।
प्रविशामि [8]किमङ्गेषु भवन्तीं निगिरामि किम्॥ इति॥

यद्येवं महाप्रलये कलादिवत् कालोऽपि संहारान्नष्ट इति, ततः कथं तद्व्यवहार इति [9]पूर्वोक्तमनिराकृतमेव। तत्रोच्यते — 'संहारे' इत्यादि।

**संहारे हरणात्पत्युर्नष्ट इत्युपचर्यते ॥२१॥**

**इति**शब्दो हेतौ। यत एव **संहारे** कालो **नष्टः**, तत एव **उपचर्यते** न मुख्य एव तत्र कालो व्यवहाराभावादित्यर्थः॥२१॥

तथा हि — 'नात्मा' इत्यादि।

**नात्मा प्रसूयते लोके न च नाशमुपैति हि।**
**[10]युक्तो योगविभागाभ्यां [11]संयोगाच्च कलात्मकात् ॥२२॥**
**अयमुत्पन्न एवात्र नष्टोऽयं वक्तुमादरात्।**

---

[1] विधिविवेके 'कालविविक्तं च खपुष्पवत्' पृ० ४९.
[2] न च पिशाचादि० — ऊ. ॠ.
[3] मतङ्ग० विद्या० १२. १ वृत्तौ।
[4] स्वायम्भुवे ३३. ९. १० पू०.
[5] किरणे विद्या० ४. २३ उ०.
[6] काला — ऊ.
[7] आकरो न लभ्यते।
[8] कमङ्गेषु — ऊ, ॠ.
[9] मतङ्ग० विद्या० १२. ३, ४ पू०.
[10] युक्तं — मु, ओ.
[11] संयोगाश्च कलात्मकाम् — ऊ, ॠ.

[1]तस्याणो रञ्जितस्येत्थमञ्जनेन कलादिना ॥२३॥
[2]स्फुटः प्रवर्तते कालः पुद्गलं प्रति विश्वराट् ।

महाप्रलये हि सर्वेषामुपसंहृतत्वाच्छिवबिन्द्वात्ममायाख्यानि चत्वार्येव तत्त्वानि विद्यन्ते। तेषां च नित्यत्वादेव जन्मनाशाद्यभावात् कुतः कालव्यवहार.। अनित्य[3]कलादिशरीरसंयोगवियोगकलनापूर्वकः सः पुंसां प्रवर्तमानो दृष्टः। तदभावे कलनीयाभावात् कालव्यवहाराभाव एव॥

कथं तर्हि महाप्रलये कालाभावादवधिनियमं भगवान् वेत्तीत्युच्यते — 'कालरूपी' इत्यादि।

**कालरूपी महातेजा रुद्रो[4]ऽनन्तपराक्रमः ॥२४॥**

न हि सर्गेऽपि भगवतोऽवधिपरिच्छेदाय कालः समुपयुज्यते। कालस्यापि तत्परिच्छेद्यत्वात्। स हि तदानीमपि प्रकृतीनामनवरतानन्तपुरुषभोगादिजननेनापचिततरशक्तित्वाद् दासीनामिव भोगदानाक्षमत्वं, कर्मणां च परिपाकापेक्षित्वमाकलय्य, तद्विश्रामाय रौद्रं व्यापारं निशामिव महाप्रलयमारब्धवान्। न कालानुरोधेन। ततश्च विश्रामतो मायाशक्तीनां कर्मणां च सामर्थ्योत्पादक एव महाप्रलयस्योपसंहारावधिर्भगवतः सर्वज्ञत्वकर्तृत्वतेजोयुक्तस्येति न कालोपयोगः लौकिककर्तृवत्। लोकेऽपि हि पाचकादयः कर्तारः, कालानपेक्षया पचनीयकार्यसिद्धिमेव पच्यादिक्रियोपसंहारस्यावधिं मन्यन्ते। कालापेक्षया ह्यपक्वं दग्धमेव तत् स्यादिति, न तु कर्तुः क्रियोपसंहारे कालापेक्षेति॥२४॥

यद्येवं पुंसोऽपि किं कालेनेति। उच्यते— 'कलित' इत्यादि।

**[5]कलितोऽधोमुखो जन्तुः कञ्चुकै[6]रवगुण्ठितः।**
**न विजानाति [7]रुद्रात्मा महामायां यतः पशुः॥२५॥**
**पशुत्वात्कलितः[8] क्षिप्रं कालेनानन्ततेजसा।**
**[9]नियत्याख्येन तत्त्वेन [10]स च पश्चान्नियम्यते॥२६॥**
**येन पुंभावमायाति [11]जगदापूरणं प्रति।**

परिपक्वसमस्तपुरुषकर्मवासनायोगान्मायैव महतीत्युच्यते। तामीश्वरव[12]द्यतो न जानाति **पशुत्वात्**, ततः कञ्चुकेन [13]प्रागुक्तेन **अवगुण्ठितः** [14]**सः कालेन** सूक्ष्मदेहनिविष्टतत्त्वसंयोगे क्रमेण कल्यते। यदुक्तं श्रीमत्परे[15] —

---

[1] तस्यानुरञ्जित० — ऊ, ऋ.
[2] स्फुटं — ऊ, ऋ.
[3] ०कालादिशरीरं संयोग० — ऊ, ऋ.
[4] ०ऽनन्तः पराक्रमः — ओ.
[5] कलितोऽयोमुखो — मु.
[6] ०रवकुण्ठितः — मु, ओ.
[7] शुद्धात्मा — मु.
[8] ०त्कलितं — ओ.
[9] नियत्या स्वेन — मु, ओ.
[10] स पश्चाद्विनियम्यते — मु; स च तस्मान्नियम्यते — ऊ, ऋ, ओ.
[11] जगतां पूरणं — मु; जगता पूरणं — ओ.
[12] ०द्यतोऽनुजानाति — ऊ.
[13] मतङ्ग० विद्या० ११. ३३ उ, ३४ पू० वृत्तौ।
[14] सन् कालेन — ऋ.
[15] आकरो न लभ्यते।

"कालोऽपि सूक्ष्मदेहस्थो लक्ष्यते लिङ्गयोगतः।
उदार्यं तद्भवेल्लिङ्गं महाकल्पावसानिकम् ॥" इति ।

**कलितः** च [1]वक्ष्यमाणेन नियतितत्त्वेन सूक्ष्मदेहादौ भेदेन **नियम्यते। येन पुंभावमायाति जगदापूरणं प्रति।** अत एव नियतितत्त्वस्य कालेन महोत्पत्तिः, भुवनस्थितिश्च सिद्धा। अन्यथा तदुपन्यासस्यात्र निष्प्रयोजनत्वादिति ॥

अथास्यैव पुंभावस्य जगतः तदापूरणस्य च व्याख्यानायैतत् — 'जगच्छब्देन' इत्यादि ।

**जगच्छब्देन [2]मायातः प्रधानमभिधीयते ॥२७॥**
**तेनैकत्वमवाप्नोति [3]ताम्रं कालिकया यथा।**
**[4]प्रच्छादितः [5]प्रबुद्धात्मा सर्वाङ्गालिङ्गने [6]क्षमः ॥२८॥**
**स्फुटं शब्दादिविषयांस्तदा गृह्णाति पुद्गलः।**

**जगच्छब्देन** तावद् **मायातः** प्रधानकार्यं क्षित्यन्तं कार्यकारणात्मकं तत्त्वबृन्दमुच्यते। **तेन-कत्वम्** अभेदबुद्धिः, सैव आपूरणात्मनः कर्मणो हेतुत्वाद् आपूरणमुच्यते। तेन जगताच्छादितो युक्तः समुन्मिषद्दृक्क्रियत्वात् **प्रबुद्धात्मा** सर्वभोगयोग्यो भोग्याञ्शब्दादीन् भुङ्क्ते इत्येतत्पुंभावाद्युच्यते ॥

'एवं कालेन' इत्यादि ।

**एवं कालेन [7]बहुधा [8]कल्यमानः पुनः पुनः ॥२९॥**
**न जानात्युत्तमां [9]सिद्धिं नात्मानं [10]न च देवताम् ।**

यथानेन जगता युक्तो भोगान् भुङ्क्ते, तथा **कालेन** अपि युक्तश्चिरक्षिप्रादिलब्धान् **पुनः पुनः** अत्यर्थं भुञ्जानो दृश्यते। अत एव भोगनिष्ठत्वाद् न किञ्चिच्छ्रेयः, तत्कारणं वा ईक्षेतेति न कालेन प्रयोजनं पुंसः, तस्यापि भोगाङ्गत्वेन सिद्धेः ॥

अथ कियन्तं कालमेवंविधो भवतीत्युच्यते —'यावन्न' इत्यादि ।

**यावन्न कलया पत्युः [11]प्रेरितोऽणुर्गुरुं प्रति ॥३०॥**

परमेश्वरसंबन्धिनी सा **कला** शुद्धविद्यात्मकः कालः, तया **यावन्न प्रेरितः** श्रेयोमार्गे इति ।

---

[1] त्रयोदशप्रकरणे ।
[2] माया तत्प्रधान० — मु, ओ.
[3] ताम्रकालीकवद्यथा—मु; ताम्रकालिकवद्यथा — ओ.
[4] पश्चादितः — मु० पाठान्तरम् ।
[5] प्रबुद्धचात्मा — मु.
[6] क्षमा — ओ.
[7] महता — ऊ, ऋ.
[8] कल्प्यमानः — मु; काल्यमानः — ऊ, ऋ.
[9] सिद्धिमात्मानं — ऊ, ऋ, ओ.
[10] तु — ओ.
[11] प्रेरितो वै गुरुं — ओ.

अयमर्थः— उपर्यपि मायायाः [1]प्रोक्तनयेन रागविद्याकलादीन्यपि शुद्धानि तत्त्वानि विद्यन्ते इति। यदुक्तं श्रीमत्स्वायम्भुवे[2] —

"[3]तथोपरि महाध्वन्या [4]निर्मला मन्त्रनायकाः।
यत्रासतेऽतिलावण्यस्त्रीष्वक्षीण[5]मदाः सदा॥" इति।

[6]न त्वत्र परमेश्वरशक्तिरेव कला मन्तव्या। साक्षात् पशूनां तस्याः प्रवृत्त्यभावादित्युक्तम्[7]। ततश्च यच्चोदितं[8] मायोर्ध्वं कालाभावात्तत्र सृष्टिसंहारानुपपत्तिरिति। तदपि प्रतिक्षिप्तमेवेति ॥३०॥

अत्रोपसंहारः— 'एवं काल' इत्यादि।

**एवं कालः [9]प्रपत्तव्यस्तच्च तत्त्व[10]मनिन्दितम्।**

**तच्च तत्त्वं** [11]प्रागुक्ततत्त्वलक्षणयोगात्। एवं च कालस्य तत्त्वधर्मः प्रोक्तः॥

भुवनधर्मः प्रोच्यते— 'तत्र ये' इत्यादि।

**तत्र ये संस्थिता रुद्रास्तान्प्रवक्ष्यामि विस्तरात्॥३१॥**
**अनन्त[12]विभवामोदसुखेनात्यन्त[13]वासिताः।**
**[14]पतद्रुग्भुवनेशानः प्रथमः परिकीर्तितः॥३२॥**
**[15]हालाहलस्ततोऽधस्ताद्यमश्चातिबलोत्कटः।**
**घोरश्चान्यो महातेजा [16]मातङ्गश्चातिवीर्यवान्॥३३॥**
**[17]ततोऽधोभुवने चण्डः स्फुरच्चन्द्रवपुर्गुरुः।**
**[18]शाबरो योऽतिविक्रान्त[19]स्ततोच्छुष्मो महाबलः॥३४॥**
**एते रुद्रा वृता रुद्रैरनेकैर्भुवनेश्वरैः।**

---

[1] मतङ्ग० विद्या० ९. ३० उ०, ३१ पू०, ३४, ३५ वृत्तौ शुद्धकलातत्त्वसूचनं, १०. २४—२८ वृत्तौ शुद्धविद्यातत्त्वसूचनं, ११. ३०उ०—३३ पू० वृत्तौ शुद्धरागतत्त्वप्रतिपादनं, १२. ३० उ० वृत्तौ शुद्धकालतत्त्वसूचनं, १३. १८—२२ पू० वृत्तौ शुद्धनियतितत्त्ववर्णनं च क्रमेण दृश्यते।
[2] स्वायम्भुवे ३९. १३.
[3] ततोपरि — स्वायम्भुवपाठः।
[4] निमलो मन्त्रनायकः — ऊ, ऋ.
[5] ०मदः स च — ऊ, ऋ.
[6] नन्वत्र — ऊ, ऋ.
[7] मतङ्ग० विद्या० १२. २ वृत्तौ।
[8] मतङ्ग० विद्या० १२. ३, ४ पू० वृत्तौ।
[9] प्रवक्तव्यः — मु. ओ.
[10] ०मनिन्दितः — ओ.
[11] मतङ्ग० विद्या० ५. ३, ४ वृत्तौ।
[12] ०विभवं मोदः — ओ.
[13] ०वासिताम् — ओ.
[14] प्रदुद्रुर्भुवनेशानः—मु; प्रदुदुर्भुवनेशानः—ओ.
[15] कालानलस्थितो० — मु, ओ.
[16] मतङ्गश्चाति० — मु; मातङ्गाश्चाति० ओ.
[17] तत्त्वतो भुवने — मु. ओ.
[18] शरबोऽन्योऽपि — ओ.
[19] ०स्ततोच्छुष्ठो — मु; ०स्तयोच्छुष्मो — —ऊ, ऋ; ततः + उच्छुष्मः=तत उच्छुष्मः; अत्र सन्धिरार्षः। अजितागमे क्रियापादे १०. ५९ उत्तरार्धं पश्यत।

भुक्तिमुक्तिप्रदाः सर्वे [1]प्रकीर्णविभवाः शिवाः ।।३५।।
मायाभोगभुजः सर्वे सर्वे चामोघशक्तयः ।
कारणानुमताः सन्तः क्रीडन्त्यमितविक्रमाः ।।३६।।

**एते** चाष्टावपि पनद्रुक्प्रभृतयः कारणेशस्यानन्तेशस्यानुमताः [2]कपालेशादिवत् तन्नियुक्ता एवेति ।।३१–३६।।

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय विषमवृत्तेन श्लोकः — 'कालो यथा' इत्यादि ।

**कालो यथा तत्त्वविभागयुक्त्या स्थितोऽध्वनि [3]प्रेरणशीलकत्वात् ।**
**[4]तथा मयोक्तोऽखिलभावनासु मुनेऽधुना [5]तां नियतिं शृणुष्व ।।३७।।**

**यथा कालः** चिरक्षिप्रादिप्रत्ययजननद्वारेण पुंसः प्रेरणस्वभावत्वेन क्रियाव्यतिरिक्तः **स्थितः** यथा च **अध्वनि** तत्त्वभावयुक्त्या रागतत्त्वादधः स्थितः, **तथोक्तः** इति व्याख्यातार्थोपसंहारः । अथ व्याख्येयोपक्रमः — **अखिलभावनासु** सर्वक्रियासु नियामिका **तां नियतिमधुना शृणुष्व** इति ।।३७।।

[इति श्री] भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ [विद्यापादे]
त्रिपर्वपदार्थे कालतत्त्वप्रकरणं [द्वादशं समाप्तम्] ।।

**द्वादशः पटलः**

---

[1] प्रकीर्णकिरणाः शिवाः — मु; प्रकीर्णकिरणाश्शुभाः — ओ.
[2] कपालेशादिव तु नियुक्ताः — ऋ.
[3] प्रेरकशीलकत्वात् — मु, ओ.
[4] तेषां मयोक्तो० — ऊ, ऋ.
[5] मां — ऊ, ऋ.

## त्रयोदशः पटलः

## नियति[तत्त्व]प्रकरणम्

**अथेदानीं मुनिव्याघ्र कारण[1]स्यामितद्युतेः ।**
**शक्तिर्नियामिका [2]पुंसः सह तत्त्वेन सर्पिता ॥१॥**
**नियामकेन भावेन [3]नियमस्थितिहेतुना ।**
**[4]यथाणुर्भोगसन्ताने नियम्य [5]विनिपात्यते ॥२॥**
**नेच्छन्नपि [6]बलात्तेन नियतिः सा शिवोदये ।**
**तन्त्रेऽस्मिन्विहिता विप्र भर्तुराज्ञानुवर्तिनी ॥३॥**

**अथेति** कालतत्त्वादनन्तरं नियतिः प्रकरणेन प्रतिपाद्यते । अत्र च पदार्थादिसंबन्धाः [7]पूर्ववद् द्रष्टव्याः । वाक्यात्मकस्तु संबन्धः "[8]नियत्याख्येन तत्त्वेन" इत्यादिनानेकविधः । या **नियामिका पुंसः** कलादिसंबद्धस्येत्युक्तम्[9] —

"नियत्याख्येन तत्त्वेन स च पश्चान्नियम्यते ।" इति ।

न तु विज्ञानकेवलिनः. प्रलयकेवलिनो वा । नापि मायामलकर्मणाम् । तदभावेऽपि तेषां नियमदर्शनात् । नापि [10]कलादेः । [11]स्वतः कारणशक्त्यैव तस्य नियमितत्वात् । अपि तु संबन्धस्य पुंस एवेति [12]दर्शयिष्यामः ।

या च **कारणस्य** परमेश्वरस्य संबन्धि यत्तत्त्वं **शक्तिः** तेन नियमस्वभावेन तदानीं च नियमव्यवस्थायां प्रवृत्तेन **सह सर्पिता** । न हि तेन विना अस्या अपि कलादेरिव प्रवृत्तिरुपपद्यते । यतः सापि **भर्तुराज्ञानुवर्तिनी** इति । **यथा** च **अणुः** नियमत्वेन प्रागुक्तेन न स्वात्मनि नियम्यते । अपि तु अनिच्छन्नपि **बलाद्** भोगविषये एव । **सा नियतिः** शास्त्रेऽस्मिन् **विहिता** इति ॥१–३॥

अथ नियतिसिद्धौ प्रमाणम् — 'असमञ्जस' इत्यादि ।

**असमञ्जसवैनाशं कृत्वा नित्यम[13]तत्परा ।**
**[14]स्वोचितेष्वथ भोगेषु शरीरेषु [15]च पेशला ॥४॥**
**व्यवस्थाकारिणी नान्या विद्यते तत्त्वसन्ततौ ।**

---

[1] ०स्यामितद्युते —मु; ०स्यामितात्मनः — —ऊ, ऋ.
[2] पुंसां — मु.
[3] निस्समस्थितहेतुना — ऊ. ऋ.
[4] ययाणुर्भोग० — मु.
[5] विनिवार्यते — मु, ओ.
[6] विमूढात्मा — ऊ, ऋ.
[7] मतङ्ग० विद्या० तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत् ।
[8] मतङ्ग० विद्या० १२. २६ उ०.
[9] मतङ्ग० विद्या० १२. २६ उ०.
[10] कालादेः — ऊ, ऋ.
[11] ततः — ऋ.
[12] मतङ्ग० विद्या० १३. ५–७ पू० वृत्तौ ।
[13] ०तत्परम् — ऊ, ऋ.
[14] सोचितेष्वथ — ओ.
[15] सुपेशला — मु, ओ.

**असमञ्जसस्य** अनियमस्य विनाशः एव **वैनाशः**, तं **कृत्वा** या नियममुत्पादयति। यदि हि सा न भवेत्। अन्योपार्जितान्यपि कर्मफलान्यन्ये भुञ्जीरन्। राजनियमशक्त्यभावे द्विजातिकृष्यादिफलानीव दस्यव इति. कर्मानुष्ठानाम्नातशास्त्रमनारम्भणीयमेव स्यात्। आरब्धं च। ततो यस्य पुंसः स्वानुष्ठितकर्मानुसारेण यान्युचितानि फलानि, शरीराणि च, तेषु नियमकारिणा केनापि तत्त्वेन भवितव्यम्। यच्च तत् तत्त्वं सा नियतिरेव तत्त्वसन्ताने **विद्यते** इत्युच्यते। न तु ततः **अन्या** शिवशक्तिरेव। यतस्तत्त्वान्तरव्यवधानेनैव सा पशूनामुपकारिका। न साक्षादित्युक्तम्[१]॥

ननु कर्मैव नियामकं भविष्यति। किं नियत्येति। तत्रोच्यते — 'कोटिद्वयम्' इत्यादि।

> **कोटिद्वयं समाख्यातं धर्माधर्मात्मकं पशोः॥५॥**
> **[२]यदर्थं व्यक्तिमायाति शरीरं सर्वदेहिनाम्।**
> **तद्विपाकेष्वनायासं क्षेत्रज्ञं सुनिरूप्य [३]तु॥६॥**
> **[४]यस्मान्नियमयत्येषा तस्मान्नियतिरुच्यते।**

धर्माधर्मात्मनोर्हि ज्योतिष्टोमब्रह्महननादिलक्षणकर्मणोर्द्वे संस्काररूपे कोटी प्रान्ते धर्मवासना च, अधर्मवासना च। तस्यैव हि कर्मवासनात्मनः कोटिद्वयस्य उपभोगाय सर्वप्राणिनां [५]कार्यकरणाद्युत्पद्यते। यदुक्तम् — [६]"कर्मतश्च शरीराणि विषयाः करणानि च।" इति।

ततस्तस्य कोटिद्वयस्य ये विपाकाः सुखदुःखादिफलात्मकाः, तेषु **अनायासं** कृत्वा **शरीरिणं** या **नियमयति** सा **नियतिः** इति। अयमर्थः — न कर्मवासनैव स्वकर्तृनियमसंबन्धं विदधाति। तत्कर्मवासनात्वात्; कृष्यादिकर्मवासनावत्। [७][ततः कर्मफलकर्तृसंबन्धस्य तत्तत्कर्मव्यतिरिक्तेनान्येन नियामकेन भवितव्यम्] कर्मफलकर्तृसंबन्धत्वात्; कृष्यादिकर्मफलकर्तृसंबन्धनियामकदृष्टनृपतिवत्। यच्च नियामकं सा नियतिरिति नियतिसिद्धिः॥

इतश्च नियतिसिद्धिः — 'तयोरपि' इत्यादि।

> **तयो[८]रप्यधिकं यच्च दुःखं वाप्यथवा सुखम्॥७॥**
> **न ददाति समं धत्ते स्ववीर्येणैव सर्वदा।**

**तयोः** कर्मद्वयकोट्योः प्रकृते शरीरे, काले, अवस्थाविशेषे वा भोग्यत्वे[९]नोपस्थितयोः यद्**अप्यधिकं** शरीरान्तरे, कालान्तरे, अवस्थान्तरे भोग्यं, तस्यैव पुंसः कर्मफलं [**ददाति**। **न** परस्य कर्मफलं] शरीरान्तरकालान्तरावस्थान्तरभोग्यतया। या **समं धत्ते** नियमयति, सा नियतिः। यदाहुः[१०] —

> "यस्मिन्वयसि यत्काले यद्दिने यच्च वा निशि।
> भर्तृनियमतः पुंसां तत्तथा न तदन्यथा॥" इति।

---

[१] मतङ्ग० विद्या० १२. २ वृत्तौ।
[२] तदुत्थं — मु, ओ.
[३] तम् — मु, ओ.
[४] नियामयति यस्माद्वै — मु, ओ.
[५] कार्यकारणादुत्पद्यते — ऊ, ऋ.
[६] स्वायम्भुवे ३२. १३ पू०.
[७] कोष्ठान्तर्गतोऽयं भागः (पृ० २७०) मृ० वृ० दीपिकामनुसृत्य संघटितः।
[८] ०रभ्यधिकं — ऊ, ऋ.
[९] ०नोपतिष्ठयोः — ऊ, ऋ.
[१०] आकरो न लभ्यते।

कालादिनियमभोग्यानामर्थानां कर्मव्यतिरिक्तेन नियामकेन भवितव्यम्। नियतकालभोग्यत्वात्। नियतकालभोग्यत्वेनावस्थापितमोदकादिनियामकदृष्टगृहपतिवदिति। यच्च नियामकं सा नियतिरिति॥

अथ कालस्येवास्याः सभागत्वमुच्यते — 'न च' इत्यादि।

**न चोपभोग[1]वैकल्यान्नाभुक्तात्तं समुद्धरेत्॥८॥**

[2]जात्यादिना यद्भोक्तुर्भोगवैकल्यं तस्माद्धेतोः **न** ततः पुरुषं समुद्धरति। जात्यायुर्भोगप्रदकर्मसद्भावं यावत् तत्रैव नियमयति। नापि **अभुक्तात्** कर्मणः समुद्धरति। तदिदमुक्तम्[3] — "नाभुक्तं कर्म नश्यति" इति॥८॥

'भुक्तेऽपि' इत्यादि।

**भुक्तेऽपि [4]स्वविपाकेऽणोर्यदन्यदतिरिच्यते।**
**तस्मिन्नि[5]योजयत्याशु [6]त्र्युटचंशमपि [7]नोचितात्॥९॥**
**ददाति [8]यस्माद्धरति कारणेनाधिरोपिता।**
**तत्तन्त्रः सततं भोक्ता न च तां वेत्ति मूढधीः॥१०॥**

क्षीणे तु जात्यायुर्भोगप्रदे कर्मणि यदि कदाचिद्देवताप्रसादाददृष्टफलवैदिकसुवर्णदानादिकर्मसामर्थ्याद्वा **यदतिरिच्यते** शरीरम् **अणोः** [9]श्रीमन्नन्दीश्वरादेरिव, तदानीं तत्र शरीरयोगं विना स्थित्यभावाद् **अन्यद्** शरीरान्तरभोग्यं फलं योजयति तस्यात्मीयमेव। न तु परकर्मफलम्। यतः परमाण्वंशमपि स्वकृतात्कर्मणोऽन्यद् **न ददाति हरति** वा, नियसैकस्वभावत्वात्। न चाचेतनत्वात्तस्याः कुतोऽयं विवेक इत्याशङ्कनीयम्। यतः **कारणेन** प्रेरितेत्युक्तम्। अत्यन्तं तया आक्रान्तोऽपि पुरुषो **न तां** मूढत्वाद् **वेत्ति** इति॥९–१०॥

'नियम्य' इत्यादि।

**नियम्य बलवत्प्रीत्या भोगिनं भोगतत्परम्**
**[10]स्वेषु भोगेषु वातृप्तं पुद्गलं दुःखपीडितम्॥११॥**
**ध्वस्तकर्माशयं [11]यस्मा[12]न्नियतेष्वपरेषु तम्।**
**नियम्यं[13] धारयेत्तावद्यावन्न परिहीयते॥१२॥**
**द्विविधेष्वप्यथैवं[14] स्यादनन्ते सृष्टिवर्त्मनि।**

---

[1] ०वैकल्यं नाभुक्तात् — मु, ओ.
[2] व्याध्यादिनायं यद्भोक्तुः — ऊ, ऋ.
[3] पौष्करे विद्यापादे बिन्दुपटले एतत्सदृशार्थकमर्धं दृश्यते—'नाभुक्तं क्षीयते कर्म' ४५ उ०.
[4] स्वविपाकेऽणुं यदन्यद् — मु, ओ.
[5] ०योजयेदाशु — मु, ओ.
[6] तुष्टचंश० — मु, ओ.
[7] नोचितम् — मु, ओ.
[8] हरते यस्मात् — मु, ओ.
[9] नन्दीश्वरकथा कूर्मपुराणे उत्तरार्धे ४३ तमेऽध्याये दृश्यते।
[10] तत्सुभोगेषु — ऊ, ऋ.
[11] तस्मा० — मु, ओ.
[12] ०न्नियतेषु परेषु — ऊ, ऋ.
[13] नियम्य — मु, ऊ, ऋ.
[14] ०प्ययैव — मु.

अथ **ध्वस्तकर्माशयं** प्रणष्टवाह्यशरीरं **नियम्य** बलात् **प्रीत्या** रागेण युक्तमत्यन्त[1]भोगनिष्ठं **भोगिनम् अपरेषु नियतेषु** एव जात्यायुर्भोगान्तरफलेषु कर्माशयेषु **द्विविधेष्वपि** धर्माधर्माख्येषु **तावद्धारयेत्; यावत्** तत्कर्माशयस्य रूपं न परिक्षीणमिति। **एवं** तत्क्षयेऽन्यत्रेति यावत्संसारे इति॥

'प्रेर्यम्' इत्यादि।

**प्रेर्यं प्रेरयितुं[2] शक्ता स्वभावेनात्म[3]वर्तिना॥१३॥**
**यथाविष्टः पुमाँल्लोके [4]ग्रहेणातिबलीयसा।**
**[5]विकारान्दर्शयत्याशु नियत्या तद्वदेव हि॥१४॥**

एषा च स्वभाववैचित्र्यादेव पुरुषं प्रेरयति। ग्रह इवाणिमादियुक्तशरीरवैचित्र्यादिति। एवं विचित्रनियमभेदेनैव नियतेः सिद्धत्वान्नियममात्रस्य क्वचिदप्यसिद्धेः। सवितृप्रकाशादीनां प्रकार-भेदेनैव सभागत्वं सिद्ध्यतीति, तद्वदेव कारणपूर्वकत्वसिद्धौ कालोपादानकारणादेवोत्पत्तिरित्युक्तं [6]**कालतत्त्वप्रकरणे**। शिवशक्त्यादीनां तु पृथग् ज्ञानक्रियात्मनापि सिद्धेर्न तथात्वमित्यदोषः ॥१३–१४॥

न केवलं नियतिर्भोगनियममेव विधत्ते पुंसः, यावत्केनापि भागेन निवृत्तिमपीत्युच्यते — 'धर्मा-धर्म' इत्यादि।

**धर्माधर्म[7]विपाकेऽस्मिस्तुलाकोट्युपलक्षिते[8]।**
**नियतिस्तत्समुद्धाराद्यदा पश्यति [9]कर्मणी॥१५॥**
**[10]समे भोक्तुस्तदा तस्य [11]युगपच्चाप्यसंभवात्।**
**शून्यवत्संस्थिता यस्मान्नि[12]रपेक्षैव लक्ष्यते॥१६॥**
**समानधर्मव्यापारः कष्टोऽयं[13] स्यात्सुदुष्करः।**
**युगपत्सुखदुःखाभ्यां योक्तुं पुं शक्यते कथम्॥१७॥**

कर्मणां तीव्रवेगानामासन्नं फलं परिपक्वं वेत्युक्तम्[14]। **यदा** तु धर्माधर्मविपाकलक्षणस्वर्ग-नरकादिफलनिमित्ते धर्माधर्मात्मके धर्मात्मके वा स्वर्गब्रह्मलोकप्राप्तिनिमित्ते, रौरवावीचिनिमित्ते अधर्मात्मके वा, द्वे अप्यत्यन्तविरुद्धे **कर्मणी** तीव्रवेगत्वेन, परिपाकप्राप्त्या वा तुलाप्रान्ततुलिते इव अत्यन्तसमे पुंसः पतितशरीरस्यापतितशरीरस्य वा अदृष्टफलायुष्यानायुष्यादिलक्षणे युगपद् भवतः; तदा तयोर्द्वयोरपि [वि]रुद्धयोः कर्मणोः समानो धर्मः तीव्रवेगत्वादि[[15]व्यापारो लक्ष्यते, तेन **युगपत्**

---

[1] ०भोगेनिष्ठे भोगिनि संपरेषु — ऊ, ऋ.
[2] प्रेरयिता — ओ.
[3] ०वर्त्मना — ओ.
[4] प्रगृह्णाति — मु.
[5] विकारं दर्श० — मु, ओ.
[6] मतङ्ग० विद्या० १२. २५–२७ पू० वृत्तौ।
[7] ०विवेकेऽस्मिन् — ऊ, ऋ.
[8] ०स्तुल्याकोट्युपलक्ष्यते — मु, ओ.
[9] कर्मणि — मु, ओ.
[10] समा — मु.
[11] युगपद्वृत्त्यसं० — मु, ओ.
[12] ०रपेक्ष्यैव — ओ.
[13] कष्टोऽपि — मु, ओ.
[14] मतङ्ग० विद्या० ८. १००–१०४ पू०.
[15] अत्र (पृ० २२६) मृ० वृ० दीपिकामनु-सृत्य लुप्तांशः पूरितः।

सुखदुःखलक्षणस्वर्गन]रकादि[दा]नासंभवात्, समत्वादेव च क्रमेणाप्यनुपपत्तेः, क्रमयौगपद्यव्यतिरिक्तस्य च प्रकारान्तरस्याभावात् "**कष्टोऽयम्** अनन्तेऽस्मिन्संसारे कदाचित् कस्यचित् पुरुषस्य एवंविध-यन्त्रान्तःप्रवेशलक्षणः प्रकारः कर्मान्तराणामविरुद्धानामप्यभोगपर्यवसायीत्यालोच्य, तत्कर्मविरोधान्नियमेन पुरुषमुद्धरतीति नियतिरुच्यते। न हि ईश्वरनियत्या विना अस्मान्नियमादुद्धारः पुंसो युगपत् तुल्यबलघातकशरण्यपुरुषद्वयापेक्षान्नियमादिव संभवतीति, अनीश्वरवादिभिरप्यत्र दृष्टनृपतिवदीश्वरशक्तिर्नियामिका अभ्युपगन्तव्या। न च अदृष्टानां कर्मणां नियमो न संभवतीति वाच्यम्। कर्मत्वादेव वध्यरक्षणीयदृष्टपुरुषकर्मवत् तेषामपि तस्य सिद्धत्वात्। सा च दृष्टवदेव विरुद्धेभ्य एव कर्मभ्यस्तमुद्धरति। न त्वविरुद्धेभ्यः, विशेषभावेन सर्वदाप्रसङ्गात्, "[1]नाभुक्तं कर्म नश्यति" इत्युक्तत्वाच्च। "यतश्चोद्धृतः, तस्मिन्विषये व्यापाराभावाद् **निरपेक्षैव** सा कालकल्पा व्यवतिष्ठते" इत्येतत्कर्मसाम्यमुच्यते। न तु धर्माधर्मराशिद्वयसमत्वम्। तदानीं तस्य हि विरोधाभावादसमत्व इव यदेव तीव्रवेगं, तदेव फलदमुपपद्यत इत्युद्धारस्य किं वर्तते। [2]विरोधाभावादुद्धारस्य सर्वदाप्रसङ्ग इति सकलतत्त्वानुपपत्तिरेव। ननु वचनादेतत्प्रतीयत इति किमुपपत्त्या। सत्यम्। यदि प्रतीयेत तदुपपत्त्यैवाधि[ग]तमेव तस्मात् प्रतीयत इति दर्शितम्॥१५–१७॥

अथ शुद्धस्य कलादेरिव नियत्यात्मनोऽप्यत्र व्यापार उच्यते — 'एतस्मिन्' इत्यादि।

> **एतस्मिन्नन्तरे कर्तु[3]र्यासावुद्धारशीलिनी।**
> **प्रोत्सार्य निर्यातिं वेगात्स्ववीर्येणातिभूरिणा॥१८॥**
> **क्षेत्रज्ञं वासयेत्पश्चात्कृत्वा भोगपराङ्मुखम्।**

**एतस्मिन्** प्रागुक्ते कालविशेषे परमेश्वरसंबन्धिनी **असौ** शक्तिः शुद्धनियत्यभिव्यक्तितः सा, अशुद्धे **निर्यातिं प्रोत्सार्य** इति अविनाश्य; अपि तु **पश्चात्** पराङ्मुखीं **कृत्वा**, पुरुषं **भोगपराङ्मुखं** परिणतमलं [**वासयेत्**। अपरिणतमलस्य भोग]पराङ्मुखत्वासंभवात्। यदुक्तमशुद्धविद्याप्रकरणे— "[4]संसारात्स विरज्येत प्रध्वस्तकलुषः सदा।" इति। श्रीमत्**स्वायम्भुवे**ऽपि —

"[5]क्षीणे तस्मिन् यियासा स्यात् परं नैश्श्रेयसं प्रति।"

इत्यदोषः। यस्त्वपरिणतमलः, तस्याविरुद्धकर्मवशाद् भोक्तृत्वमेव॥

ततश्च शक्तिपातात्तस्यैवंविध ऊहः प्रवर्तते — 'नानायासाद्' इत्यादि।

> **[6]नानायासान्महाघोरादस्मात्संसारसागरात्॥१९॥**
> **अस्ति कश्चिदुपायोऽन्यो येन संत्यज्य किल्बिषम्।**
> **प्राप्यते परमं सौख्यं यत्तत्पद[7]मनिर्मितम्॥२०॥**

संसाराद्व्यतिरिक्तः संसारशास्त्रापरिदृष्टः **कश्चिदुपायोऽस्ति; येन** संसारं परित्यज्य परा

---

[1] पौष्करे विद्यापादे बिन्दुपटले एतदर्थकमर्धमुपलभ्यते 'नाभुक्तं क्षीयते कर्म' ४५ उ.
[2] विरोधो भावो बोद्धारस्य — ऊ, ऋ.
[3] ०र्या सोद्धरणशीलिनी—मु; र्या सोद्धारण-शालिनी — ओ.
[4] मतङ्ग० विद्या० १०. २५ उ.
[5] स्वायम्भुवे ३२. १७ उ.
[6] नानायासा महा० — मु, ओ.
[7] ०मनिन्दितम् — मु, ओ.

शक्तिः **प्राप्यते** इति । एवं शक्तिपातान्मलस्य श्रेयोदृक्प्रतिरोधकत्वमात्रं निवर्तत इत्युक्तं भवति ॥१९–२०॥

'तेन शक्तिनिपातेन' इत्यादि ।

**[1]तेन शक्तिनिपातेन सम्यक् [2]संरक्षितो ह्यणुः ।**
**नियत्याख्येन तत्त्वेन न नियम्येत कर्हिचित् ॥२१॥**
**यतस्तस्या वशो न स्यात् स समानतया स्थितः ।**

शुद्धनियत्यात्मना **तेन शक्तिपातेन** नियमितः **अणुः न** अनेनाशुद्धेन नियतितत्त्वेन नियम्यते कदाचिदपि । ननु अविरुद्धकर्मभोक्तृत्वं तदानीमपि तस्यास्तीति ततस्तया नियम्येत । सत्यम् । **न तु** तद्वश इति । ततः **समानतया** साधारणत्वेन शुद्धाशुद्धयोर्नियत्योः असौ अवस्थित[ः] पुरुषः, तदानीं ततोऽशुद्धत्वेन दुर्बलत्वान्न **तस्या वशे** वर्तते । बलवदबलवत्साधारणो हि बलवद्वश्य एव ग्रामादिर्दृष्टः ॥

अत्र मतङ्गमुनिः — 'समान' इत्यादि ।

**मतङ्ग उवाच —**

**समानपरिपक्वस्य कर्मणो[3]ऽणुर्न युज्यते ॥२२॥**
**भोगे शक्तिनिपाताच्च निरवस्थान [4]एव सः ।**
**न ज्ञानं न परा दीक्षा न च योगः प्रवर्तते ॥२३॥**
**चर्या वाथ महादेव तत्क्षणान्मुच्यते न च ।**
**विरोधः [5]स महानत्र समाधानं ब्रवीहि मे ॥२४॥**

विरुद्धेन कर्मणा समानं च तत् परिपक्वं च विरुद्धकर्मवत् फलदानायाभिमुखीभूतं कर्म, तस्य संबन्धि[नि] **भोगे अणुः न युज्यते** । अधुनैव नियत्या ततः समुद्धृतत्वादित्युक्तम् । अविरुद्धस्यापि कर्मणो भोगे, यतः **शक्तिपातात्** मलपरिणत्यविनाभूताद्धेतोः निर्गतं संसारावस्थानहेतुत्वाद् अवस्थानं शरीराद्यारम्भकं कर्म यस्मात् पुरुषात् **सः निरवस्थानः** पुरुषो न युज्यते ।

"[6]तन्निपातात्क्षरत्यस्य मलं संसारकारणम्" । इति ।

परिणतमले हि पुरुषे कर्माणि पदं न बध्नन्ति । मलस्य सहकारिणोऽसद्भावाद् उदकाद्यभावे इव क्षेत्रे बीजानीति । यदुक्तं [7]शुद्धविद्याप्रकरणे[8] —

"तस्माद्रागी मलोपेतो भोगभुक् पुरुषः स्मृतः ।" इति ।

निरवस्थानत्वादेव च तस्य शरीराद्यभावाद् [9]भोगवज्ज्ञानाद्युपायान्वेषणसामर्थ्यमपि नास्त्येव । ततश्च यदुक्तम् — [10]"अस्ति कश्चिदुपायोऽन्यः" इत्यादिनात्रोपायान्वेषणसामर्थ्यं तद्विरुद्धयते । न

---

[1] न स शक्ति० — ऊ, ऋ.
[2] संरक्ष्यते — मु.
[3] ०ऽणुः प्रयुज्यते — ऊ, ऋ.
[4] एव वा — मु.
[5] सुमहानत्र —ओ.
[6] स्वायम्भुवे ३२. १७ पू०.
[7] पुंपाशेश्वरप्रकरणे इति भवितव्यम् ।
[8] मतङ्ग० विद्या० ६. ८८ उ०.
[9] योगवद् — ऊ.
[10] मतङ्ग० विद्या० १३. २० पू०.

च तस्य परिणतमलस्य विज्ञानकेवलिन इव शक्तिपातमात्रादेव मोक्षो भविष्यतीति वाच्यम्। यतः **तत्क्षणान्मुच्यते न च** इति। अयमर्थः — शक्तिपातेन संसारविरागाद्यविनाभूतलिङ्गसिद्धेन सह सकलस्य दर्शनान्न शक्तिपातादेव मोक्षः सिद्धयति। अपि तु दीक्षादेरिवोपायान्तरपरमेश्वरानुग्रहात्मकादिति। एवमेतदत्र विरुद्धमुक्तमिति पूर्वः पक्षः। अत एव [1]"संस्कारवशाद्यद्वच्चक्रं 'भ्रमति' इत्यादिना, [2]**मायाप्रकरणो**क्तेन सूत्रेण [च] नास्य प्रतिक्षेपः। यतस्तेन कर्मवशोऽसौ प्रश्नो निराकृत.। अत्र तु मलविषयः प्रश्न इति ॥२२–२४॥

सिद्धान्तस्तु — 'एकस्माद्' इत्यादि।

**परमेश्वर उवाच—**

**[3]एकस्मादाशया[4]दन्यं ह्याशयं योऽनुसर्पति।**
**स तेन [5]वासितः क्षिप्रं तन्मयत्वमुपैति हि॥२५॥**
**यथा [6]तथैव सामर्थ्यं प्राप्य शक्तिमयं परम्।**
**तद्वासितो निरुद्धात्मा ध्वस्तकर्माशयोऽपि सन्॥२६॥**

**यथा हि स निरुद्धात्मा** मलेन **वासितः** एव **एकस्मात्** कर्माशयात् कर्माशयान्तरं भोग्यत्वेनोपसर्पति तन्मयो भूत्वा। न तु तेनावासित एव **सन्** अक्षीणकर्मवासनः। दीक्षादिनैव तत्क्षयस्य वक्ष्यमाणत्वात्[7]। ततश्च निरवस्थानाभावात् तस्यात्रोक्तमुपायान्वेषणादि न विरुद्धयते। न च शक्तिपातादेव मोक्षप्रसङ्ग.। श्रेयोदृक्प्रतिरोधमात्रमेव ततो मलस्य निवर्तत इत्युक्तम् — "[8]एतस्मिन्नन्तरे" इत्यत्र। श्रीमत्स्वायम्भुवेऽपि —

[9]"तन्निपातात्क्षरत्यस्य मलं संसारकारणम्।"

न सर्वमेवेत्युक्तम्। अतो नैव विरोधः॥२५–२६॥

अत्र मलसदृश एव दृष्टान्तः — 'हिङ्गुपूर्णम्' इत्यादि।

**हिङ्गुपूर्णं यथा पात्र[10]मुपयुक्तेऽपि न त्यजेत्।**
**तद्वासस्तद्वदेव स्याच्छरीरं मुनिपुङ्गव॥२७॥**
**न च तत्रास्ति तद्द्रव्यं न च वासः [11]प्रहीयते।**
**एवमाहितसंस्कारः पूर्वाशयवशात्पुमान्॥२८॥**
**युज्यते सुखदुःखाभ्यां न चात्यन्तं प्रबाध्यते।**
**[12]शरीरनिरपेक्षत्वा[13]द्विमुक्तो नात्र संशयः॥२९॥**
**नापेक्षते परान्भोगान्निराकाङ्क्षः सदैव हि।**
**रञ्जितः शिवरागेण [14]यावद्देहस्य पर्ययः॥३०॥**

---

[1] मतङ्ग० विद्या० ७. ६० उ०, ६१ पू०.
[2] मतङ्ग० विद्या० ८. ९६ — १०६.
[3] एतस्मादाशयादन्यदाशयो योऽनुसर्पति—मु, ओ.
[4] ०दन्यो ह्याशयोऽनुपसर्पति — ऊ, ऋ.
[5] वासितं — ओ.
[6] तथापि — मु, ओ.
[7] मतङ्ग० विद्या० १३. ३२ वृत्तौ।
[8] मतङ्ग० विद्या० १३. १८—२० वृत्तौ।
[9] स्वायम्भुवे ३२. १७ पू०.
[10] ०मुपयुक्तोऽपि — मु.
[11] प्रतीयते — ऊ, ऋ.
[12] शरीरं निरपेक्ष० — मु, ओ.
[13] ०द्विरक्तो — ओ.
[14] यावद्देहविपर्ययः—मु; यावद्देहस्य संशयः—ऊ, ऋ.

**न यथा** कस्तूरिकादिद्रव्योपयोगेऽपि तद्वासितं वस्त्रादि सुरभ्यर्थिभिर्युज्यते। तथा निवृत्तमलो रूपान्तरपरिणतमलो वा पुरुषो मलाहितसंस्कारवशात् पूर्वकर्माशयवशेन **सुखदुःखाभ्यां** शरीरादि[भि]श्च **युज्यते**। न च तैर्बाध्यते। अत एव परिणतमलत्वतः संसारविरागाद्युत्पादादित्युक्तम् —

"[1]संसारात् स विरज्येत प्रध्वस्तकलुषः सदा।" इति।

अत एव चासौ [2]"अस्ति कश्चिदुपायोऽन्यः" इत्यादिना अत्रोक्तेन क्रमेण लब्धोपायत्वादेव संसारनिरपेक्षोऽसंशयमेव मुक्त इत्युच्यते। **न** चाप्यसौ **परान्** एतच्छास्त्रविहितान् **भोगान्** काम्यानिषिद्धकर्मानुष्ठानेन **अपेक्षते**। येन पुनरप्यमुक्तः स्यात्। **यावच्च देहस्य परितः** सर्वस्माद् **अयः** निवृत्तिः नात्यन्तिकी तावत्, **शिवरागेण रञ्जितः** तद्विषयनित्यानुष्ठानतत्पर इति। तदनुष्ठानान्मनोऽपि प्रत्यवायफलस्याभावान्मुक्त एवेति ॥२७–३०॥

एवं च — 'प्रागेव' इत्यादि।

**[3]प्रागेव परिपक्वं स्याच्छरीरं हि शरीरिणः।**
**किं तु दीक्षात्मकैर्लिङ्गैर्न विना ज्ञायते क्वचित् ॥३१॥**

देहस्य पर्यायात् **प्रागेव** तस्य मलवत् **शरीरम्** अपि **परिपक्वं** न भावान्तरभावित्वेन **स्याद्** इति नान्येन लिङ्गेन ज्ञायते। **किं तु दीक्षात्मकैर्लिङ्गैर्विना न ज्ञायते।** दीक्षादिसंस्कारदर्शनेन दीक्षितस्य तदपश्चिमं जन्म प्रतीयते। दीक्षादीनां तत्कारणत्वेऽपि अविनाभावेनात्र कार्यं प्रति लिङ्गत्वमित्युक्तमनुमानविचारे [4]प्रागेव। श्रूयते च —

[5]"दीक्षिताः परमं शान्तं विशन्ति [च] तनुक्षये।" इति ॥३१॥

यत एवं दीक्षितस्य तदपश्चिमं जन्मेति प्रतीयते — 'तत' इत्यादि।

**ततः प्रवर्तते [6]सर्वो निष्ठान्तो यः शिवोदितः।**
**संस्कारः सर्वजन्तूनां शिव[7]शक्त्युद्धृतात्मनाम् ॥३२॥**

**ततः** शिवशक्तिः दीक्षा, तया समुद्धृतानां दीक्षितानां **सर्वः** दीक्षोत्तरकालभावी यो नित्यनैमित्तिकोऽन्त्येष्टिपर्यन्तः कर्मकलापः परमेश्वरोक्तः **संस्कारः** एव, दीक्षयारब्धकार्यकर्मभोगोपरोधेनाविच्छिन्नानामंशमात्रेण मलादिपाशानां निवृत्तये, व्यक्तये च सर्वविषयस्य शिवत्वस्य **प्रवर्तते**। न निष्प्रयोजनः, नापि जन्मान्तरारम्भक इत्यविरोधः।

[8]यस्तु "शक्तिपातादेव मोक्षः दीक्षात्मकानि तु तज्ज्ञापकानि लिङ्गानि" इत्येतावदनयोः सूत्रयोरर्थ इति व्याचष्टे। सः पूर्वापर[9]सूत्रार्थपरामर्शेन यथाश्रुतमेव सूत्रं गमयन्नुपेक्षणीय एव। यदाहुः[10]—

---

[1] मतङ्ग० विद्या० १०. २५ उ०.
[2] मतङ्ग० विद्या० १३. २०–२२ पू० वृत्तौ।
[3] प्रागेव हि विमुक्तोऽसौ यदा युक्तः शिवेच्छया — मु, ओ.
[4] मतङ्ग० विद्या० ४. ४४ वृत्तौ।
[5] आकरो न लभ्यते।
[6] सर्व — ऊ, ऋ.
[7] ०शक्त्या धृतात्मनाम् — ऊ, ऋ.
[8] यातुः — ऋ.
[9] ०सूत्रार्थपरामर्शत्वेन — ऊ.
[10] श्लोकवार्तिके संबन्धाक्षेपपरि० श्लो. ६३ उ०.

"पौर्वापर्यपरामृष्टः[1] शब्दोऽन्यां कुरुते मतिम् ।" इति ।

पूर्वं हि पतिपदार्थप्रकरणे[2] —

"नाप्रसन्ने प्रभौ यस्माद्द्वारमाप्नोति पुद्गलः ।
मुक्तये गुरुनामानं व्यक्तं वर्त्म सुपेशलम् ॥" इति वाक्येन,

**विद्याप्रकरणादौ**[3] च —

"मन्त्रा. कृत्स्नस्य बन्धस्य छेत्तारः पत्युरिच्छया ।
मायोत्थस्यापि कुशलाः किं पुनः कर्मसन्ततेः ॥" इत्यादिभिर्वाक्यैः,

अस्मिन्नेव च प्रकरणे शक्तिपातादनन्तरम्,

"[4]अस्ति कश्चिदुपायोऽन्यो येन संत्यज्य किल्बिषम् ।
प्राप्यते परमं स्थानं यत्तत्पदमनिर्मितम् ॥"

इति वाक्येनोक्तम् । भोगपदार्थप्रकरणे च "[5]मोक्षो वाथ चतुष्टयात्" इत्यादिभिर्वाक्यैः, तथा "[6]दीक्षानलप्लुष्टमलस्य जन्तोः" इति वाक्येन वक्ष्यति । यथा शक्तिपातादनन्तरमाचार्याभिव्यक्तशिवकर्तृकैर्मन्त्रादिकरणकैश्च दीक्षादिभिरेवोपायैर्मोक्षः सर्वसंहितासु तथैव श्रूयमाणो नान्यत्रान्यथा व्याख्यातुं युक्तः । अत एव दीक्षादेरुपायपदार्थत्वेन संग्रहः कृतः । यदुक्तम्[7] —

"पादत्रय उपायो यः संसारोद्धारकारणम् ।
षष्ठः सोऽभिहितस्तन्त्रे पदार्थः पारमेश्वरे ॥" इति ।

न चात्राप्येषोऽर्थः सुस्पष्टः, यस्तु स दर्शित एव । कथं तर्हि **किरणा**[दौ][8] तीव्रमन्दादिभेदः शक्तिपातस्योक्तः । सोऽपि नैवमर्थः । अपि तु दीक्षितानामपि केषांचित् तिरोभावहेतुषु प्रवृत्तिर्दृश्यते, केषांचिन्नेत्यत्र हेतुत्वेनोक्तः । यस्य हि अतीव्रमलपरिपाकापेक्षया मन्दः शक्तिपातः प्रवृत्तः, तस्य तिरोभावहेतुषु प्रवृत्तिः । यस्य तु प्रकृष्टमलपरिपाकापेक्षया तीव्रशक्तिपातः, तस्य नेत्येवमुक्त इति । ततो[9]ऽन्यस्यार्थस्य सिद्धिः ।

कथं च दीक्षादीनां तल्लिङ्गत्वं, लिङ्गं हि वस्तुतो भवत् स्वसाध्यस्य गमकमिष्यते । यथा शक्तिपातस्यैव मलपरिपाकाव्यभिचारिणः संसारविरागादि इत्युक्तम् —

"[10]संसारात्स विरज्येत प्रध्वस्तकलुषः सदा ।" इति ।

न तु यत् शक्तिपातोत्तरकाल[11]मनुष्ठेयत्वेन चोदितम्; इतरेतराश्रयापातात् । यावद्धि शक्तिपातः प्रवृत्तो न ज्ञातः; न तावद्दीक्षाप्रवृत्तिः । यावच्च न दीक्षात्मकं लिङ्गं, न तावच्छक्तिपातज्ञानमित्यलमेवंविधैः कुविकल्पप्रदर्शनतद्दूषणैः । यदाहुः[12] —

"कुमार्गं न हि तित्यक्षुः पुनस्तमनुधावति ।" इति ॥३२॥

---

[1] ०पर्यपरामृष्टः — ऊ, ऋ.
[2] मतङ्ग० विद्या० ४. ४९.
[3] मतङ्ग० विद्या० ७. ६९ उ०–७० पू०.
[4] मतङ्ग० विद्या० १३. २०.
[5] मतङ्ग० विद्या० २६. ६३ उ०.
[6] मतङ्ग० क्रिया० भुवनदीक्षापटले श्लो० ४०.
[7] मतङ्ग० विद्या० २. २१.
[8] किरणे विद्या० १. २१; ५. ३०.
[9] ०ऽन्यस्यार्थसिद्धिः — ऊ.
[10] मतङ्ग० विद्या० १०. २५ उ०.
[11] ०मनुष्ठेयत्वं न चोदितम् — ऋ.
[12] आकरो न लभ्यते ।

'तस्माद्' इत्यादि।

> **तस्मान्नियतितत्त्वस्य [1]वीर्यं शक्त्युद्धृतं प्रति।**
> **नियामकत्वभावेन [2]न तु सर्पति कर्हिचित्।**
> **[3]नियतिश्च सदा पुंसो भोगाय विसृता पुरा॥३३॥**

तदेवं शक्त्यात्मकशुद्धनियतिविषयोक्तं **प्रति** [4]नास्य **नियतितत्त्वस्य** सामर्थ्यं प्रसरति। एतच्च भोगेष्वेव **पुंसः** नियामकत्वेन प्रवृत्तं पूर्वमेव सर्गकालान्न मोक्षे चेति।

कालनियतितत्त्वयोश्च संभूय भुवनत्वेनावस्थानम्। कालतत्त्वभुवनदर्शनेनास्या अपि भुवनानि भुवनदीक्षायामभेदनियोज्यत्वप्रदर्शनायोक्तानीति न पुनर्दर्शितानि। [5]तत्त्वे च कालतत्त्वादस्य भेदेन विनियोग इति पृथङ्निर्देशः। तथा च योगप्रकरणे [6] —

> "रागतो नियतिः सिद्धा कालश्चैव महामुने।" इति।

भुवनापेक्षया समुच्चयमभिधाय, तत्त्वापेक्षया क्रमं दर्शयति —

> [7]"नियामकत्वाद्बोद्धव्या कालतत्त्वादधः स्थिता।" इति॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः — 'याणोः' इत्यादि।

> **[8]याणोर्नित्यं प्रसक्ता स्थिति[9]विलयवशाद्भोगदा सादरेण**
> **[10]दक्षा [11]भोगान्विभक्तुं समुचित[12]विषयान्न्यायतो [13]नीतिभावात्।**
> **रूपेणात्यन्तशुद्धा विषम[14]तटगता लक्ष्यते या पशूनां**
> **व्याख्यातेयं समासात्प्रथित[15]गुणगणं साम्प्रतं पुं विधास्ये॥३४॥**

**या अणोः** प्रकृतस्य सकलस्यैव[16] सर्वदा भोगदातृत्वे तात्पर्यतः प्रवृत्ता। न तु विज्ञानकेवल्यादीनामित्युक्तम्[17]। यच्च भोगदत्वं [18]तस्या नैकरूपतया। किं तु कर्मानुसारेण किंचिदवस्थापयति। अन्यदुपसंह[र]तीति वैचित्र्येण। अत एव तस्या अपि वैचित्र्यसिद्धि[19]रभ्युपगता। या च **भोगान्** समुचितपुरुषभेदविषयान् कर्तृत्वन्यायतो नियमस्वभावत्वादेव **विभक्तुं** समर्थेत्युक्तम्[20]। या च स्वरूपेण नियमात्मना **अत्यन्तशुद्धा**; न त्वन्यदीयमन्यस्य अशुद्धयोगिवत्

---

[1] कार्यं — ऊ, ऋ.
[2] नानुसर्पति — ऊ, ऋ.
[3] नियतश्चिद्यतः पुंसो — मु; नियतश्चिद्व्रतः पुंसो — ओ.
[4] नाप्यनियति ० — ऊ.
[5] एतच्च — ऊ, ऋ.
[6] मतङ्ग० योग० शिवतत्त्वोपलब्धिपटले — २४ उ०.
[7] मतङ्ग० योग० शिवतत्त्वोपलब्धिपटले — २५ — पू०.
[8] याणोर्नित्यप्रसक्ता स्थिति० — मु, ओ; याणोर्नित्यं प्रसक्तस्थिति० — ऊ.
[9] ०नियमवशाद् — मु. ओ.
[10] शक्ता — मु, ओ.
[11] भोगान्विभक्तुः — मु, ओ.
[12] ०विषया न्यायतो — ओ.
[13] नीतिभावान् — मु.
[14] ०तटघटा — ऊ, ऋ.
[15] ०गुणगणा — मु, ओ; ०गुणगणः — ऊ, ऋ.
[16] अत्र 'सर्वान्' इत्यधिकम् — ऊ, ऋ.
[17] मतङ्ग० विद्या० १३. १–३ वृत्तौ।
[18] तस्यानेकरूपतया — ऊ, ऋ.
[19] ०रप्युपसंहृता यदा भोगान् — ऊ, ऋ.
[20] मतङ्ग० विद्या० १३. ८ उ०–१४ वृत्तौ।

तुर्यांशमपि ददाति, आत्मनो वा स्वीकरोतीत्यर्थः। **या** च विषमकर्ममार्गस्थिता अणूनां **लक्ष्यते**। समे कर्मणि तेषामुद्धारः [1]प्रोक्तो यतः। सा **इयं व्याख्याता** इत्युपसंहारः।

अथ व्याख्येयस्योपक्रमः — प्रथितो दृक्क्रियात्मको नित्यव्यापकादिश्च गुणगणः **पुंपाशेश्वर-प्रकरणे**[2] यस्य, तत् पुरुषतत्त्वतया भोक्तृपदार्थत्वेन प्राक्[3] संगृहीतमत्र प्रसङ्गाद्वक्ष्यामीति ॥३४॥

[इति श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ विद्यापादे त्रिपर्वपदार्थे] नियति[तत्त्व]प्रकरणं [त्रयोदशं समाप्तम्]

त्रयोदशः पटलः

---

[1] मतङ्ग० विद्या० १३. १५–१७ वृत्तौ।

[2] मतङ्ग० विद्या० ६. ४, ५ पू०. वृत्तौ।

[3] मतङ्ग० विद्या० २. १७ उ, १८ पू० वृत्तौ।

# चतुर्दशः पटलः

## पुरुषतत्त्वप्रकरणम्

**अथ पुंस्तत्त्वनिर्देशः [1]स्वाधिष्ठानोप[2]सर्पतः।**

**अथेति** आनन्तर्ये नियतितत्त्वादनन्तरं, पुंसः पशुपदार्थत्वेन [3]संगृहीतस्य, [4]**पुंपाशेश्वरप्रकरणे** च नित्यव्यापकतया प्रबन्धेन विचारितस्यात्र तत्त्वतया त्रिपर्वपदार्थमध्ये एव निर्देशः। एतदुक्तं भवति — दीक्षादौ संस्कार्यो [5]वक्ष्यमाणात् प्रकृतितत्त्वात् श्रीकण्ठभुवनात् प्रोद्धृत्य, पुंस्तत्त्वे योजनीयो [6]वक्ष्यमाणपुंस्त्वविच्छेदाय।

अस्मिन् प्रकरणे पादादिसंबन्धाः [7]प्राग्वदेव द्रष्टव्याः। सौत्रस्तु संबन्धः — "[8]अथाणो." इत्यणुपदेन। पदार्थसंबन्धस्तु पशुपदार्थतया। वाक्यात्मकस्तु — [9]"धर्माधर्मात्मकं पशोः" इत्यादिभिरनेकविधः। [10]तस्य च पशुपदार्थस्य तत्त्वत्वं **स्वे** भोगादौ **अधिष्ठानं** शरीरं, तदर्थम **उपसर्पतः**। न तु विज्ञानकेवलस्य प्रलयकेवलस्य वा॥

यतः — 'न च' इत्यादि।

**न च तत्त्वं मुनिव्याघ्र द्वितीयं पुरुषाह्वयम्॥१॥**

दीक्षया हि तत्त्वान्तरेष्विव एकस्मिन्नेव पुंस्तत्त्वे संयोजनादिसंस्कारः श्रूयते। यदि तु द्वितीयस्मिन्नप्यमौ श्रूयेत, भवेदेव तयोरपि तत्त्वान्तरत्वं लयतत्त्वाद्भोगाधिकारतत्त्वयोरिव॥१॥

तत्तु सकलस्यैव युक्तम्। न तु विज्ञानकेवलस्य, प्रलयकेवलस्य वेत्युच्यते — 'कञ्चुकत्रितयाविद्धम्' इत्यादि।

**कञ्चुकत्रितयाविद्धं कालेन कलितं शनैः।**
**नियत्या[11]लिङ्गितं याति पुंभावेनात्मवर्तिना॥२॥**

यतः तत् पुंस्तत्त्वं कलादिनियत्यन्तेनानेन तत्त्वपञ्चकेन संयुक्तमेव दीक्षादौ पुंस्तत्त्वनिर्देशं **याति**। अस्यामेवावस्थायामत्र संयोजनादि कर्तव्यम्। ततश्च सकलस्यैव तत्त्वत्वम्। [12]न तयोस्तदवस्थात्मनोरपीति॥२॥

---

[1] साधिष्ठानः स वर्णितः — मु.
[2] ०सर्पितः — ओ.
[3] मतङ्ग० विद्या० २. १७, १८ पू० वृत्तौ।
[4] मतङ्ग० विद्या० ६. ४ उ० –४१.
[5] मतङ्ग० विद्या० १५ तमे प्रकरणे।
[6] मतङ्ग० विद्या० १४. २, ३. वृत्तौ।
[7] मतङ्ग० विद्या० तृतीयप्रकरणोपक्रमे प्रोक्तवत्।
[8] मतङ्ग० विद्या० २. १ पू०.
[9] मतङ्ग० विद्या० १३. ५ उ०.
[10] तच्च — ऊ, ऋ.
[11] ०लिङ्गितो — मु, ओ.
[12] नयतोस्तदवस्था० — ऊ ऋ

किं च — 'यस्मात्प्रधानम्' इत्यादि ।

**[1]यस्मात्प्रधानमुत्कण्ठादापूरयति भावितः ।**
**तस्मात्पुंभावसामर्थ्यात्पञ्चावयवलक्षितः ॥३॥**
**पुष्णाति प्रकृतिं यस्मात्तस्मात्पुरुष उच्यते ।**

उत्कण्ठा विद्यते कार्यत्वेन यस्य असौ **उत्कण्ठः** रागः, [2]तस्माद् निमित्तात्, यतश्च पुंस्तत्त्वमलसामर्थ्येन **भावितः** [3]कलादिपञ्चतत्त्वयुक्त एव **प्रधानं** भोग्यत्वेन **आपूरयति**; **प्रकृतिं** च **पुष्णाति** ततोऽपि निमित्तात् स एव पुंस्तत्त्वमित्युच्यते ॥

'तज्जेष्वेव' इत्यादि ।

**[4]तज्जेष्वेवोपभोगेषु पञ्चतत्त्वोपबृंहितः ॥४॥**
**न [5]समर्थोऽन्यथा भोक्तुं दृक्क्रियोऽपि यतः सदा ।**
**[6]अकर्ता निर्गुणः सूक्ष्मो ह्यशक्तश्चेति पठ्यते ॥५॥**

**अन्यथा** यद्युत्कण्ठायोगः, पुंस्त्वं चात्र निमित्तत्वेन नेष्यते, तदा **दृक्क्रियः** अप्रतिबद्धज्ञानशक्तित्वात् पञ्चतत्त्वयुक्तोऽपि प्रधानजभोगविषये **भोक्तुं [न] समर्थः** एव, अपरविद्येशवदिति न पुंस्तत्त्वमुच्यते । तथा पुंस्त्वमलयोगेऽपि यदि पञ्चतत्त्वयोगोऽप्यत्र निमित्तत्वेन नेष्यते, तदानीमसौ अकर्तृत्वादिधर्मयोगात् प्रलयकेवल एव, प्राधानिकान् भोगान् भोक्तुं [न] समर्थ इति, योजनाद्यविषयत्वात् पुंस्तत्त्वान्तररूपत्वेऽपि न पुंस्तत्त्वतया निर्दिश्यत इति द्वयमत्र पुंस्तत्त्वनिर्देशनिमित्तम् । तच्च तस्यैवास्ति, न तयोरपि यतः ॥४–५॥

एवं च — 'सोऽणुः' इत्यादि ।

**[7]सोऽणुः पुंभावमापन्नः प्रधानाशय[8]गोचरम् ।**
**प्राप्याभिलाषमोहेन न च भेदोऽस्ति कश्चन ॥६॥**

यतः **सः** एव पञ्चतत्त्वोपबृंहितः **अणुः** प्रधानशक्तेः प्रकृते**र्गोचरं प्राप्य अभिलाषमोहेन** प्रकृतेः पञ्चपर्वात्मना विपर्ययेण युक्त एव पुंस्तत्त्वनिर्देशं प्राप्तः । **न च** तस्य तदानीं प्रधानाद् **भेदः** प्रकाशते । यदाह पतञ्जलिः —[9] "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति । ततस्तदेवात्र संयोजितस्य पुंस्त्वं दीक्षया शोध्यमित्युक्तं भवति ॥६॥

अथ किमेतत् तत्त्वान्तरवत् तस्मिन् स्वस्थाने स्थितमेव नेत्युच्यते — 'तस्मात्' इत्यादि ।

**तस्मात्सर्वेषु तत्त्वेषु क्षरतोऽस्य विभागकृत् ।**

---

[1] तस्मात् — ऊ, ऋ.
[2] तस्मिन् — ऊ, ऋ.
[3] कालादि० — ऊ.
[4] तज्ज्येष्ठे वोप० — ऊ, ऋ; तेजेष्वेवोप० — ओ.
[5] सामर्थ्योऽन्यथा — ओ.
[6] अकर्तरि गुणः सूक्ष्मे — ऊ, ऋ.
[7] सोऽणुं — ओ.
[8] गोचरः — मु, ओ.
[9] योगसूत्रे २. ५.

**तस्मात्** स्वस्थानादस्य कर्मानुसारेणोर्ध्वाधः प्रतिभुवनं शरीरं [1]वा संचरतस्तत्त्वविषयो विभागः [2]"कलोद्वलितचैतन्य" इत्यादिको भगवता कृतः। [3]तादर्थ्यात्सर्वतत्त्वविभागस्य भगवता निर्मितत्वादस्य संचरतोऽपि प्रकृष्टं तत्त्व[त्व]मित्यर्थः॥

अत्र दृष्टान्तः — 'यथाश्वत्थकणात्' इत्यादि।

> **यथाश्वत्थकणात्क्षुब्धात्सर्वतः प्रवि[4]भागतः ॥७॥**
> **[5]त्वक्पर्णमूलशाखादिविभागोऽस्य पृथक् पृथक्।**
> **तद्वत्सृष्टिविभागः[6] स्यात्तत्त्वानां मुनि[7]पुङ्गव ॥८॥**
> **प्रकरोति महादेवः [8]स्वतन्त्रः परमेश्वरः।**

**यथा** अस्यैव पुरुषस्योपकाराय अश्वत्थादिबीजात् त्वक्पत्रादिविभागो भवति। एवमस्यैवोपकाराय सर्वतत्त्वानां विभागो [9]यः, तं भगवान् करोतीति॥

तथा हि — 'स्थूलम्' इत्यादि।

> **स्थूलं मायासमुद्भूतं तत्त्वं प्रकृति[10]संज्ञकम् ॥९॥**
> **हार्यं कार्यं च धार्यं [11]चाप्यस्वतन्त्रमचेतनम्।**
> **[12]पुरुषापूरणाद्व्यक्तं [13]पुंरागाकुलितं सदा ॥१०॥**
> **तयोर्योगाज्जगत्कृत्स्नं ब्रह्माद्यं सचराचरम्।**
> **व्यक्तिमायाति विस्पष्टं [14]कारणेच्छासमीरितम् ॥११॥**

[15]वक्ष्यमाणं तावत् **प्रकृतिसंज्ञकं तत्त्वं** मायातः परमकारणात् कलाव्यवधानेन विद्यादिवद् **उद्भूतम्** इत्युक्तम् —[16]

"प्रधानमपि मायोत्थं [17]कलातः स्थूलतां गतम्"। इति।

श्रीमद्रौरवेऽपि[18] —

"[19]कलातत्त्वाद्रागविद्ये द्वे तत्त्वे संबभूवतुः।" अव्यक्तं च" इति।

तच्च पुरुषोपकारायैव संहार्यं मध्यमोत्तमप्रलययोः, **कार्यं च** तयोरुपसंहारे, **धार्यं च** आकल्पं

---

[1] 'वा' इति नास्ति — ऋ.
[2] स्वायम्भुवे — ३२. १०, ११; कालोद्वलित० — ऊ, ऋ.
[3] तादर्थ्ये सर्व० — ऋ.
[4] ०भागशः — ऊ, ऋ.
[5] तत्पुत्रमूल० — मु, ओ.
[6] ०त्सृष्टेर्विभागः — मु, ओ.
[7] ०सतम — मु, ओ.
[8] स्वभावः — ऊ, ऋ.
[9] यस्ते भगवान् — ऊ, ऋ.
[10] ०संज्ञितम् — ऊ, ऋ.
[11] च अस्वतन्त्र० — ऊ, ऋ.
[12] पुरुषस्फुरणाद्व्यक्तं — मु; पुरुषस्मरणाद्व्यक्तं — ओ.
[13] पुमान् रागाकुलस्सदा — ऊ, ऋ;
[14] कारणैश्च समी० — मु, ओ.
[15] मतङ्ग० विद्या० १५. १—१३.
[16] मतङ्ग० विद्या० ८. ५५ उ०.
[17] कालत. — ऋ.
[18] रौरवे विद्या २. १५.
[19] कालतत्त्वाद् — ऋ.

प्रकृत्यापूरणेन। अत एव न नित्यमिति तत्प्रकरणे [1]वक्ष्यामः। तच्च रागाकुलत्वेनोपलक्षितपुरुषोपकारायैव गुणबुद्ध्याद्यात्मना **व्यक्तम्**। यतः प्रकृतिपुरुषसंयोगादेवैतत् प्राकृतं **जगद् ब्रह्मण आद्यं** श्रीकण्ठभुवनादि ब्रह्मा चाद्यो यस्य कालाग्निभुवनादेः, तत्सर्वं स्थावरजङ्गमं **व्यक्तिमायाति** ।।९–११।।

अत एव — 'तयोरन्योन्य' इत्यादि।

**तयोरन्योन्यसंयोगात्साध्यसाधनकल्पना।**
**जगतः शक्यते वक्तुं नान्यथा तु कदाचन ।।१२।।**
**[2]यत्पुमान्दृक्क्रियामात्रः प्रधानोपरतः सदा।**
**प्रधानमपि सूक्ष्मत्वात्सत्तामात्रं स्वभावतः ।।१३।।**
**तद्भोगेषु समासक्तो भोगी [3]समुपलक्ष्यते।**
**भोग्यत्वादपि तत्त्वं [4]तत्प्रधानमुपलक्ष्यते ।।१४।।**
**एवमन्योन्यसंयोगादुभयोरपि तत्त्वयोः।**
**साध्यसाधनधर्मित्वमित्युक्तं युक्तितो मया ।।१५।।**
**अनादिराशयोपेतः प्रेरितश्च कलादिना।**
**भोक्तेत्येवं[5] पुमान्प्रोक्तो[6] भुङ्क्ते प्रकृतिजान्गुणान् ।।१६।।**
**अस्वतन्त्रः [7]पुमान्यस्मात्प्रकृतिश्चाप्यचेतना।**
**तयोर्योगः कृतो धात्रा देवदेवेन शक्तिभिः ।।१७।।**
**युक्तस्तन्मयतामेति [8]यतोऽधः संस्थितोऽप्रभुः।**

[प्रकृतिपुरुषयोः संयो]गादेव **जगतः** जन्मवज्जन्तुचक्रस्योत्प[त्तिरित्युदि]तं **पुंपाशेश्वरप्रकरणे**[9]। **अन्यथा** हि प्रलयावस्थायां पुरुषो मलावृतत्वाद् **दृक्क्रियामात्रः** एव प्रधानात्मनि मध्यमप्रलये सदैव मृतकल्पः, **प्रधानमपि** शक्तिमात्रत्वेनावस्थितेः। भोग्यभोक्त्रादिव्यवहाराभावे भोक्तृत्वेन या पुंसः सिद्धिः, भोगान्वयाच्च प्रधानस्य, भोग्यभोक्त्रोश्चास्वतन्त्रत्वादीश्वरस्य या [10]**पुंपाशेश्वरप्रकरणे** प्रोक्ता, सा नोपपद्यत एवेति, प्रकृतियुक्त एव पुरुषः साध्यसाधनप्रतिपत्तिमयत्वात्ततः **अधः** संस्थितः। वियुक्तः साध्यसाधनेऽत्र **अप्रभुः** एवेति ।।

तदेवम् — तत्तत्त्वम् इत्यादि।

**तत्तत्त्वं तत्त्वसन्ताने पुमाख्यं परिकीर्तितम् ।।१८।।**

सकलात्मकमेव भोक्तृरूपत्वेन व्यवस्थापकत्वव्यवस्थाप्यत्वाच्च **तत्त्वसन्ताने** पुंस्तत्त्वशब्देनोच्यते। न तु विज्ञानकेवलादि तदवस्थारूपमपीति ।।१८।।

---

[1] मतङ्ग० विद्या० १५. ५ उ०, ६ वृत्तौ।
[2] तस्मात्पुंदृक्क्रियामात्रः — मु, ओ.
[3] पुमुपलक्ष्यते — मु, ओ.
[4] स्यात्प्रधान० — मु, ओ.
[5] एव — ओ.
[6] . . . भुक्तौ — ऊ, ऋ.
[7] पुमानस्मात् — मु, ओ.
[8] यतोऽयं संस्थितः प्रभुः — मु, ओ.
[9] मतङ्ग० विद्या० ६. ९७ उ०, ९८ वृत्तौ।
[10] भोक्तृत्वेन पुंसः सिद्धिः मतङ्ग० विद्या० ६. १२, १३ पू०, १५ उ०, १८ उ०, १९ पू०, ३५, ४२ वृत्तौ; प्रधानस्य भोगान्वयात्सिद्धिः मतङ्ग० विद्या० ६. ४४, ४८, ६२, ६३ पू० वृत्तौ; भोग्यभोक्त्रोश्चास्वतन्त्रत्वादीश्वरसिद्धिः मतङ्ग० विद्या० ६. ८८ उ०–९०, ९२–९५ वृत्तौ।

यद्येव पुंस्तत्त्वस्य सर्वत्र मंत्ररतो व्यापकत्वात् संभवे पृथिवीतत्त्वे एव, कालाग्निभुवने वा असौ पुंस्त्वलक्षणो मोहः क्षपित इति, कथमत्र प्रकृतेरप्यन्येव तच्छोधनाय व्याप्तिर्वर्ण्यत इत्युच्यते — 'प्रकृतेरपि' इत्यादि।

**प्रकृतेर[1]प्यनानात्वं शरीरस्यानुरूपतः।**
**प्रदीपमात्रवद्योगात्स्थूलसूक्ष्म[2]विभागशः।**
**व्याप्तिस्तस्य सदा ज्ञेया वैश्वरूप्यान्महामुने ॥१९॥**

पृथिव्यादेरिव **प्रकृतेरपि अनानात्वलक्षणो** मोहः पुंसो विद्यत एव। ततश्च **वैश्वरूप्याद्** व्यापकत्वात् पुंसः सर्वत्र संचाराद्वा यतः प्रकृतिगतमप्यनानात्वं विद्यते। ततश्च तन्निवर्तनायात्र **व्याप्तिः** दीक्षायां सर्वदा **ज्ञेया**। न च पृथिवीतत्त्वे एव कथं तदप्यनानात्वं दीक्षया न च तस्य धावर्तित्वन इत्याशङ्कनीयम्। यतः **शरीरस्यानुरूपतः** तद्भवति। कार्यकारणाद्यविवेको मोहो यतः[3]। तानि च सर्वहितार्थविद्योतकान्येव प्रदीपादिवत्। यदाहुः[4] —

"एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥" इति।

न च यः स्थूलः पृथिव्याद्यारब्धः स्थूलशरीरविषयतयैवानानात्वप्रतिपत्त्यात्मकस्तैर्मोहो व्यक्तः, स सूक्ष्मः प्रकृतिविषयोऽपि व्यक्तो भवति सूक्ष्मस्थूलयोर्विभागेनैवावस्थानादिति, अत्र सूक्ष्मविषयमोहव्यावर्तनाय व्याप्तिरुक्तेत्यविरोधः ॥

पुंस्तत्त्वस्यापरिणामित्वेन [5]प्राक् प्रतिपादितत्वाद्भुवनविभागोऽत्रासंभवादेव नोक्तः। कथं तर्हि **स्वायंभुवा**दावुक्तः। अत एव [न] तदात्मन्यसौ। अपि तु सा तत्स्थानविषये प्रकृत्यात्मन्येव। तद्भुवनविभागशुद्ध्या पुंस्तत्त्वशुद्धिः; तच्छुद्ध्या तच्छुद्धिरिति प्रदर्शनाय तन्न विरोधः। अत एवाह भुवनदीक्षायामप्येतत्स्वरूपेणैव शोध्यमन्यथा शुद्ध्यनुपपत्तेरिति ॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः—'अस्यात्मन' इत्यादि।

**अस्यात्मनस्तत्त्वविभागसंस्था यया स भोक्तेति [6]समर्थितः स्यात्।**
**सेयं मया ते कथिता यथावद्भोग्यं जगत्तच्च विधौ[7] विधास्ये ॥२०॥**

**अस्य** पशुपदार्थत्वेन [8]प्राक् संगृहीतस्य **आत्मनः** तत्त्वक्रमे व्यवस्था **कथिता**। **यया स भोक्ता** आत्मैव पशुतत्त्वशब्देन **समर्थितः स्यात्**। न तु विज्ञानकेवलादिरिति व्याख्यातोपसंहारः। **भोग्यं जगदि**त्यादिना व्याख्येयोपक्रमः। प्राकृताज्जगद्धेतुत्वाद् **जगत्** प्रकृतितत्त्वं तदध्वविधौ वक्ष्यामीति ॥२०॥

[इति श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ विद्यापादे]
पशुपदार्थसंगृहीतपुरुषतत्त्वप्रकरणं [चतुर्दशं समाप्तम्]
**चतुर्दशः पटलः**

---

[1] ०प्यनन्तत्वात् — मु, ओ.
[2] ०विभागतः — मु, ओ.
[3] 'यतः' इत्यनन्तरं किंचिद्ग्रन्थपातः स्यादिति भाति।
[4] सांख्यका० ३६.
[5] मतङ्ग० विद्या० २. २ उ०, ३; ६. ८४ वृत्तौ।
[6] समर्थितात्मा — मु, ओ.
[7] ०द्योग्यं जगत्तत्त्वविधौ — ऊ, ऋ.
[8] मतङ्ग० विद्या० २. १७, १८ पू० वृत्तौ।

# पञ्चदशः पटलः

## अव्यक्ततत्त्वप्रकरणम्

**अथ रुद्रा [1]महात्मानो [2]योगियोगेश्वराः शिवाः।**
**[3]सूक्ष्माः सूक्ष्मतराः सन्तः [4]प्रक्रीडन्त्यध्वसंस्थिताः ॥१॥**
**श्रीकण्ठश्च महातेजाः सर्वरुद्राग्रनायकः।**

**अथेति** आनन्तर्ये, पुंस्तत्त्वादनन्तरमध्वक्रमापेक्षया त्रिपर्वपदार्थैकदेशभूतम् **अव्यक्तमिति** [5]वक्ष्यमाणेनान्वयः। पदार्थादिसंबन्धाश्चात्र नियतितत्त्वप्रकरणवद्वेदितव्याः। वाक्यात्मकस्तु —

"[6]स्थूलं मायासमुद्भूतं तत्त्वं प्रकृतिसंज्ञितम्।" इत्यादिनानेकविधः।

अत्र चाव्यक्तस्वरूपमनुक्त्वैव यद् भुवनेशानां रुद्राणां स्वरूपवर्णनं तत्, श्रीकण्ठनाथस्य प्राधान्यज्ञापनार्थम्। यथा हि [7]"क्षोभितोऽनन्तनाथेन ग्रन्थिर्मायात्मकः" [इति मायाक्षोभ उक्तः, तथाव्यक्तक्षोभः] श्रीकण्ठनाथस्यात्रोच्यते। ननु प्रकृत्यादेरप्यस्य जगतो मायाकार्यत्वेनोक्तत्वाद् अनन्तेश एव सर्गसंहारयोः [8]कर्तेत्युक्तम्। सत्यम्। आद्यभाविनोरेव महाप्रलयोपसंहारोप[9]क्रमयोः। मायागर्भाधिकारिणां हि **मायाप्रकरणे** सकलत्वेनोक्तत्वात्[10], श्रीकण्ठनाथस्य च तद्रूपत्वेनादिसर्गकाले स्वरूपस्यैवासिद्धिर्यतः। मध्यम[11]प्रलयोपसंहारोपक्रमयोः श्रीकण्ठनाथस्यैव, अधमप्रलयोपसंहारोपक्रमयोर्ब्रह्माण्डान्तर्भुवनेषु ब्रह्मण एव। यद्वक्ष्यति[12] —

"प्रबुद्धोऽहर्मुखे स्वाक्ये श्रीकण्ठोऽनन्तविक्रमः।" इति।

ते च **रुद्राः** शिखेदाद्याः क्रोधेशान्ता अष्टावत्र भुवनेशत्वेन **गुणप्रकरणे** वक्ष्यमाणाः[13]। यद्वक्ष्यति[14] —

"प्रधानतत्त्वे प्राधान्यं तेषां श्रीकण्ठनिर्मितम्।" इत्यादि।

अव्यक्तमेव च यथा प्रधानशब्देनात्रोच्यते तथात्रैव [15]भविष्यति। **महात्मानः** प्रकृष्टज्ञानादियुक्ताः। योगिनां च गुणभुवनवासित्वेन [16]वक्ष्यमाणानां योगेश्वराः। यद्वक्ष्यति **गुणतत्त्वप्रकरणे**[17] "योगिनो योगवीर्येण" इति। **शिवाश्च** शुद्धाः, **सूक्ष्माः सूक्ष्मतराश्चे**ति अणिमादिगुणयुक्ताः।

---

[1] महाभागा — ऊ, ॠ.
[2] योग० — ऊ, ॠ; योगी० — ओ.
[3] सूक्ष्मासूक्ष्म० — ॠ; सूक्ष्मात्सूक्ष्म० — ओ.
[4] प्रक्रीडत्तत्त्वसंस्थिताः — मु; प्रक्रीडं तत्त्वसंस्थिताः — ओ.
[5] मतङ्ग० विद्या० १५. ३ उत्तरार्धे वक्ष्यमाणेन।
[6] मतङ्ग० विद्या० १४. ९ उ०.
[7] मतङ्ग० विद्या० ९. २ पू०.
[8] मतङ्ग० विद्या० ५. २८ उ०–७३, विद्येशशक्तीनां व्यापारवर्णनावसरे।
[9] ०क्रमरूपयोः — ऊ, ॠ.
[10] मतङ्ग० विद्या० ८. ७६ उ०–७९ पू० वृत्तौ।
[11] ०प्रलयोपसंभवोपक्रमयोः — ऊ, ॠ.
[12] मतङ्ग० विद्या० १६. १ उ०.
[13] मतङ्ग० विद्या० १६. ६–९ पू० वृत्तौ।
[14] मतङ्ग० विद्या० १६. ५ उ०.
[15] मतङ्ग० विद्या० १५. ५. उ०, ६ पू०.
[16] मतङ्ग० विद्या० १६. २७–३१ पू०.
[17] मतङ्ग० विद्या० १६. ३२ पू०.

**श्रीकण्ठो**ऽपि तथाभूत एव । किं तु **महातेजाः**; यतस्तेषामधोवर्तिनां च रुद्राणां नायकः । अतस्ते तदिच्छातश्चेष्टन्ते इति ॥

'तस्य' इत्यादि ।

**तस्योर्ध्वभागे भुवनं चारु सर्वगुणालयम् ॥२॥**
**स नाथोऽव्यक्तरूपी [1]स्याद्व्यक्तः स्वेच्छाविधायिनः ।**

श्रीकण्ठनाथस्य **गुणप्रकरणे** योगिमध्यस्थत्वेन [2]वक्ष्यमाणत्वात्, तेभ्यः **ऊर्ध्वभागे** अत्राव्यक्तात्मनि **तस्य भुवनम्** । न तु क्रोधेशादीनाम् । अपि त्वध एव । यतस्तस्मिन् अव्यक्ते रूपमाकारः शरीरमस्यास्तीति एवम् **अव्यक्तरूपी** कथ्यते । स च तथाभूतः **स्वेच्छाविधायिनः** शिवाद् **व्यक्तः** सकलत्वेऽपि [3]कलाभुवनेशवच्छिवनियुक्तः । न त्वनन्तनियुक्त इत्यर्थः ॥

एवमव्यक्तभुवनवासित्वेऽप्यस्याव्यक्ताधिपतित्वे तद्भुवनवासिभ्यो विशेषं प्रतिपाद्य, इदानीमव्यक्तस्वरूपमुच्यते — 'अव्यक्तम्' इत्यादि ।

**अव्यक्तमखिलस्यास्य [4]जगतो जन्मकारणम् ॥३॥**
**[5]संक्षोभ्य शक्तिकिरणैर्व्यक्तिं नयति तत्क्षणात् ।**
**व्यक्तस्य वृत्तयस्तिस्रो [6]विततः सर्वगोचराः ॥४॥**

**अस्य** गुणादिपृथिव्यन्तस्य तत्त्वभुवनात्मनो **जगतः जन्मकारणं** यत्तद् **अव्यक्तम्** उच्यते । तच्च स्वशक्तिभिः **संक्षोभ्य** असौ नाथो **व्यक्तिं नयति** । **व्यक्तस्य** च तस्य सत्त्वादि[7]गुणात्मिकाः **तिस्रः वृत्तयः विततः** समस्तकार्यान्वियिन्यः समस्तपुरुषभोग्याश्च भवन्तीति ॥३–४॥

ननु सत्त्वादिवृत्तय एव अव्यक्तमिति सांख्याः । तदयुक्तम् । यतः — 'तासाम्' इत्यादि ।

**तासां या परमा काष्ठा तत्प्रधानमिहोच्यते ।**

सत्त्वादिवृत्तीनामचैतन्ये सत्यनेकत्वाद्घटादीनामिव अवश्यमविभागावस्थात्मना कारणेन भवितव्यम् । यत्तत् कारणं **तत्** तत्सत्त्वादिगुणव्यतिरिक्तं **प्रधानम्** इति ॥

अथ अव्यक्तशब्देनोक्तप्रधानशब्दवृत्तौ हेतुरुच्यते — 'प्रतिसंचारम्' इत्यादि ।

**प्रतिसंचारमापन्नं जगदेतद्गुणात्मकम् ॥५॥**
**[8]प्रकृत्या धारितं [9]शक्ते स्वोदरे [10]विनिपात्य तु ।**
**[11]तस्मात्प्रधानशब्देन तत्त्वमुक्तं सनातनम् ॥६॥**

---

[1] स्याद्व्यक्तस्वेच्छा० — मु, ओ.
[2] मतङ्ग० विद्या० १६. २५, २६ वृत्तौ ।
[3] मतङ्ग० विद्या० ९. ४२ उ०, ४३ पू० वृत्तौ ।
[4] जगतः सृष्टिकारणम् — मु, ओ.
[5] स्वशक्तिकिरणैः क्षोभ्यं व्यक्तिं — मु, ओ.
[6] विसृताः — मु; विस्रस्ताः — ओ.
[7] ०गुणात्मकाः — ऊ, ऋ.
[8] प्रकृष्य धारितुं — मु, ओ.
[9] शक्तं — मु; शक्ता — ओ.
[10] विनिपद्य — मु; विनिपाद्य — ओ.
[11] तत्तत्प्रधान० — ऊ, ऋ.

**प्रतिसंचारम्** उपसंहारं प्राप्तं **जगत्** शक्तिरूपं प्रतीयतेऽस्मिन्निति अव्यक्तमेव **प्रधानशब्देन** उच्यते। तच्च **सनातनमिति** न नित्यमेव। कलाकार्यत्वेन **मायाप्रकरणे** प्रतिपादितत्वात्। यदुक्तम्[1] —

"प्रधानमपि मायोत्थं कलातः स्थूलतां गतम्।" इति।

अपि तु गुणादीनामिव मध्यमप्रलयसर्गयोर्विनाशाभावेन महाप्रलयं यावदविनश्वरमित्यर्थः ॥५–६॥

अत एव येऽस्य नित्यत्वमिच्छन्ति तेषां प्रतिक्षेपः — 'अस्मात्परम्' इत्यादि।

**अस्मात्परं नास्त्यपरं येषां भावः प्रतिष्ठितः।**
**न ते मुक्ता मुनिव्याघ्र पुनरायान्त्यधोमुखाः ॥७॥**

यदाहुः पाञ्चरात्राः[2] —

"भगवान् वासुदेवोऽसौ गुणेभ्यः प्रकृतिः परा।
अव्यक्तं नित्यमाहुस्तं परमस्मान्न विद्यते ॥" इति।

एवं **येषां** वादिनामभिप्रायः प्रतिष्ठां प्राप्तः, **न ते मुक्ताः**। किं तु भ्रान्तितः प्रकृतिष्वात्मबुद्ध्या लीना इति प्रकृतिषु परिणमन्तीषु पुनरावर्तन्त एव ॥७॥

किं चैवंभूतं तदव्यक्तमित्युच्यते — 'स्वव्यापार' इति।

**स्वव्यापारावसाने तु ब्रह्मा लोकपितामहः।**
**यस्मिँल्लयमवाप्नोति श्रीकण्ठेच्छासमीरितः ॥८॥**

ब्रह्मा आदिर्यो लोकानां भूरादीनां सप्तानां [3]वक्ष्यमाणानां **पितामहः** स्रष्टा। न तु [4]वक्ष्यमाणयोगिमध्ये, [5]देवयोनिमध्ये वा पठित इत्यर्थः। तस्य यः स्वो व्यापारोऽण्डान्तर्व्यवस्थितलोकविषये स्वदिनरात्रयोः सर्गसंहारादिको [6]वक्ष्यमाणः, तस्य अवसानं ब्राह्मेण मानेन वर्षशतान्तं तस्मिन् प्राप्ते। पितामह इत्युपलक्षणम्। सर्वे एव तदध्वभोक्तारः पुरुषाः, क्षित्यादिगुणान्तव्यवस्थितस्य तत्त्वभावभूतभुवनात्मनः सर्गस्योपसंहृतत्वात् स्थूलशरीराभावेन सूक्ष्मशरीरमात्रसंबन्धाः यत्र श्रीकण्ठनाथनिशाकाले तदानीं लयं यान्ति; तद् अव्यक्तस्वस्थानाभ्यां तृतीयस्मिन् स्थानेऽवस्थानम्। यदाहुर्वेदान्तविदः[7] —

"अव्याकृतं तृतीयं स्याद्यमाहुर्बहुधानकम्।
[8]यत्र तिष्ठन्त्यणीयांसः क्षेत्रज्ञाः कर्मभिः सह ॥" इति।

अत एव तदनित्यम्; सभागत्वाद्घटादिवदिति। श्रीकण्ठनाथस्य त्वेवं [9]स्वमानेन वर्षसहस्रान्ते

---

[1] मतङ्ग० विद्या० ८. ५५ उ०.
[2] आकरो न लभ्यते।
[3] मतङ्ग० विद्या० २३. ४७ उ०–५६.
[4] मतङ्ग० विद्या० १६. २७–३४ पू०
[5] मतङ्ग० विद्या० १७. १६–२०.
[6] मतङ्ग० विद्या० २५. २५–२८ पू० वृत्तौ।
[7] आकरो न लभ्यते।
[8] परमोक्षनिरासकारिकायां द्वितीयकारिकावृत्तिमनुसृत्यात्र पाठः शोधितः।
[9] समानेन वर्षशतान्ते — ऊ, ऋ; मतङ्ग० विद्या० २५. ५३ पू० वृत्तिमनुसृत्य पाठः शोधितः।

मायोपसंहारो महाप्रलयस्य कथ्यते। स एव शुद्धाध्वनोऽप्युपसंहारकाल इति प्रोक्तः[1] पतिपदार्थे एवेति ॥८॥

ततश्च — 'श्रीकण्ठस्यापि' इत्यादि।

**श्रीकण्ठस्यापि नाथस्य संप्राप्याहर्मुखं विराट्।**
**व्यक्तिमायाति सहसा प्रबुद्धः स्वेन तेजसा ॥९॥**
**[2]ततः करोति विविधां सृष्टिं क्षेत्रज्ञभोगदाम्।**

श्रीकण्ठनाथस्यापि संबन्धी योऽहर्मुखः तन्निशाव्यापारोपरमः, तं प्राप्य, अन्यो ब्रह्मा श्रीकण्ठेच्छासमीरितः एवं **व्यक्तिं** विशिष्टप्रबोधाध्यात्मिकाम् **आयाति**। **ततः** असौ ब्रह्मा श्रीकण्ठनाथश्च स्वे स्वे विषये **सृष्टिं** च **करोति**॥

ततः श्रीकण्ठनाथसृष्टिः — 'सत्त्वम्' इत्यादि।

**सत्त्वं रजस्तमश्चेति गुणाः [3]स्वस्वप्रवृत्तिषु ॥१०॥**
**प्रवृत्ताः सम्यगि[4]त्युक्ता [5]विशेषान्तव्यवस्थया।**

एवं श्रीकण्ठनाथाख्येन तावदव्यक्तात् सत्त्वादयो **गुणाः** स्वासु स्वासु प्रवृत्तिषु बुद्ध्याद्यासु **विशेषान्तव्यवस्थया** ब्रह्माण्डं यावत् प्रवृत्ताः॥

ब्रह्मसर्गेऽपि गुणा एव — 'लक्ष्यन्त' इत्यादि।

**लक्ष्यन्ते सुरमानुष्यतिर्यग्जातिष्ववस्थिताः ॥११॥**

यदाहुः —

[6]"अष्टविकल्पो दैवस्तैर्यग्योनश्च[7] पञ्चधा भवति।
[8]मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥" इति ॥११॥

एवं च — 'प्रसरणाकुञ्चनाभ्याम्' इत्यादि।

**[9]प्रसरणाकुञ्चनाभ्यां प्रधानस्य महात्मनः।**
**सर्गः [10]प्रसरणं प्रोक्तः प्रतिसर्गोऽप[11]सर्पणम् ॥१२॥**

प्रधानस्य प्रवृत्त्या ये गुणा लक्ष्यन्ते, तदभावे च न लक्ष्यन्ते। ततस्ते कार्या एवेति ॥१२॥

---

[1] मतङ्ग० विद्या० ३. २९–३३ वृत्तौ।
[2] ततश्चकार विविधां — मु, ओ.
[3] स्वासु प्रवृत्तिषु — ऊ, ऋ.
[4] ०त्युक्तं — ऊ, ऋ.
[5] विशेषान्तं — मु, ओ.
[6] सांख्यका० ५३.
[7] ०स्तिर्यग्योनिश्च — ऊ, ऋ.
[8] मनुष्य० — ऊ, ऋ.
[9] प्रसारणा० मु, ओ.
[10] प्रसारणं प्रोक्तं — मु, ओ.
[11] ०सर्पिणम् — मु, ओ.

अथ अव्यक्त[तत्त्वस्य] प्रतिपादितस्योपसंहारः — 'एवंविधम्' इत्यादि।

**एवंविधं प्रधानं [1]तद्ब्रह्मणा सहितं पुरा।**
**श्रीकण्ठकिरणाघातं क्षोभमाया[2]त्यसंशयः॥१३॥**

अतश्च मध्यमप्रलयोपसंहारोपक्रमकाल एव ब्रह्मणः सर्गप्रलयकाल इति सिद्धम्॥१३॥

अत्र पराभिप्राय[मनूद्य खण्डयति] 'ईषदुन्मीलनम्' इत्यादि।

**[3]ईषदुन्मीलनं सत्त्वं [4]प्रवृत्ती रजसः [5]स्मृता।**
**[6]निवृत्तिस्तमसो वृत्तं [7]यतस्तेभ्यो न विद्यते॥१४॥**
**पृथक्तत्त्वं प्रधानाख्यमतः [8]सर्वं गुणात्मकम्।**
**महदादि महत्कार्यं कारणेभ्योऽपि लक्षणम्॥१५॥**

**उन्मीलनं** कार्यस्य प्रकाशनसामर्थ्यं सत्त्व[9]वृत्तित्वात् **सत्त्वं**, कार्याय **प्रवृत्तिश्च रजसः**, ततो **निवृत्तिस्तमसः** इति सत्त्वादिवृत्तित्वं कार्योन्मीलनादीनां सिद्धमेव। यतश्चाव्यक्तेऽपि ता भवद्भिरभ्युपगम्यन्ते। अन्यथोपादानत्वायोगात्। **अतः** तदपि **गुणात्मकमेव** बुद्ध्यादिवत्। एवं मायादीनामपि वाच्यम्। अतो गुणा एव परमकारणस्योपलक्षणम्। महान् बुद्धिः, तस्या आदि यद् गुणतत्त्वं, तच्चातिमहत् समस्तस्वकार्यव्यापकत्वात्। **कार्यं** च अचैतन्ये सत्यनेकत्वादित्युक्तम्। तच्च कार्यत्वादेव स्वकारणस्याव्यक्तस्योपलक्षणं गमकमिति। अतश्चाव्यक्तं गुणात्मकमित्ययं पक्षोऽत्र तावदनुमाननिराकृत इत्यर्थः॥१४–१५॥

हेतुरप्यत्रासिद्ध इत्युच्यते — 'प्रवृत्तिः' इत्यादि।

**प्रवृत्तिरसतो यस्मान्नेष्यते [10]मुनिपुङ्गव।**

**प्रवृत्ति**शब्दोऽत्र सत्त्वादिवृत्तित्वेन [11]प्रागुक्तायाः सर्वस्या वृत्तेरुपलक्षणम्। एषा कार्यप्रकाशाद्या वृत्तिः **यस्मादसतः** अर्थक्रियायामक्षमस्य **नेष्यते**। अयमर्थः — यदि प्रकाशादिवृत्तिः कार्यजननादिस्वभावा उच्यते, तदा कारणधर्म एव सा स्यात्। न तु सत्त्वादिवृत्तिः। रजस्तमसोरपि स्वकार्यजननदर्शनात्। स्वतो हि तयोः स्वकार्यजननसामर्थ्याभावे सहकारिसत्त्वादिसंनिधावपि असमर्थत्वात् पुरुषवदिति रजस्तमसोरकारणत्वप्रसङ्गः। तस्मादन्ये एवामी कारणधर्माः कार्यजननतद्रूपापत्तिनियमलक्षणाः; ये गुणेष्वपि कारणधर्मत्वा[12]द्विद्यन्ते। गुणधर्मास्त्वन्ये एव 'स्थैर्यं वैर्यं लघुदार्क्ष्यम्' इत्यादिना [13]**गुणप्रकरणे** वक्ष्यमाणाः। ये सर्वभुवनेषु सूक्ष्मदेहवत्सु गुणधर्मतया संवेद्यन्ते इति कुतः सर्वस्याव्यक्तादेरपि गुणात्मत्वसिद्धिरिति॥

---

[1] तं ब्रह्मणा सहितः पुरा — ऊ, ऋ.
[2] ०त्वसंशयम् — ऊ, ऋ.
[3] ईषदुन्मीलितं — मु, ओ.
[4] प्रवृत्तं — मु.
[5] स्मृतम् — मु; स्मृतः — ओ.
[6] संहारस्तमसो — मु, ओ.
[7] यतस्तस्मान्न — मु, ओ.
[8] सर्वगुणात्मकम् — मु, ओ.
[9] ०वृद्धित्वात् — ऊ, ऋ.
[10] मुनिसत्तम — मु, ओ.
[11] मतङ्ग० विद्या० १५. १४ श्लोकोक्तायाः।
[12] ०द्विपद्यन्ते — ऊ, ऋ.
[13] मतङ्ग० विद्या० १६. १७ उ० वृत्तौ।

'युगपद्' इत्यादि ।

**युगपच्चललतस्तस्य [1]स्थूलात्स्थूलतराण्यतः ॥१६॥**
**[2]गुर्वनुक्रमसिद्धानि [3]विशेषान्तानि कालतः ।**
**[4]तत्त्वानि तत्त्वमार्गेऽस्मिन्सूक्ष्मात्सूक्ष्मतराण्यतः[5] ॥१७॥**
**प्रतिलोमात्प्रसिद्धानि [6]योक्तव्यानि समासतः ।**

यनश्चाव्यक्तमेवात्र कारणमुक्तम् । अतः **तस्य युगपदेव** सृष्टिक्रमेण क्षोभमुपगच्छतः गुणादि-महाभूतान्तानि स्थूलस्थूलतरभेदेन **तत्त्वानि** भवन्ति । अत एव च संहारक्रमेण दीक्षादौ प्रयोक्त-व्यानीति ॥

एवमव्यक्तस्यात्र तत्त्वधर्म प्रतिपादितमुपसंहृत्य, भुवनधर्मो वक्तव्यतया प्रतिज्ञायते — 'तत्त्वम्' इत्यादि ।

**तत्त्वं जगदुपादानमित्युक्तं [7]पारमेश्वरे ।**
**तन्त्रेऽस्मिन्वृत्तयस्तस्य शृणु विप्र यथाक्रमम् ॥१८॥**

एवं जगतो गुणात्मकस्योपादानकारणं **तत्त्वमुक्तम्** । क्रोधेशादिभुवनात्मिकास्त्वष्टावस्य **वृत्तयः गुणप्रकरणे** वक्ष्यमाणा इत्येतच्च [8]प्रागेव दर्शितम् । एवं च प्रकरणोपसंहारश्लोकस्यानेन गतार्थतेति ॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः — 'गुणत्रयम्' इत्यादि ।

**गुणत्रयं ह्येतदुदारवृत्तं प्रशान्तकालानुगतं समस्तम् ।**
**प्रसूतिरस्यावसरागतेयं मत्तः [9]सकाशादवधारयस्व ॥१९॥**

**एतद्गुणत्रयं प्रशान्तकालानुगतमिति** उपशान्तविभागावस्थमव्यक्तमुक्तमिति पूर्वेण संबन्धः । यदुक्तम्[10] —

"गुणानां या परा काष्ठा तत्प्रधानमिति स्मृतम्" ॥ इति ।

**उदारं** समस्तगुणापूरणं **वृत्तं** चेष्टितं यस्य तदुपादानवृत्तं चेति व्याख्यातार्थोपसंहारः । **अस्य** तु **प्रसूतिः** कार्यम् अप्रशान्तभेदा गुणाः; **अवसर**प्राप्ता अधुना वर्ण्यत इति व्याख्येयोपक्रमः ॥

[इति श्री] भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
[विद्यापादे] त्रिपर्वपदार्थेऽव्यक्ततत्त्वप्रकरणं [पञ्चदशं समाप्तम्] ॥
**पञ्चदशः पटलः**

---

[1] स्थूलस्थूलतराणि तु — मु, ओ.
[2] सर्वानुग्रहसिद्धानि — मु; सर्वानुक्रमसिद्धानि — ओ.
[3] शेषान्तानि कलावतः — मु.
[4] तत्त्वानां — मु.
[5] सूक्ष्मसूक्ष्मतराणि तु — मु; सूक्ष्मात्सूक्ष्मतराणि तु — ओ.
[6] वक्तव्यानि — मु, ओ.
[7] परमेश्वरे — ऊ, ऋ, ओ.
[8] मतङ्ग० विद्या० १५. १, २ पू० वृत्तौ ।
[9] समासादव० — मु, ओ.
[10] मतङ्ग० विद्या० १५. ५ पू०; तत्र 'तासां या परमा काष्ठा' इति पाठः ।

# षोडशः पटलः

## गुणतत्त्वप्रकरणम्

**अथातः संप्रवक्ष्यामि सृष्टिं [1]विस्तरतः क्रमात् ।**

**अथेति** आनन्तर्ये, अव्यक्ततत्त्वादनन्तरम् **अतः** अव्यक्तादेवोपादानात् **सृष्टिं** तद्भुवनात्मिकां, सत्त्वादिगुणत्रयरूपां चेति **विस्तरतः** वक्ष्यामीति । पदार्थादिसंबन्धाश्चात्र [2]प्राग्वद्द्रष्टव्याः । वाक्यात्मकस्तु संबन्धः "[3]सत्त्वं रजस्तमश्च" इत्यादिभिरनेकविधः ॥

सैव कर्तक्रमेणोच्यते — 'प्रबुद्ध' इत्यादि ।

**प्रबुद्धोऽहर्मुखे [4]स्वाक्ये श्रीकण्ठोऽनन्तविक्रमः ॥१॥**
**स्वभावो वृत्तयस्तस्य प्रबुद्धस्य समन्ततः ।**
**शक्तयो विसृताः सूक्ष्मा वीर्येणातिबलीयसा ॥२॥**
**तत्संयोगाच्चलत्याशु[5] प्रधानं स्वासु वृत्तिषु ।**
**[6]वृत्तयस्तु गुणाः प्रोक्ता [7]न्यग्भूताः प्रकृतिर्यतः ॥३॥**
**[8]स्वभावो योनिकारी स्यात्प्रकृतिः सोच्यते मुने ।**

स्वमेव स्वकं, तस्य भावः **स्वाक्य**मत्यन्तात्मीयम् । न तु [9]ब्रह्मादीनामहर्मुखमित्यर्थः । तस्मिन् काले **श्रीकण्ठः** अनन्तस्येव [10]परमो ज्ञानक्रियात्मा विक्रमो यस्य सः, तथाभूतस्तावत् **प्रबुद्धः** भवति । तस्य च **प्रबुद्धस्य** अयं **स्वभावः** येन वृत्तिरूपाः **शक्तयः समन्ततः** प्रवृत्ता भवन्ति । शक्तिसमायोगाच्च गुणलक्षणप्रवृत्तिनिमित्तं **प्रधानं** क्षोभमायाति । यतो गुणा एवाविभागं प्राप्ताः प्रधानमित्युक्तम्[11] । लोकेऽपि मृदादिरविक्षुब्धस्वभावः **प्रकृतिः** उच्यते । विक्षुब्धस्तु [12]उखेष्टकादि-विकृतिरिति । एवमव्यक्तस्य तत्त्वात्मिका सृष्टिरुक्ता ॥

अथ भुवनात्मिकोच्यते — 'तस्मादेव' इत्यादि ।

**तस्मादेव [13]परात्क्षोभात्प्रबुद्धाः[14] [15]पारमेश्वराः ॥४॥**
**चेष्टन्ते विविधैर्भोगैः प्रकीर्णकिरणाः शिवाः ।**

---

[1] विस्तारतः — मु, ओ.
[2] तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत् ।
[3] मतङ्ग० विद्या० १५. १० उ०.
[4] स्वाख्ये — मु, ओ.
[5] ०च्छलत्याशु — ऊ, ऋ, ओ.
[6] वृत्तयश्च — मु, ओ.
[7] न्यग्भूता प्र० — मु, ओ.
[8] स्वभावोऽपि विकारी — मु, ओ.
[9] ब्रह्मादिना मुखं — ऊ, ऋ.
[10] परमेश्वराज्ज्ञानक्रियात्मा — ऊ.
[11] मतङ्ग० विद्या० १५. ५ पू०.
[12] 'उषा उखा=स्थालीति यावत्' इति शब्द-कल्पद्रुमे ।
[13] परिक्षोभात् — मु, ओ.
[14] प्रवृद्धाः — ऊ, ऋ.
[15] परमेश्वराः — ऊ, ऋ, ओ.

यस्मात् प्रधानक्षोभाद् गुणसमभिव्यक्ता रुद्राः **प्रबुद्धाः** इति भुवनशरीरसंबद्धाः संपन्नाः, तैर्विनाणूनां प्रबोधासंभवात्। तेषां च [1]'प्राग् योगियोगेश्वरश्रुत्यैवेश्वर[त्व]स्य प्रतिपादितत्वात्, पारमेश्वरत्वश्रुत्या साक्षात्परमेश्वरनियुक्तत्वं सकलत्वेऽपि भुवनवासिनामिव श्रीकण्ठस्येव च प्रतिपद्यते। अत एव **शिवाः** इत्युच्यन्ते॥

अथ किमेते [2]गुणतत्त्वभुवनेश्वरा एव। नेत्युच्यते— 'प्रधानतत्त्वे' इत्यादि।

**प्रधानतत्त्वे प्राधान्यं तेषां श्रीकण्ठनिर्मितम्॥५॥**

अव्यक्ततत्त्वभुवनेश्वरा एवैते इत्यर्थः। अत एव गुणभुवनेशा योगिनोऽनन्तेशस्येव सूक्ष्मादय इति॥५॥

ते कियन्तः, केन च क्रमेण तत्र स्थिता इत्युच्यते— 'शिखेदस्य' इत्यादि।

**शिखेदस्य पुरं तत्र सहस्रादित्य[3]सप्रभम्।**
**[4]एकवीरस्य रुद्रस्य पुरमन्यत्सुशोभनम्॥६॥**
**पुरं पञ्चान्तकस्यापि [5]सूरगस्य च धीमतः।**
**पिङ्गलस्य ततोऽधस्तात्पुरमन्यत्सुशोभनम्॥७॥**
**ज्योतिष्मतः पुरं दिव्यं [6]नानाचन्द्रांशुनिर्मलम्।**
**ततः संवर्तकस्यापि [7]चण्डस्य च महात्मनः॥८॥**
**[8]क्रोधेशस्याप्यथोऽधस्तात्पुरमन्यत्सुनिर्मलम्।**

अत्र पिङ्गलस्यैव ज्योतिष्मत्वं ज्ञेयमित्यष्टावेव क्रोधेशादयः। [9]श्रीमत्**स्वायम्भुवा**दावपि तथा दर्शनात्। प्रोक्तं च श्रीमन्**निःश्वासे**[10]— "महादेवाष्टकं ह्येतद्" इति। [11]श्रीमद्**रौरवे**ऽपि "अष्टावेते महात्मान" इत्यादि। ततश्च [12]प्रागुक्तश्रीकण्ठनाथभुवनेन सह नवैवात्र भुवनानीति॥

एवमव्यक्तस्यात्र सृष्टिप्रसङ्गेन भुवनविभागमुक्त्वा प्रकृता तत्र तत्सृष्टिर्गुणात्मिकैव कार्यतो वृत्तितश्चोच्यते— 'तस्मादेव' इत्यादि।

**तस्मादेव महाग्रन्थेर्गुणपिण्डात्मकं शुभम्॥९॥**
**[13]साधिकारभराक्रान्तं ब्रह्मणोऽण्डं पुराभवत्।**

---

[1] मतङ्ग० विद्या० १५. १ पू०.
[2] गुणास्तत्त्व० — ऊ, ऋ.
[3] ०वर्चसा — ऊ, ऋ.
[4] एकवीर्यस्य — ऊ, ऋ.
[5] सूकरस्य च — मु, ओ.
[6] चारुचन्द्रांशु० — मु, ओ.
[7] चण्डस्यापि महा० — ओ.
[8] क्रोधीश० — मु, ओ.
[9] स्वायम्भुवे ३५. ३१. 'शिखेदश्चैकवीरश्च पञ्चान्तः सूरगस्तथा। ज्योतिःपिङ्गलः संवर्तश्चण्डी क्रोधेश्वरः परः' ॥ इति।
[10] आकरो न लभ्यते।
[11] रौरवे विद्या० ४. १८ पू०.
[12] मतङ्ग० विद्या० १५. २उ०, ३ पू० वृत्तौ।
[13] साधिकारपराक्रान्तं — मु; साधिकारापराक्रान्तं — ओ.

**तन्मध्ये कललं सूक्ष्मं गुणात्मकमनिन्दितम् ॥१०॥**
**[1]तद्भिन्नं शक्तिसंपाताद्यतोऽभिव्यक्तवान्विराट् ।**
**सत्त्वोत्कटेन भावेन चतुष्षष्टिगुणान्वितः ॥११॥**
**अन्योऽपि सात्त्विको [2]भावश्चतुर्धा संप्रतिष्ठितः ।**
**तेन सांसिद्धिकेनायं ब्रह्मामरगुरुः प्रभुः ॥१२॥**
**करोति प्रक्रियां चित्रां नानाभुवन[3]मालिकाम् ।**

[4]योऽसावव्यक्तवृत्त्यात्मकः सत्त्वादिगुणलक्षणः पृथिव्यन्त[5]जगत्कारणत्वेन महाग्रन्थिः [6]प्रतिपादितः, **तस्मादेव**। गुणाः धर्मज्ञानादयः आत्मा यस्य, तद् **गुणात्मकं** बुद्धितत्त्वं, पिण्डश्च मनोबुद्धीन्द्रिय-कर्मेन्द्रियतन्मात्रसंघातः आत्मा यस्य, तत् **पिण्डात्मकम्** अहंकाररूपं च **अभवदिति**। **शुभं** च शुभस्य ज्ञानक्रियात्मनो हेतुत्वादिन्द्रियजातं, महाधिकारभराक्रान्तेन [7]वक्ष्यमाणानेकाधिकारिपञ्चा-ष्टकाधिष्ठितेन तु तन्मात्रपञ्चकेन भवतीति **साधिकारभराक्रान्तं तच्छुभमभवद्** ब्रह्माण्डं च पञ्च-भूतात्मकमिति। एतच्च यद्यथाभूतं येन च क्रमेण भवति तद्विस्तरेण [8]भविष्यति। प्रोक्तं च सांख्यैः [9]—

"प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च[10] षोडशकः[11] ।
तस्मादपि [12]षोडशकात् पञ्चभ्यः पञ्च [भूतानि] ॥" इति ॥

भूरादिलोकविभागो ब्रह्मसृष्टेः **पुरा** श्रीकण्ठनाथादेव **अभवत्**। यतस्तदपि **कललं** श्रीकण्ठ-नाथशक्तिपातेन [13]**भिन्नं** क्षोभितम्। क्षोभिताद्यस्मात् सात्त्विकेन **भावेन** युक्तो ब्रह्माभिव्यक्तः प्राप्तबाह्यशरीरः संपन्नः। यदुक्तं सांख्यैः[14] —

"ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादि[15]स्तम्बपर्यन्तः ॥" इति च ।

स च ब्रह्मा **चतुष्षष्टिगुणान्वितः** इति ब्रह्माण्डान्तर्व्यवस्थितानां पिशाचादिपितामहान्तानां देवानां, भूलोकस्य भूमिजलभेदेन द्विधावस्थितत्वात् सप्तलोकगतेष्वष्टासु स्थानेषु क्रमेण प्रत्येक-मणिमादिगुणाष्टकविवृद्धया ब्रह्मणश्चतुष्षष्टिगुणमेवैश्वर्यं भवतीति **बुद्धिप्रकरणे** वक्ष्यामः[16]। प्रोक्तं च सांख्यैः[17] —

---

[1] तद्भिन्नशक्ति० — मु, ओ.
[2] भावश्चतुर्थः सं० — मु; भेदश्चतुर्थस्सं-प्रतिष्ठितम् — ओ.
[3] ०पालिकाम् — मु, ओ; ०मालिताम् — ऊ, ऋ.
[4] योऽसौ व्यक्त० — ऋ.
[5] ०जगत्कृतत्वेन — ऊ, ऋ.
[6] मतङ्ग० विद्या० १५. ३ उ०, ४.
[7] मतङ्ग० विद्या० १८. १०९ उ०–११२ पू०; १९. ३४ उ०–३८ पू०; २०. ५१ उ०–५५; २१. १६ उ०–१९; २२. १३–१५. एषु क्रमेण स्थूलेश्वर-स्थाणु-भीम-भैरव-लाकुलाद्यष्टकाधिकारिणो वक्ष्यन्ते।
[8] मतङ्ग० विद्या० १७–२३ प्रकरणेषु।
[9] सांख्यका० २२.
[10] चशब्दो नास्ति — ऊ, ऋ.
[11] षोडशात्मकः — ऊ, ऋ.
[12] षोडशात्मकात् — ऊ, ऋ.
[13] भिन्नक्षोभितम् — ऋ.
[14] सांख्यका० ५४.
[15] ०स्तम्भपर्यन्तः — ऊ, ऋ.
[16] मतङ्ग० विद्या० १७. १२६ उ०–१३२ पू० वृत्तौ।
[17] सांख्यका० ५३.

"अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।
[1]मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥" इति।

तस्य ब्रह्मणः **अन्योऽपि सात्त्विको भावः** चतुष्प्रकारोऽवस्थितः। यदाहुः सांख्याः[2] — "धर्मो ज्ञानं विराग ऐश्वर्यम्। सात्त्विकमेतद्रूपम्" **इति। तेन** च धर्मादिना चतुर्विधेन भावेन सम्यगधिकारभावे एव सिद्धेन युक्तो **ब्रह्मा, करोति** सृष्टिं ब्रह्माण्डान्तर्भूलोकादिरचनामिति॥

एवं च — 'गुणाः' इत्यादि।

**[3]गुणाः सर्वं यतो विप्र ततस्तेषां [4]प्रवृत्तयः॥१३॥**
**समासेनोपवर्ण्यन्ते सत्त्वादीनां यथाक्रमम्।**

सर्वब्रह्माण्डान्तकार्योपादानत्वाद् **यतः गुणाः** एव **सर्वम्, ततः तेषां** प्रकृष्टा वृत्तयः स्थैर्यं धैर्यम् इत्यादिकाः संक्षेपेणात्र वर्ण्यन्त इति॥

अधुना गुणानां सर्गकाले एव वृत्तयः समुपलक्षितुं शक्याः, न तु संहारकाले इति दर्शयितुं, [5]प्राग्वेदान्तवादिनामिवात्र प्रसङ्गतः सांख्यस्य मोक्षहेतुत्वं प्रतिक्षिप्यते — 'सत्त्वादन्यः' इत्यादि।

**[6]सत्त्वादन्यः पुमान्सिद्धः स च मुक्तो विपश्चिताम्॥१४॥**
**अनेनाशययोगेन विमुक्ताः परमाणवः।**
**तेऽधुना क्षोभमायान्ति यतः संयोजिता बलात्॥१५॥**
**शिवशक्तिसमूहेन ये च लीनाः क्रमेण तु।**

पुरुषो हि **सत्वादन्यः सिद्धः** [7]**पुंपाशेश्वरप्रकरणे। स च** सत्त्वादिप्रकृतिविवेकादेव **मुक्त** इति च पण्डिता मन्यन्ते यतः। तेषाम् **अनेन** अभिप्रायेण सर्वे एव **अणवः** प्रलयकेवला मुक्ताः प्रसज्यन्ते। [8]यतस्तथा प्रकृति[9]विवेकाविशेषात्। न च ते मुक्ताः, यतो**ऽधुना** सर्गकाले **क्षोभमायान्तीति** भवताभ्युपगमः। [10]अस्माकं तु **बलादिति** कर्मसद्भावेन परमेश्वरशक्तिभिः संसारे **योजिताः** इति [11]यथा ते न मुक्ताः, तथा सोऽपीति।

ननु तस्य ज्ञानात् प्रकृतिविवेकः, तेषां तु महाप्रलयादिति। किमित्युपायभेदोऽयम्। [12]उपेये त्वभेद एव। ननु ज्ञानान्निवृत्ता प्रकृतिः पुनर्न प्रवर्तते। प्रलयात्तु प्रवर्तते इत्यस्त्युपेयेऽपि भेदः। तदयुक्तम्। तस्यामवस्थायां भवद्भिः पुंसां निर्विशेषेणाभ्युपगमात् [13]सर्वेषामपि न प्रवर्तेतेति न कश्चिन्मुक्तः। एवं **ये च क्रमेण** गुणबुद्ध्यहंकारचित्तेन्द्रियतन्मात्रभूतेषु आर्हतादिचार्वाकान्ताः

---

[1] मनुष्य० — ऊ, ऋ.
[2] सांख्यका० २३.
[3] गुणः सर्व — ओ.
[4] प्रपत्तयः — ओ.
[5] मतङ्ग० विद्या० १५. ८ वृत्तौ।
[6] सत्त्वादयः — मु.
[7] मतङ्ग० विद्या० ६. ७५ पू०.
[8] 'यतस्तथा' इति नास्ति — ऊ.
[9] ०नियोगाविशेषात् — ऊ; ०विशेषाविशेषात् — ऋ.
[10] अस्माकं दुर्बलादिति — ऊ.
[11] यथा स तेन मुक्तः तथा सोऽपीति — ऊ, ऋ.
[12] उपाये त्वभेद एव — ऊ, ऋ.
[13] सर्वेषामप्रवर्तेतेति — ऊ, ऋ.

**लीनाः**, तेऽप्यधुना क्षोभमायान्तीत्यमुक्ता एव। ते च ये तेष्वेव लीनाः, तथा **बुद्धितत्त्वप्रकरणे** वक्ष्यामः[1]। दर्शितं [2]चास्माभिः **सर्वागमप्रामाण्ये** इति तत एवावधार्यम् ॥

ततश्च — 'व्यक्तीभूतेषु' इत्यादि।

**व्यक्तीभूतेषु सर्वेषु गुणवृत्तं स्वकं स्वकम् ॥१६॥**
**विस्पष्टं शक्यते वक्तुं नान्यथा मुनिसत्तम।**

तेषु **सर्वेषु** अणुषु सर्गकाले कार्यकारणादिसंयोगाद् **व्यक्तीभूतेषु** सत्सु, गुणानां प्रत्येकं वृत्तं दर्शयितुं शक्यम्। न तु तेष्वप्रवृत्तेषु प्रलयकाले इत्यर्थः ॥

अथ गुणानां क्रमेण वृत्तयः — 'स्थैर्यम्' इत्यादि।

**स्थैर्यं धैर्यं [3]तथा दाक्ष्यमार्जवं लघुता तथा ॥१७॥**
**[4]संतोषो मार्दवं शौचं [5]व्यवसायः क्षमा [6]स्मृतिः।**
**सौहित्यं [7]पटुता कान्तिर्दया दानं घृणा सदा ॥१८॥**
**औत्सुक्यं चेति सत्त्वस्य वृत्तयः समुदाहृताः।**
**[8]क्रौर्यं शौर्यं महोत्साहः साभिमानः [9]सकल्कता ॥१९॥**
**[10]दार्ढ्यं च निर्दयत्वं च भोगो दम्भश्च वृत्तयः।**
**रजसः प्रतिपत्तव्यास्तन्त्रेऽस्मिन्पारमेश्वरे ॥२०॥**
**अरतिर्मन्दता दैन्यं पैशुन्यं गुरुता सदा।**

---

[1] मतङ्ग० विद्या० १७. ५३–६४ पू० वृत्तौ।

[2] 'ते ज्ञातारो दर्शनान्तरमुक्तास्तत्त्वभुवनस्कन्धेषु लीनाः। कस्य कस्मिन् लय इति चेत् तदेतद्दर्शितमागमप्रामाण्योपन्यासे' इति परमोक्षनिरासकारिकायां (पृ ६७) ५७ तमकारिकावृत्तिर्द्रष्टव्या। एवं — "तथा रामकण्ठाचार्येणाप्युक्तम् —
पशौ ब्रह्मत्वमाहुर्ये चिद्विवर्तानिनिर्मलात्।
तत्रैव ये प्रपञ्चान्ये क्रियाशक्तौ परा हि वाक् ॥
अव्यक्तं येऽप्युपादानं गुणानां ब्रह्मवादिनः।
तत्रैव कारणं तेषां ये तु नारायणाभिधम् ॥
गुणपृष्ठे गुणेभ्यो ये विवेकोक्तिबलान्नरम्।
गुणेषु येऽप्यनेकान्तः स्याद्वादश्चलवृत्तिकः ॥
बुद्धौ भ्रान्त्या पुमांसं ये ज्ञानादिगुणशालिनम्।
बुद्धिवृत्तौ क्षणध्वंसि ज्ञानमात्रं तु ये भ्रमात् ॥
अहंकृतौ तु तद्वृत्तिप्राणमात्मभ्रमेण ये।
मनसीन्द्रियवृत्तौ ये येऽतिमात्रं भ्रमान्तरम् ॥
इन्द्रियेष्विन्द्रियाण्येव ज्ञात्वा चात्मेति ये विदुः।
तन्मात्रेष्वाप्यमाहुर्ये ब्रह्मभूताण्डकारणम् ॥
हिंसामैथुनतः शुद्धाः पिशाचादिपदे स्थिताः।
भूतेषु येऽपि चैतन्यं प्राप्यं भूतात्मकं विदुः ॥
इत्थं प्रत्यागमं येन भिन्नं प्राप्यं व्यवस्थितम्।
सर्वागमानां तेनोक्तं प्रामाण्यमविरोधतः ॥"
इत्युमापतिशिवाचार्यविरचितपौष्करभाष्योद्धृतानि पद्यानि चात्र द्रष्टव्यानि। (पौष्करभाष्ये पृ० ३८१).

[3] धृतिर्दाक्ष्य० — ऊ, ॠ.

[4] संतोषो मार्जवं शौचं — मु; संतोषस्सत्यशौचं च — ऊ, ॠ.

[5] व्यवसायक्षमा — मु.

[6] धृतिः — ऊ, ॠ.

[7] परता क्षान्तिर्दया — मु, ओ.

[8] क्रौर्यशौर्यमहोत्साहसाभिमानसकल्कता — मु.

[9] सकल्पता — ओ.

[10] तथेर्ष्यं निर्दयत्वं च भेदो — ऊ, ॠ.

**निद्राधिक्यं मदालस्यं निरोधो [1]मूढता च या ॥२१॥**
**तमसो वृत्तयः प्रोक्ता [2]विभिन्नाः सर्वजन्तुषु ।**

तत्र स्थैर्याद्याः सत्त्वस्य, क्रौर्याद्या रजसः, अरत्याद्यास्तमस इत्येता बुद्धिगतत्वेन प्रतिसंवेद्यमाना एवेति ॥

एताश्च वृत्तयो गुणानामसंकीर्णा एवेति न। पुरुषाणां विषयत्वेन वर्तन्ते यतः — विमिश्राश्च' इत्यादि।

**विमिश्राश्च [3]यथा तेषां गुणानां युगपत्स्थिताः ॥२२॥**
**प्रवृत्तिर्नेष्यते [4]यस्माद्व्यस्तानां कारणादृते ।**
**शास्त्रेऽस्मिन्मुनिशार्दूल [5]तथाप्युत्कृष्टदर्शनात् ॥२३॥**
**[6]व्यस्ताः संपरिगीयन्ते [7]यतोऽधः प्रबलीकृतम् ।**
**दृश्यं तेभ्योऽपरं नास्ति द्रष्टुर्भोगाभिलाषिणः ॥२४॥**

एताश्च वृत्तयो मिश्रा एव **स्थिताः**। **न** हि **व्यस्तानां** गुणानां **प्रवृत्तिः** दृष्टा कदाचिदपि। यदुक्तं सांख्यैरपि[8] —

"प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥" इति

**कारणादृते** इति गुणकारः प्रोक्तः श्रीकण्ठदेवः तद्विषया, [9]वक्ष्यमाणविष्वक्कृतविषया च[10] गुणानां व्यस्ता च प्रवृत्तिरिष्यत एवेति एतद्भुवनस्वरूपप्रतिपादनावसरेऽत्रै[व] [11]भविष्यति। यद्यप्येताः सत्त्वादिवृत्तयोऽसंकीर्णाः पुरुषाणामसिद्धा एव। तथापि क्वचित् पुरुषेऽत्र [का]सांचिदुत्कृष्टानां दर्शनमस्ति, यः सात्त्विक उच्यते। एवं क्वचिदपकृष्टानां यस्तामसः, मध्यानां च यो राजस इत्युपोद्धारतो **व्यस्ताः** अपि वर्ण्यन्ते। यतः गुणैरेव सर्वं ब्रह्माण्डान्तम् अधः परस्परसंवलनया व्यवस्थापितम्। **न** च गुणेभ्योऽन्यद् **दृश्यम् अस्ती**त्युक्तम्[12]। अतस्त एव संकीर्णा वृत्तिभिर्वर्ण्यन्त इति। एवं गुणानां तत्त्वधर्मः प्रोक्तः ॥२२–२४॥

---

[1] मूढता तथा — मु, ओ.
[2] 'विभिन्नाः सर्वजन्तुषु' इत्यस्य स्थाने सर्वासु मातृकासु, मुद्रितपुस्तके च 'शुद्धाः सर्वेषु जन्तुषु' इत्येव दृश्यते। अयं पाठो न युक्त इति भाति। मतङ्गवृत्तौ गुणवृत्तीनां संकीर्णत्वमेव वर्ण्यते, न शुद्धत्वम्। मृगेन्द्रवृत्तिदीपिकायां प्रमाणत्वेनोद्धृते मतङ्गीये 'तमसो वृत्तयः ख्याता विभिन्नाः सर्वजन्तुषु' इत्येव पाठो दृश्यते (मृ० वृ० दीपिका पृ० २७६) एवं पौष्करेऽपि दृश्यते। (पुंस्तत्त्वपटले ४१ पृ०).
[3] तदा — ऊ, ऋ.
[4] यस्माद्व्यक्तानां — मु, ओ.
[5] तथाप्युद्देशदर्शनात् — ऊ, ऋ.
[6] व्यक्ताः — मु.
[7] यतो यत्प्रबलीकृतम् — मु, उ; यतोऽधःप्रवयीकृतम् — ऊ, ऋ.
[8] सांख्यका० — १२.
[9] मतङ्ग० विद्या० १६. २७–३४ पृ० वृत्तौ।
[10] चशब्दो नास्ति — ऋ.
[11] मतङ्ग० विद्या० १६. २७–३४ पृ० वृत्तौ।
[12] मतङ्ग० विद्या० १६. ९ उ–१४ पृ० वृत्तौ।

भुवनधर्मः कथ्यते — 'श्रीकण्ठः' इत्यादि।

**श्रीकण्ठस्तत्कृतावासः[1] प्रधानादवतीर्य तु।**
**[2]द्विधा विभज्य स्वं वीर्यं रुद्राणां स्थितये विभुः॥२५॥**
**तच्छक्ति[3]बलमाहात्म्याद्रुद्राश्चेष्टन्त्यदुःखिताः।**
**वीरभद्रादयश्चैव ब्रह्मान्ता लोकनायकाः॥२६॥**

यद्यपि श्रीकण्ठनाथस्य प्रधानतत्त्वे भुवनमुक्तम्। तथापि ततोऽवतीर्य **रुद्राणां** स्थित्यर्थमत्रापि गुणतत्त्वे ज्ञानक्रियात्मकं **वीर्यं द्विधा विभज्य** स्वात्मनोऽपि संपादितभुवनलक्षणावासः। यतस्तच्छक्तिसामर्थ्येनैव सर्वे तदधोवर्तिनो रुद्रा लोकपालाश्च चेष्टन्ते इति। ततश्च दीक्षायामेतद्भुवनविशुद्ध्यैवोभयभुवनविशुद्धिः कार्येत्यर्थः॥२५–२६॥

एवं श्रीकण्ठस्य प्रधानतत्त्वे इव गुणतत्त्वेऽपि भुवनं प्रतिपाद्य, अन्येऽप्यत्र भुवनेश्वराः, तद्भुवनानां च वैलक्षण्यमुच्यते। — 'पत्युः' इत्यादि।

**पत्युः सत्त्वोत्कटस्थानं[4]तस्मादुन्मीलितं शनैः।**
**स्थानमौमं [5]महादीप्तं [6]रजसस्तु सुखावहम्॥२७॥**
**लेशानु[7]विद्धं सत्त्वेन कुमारस्य महात्मनः।**
**विष्णो[8]रप्युचितं तत्र [9]स्थानं [10]शुद्धरजोमयम्॥२८॥**
**ब्रह्मणस्तदधस्तात्तु [11]किञ्चित्तामस[12]मीरितम्।**
**[13]विभोस्तमसि विज्ञेयं [14]रजसोन्मीलितं शनैः॥२९॥**
**[15]कृतनाम्नोऽपरं स्थानं तमस्येव महामुने।**
**[16]रजसश्चाश्रयोपेतमीष[17]त्सत्त्वोज्झितं [18]हि तत्॥३०॥**
**अकृतं शुद्धतमसि स्थानमुक्तमथाष्टमम्।**

**पत्युः** श्रीकण्ठनाथस्य केवलसत्त्वात्मकं भुवनम्। अन्येषां तु तदुदयक्रमत इति॥

तदेवम् — 'तमसः' इत्यादि।

**तमसो वृत्तिमाश्रित्य यथानुक्रमतः स्थिताः॥३१॥**
**योगिनो योगवीर्येणाकृताद्या भुवनेश्वराः।**

---

[1] ०स्तत्क्रियावासः - - मु, ओ.
[2] तथा विसर्ज्य—मु; त्रिधा विभज्य—ऊ, ऋ.
[3] ०फल० — ऊ, ऋ.
[4] तत उन्मीलितं — मु, ओ.
[5] सुदीप्तं तु — मु, ओ.
[6] राजस्यं स्यात्सुखा० — मु; राजन्यं स्यात् सुखा० — ओ.
[7] ०विद्धसत्त्वेन — मु, ओ.
[8] ०रप्युदितं — मु, ओ.
[9] स्थानशुद्धं रजो० — ओ.
[10] शुद्धं रजो० — मु.
[11] किंचित्तत्तमसेरितम् — ऊ, ऋ.
[12] ०मीरितः — ओ.
[13] रिभोस्तमसि — ऊ, ऋ.
[14] राजसोन्मीलितं — मु, ओ.
[15] कृतं नाम्ना परं — मु, ओ.
[16] रजश्च संशयोपेत० — मु; रजसश्चाशयोपेत० — ओ.
[17] ०त्सत्वोत्थितं — मु. ओ.
[18] हितम् — ऊ, ऋ.

**रजोवृत्तिकृताधारा ब्रह्माद्याश्चाप्यनुक्रमात् ॥३२॥**
**सत्त्वोत्कटेन भावेन स्थानं योगयुजामपि ।**
**[1]औमं मन्त्रोदितं दिव्यं [2]शुद्धतत्त्वमतः परम् ॥३३॥**
**[3]विनयेनापि सिद्धानां क्रम एष [4]उदाहृतः ।**

अत एव **अकृताद्याः** श्रीकण्ठपर्यन्ता **योगिनो**ऽत्र भुवनेशा अष्टावुच्यन्ते । तेषु च मध्याद् **अकृत**विष्णुश्रीकण्ठानां शुद्धतमोरजस्सत्त्ववृत्तीनि भुवनानि । अन्येषां तु विमिश्राणीति । न केवलं तेषामेवैतत् क्रमेण निवासस्थानम् । यावद् **विनयेनापि सिद्धानां** साधकानामप्येतत्क्रमेण **स्थानम्** । रुद्राणां तु सांसिद्धिकमिति भेदः ॥

अथ कथमेषां योगित्वेन व्यपदेश इत्युच्यते — 'योगवीर्य' इत्यादि ।

**योगवीर्य[5]मदामोदविलासेन महाबलाः ॥३४॥**
**अतिरस्कृतधर्माणो रुद्राः [6]क्रीडन्त्यनिन्दिताः ।**
**देवानां बलमाक्रम्य सूक्ष्मशक्तियुताः शिवाः ॥३५॥**
**न तेषां शक्यते वक्तुं प्रमाणं मुनिपुङ्गव ।**
**यावत्सम्यङ्निरूप्यन्ते [7]स्वतेजोव्यूढगोचराः ॥३६॥**
**निसर्गेणैव चेष्टन्ते ये च सिद्धा महाधियः ।**
**शिवाद्यवनिपर्यन्ते क्रीडन्त्यध्वनि संस्थिताः ॥३७॥**

**योगः** समाधिः प्रकृतत्वादेषां श्रीकण्ठनाथविषयः, तस्य तु शिवविषयः, तस्य **वीर्यं** प्रकर्षावस्था । यदाहुः[8] —

"अतिक्रम्याप्रयत्नेन साध्यसाधनवर्त्मनी ।
यत्राचलमवस्थानं स समाधिरकृत्रिमः ॥" इति ।

तस्य **मदो** देवताप्रसादः, तेन **आमोदः** साधकस्य विचित्रशक्त्याविर्भावः, तस्य **विलासो** यथेच्छाविहारः, तेन च **महाबलाः** यतस्ते ततो योगिन इत्युच्यन्ते । तेन च **अतिरस्कृत**पालनादि**धर्माणः** । देवयोनीनां वुद्ध्यधिष्ठातृत्वेन [9]वक्ष्यमाणानां **बलमाक्रम्य क्रीडन्ति** । अत एव **सूक्ष्मशक्तियुक्ताः** श्रेयोहेतवश्चेति । **न च तेषां** शक्तेः **प्रमाणं शक्यते वक्तुम्** । केवलमेतावन्निरूपयितुं शक्यम् । स्वतेजसा ज्ञानक्रियात्मकेन व्याप्ताः स्व[ल]ब्धावधिगोचरो यैस्ते तथाभूता इति । ते च **निसर्गेण** अधिकारस्वभावात्मना केवलं तत्र **चेष्टन्ते**, ततो नैसर्गिका इत्युच्यन्ते । **सिद्धास्तु** वैनयिका इति । क्रीडा तु तेषां **शिवाद्यवनिपर्यन्तेऽध्वनि** योगबलादेवेति दर्शितम् । शिवश्चात्र प्रकृतत्वात् श्रीकण्ठनाथ एव । मायोर्ध्वं सकलानां प्रगमो न संभवति यतः । एवमत्र भुवनान्युक्तानि ॥३४–३७॥

---

[1] औममन्त्रो० — ऊ, ऋ, ओ.
[2] शुद्धसत्त्व० — मु.
[3] विना येनापि — मु, ओ.
[4] उदाहृतम् — ओ.
[5] ०महामोद० — ऊ, ऋ.
[6] क्रीडन्त्यनिर्मिताः — ऊ, ऋ.
[7] स्वतेजोगूढगोचराः — मु, ओ.
[8] आकरो न लभ्यते ।
[9] मतङ्ग० विद्या० १७. १६–२० वृत्तौ ।

अथ तेषां रूपादिकमुच्यते — 'चन्द्रांशुनिर्मलम्' इत्यादि ।

**चन्द्रांशुनिर्मलं सत्त्वं [1]प्रविकासि बलोत्कटम्[2] ।**
**अरुणाभं रजस्तीव्रं प्रवृत्ति[3]गुणवत्तरम् ॥३८॥**
**तमः पुष्पविवर्णाभं स्वभावात्सुनियामकम् ।**

शुक्लारुणभ्रमरवर्णानि क्रमेण सत्त्वादीनां शुद्धानि भुवनानि । परिशिष्टानि तु एतद्विमिश्राण्येव । विकासप्रवृत्तिनिरोधास्तु तेषां तत्र प्रक्लृप्ता वृत्तयः ॥

न केवलं तत्रैव यावदिहापि — 'आह्लादन' इत्यादि ।

**आह्लादनस्वभावो यः सर्वदा सर्वजन्तुषु ॥३९॥**
**शुद्धसत्त्वसमायोगाद्व्यक्तस्यैवोपजायते ।**
**[4]आवेगो यः प्रदृश्येत सर्वारम्भेषु सुव्रत ।**
**[5]रजसः शुद्धभावत्वान्मूढता तमसः स्मृता ॥४०॥**

एतच्च [6]पूर्वमेव विभक्तम् ॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः —

**व्यक्ता गुणाः कारणवीर्ययोगा-**
**द्व्याप्तं [7]जगद्यैः स्थितये पशूनाम् ।**
**व्यावर्णितास्ते तव विप्रमुख्य**
**बुद्धेरिदानीं शृणु विस्तरं च[8] ॥४१॥**

ये स्वकारणाव्यक्ताच्छ्रीकण्ठनाथशक्तिक्षोभतो **व्यक्ताः गुणाः**. **यैश्च जगत्** समस्तं ब्रह्माण्डान्तं पुरुषाणां स्थित्यर्थं [9]**व्याप्त**मिति व्याख्यातार्थोपसंहारः ॥ अधुना बुद्धितत्त्वं विस्तरेण व्याख्यायत इति व्याख्येयोपक्रमः ॥४१॥

[इति श्री] भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
[विद्यापादे] त्रिपर्वपदार्थे गुणतत्त्वप्रकरणं [षोडशं समाप्तम्]
**षोडशः पटलः**

---

[1] प्रविकासबलो० — मु, ओ.
[2] बलोत्कटः — ओ.
[3] गुणवत्तरः — ओ.
[4] आवेशयन् प्रदृश्येत — मु, ओ.
[5] रजसा शुद्ध० — ओ.
[6] मतङ्ग० विद्या० १६. १७ ३०–२२ वृत्तौ ।
[7] जगद्यत्स्थितये — मु.
[8] मे — मु, ओ.
[9] 'व्याप्तमिति व्याख्यातार्थोपसंहारः' इत्यस्य स्थाने 'व्याप्यन्त व्याख्याताः' इति दृश्यते —ऊ, ऋ.

## सप्तदशः पटलः

## बुद्धितत्त्वप्रकरणम्

**अथ [1]बुद्धेर्विकासो यः [2]स्वधर्मेणानुमीयते।**
**क्षुब्धेभ्यः सहसा पूर्वं गुणेभ्यो भूतगोचरा ॥१॥**

[3]**अथेति** गुणतत्त्वादनन्तरं **बुद्धेर्विकासः** बुद्धितत्त्वस्य प्रकाशनम्। अत्र च पदार्थादिसंबन्धाः [4]प्राग्वदेव वाच्याः। वाक्यात्मकस्तु संबन्धो[5] "महदादि महत्कार्यम्" इत्यादिभिरनेकविधः। स च बुद्धेः प्रकाशो **यः स्वधर्मेण** [6]वक्ष्यमाणेन **अनुमीयते**; अनुमानात्मक एवेत्यर्थः। सा **गुणेभ्यः** समुत्पन्ना **पूर्वमिति** श्रीकण्ठादिसर्गादपि प्राग् महाप्रलयोपसंहारकाले एव। [7]तत्त्वसर्गस्यानन्तेशकर्तृ[क]त्वात्। **भूतगोचरा** इत्युपलक्षणम्। तत्त्वभावभूतभुवनानि गोचरस्तस्याः, तया ह्यनवसितानि न भोग्यानि भवन्तीति ॥१॥

अथ कोऽसौ धर्मः, येन बुद्धिरनुमीयत इत्युच्यते — 'बुद्धिः' इत्यादि।

**बुद्धिरध्यवसायेन भावानां जननी शुभा।**
**वर्ण्यतेऽष्टगुणोपेता [8]विभागेन यथाक्रमम् ॥२॥**

द्विविधो हि बोधो भावानामध्यवसायात्मकोऽनध्यवसायरूपश्च। यदाहुः[9] —

"अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया[10]।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता"॥ इति।

तत्र योऽनध्यवसायात्मकः स सर्वदा ग्राह[क]रूपेणैव भासमान आत्मस्वभाव एवेत्युक्तं [11]**पुंपाशेश्वरप्रकरणे**। यस्त्वध्यवसायरूपः स उत्पन्नापवर्गित्वेनावभासमानो न पुंस्वभावः; नित्यस्यानित्यस्वभावत्वायोगात्। तत्स्वभावत्वे वा नित्यत्वप्रसङ्गात्संवेदनस्येव। न च नित्योऽनुभूयते। ततो न पुंसः स्वभाव इति। यस्य स्वभावः सा बुद्धिः **भावानाम्** अध्यवसेयतोत्पादिका। न तां विना तेषामध्यवसेयता संभवति यतः।

---

[1] बुद्धेर्विकासोऽयं — ओ.
[2] स्वभावेनानु० — मु, ओ.
[3] अपीति — ऊ.
[4] मतङ्ग० विद्या० तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत्।
[5] मतङ्ग० विद्या० १५. १५ उ०.
[6] मतङ्ग० विद्या० १७. २.
[7] मतङ्ग० विद्या० ५. २८ उ०–३०; ९. २–६ वृत्तौ।
[8] संविभज्य यथाक्रमम् — ऊ, ऋ.
[9] श्लोकवा० प्रत्यक्षसूत्रे ११२, १२०.
[10] यथा — ऊ, ऋ.
[11] मतङ्ग० विद्या० ६. ३४, ३५ वृत्तौ।

किं च **वर्ण्यते** अष्टाभिर्धर्मादिभिर्गुणैरुपेतात्र **विभागेन** इति अयमर्थः धर्माद्यात्मकानि ज्योतिष्टोमादीनि कर्माण्यनुष्ठीयमानानि समनन्तरमेव स्वर्गादिफलं [न] जनयन्ति। आमुत्रिकफलत्वात्। स्वयं च तानि ऋत्विग्यजमानव्यापाररूपत्वेन विनष्टान्येवावभासन्त इत्यतो[१] न फलकालमनुवर्तन्त इति शक्यते वक्तुम्। प्रत्य[क्ष]विरोधात्। ततस्तैः प्रत्यात्मनियतोऽपूर्वाख्यः संस्कारः फलश्रुत्यन्यथानुपपत्त्या क्रियत इत्यभ्युपगतं परैरपि। स च नात्मनि संभवति। अविकारित्वात्। कर्मणां च कृष्यादीनामात्मसंस्कारकारकत्वेनादृष्टेरित्युक्तम्[२]; अपि तु जड एवेति। यत्र तानि संस्कारं कुर्वन्ति सा अष्टगुणा बुद्धिरिति। एवं ज्ञानादि[३]संस्कारेऽपि वाच्यम्। तद्बलादेव स्वप्नस्मृतिप्रतिभादावसत्यप्यर्थेऽर्थोल्लेखो दृश्यते यतः ॥२॥

अत्र मतङ्गमुनिर्गुणेभ्यो बुद्धे[४]रुत्पादमुक्तमसंभावयन् नित्यान्तःकरणदृशा पूर्वपक्षयति — 'कार्यकारणभावः' इत्यादि।

**मतङ्ग उवाच —**

**कार्यकारणभावो यः स सर्वत्र प्रतीयते।**
**स्वात्म[५]लोपकृतो ह्येको द्वितीयो मातृपुत्रवत् ॥३॥**
**[६]कर्तृकर्मतृतीयोऽन्यो लोकेऽस्मिन्नुप्रतीयते।**
**[७]स्वात्मलोपकृतो यो हि [८]प्रध्वस्तात्पयसो [९]दधि ॥४॥**
**व्यक्तिमायाति यद्येवं गुणनाशस्ततोऽखिलः।**
**बुद्धिरेका [१०]प्रपत्तव्या गुणानां वृत्तयः कुतः ॥५॥**
**मातृपुत्र[११]कृतान्न्यायाद्व्यापित्वं नेष्यते [१२]विभोः।**
**कर्तृकर्मविभेदाच्च[१३] [१४]वस्तुभेदोऽनवस्थितः ॥६॥**

अकार्यभूता बुद्धिः सर्वथा कार्यत्वासंभवात्, आत्मवत्। तथा हि — उपादानोपादेयभावः कार्यकारणयोः [१५]क्षीरदधिन्यायेनैव यथा दर्शितं सत्कार्यसिद्धिप्रकरणे[१६]। तत्र यथा **प्रध्वस्तात् पयसो दधि** [१७]अभिव्यज्यते, **एवं** प्रध्वस्तेभ्यो बुद्धिरिति सैव तदानीं कार्यत्वेन तत्त्वं स्यात्। कार्यकारणयोः सहभावाभावान्न [१८]गुणा इति। तेषामाकल्पस्थितेर्जगदापूरणेन [१९]तत्त्वत्वं च सहभावादत्रावश्यमेव। उक्तं च। ततः सहभावादात्मन इव बुद्धेरप्यकारणं गुणा इति।

---

[१] अत्र 'न फलतः' इत्यधिकम् — ऊ; 'फलतः' इत्यधिकम् — ऋ.
[२] मतङ्ग० विद्या० ६. ९३ उ० वृत्तौ।
[३] संस्कारोऽपि — ऊ.
[४] मतङ्ग० विद्या० १७. १ वृत्तौ।
[५] ०लोपकृते — मु; ०लोपः कृतो — ओ.
[६] कर्मकर्तृतृतीयो० — ऊ, ऋ.
[७] आत्मलोप० — ऊ, ऋ.
[८] प्रध्वस्तपयसो — ऊ, ऋ.
[९] यदि — ओ.
[१०] प्रवक्तव्या — मु, ओ.
[११] ०कृता न्यायात् — ओ.
[१२] विभो — मु, ओ.
[१३] ०विभेदाश्च — ऊ, ऋ.
[१४] वस्तुधर्मोऽनव० — मु, ओ.
[१५] दधिक्षीरन्यायः (१. ४. २६) ब्रह्मसूत्रश्रीकरभाष्ये उदाहृतः।
[१६] मतङ्ग० विद्या० ६. ४७ वृत्तौ।
[१७] विभज्यते — ऋ.
[१८] गुण इति — ऊ.
[१९] तत्त्वत्वमसंभवादत्र — ऊ, ऋ.

यदि वा मातृपुत्रोपलक्षितेन वह्निधूमन्यायेन तयोः कार्यकारणभावः सहभावाविरोधायाभ्युपगम्यते। तदानीमपि सहकारिकारणत्वमत्र गुणानां प्रसज्यते। कार्येण सहभावाद्वह्न्यादिवत्। सहकारिकारणं हि वह्न्यादि धूमादेः, इन्धनाद्युपादानत्वादिति। ततो न बुद्धिव्यापित्वं [1]बुद्ध्युपादानत्वं गुणानां सिद्ध्यतीति।

अथ यथा मृदः कश्चिद्भागः कर्तृत्वेन व्यवस्थितो यो भुवनात्मकः, कश्चित्तु कर्मत्वेन यो घटकारणता[2]मापन्नो मृत्पिण्डात्मकः, तद्वद्गुणानां कश्चिद्भागः स्कन्धतया कार्यपूरकत्वेनाकल्पमवस्थितः, कश्चित्तु बुद्ध्यात्मना कर्मत्वेनेति। यद्येवं गुणा एव बुद्धिरिति, कार्यकारणयोरनयोर्वस्तुभेदस्यानवस्थानाद् [न] बुद्धेस्तत्त्वान्तरत्वम्। न हि मृदो मृत्पिण्डिस्य [च] तत्त्वान्तरत्वमिति, अध्यवसायादिकार्याभावप्रसङ्गः। तस्मादध्यवसायादिकार्यान्यथानुपपत्त्या गुणेभ्योऽन्या नित्यैव बुद्धिरभ्युपगन्तव्येति।

न तु कर्तृकर्मन्यायो मातृपुत्रन्यायो वा घटकुम्भकारादिवद्व्याख्येयः। अत्रोपादानकारणविषयस्यैव आक्षेपस्य [3]प्रस्तुतत्वेन तस्यासंभवात्। निमित्तकारणविषय एवासौ दृष्टान्त इत्युक्तमीश्वरसिद्धौ[4] ॥३–६॥

अत्र सिद्धान्तः — 'लोकसंव्यवहारार्थम्' इत्यादि।

**परमेश्वर उवाच —**

**लोकसंव्यवहारार्थं [5]मृदः स्थाल्यादयो यथा।**
**वस्तुनश्चाप्यभेदेऽपि व्यक्तिभेदः[6] पृथक् पृथक् ॥७॥**
**[7]लोहस्याप्यथ [8]लोकेऽस्मिन् किं न दृष्टं महामुने।**
**साध्यसाधन[9]भेदेन विभिन्ना [10]स्थानसंहतिः ॥८॥**

यद्यपि मृदो भुवनाकाराया घटोपादानभूतो मृत्पिण्डो मृद्रूपतयैव लोकैः प्रतिपद्यते। तथापि संदंशात्मकाल्लोहात्तदाकृष्य लोहान्तरस्यैव रूपान्तरपरिणामेन शक्तिविशेषप्रतिलम्भाद् भेदोऽस्त्येव। तदपरामर्शेन **यथा मृदः** घटादयो भवन्तीति व्यवहरति लोकः। तथैव **वस्तुनः** गुणतत्त्वस्य स्कन्धकारणात्मना भिन्नस्याप्यभेदे सति बुद्ध्यादिव्यक्तिभेदो भवतीत्युच्यत इति, न बुद्धेः कारणत्वानुपपत्तिः, येन नित्यत्वं स्यादिति ॥७–८॥

अथ गुणैरेव भगवान् बुद्ध्यादिकर्तव्यं विदधातु। ततः किं बुद्ध्यादिपृथिव्यन्तैरुत्पादितैरिति। अत्रोच्यते — 'शक्तय' इत्यादि।

**शक्तयः परमेशस्य स्वभावेन बलोत्कटाः।**
**प्रवृत्ताः सर्वकार्येषु कर्तृत्वेनात्मवर्तिना ॥९॥**

---

[1] बुद्ध्यपादानत्वं — ऋ.
[2] ०मापन्ने मृत्पिण्डा० — ऊ, ऋ.
[3] वस्तुतत्वेन — ऊ, ऋ.
[4] मतङ्ग० विद्या० ६. ९९ उ० – १०० पू० वृत्तौ।
[5] मृद स्थाल्यादयो — मु.
[6] व्यक्तिभेदात् — मु, ओ.
[7] लोकस्याप्यथ — मु.
[8] भेदेऽस्मिन् — ओ.
[9] ०भावेन — मु.
[10] स्थानसंततिः — मु, ओ.

[1]पटुना सुविशुद्धेन सर्व[2]दिक्केन भूरिणा।
न [3]मीमांस्या यतः पत्युरत्यद्भुतगुणोदयाः[4] ॥१०॥

यद्येवं परमेश्वरशक्तयः स्वभावेनैवाविचारिताः सर्वकार्यसम्पादिकाः सिद्धा इति, किं गुणादीनामुत्पत्त्या। अथ न ताः स्वतः पुंसामर्थसाधिकाः; अनुपादानत्वात् अपि तु गुणादिव्यवधानेनेत्युच्यते ॥९–१०॥

यद्येवम् — 'ताभिः' इत्यादि।

**ताभिः [5]संचलितेभ्योऽन्या गुणसंस्था प्रवर्तते।**

शक्तिभिः संक्षोभितेभ्यो गुणेभ्यः **अन्या** बुद्धिलक्षणगुणस्थितिस्वभावा पुरुषाणामुपकाराय **प्रवर्तते** इति को विरोधः॥

अत्र दृष्टान्तः — 'यथान्नपरिपाकस्य' इत्यादि।

**यथान्नपरिपाकस्य [6]भेदे देहेऽप्यवस्थिताः॥११॥**
**रसासृङ्मांसमेदोऽस्थिमज्जा[7]शुक्लानि धातवः**
**रसस्यात्मगुणो व्यापी [8]देहो रसमयो यतः॥१२॥**
**स्थान[9]भेदेऽपि नाभावो रसस्य मुनिसत्तम।**
**यथा तथा न भेदोऽस्ति गुणानां स्थानभेदतः॥१३॥**

दृष्टवद्धयदृष्टकल्पना युक्ता। **यथा** चैकदेशोपयुक्तस्यैवान्नस्य परिपाकाद्रसः, रसस्यासृक्, असृजस्त्वङ्मांसानि, मांसस्य मेदः, मेदसोऽस्थि, अस्थ्नो मज्जा, मज्जायाश्च शुक्रमित्येवं वातपित्तश्लेष्मात्मका **धातवः** परिपाकभेदेन जगतीति। **यथा** च **रसस्य** लवणमधुरकटुकादेरुपयोगमात्रेणैव सकलशरीरव्यापिस्वभावस्य शरीरावयवशाखा[10]भेदेऽपि न स्वरूपाभावः। यदुक्तमायुर्वेदे[11] —
"किंचिद्रसेन कुरुते किंचिद्वीर्येण [12]वस्तुनः।" इति।
**तथा** बुद्ध्यादिकार्यभेदव्यापकत्वेऽपि **गुणानां** न स्वात्माभाव इति। एवं दृष्टान्तावत्रोक्तौ ॥११–१३॥

अथ हेतुरुच्यते — 'व्यक्तः' इत्यादि।

---

[1] घटना सविशुद्धेन — मु.
[2] ०दिक्केण — मु.
[3] मीमांसा यतः — ऊ, ऋ.
[4] ०गुणोदयः — ऊ, ऋ.
[5] संचालितेभ्यो — मु, ओ.
[6] भेदो देहे व्यवस्थितः — ऊ, ऋ; भेदो देहव्यवस्थिताः — ओ.
[7] ०शुक्राणि — ऊ, ऋ.
[8] देहे — ऊ, ऋ.
[9] ०भेदो विनाभावो — मु; ०भेदोऽविनाभावो — ओ.
[10] भेदोऽपि — ऊ, ऋ.
[11] आकरो न लभ्यते।
[12] वस्तुतः — ऊ, ऋ.

**व्यक्तः [1]पुंस्युपकाराय भेदेन महदादिना।**
**[2]यतोऽर्थोऽनेकधा भोग्यो भोक्तुः कर्मविपाकजः ॥१४॥**
**ततो [3]गुणा विकारैः [4]स्वस्तावद्धि विसृता मुने।**

यो यः प्रकृतिभूतः सोऽपी अगुप्तात्मवृत्तिरेकदेशविकारद्वारेण पुंनिमित्तं [5]विसरतीति, न स्वात्मलोपेन [6]कार्यकृत् तदव्यापको वेति ॥

तदेवं बुद्धेः कार्यत्वासंभवेन नित्यत्वं पूर्वपक्षीकृतं प्रतिक्षिप्य, अधुनाष्टगुणोपेतत्वं [7]प्रागुक्तं प्रतिपाद्यते —'धर्मो ज्ञानम्' इत्यादि।

**धर्मो ज्ञानं च वैराग्यमैश्वर्यं सात्त्विका गुणाः ॥१५॥**

अत्र च धर्मादीनां चतुर्णां सत्त्विक[त्व]मुक्तम्। अवैराग्यस्य तु राजसत्वेन [8]वक्ष्यमाणत्वाद्, अधर्मादीनां त्रयाणां तामसत्वेन च, अष्टावपि बुद्धिगुणा विभागेनोक्ता भवन्तीति ॥१५॥

इदानीमत्रापि भुवनेश्वराणां [9]प्रागुक्तगुणतत्त्वभुवनेश्वराणामिव सत्त्वादिनिर्ह्रासक्रमतो भुवन-वैचित्र्यमुच्यते — 'निसर्गेणैव' इत्यादि।

**निसर्गेणैव ते [10]व्यक्ता [11]वेधस्युत्कृष्टवृत्तयः।**
**[12]प्रजापतौ [13]रजः किंचित्तेन [14]ज्ञानं न वेधसः ॥१६॥**
**सदृशं मुनिशार्दूल सोमस्य रजसोत्कटम्।**
**[15]इन्द्रस्यार्धाधिकं तच्च रजसा सत्त्व[16]मीदृशम् ॥१७॥**
**गन्धर्वस्य तदेवोक्तं तमसालिङ्गितं शनैः।**
**यक्षस्यापि तमः प्रोक्तं [17]तच्चार्धेन [18]रजः शनैः ॥१८॥**
**राक्षसानां [19]रजोऽर्धेन पादोनं कीर्तितं [20]तमः।**
**तमसोत्कृष्टमेवोक्तं रजः प्रध्वस्तगोचरम् ॥१९॥**
**पिशाचानां विजानीयाद्"**

---

[1] पुंसोऽपकाराय — मु, ओ.
[2] यथार्थो० मु.
[3] गुणाधिकारैः — ऊ, ऋ.
[4] स्वैस्तावद्भिर्निस्सृता — मु; स्वैस्तावद्भि-र्विसृता — ओ.
[5] विसरन्तीति — ऊ, ऋ.
[6] कार्यकृतस्तदव्यापका — ऊ, ऋ.
[7] मतङ्ग० विद्या० १७. २ उ०.
[8] मतङ्ग० विद्या० १७. १३३ उ० — १५७.
[9] मतङ्ग० विद्या० १६. २७–३४ पू०.
[10] व्यक्ताद्वेधस्यु० — मु.
[11] वेधस्युत्कटवृत्तयः — ऊ, ऋ.
[12] प्रजापते रजः — मु, ओ.
[13] रजाः — ऊ, ऋ.
[14] जानन्ति वेधसः — मु, ओ.
[15] इन्द्रस्यावाविकं — ऊ, ऋ.
[16] ०मीप्सितम् — मु० पाठभेदः, ऊ, ऋ, ओ.
[17] सत्त्वावेन — ऊ, ऋ.
[18] रजोगुणैः — मु, ओ.
[19] तमोऽनेन पादोऽत्र कीर्तितं — ऊ, ऋ.
[20] शनैः — मु० पाठान्तरम्।

[1]स्वभावेनैव विकारात्मना **ते** सत्त्वात्मका गुणा भुवनाकारत्वेन [2]ब्रह्मणो विषये इत्यर्थः। ततः,

[3]"ब्रह्मप्रजेशसोमानां शक्रगन्धर्वयोस्तथा ।
यक्षरक्षःपिशाचानां बुद्धौ भुवनपद्धतिः ॥
सत्त्वादिह्रासतः प्रोक्ता गुणा नाथेषु मायया ।" इति ॥

एताश्च देवानां योनयः [4]प्रागुक्ता न देवयोनयो भूतसर्गमध्यवर्तिनः । किं तु — 'बुद्धितत्त्वनिदर्शनाद्' इत्यादि ।

**"बुद्धितत्त्वनिदर्शनात् ।**
**देवानां योनयः सिद्धा ब्रह्मादीनां महात्मनाम् ॥२०॥**

बुद्धितत्त्वे यत एते दृश्यन्ते, ततस्तत्समानाभिधाना अन्या एवैता **देवानां ब्रह्मादीनां योनयः**। यत्तु श्रीमद्**रौरवे**[5] —

"पृथिवीतः पिशाचानामणिमादिगुणाष्टकम्" ।

इत्यादि वार्तिककृतोक्तं तत्तदध्वस्रोतसि तन्मात्रमनोऽहंकृद्बुद्धिभुवनेष्वेषां क्रमेणावस्थितेरुक्तत्वात् पृथिवीतन्मात्राद्येव पृथिव्यादि मन्तव्यम् । अन्यथा महाभूतेषु देवयोनीनां परापराणामपि न क्वचिदेव स्थितिः श्रूयत इति विरुद्धमेवैतदिति। अत एवैते ब्रह्मादयो महात्मानः सांख्यादिदृष्टेभ्यो ब्रह्मादिभ्यो[ऽपराः]। ते ह्येतेभ्योऽपचितशक्तय इत्यर्थः। येन कारणेन बुद्धिभुवनेऽप्येषामवस्थितिः सिद्धा ॥२०॥

'तेन' इत्यादि ।

**तेन ते सात्त्विका देवा अष्टावपि महौजसः।**
**मानुषा राजसाः प्रोक्तास्तिर्यक्तामस[6]लक्षणाः ॥२१॥**
**तथापि युक्तितो वाच्यं क्रमेणैव यथास्थितम् ।**

**तेन ते** सांख्यादिदृष्टा **देवाः** ब्रह्माद्या अन्ये, ये मानुष्यादिभिः सहास्मिन्नेव भूतसर्गे सत्त्वादिभेदेन वर्तन्ते। यदाहुः सांख्याः[7] —

"ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः।
मध्ये रजोविशालो ब्रह्मादि[8]स्तम्बपर्यन्तः ॥" इति।

यद्यपि सांख्यैरेवमुक्तम्। **तथापि** प्रोक्तयुक्तितस्तदपि देवयोन्यष्टकं गुणापचयक्रमेणैव वाच्यमित्युक्तं [9]प्राक्। अपि च [10]भविष्यति ॥

---

[1] स्वभावैवं वा — ऊ, ऋ.
[2] ब्राह्मणविषयेत्यर्थः — ऊ, ऋ; अत्र ग्रन्थपातः स्यादिति भाति।
[3] आकरो न लभ्यते।
[4] मतङ्ग० विद्या० १५. ११ उ०.
[5] मुद्रिते न लभ्यते ।
[6] ०लक्षणम् — मु, ओ.
[7] सांख्यका० ५४.
[8] ०स्तम्भपर्यन्तः — ऊ, ऋ.
[9] मतङ्ग० विद्या० १७. २० वृत्तौ।
[10] मतङ्ग० विद्या० १७. १२६ उ० — १३२ पू० वृत्तौ।

अथ धर्मादीनां स्वरूपवैचित्र्यमुच्यते — 'तिष्ठतः' इत्यादि।

**[1]तिष्ठतः प्राकृते देहे पुरुषस्याभिलाषिणः ॥२२॥**
**तदापूरितवीर्यस्य प्रधानस्य विचेतसः।**
**बुद्धयादयः प्रवृत्त्यर्थं वृत्तयः प्राङ्निरूपिताः ॥२३॥**
**कारणेन जगद्धात्रा पुरुषाणां विभूतये।**

महाप्रलये शरीरस्यासंभवादत्र देहशब्देन [2]देहकारणं कर्म कथ्यते। तच्च प्रकृतेः संबन्धि तदानीं बुद्धेरुपसंहृतत्वान्न पुंस [3]इत्युक्तम्। तस्मिन् **प्राकृते देहे** प्रकृतिस्थे कर्मणि **तिष्ठतः** पुंसः, तत्संबन्धयोग्यतां भजतः **अभिलाषिणः** मलयुक्तस्य प्रलयकेवलिनः सतः इत्यर्थः। तेन प्राकृतेन देहेन सहकारिणापूरितं वीर्यं शक्तिर्यस्य **प्रधानस्य** अचेतनस्य संबन्धिन्यो बुद्धयादिवृत्तयः **पुरुषाणां प्रवृत्त्यर्थं**, भोगलक्षणविभूत्यर्थं च परमेश्वरेण **प्राङ्निरूपिताः** रूपीकृताः पुरुषभेदेन विचित्र[4]स्वभावा रचिता इति॥

[5]प्रागुक्तानु[6]वादेन पूर्वार्थकथनाय [7]सेयं कथ्यते — 'बोधयित्री' इत्यादि।

**बोधयित्री [8]स्मृता ख्यातिर्भावानां योनिरव्यया ॥२४॥**
**भोक्तुर्भोगाभिलाषेण बुद्धिरष्टगुणान्विता।**
**अणोरध्यवसायेन [9]प्रवृत्ताध्यवसायिनी ॥२५॥**
**प्रवर्तते [10]ततो भावैरनन्तैः प्रत्ययात्मकैः।**

यैषा [11]**ख्यातिः बुद्धिः अणोः अध्यवसायेन बोधयित्री** इत्युक्ता, सैव [12]**भावानां** धर्मादीनां **योनिः**। [13]तस्यां हि ते [14]वासनाबीजात्मना [15]निषिच्यन्ते। यतः सैव **भोक्तुः अष्टगुणान्विता** [16]प्रवृत्तये [17]**प्रवृत्ता। ततः, भावैः** धर्मादिभिः, प्रत्ययैश्च सिद्धयादिभिः **अनन्तैः प्रवर्तते** इति। यदुक्तं सांख्यैः[18] —

"एष प्रत्ययसर्गो [19]विपर्ययाशक्ति[20]तुष्टि[21]सिद्धयाख्यः।
गुणवैषम्य[22]विमर्दात्तस्य च भेदास्तु पञ्चाशत्॥" इति॥

---

[1] वर्ततः — मु; तिष्ठत्यः — ऊ; त्रिष्वतः — ओ.
[2] देवकारणं — ऊ, ऋ.
[3] मतङ्ग० विद्या० १०. २ वृत्तौ।
[4] ०स्वभावरचिता – आ, ई, उ, ए, ऐ.
[5] मतङ्ग० विद्या० १७. २.
[6] ०वादोऽपूर्वार्थ० — ऊ, ऋ, ऐ.
[7] सोऽयं — ऊ, ऋ, ए, ऐ.
[8] स्मृतिः ख्याति० — मु, उ, ओ.
[9] प्रयुक्ताध्यव० — मु, उ, ऊ, ऋ.
[10] तदा भावै० — ऊ, ऋ, ओ.
[11] ख्यातिबुद्धिरणोः — ई, उ, ए; ख्यातिबुद्धिर्द्धिरणोः — ऐ.
[12] भाविनां — आ; भावनान् — ऐ.
[13] यस्यां — ए.
[14] वासानां बीजात्मना — ऐ.
[15] निषिध्यन्ते — अ, ऋ; निष्यध्यन्ते — आ; अतिषिच्यन्ते — ए; निषिध्यते — ऐ.
[16] प्रवृत्तेत्युक्तं ततः — ऊ, ऋ.
[17] प्रवृत्तां ततः — आ, ई, उ.
[18] सांख्यका० ४६.
[19] विपर्ययासिद्धिशक्तितुष्टि० — आ; विपर्ययशक्तितुष्टि० — ए;
[20] ०तुष्टी० — ऐ.
[21] ०सिद्धयाख्याः — ऋ.
[22] ०विमर्देन न तस्य भेदास्तु — अ; ०विमर्देन तस्य भेदास्तु — आ, ई, उ, ऊ, ऋ, ए, ऐ.

अथ सिद्ध्यादीनां यथा प्रत्ययशब्दवाच्यत्वं तथोच्यते — 'प्रत्यय' इत्यादि।

**प्रत्ययोऽक्षार्थयोगोत्थः[1] पुंसः प्रत्ययकृत्सदा ॥२६॥**

सिद्ध्यादिकोऽपि[2] प्रत्ययो यद्यपि [3]मनोलक्षणेन्द्रियतद्गोचरार्थसंबन्धेनोत्थितः। तथापि यतः [4]सार्वकालं पुंविषयं प्रत्ययमुत्पादयति। यदुक्तम्[5] — "तदा द्रष्टुः [6]स्वरूपेऽवस्थानम्" इति। ततः प्रत्यय[7]शब्देनोच्यते। तथा [8]चाहुः[9] —

"प्रत्याययन्ति क्षेत्रज्ञं [10]प्रत्ययास्तेन ते स्मृताः" इति ॥२६॥

धर्मादीनामपि भावशब्द[11]प्रवृत्तौ हेतुरुच्यते — 'भावनात' इत्यादि।

**भावनातः [12]स्मृतो भावो वास्यते येन [13]पुद्गलः।**

[14]भावयन्ति अधिवासयन्ति बुद्धिं यतो धर्मादयोऽनुष्ठिताः, ततो भावाः कथ्यन्ते। यदाहुः[15] —

"भावयन्ति यतो लिङ्गं तेन भावाः प्रकीर्तिताः।" इति।

अत एव पुद्गलशब्देनात्र पुद्गल[16]प्रत्यासत्त्या लिङ्गमुच्यते ॥

[17]अथ धर्मादीनामनुष्ठितानां भावरूपत्वं दर्शयितुं ज्ञानादिभ्यस्तावद्धर्मस्यानुष्ठानभेदसिद्धये-[18]ऽधिकारिभेद उच्यते — 'सत्त्वेन' इत्यादि।

**[19]सत्त्वेनापूरितस्येत्थं महतः शनकै रजः ॥२७॥**
**यदा तु ध्वस्ततमसस्तदासौ परमेश्वरः।**
**बुद्धावाश्रित्य किरणै[20]रमोघैर्बलशालिभिः ॥२८॥**
**नियुनक्त्यतिवीर्येण पुरुषं धर्मसाधने।**

[21]**इत्थम्** अधिवासनात्मना **सत्त्वेनापूरितस्य**। अत एव निवृत्ततमसो महत्तत्त्वस्य [22]**यदा** [23]ईषद् **रजः** प्रवर्तते; तदा [24]तद्युक्तं **पुरुषम्** ईश्वरो धर्मानुष्ठाने [25]नियुङ्क्ते ॥

---

[1] ०योगार्थः — मु, उ, ऊ, ऋ.
[2] 'अपि' इत्यत्र हिशब्दो दृश्यते — ऐ.
[3] मनोधर्मिणेन्द्रिय० — ए.
[4] सर्वकालं — ऊ, ऋ.
[5] योगसू० १. ३.
[6] स्वरूपावस्थानम् — ऊ, ऋ.
[7] शब्देनोच्येते — आ.
[8] चशब्दो नास्ति — ए.
[9] पौष्करे विद्या० पुंस्तत्त्वपटले १२४.
[10] तेन ते प्रत्ययाः स्मृताः — मुद्रितपौष्करपाठः।
[11] ०प्रवृत्तिहेतु० — अ.
[12] स्थितो — मु, उ, ओ.
[13] पुद्गलम् — ओ.
[14] भावय इत्यधिवास० — ऐ.
[15] आकरो न लभ्यते।
[16] ......शक्त्या — अ; ०प्रत्ययासक्त्या — आ; ०प्रत्ययासत्त्या–ई, उ; ०प्रत्यासक्त्या–ए.
[17] अत्र — ए; 'अथ' इत्यारभ्य 'उच्यते' इत्यन्तं नास्ति — ऊ, ऋ.
[18] ०ऽधिकारभेद० — ए.
[19] सत्त्वेन पूरित० — ओ.
[20] ०रमेयैर्बल० — ओ.
[21] इत्थमिति वा परात्मना — ऊ, ऋ; इत्थमधिवासनाः सत्त्वेना० — ए.
[22] यदि — ऊ, ऋ.
[23] ईषदृशः प्रवर्तते — ई, उ.
[24] तदुक्तं — अ, ऊ, ए.
[25] नियुज्यते — अ; नियुज्यन्ते — ए.

'धर्मश्च' इत्यादि।

**धर्मश्च[1] द्विविधः प्रोक्तो [2]यमश्च नियमोऽपरः ॥२९॥**

चित्तसंयमो **यमः**। **नियमः** [3]त्वशास्त्रीय[4]कर्मपरिहारेण [5]शास्त्रीयैः क्रियानुष्ठानायेन्द्रियसंयमः ॥२९॥

'अहिंसा' इत्यादि।

**अहिंसा सत्यमस्तेयं ब्रह्मचर्य[6]मकल्कता।**
**[7]यमः पञ्चविधः प्रोक्तो नियमश्चाप्यथोच्यते ॥३०॥**
**अक्रोधो गुरुशुश्रूषा शौचं संतोष एव च।**
**[8]आर्जवं चेति नियमः पञ्चधा परिकीर्तितः ॥३१॥**

अहिंसेत्यादि[9]पञ्च यमाः। अक्रोध इत्यादि[10]पञ्च नियमाः। **गुरु[11]शुश्रूषा** [12]चात्रोपलक्षणमन्येषां नित्यनैमित्तिककाम्यानां [13]वैदिकानां कर्मणाम्। यद्वक्ष्यति तल्लक्षणे[14] —

"दानोपवासतीर्थानि [15]कीर्तनावसथादयः"। इति।

कीर्तनं [16]स्वाध्यायाध्ययनम्। [17]आवसथस्तु आहिताग्नितेति ॥३०-३१॥

[18]ते च लोकसिद्धा एव। केवलमत्र प्रकृष्टाः प्रतिपाद्यन्ते —

**अहिंसा नाम यद्दुःखं परेभ्यो नोपपद्यते।**
**आत्मवत्सर्वभूतानि यः पश्यति [19]स आत्मवान् ॥३२॥**
**[20]नापकारेऽपि किंचित्स्याद्दुःखमुत्पादितुं[21] क्षमः।**
**अहिंसेयं समाख्याता पुंसो धर्मजिगीषया ॥३३॥**
**आपत्स्वपि न यस्येत्थमलीके वाक् प्रवर्तते।**
**[22]तथ्येऽपि न भवेद्येन परेभ्यो दुःखमण्वपि ॥३४॥**

---

[1] धर्मो हि — मु.
[2] नियमश्च यमोऽपरः — मु, उ, ओ.
[3] तु शास्त्रीय० — अ; त्वशास्त्रस्वकर्म० — ए.
[4] ०कर्मणः परि० — ऐ.
[5] शास्त्रीयैकक्रियानिष्ठतया इन्द्रियसमयः — ऊ, ऋ.
[6] ०मकल्पता — उ.
[7] यमोऽयं पञ्चधा प्रोक्तो — मु, उ, ओ.
[8] अर्जवं — ओ.
[9] पञ्चयमः — ऐ.
[10] पञ्चनियमः — ऐ.
[11] ०शुश्रूषामात्रोपलक्षणम् — ऊ, ऋ.
[12] चशब्दो नास्ति — अ, आ, ई, उ, ए.
[13] 'वैदिकानां' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[14] मतङ्ग० विद्या० १७. ४७ उ०.
[15] कीर्तनयावसंस्थाप्य इति — ऐ.
[16] स्वाध्यायोऽध्ययनम् — आ; स्वाध्येयाध्ययनम् — ई, उ.
[17] अवसथस्तु — अ, ऊ, ऋ, ए.
[18] एवं च — ऊ, ऋ.
[19] महात्मवान् — ऊ, ऋ.
[20] नापकारोऽपि — ओ.
[21] 'उत्पादयितुम्' इत्यर्थे 'उत्पादितुम्' इत्यार्षप्रयोगः।
[22] तथापि हि भवेद्येन — उ; तथ्येऽपि हि भवेद्येन — ऊ, ऋ; तथ्योऽपि हि भवेद्येन — ओ.

तत्सत्यं मनसः शुद्ध्यै धर्मवृत्ति[1]स्थितात्मनः।
[2]नादत्तमाददेत्किंचिद्दत्तं वा [3]न्यायतः शुभम् ॥३५॥
दृष्टमप्यथ कस्यापि च्युतमेतन्निशाम्य तु[4]।
[5]तृणवन्मन्यते धर्मी [6]तदचौर्यमुदाहृतम् ॥३६॥
कर्मणा मनसा वाचा श्रवणाद्दर्शनादपि।
मातृवन्मन्यते नित्यं प्रार्थयन्तीमपि [7]स्त्रियम् ॥३७॥
दिव्यायामप्यलौल्येन य एवं वर्तते सदा।
तस्य तद्ब्रह्मचर्यं स्याच्छेषा [8]व्रतविडम्बकाः ॥३८॥
स्वच्छता समता [9]प्रीतिरपकारशतैरपि
[10]कालुष्यं नोत्सहेद्वोढुं [11]सेयमुक्ते[12]त्यकल्कता ॥३९॥
एते पञ्च यमाः प्रोक्ता यतीनां [13]सुशिवात्मनाम्।
प्रध्वस्त[14]कलुषो नित्यं [15]क्रुष्यमाणोऽपि भूरिशः ॥४०॥
ताड्यमानोऽपि [16]बलवत्प्रहृष्यति मुहुर्मुहुः।
न कुप्यति कदाचिच्च सोऽक्रोधः [17]परिभाष्यते ॥४१॥
देवानां ब्राह्मणानां च मातापित्रोश्च भक्तितः।
वृद्धानामपि सर्वेषां [18]सदाज्ञानुचरो भृशम् ॥४२॥
शुश्रूषेयं समुद्दिष्टा नियमो धर्मवृद्धये।
मृदम्भसा सुपूतेन गन्धलेपापकर्षणम् ॥४३॥
गात्रप्रक्षालनं [19]शौचं स्थानासननिषेवणम्।
[20]अकुत्सितेषु [21]संस्पर्शाच्छौचवृत्तिरनिन्दिता[22] ॥४४॥
परिपूर्णेन चित्तेन [23]निरारम्भः [24]सदैव हि।
[25]लाभालाभे समौपम्यं स संतोष उदाहृतः ॥४५॥

---

[1] ०स्थितात्मनाम् — मु, उ, ओ.
[2] नादत्तमाददते किंचिद् — मु; नादातुमाद-देत्किंचिद् — ऊ, ऋ.
[3] न्यायतोऽशुभम् — ऊ, ऋ.
[4] ०न्निशम्यते — उ; ०न्निशम्य तु — ऊ, ऋ.
[5] तृणवर्त्मन्यतो — मु.
[6] तदा शौचमुदाहृतम् — ऊ, ऋ.
[7] स्थितम् — ऊ, ऋ.
[8] वृतविडम्बकाः — मु.
[9] प्रीतिनापकार० — उ; प्रीतिर्नपकार० — ऊ, ऋ.
[10] कालुष्यमुत्सहेत्सोढुं — ऊ, ऋ.
[11] सेयमात्मन्यकल्कता — ऊ, ऋ.
[12] ०त्यकल्पता — उ.
[13] सेवितात्मनाम् — ऊ, ऋ.
[14] ०कलमषो — ओ.
[15] क्रुध्यमानोऽपि — ऊ, ऋ.
[16] बलवान् ब्रह्मस्यति — ऊ, ऋ.
[17] कथ्यते बुधैः — ऊ, ऋ.
[18] तदाज्ञानु० — उ.
[19] शौचस्थानासननिवेशनम् — ऊ, ऋ.
[20] अकुत्सितेष्वसंस्पर्शा० — ओ.
[21] संस्पर्शः शौच० — ऊ, ऋ.
[22] ०रनिर्मिता — ऊ, ऋ.
[23] निरारम्भं — मु, उ, ओ; निरालम्भः — ऋ.
[24] यदैव — मु.
[25] लाभेऽलाभे समो धर्मः संतोषः स उदाहृतः — ऊ, ऋ.

**जानन्नपि [1]हि मेधावी जड[2]वन्मूकवत्सदा ।**
**निवृत्तः पर[3]पीडायाः [4]श्रद्दधानश्च भावितः ॥४६॥**
**आर्जवं तस्य तत्प्रोक्तं नियमो [5]नियतात्मनः ।**
**दानोपवासतीर्थानि कीर्तनावसथादयः ॥४७॥**
**धर्मस्य हेतवो दृष्टा [6]धर्मिणश्च महात्मनः ।**

[7]अधुना ज्ञानस्य तथैवाधि[8]कारिभेदेन स्वरूपमुच्यते — 'प्रध्वस्तरजसम्' इत्यादि ।

**प्रध्वस्त[9]रजसं सत्त्वं धर्मेणाच्छादितं [10]तमः ॥४८॥**
**तदा बुद्धावधिष्ठाय भगवान्परमेश्वरः ।**
**[11]ज्ञाने नियोजयत्याशु धर्मानुक्रमतः शनैः ॥४९॥**

यदा निवृत्त[12]रजस्कं शुद्धमेव **सत्त्वं बुद्धौ** भवति धर्मानुष्ठानेन च [13]ध्वस्ततमसः, **तदा भगवान्** तथा[14]भूतबुद्धियुक्तं [15]पुरुषं [16]धर्मानुष्ठानक्रमेणैव **ज्ञाने नियोजयति** । [17]तदेव [18]च [19]ज्ञानं प्रकर्षावस्थां [20]प्राप्तं [21]सिद्धिरित्युच्यते ॥४८–४९॥

'पञ्चात्मकम्' इत्यादि ।

**पञ्चात्मकमिदं सर्वं यत्किंचित्सचराचरम् ।**
**एभ्यः परतरं नास्ति सिद्धोऽहमिति मन्यते ॥५०॥**
**तत्तस्य [22]साधकस्येष्टं ज्ञानं पञ्चात्मकं मतम् ।**

सांख्यानां [23]हि [24]व्यक्ताव्यक्तज्ञविज्ञानान्मोक्ष [25]इति व्यक्तस्य [26]गुणत्रयात्मकत्वात् [27]**पञ्चात्मकं**

---

[1] च — ओ.
[2] ०वज्रकवत्सदा — ओ.
[3] ०पीडायां — मु, ओ.
[4] रुग्दधानश्च — उ; श्रद्दधानः स्वभावतः —ऊ, ॠ.
[5] नियमात्मनः — मु, उ, ओ.
[6] धर्मो यस्य महात्मनः — ऊ, ॠ.
[7] 'अधुना' इत्यारभ्य 'स्वरूपमुच्यते' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] ०कारभेदेन — ऊ, ॠ.
[9] ०रजसा सत्त्व० — मु.
[10] ततः — उ.
[11] ज्ञानेन योज० — ओ.
[12] ०रजसं शुद्ध० — ऊ, ॠ.
[13] ध्वस्ततमस्तदा — आ, ए.
[14] ०भूतं बुद्धि० — आ, ई, उ.
[15] पुरुषधर्मानु० — अ, आ, ई, उ, ए.
[16] कर्मानुष्ठान० — ऐ.
[17] तदेवं — अ.
[18] चशब्दो नास्ति — अ, आ, ई, उ.
[19] 'ज्ञानं' इति नास्ति — अ; ज्ञाने प्रकर्षा० —ऊ, ॠ; ज्ञानप्रकर्षा० — ए.
[20] प्राप्ता० — आ, ई, उ, ए.
[21] सिद्धिरुच्यते — ए.
[22] साधकस्येत्थं — ऊ, ॠ; साधकस्येदं — ओ.
[23] हिशब्दो नास्ति — ऊ, ॠ, ऐ.
[24] सांख्यका० २ उ०; व्यक्ताव्यक्तविज्ञानाद् — ए; व्यक्ताद्विज्ञानाद् — ऐ.
[25] इत्यव्यक्तस्य — ऊ, ॠ; इत्यव्यक्ताव्यक्तज्ञविव्यक्तस्य — ऐ.
[26] गुणक्रियात्मकत्वात् — अ.
[27] पञ्चात्मकज्ञानम् — ई, उ, ऊ, ॠ, ए, ऐ.

**ज्ञानम्**। [1]उक्तस्यैव पञ्चाधिकरणत्वेन [2]प्रसिद्धेः। अत एव **यत्किंचित्** ब्रह्मादिस्थावरान्तं तत् **सर्वं पञ्चात्मक**मेव। यत [3]**एभ्यः** [4]पञ्चभ्यः [5]परमन्यत् सांख्यमते **नास्ति**। [6]ततस्तस्माज्ज्ञानात् [7]पुरुषस्य [8]कैवल्यप्राप्तिरिति तदेव ज्ञानं सिद्धिरित्युच्यते ॥

[9]सा च निमित्तभेदादष्टविधा। तथा हि — 'निरूप्यमाणस्य' इत्यादि।

**निरूप्य[10]माणस्य यत्तत्सहसोत्पद्यते त्रयात् ॥५१॥**
**[11]सद्भ्योपदेशमाकर्ण्य दृष्ट्वा वा लिखितं [12]स्वयम्।**
**[13]अधीत्य [14]वाथ संसिद्धो मन्यते [15]भावितात्मवान् ॥५२॥**

[16]**निरूप्यमाणस्य** प्रकृतिपुरुपविभागात्मनोऽर्थस्य **यद्** ज्ञानं, **सहसेति** उपदेशानपेक्षया प्राक्तन-संस्कारसामर्थ्येनैव [17]साधकानामूहात्मकम् **उत्पद्यते**, सा एका सिद्धिः। किं च **त्रयादिति** [18]तदू-हादियोग्यस्यापि [19]साधकस्य यदा आध्यात्मिकेन, [20]आधिदैविकेन, आधिभौतिकेन वा दुःखेनाभि-तप्तत्वात् [21]तदूहादिर्न[22] संपद्यते, [23]तदा तस्य [24]दुःखभयस्य विघातत्रयाद्धेतोस्तज्ज्ञान[25]मुत्पद्यते इति सिद्धित्रयमुच्यते। किं च **सद्भयः** कल्याणमित्रेभ्यः श्रुत्वा कथात्मकम् **उपदेशं** कदाचित् सिद्धो भवति यदि वा **स्वयमेव** [26]शास्त्रालोकनात्, गुरुतः **अधीत्य वा** इत्येवं सिद्धित्रयमन्यदुच्यते। किं च [27]दानादिना भावितात्मना वा **संसिद्धः** [28]भवतीत्येवमेताः सिद्धयोऽष्टौ सांख्यैर्मन्यन्ते। यदाहुः[29] —

"ऊहः शब्दोऽध्ययनं दुःखविघातत्रयं सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ" इति ॥५१–५२॥

---

[1] उक्तस्येव — अ, आ, ई, उ, ए; उक्तं तस्यैव — ऊ, ऋ.

[2] 'प्रसिद्धेः' इत्यत्र 'सिद्धेः' इति दृश्यते — ऊ, ऋ.

[3] पञ्चभ्य एभ्यः — ए; येभ्यः — ऐ.

[4] 'पञ्चभ्यः' इति नास्ति — ऊ, ऋ, ऐ.

[5] परमन्यं सांख्यमतं नास्ति — ऊ, ऋ.

[6] तत्तस्माद् — ऊ, ऋ.

[7] पुरुषकैवल्य० — ऊ, ऋ, ऐ.

[8] केवलस्य प्राप्ति० — अ, ए.

[9] स च — ऐ.

[10] ०माणस्सततं सहसो० — उ; ०माणस्य सतः सहसो — ऊ, ऋ.

[11] सद्भ्यो वा लेशमाकर्ण्य — मु, उ, ओ. 'सद्भ्य उपदेशम्' इत्यत्र सन्धिरार्षः।

[12] सकृत् — मु, उ, ऊ, ऋ, ओ; अत्र वृत्ति-मनुसृत्य 'स्वयम्' इति, पाठः स्वीकृतः।

[13] अध्येयं — मु, उ, ओ.

[14] वा स संसिद्धो — ऊ, ऋ, ओ.

[15] भावितात्मनाम् — ऊ, ऋ; भावितात्मना–ओ.

[16] विचार्यमाणस्य — ऊ, ऋ.

[17] साधकानां समूहात्मकम्–अ, आ, ई, उ, ए ऐ.

[18] तदूहाद्ययोग्यस्यापि — अ, आ, ई, उ; तदू-हाधियोग्यस्यापि — ऊ, ऋ.

[19] 'साधकस्य' इति नास्ति — ऊ, ऋ.

[20] 'आधिदैविकेन' इति नास्ति — ऊ, ऋ.

[21] 'तद्' इति नास्ति — ऋ.

[22] नकारो नास्ति — अ, आ, ई, उ, ए, ऐ.

[23] 'तदा तस्य' इत्यत्र 'न कदास्य' इति दृश्यते–ऐ.

[24] दुःखत्रयस्य — अ, आ, ई, उ, ए. ऐ; सुख-दुःखभयस्य — ऊ, ऋ.

[25] ०मुपपद्यते — अ, आ, ई, उ, ए, ऐ.

[26] शास्त्रावलोकनात् — ऊ, ऋ.

[27] 'दानादिना भावितात्मना वा' इत्यस्य स्थाने 'पापादिना पुंसानुभावितात्मा सिद्धिविषये भवति, ततश्च दानेन पापक्षयाद्भावितात्म-वान्' इति दृश्यते — ऊ, ऋ.

[28] भवत्येवमतः सिद्धयो — ऊ, ऋ.

[29] सांख्यका० ५१.

अथ तत्त्वान्तरसिद्धयः — 'तन्मात्रेभ्यः' इत्यादि।

**[1]तन्मात्रेभ्यः परं नास्ति ज्ञानं तन्मात्रमुच्यते।**

तत्र ये [2]स्मार्तादयो [3]भूताण्डकारणमेव यत्, तदेव **परं** ब्रह्म ज्ञानेन प्राप्तव्यम्। नान्यदसंभवा-[4]दित्याहुः। ते वस्तुतः तन्मात्रसिद्धा इत्युच्यन्ते॥

'इन्द्रियार्थाद्' इत्यादि।

**इन्द्रियार्थात्परं ज्ञानं न भूतं न भविष्यति॥५३॥**
**अस्मात्सं[5]योगजाज्ज्ञानात्सिद्धोऽहमिति मन्यते।**
**तज्ज्ञानं योगजं नाम भावितानां महामुने॥५४॥**

ये [6]त्विन्द्रियचैतनिकाः इन्द्रियफलभोगादर्थात् **परम्** अन्यदात्मवस्तु नास्तीत्याहुः। [7]ते ज्ञानेनानेन भाविताः इन्द्रियसिद्धाः कथ्यन्ते॥५३–५४॥

'अन्योन्यकारणम्' इत्यादि।

**[8]अन्योन्यकारणं ज्ञात्वा परमेतत्किमद्भुतम्।**
**[9]तस्मादेव समुत्पन्नं जगदेतच्चराचरम्॥५५॥**
**[10]तन्मन्यमानाः संसिद्धास्तज्ज्ञानं गुह्यमुच्यते।**

ये पुनरिन्द्रियाणां प्रवृत्तौ[11] निवृत्तौ [12]वापि कारणं तद् ब्रह्म [13]**परम्, तस्माद् जगत्** सर्वं प्रवर्तते [14]इत्यभ्युपगमा[15]दिन्द्रियाणां प्रवृत्त्यादिकारणं ज्ञानात् [16]प्राप्तव्यमित्याहुः। तेऽन्तःकरणचैतनिकेषु मनःसिद्धाः प्रोक्ताः। तस्यैव [17]नियन्तृत्वात्॥

'अहम्' इत्यादि।

**अहमिति प्रत्ययो यः परमात्मा स उच्यते॥५६॥**

---

[1] तन्मात्रेभ्योऽपरं — उ.
[2] मन्वादयो — ऊ, ऋ.
[3] भूतार्थकारणमेव — ए.
[4] ०दित्याद्याहुः — अ.
[5] ०योगजज्ञानात् — मु, उ, ओ.
[6] त्वैन्द्रियं चैतनिकाः — अ, ई, उ; त्विन्द्रिय-चेतनिकाः — ऊ, ऋ; त्वैन्द्रचचैतनिकाः — ए; त्वैन्द्रियचैतनिकाः — ऐ.
[7] ते ज्ञानेन भाविताः — ए; तेन ज्ञानेनानेन भाविताः — ऐ.
[8] अन्योऽन्यं कारणं — उ; अन्योन्यकरणं—ऊ; अन्योऽन्तःकरणं — ऋ.
[9] अस्मादेव — मु, उ, ओ.
[10] तान्मन्यमानाः — ओ.
[11] अत्र 'ये' इत्यधिकम् — ऊ, ऋ; चशब्दोऽधिकः — ए.
[12] चापि — ऊ, ऋ.
[13] परमं तस्माद् — ऊ, ऋ; परतस्तस्माद् — ऐ.
[14] इत्युपगमाद् — ऐ.
[15] ०दिन्द्रियादीनां प्रवृत्त्यादि० — अ, ई, उ.
[16] प्राप्तव्यमहमित्याहुः — अ.
[17] नियन्त्रितत्वात्— ए.

[१]कः कर्ता क्रियते [२]कस्य किं कृतं जगतो मया।
स [३]एवाहं [४]विमुक्तात्मा तज्ज्ञानं [५]गर्व उच्यते ॥५७॥

[६]येषां तु[७] निरुपाध्यहं[८]प्रत्ययस्वभावमेव ब्रह्म ज्ञानात् प्राप्तव्यमिति [९]मतिः, तेऽन्तःकरण-चैतनिकेषु अहंकारसिद्धाः कथ्यन्ते ॥५६–५७॥

'योऽयम्' इत्यादि।

**योऽयमध्यवसायाख्यो जगतो हेतुरव्ययः।**
**स[१०] परः [११]परतस्तस्मान्नान्यदस्तीति कारणम् ॥५८॥**
**अस्माद्बोधात्परा [१२]सिद्धिर्ज्ञानमध्यवसायजम्।**

[१३]येषां पुनः अध्यवसायादिभेदभिन्नं विज्ञानमेव क्लेशवासनायोगात् संसारहेतुः। **न** तु **ततो** व्यतिरिक्तम् **अन्यद्** आत्मादिकं वस्तु **अस्तीति** [१४]अभ्युपगमो बौद्धानां ते[१५], येषां च [१६]बुद्धिसुख[१७]दुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मगुणाना[१८]मत्यन्ताभावो मोक्ष इति, परमार्थतस्तेऽप्यष्ट[१९]गुणां बुद्धिमे[२०]वात्मत्वेन मन्यमाना नैयायिकादयोऽन्तःकरणचैतनिकेषु बुद्धिसिद्धाः [२१]इत्युच्यन्ते ॥

'गुणाः' इत्यादि।

**[२२]गुणाः [२३]सर्वजगन्मुख्या [२४]गुणा एव परं पदम् ॥५९॥**
**सिद्धोऽहमिति तज्ज्ञानं गौणं भावित[२५]चेतसः।**

---

[१] कर्ता हि क्रियते — मु.
[२] तस्य — मु, उ, ओ.
[३] एवायं — उ.
[४] विभक्तात्मा — मु, उ, ओ.
[५] गार्वमुच्यते — ऊ, ऋ; गर्वमुच्यते — ओ.
[६] तेषां तु — अ, आ, ई, उ; एषां तु — ऐ.
[७] अत्र 'तद्' इत्यधिकम् — ऐ.
[८] निरूपाख्याहं० — अ, आ, ई, उ, ए, ऐ.
[९] अतस्तेऽन्तःकरण० — अ, आ, ई, उ; अत एवान्तःकरण० — ए; मानान्तःकरण० — ऐ.
[१०] यः — मु, उ.
[११] परतस्तस्य नान्य० — मु, उ, ओ.
[१२] सिद्धिर्ज्ञानमध्यवसायकम् — ऊ, ऋ.
[१३] एषां — ऐ.
[१४] उपगमो — ऊ, ऋ.
[१५] 'ते' इति नास्ति — अ, ऊ, ऋ, ऐ; 'ते' इत्यत्र 'ते च' इति दृश्यते — ए.
[१६] आत्मगुणाः नैयायिकमते — 'तस्य गुणा बुद्धि-सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरि-णामपृथक्त्वसंयोगविभागाः। आत्मलिङ्गा-धिकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धाः। धर्मा-धर्मावात्मान्तरगुणानामकारणत्ववचनात्। सं-स्कारः स्मृत्युत्पत्तौ कारणवचनात्।' प्रशस्त-पादभाष्ये पृ० ९७, ९८.
[१७] ०दुःखेच्छारागद्वेष० — ऐ.
[१८] ०मत्यन्ताभावे मोक्षः — अ, आ, ई, उ.
[१९] ०गुणाः बुद्धिम् — अ; ऐ; ०गुणात्मबुद्धिम् — ए.
[२०] ०वात्मकत्वेन — अ, आ, ई, उ, ए, ऐ.
[२१] इत्युच्यते — ई, उ, ऐ.
[२२] गुणात्सर्व जगन्मुख्या — मु, उ.
[२३] सर्वं जगन्मुख्यं — ऊ, ऋ.
[२४] गुण एव — ओ.
[२५] ०चेतसम् — उ.

ये तु स्याद्वादिनोऽनैकान्तिकमेव वस्तु प्राप्यमाहुः। तेऽपि[1] "[2]चलं च गुणवृत्तम्" इति [3]पातञ्जलोक्तेन नयेन [4]गुणानेव तथा मन्यन्ते इति [5]गुणसिद्धाः इत्युच्यन्ते। यदुक्तं श्रीमत्**सर्वज्ञानोत्तरे**[6] "बुद्धितत्त्वे स्थिता बौद्धा [7]गुणेष्वेवार्हताः स्थिताः।" इति ॥

'प्रधानम्' इत्यादि।

**प्रधानं पुरुषं केचिन्मन्यमानाः सुभाविताः ॥६०॥**
**पञ्चविंशात्मकात्तत्त्वादन्यत्तत्त्वं न विद्यते।**

केचित्पुनः "[8]भगवान् वासुदेवः [9]परा प्रकृतिज्यायसी [10]विभूतिः" इत्याद्यभ्युपगमाद् [11]गुणकारणं प्रधानमेवाव्यक्ताभिधानं प्राप्यं मन्यन्ते [12]पाञ्चरात्रास्तेऽव्यक्तसिद्धाः कथ्यन्त इति दर्शितमव्यक्तप्रकरणे[13]।

केचित् [14]पुनः "[15]पुरुष [16]एवेदं सर्वम्" इत्याद्यभ्युपगमात् पुरुषमेव प्राप्य[17]तयाध्यवस्यन्तीति ते पुरुषसिद्धाः इति दर्शितं पुंस्तत्त्वप्रकरणे[18] ॥

ननु [19]प्रागुक्तपञ्चार्थसिद्धिरियं पुरुषप्राप्तिरूपत्वात्। तदयुक्तम्। यतः — 'सा सिद्धिः' इत्यादि।

**सा सिद्धिः परमा तस्य लोष्टवत्परि[20]कीर्तिता ॥६१॥**
**तज्ज्ञानं पौरुषं [21]विद्धि साधकस्य न संशयः।**
**एतदष्टविधं[22] बौद्धं ज्ञानमुक्तं समासतः ॥६२॥**

---

[1] अत्र 'चलम्' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[2] योगसूत्रभाष्ये २, १५.
[3] पातञ्जलोक्तनयेन — ऊ, ऋ, ए.
[4] गुणा एव — ऊ, ऋ; 'गुणानेव' इति नास्ति — ऐ.
[5] गुणसिद्धम् — ए.
[6] मुद्रितसर्वज्ञानोत्तरे न लभ्यते।
[7] गुणेषु त्वर्हताः स्थिताः — आ; गुणे त्वार्हताः स्थिताः — ऊ, ऋ;
[8] आकरो न लभ्यते।
[9] पराकृतिः — ऊ, ऋ.
[10] 'विभूतिः' इति नास्ति — ऐ.
[11] 'गुणकारणं' इत्यारभ्य 'सर्वम् इत्याद्यभ्युपगमात्' इत्यन्तं नास्ति — ए.
[12] 'पाञ्चरात्रास्तेऽव्यक्तसिद्धाः कथ्यन्ते' इत्येतन्नास्ति — अ, आ.
[13] मतङ्ग० विद्या० १५. ७ वृत्तौ।
[14] 'पुनः' इति नास्ति — अ, आ, ई, उ, ए.
[15] ऋग्वेदे १०. ९०. २; तै० आरण्यके ३. १२. १.
[16] एव सर्वमिदम् इत्यभ्युपगमात् — अ, आ, ई, उ, ए; एव सर्वम् इत्यभ्युपगमात् — ऊ, ऋ.
[17] ०तया व्यवस्यन्तीति — अ, आ, ई, उ, ऐ; ०तयाध्यवसन्तीति — ऋ; ०तया व्यवसन्तीति — ए.
[18] पुंस्तत्त्वप्रकरणे नैवायं पक्षो दृश्यते। ग्रन्थपातात्प्रणष्टः स्यादिति भाति। किंतु तृतीये लयभोगाख्यतत्त्वद्वयविचारप्रकरणे १—३ श्लोकवृत्तौ दृश्यते।
[19] प्रागुक्ता पञ्चमार्थ० — अ; प्रागुक्तपञ्चमार्थ० — आ, ई, उ, ए.
[20] ०कल्पिता — ऊ, ऋ.
[21] सिद्धिः — अ, आ, ई, उ, ए, ऐ.
[22] एतदष्टगुणं — ऊ, ऋ.

[1]**सा एषा सिद्धिः तस्य** वेदान्तवादिनः **लोष्टवत्** [2]प्रकृतिप्रत्ययस्वभावत्वात् तथाभूतस्यैव [3]पुरुषस्य प्राप्तिहेतुः, न [4]तु [5]पारमार्थिकस्य प्रकृतिव्यतिरिक्तस्येति । [6]सांख्यैस्तुष्टिरित्युक्ता सैषाष्ट[7]विधा दर्शनान्तरभेदेनाध्यवसाय[8]भेदाद्बौद्धी प्रोक्ता सिद्धिः [9]सांख्यसिद्धिं वर्जयित्वा ॥६१–६२॥

[10]अथान्या भूतसिद्धिः — 'अन्येऽपि' इत्यादि ।

> [11]**अन्येऽप्यभावमिच्छन्ति परमाणुं तथापरे ।**
> **नास्ति [12]मर्त्यात्परं [13]किंचित्केचित्स्वर्गात्परं[14] न हि ॥६३॥**
> [15]**मन्यमानाः स्वभावोत्थवासनाभिः पृथक् पृथक् ।**

[**अन्ये**] प्रदीपनिर्वाण[16]वादिनः । ते हि [17]नित्यत्वाच्चेतनस्य [18]परमार्थतो [19]विच्छेदासंभवा[20]द्विच्छेदमभ्युपगच्छन्तो विच्छेदयोग्यं [21]पृथिव्यादिभूतसमूहमेव[22] भ्रमाच्चेतनत्वेनाभ्युपगच्छन्तीति [23]भूतसिद्धाः कथिताः । तथापरे कौलाः [24]घटचटकन्यायेन [25]शरीरे परमाणुरूपमित्यव्यापकस्वभावं ग्राहक[26]मिच्छन्तीत्यव्यापकत्वात् तस्य विनाशित्वे सति प्राग्वदेव [27]भूतसिद्धाः प्रोक्ताः । [28]**केचित्** पुनश्चार्वाकाः[29] —

> [30]"यावज्जीवं सुखं जीवेन्नास्ति [31]मृत्युरगोचरः ।
> भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः ॥"

इत्यभ्युपगमाद् [32]**मर्त्यात्परम**निच्छन्तो भूतसिद्धा एव ।

[33]तथान्येऽपि केचिज्ज्योतिःशास्त्रविदः, तारकाभुवनप्राप्तिमेव मोक्षत्वेन मन्यमानाः भूत-

---

[1] 'सा' इत्यत्र 'सैव' इति दृश्यते — ऊ, ऋ.
[2] प्रकृतिप्रलयस्वभाव० — आ, ई, उ, ए; प्रकृतिलयः स्वभाव० — ऊ, ऋ.
[3] पुरुषस्याप्राप्ति० — ऊ, ऋ.
[4] तुशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[5] परमार्थिकस्य — आ; परमार्थकस्य — ऐ.
[6] सांख्ये तुष्टिरित्युक्ताः — ऐ.
[7] ०विषया दर्शनान्तर० — अ; ०विघात-दर्शनान्तर० — ए.
[8] ०भेदाद्बौद्धप्रोक्ताः सिद्धिसाध्यसिद्धं — ऐ.
[9] सांख्यं वर्जयित्वा — ऊ, ऋ; सांख्यसिद्धि जयित्वा — ए.
[10] अन्यथा भूत०—ऊ, ऋ; अथान्यभूत०—ऐ.
[11] अन्येऽपि भाव० — ऋ.
[12] मर्त्याः परं — उ.
[13] केचित्स्वर्गात्परतरं न हि — ऊ, ऋ.
[14] ०त्सगात्परं — उ.
[15] मन्यमानस्वभावोत्थं — ओ.
[16] ०वादिना — ऐ.
[17] नित्यत्वाच्चेतस्य—आ; नित्यत्वाच्चैतन्यस्य—ए.
[18] परमार्थतोप्यविच्छेदा० — ए.
[19] व्युच्छेदासं० — ऊ, ऋ, ऐ.
[20] ०द्व्युच्छेदाभ्युपगमतो — ऊ, ऋ; ०द्व्युच्छेदाभ्युपगच्छन्तो — ऐ.
[21] प्राणादि० — ऊ, ऋ.
[22] एवकारो नास्ति — ऊ, ऋ.
[23] भूसिद्धयः — ऊ, ऋ; भूतसिद्धयः — ऐ.
[24] पटचटक० — ऐ.
[25] शरीरेऽन्तःपरमाणुमित्यव्यापक० — ऊ, ऋ.
[26] ०मिच्छत्यव्यापक० — ए; ०मिच्छन्त्याव्यापक० — ऐ.
[27] भूतसंसिद्धाः—अ, ए; भूतसिद्धयः—ऋ, ऐ.
[28] 'केचित्' इति नास्ति — अ.
[29] चार्वाकादयः — अ, आ, ई, उ, ए, ऐ.
[30] योगवासिष्ठे उत्तरार्धे १००, २.
[31] मृत्योरगोचरः — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[32] 'मर्त्यात्' इति नास्ति — ए, ऐ.
[33] 'तथा' इति नास्ति — ऊ, ऋ.

सिद्धा एवेष्यन्ते । [1]इत्येवं समासतो दर्शनान्तर[2]गीतास्तत्तत्तत्त्वान्तरप्राप्यभेदेन [3]दश सिद्धयः [4]पूर्वोक्तै[5]रूहादिभिर्भेदै[6]रष्टाभिः प्रत्येकं [7]भिद्यमाना अशीतिसंख्या [8]भवन्तीति ॥

एवं च — 'रूपैः' इत्यादि ।

**रूपैः सप्तभिरित्युक्ता[9] दृष्टेऽर्थे [10]सानुवर्तते ॥६४॥**
**बुद्धिर्ज्ञानेन [11]चादृष्टे भावितस्य [12]महाधियः ।**

धर्मादिभिः **सप्तभिः** धर्मैः [13]**बुद्धिः** पुरुषं [14]संबध्नाति । अष्टमेन तु **ज्ञानेन** [15]सिद्धयात्मना [16]यथास्वं दर्शनभेदेन मोचयति । यदुक्तं सांख्यैः[17] —

"रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥" इति ।

कथं तर्हि सांख्यैः स्वसिद्धिव्यतिरिक्ता एता बुद्ध्यहंकार[18]मनोऽक्षसिद्धय आध्यात्मिकाः, [19]बाह्याश्चाव्यक्त[20]पुरुषगुणतन्मात्र[21]भूतसिद्धय [22]एव तुष्टयः कथिताः । यदुक्तम्[23] —

"आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकाल[24]भाग्याख्याः ।
[25]बाह्या विषयोपरमात्पञ्च नव[26] तुष्टयो[27]ऽभिमताः ॥" [28]इति ॥

तत्रोच्यते — 'यस्यैवम्' इत्यादि ।

**[29]यस्यैवं संस्थितो भावः स मुक्त इति [30]घुष्यते ॥६५॥**

---

[1] एवमेता दर्शनान्तर० — ऊ, ॠ.
[2] गीतास्तत्त्वान्तरव्याप्य० — अ; गीतास्तत्त्वान्तरख्याप्य० — आ; गीतास्तत्तत्त्वान्तरप्राप्य० — ए, ऐ.
[3] दर्शसिद्धयः — ए; दर्शनसिद्धयः — ऐ.
[4] मतङ्ग० विद्या० १७. ५१ उ०, ५२ वृत्तौ ।
[5] ०रूहादिभेदै० — अ, आ, ई, उ, ए.
[6] ०रष्टभिः — ई, उ, ऊ, ॠ.
[7] विद्यमाना — अ, आ, ई, उ, ए.
[8] भवति — ऐ.
[9] ०रित्युक्तं — ओ.
[10] संप्रवर्तते — ऊ, ॠ.
[11] या दृष्टे — मु, उ, ओ.
[12] महाधिया — उ.
[13] बुद्धिभिः पुरुषसंबन्धेन अष्टमेन — ऐ.
[14] बध्नाति — ऊ, ॠ.
[15] सिद्धयात्मनः — ऐ.
[16] यथा स्वदर्शन० — अ, आ; यथा संदर्शन० — ए.
[17] सांख्यका० ६३.
[18] मनोमोक्षसिद्धयः — अ, ई, उ, ऊ, ॠ, ए; मनोऽक्षणसिद्धयः — ऐ.
[19] बाह्याश्च व्यक्तपुरुषं गुण० — ऊ, ॠ; बाह्याश्च व्यक्तं पुरुषं गुण० — ऐ.
[20] 'पुरुष' इत्येतन्नास्ति — आ.
[21] भूताः सिद्धयः — ए.
[22] एव चतुष्टयाः कथिताः — ऊ, ॠ; एवं तुष्टयः — ए; एतत्तुष्टयः — ऐ.
[23] सांख्यका० ५०.
[24] भागाख्याः — अ, आ, ई, उ, ए, ऐ; भोगाख्याः — ऊ, ॠ.
[25] बाह्यविषयोप० — अ, ऊ, ॠ; सांख्यविषयोप० — ए.
[26] अत्र चशब्दोऽधिकः — आ, ई, उ, ऊ, ॠ, ए.
[27] ०ऽभिहिताः — अ, आ, ई, उ, ऊ, ॠ, ए.
[28] इतिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[29] यस्यैव सं० — उ, ओ.
[30] घुष्यति — ओ.

**मोक्षश्च प्रकृतेरन्यः सुखदुःखविवर्जितः।**
**[1]स्वभाव इति [2]वक्तव्यः पञ्चावयव[3]लक्षणः॥६६॥**

**यस्यैवं** सुखदुःखादिरूपायाः[4] [5]**प्रकृतेरन्यः** सुखदुःखविवर्जितत्वेन व्यवस्थितो **भावः स मुक्तः** पञ्चाधि[6]करणे सांख्यशास्त्रे। अयमर्थः — [7]सांख्यैः [8]पुरुषस्वरूपप्राप्त्यात्मकं [9]ज्ञानं सिद्धिरित्युक्तम्[10]। [11]ततो न्यूनाधिकप्राप्तिकारणं [12]तु तुष्टिरिति। तथा च लौकिकाः — "[13]पादेन तुष्टोऽर्धेन तुष्टोऽधिकेन तुष्टः" इति। ततो न्यूनाधिकतत्त्वान्तरप्राप्तिहेतुत्वाभ्युपगमेन सांख्यैरेतास्तुष्टयः कथिताः। अस्मद्दर्शने तु सांख्यज्ञानवदेतान्यपि ज्ञानानि तत्त्वान्तरप्राप्तिकारणानीति सिद्धय एवोच्यन्ते। तुष्टयस्तु वैराग्य[14]भेदत्वेन वक्ष्यमाणाः[15]॥६५–६६॥

[16]अथैतद्दर्शनसिद्धिरपि [17]सिद्ध्यन्तरवद्बुद्धिधर्मत्वेन [18]वक्तव्या। न। [19]यतो न यो बुद्धिधर्मः — 'किं तु' इत्यादि।

**किं तु बुद्धौ यदा [20]पत्युर्ज्ञानशक्तिर्विराजते।**
**स्ववीर्य[21]किरणौघेन तदा पुंसः प्रवर्तते॥६७॥**
**शिव[22]वक्त्राम्बुजोत्पन्नममलं सर्वतोमुखम्।**
**[23]शिवत्वोन्मीलनं [24]तथ्यं ज्ञानमज्ञाननाशनम्॥६८॥**
**अनेन सिद्धाः पश्यन्ति यत्तत्पदमनामयम्।**
**यन्न दृष्टं महामोह[25]भावज्ञानाकुलेक्षणैः॥६९॥**

[26]**यदा** [27]दीक्षादिना संस्कृतस्य **पुंसः बुद्धौ** परमेश्वर[28]संबन्धिनी शक्ति[29]रधिष्ठायिकात्वेन

---

[1] स पुमानिति मन्तव्यः — ऊ, ॠ.
[2] वक्तव्यं — ओ.
[3] ०लक्षणम् — ओ.
[4] सुखदुःखायाः — ऊ, ॠ.
[5] प्रकृतेरन्यत्वेन व्यवस्थितो — अ, आ, ई, उ, ए, ऐ.
[6] ०करणसांख्यशास्त्रैः — अ.
[7] 'सांख्यैः' इति नास्ति — ऐ.
[8] पुरुषं स्वरूप० — ए; पुरुषरूप० — ऐ.
[9] ज्ञानसिद्धि० — ऐ.
[10] मतङ्ग० विद्या० १७. ५०, ५१ पू० वृत्तौ।
[11] 'ततो' इत्यारभ्य 'तुष्टोऽधिकः इति' इत्यन्तं नास्ति — अ, आ, ई, उ, ए, ऐ.
[12] न — ॠ.
[13] पदेन — ऊ, ॠ. (पृ० २८३) मृ० वृ० दीपिकामनुसृत्य 'पादेन' इति शोधितः।
[14] ०भेदेन तत्त्वेन वक्ष्य० — ऐ.
[15] मतङ्ग० विद्या० १७. ७४ उ० – १०३.
[16] आर्हतदर्शन० — ऊ, ॠ; तथैतद्दर्शन० — ऐ.
[17] सिद्ध्यन्तरबुद्धि० — ऊ, ॠ.
[18] व्यक्तव्या — ई, उ; वक्तव्याः — ए.
[19] यतो यो बुद्धि० — अ; यतोऽधो बुद्धि० — आ, ए; युतोऽसौ वुद्धि० — ऊ, ॠ.
[20] पुंसो ज्ञान० — मु, उ, ओ.
[21] ०किरणोपेता — मु, उ; ०किरणोपेतं — ओ.
[22] ०वक्त्राम्बुजोद्भूतममलं — मु, उ, ओ.
[23] शिवत्वोन्मीलितं — मु, उ, ओ.
[24] तथ्यमज्ञानतिमिरापहम् — मु, उ, ओ.
[25] भावज्ञाना — ऊ, ॠ.
[26] 'यदा' इत्यत्र 'यद्' इति दृश्यते — ए.
[27] दीक्ष्यादीनां — ऐ.
[28] संबन्धिनीशशक्ति० — ऐ.
[29] ०रधिष्ठायिकत्वेन — अ; ०रधिष्ठायकत्वेन — ऊ, ॠ, ऐ; ०रधिष्ठाधिकात्वेन — ए.

**प्रवर्तते**। **तदा** स्वशक्त्यात्मकमेव [1]तस्य [2]पुंसो **ज्ञानं** श्रेयःप्रकाशकं[3] प्रवर्तते। यतोऽनेनैव ज्ञानेनास्म[4]द्दर्शनसिद्धाः शिवं पश्यन्ति। न तु बुद्धयेति। तेनास्मद्दर्शनसिद्धिरपि न बुद्धिधर्मत्वेन वक्तव्येति ॥६७–६९॥

एवं ज्ञानमुक्तम्। इदानीं वैराग्यम[5]प्यधिकारिभेदेनोच्यते—'ज्ञानमन्यत्' इत्यादि।

**ज्ञानमन्यत्स्वभावोत्थं भावितस्योपजायते ॥**
**अनित्यमतिशोकाढ्यमैश्वर्यमसुखावहम् ॥७०॥**
**[6]मानुष्यं किमनेनेति जन्ममृत्युभयावहम्।**
**[7]त्यजामोऽस्य किमाश्चर्यं [8]निःसङ्गत्वात्सुखं भवेत् ॥७१॥**
**तदा ज्ञानबलात्तस्य बुद्धौ स परमेश्वरः।**
**सुसूक्ष्मः शक्तिमान्भूत्वा [9]रजसोऽप्यथ योगतः ॥७२॥**
**सत्त्वेनोत्कृष्ट[10]वपुषो बुद्धिं क्षोभितवान्विभुः।**
**साप्यणोर्ज्ञानयुक्तस्य विरक्तस्य [11]प्रवर्तते ॥७३॥**
**वैराग्यगुणमाहात्म्याज्ज्ञानानुक्रमवर्तिनी।**

अनित्याशुचिदुःखानात्मादिषु [12]विषयेषु [13]विपरीतप्रतिपत्त्यात्मकं यद् **अन्यदेव ज्ञानं**, तस्मिन् सति पुंसः सत्त्व[14]युक्तायां बुद्धौ रजःपादयोगेन[15] भगवान् [16]वैराग्यमनुजानाति। ततो ज्ञानवैराग्ययुक्ता[17] बुद्धिः **प्रवर्तते** इति ॥

इदानीं ज्ञाननिमित्तभेदात् सिद्धिभेदवत्, वैराग्यनिमित्तभेदात् तुष्टिभेदः कथ्यते—'सहसा' इत्यादि।

जुगुप्सा

**सहसा व्याधितं दृष्ट्वा जीर्णं वाप्यथवा [18]मृतम् ॥७४॥**
**ततो विरागमायाति [19]विपाकस्य [20]महात्मनः।**
**संतुष्टः सर्वकार्येषु निःस्पृहत्वाज्जुगुप्सते[21] ॥७५॥**

---

[1] 'तस्य' इति नास्ति — अ.
[2] पुंसां — ऐ.
[3] प्रकाशं — ऐ.
[4] ०द्दर्शने नद्धाः — ऊ, ॠ.
[5] ०प्यधिकारभेदेनोच्यते — आ, ऐ.
[6] मानुष्या किं जनेनेति — उ.
[7] त्यज मोहं किमाश्चर्यं — मु, उ; व्रजामोऽस्य किमाश्चर्यः — ओ.
[8] निस्सङ्गात्मा सुखीभवेत् — ऊ, ॠ.
[9] रजसो वार्धयोगतः — ऊ, ॠ.
[10] ०वपुषं — मु, ओ; ०वपुषा — उ, ऊ, ॠ.
[11] विवर्तते — मु, उ, ओ.
[12] 'विपयेषु' इत्यत्र 'येषु' इति दृश्यते — अ, आ.
[13] अविपरीत० — आ, ई, उ, ए.
[14] ०शक्तायां — ऐ.
[15] ०पादयोगे — अ, आ.
[16] वैराग्यं समनु० — ऊ, ॠ.
[17] ०वैराग्यमुक्ता — ऊ, ॠ.
[18] मृतः — ओ.
[19] विभवस्य — ऊ, ॠ.
[20] महामुने — मु, ओ.
[21] ०ज्जुगुप्सति — मु, उ, ओ.

किमर्थं [1]क्लिश्यते [2]लोकः पुत्रदारादिभिर्वृतः ।
[3]मूढो न पश्यत्यात्मानं [4]न ज्ञेयं रागपीडितः ॥७६॥
जुगुप्सा नाम सा [5]तुष्टिर्नराणां भावितात्मनाम् ।

आध्यात्मिकी

[6]आध्यात्मिकेन दुःखेन वातपित्तकफादिना ॥७७॥
विरागः पीड्यमानस्य [7]सहसा योऽभिजायते ।
स तेन वनमाश्रित्य [8]वाय्वभुङ्नियतेन्द्रियः ॥७८॥
तुष्टोऽसौ लौकिकं [9]त्यक्त्वा [10]तुष्टिराध्यात्मिकी हि सा ।

आधिभौतिकी

[11]तस्करैर्बलिभिश्चैव राज्ञा [12]वाथ बलीयसा ॥७९॥
पीड्यमानस्य यद्दुःखं विरक्तस्तेन लौकिकात् ।
[13]प्रपञ्चात्सोऽप्यथैवं स्यात् किमनेन [14]बलीयसा ॥८०॥
भोगेन परतन्त्रेण श्रेयोऽस्त्यन्यत्सुशोभनम् ।
एवं संचिन्त्य विरतो गृहधर्मात्पराङ्मुखः ॥८१॥
तुष्टि[15]श्चैवाभिभूतस्य भावितस्याधिभौतिकी ।

आधिदैविकी

[16]दिव्यैर्ग्रहादिभिर्भूतैरभिभूतस्य तत्क्षणात् ॥८२॥
[17]यस्तापो भावितस्यैव तेन तस्माद्विरज्यते[18] ।
[19]बन्धुभिर्वार्यमाणोऽपि गृहं त्यक्त्वा वनं व्रजेत् ॥८३॥
सुखमस्मात्परं नास्ति मन्यमानः सुभावितः ।

---

[1] दृश्यते — ऊ, ऋ.
[2] लोके — मु, उ.
[3] नात्मानं पश्यते मूढो — मु, उ, ओ.
[4] नष्टोऽयं राग० — मु, उ, ओ.
[5] दृष्टिर्नराणां — मु, उ; तुष्टिर्वरणा — ऊ, ऋ.
[6] आध्यात्मकेन — उ.
[7] सहसैवोपजायते — ऊ, ऋ.
[8] वन्यभुङ — ऊ, ऋ.
[9] दृष्ट्वा — उ, ऋ.
[10] तुष्टिरध्यात्मिका हि सा — मु, उ, ओ.
[11] तस्करैः पुष्टिभिश्चैव — मु; तस्करैर्वृष्टिभिश्चैव — उ. पाठान्तरम्, ओ; तस्करैर्दंष्ट्रिभिश्चैव — ऊ, ऋ.
[12] चातिबलीयसा — मु, उ, ओ.
[13] प्रपञ्चेऽसावयैवं — मु, उ, ओ.
[14] मलीमसा — मु, उ.
[15] ०श्चैवाथ भूतस्य — ऊ, ऋ.
[16] दिव्यैर्गृहादिभि० — मु, उ; दृश्यैर्गृहादिभि० — ओ.
[17] यस्तायो — उ.
[18] ०द्विरच्यते — मु.
[19] बन्धुभिर्धार्य० — ओ.

संतोषान्न परं लोके सुखमन्यत्प्रदृश्यते[१] ॥८४॥
एव[२]संचिन्त्य मनसा भूयो भूयः[३]प्रहृष्यति ।
तुष्टिः सोक्ता विरक्तस्य नाम्ना चैवाधिदैविकी ॥८५॥

निःस्वा

निःस्वभावाभिभूतो यः परेषां[४]वीक्ष्य संपदम् ।
महतापि प्रयत्नेन[५]नार्थं प्राप्तोऽतिदुःखितः ॥८६॥
[६]प्राप्तं चाह्रियते चोरैर्न च शक्नोति[७]पालितुम् ।
पालनाद्बहवो दोषाः[८]क्षणादन्यत्समार्जितुम्[९] ॥८७॥
[१०]न शक्यं किमनेनेति दुःखायास[११]करेण तु ।
[१२]न चाराधयितुं[१३]शक्यो लोकोऽयं भिन्नमानसः ॥८८॥
कृते[१४]ऽप्याराधने नास्ति[१५]फलमल्पमपि क्वचित् ।
[१६]अस्माद्विरागात्संतुष्टः[१७]किंचित्क्षेत्रं समाश्रितः ॥८९॥
न च[१८]क्षेत्रफलं नित्यं नित्यमन्यद्विरागतः ।
[१९]निःस्वा तुष्टिरियं प्रोक्ता नराणां भावितात्मनाम् ॥९०॥

प्ररोदिका

स्निग्धाद्वियुज्यमानस्य यदि मृत्युर्न जायते ।
स तेन पीडितोऽत्यन्तं किं मदीयेन[२०]पाणिना ॥९१॥
[२१]शरीरेगातिपुष्टेन[२२]कं दृष्ट्वा[२३]हृष्टिमेति[२४]सः ।
स्नेहमूलानि दुःखानि न[२५]चास्नेहात्परं सुखम् ॥९२॥
क्षणिकं किमनेनापि तस्माद्बन्धुरकारणम् ।

---

[१] ०त्प्रवर्तते — ऊ, ॠ.
[२] संचिन्त्यमानस्सन् भूयो — मु, उ, ओ.
[३] प्रहृष्यते — उ.
[४] पश्य — मु.
[५] नार्थमाप्नोति—मु, ओ; नार्तिमाप्नोति—उ.
[६] प्राप्तं वा ह्रियते — मु, उ, ओ; प्राप्ते चाह्रियते — ॠ.
[७] 'पालयितुम्' इत्यर्थे 'पालितुम्' इत्यार्षप्रयोगः ।
[८] क्षीणादन्य० — मु.
[९] ०त्समर्जितुम् — ऊ, ॠ.
[१०] नोत्सहेत्किमनेन—मु, उ; नोत्सहे किमनेन —ओ.
[११] ०हरेण तु — उ; ०परेण तु — ऊ, ॠ.
[१२] न च चारयितुं — उ; न चारोधयितुं — ऊ, ॠ; न चानाययितुं — ओ.
[१३] शक्तो — ओ.
[१४] ०ऽप्यारसने — उ.
[१५] फलमन्यदपि — ऊ, ॠ.
[१६] अस्माद्रागाद्वि सं०—ऊ; अस्माद्रागादिसं०—ॠ.
[१७] किंचित्क्षेत्रे — ऊ, ॠ.
[१८] क्षेत्रात्परं नित्यं — मु. पाठान्तरम्, उ, ओ.
[१९] न स्वा तुष्टि० — मु. पाठान्तरम्, उ.
[२०] पापिना — ऊ, ॠ.
[२१] शरीरेणेति पुष्टेन — ऊ, ॠ.
[२२] तं — मु, उ, ओ.
[२३] पुष्टिमेति — ओ.
[२४] हि — ऊ, ॠ, ओ.
[२५] च स्नेहात्परं— मु, उ, ऊ, ॠ.

[1]ततोऽसौ निर्दयो भूत्वा [2]रुदन्नपि विहाय तु ॥९३॥
[3]बन्धुवर्गं वनं [4]गच्छेत्तहि प्राप्य प्रहृष्यति ।
तुष्टिः साभिहिता तन्त्रे [5]भावितस्य प्ररोदिका ॥९४॥

विडम्बा

[6]विण्मूत्रपूरितं कोष्ठं बहिश्चर्मावि[7]गुण्ठितम् ।
[8]दुर्गन्धि पूयकलुषं विचिन्त्य शनकैस्त्यजेत् ॥९५॥
अस्मादेव [9]भगद्वारान्निष्क्रान्तोऽहं [10]सुकिल्बिषात् ।
[11]तत्रेदानीं रमेत्कष्टं [12]विडम्बेयं [13]सुदारुणा ॥९६॥

कामोद्भवा

विरक्तः [14]सहसा वृद्धो [15]निःस्सङ्गो यतिवत्स्थितः ।
[16]तुष्टिः कामोद्भवा नाम भावितस्य महात्मनः ॥९७॥

क्षपिका

स्वयमेव स्वकं [17]कायं सबाह्या[18]भ्यन्तरं शनैः ।
पुष्टमन्नेन सततं पानेन च [19]विवर्धितम् ॥९८॥
[20]दुर्गन्धं किल्बिषोपेतमनित्यमसुखावहम् ।
[21]एकाहस्याप्यपायेन ग्लानिं बध्ना[22]त्यनात्मवत् ॥९९॥
चिरकालोपचारेऽपि कृते [23]नास्त्युपचारिता ।
तस्माद्विरक्तो लघ्वाशी [24]कांचिदाश्रित्य निम्नगाम् ॥१००॥

---

[1] तदासौ — मु.
[2] रोदन्नपि — ऊ, ऋ.
[3] बन्धुवर्गाद्वनं — मु, उ, ओ.
[4] गच्छेत्तस्मिन् प्राप्ते न हृष्यति — मु, उ, ओ.
[5] भाविकस्य प्ररोदिकीम् — ऊ, ऋ.
[6] विण्मूत्रापूरितं — ऊ, ऋ.
[7] ०कुण्ठितम् — मु, उ, ओ.
[8] दुर्गन्धी पूय० — मु.
[9] नवद्वारा० — मु, उ, ओ.
[10] सुकल्मषात् — ओ.
[11] तदिदानीं — मु, उ, ओ.
[12] विडम्बोऽयं — मु, ओ; विदम्बो यत् — उ.
[13] सुदारुणः — मु; सुदारुणम् — उ, ओ.
[14] सहसा विद्धो — उ, ओ.
[15] नित्यगो यदवस्थितः — उ.
[16] सृष्टिः — मु, उ.
[17] कार्यं — मु, उ, ओ.
[18] ०भ्यन्तरः शनैः — ओ.
[19] विवर्जितम् — उ.
[20] दुर्गन्धि — ऊ, ऋ.
[21] एकाहस्यायमानेऽपि — ऊ, ऋ; एकाहस्योप्युपायेन — ओ.
[22] ०त्यनात्मवान् — मु, ऊ, ऋ.
[23] नास्त्युपकारता — मु, ओ; नास्त्यपकारता — उ.
[24] किंचिदाश्रित्य निम्नगाः — ओ.

[1]मृदम्बुक्षालनासक्त[2]स्तुष्ट एवोपलक्ष्यते ।
[3]सा तस्य [4]क्षपिका नाम्ना तुष्टिर्भावात्मिका मता[5] ॥१०१॥

वैखानसा

प्रतिग्रह[6]भयादन्यः सहसैव [7]विरज्यते ।
[8]हिंसातो वाप्युपा[9]दानात्संयम्येन्द्रियवाहिनीम्[10] ॥१०२॥
[11]तुष्टः [12]संतिष्ठते तस्य तुष्टिर्वैखानसात्मिका ।
[13]एवंविधास्तु वैराग्या[14]दनन्तास्तुष्टिजातयः ॥१०३॥

व्याध्यादियुक्तप्राणि[15]दर्शनात्, आध्यात्मिकाधिभौतिकाधिदैविकदुःख[16]योगैः, धनार्जनादिना, रोदनादेः, स्त्रीगमनादितः, [17]स्वस्माद्विरागतः, [18]अशुद्धयादेः, प्रति[19]ग्रहाच्चेति दशभिर्वैराग्यनिमित्तैः क्रमेण जुगुप्सा, [20]आध्यात्मिकी, [21]आधिभौतिकी, आधि[22]दैविकी, निःस्वा, [23]प्ररोदिका, [24]विडम्बा, कामोद्भवा, क्षपिका, वैखानसा [25]चेति दश तुष्टयो वैराग्य[26]साधनभेदाद्भिन्ना भवन्तीति । [27]तुष्टिश्चात्मविषयत्वेन परंपरया मोक्षहेतुर्भवत्येव । यदाहुः —

[28]"यः स्वात्मरतिरेव स्यादात्मतृप्तश्च[29] मानवः ।
[30]स मुक्तः सर्वपापेभ्यो याति ब्रह्म सनातनम् ॥" इति ।

---

[1] मृदं प्रक्षालना० — ओ.
[2] ०स्तुष्टो ह्येवोप० — मु, उ, ओ.
[3] स — उ, ओ.
[4] क्षिप्रको नाम्ना — उ; क्षणिका नाम्ना — ऊ, ऋ; क्षापिका नाम्ना — ओ.
[5] स्मृता — ऊ, ऋ.
[6] ०भयादन्यत्सहसैव — मु, उ.
[7] वियुज्यते — मु, उ.
[8] हिंसासावप्युपा० — उ.
[9] ०दानासंयमेन्द्रिय० — उ; ०दाना संयम्येन्द्रिय० — ऋ.
[10] ०संयमेन्द्रियवाहिनी — मु, ओ.
[11] तुष्टिः — मु, उ, ओ.
[12] सूतिष्वतस्तस्य — ऊ, ऋ.
[13] एवं हि धातुर्वैराग्याद् — मु, ओ; एवं हि यातुर्वैराग्याद् — उ; एवंविधा तु वैराग्याद् — उ. पाठान्तरम्, ऊ, ऋ.
[14] ०द्धर्षोऽनन्तोऽभिजायते — मु; ०दनन्ता तुष्टिजयिते — उ; ०दनक्ता तुष्टिर्जायते — ओ.
[15] ०दर्शनेनाध्या०—ऊ, ऋ; दर्शनाध्या०—ऐ.
[16] ०योगे — ए.
[17] अकस्माद् — ऊ, ऋ.
[18] अशुद्धादेः — ऐ.
[19] ०ग्रहादेश्चेति — ऊ, ऋ.
[20] आध्यात्मिका — अ, ई, उ, ए, ऐ.
[21] 'आधिभौतिकी' इति नास्ति — ई, उ; आधिभौतिका — ए.
[22] ०दैविका — अ, ऐ.
[23] प्रतिरुदिता — ऊ, ऋ; प्रारोधिका — ऐ.
[24] विडम्बकामोदोद्भवा — अ; विडम्बा कामोदोद्भवा —ई, उ; विडम्बकामोद्भवा—ए.
[25] चेति च तुष्टयो — ऊ, ऋ.
[26] ०बोधन० — ए.
[27] तुष्टयश्चात्म० — ऐ.
[28] भगवद्गीता ३. १७ पू०; यश्चात्मरतिरेव — ऊ, ऋ; यथात्मरतिरेव — ऐ.
[29] ०तृप्तिश्च — अ, ऐ.
[30] महाभारते एतत्सदृशार्थकमर्धं लभ्यते 'सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम्' (महाभा० १३. २५४. १३२) ।

[1]सापि [2]च तुष्टिः [3]सिद्धिवत् [4]पूर्वोक्तदर्शनभेदेन [5]भूततन्मात्रादि[6]ज्ञानयुक्तस्य [7]विरक्तस्य प्रवर्तते —

[8]"वैराग्यगुण[9]माहात्म्याज्ज्ञानानुक्रमवर्तिनी"

इत्युक्तत्वात्[10], दशधा [11]भवन्तीति पुनरेभिर्भेदैः प्रत्येकं [12]दशधा भिद्यमाना शतसंख्यैव भवतीति शतसंख्यैवात्र, अनन्ता तुष्टिर्जायते इत्युक्तम् ॥७४–१०३॥

अथैश्वर्यमधिकारिसाधनपूर्वकमुच्यते — 'स्वभाव' इत्यादि ।

**स्वभावो योऽयवाक्षाणां [13]वार्यमाणः प्रवर्तते ।**
**स्वभावेन पुमाञ्शुद्धस्तस्य किं [14]विनिवार्यते ॥१०४॥**
**ज्ञानेनानेन सिद्धानां भावः संजायते [15]परः ।**
**इन्द्रियार्थेषु [16]नाशक्तिः प्रवृत्ति[17]विरतिर्न च ॥ ॥१०५॥**
**संतुष्टः सर्वदा विद्वान्नित्याध्यात्मपरायणः ।**
**विरक्तः [18]सङ्गदोषाच्च [19]ततस्तं प्रति कारणम् ॥१०६॥**
**रजस्तमोभ्यां संप्रेर्य बुद्धिमैश्वर्यगोचरे ।**
**[20]विरागेद्धस्य सहसा ध्यानोपोद्बलितस्य [21]तु ॥१०७॥**
**ऐश्वर्यमाप्नुयात्क्षिप्रं बुद्धितत्त्वव्यपाश्रयात् ।**

प्रकृतेः **स्वभावः** [22]अयम्, [23]**अथवा** इन्द्रियाणाम् । **यः** अनित्याशुचिदुःखानात्मरूपेषु विषयेषु [24]भावो [25]**वार्यमाणोऽपि प्रवर्तते**, न [26]पुरुषस्वभावो [27]बन्धत्वादिति । एवं सांख्य[28]ज्ञानेन **अनेन** ये

---

[1] 'सापि' इत्यत्र 'सिद्धापि' इति दृश्यते — ऐ.
[2] चतुष्षष्टिसिद्धिवत् — ऊ, ऐ; चतुष्षष्टिः सिद्धिवत् — ऋ.
[3] सिद्धवत् — ए.
[4] मतङ्ग० विद्या० १७. ५०–६६; प्रोक्त-दर्शन० — अ, आ, ई, उ, ए, ऐ.
[5] भूतात्मतन्मात्रादि० — ऊ, ऋ, ऐ.
[6] ०युक्तज्ञानस्य — अ.
[7] 'विरक्तस्य' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] मतङ्ग० विद्या० १७. ७४ पू०.
[9] माहात्म्यज्ञानानुक्रम० — ऐ.
[10] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ.
[11] भवन्ति पुन० — आ, ई, उ, ए; भवन्ती पुन० — ऊ, ऋ; भवति पुन० — ऐ
[12] शतधा — ऊ, ऋ.
[13] धार्यमाणोऽपि वर्तते — मु, उ, ओ.
[14] प्रविचार्यते — मु, उ, ओ.
[15] परम् — ओ.
[16] नो शक्तिः — मु, उ.
[17] ०विरतिश्च न — मु, उ.
[18] सर्वदोषाश्च — ऊ, ऋ.
[19] ततः संप्रति — उ, ओ.
[20] विरागे चास्य — मु; विरागे स्वस्य — उ.
[21] च — ऊ, ऋ.
[22] 'अयं' इत्यत्र 'यः' इति दृश्यते — अ, आ, ई, उ.
[23] 'अथवा' इत्यत्र 'अथ' इति दृश्यते — अ.
[24] स्वभावो — अ, आ, ई, उ, ए.
[25] धार्यमाणो — अ, आ, ई, उ, ऐ.
[26] पुरुषस्य स्वभावो — ऊ, ऋ; पुरुषः स्वभावो — ऐ.
[27] बन्धादिति — अ; बद्धत्वादिति — ऊ, ऋ.
[28] ०ज्ञानादिना ये — ऊ, ऋ, ऐ; ०ज्ञानेन ये — ए.

सिद्धाः, [1]तेषां तस्माज्ज्ञानाद् यत एवंविधो [2]भावो [3]रजस्तमसोरनुपक्षयतो भवेत्। ततश्च इन्द्रियार्थेषु तावद् अशक्तिर्न युक्ता। अपि तु प्रवृत्तिरेव[4] शोभना[5]। न तु [6]विरतिः। ततस्तेषां मध्याद्यो[7]ऽत्यन्तसंतुष्टो यमनियमनिष्ठो ज्ञानी दुष्ट[8]सङ्गाद् [9]विरक्तः, तस्य [10]संबन्धिनी या बुद्धिः, तां सकाशात्स्वादेव पुरुषं प्रति भगवान् [11]ऐश्वर्यगोचरे योजयतीत्यध्याहारः। ततश्च स[12] पुरुषो बुद्धितत्त्वसंश्रयाद् ऐश्वर्यं प्राप्नोतीति[13] ॥

[14]तच्चैश्वर्यं [15]प्रागमणिमाद्यष्टभेदयुक्तमुक्तमित्यणिमा तावदुच्यते — 'सत्त्वम्' इत्यादि ।

अणिमा

**सत्त्वं [16]तदात्मभावेन [17]संवृत्तमणुतां नयेत् ॥१०८॥**
**अणुत्वमणुमात्रं स्याच्छरीर[18]मपि तत्क्षणात्।**
**येनासौ सहसा योगी गच्छन्नपि [19]ततस्ततः ॥१०९॥**
**[20]स्थाणुभिर्न [21]निवार्येत न च दृश्येत केनचित्।**

तयोरैश्वर्यहेतुत्वेन [22]प्रागुक्तयोर्बुद्धिधर्मयो रजस्तमसो[23]र्यदा [24]**सत्त्वं तदात्मभावेन** तादात्म्यापत्त्या भवति; [25]तदाणुत्वमुत्पादयति। तच्च **अणुत्वं** तस्य [26]परमाणुमात्रपर्यन्तं यावत्संभाव्यते। [27]बाह्यं च शरीरं [28]साधकस्याणु संपद्यत [29]इत्यत्रैव [30]भविष्यति ॥

---

[1] तेषु — अ.
[2] भत्रो — अ.
[3] 'रजस्तमसोरनुपक्षयतो भवेत्। ततश्च इन्द्रियार्थेषु' इत्यस्य स्थाने 'रजस्तमसोरनुपक्षयतो परो धर्मादिजनितो भावेभ्यो न्यूनो बुद्धिधर्मस्तथैश्वर्यहेतुभूतः संजायते यथेन्द्रियार्थेषु' इति दृश्यते — ऊ, ॠ.
[4] एवकारो नास्ति — ऊ, ॠ.
[5] शोभनाय — ऐ.
[6] विरमति ततः — अ.
[7] ०ऽन्यसंतुष्टो — ऊ, ॠ.
[8] ०संगमाद् — ए.
[9] विरक्तस्य — अ, ऊ, ॠ.
[10] संबन्धीयबुद्धिः — ऊ, ॠ.
[11] ऐश्वरगोचरे — अ.
[12] 'स' इति नास्ति — अ, ऊ, ॠ, ऐ.
[13] इति शब्दो नास्ति — अ, आ, ई, उ, ऐ.
[14] ततश्चैश्वर्यमणिमाद्यष्टभेदयुक्तमित्यणिमा—अ, आ, ई, उ, ए, ऐ.
[15] मतङ्ग० विद्या० १६. ९ उ०–१३ पू० वृत्तौ ।
[16] चेदात्म० — ऊ, ॠ.
[17] विवर्तमणुतां—उ; संपृक्तमणुतां—ऊ, ॠ, ओ.
[18] ०मभवत्क्षणात् — ऊ, ॠ.
[19] इतस्ततः — उ, ओ; यतस्ततः — ऊ, ॠ.
[20] स्थाणुभिर्ना — उ.
[21] विधार्येत — नु, ओ; विधार्येण — उ.
[22] मतङ्ग० विद्या० १७. १०४–१०८ पू० वृत्तौ ।
[23] ०र्यथा — ऊ, ॠ.
[24] सङ्कत्तदात्मभावेन—अ; सत्त्वमात्मभावेन—ऊ, ॠ.
[25] 'तदाणुत्वमुत्पादयति' इति नास्ति — अ, ऊ.
[26] परमाणुत्वमात्र० — ऊ, ॠ.
[27] बाह्यशरीरं — अ, ई, उ, ऐ.
[28] साधकस्याणुः — अ.
[29] इति तत्रैव — ऐ.
[30] मतङ्ग० विद्या० १७. ११४ वृत्तौ ।

अथ[1] — 'लघिमा' इत्यादि।

लघिमा

लघिमा नाम [1]यः प्रोक्तो लघुत्वमुपजायते ॥११०॥
[2]स मनोवेगः [3]सर्वत्र न च पङ्कजलादिषु।
निमज्जति कदाचित्स्यात्कण्टकैश्च न बाध्यते ॥१११॥

महिमा

महत्त्वं सर्वलोकेषु कर्तुं शक्नो[4]त्यवारितः।
सिद्धैश्च पूज्यते नित्यं महाकायोऽथवा क्षणात् ॥११२॥
क्रीडित्वाप्यथवा [5]तिष्ठेद् ब्रह्माद्यं सचराचरम्।
स तस्य महिमा नाम तृतीयो योगिनो गुणः ॥११३॥

[6]लघिममहिम्नोः प्रतिपादनम् ॥११०–११३॥

[7]अथात्र गुणत्रयस्य [8]कुत्रोपयोग इत्युच्यते — 'त्रितयम्' इत्यादि।

[9]त्रितयं कार्यतः सिद्धमैश्वर्यमणिमादिकम्।
प्राप्त्यादयो गुणाः पञ्च [10]योगिनां [11]करणात्मजाः ॥११४॥

एतदणिमादिगुणत्रयं **कार्यतः** [12]इति [13]बाह्ये भुवनजे शरीरे **सिद्धम्**। तस्यैव [14]कार्यत्वेनोक्तत्वात्[15]। प्राप्त्यादयस्तु **पञ्च गुणाः** [16]करणविषया योगिनः। तेषामेव क्रियाश्रयत्वेन [17]वक्ष्यमाणत्वादिति ॥११४॥

---

[1] या प्रोक्ता — ऊ, ऋ.
[2] समानो वाथ सर्वत्र — उ; मनोवेगः स सर्वत्र — ऊ, ऋ; स मनोवेगि सर्वत्र — ओ.
[3] सर्वात्मा — मु.
[4] ०त्यवारितम् — ओ.
[5] तिष्ठेद् ब्रह्माद्यः — ऊ, ऋ; तिष्ठद् ब्रह्माद्यं — ओ.
[6] 'लघिममहिम्नोः' इत्यत्र 'महिम्नः' इति दृश्यते — ऊ, ऋ.
[7] अथास्य गुण० — ऊ, ऋ.
[8] अत्रोपयोग उच्यते — ए.
[9] तृतीयं — मु, उ, ओ.
[10] योगिनः — ऊ, ऋ, ओ.
[11] कारणात्मजाः — मु, उ, ऊ.
[12] 'इति' इत्यत्र 'इत्यादि' इति दृश्यते — ऐ.
[13] बाह्यभुवनजे — ऋ, ए.
[14] कार्येणोक्तत्वात् — ऐ.
[15] मतङ्ग० विद्या० १६. ९ उ०–१३ पू० वृत्तौ।
[16] कारणविषया योगिनः — अ; कारणविषययोगिनः — ऊ, ऋ.
[17] मतङ्ग० विद्या० १७. ११५–१२५ पू०.

[1]त एव प्राप्त्यादयोऽत्र[2] गुणाः पञ्च क्रमेणोच्यन्ते — 'यद्यदीप्सति' इत्यादि ।

प्राप्तिः

यद्यदीप्सति योगीन्द्रो मनसाप्यथ तत्क्षणात् ।
[3]सर्वमाप्नोत्यसंदेहादथवा यत्र रोचते ॥११५॥
[4]क्षणात्प्राप्नोति तत्स्थानं प्राप्तिर्नाम गुणोऽव्ययः ।

प्राकाम्यम्

युगपत्स्त्रीसहस्राणि रूपेणाप्रतिमानि तु ॥११६॥
[5]निर्मातुं शक्नुयाद्भोक्तुं [6]विभज्यात्मानमादरात् ।
सुरतो हीयते नैव स्वेच्छाकामी [7]रमेच्चिरम् ॥११७॥
तत्प्राकाम्यमिति प्रोक्तं यथेप्सितगुणावहम् ।

ईशित्वम्

[8]योगोत्थाभिरमोघाभिरीशानीभिर्महाबलः ॥११८॥
[9]अध्यास्य चेष्टते कृत्स्नं ब्रह्माद्यं सचराचरम् ।
आज्ञानुवर्तिभिर्देवैः [10]पूज्यते [11]योगिसङ्घराट् ॥११९॥
[12]क्रीडते सुरकन्याभि[13]र्वृतश्चारुविलासिभिः ।
ईशित्वं नाम [14]तत्प्रोक्तं तन्त्रे मुनिवरेश्वर ॥१२०॥

वशित्वम्

वशीकृत्य [15]जगत्सर्वं [16]बद्धुं शक्नो[17]त्यवारितः ।
भोक्तुं योग[18]बलोपेतोऽप्यथवाच्छाद्य लीलया ॥१२१॥
निर्माय[19] स्थापयेदन्यांस्तैः सार्धं वशवर्तिभिः ।

---

[1] तथा च प्राप्त्या० — अ, आ, ई, उ, ए, ऐ.
[2] 'अत्र' इति नास्ति — ऊ, ॠ; 'अत्र' इत्यस्य स्थाने 'यत्र' इति दृश्यते — ए, ऐ.
[3] सर्वं प्राप्नोत्यसं०—ऊ; सर्वं प्राप्नोति सं०—ॠ.
[4] प्राप्नोति तत्र तत्स्थानं — मु, उ.
[5] निर्मातुमत्सहेद्भोक्तुं — मु, उ, ओ.
[6] विषयात्मान० — उ.
[7] रमेच्चिरात् — ऊ, ॠ.
[8] योगार्थाभि० — मु, उ.
[9] अध्यवस्येशते कृत्स्नं — मु; अध्यस्यैवेशते कृत्स्नं — उ; अध्यस्येव शतैः कृत्स्नं — ओ.
[10] युज्यते — उ० पाठान्तरम् ।
[11] योगिसंविराट् — मु; योगिनां स्वराट् — उ.
[12] रमते — ऊ, ॠ; क्रीडन्ते — ओ.
[13] ०र्युतश्चारु० — उ.
[14] संप्रोक्तं — ओ.
[15] जगत्कृत्स्नं — ऊ, ॠ.
[16] बोद्धुं — मु, उ, ओ.
[17] ०त्यवारितम् — ओ.
[18] ०बलाद्भेदेऽप्यथवाच्छाद्य० — उ; ०बलोपेतो ह्यथवोच्छाद्य — ओ.
[19] निर्मातुं — मु, ऊ, ॠ.

**[1]क्रीडत्यक्लिष्ट[2]विभवस्तद्वशित्वमुदाहृतम् ॥१२२॥**

कामावसायित्वम्

**यत्र [3]यत्रेच्छति स्वामी तत्र [4]तत्रानिवारितः।**
**स्वेच्छाभि[5]लषितैर्भोगैर्न च सीदति कर्मणा ॥१२३॥**
**[6]प्रद्रवन्नपि मेधावी न परैरव[7]सादितुम्।**
**शक्यते योगसामर्थ्यान्न च कामोऽवसाद्यते ॥१२४॥**
**यत्र कामावसायित्वं [8]कीर्तितं गुणसन्ततौ।**

अथोपसंहारः — 'एतदष्टगुणोपेतम्' इत्यादि।

**[9]एतदष्टगुणोपेतमैश्वर्यं विनयोद्भवम् ॥१२५॥**
**सांसिद्धिकं [10]च देवानां [11]तत्तद्वक्ष्याम्यतः परम्।**

तच्च [12]विशिष्टो नयः विनयः, तदुद्भवमित्युक्तम्[13]। **सांसिद्धिकं च** [14]अधिकार[15]स्वभाव इत्यर्थः॥

अत एवाधिकारोत्कर्षा[16]दस्याप्युत्कर्ष इत्युच्यते — 'पिशाचानाम्' इत्यादि।

**पिशाचानां यथोद्दिष्टमणिमादिगुणाष्टकम् ॥१२६॥**
**[17]तदेव द्विगुणं प्रोक्तं राक्षसानां [18]महात्मनाम्।**
**स्वात्मीयेन[19] सहैवोक्तं चतुर्विंशद्गुणात्मकम् ॥१२७॥**
**यक्षाणां मुनिशार्दूल [20]तदैश्वर्यमनिन्दितम्।**
**द्वात्रिंशद्गुणमात्रोक्तमणिमाद्यष्टकं पुनः ॥१२८॥**
**गन्धर्वाणां [21]ततस्तेभ्यो यक्षेभ्यो [22]बलवत्तरम्।**

---

[1] क्रीडन्त्याकृष्ट० — उ.
[2] विभवस्तच्छिवत्व० — मु, उ; विभवश्शुद्धचित्त्व०— ऊ, ऋ.
[3] यत्रेप्सते योगी — मु, उ; यत्रेप्सितो योगी — ओ.
[4] तत्र निवारितः — ओ.
[5] ०लषितैर्योगैर्न — ओ.
[6] प्राद्रवन्नपि — उ.
[7] ०साधितम् — ऊ, ऋ.
[8] कीर्तनं — उ; कीर्त्यते — ऊ, ऋ.
[9] एतद्दृष्टगुणोपेतम् — उ.
[10] तु — ऊ, ऋ.
[11] तत्ते वक्ष्याम्यतः — ऊ, ऋ.
[12] विशिष्टनयो विनयः — अ, आ, ई, उ, ए; विशिष्टानयो विनयः — ऐ.
[13] मतङ्ग० विद्या० १६. ३१ उ० — ३४ पू० वृत्तौ।
[14] अधिकारि० — ऐ.
[15] ०स्वभावसिद्धमित्यर्थः — ऊ, ऋ; ०स्वभावमित्यर्थः — ए, ऐ.
[16] ०दस्यात्युत्कर्ष इत्युच्यते — आ; ०दस्याप्युत्कर्षता इत्युच्यते — ऋ.
[17] तदैव — ऊ.
[18] मुनीश्वर — ऊ, ऋ.
[19] स्वात्मीयैश्च — मु, ओ; स्वकीयैश्च — उ.
[20] तदेवाष्टगुणात्मकम् — ऊ, ऋ.
[21] यतस्तेभ्यो — मु, उ, ओ.
[22] बलवत्तरः — मु; बललिङ्गितः — उ.

**इन्द्राणामप्यथैश्वर्यं [1]चत्वारिंशद्गुणोत्तरम् ॥१२९॥**
**भूयस्तदेव सोमानामणिमादिगुणाष्टकम् ।**
**[2]स्वात्मीयेनौजसा सिद्धं षडष्टकगुणोत्तरम् ॥१३०॥**
**[3]षट्पञ्चाशद्गुणोपेतमैश्वर्यमणिमादिकम् ।**
**[4]प्रजापतीनां विज्ञेयं [5]स्ववीर्येणोपबृंहितम् ॥१३१॥**
**चतुष्षष्टिगुणं बौद्धमैश्वर्यं ब्रह्मणः [6]स्मृतम् ।**

एते च[7] पिशाचादिपितामहान्ता [8]देवाः सांख्यादिदृष्टा [9]ब्रह्माण्डान्तर्वर्तिनः। न तु बुद्धितत्त्ववर्तिन इति दर्शितं [10]प्रागेव। एतेषां च भूलोकस्य भूमिजलभेदेन [11]द्विधावस्थितत्वात् सप्तलोक-[12]गतेष्वष्टसु स्थानेषु [13]क्रमेणैश्वर्यविवृद्धिरिति [14]दर्शितं [15]**गुणप्रकरणे**। एवं ततोऽप्यूर्ध्ववर्तिनामपि भुवनेश्वराणां [16]यथास्वं भुवनेषु चतुष्षष्टिगुणमैश्वर्यं मायाभुवन[17]भेदेन[18] तदवान्तर[19]भेदानां, "[20]वक्ष्याम्यतः [21]परम् । विशेषोऽस्य" इत्यादिना वक्ष्यमाणत्वान्नात्र निर्देशः। [22]मायागर्भाधिकारिणां तु श्रीकण्ठादीनां न [23]तद् बौद्धम् । अपि तु [24]प्रागुक्तज्ञानक्रियाशक्तिनिमित्तमेवेति न बौद्धस्यैश्वर्यस्यात्र[25] [26]संख्यान्तरयोगः ॥

'येन' इत्यादि ।

**येनाभिषिक्तो विश्वात्मा [27]सत्त्वामृत[28]सुशीकरैः ॥१३२॥**
**[29]स करोत्यध्वसंस्थानं विमाननगराकुलम् ।**

---

[1] तन्नु त्रिंशद्गुणोत्तरम् — मु उ.
[2] स्वात्मनैवौजसा — मु. उ.
[3] चत्वारिंशद्गुणोपेत० — मु.
[4] पशुपतीनां — उ.
[5] स्ववीर्येणैव बृंहितम् — मु, उ, ओ.
[6] स्थितम् — ऊ, ऋ.
[7] चशब्दो नास्ति — ऋ.
[8] देवताः — ए.
[9] ब्रह्माण्डवर्तिनः — ए, ऐ.
[10] मतङ्ग० विद्या० १७. २० वृत्तौ ।
[11] द्विविधावस्थित०—आ; द्विधा स्थित०—ऊ, ऋ.
[12] ०गतेष्वष्टासु — ऊ, ऋ; ०भूतेष्वष्टसु —ए.
[13] क्रमेणैश्वर्य वृद्धिरिति — ऐ.
[14] दर्शितो गुणप्रकरणे — ऊ, ऋ; दर्शितं गुणसंकरणे — ऐ.
[15] मतङ्ग० विद्या० १६. ९ उ०—१३ पू० वृत्तौ ।
[16] यथा स्वायंभुवनेषु — ऊ, ऋ; यथा स्वयंभूतेषु — ए; यथा संभुवनेषु — ऐ.
[17] ०भेदेषु न तदवान्तरभेदेनावेक्ष्यतः परम् —ऐ.
[18] अत्र तुशब्दोऽधिकः — ऊ, ऋ.
[19] अत्र 'भुवन' इत्यधिकम् — आ, ई, उ, ए.
[20] मतङ्ग० विद्या० १७. १५९ उ. १६० पू०; वक्ष्यत्यतः—अ, आ, ई, उ; वक्ष्यमाणत्वतः—ए.
[21] परविशेषानस्येत्यादिना — ऊ, ऋ; परं विशेषानस्येत्यादिना — ऐ.
[22] 'मायागर्भाधिकारिणां' इत्यस्मिन् पदे 'णां' इत्यारभ्य १४२ उ०—१४६ तमश्लोकवृत्तौ 'भूताव्यक्तज्ञानयोः' इत्यस्मिन्पदे 'ज्ञान' इत्यन्तं लुप्तम् — ई.
[23] 'तद्' इति नास्ति — अ, आ, उ.
[24] मतङ्ग० विद्या० ४. ११; १६. १ उ०—४ पू० वृत्तौ ।
[25] ०स्यैश्वर्यस्यात्र — ऐ.
[26] सांख्यान्तर० — ए, ऐ.
[27] तत्त्वामृत० — मु, उ.
[28] ०स्वशीकरैः — उ.
[29] प्रकरोत्यध्वसंस्थानं — मु; ओ; स करोत्यूर्ध्वसंस्थानं — ऊ, ऋ; प्रकाशोऽप्यर्थशंस्थानं — उ.

**येन** कारणेन प्रकृष्टैश्वर्ययुक्तो ब्रह्मा, तेन कारणेन **स** **एव** **सत्त्वामृतसुशीकरै**[1]रासिक्तः श्री-कण्ठनाथेन [2]भूर्लोकाद्यध्वनिर्माणं विधत्ते। नान्यः पिशाचादिरिति ॥

[3]अथाधर्मोऽधिकारिहेतुभेदेनोच्यते — 'ऐश्वर्यमदमोहेन' इत्यादि।

**ऐश्वर्यमदमोहेन विषयेष्वभिसंप्लुताः ॥१३३॥**
**[4]क्षरन्त्यजस्रं [5]संयुक्ताः स्वोचितस्य परिक्षयात्।**
**विनश्वरेण [6]सिद्धा ये योगेन च नरेश्वराः ॥१३४॥**
**क्षरन्ति क्षीणभोगास्तु क्षीणाश्चाप्यत्र भोगिनः।**
**कुले [7]महति [8]संभोगान्प्राप्य मोदन्त्यशङ्किताः ॥१३५॥**

[9]ऐश्वर्यमदाद्येन [10]मोहेन **विषयेषु** अभिप्लुता इत्यधर्मेण प्रवृत्तास्ते तस्मादैश्वर्यान्निः[11]चलन्ति देवराज्यादेर्नहुषादिवत्। [12]यतस्तस्मादेवाधर्मात् तेषां तत् प्राक्तनं कर्म शुभं परिक्षयमेतीति। ततश्च —

[13]"कर्मभूमिरियं ब्रह्मन् फल[14]भूमिरितः परा।
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते[15] ॥"

[16]इत्येतदयुक्तमेव। तत्रापीन्द्रादीनां सुकृतदुष्कृतश्रवणादिति। ये पुनः [17]सावधिनैश्वर्यादिना युक्ताः, ते तस्मिन् काललक्षणेऽवधौ प्राप्ते तस्मात् स्थानात् [18]**क्षरन्ति**। न त्वधर्मफलमपि नहुषा-दिवद् [19]भुञ्जते। तैरधर्मस्य [20]तत्राननुष्ठितत्वात्। केवलं [21]शुभकर्मशेषेण[22] **महति** **कुले** जन्म **प्राप्य** भोगान्भुञ्जत इति। तदिदमुक्तम्[23] —

"शुचीनां श्रीमतां गेहे योग[24]भ्रष्टोऽभिजायते।" इति ॥१३३–१३५॥

---

[1] ०रासेचितः — ऊ, ऋ; ०रासिञ्चितः —ए.
[2] भूर्लोकाद्यूर्ध्वं० — ए; भूलोकाद्यध्व० — ऐ.
[3] अथाधर्माधिकारी हेतु० — आ; अथ धर्मोऽधिकारहेतु० — ऊ, ऋ.
[4] क्षीयन्तेऽजस्रसंयुक्ताः — भु, उ; क्षीयन्तेऽजस्रसंसिक्ताः — उ. पाठान्तरम्; क्षरत्यजस्रं संसक्ताः—ऊ; क्षीयन्तेऽजस्रसंसक्ताः—ओ.
[5] संसक्ताः — ऋ.
[6] संसिद्धा ये योगेन निरीश्वराः — ऊ, ऋ; संसिद्धा ये योगेन नरेश्वराः — ओ.
[7] भवन्ति — उ.
[8] संप्राप्य क्रीडन्ते ह्यविशङ्किताः — ऊ, ऋ.
[9] 'ऐश्वर्यमदाद्येन' इत्यत्र 'ऐश्वर्यपदाद्ये' इति दृश्यते — ऊ, ऋ; 'ऐश्वर्यमदाद्येषु' इति दृश्यते — ऐ.
[10] मोहो—अ, उ; 'मोहेन' इति नास्ति—ऊ, ऋ.
[11] ०चरन्ति — ऊ, ऋ.
[12] यस्तस्मादेव धर्मात् — ऐ.
[13] महाभारते ३. २६२. ३६ उ०, पू०.
[14] ०भूमिरतः परा—अ, उ; ०भूमिरियं परम् — ए; ०भूमिरसौ मता—मुद्रितमहाभारतपाठः।
[15] ०युज्यते — अ, आ, उ, ए, ऐ.
[16] इत्येवं यदुक्तं तदयुक्तमेव — अ, आ, उ, ऐ.
[17] सावधिरैश्वर्यादिना — ऊ, ऋ; सा विधिनैश्वर्यादिना — ऐ.
[18] क्षुरन्ति — आ.
[19] भुज्यन्ते — अ, आ, उ, ए.
[20] तत्रानुष्ठितत्वात् — अ, ए, ऐ.
[21] 'शुभ' इति नास्ति — ऋ.
[22] अत्र 'भवति' इत्यधिकम् — ऐ.
[23] भगवद्गीतायां ६. ४१ उ०.
[24] ०भ्रष्टो हि जायते — अ. आ, उ.

यत एवं ते पुनरपि मनुष्यलोकं प्राप्ताः — 'तस्माद्' इत्यादि।

[1]**तस्माद्भोगात्परं नास्ति ततस्ते मूढचेतसः।**
**रागेण क्षिप्तचैतन्याः [2]स्वकर्मपरिवर्जिताः॥१३६॥**
**ततः प्रवर्तते बुद्धिः [3]किंचिद्राजसमीलिता।**
**प्रध्वस्तसत्त्वभावेन तमसातीव भूरिणा॥१३७॥**
[4]**परमेशकरा**[5]**घ्राता भोग**[6]**निद्राकुलान् प्रति।**
**विवर्तमाना तरला ह्यधर्मेणात्मवर्तिना॥१३८॥**

ततो **भोगात् परम्** अन्यद् **नास्ती**त्येवं पुनरपि लोकायतदृशा मोहिताः सन्तो **रागेण** [7]पुनराक्षिप्तत्वाच्छास्त्रविहितानुष्ठानविमुखाः। [8]यतस्तान्प्रति [9]ईश्वराधिष्ठानात् [10]तमोमध्येवेषद्रजोयुक्ता [11]प्रणष्टसत्त्वभावात्, [12]**तरला** [13]शास्त्रनियमोज्झितत्वात्, [14]अधर्मात्मकेन भावेन **विवर्तमाना** [15]**बुद्धिः प्रवर्तते** इति॥१३६–१३८॥

[16]यत एवम् — 'तत' इत्यादि।

[17]**ततोऽणो रतिमाहात्म्यात्प्रवृत्तिः** [18]**परपीडने।**
[19]**हिंसातोऽलीकभाषि**[20]**त्वमस्माच्चौर्ये प्रवर्तते॥१३९॥**
**परदारे**[21]**ष्वनायासमतो गुर्वङ्गनागमः।**
[22]**कालुष्यमतिदौर्भाग्यं** [23]**क्रोधश्चाप्यनिवारितः॥१४०॥**
**सतां व्यतिक्रमे प्रीतिरप्रीतिर्गुरुसन्ततौ।**
[24]**शौचहानिश्च** [25]**सततमति**[26]**दौःख्यं प्रमादतः॥१४१॥**
**अनार्जवं** [27]**च सततमधर्माकुलितेक्षणः।**

---

[1] तस्मात्परं नाप्यपरं ततस्ते — उ; अस्माद्भोगात्परं — ऊ, ऋ.
[2] सत्कर्म० — मु, उ, ओ.
[3] किञ्चिद्राजसमीरिता—उ; किंचिद्रजस्समीरिता — ऊ, ऋ, ओ.
[4] परमेश्वरोकरा० — उ.
[5] ०घ्रातभोग० — ओ.
[6] ०निद्राकुलं प्रति — ऊ, ऋ.
[7] पुनराक्षिप्ताच्छास्त्र० — आ.
[8] यतस्ततस्तत्प्रति — ऊ, ऋ; यतस्तस्मात्प्रति — ए; यतस्तत्प्रति — ऐ.
[9] ईश्वरानुष्ठानात् — अ, उ.
[10] तमोमध्येवमीषद्रजो० — अ, उ; तमोमध्ये खवद्रजो०–ऊ, ऋ; ततो मध्ये येषु रजो०–ए.
[11] 'प्रणष्टसत्त्वभावात्' इति नास्ति — आ, ऊ, ऋ, ए, ऐ.
[12] तरलाः — उ, ऊ, ऋ.
[13] शास्त्रानियमोज्झितत्वात् — अ, आ.
[14] अधर्मात्मकमेकेन भावेन — आ; अधर्मात्मकमेकभावेन — उ.
[15] बुद्धितः प्रवर्तन्ते — उ.
[16] य एवम् — अ, उ.
[17] ततोऽणोरपि माहा० — ऊ, ऋ; ततोऽणुरति० — ओ.
[18] परपीडया — ऊ, ऋ.
[19] हिंसातोलितभावित्वमस्माच्चार्ये प्रवर्तते —उ.
[20] ०त्वं ततश्चौर्ये–ऊ, ऋ; ०त्वमस्माच्चौर्यं–ओ.
[21] ०ष्वनायासो मतो — ओ.
[22] अकार्यमति० — मु.
[23] क्रोधं चाप्यनि० — उ.
[24] गौरीहानिश्च — उ.
[25] सततं मति० — मु, उ.
[26] ०लौल्यं प्रमादिता — ऊ, ऋ.
[27] तु — ऊ, ऋ.

तस्मादधर्महेतुभूताद्रजस्तमो[1]योगाद्रागानुबन्धेन[2] [3]पुंसो हिंसादिष्वधर्मेषु [4]प्रागुक्त[5]यमनियमात्मकधर्म[6]विपर्ययेषु दशसु बुद्धिः प्रवर्तत इति । [7]यतोऽय[8]मधर्माकुलितदृष्टिः ॥

[9]इदानीमज्ञानमधिकारिसाधनद्वारेणोच्यते — 'ततोऽधर्मेण' इत्यादि ।

**ततोऽधर्मेण पुष्टस्य [10]भोक्तुर्भोक्तृत्वलीलया ॥१४२॥**
**[11]प्रध्वस्य सत्त्वरजसी यदा बुद्धौ महेश्वरः ।**
**[12]तमसोत्कृष्टवीर्येण नियुनक्ति तदा [13]पशुम् ॥१४३॥**
**अज्ञान[14]तिमिरौघेण येन [15]मूढो न पश्यति ।**
**[16]स्वोपकाराय यत्किंचिन्न[17] [18]स्यात्पञ्चात्मके मतिः ॥१४४॥**
**न च [19]तन्मात्रजं ज्ञानं तमसाकुलितस्य तु ।**
**योगजं न च गुह्याख्यं न च [20]गर्वोद्भवं [21]तथा ॥१४५॥**
**[22]मौढ्येनाभिहतस्यास्य [23]नष्टमध्यवसायजम् ।**
**गौणस्यापि तदाभावो [24]न विजानाति पौरुषम् ॥१४६॥**

**ततः** [25]अनन्तरमधर्मभूयिष्ठपुरुषाणां संबन्धिनी [26]या बुद्धिः, [27]तस्यां विनिवृत्तसत्त्वरजो[28]रूपत्वात् केवलेन **तमसा** युक्तायां सत्यां भगवान्, [29]**पशुमज्ञानतिमिरौघेण** इति —

[30]"तमो [31]मोहो महामोह[32]स्तामिस्रोऽप्यन्धतामिस्रः ।"

---

[1] ०योगाद्यागानु० — ए.
[2] ०सन्धेन — अ.
[3] पुंसां — अ, आ, उ, ए, ऐ.
[4] मतङ्ग० विद्या० १७. ५०–६४.
[5] ०यमनियमात्कर्मविपर्ययेषु — आ; ०धर्मनियमात्मकविपर्ययेन — ऐ.
[6] ०विपर्ययेण दशधा — ऊ; ०विपर्ययेण दशसु — ॠ, ए.
[7] यतोऽधर्माकुलित० — ऐ.
[8] ०मधर्माकुला दृष्टिः — अ, उ.
[9] 'इदानीम्' इत्यारभ्य 'उच्यते' इत्यन्तं नास्ति —ऊ, ॠ; इदानीमधिकारी साधन—अ, उ.
[10] भोक्तुं भोक्तृत्व० — ऊ, ॠ.
[11] प्रध्वस्तसत्त्वरजसा — मु.
[12] तमसा तु स वीर्येण — मु.
[13] परम् — उ; पशून् — ऊ, ॠ.
[14] ०तिमिरौघेन — ऊ, ॠ.
[15] गूढो — उ.
[16] सोपकाराय — मु, उ, ओ.
[17] यत्किंचित्तत् — मु.
[18] साध्यं चात्मिके सति — उ; स्यात्पञ्चात्मिके मतिः — उ० पाठान्तरम्, ओ.
[19] तन्मात्रकं ज्ञानं — ऊ, ॠ.
[20] गुह्योद्भवं — उ.
[21] तदा — उ, ऊ, ॠ, ओ.
[22] मौढ्येनाभिहृतार्थस्य — मु, उ; मौढ्येनापि हृतार्थस्य — ओ.
[23] नश्यमध्यव० — ऊ, ॠ.
[24] न च जानाति — ऊ, ॠ.
[25] अनन्तरमयमधर्म० — अ, उ.
[26] 'या' इति नास्ति — ऊ, ॠ.
[27] तस्या विनिवृत्त० — ऊ, ॠ; तस्यापि निवृत्त० — ऐ.
[28] ०रूपत्वतः — ऊ, ॠ.
[29] पशूनज्ञानतिमिरौघेनेति — ऊ, ॠ.
[30] विष्णुपुराणे १. ५. ५; योगसूत्रभाष्ये पृ० १३.
[31] मोहमहा० — उ.
[32] ०स्तामिस्रान्धतामिस्रः — उ; तामिस्रोऽन्धतामिस्रम् — ऊ, ॠ; ०स्तामिस्रोऽन्धतामिस्रः — मु० योगसूत्रभाष्यपाठः; ०स्तामिस्रो ह्यन्धसंज्ञितः — मु० विष्णुपुराणपाठः ।

इत्येवंविधेन [1]वक्ष्यमाणेन पञ्चपर्वात्मना [2]विपर्ययेण योजयति। तदिदमुक्तं सांख्यैः[3] — "पञ्च विपर्ययभेदा भवन्ति" इति। **येन** [4]**अज्ञानतिमिरौघेण** [5]मोहितः पुमानात्मनो [6]हिताहितं [7]**न** [8]**किंचित् पश्यतीति**। ततश्च तस्य **पञ्चात्मके** प्राग्वत्सांख्यज्ञानादौ न स्यात्सिद्धिरिति। [9]असिद्धयोऽप्येवं [10]तमः [11]प्रोक्ताः। [12]भूताव्यक्ताज्ञानयोरप्यत्रोपलक्ष[ण]त्वात्[13]। एतेषां [14]चासिद्धिभेदानां तमःकार्यत्वेन [15]वक्ष्यमाणत्वादत्राज्ञान[16]भेदत्वमेव दर्शयितुमुपन्यासः, [17]सांख्यैः प्रदर्शितानैश्वर्य[18]भेदत्वं निवर्तयितुम्। यदुक्तं सांख्यैः[19] —

"एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम्[20]॥" इति।

पञ्चविधमेवाज्ञानं [21]वक्ष्यमाणलक्षणमिति ॥१४२–१४६॥

अथावैराग्यमपि [22]तथैवोच्यते — 'एवम्' इत्यादि।

**एवमज्ञानमोहेन न्यग्भूतस्याभिलाषिणः।**
**न विरागोऽस्ति भोगेषु भूयो भूयो[23]ऽनुरज्यते ॥१४७॥**
**बुद्धिस्तस्य [24]तमोयुक्ता किंचिद्रागानुवासिता।**
[25]**कारणेच्छेरिता** [26]**भोक्तुरवैराग्येण** [27]**वर्तते ॥१४८॥**

[28]**एवम्**[अज्ञानस्य] जवजविभावेन मोह[29]रागादीनामवस्थितेरज्ञानयुक्तस्य पुंसो न विषयेषु वैराग्यम्।

---

[1] मतङ्ग० विद्या० १७. १७५ उ० –१८५.
[2] विपये पर्ययेण — ऊ.
[3] सांख्यका० ४७ पू०.
[4] अज्ञानेन तिमिरौवेण — अ, आ, उ, ऐ; अज्ञानतिमिरौवेन — ऊ, ऋ; अज्ञानेन तिमिररूपेण — ए.
[5] लोहितः — ऊ, ऋ.
[6] हिताहितत्वं — अ; हिताहितकं — आ.
[7] च — ए.
[8] कश्चित् — ऐ.
[9] असिद्धयेऽप्येवं — उ.
[10] दमः — ऊ, ऋ; दृशः — ऐ.
[11] 'प्रोक्ताः' इति नास्ति — अ, उ.
[12] भूताव्यक्तज्ञानयो० — आ, ए, ऐ; भूताव्यक्तयोनयो० — ऊ, ऋ.
[13] ०लक्ष्यत्वात् — अ, आ, ई, उ, ऊ, ए, ऐ; ०लक्षत्वात् — ऋ.
[14] च सिद्धभेदानां — ऐ.
[15] मतङ्ग० विद्या० १७. १७५ उ०.
[16] ०भेदं दर्शयितुम् — अ, आ, ई, उ; भेदत्वं दर्शयितुम् — ए, ऐ.
[17] सांख्यप्रदर्शित०–ऊ, ऋ; सांख्ये प्रदर्शित०–ए.
[18] ०भेदं निवर्तयितुम् — अ; ०भेदं निर्वर्तयितुम् — आ, ई, उ.
[19] सांख्यका० ४९.
[20] ०सिद्धितुष्टीनाम्—अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[21] वक्ष्यमाणमिति — ऊ, ऋ; वक्ष्यमाणलक्षणमिति — ए, ऐ; मतङ्ग० विद्या० १७. १७५ उ — १८५.
[22] तथोच्यते — ऐ.
[23] ०ऽनुगम्यते — मु; ०ऽनुयुज्यते — उ.
[24] समोपेता — मु, उ, ओ.
[25] कारणप्रेरिता — मु; कारणे प्रेरिता — उ.
[26] भोक्तुरवैराग्यनिवर्तये — उ; भोक्तुं न वैराग्येण — ऊ, ऋ.
[27] वर्तने — उ० पाठान्तरम्।
[28] एवमार्जवजवीभावेन — अ, ई, उ, ऊ, ऋ; एवमार्जं जवीभावेन — आ; एवं मार्जसञ्जीवीभावेन — ए.
[29] ०रागादीनामेव स्थितेरज्ञान० — ए; ०रागादीनामवस्थिरज्ञाज्ञ० — ऐ.

[1]अपि तु अवैराग्यं राग एव। यतः तस्य [2]ईश्वरेच्छया बुद्धिः ईषद्रजो[3]योगापि [4]तमोरूपैव ॥१४७–१४८॥

[5]एवं वैराग्यभेदत्वेन [6]तुष्टेरुक्तत्वाद्, [7]अत्र अवैराग्यरूपा [8]दशैव तुष्टिलक्षणाभावा उच्यन्ते —'न जुगुप्सोद्भवा' इत्यादि।

**न जुगुप्सोद्भवा तुष्टिर्न [9]चैवाध्यात्मिकी पशोः।**
**[10]आधिभौतिकभावोत्था [11]न चैवास्याधिदैविकी ॥१४९॥**
**[12]निःस्वस्यापि [13]तदाभावात्तुष्टिर्न [14]स्यात्प्ररोदिका[15]।**
**न च [16]कामोद्भवा तस्य [17]क्षपिका वा महामुने ॥१५०॥**
**ध्वस्तवैखानसः पश्चा[18]दतुष्टश्चाथ सर्वदा।**

[19]तेषां [20]चासिद्धीना[21]मिवाभावप्रत्यय[22]रूपत्वेनाविशेषात्र साधनान्तरभेदाद्भेद इति दशसंख्यैवो-क्ता[23] ॥

अथानैश्वर्य[24]मप्यधिकारिसाधनभेदेनोच्यते —'भोगपङ्के' इत्यादि।

**भोग[25]पङ्के निमग्नस्य [26]पशोर्बुद्धिर्महेश्वरात् ॥१५१॥**
**[27]विचलेच्छक्तिसंपातात्किंचित्सत्त्वविकासिता[28]।**
**रजसोद्बलितेनाशु तमसा पूरिता सती ॥१५२॥**
**[29]निवर्तते स्वभावेन [30]ह्यव्याहतगुणात्मना।**

---

[1] असिद्धवैराग्यं — ऊ, ॠ.
[2] ईश्वरेच्छाया — ए,
[3] ०योगोऽपि — ऊ, ए; ०योगेऽपि — ॠ.
[4] तमो न रूपैव — ए.
[5] 'एवम्' इति नास्ति — अ, आ, ई, उ, ए.
[6] मतङ्ग० विद्या० १७. ६५ उ०, ६६. वृत्तौ।
[7] 'अत्र' इति नास्ति — अ.
[8] दशैवातुष्टि० — आ, ई, उ, ऊ, ॠ.
[9] चैवाध्यात्मिका — मु, उ, ऊ, ॠ, ओ.
[10] भौतिकी न तु भावोत्था — मु; नातिभौति भवोत्थाना — मु. पाठान्तरम्; भौतिका न तु भावोत्था—उ; नातिभौतिकभावोत्था—ओ.
[11] न वै स्यादातिभौतिकी — मु; न वै स्यादातिभौतिका—उ; न चैवास्याधिदैविका—ऊ, ॠ.
[12] न स्वस्यापि — उ.
[13] तदाभावे तुष्टि०—ऊ० ॠ; तदाभावस्तुष्टि० — ओ.
[14] स्यात्पुरोदिता — मु, उ० पाठान्तरम्। स्यात्प्ररोहिका — उ ;स्यात्प्ररोदकः — ऊ, ॠ.
[15] अत्र विडम्बातुष्ट्यभावप्रतिपादकं वचनं भवितव्यम्। तत्सहितपाठो नोपलभ्यते।
[16] कामोद्भवः — मु, उ, ऊ, ॠ.
[17] क्षपको — मु, उ, ऊ, ॠ.
[18] ०दतुष्टिश्चाथ— उ.
[19] एवं — ऊ, ॠ.
[20] चासिद्धानामिव–अ; च सिद्धीनामिव–आ, ऐ.
[21] ०मिव भावप्रत्यय० — अ, आ, ई, उ, ए, ऐ.
[22] ०रूपत्वेन विशेषा न साधनान्तर० — ऐ.
[23] ०संख्यैवोक्ताः — ऊ, ॠ.
[24] ०मधिकारि०–ऊ, ॠ; ० मप्यधिकार०–ए, ऐ.
[25] ०पङ्कनिमग्नस्य — मु, ओ.
[26] पुरो बुद्धिर्महेश्वरः — उ.
[27] चलिते शक्तिसंघातात् — मु, उ; चलिते शक्तिसंपातात् — ओ.
[28] ०विकासिका — ऊ, ॠ.
[29] विवर्तते — उ, ऊ, ॠ.
[30] ह्यविघातगुणात्मना — मु, ओ; तस्यायातगुणात्मना — उ० पाठान्तरम्।; अव्याहतगुणात्मता — ऊ; अव्याहतगुणात्मना — ॠ.

[1]तस्यावैराग्ययुक्तस्य पुंसः सत्त्वादिविकासहेतो रजस्तमोभ्यां[2] संयुक्ता[3] **सती** [4]**बुद्धिः शक्तिसंपाताद्** ऐश्वर्याच्चलति; [5]अशक्त्या युज्यते। यतस्तेन [6]**अव्याहतगुणात्मना** ऐश्वर्यस्वभावेन निवर्तते; तद्विपर्ययेणानैश्वर्यात्मना [7]भवतीति ॥

एवं च — 'नाणिमा' इत्यादि।

**नाणिमा लघिमा वापि महिमा च गुणो महान् ॥१५३॥**
**कार्यं न वशमायाति [8]करणं [9]चाप्ययोगिनः।**
**[10]अनैश्वर्यबलावेशा[11]त्प्रणष्टा प्राप्तिरप्यतः ॥१५४॥**
**[12]अप्राकाम्य[13]तयाविष्टो दुःखितः पुरुषाधमः।**
**[14]अनीशित्वं च सततं सर्वकार्येषु जायते ॥१५५॥**
**स्वात्मीय[15]स्यापि देहस्य न [16]वशित्वं महामुने।**
**[17]प्राप्तार्थस्याप्यभावः स्यात्किं पुन[18]श्चाभिलाषिणः ॥१५६॥**
**एवं सर्वेषु कार्येषु [19]नरः [20]सीदत्यनीश्वरः।**

[21]ऐश्वर्यस्याणिमादिभेदेनोक्तत्वात्, अनैश्वर्यमणिमाद्यभाव[22]रूपेणाशक्त्यात्मनाष्टधा[23] भवतीति[24]। [25]तथा, [26]अप्राप्त्याद्यशक्तिः; येन [27]**कार्यं न वशमायाति** करणं चेति। करणाशक्तिश्च द्वादशविधेति [28]वक्ष्यामोऽहंकारादिसप्तदश[29]तत्त्वप्रकरणे। इत्येव[30]मशक्तिरेकविंशतिभेदा [31]भवति। [32]बुद्ध्य-

---

[1] अत्र 'ततः' इत्यधिकम् — ऊ, ऋ.
[2] अत्र 'भगवता' इत्येतदधिकम् — ऐ.
[3] संपृक्ता — आ, ई, उ, ऊ, ऋ, ए; संवृत्ता — ऐ.
[4] बुद्धिशक्ति० — अ, आ, ई, उ, ए, ऐ.
[5] अशक्ता — अ, ऊ, ऐ.
[6] अव्याघातगुणा० — अ, आ, ई, उ; अव्यापातगुणा० — ए; अव्यहितो गुणा० — ऐ.
[7] भवन्तीति — ए, ऐ.
[8] कारणं — मु, ऊ, ऋ.
[9] नाप्ययोगिनः — ऊ, ऋ.
[10] अनैश्वर्यमलावेशात् — मु, ओ; नैश्वर्यमलमावेशात् — उ.
[11] ०त्प्रणष्टात्प्राप्ति० — उ० पाठान्तरम्।
[12] अप्रकाम्य० — उ.
[13] ०तयाविष्टा — ओ.
[14] अनैश्वर्याच्च सततं — मु, उ, ओ.
[15] ०स्याथ देहस्य — ऊ, ऋ.
[16] शिवत्वं — मु, उ, ओ.
[17] प्राप्यार्थ० — मु, उ, ओ; प्राप्यस्य चाप्यभावः — उ० पाठान्तरम्।
[18] ०श्चाभिलाषिते — मु, उ० ०श्चाभिलाषते — ओ.
[19] नराः सीदन्त्यनीश्वराः — ऊ, ऋ.
[20] सीदत्यनैश्वरः — ओ.
[21] ऐश्वर्यस्याष्टभेदेनोक्तत्वात् — ऐ.
[22] ०रूपेण शक्त्यात्मना क्रिया भवतीति — अ, ऐ; रूपेणाशक्यमात्मना त्रिधा — आ, ई, उ.
[23] 'अष्टधा' इत्यत्र 'त्रिधा' इति दृश्यते — ए.
[24] इतिशब्दो नास्ति — ऋ; भवन्तीति — ए.
[25] तथा प्राणाद्यशक्तिर्या न कार्यमिति शरीरं न वशमायाति — उ; तथा प्राणादिशक्तिर्या न कार्यमिति शरीरं न वशमायाति — ऋ.
[26] अप्राप्ताद्योक्तिः — ए.
[27] कार्यमिति न — ऐ.
[28] मतङ्ग० विद्या० १८. ३२–३४ वृत्तौ।
[29] ०तात्त्वप्रकरणमित्येवम् — ऐ.
[30] ०मशक्तिरष्टविंशतिभेदा — ऊ, ऋ.
[31] भवन्ति — अ, ऋ, ए, ऐ.
[32] बुद्धिरशक्ते० — ऐ.

शक्ते[1]रसिद्धचतुष्टिरूपाया[2] अज्ञानावैराग्य[3]भेदत्वेनोक्तत्वादिति[4]। ततश्च यदुक्तं सांख्यैः[5] —

"एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।
सप्तदशवधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम्[6]॥" इति।

[7]एतत्सापवादमेव॥

अथोपसंहारः — 'भावा' इत्यादि।

**[8]भावा बुद्धिसमुद्भूताः क्रमेणैवोपवर्णिताः[9]॥१५७॥**

धर्मादय एव **भावाः क्रमेण** प्रत्ययरूपतां प्राप्ता इति। [10]एवं शतत्रयसंख्यात्र दर्शिता। न तु सांख्यैरिव पञ्चाशदित्युक्तमन्यत्र —

[11]धर्मो दशभिर्भेदैर्ज्ञानि[12]मशीत्या शतेन वैराग्यम्।
[13]ऐश्वर्यं चतुष्षष्ट्या [14]दशभिरधर्मस्तदर्धतोऽज्ञानम्॥
दशभिरवैराग्यं चानैश्वर्यं [15]भिन्नमेकविंशत्या।
भावप्रत्यय[16]भेदः संक्षेपोक्तः शतत्रयेणायम्॥ ॥१५७॥

यत एवं [17]बुद्धिरनेकभावप्रत्ययात्मना [18]परिणतस्वभावा — 'ततः' इत्यादि।

**ततः कालवशात्क्षीणे [19]पुनरायात्यथोन्नतिम्।**
**ऐश्वर्यं हि परा काष्ठा [20]भोगिनो ह्यपरा मता॥१५८॥**
**[21]अनैश्वर्यं मुनिव्याघ्र चक्रमेतद्दुरुत्तरम्[22]।**

---

[1] ०रसिद्धतुष्टि० — अ; ०रसिद्धितुष्टि० — आ; ०रेव सिद्धचतुष्टि० — ऊ, ऋ; ०रसिद्धा तुष्टि० — ऐ.

[2] ०रूपतया — ऐ.

[3] ०भेदेनोक्त० — अ, आ, ई, उ, ऊ, ऋ.

[4] मतङ्ग० विद्या० १७. १४२ –१५०.

[5] सांख्यका० ४९.

[6] ०विपर्ययात्सिद्धितुष्टीनाम् — अ, आ, ई, उ, ऊ, ऋ.

[7] 'एतत्' इत्यत्र 'तत्' इति दृश्यते — ऊ, ऋ; 'यत्' इति दृश्यते — ऐ.

[8] भावबुद्धि० — ओ.

[9] ०वोपबृंहिताः — उ.

[10] त एव शतत्रया संख्ययात्र — ऊ, ऋ.

[11] इमौ श्लोकौ मृ० वृ० दीपिकायां २८४ तमे पृष्ठे 'उक्तं च भगवता रामकण्ठेन' इति निर्दिश्योदाहृतौ।

[12] ०मशीतिशतेन — ऊ, ऋ.

[13] 'ऐश्वर्यं' इत्यस्य स्थाने 'चेश्यं' इति दृश्यते — ऊ, ऋ; 'ऐश्वर्यं च' इति दृश्यते — ए, ऐ.

[14] दशभिर्धर्मः — ऊ, ऋ.

[15] 'भिन्नं' इत्यत्र 'अभिन्नं' इति दृश्यते — ए, ऐ.

[16] ०भेदः संक्षेपेणोक्तः — ए; ०भेदसंक्षेपोक्तः — ऐ.

[17] बुद्धिरनेकाभाव० — ई, उ.

[18] परिणतिस्वभावा — आ, ऊ, ऋ, ए, ऐ.

[19] पुनरायात्यधोगतिम् — उ० पाठान्तरम्, ओ; पुनरायान्त्यथोन्नतिम् — ऊ, ऋ.

[20] भोगेनोह्या परा — उ; भोगिनो हि परा — ऋ; भोगिनोऽप्यपरा — ओ.

[21] अनेनैव मुनि० — मु, उ, ओ.

[22] ०दुरुत्तमम् — ऊ, ऋ.

[1]अष्टारं वर्णितं युक्त्या पुनर्वक्ष्याम्यतः परम् ॥१५९॥
विशेषोऽस्य समासेन[2] साम्प्रतं मुनिसत्तम।

ततः कस्मिंश्चिद्भावे धर्मादौ **क्षीणे पुनः** अन्यो भावस्तथा[3]भूत एव **उन्नतिमायाति**। यदुक्तं श्रीमत्स्वायंभुवादौ[4] —

"उन्नत्यवनती यद्वत्तुलाकोटयोरवस्थिते[5]।
[6]कर्मणोर्विलयोत्पत्ती[7] तद्वदुत्तरपूर्वयोः[8]॥" इति।

ऐश्वर्योपलक्षितं च [9]धर्मादिचतुष्टयं भावेषु[10] परमुच्यते। [11]अनैश्वर्योपलक्षितं[12] [13]त्वधर्माद्यपरमिति। एवम् **एतद्** [14]धर्मादिभिरष्टाभिरनेकभेदभिन्नं [15]**चक्रं दुरुत्तरं** संसारिणो **वर्णितम्**। [16]**अस्य तु यो विशेषः**, तमधुना **वक्ष्यामि** इति॥

सोऽयमुच्यते — 'मूढसंज्ञा' इत्यादि।

**मूढसंज्ञा विधर्माणो [17]विधर्माभिरताः सदा॥१६०॥**
**[18]प्रयान्त्यक्षीणकलुषाः [19]सुघोरेषु महत्सु च।**
**नरकेषु ततस्तेभ्यः कालेन [20]बहुना मुने॥१६१॥**
**[21]तिर्यग्भोगमनुप्राप्य कारणेच्छानुरोधिनः[22]।**
**तेभ्योऽप्याशय[23]सामर्थ्यान्नाना[24]जात्यन्तखेदिताः॥१६२॥**
**[25]प्राप्य [26]मानुष्यतां दीनां दरिद्राः [27]क्लेशभागिनः।**
**दुःखिता [28]व्याधिता मूर्खाः संकीर्णाश्च भवन्ति हि॥१६३॥**

---

[1] अष्टारवर्णितं — मु, उ, ओ.
[2] विशेषाच्च समासेन — उ; विशेषानस्य संक्षेपात् — ऊ; विशेषानप्यसंक्षेपात् — ऋ.
[3] ०भूतमेव — ए.
[4] स्वायम्भुवे ३३. २०.
[5] ०कोटयोरवस्थितेः — अ, आ, ई, उ, ऋ; कोटयावस्थिते—ऊ; कोटयोरधस्थितेः— ए.
[6] कर्मणो विलयोत्पत्तिः — आ; कर्मणो विलयोत्पत्ती — ई, उ, ऋ, ऐ.
[7] ०विलयोत्पत्तिः — अ.
[8] ०पर्वयोः — स्वायंभुवमातृकापाठः।
[9] 'धर्मादि' इत्यारभ्य 'लक्षितं' इत्यन्तं नास्ति — ऊ, ऋ.
[10] ०चतुष्टयभावेषु — ई, उ.
[11] नानैश्वर्योप० — अ, आ, ई, उ, ए.
[12] अत्र चशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[13] 'त्वधर्माद्यपरमिति। एवमेतद्' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[14] अधर्मादिभि० — ए.
[15] चक्रे — ऐ.
[16] तस्य तु यो — अ, आ, ई, उ, ऐ; तस्यापि तु यो — ए.
[17] विरमादिरताः—उ; विकर्माभिरताः—ऊ, ऋ.
[18] प्रयान्ति क्षीण० — ऋ.
[19] सुरैरेषु — उ.
[20] बहुधा — उ, ओ.
[21] तिर्यग्भोगामृतं प्राप्य — मु; तिर्यग्भोगापरं प्राप्य — उ; तिर्यग्भोगावरं प्राप्य — ओ.
[22] ०रोधिताः — ऊ, ऋ, ओ.
[23] ०सामर्थ्यं नाना० — ओ.
[24] ०व्याध्या च खेदिताः — उ; ०जात्यन्तवेदिताः — ओ.
[25] मानुष्यं प्राप्य ते दीनाः — ऊ, ऋ.
[26] मानुष्यतादीनां — मु, उ.
[27] के च भोगिनः — उ० पाठान्तरम्; क्लेशभोगिनः — ओ.
[28] व्यथिता — उ.

एवं जन्मसहस्रेषु [१]ह्यतीतेषु कदाचन ।
भवन्ति धर्मिणः [२]शूराः प्राक्तनानुक्रमेण तु ॥१६४॥
भ्राम्यमाणाः [३]स्वकर्मोत्थवासनाभिस्ततोऽणवः ।
अष्टारस्य च चक्रस्य [४]नान्तं पश्यन्ति दुखिताः ॥१६५॥

परस्परहेतुभावेन यतश्चक्रमेतदष्टारमवस्थितम्[५] । [६]ततोऽनेन [७]भ्राम्यमाणाः मूढा नान्तं [८]पश्यन्ति । [९]अत एव [१०]नित्यं दुःखिताः इति ॥१६०–१६५॥

अत्र मतङ्गमुनिः — 'यादृक्कर्म' इत्यादि ।

**मतङ्ग उवाच —**

यादृक्कर्मवशाद्येन जन्म [११]प्राप्तं महेश्वर ।
[१२]स बध्नाति रतिं तत्र नारतो भोक्तुमर्हति ॥१६६॥
सर्वं तत्सुखभावेन [१३]मन्यमानस्तदा तदा ।
अनेनैव शरीरेण चिरं जीवितुमिच्छति ॥१६७॥
[१४]प्रयत्नरूपया वृत्त्या शरीरं प्रति रक्षणे ।
[१५]तस्मादेवं [१६]न तद्दुःखं [१७]सर्वमेव सुखं सदा ॥१६८॥

यदुक्तं "अष्टारस्यास्य [१८]चक्रस्य यतो नान्तं [१९]पश्यन्ति । [२०]अतो दुःखिताः" [२१]इत्येतत्प्रत्यक्षादिनिराकृतम्[२२] । यतः [२३]सर्वस्यैवेयमात्माशीः क्रिमेरपि [२४]मा न भूवं भूयासम्" इति । सा दुःखितत्त्वे नोपपद्यते । तदानीं हि [२५]तस्य व्याध्याद्युप[२६]तप्तस्यान्ते मृत्युप्रवेशकाल इव सर्वदा [२७]प्रतिपत्ति [र्न] स्यादिति पूर्वः पक्षः ॥१६६–१६८॥

---

[१] अतीतेषु — उ, ऊ, ऋ.
[२] शूद्राः — मु, उ, ओ.
[३] स्वधर्मोत्थ० — मु, उ, ओ.
[४] नाशं — उ; नान्त्यं — ओ.
[५] ०मवस्थिते — ऐ.
[६] ततो येन — ऐ.
[७] भ्राम्यमाणमूढा — अ; भ्राम्यमाणां मूढा — ए.
[८] पश्यति — अ, ऐ.
[९] अन्त एव — ऐ.
[१०] 'नित्यं' इति नास्ति — अ, आ, ई, उ, ऋ, ए, ऐ.
[११] प्राप्तो — उ.
[१२] अबध्नाति रतिस्तत्र — उ.
[१३] मन्यमानस्सदा तदा — ऊ, ऋ.
[१४] प्रयात्यपायया — उ.
[१५] यस्मादेव — मु, उ, ओ.
[१६] महादुःखं — मु, उ, ओ; रतं दुःखं — ऊ, ऋ.
[१७] सर्वं एव — ऋ.
[१८] 'चक्रस्य' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[१९] पश्यति — अ, ऊ, ऋ, ऐ.
[२०] 'अत' इत्यत्र 'पश्यतः' इति दृश्यते — ऐ.
[२१] इत्येतत्प्रतीक्षादि० — ऋ.
[२२] अत्र इतिशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.
[२३] योगसूत्रभाष्ये २. ९; ४. १०.
[२४] 'मा न भूवं' इत्यत्र 'भूयो' इति दृश्यते — अ, आ, ई, उ, ए; 'न भूयं' इति दृश्यते — ऐ.
[२५] तस्या — अ.
[२६] ०तप्तस्याग्निप्रवेशकाल इव मा भूवनिति सर्वदा — ऊ, ऋ; ०तप्तस्यान्तेऽत्र ते मृत्युप्रवेशकाल इव न भूयात् सर्वदा — ऐ.
[२७] अत्र 'मा न भूवं भूयासमिति' इत्यधिकतया भवितव्यमिति भाति ।

सिद्धान्तस्तु — 'मोहशक्तिनिरुद्धानाम्' इत्यादि ।

**परमेश्वर उवाच —**

**मोहशक्तिनिरुद्धानां [1]श्वयोनावपि निश्चयः ।**
**[2]प्राप्तानां [3]रक्षणे विप्र तत्सुखं [4]प्रतिपद्यसे ॥१६९॥**
**क्षुत्पिपासादिकं [5]तावन्महद्दुःखं न मन्यसे ।**
**[6]सर्वापराधजं तस्य तस्मादप्यपरं महत् ॥१७०॥**
**जिह्वोपस्थ[7]वशात्तत्तज्जातीयैर्विनिहन्यते ।**
**तद्दुःखं [8]मृष्यमाणस्य पुच्छच्छेदादिकं [9]च यत् ॥१७१॥**
**कण्टकेनाभिविद्धस्य[10] तीव्रा भवति वेदना ।**
**किं पुनः [11]कुन्तखड्गाद्यैर्भिद्यमानस्य [12]यद् भवेत् ॥१७२॥**
**अत्र किं बहुनोक्तेन [13]शृणुष्वावहितोऽधुना ।**

यत्तावदुक्तं 'दुःखितत्वं प्राणिनां प्रत्यक्षादिनिराकृतम्' इति । तदयुक्तम् । यतः सर्वेषामेव मोहशक्तिनिरुद्धानां श्वमार्जारादीनां क्षुत्पिपासाद्यनेक[14]विधं दुःखं दृश्यत एवेति [15]**किमत्र बहुनोक्तेन ॥**

यत्तूक्तमेवं[16] दुःखितत्वेऽपि तेषां [17]कथं न शरीरत्यागाभिनिवेश इति । [18]तत्र [19]श्रूयताम् — 'यन्निबद्धम्' इत्यादि ।

**यन्निबद्धं [20]तदष्टाभिः शरीरं हि [21]शरीरिणः ॥१७३॥**
**पशोः [22]प्रकृतिमालाभिः [23]प्रतिपत्त्यात्मशीलया ।**
**गृहीतमात्मभावेन दुःखानामालयं परम् ॥१७४॥**
**तेन नोत्सहते त्यक्तुं पीड्यमानोऽपि दुःखभाक् ।**

---

[1] व्याधयो नास्त्यनिश्चयः — उ; स्वयोनावपि — ऊ, ॠ, ओ.
[2] प्राप्तव्यानां लक्षणेऽपि — उ.
[3] लक्षणे — मु.
[4] प्रति मन्यसे — मु, उ, ओ.
[5] तावन्महादुःखं — ऊ, ॠ.
[6] यच्चापकरणं तस्य — ऊ, ॠ.
[7] ०वशात्प्राप्तं तज्जातीयैर्विहन्यते — ऊ, ॠ.
[8] दुष्यमाणस्य — उ; घृष्यमाणस्य — ऊ, ॠ.
[9] 'च यत्' इत्यस्य स्थाने 'महत्' इति दृश्यते —ऊ, ॠ.
[10] ०नापि विद्धस्य — ऊ, ॠ.
[11] कुन्दखड्गाद्यैर्भिद्यमानस्य — मु; खड्गकुन्ताद्यैर्दार्यमाणस्य — ऊ, ॠ; . . . खड्गाद्यैर्दार्यमाणस्य — ओ.
[12] या भवेत् — ऊ, ॠ.
[13] शृणुष्व वहितो — ऊ, ॠ.
[14] ०विधदुःखं — आ, ई, उ, ए.
[15] किमभूद्बहुनोक्तेन — ऐ.
[16] 'एवं' इत्यत्र 'एव' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[17] 'कथं न' इत्येतन्नास्ति — अ; 'कथं' इति नास्ति — आ, ई, उ, ए, ऐ.
[18] ततः — ऐ.
[19] श्रूयते — ऊ, ॠ.
[20] ततोऽष्टाभिः — मु; अथाष्टाभिः — ऊ, ॠ.
[21] शरीरिणाम् — ओ.
[22] प्रकृतिनाम्नीभिः—मु; प्रकृतिनामाभिः—उ, ओ.
[23] प्रदीपाद्यात्मशीलया — उ; प्रतिपत्त्यात्मलीलया — ऊ, ॠ.

**यद्** [1]बाह्यमिदं भुवनजं शरीरं मायादिभूतान्ताभिः [2]**अष्टाभिः** प्रकृतिभिः पारम्पर्येण संबद्धं, **तत्** [3]सर्वदुःखालयम्[4]। अहमित्यात्मविषयया **प्रतिपत्त्या** [5]**आत्मभावेन** यतः पशुना **गृहीतं तेन** कारणेन **पीड्यमानोऽपि**[6] असौ [7]**तत् त्यक्तुं नोत्सहते**। तस्मिन्हि[8] त्यक्तेऽहमेव [9]नास्मीति मन्यमानोऽग्निपयः[10]प्रवेशनाद्यकर्ता शरीराव्यतिरिक्तमात्मान[11]मध्यवस्यति। अत [12]एव तत्सुकृत-मित्यत्र [13]दृष्टान्तः॥

अथ [14]कुतस्तेषां तथाभूतो मोह इति प्रसङ्गादज्ञानपञ्चकमधि[15]कारिभेदक्रमेण[16] वक्तुं तमसस्ता-वल्लक्षणमुच्यते — 'तमःशक्तिबलावेशाद्' इत्यादि।

**तमःशक्तिबलावेशादनात्मन्यात्मभावतः**[17] **॥१७५॥**

अनात्मन्यात्मभावेन हि तामसी दशविधासिद्धिर्भेदेन [18]प्राग्दर्शिता इति। यदुक्तं सांख्यैः — [19]"भेदस्तमसोऽष्टविधः" इति। तदयुक्तमेव ॥१७५॥

मोहस्य तु अष्टविधो भेदः [20]सांख्योक्तो युक्त एव; अणिमादिषु [21]क्रमेण [22]परत्वप्रतिपत्त्यात्मक इत्युच्यते — 'अणिमादि' इत्यादि।

**अणिमादिगुणोपेतो यः** [23]**प्राप्तैश्वर्य आदरात्।**
[24]**रतिं बध्नाति** [25]**विपुलां नातः परतरं सुखम्॥१७६॥**
**मन्यते** [26]**मोहमाविष्टः** [27]**शक्त्या स परमेष्ठिनः।**

---

[1] ब्राह्ममिदं भुवनजं — अ, ऐ; बाह्यमिन्द्र-भुवनजं — ए.
[2] अष्टविधप्रकृतिभिः — अ; इष्टाभिः प्रकृति-भिः — ऐ.
[3] सर्वं दुःखालयम् — ऊ, ऋ, ए, ऐ.
[4] अत्र अपिशब्दोऽधिकः — ऊ, ऋ.
[5] आत्मविभावेन — ऐ.
[6] अपिशब्दो नास्ति — ऊ, ऋ.
[7] 'तत्' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[8] हिशब्दो नास्ति — ऊ, ऋ, ए, ऐ.
[9] नास्तीति — अ, आ, ई, उ, ए, ऐ.
[10] ०प्रवेशनाद्यक्रमशरीराव्यति० — अ; ०प्रवेशादि कर्तुं शरीराद्यति० — ऊ, ऋ; ०प्रवेशनादि कर्ता शरीराव्यति० — ऐ.
[11] ०मध्यवसति — अ; ०मध्यवसायं कुर्वन्ति — ऊ, ऋ.
[12] एतत्सुकृतम् — ऊ, ऋ.
[13] 'दृष्टान्तः' इत्यत्र 'अदृष्टान्तता' इति दृश्यते — अ, आ, ई, उ, ए.
[14] 'कुतस्तेषां तथाभूतो मोह इति प्रसङ्गाद्' इत्यस्य स्थाने 'मोहादिप्रसङ्गाद्' इति दृश्यते — अ, आ, ई, उ, ए, ऐ.
[15] ०कारभेद० — ऋ, ए, ऐ.
[16] अत्र एवकारोऽधिकः — ऐ.
[17] ०भावितः — उ, ऊ, ऋ.
[18] मतङ्ग० विद्या० १७. १४२ उ० — १४६ वृत्तौ।
[19] सांख्यका० — ४८ पू०.
[20] सांख्योक्तेर्युक्त एव — अ, आ, ई, उ, ऋ, ए; सांख्योक्तौ युक्त एव — ऊ.
[21] 'क्रमेण' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[22] परतत्त्वप्रति० — आ, ई, उ, ऐ.
[23] प्राप्तैश्वर्यमादरात् — उ, ऊ, ऋ.
[24] किं च बध्नाति — उ.
[25] विपुलं — ओ.
[26] मोहमाविष्टो शक्त्या — मु.
[27] प्रशस्तस्तु शुभाशुभम् — उ.

[1]विपुलामिति क्रमतः समस्त[2]मायीयभुवनगतत्वेन [3]तत्संख्यागुणितभेदाद् द्वादशाधिकैकोन-[4]त्रिंशच्छत (२९१२) संख्यामित्यर्थः[5]। अत एव [6]ऐश्वर्याणामियमेवावान्तरभेदसंख्या द्रष्टव्येति।

[7]तथा —

> [8]शब्दादिविषयान्भोक्तुमुद्यतस्याभिलाषिणः ॥१७७॥
> सहसोत्पद्यते श्रद्धा श्रुत्वा [9]श्रोत्रेण वर्त्मना।
> तत्साधने परोत्साहः स्वर्गेऽप्यप्सरसः शुभाः ॥१७८॥
> [10]भोक्ष्य इत्युद्यतं चित्तं परा निष्ठा तपस्विनः।
> महामोहकरी पत्युः [11]शक्तिस्तं प्रति सर्पिता ॥१७९॥
> कृच्छ्रेण तपसा कालादभ्यासेन च योगिनः।
> [12]धारणाभिः सुखिनस्य व्यज्यते वा परैर्बलात् ॥१८०॥
> [13]ह्रीयते योगसामर्थ्यात्तद्दुःखमतिदारुणम्।

[14]दृष्टानुश्रविकभेदेन यः शब्दादिषु [15]पञ्चसु विषयेषु परत्वावबोधः स [16]दशविधो महामोहः॥

---

[1] विपुलादिति — अ; विपुलामति — आ, ई, उ.

[2] ०मायेय० — ऊ, ऋ.

[3] तत्सांख्यागुणित० — आ, ई, उ; तत्संख्यया गुणित० — ऊ, ऋ.

[4] त्रिंशत्संख्याकमित्यर्थः — अ; त्रिंशच्छतसंख्यमित्यर्थः — ऊ, ऋ.

[5] समस्तमायेयभुवनानां संख्या चतुरशीत्यधिकशतत्रयं प्रतिपादिता। तया सहैश्वर्याष्टकस्य गुणने (३८४+८=३०७२) द्विसप्तत्यधिकसहस्रत्रयसंख्या सिद्ध्यति। किं तु बुद्धितत्त्वप्रकरणे चात्र पूर्वं १२६ उ० — १३२ पू० वृत्तौ श्रीकण्ठादीनां मायागर्भाधिकारिणां तु न तु बौद्धमैश्वर्यमिति निषेधो दृश्यते। यदि ते च मायागर्भाधिकारिणः श्रीकण्ठादयो विंशतिसंख्याका भवन्ति तर्हि (२०+८–१६०) तेषामैश्वर्यस्य संख्यायाः षष्ट्यधिकशतस्य ह्रासे (३०७२–१६०= २९१२) द्वादशाधिकैकोनत्रिंशच्छतसंख्या = संपद्यते। ते च विंशतिसंख्याका मायागर्भाधिकारिण एवमूह्याः—कलातत्त्वभुवनाधिपतयो दश शिवनियुक्ताः, गुणाव्यक्ततत्त्वद्वयाधिपतिः श्रीकण्ठ एकः, अव्यक्ततत्त्वभुवनेशाः क्रोधेशादयः शिवनियुक्ता अष्ट, पृथिवीतत्त्वे सप्तलोकनाथत्वेन प्रथितः श्रीकण्ठ एक इति॥

[6] ऐश्वर्याणामिवेयमेवावान्तरसंख्या — अ, ऐश्वर्यस्यार्पीयमेवान्तरसंख्या — ऊ, ऋ.

[7] 'तथा' इति नास्ति — अ, आ, ई, उ, ए, ऐ.

[8] धर्मादि० — ऊ.

[9] श्रौतेन — ऊ, ऋ.

[10] भोक्ष्यामीत्युद्यतं — मु, ओ; भोज्यमित्युद्यतं — उ.

[11] शक्तिस्सर्वप्रसूतिका — मु, उ; शक्तिः प्रतिसमर्पिता — ऊ, ऋ.

[12] धारणातः सुखं तस्य — मु; धारणाभिः सुखं तस्य — उ, ओ; धारणाभिश्च क्षेत्रस्य — ऋ.

[13] ह्रियते — उ, ऊ, ऋ.

[14] दृष्टानुग्राहिकभेदेन — अ; दृष्टशब्दानुश्रविकभेदेन — ए; शब्दानुश्रविकभेदेन — ऐ.

[15] शब्दादिविषयेषु — अ, आ, ई, उ, ए, ऐ.

[16] महान् मोहः — ऐ.

एवम् — 'तामिस्रशक्तिवशग' इत्यादि ।

> **तामिस्रशक्तिवशगो न च प्राणान्परित्यजेत् ॥१८१॥**
> **आशाशक्त्यावृतोऽत्यन्तं [1]तच्चैश्वर्यं [2]न पश्यति ।**
> **अथवाष्टगुणोपेतमैश्वर्यं [3]प्राप्य भोगभुक् ॥१८२॥**
> **[4]तुष्टिमायाति सहसा यावत्पश्यति [5]संक्षयम् ।**
> **[6]तस्माद्वियुज्यते [7]भोगाद्विनष्टोऽस्मीति च [8]ध्रुवम् ॥१८३॥**

[9]प्रागुक्तानां [10]दशानां शब्दादीनाम्, अष्टानां [11]चाणिमादीनां [12]यदा साधनान्[13]ष्ठानेनाप्यप्राप्तिं [14]पश्यति, प्राप्तानां वा [15]नाशं यतः । [16]ततो यः संतापः स तामिस्रोऽष्टादशविधः[17] ॥१८१–१८३॥

तथा भवत्यन्धतामिस्रः — 'बुभुक्षया' इत्यादि ।

> **बुभुक्षयाभिभूतस्य विश्वस्यापि तपस्विनः ।**
> **क्लेशेन महता प्राप्तं [18]भोक्ष्य इत्युद्यतस्य यत् ॥१८४॥**
> **दुःखं [19]तदपहारेण [20]नेप्सितं केन हेतुना ।**
> **कृतं तदन्ध[21]तामिस्रं [22]प्रभावेण बलीयसा ॥१८५॥**

[23]प्रागुक्तेषु [24]अष्टादशसु भोग्येष्वाहृतेष्वपि बलवतान्येन [25]योगिनापहारे सति [26]यद्दुःखमुत्पद्यते,

---

[1] तच्च धैर्यं — ऊ, ॠ.
[2] च — ओ.
[3] प्रत्यभोगभुक् — ॠ.
[4] कष्टमायाति — उ; हृष्टिमायाति — ऊ, ॠ; सृष्टिमायाति — ओ.
[5] संक्षयात् — ऊ.
[6] तस्मात्तद्व्यज्यते — उ.
[7] भोगाद्वा नष्टोऽस्मीति — मु, उ.
[8] ब्रुवन् — मु.
[9] मतङ्ग० विद्या० १७. १७७ उ० — १८१ पू०.
[10] 'दशानां' इत्यारभ्य 'प्राप्तानां' इत्यन्तं लुप्तम् — आ; दर्शनानां — ऐ.
[11] चशब्दो नास्ति — अ, ऊ, ॠ, ए.
[12] यथा — अ, ई, उ, ए, ऐ.
[13] ०ष्ठानेनात्राप्यप्राप्तिं — अ, इ, उ; ०ष्ठानेनाप्यप्राप्तं — ऐ.
[14] पश्यन्ति — अ, ई, उ, ऊ, ए, ऐ.
[15] नाशमात्मनश्च मरणं ततो — ऊ, ॠ.
[16] 'ततः' इति नास्ति — अ, आ, ई, उ, ऐ; 'ततः यः' इति नास्ति — ए.
[17] ०ऽष्टादशधा — ऊ, ॠ.
[18] भोक्ष्यामित्युद्यतस्य — मु, उ, ओ.
[19] तत्त्वपहारेण — ॠ.
[20] नेप्ससे केन — मु, उ; नेच्छसे केन — ऊ, ॠ; नोपसे केन — ओ.
[21] ०तामिस्रप्रभावेन — ऊ, ॠ.
[22] प्रभावेन — मु; स्वभावेन — ओ.
[23] मतङ्ग० विद्या० १७. १८१ उ० — १८३.
[24] अष्टादशविषयेषु शब्दादि बलवता — अ; अष्टादशविधेषु शब्दादिषु बलवता — आ, ई, उ, ए, ऐ.
[25] योगिना संहृतेषु सत्सु — अ, आ, ई, उ, ए; योगिना संहारे सति — ऐ.
[26] यदि दुःखमुपपद्यते — अ; यद्दुःखमुपपद्यते — आ, ई, उ, ए, ऐ.

मोऽष्टादश[1]विधोऽन्धतामिस्र इति। एवं [2]प्रागुक्तः पञ्चविधो विपर्ययोऽत्रावान्तरभेदेन [3]चतुष्षष्टिविधो [4]व्याख्यातः ॥१८४–१८५॥

एतैश्चाज्ञानभेदैरीश्वरः कलादियुक्तमेव पुरुषं योजयति। न तु प्रलयाकलं विज्ञानकेवलं वेत्युच्यते — 'कर्माशयमनुप्राप्य' इत्यादि।

> **कर्माशयमनुप्राप्य रोधयित्री [5]महात्मनः।**
> **[6]शक्ती रोधयितुं शक्ता नेच्छन्तमपि पुद्गलम् ॥१८६॥**

[7]बौद्धत्वादेषामज्ञानानां, बुद्ध्यादीनां च कर्मसामर्थ्येनैव भगवता पुंसंबन्धस्य कृतत्वात्, [8]प्रलयकेवलादेश्च बुद्ध्याद्यभावान्नानेन संबन्धः। अपि तु सकलस्यैव ॥१८६॥

तथा हि — 'कश्चिद्' इत्यादि।

> **कश्चिद्भोगाभिलाषेण कश्चित्स्नेहेन [9]वा पुनः।**
> **कश्चिद्दाक्षिण्यसामर्थ्याज्जानन्नपि [10]हि धार्यते ॥१८७॥**
> **कश्चिदज्ञानमोहेन कश्चित्कालानुरोधतः।**
> **कश्चित्कारणवैकल्या[11]द्धार्यते च जगत्सदा ॥१८८॥**

**कश्चित्कालानुरोधतः** इति यश्चक्रभ्रमवद्धृतशरीरः [12]प्रोक्तः[13] ॥१८७–१८८॥

[14]अथ [15]किमर्थमज्ञानयोगेन [16]भगवता जगदेतद्धार्यम्[17]। न पुनः [18]प्रलयाद्यवस्थायामिव [19]तदयोगेनेत्युच्यते[20] —'निःश्रेयस' इत्यादि।

---

[1] ०विधेऽन्ध० — ई, उ.

[2] मतङ्ग० विद्या० १७. १४२ उ० — १४६ वृत्तौ ; प्रागुक्तेः — ऊ.

[3] मतङ्ग० विद्या० १७. १७५ उ० — १८५ श्लोकेषु तमो दशविधम्, मोहोऽष्टविधः, महामोहो दशविधः, तामिस्रोऽष्टादशविधः, अन्धतामिस्रोऽष्टादशविधः इति (१०+८,+ १० + १८ + १८ = ६४) चतुष्षष्टिविधः प्रोक्तः।

[4] विख्यातः — अ, आ, ई, उ, ऊ, ए, ऐ.

[5] तदात्मनः — उ.

[6] शक्ति रोधयितुं शक्तो नेच्छन्नपि हि पुद्गलः—उ.

[7] 'बौद्धत्वाद्' इत्यारभ्य 'कृतत्वात्' इत्यन्तस्य स्थाने 'आशयपरिपाके वासनात्मनामेव कर्मणां न तु मायात्मन्यपि प्रध्वंसकृतत्वात्' इति दृश्यते — अ; आशयपरिपाको बुद्धौ वासनात्मनामेव कर्मणां न तु मायात्मन्यपि प्रध्वंसकृतत्वात्' इति दृश्यते—आ, ई, उ, ए, ऐ.

[8] प्रलयकैवल्यादेश्च — ऊ, ॠ.

[9] मानवः — ऊ, ॠ.

[10] न धार्यते — ऊ, ॠ.

[11] ०द्धार्यमेव जगत्सदा — उ; ०द्धार्यतैवं जगत्सदा — ऊ, ॠ.

[12] मतङ्ग० विद्या० २. १–२; ७. ६० उ०– ६२; १०. ३० वृत्तौ।

[13] अत्र इतिशब्दोऽधिकः — आ.

[14] 'अथ' इति नास्ति — अ, आ, ई, उ, ए, ऐ.

[15] किमर्थं ज्ञानयोगेन — अ.

[16] भवता — ई, उ; विभवतो — ऐ.

[17] जगद्धार्यते — अ, आ, ई, उ, ए, ऐ.

[18] 'प्रलयाद्यवस्थायामिव' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[19] तद्वियोगेन–अ, आ, ई, उ, ए; तस्य योगेन–ऐ.

[20] 'इत्युच्यते' इति नास्ति — अ, आ, ई, उ, ए, ऐ.

**[1]निःश्रेयसपद[2]प्राप्त्यै मुक्त्वैकं [3]परमेष्ठिनः ।**
**[4]प्रसादं मुनिशार्दूल [5]एवं मे निश्चिता मतिः ॥१८९॥**

[6]"नामिश्रं परिणमते" [7]इति न्यायेन[8] [9]मायीयकार्मसंबद्धस्य मलस्य परिपाकासंभवात्, [10]तत्परिपाकं विना [11]च [12]निःश्रेयसानुपपत्तेरित्युक्तत्वात्[13], [14]परमेश्वरानुग्रहं वर्जयित्वा [15]सर्वेणैतदेवं जगज्जन्म[16]वज्जन्तुचक्रमधिकारिणा धार्यम् । अन्यथा [17]मोक्षासंभवात् । विज्ञान[18]केवलावस्थायां मायेयकार्मानाश्रितत्वेऽपि मलस्य तत्कृतसंस्कारमिश्रत्वात् [19]परिणमतो [20]निःश्रेयससिद्धिरिति **मे निश्चिता मतिः** [21]इत्येवमेवैतदित्यर्थः ॥१८९॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय [22]व्याख्येयस्य चोपक्रमाय श्लोकः — 'बुद्धिर्गौणी' इत्यादि ।

**बुद्धिर्गौणी प्रवृत्ता त्रिगुण[23]गुणमयोद्गारभारं वहन्ती**
**वीर्येणा[24]त्युल्बणेयं जगदिदमखिलं [25]भावयन्त्यात्मवृत्त्या ।**
**सेयं संक्षेप[26]युक्त्या विवृतगुणगणाकीर्ण[27]संपद्विभक्ता**
**कारो नाम्नापरोऽयं [28]स्वविभवविमलानुक्रमेणैव [29]वाच्यः ॥१९०॥**

गुणानां संबन्धिनी येयं **बुद्धिः** [30]**पुंसां प्रवृत्ता** । या च त्रयाणां सत्त्वादिगुणानां ये [31]गुणा धर्मादयो भावाः, तन्मयो[32] य उद्गारः प्रसरः प्रत्ययात्मकः, स एव [33]भारोऽत्यन्त[34]बहुत्वात्, तं

---

[1] नैःश्रेयस० — ऊ, ऋ.
[2] ०प्राप्तैर्मुक्त्वैकं — उ.
[3] पारमेश्वरम् — ऊ, ऋ.
[4] प्रसादो — उ, ओ.
[5] इति मे — उ, ऊ, ऋ, ओ.
[6] आकरो न लभ्यते ।
[7] इतिशब्दो नास्ति — अ.
[8] अत्र 'न' इत्यधिकम् — अ, आ, ई, उ, ए.
[9] 'मायीयकार्मासंबद्धस्य' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.
[10] 'तत्' इति नास्ति — अ, आ.
[11] चशब्दो नास्ति — ऊ, ऋ.
[12] नैश्रेःयसानुपपत्तेरुक्तत्वात् — ऊ, ऋ.
[13] मतङ्ग० विद्या० १०. २५ उ० वृत्तौ ।
[14] महेश्वरानुग्रहं — ऊ, ऋ.
[15] 'सर्वेणैतदेवं' इत्यस्य स्थाने 'नैतदेवं' इति दृश्यते —अ, ऐ; 'नैतदेव' इति दृश्यते—आ, ई, उ, ए.
[16] ०वर्जं तु चक्रम् — अ, ऊ, ऋ, ए.
[17] मोक्षाभावात् —ऊ, ऋ; मोक्षसंभवात् —ऐ.
[18] कैवल्यावस्थायास्तु मायीयकर्ममिश्रत्वेऽपि — ऊ, ऋ; केवलावस्थाया तन्मायेयकर्मामिश्रितत्वेऽपि — ऐ.
[19] परिणामतो — अ, आ, ई, उ, ए.
[20] निःश्रेयस्सिद्धिरिति — अ, आ, ई, उ, ऐ; निःश्रेयसा सिद्धिरिति — ऊ, ऋ.
[21] इत्येवमेतदित्यर्थः — अ, आ, ई, उ, ए, ऐ.
[22] व्याख्येयस्योपक्रमाय च श्लोकः—अ, आ, ई, उ.
[23] ०गुणमयंभावगारं वहन्ती — ऊ, ऋ.
[24] ०त्युल्बणैषा जगदिदम् — मु, उ, ओ.
[25] भावयत्यात्म० — ऊ, ऋ, ओ.
[26] ०वृत्त्या — मु.
[27] ०संपद्धि कारः कालेनाप्तोऽपरोऽयं — उ.
[28] सुविभवविमलोऽनु० — ऊ, ऋ.
[29] वाच्या — उ, ऊ, ऋ.
[30] पुंसः — अ, आ, ई, उ, ए, ऐ.
[31] गुणधर्मादयः — ऊ.
[32] अत्र नशब्दोऽधिकः — ए.
[33] भारो बहुत्वात् — ऐ.
[34] बहुधा कृतं — ए.

[1]वहन्ती प्रवृत्ता । [2]**सा च इयं** [3]**बीर्येणात्युल्बणा** [4]या त्रिरूपमपि बाह्यं वस्तु बुद्धिः स्ववासना-वशात्[5] सुखात्मना दुःखरूपेण [6]मोहस्वभावतया चैकरूपं [7]दर्शयतीति[8]। यदाहुः[9] —

"कुणपः कामिनी भक्ष्य इति तिस्रो [10]विकल्पनाः।
परिव्राट्कामुक[11]शुनां भेदेनैकत्र संस्थिताः ।।" इति।

या चेयम् [12]**आत्मवृत्त्या** [13]अध्यवसायात्मकतया **जगदिदमखिलं** [14]प्रकाशयन्ती प्रवृत्ता। अन्यथा जगतामध्यवसायाभावादित्युक्तम्[15]। किं च [16]विवृतो [17]निश्चितो गुणगणो भावप्रत्ययात्मको [18]**यः** प्रवर्तने, तेन आकीर्णा व्याप्ता संपद् यस्याः, **सेयं** [19]**संक्षेपयुक्त्या विभक्ता** इति व्याख्यातार्थोपसंहारः।

अथ व्याख्येयोपक्रमः — [20]**कार इति** भीमसेनो भीम इतिवदहंकार एव [21]कारो **नाम्ना**। अपरस्य [22]शुद्धविद्यात्मनः कलादेरिवास्याप्युक्तत्वात् सः **अयं** स्वेन [23]विभवेन चित्तादिना षोडशकेन [24]विकारेण विमलेन [25]प्रमाणसिद्धतया [26]संशयादिरहितेन **वाच्यः**। [27]ततश्च, अहंकारोऽत्र[28] **मनोबुद्धीन्द्रियकर्मेन्द्रिय**[29]**तन्मात्रभेदैः सह** [30]वक्तव्यतया [31]प्रतिज्ञातः ।।१९०।।

[इति] श्री[32]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [33]मतङ्गवृत्तौ
[विद्यापादे] त्रिपर्वपदार्थे बुद्धितत्त्वप्रकरणं [सप्तदशं समाप्तम्]
**सप्तदशः पटलः**

---

[1] वहन्तीति प्रवृत्ता — अ, ए; वहन्ति प्रवृत्ता —आ, ई, उ, ऊ, ऋ, ऐ.
[2] या — ऊ, ऋ.
[3] वीर्येणात्युद्धता — ए.
[4] यत् — ऊ, ऋ.
[5] स्ववासनातः — अ, आ, ई, उ, ए, ऐ.
[6] हेयस्वभाव० — अ.
[7] दर्शयन्तीति — अ, ई, उ, ऐ.
[8] इतिशब्दो नास्ति — आ.
[9] अयं श्लोकः पूर्वार्धोत्तरार्धयोर्विपर्ययेण सर्वदर्शनसंग्रहे बौद्धदर्शनप्रस्तावे ६५ तमे पृष्ठे उद्धृतः।
[10] विकल्पिताः — ऋ.
[11] ०शुनामेकस्यां प्रमदातनौ — मुद्रित सर्वदर्शनसंग्रहपाठः।
[12] आत्मभुक्त्यनुव्यवसाया जगद् — ए; आत्मशक्त्याध्यवसायात्मिकया जगद् — ऐ.
[13] अध्यवसायात्मिकया जगद् — अ, आ, ई, उ.
[14] प्रकाशयन्तो — ऊ, ऋ.
[15] मतङ्ग० विद्या० १७. १, २ वृत्तौ।
[16] निवृत्तो — ए.
[17] निश्चितगुणगणो — ऊ, ऋ.
[18] यः पूर्वं तेन — ऊ, ऋ.
[19] संक्षेपमुक्त्वा विरक्तेति — ऋ.
[20] कारो नामेति — ऊ, ऋ.
[21] कारनाम्ना — आ, ई, उ; कारो नामा परः परस्य — ऊ, ऋ.
[22] शुद्धविद्यात्ममलादेरिव — अ.
[23] विभवेऽङ्गे निश्चिन्तादिना — ऐ.
[24] विकारेणावमलः प्रमाण० — ऊ, ऋ.
[25] प्राणसिद्धतया — अ.
[26] संशयादिरहितो वाच्यः — ऊ, ऋ; संशयादिभिरहितेन — ऐ.
[27] तत्र च — ए.
[28] 'अत्र' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[29] ०तन्मात्रैस्सह — ऊ, ऋ.
[30] व्यक्तव्यतया — ई, उ.
[31] प्रतिज्ञायते — ऊ, ऋ.
[32] 'भट्ट' इति नास्ति — अ, आ, ई, उ, ऐ.
[33] मतङ्गप्रवृत्तौ — ऋ.

# अष्टादशः पटलः

## अहंकारादिसप्तदशतत्त्वप्रकरणम्

**अथ [1]बुद्धेर्विकारो यः स्वभावाद्व्यतिरिच्यते ।**

**अथेति** बुद्धि[2]तत्त्वादनन्तरं **बुद्धेर्विकारो यः स्वभावाद्** [3]वक्ष्यमाणाद् [4]**व्यतिरिच्यते** । [5]स सर्वो व्यवहितोऽव्यवहितश्च [6]अहंकारमनोबुद्धीन्द्रियकर्मेन्द्रियतन्मात्र[7]लक्षणः सप्तदश[8]तत्त्वात्मकः प्रोच्यते इति पूर्वक्रियाभिसंबन्धः । तथा [9]चोपसंहारे भविष्यति[10] —

"तत्त्वं मया कारणकार्यभेदात् [11]सूक्ष्माक्षयुक्तं विधिनोपदिष्टम्" इति ।

[12]एवं च [13]प्रतिज्ञातार्थकथनादत्र न दोष इति । पदार्थादिसंबन्धश्चात्र [14]पूर्ववद्वाच्यः । [15]वाक्यात्मकस्तु संबन्धः [16]"तज्ज्ञानं [17]गर्व उच्यते" इत्युक्तम् ॥

कश्चासौ विकार इति । तत्रोच्यत इति — 'स्वभाव' इत्यादि ।

**[18]स्वभावोऽध्यवसायाख्यः प्रकृतिः सोच्यते यतः ॥१॥**
**[19]विकारश्चाभि[20]मानाख्यस्तच्च तत्त्वमनिन्दितम् ।**
**[21]स्वसूतेरुच्यते योनिः कारणं तत्त्वसङ्घराट् ॥२॥**

तत्र **अध्यवसायाख्यः** [22]**यतः स्वभावः**, सः बुद्धेरव्यतिरेकात्तद्विकाराणां **प्रकृतिरुच्यते । अभिमानो**ऽहंकारः, तदाख्यो यो **विकारः, तत् तत्त्वमनिन्दितं** स्वात्मपरामर्शरूपत्वात् स्वप्रसूतेः **योनिः**

---

[1] बुद्धिविकारो — ऊ, ॠ.
[2] ०तत्त्वप्रकरणानन्तरं — आ, ई.
[3] मतङ्ग० विद्या० १८. १ उ०, २ वृत्तौ ।
[4] अतिरिच्यते — ए.
[5] 'स' इति नास्ति — आ, इ, ऐ.
[6] अहंकारे मनो० — आ, इ.
[7] ०लक्षणसप्तदश० — अ, आ, इ, ई, उ, ए, ऐ.
[8] ०तत्त्वात्मकोऽत्रोच्यते — ऊ, ॠ.
[9] चोपसंहारो — ए.
[10] मतङ्ग० विद्या० १८, ११६ पू०.
[11] सूक्ष्मार्थयुक्तां — आ, ई, उ; सूक्ष्मार्थयुक्त्या — इ; सूक्ष्माक्षियुक्तं — ए.
[12] 'एवं च प्रतिज्ञातार्थ' इत्यारभ्य 'पूर्ववद्वाच्यः' इत्यस्य स्थाने 'एवं च प्रतिज्ञा' इत्येतावदेव दृश्यते — ऐ.
[13] मतङ्ग० विद्या० १७. १९० तमश्लोके ।
[14] तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत् ।
[15] 'वाक्यात्मकस्तु' इत्यारभ्य ३७उ०–३९ वृत्तौ 'यदाहुरायुर्वेदप्रयोग' इत्यन्तो ग्रन्थः ऊ, ॠ कोशयोरेवोपलभ्यते । अत्र विषये यद्यपि ऐ कोशे वृत्तिरुपलभ्यते सा त्वन्यादृशीति नात्रोपयुक्ता ।
[16] मतङ्ग० विद्या० १७. ५७ उ०
[17] गार्वमुच्यते — ऊ; गर्वमुच्यते — ॠ.
[18] स्वभावाध्यव० — उ.
[19] विकाराश्चाभि० — ऊ, ॠ.
[20] ०मानाख्यातच्च — ॠ; ०मानाख्यं तच्च — ओ.
[21] स्वसूतिरुच्यते — ऊ, ॠ.
[22] 'यतः' इति नास्ति — ॠ.

**सोच्यते**। ततश्च तदहंकाराख्यं कारणं स्वप्रसूत्यात्मना चित्तादितत्त्वसमूहेन राजत इति तथाभूतमेवात्रोच्यत इति ॥१–२॥

तथा हि — 'स्वाभिप्रायेण' इति।

**स्वाभिप्रायेण तीव्रेण विकिरत्यखिलं जगत्।**

स्वसामर्थ्येनैव [1]चित्तादिषोडशतत्त्वात्मकं **जगत् विकिरति** अधो निर्मिणोति। तेषां [2]वक्ष्यमाणनयेन कार्यत्वात् कारणं तदहंकारात्मकं तत्त्वमित्यर्थः॥

अत एव — 'स त्रिधा' इत्यादि।

**स त्रिधा भेदमापन्नो यस्माद्गुणमयो महान्॥३॥**
**महतश्च समुद्भूतः"**

यतो [3]वक्ष्यमाणनयेन कार्यमेतत् सत्त्वरजस्तमोरूपं प्रतीयते। ततस्तत्कारणेन त्रिविधेन भाव्यम्। **महतश्च** बुद्धेः **समुद्भूतः** यतोऽहंकारः। महांश्च सत्त्वादिगुणमयः प्रोक्तः[4]। ततोऽप्यहंकारस्त्रिविधः सिद्धः। एवं कार्यादस्याहंकारस्य धर्मिणः स्वरूपमुक्तम्॥

अथ — 'वृत्तिभिः' इत्यादि।

**"वृत्तिभिस्तेऽधुनोच्यते[5]।**
**स्वरूपं धर्मिणस्तस्य धर्मो वृत्तं स्वकं ध्रुवम्॥४॥**
**अहमिति प्रत्ययो यः सर्वभूतेष्ववस्थितः।**

**अधुना** अहंप्रत्ययरूपाभिः सर्वपुरुषप्रत्यक्षसिद्धाभिः **वृत्तिभिः तस्य स्वरूपम् उच्यते**। यतस्तद्वृत्तमेवंविधवृत्तिलक्षणम्। अस्य **धर्मो ध्रुवम्** अविनाभावीति॥

ननु अहमिति प्रत्ययोऽध्यवसायरूपत्वादिन्द्रियार्थाध्यवसायाद्बुद्धेरेव वृत्तं भविष्यति। तत्किं व्यतिरिक्तेनाहंकारेण कल्पितेनेति। तत्रोच्यते — 'पञ्चधा' इत्यादि।

**पञ्चधा स तु विज्ञेयस्तन्त्रेऽस्मिन्कारणोदिते॥५॥**
**अहं श्रोता मयावश्यं श्रोतव्यं [6]गेयमादरात्।**
**तस्याः कमलनेत्रायाः [7]स्प्रष्टव्यं स्तनयुग्मकम्॥६॥**
**[8]स्प्रष्टाहमिति कोऽन्योऽस्ति तां समर्थोऽपगूहितुम्।**

---

[1] चित्तानि षोडश० — ऊ, ऋ.

[2] मतङ्ग० विद्या० १८. ४५ उ० — ५० श्लोकैर्वक्ष्यमाणप्रकारेण।

[3] मतङ्ग० विद्या० १८. ४४, ४५ पू० श्लोकयोर्वक्ष्यमाणप्रकारेण।

[4] मतङ्ग० विद्या० १५. १५.

[5] ०स्तेन चोच्यते — मु.

[6] योऽप्यमादरात् — ऊ, ऋ.

[7] स्पृष्टव्यम् — मु, ऋ, ओ.

[8] स्पृष्टाहमिति — मु.

[1]द्रष्टाहमिति भावेन [2]द्रष्टव्येन्दुमुखी मया ॥७॥
रसोऽवश्यं विलासिन्या मयास्वाद्यो ह्ययत्नतः[3] ।
यतः [4]स्वादयितात्यन्तमहमेव[5] किमद्भुतम् ॥८॥
[6]नीलोत्पलवहोच्छ्वासस्तन्वङ्ग्या यो मयाधुना ।
आघ्रेयः स किमाश्चर्यं यतो [7]जिघ्रामि तां त्वहम् ॥९॥
क्रियापञ्चकमन्यच्च[8] वृत्तमस्योदितं[9] ध्रुवम् ।
वक्तव्यमिति [10]तत्रैकमादेयमपरं मुने ॥१०॥
गन्तव्यं हि तृतीयं [11]स्यादुत्स्रष्टव्यमतः परम् ।
तथानन्दयितव्यं [12]स्यात्पञ्चमीयं क्रिया [13]मता ॥११॥

शब्दादिषु बुद्धीन्द्रियार्थपरामर्शपञ्चकादभेदेन, वचनादिकर्मेन्द्रिया[र्थ]परामर्शपञ्चकाच्च भेदेन यतोऽयं सर्वदैवाभिन्नरूपोऽहमिति ग्राहकाध्यवसायोऽत्यन्तविलक्षणो दृश्यते[14] तस्य । स सर्वदैवं-रूपस्तत्संवित्कर्तृविषयपरामर्शात्मक एव संविद्यत इति, ततोऽत्यन्तविलक्षणत्वान्न बुद्धेर्धर्मः । नापि [15]मनःप्रभृतीनां तत्त्वान्तराणाम् । तेषां कार्यान्तरैरेव सिद्धेर्वक्ष्यमाणत्वात्[16] । यस्य तु धर्मः स सिद्धोऽहंकार इति ॥ ५–११॥

अत एव — 'या सा' इत्यादि ।

[17]**या सा ज्ञान[18]क्रियासत्ता [19]भोक्तुरुन्मीलिता सती ।**
**लक्ष्यते मुनिशार्दूल वृत्तैरेभिः स्वकैः स्वकैः ॥१२॥**
**अहंकार[20]समायोगाज्ज्ञानसत्ता विकासते ।**

**या सा** [21]कला[दि]भिर्मलनिवृत्त्यादिना योग्यतां [22]प्रापिता **सती** पुंसो **ज्ञानक्रियासत्ता** बुद्धि-

---

[1] दृष्टाहमिति —मु.
[2] दृष्टव्येन्दु० — मु.
[3] ०स्वाद्योऽप्रयत्नतः — मु, ओ.
[4] स्वदयिता० — ऊ, ॠ.
[5] ०मेवं — मु.
[6] नीलोत्पलनिभश्चास्यास्तन्वङ्ग्या — मु, ओ.
[7] जिघ्रयता ह्यहम्—ऊ; जिघ्रयिता ह्यहम्—ॠ.
[8] ०मन्यस्य — मु.
[9] ०स्योचितं — मु, ओ.
[10] तत्रैकं क्रमादेयं परं — मु; तत्रैकमादेयं परमं — ओ.
[11] स्यादुत्सृष्टव्य० — मु.
[12] स्यात्पञ्चमेयं — ओ.
[13] मते — मु, ओ.
[14] अत्र 'ततो न बुद्धेर्धर्मः' इत्यधिकम्—ऊ, ॠ.
[15] मनःप्रवृत्तीनां — ऊ, ॠ.
[16] मतङ्ग० विद्या० १८. १९ उ० — २३; ५६ उ० — ७९ पू० श्लोकेषु बुद्धीन्द्रियकर्मेन्द्रियाणां स्वस्वासाधारणकार्यतया सिद्धिः, तथा ८०–८२ श्लोकेषु मनसः संकल्पेन सिद्धिः, तथा १०५ पूर्वार्धे तन्मात्राणां स्वकार्यतया सिद्धिश्च वक्ष्यते। एवं पञ्चभूतानां स्वकार्यतया सिद्धिः तत्तत्प्रकरणेषु वक्ष्यते ।
[17] यासौ — ओ.
[18] ०क्रिया शक्ता—मु; ०क्रिया शाक्ता — ओ.
[19] भोक्तुः सोन्मीलिता — मु, ओ.
[20] ०समायोगज्ञानसत्ता० — मु, ओ.
[21] कलाभिर्मलविवृत्त्यादिना — उ; कालाभिर्मलविवृत्त्यादिना — ॠ.
[22] प्राप्यता — ॠ.

मनोभ्यां बुद्धीन्द्रियकर्मेन्द्रियैश्चोन्मील्यते, सैवाहंकारवृत्तैः प्रतिपुरुषभिन्नैरहमित्यध्यवसायात्मकैर्लक्ष्यते । यतोऽहंकारपरामृष्टा ज्ञानशक्तिरपि निश्चयमेति । अन्यथा गच्छतस्तृणादिज्ञानस्येव तस्या अपि सद्भावासिद्धेरित्युक्तं [1]प्राक् ॥

यद्येवं सर्वदा स्वापावस्थास्वपि कथं सा तेन न परामृश्यत इति । तत्रोच्यते — 'सत्त्वेन' इत्यादि ।

**सत्त्वेनोन्मीलिता क्षिप्रं [2]रजश्चाश्रित्य वेगतः ॥१३॥**
**शब्दादि[3]विषयान्गृह्य तमसा सा निवर्तते ।**

[4]रजःसमाश्रितेन [5]सत्त्वेनाहंकारः, तेन शब्दादिवस्तुग्रहणनिमित्तं जाग्रदाद्यवस्थासु सा प्रोन्मील्यते। यदा त्वकस्माच्छब्दादिवस्तूनि संगृह्य निवर्तते, अहंकारस्य [6]त्रैगुण्येनोक्तत्वात्, तदानीं तमोवृत्तेः प्रसर इति [न] सर्वदा तत्परामर्शात्मिकत्वमिति । एतच्च स्वप्नप्रकरणे [7]स्फुटयिष्यतीति ॥

यथैव च ज्ञानसत्ता प्रतिपादिता — 'क्रियासत्ता तथैव' इत्यादि ।

**क्रियासत्ता [8]तथैव [9]स्याद्रागादिभिरनिन्दिता ॥१४॥**
**गुणाधार[10]समायोगादहंकारेण सादरम् ।**
**विकरोति मुनिव्याघ्र कर्तृत्वेन यशस्विनी ॥१५॥**

सापि ह्यहंकारगतेन रजःसमाश्रितेन सत्त्वेन कार्यनिमित्तं जाग्रदाद्यवस्थासून्मील्यते । कदाचित् त्वहंकारगतस्य तमसः प्रसरात् सुषुप्तावस्थायां सापि न व्यज्यत इति । सा च अहं कर्तेत्येवं[11]रूपेण परामृष्टा सती, क्रियाशक्त्यात्मनो गुणस्य योऽसावाधारः सत्तालक्षणः, [12]वक्ष्यमाणकर्मेन्द्रियलक्षणश्च, तत्समायोगात् कार्यं विशेषेण करोति ॥१४–१५॥

तथा हि — 'मयैषा' इत्यादि ।

**[13]मयैषा महिषी भद्रा ममैतद्विपुलं पुरम् ।**
**[14]मद्रत्नं प्रतिगृह्णीष्व मत्तः शीघ्रतरो मृगः ॥१६॥**
**मां कश्चिन्न विजानाति [15]नास्ति मे निश्चितं मनः ।**

---

[1] मतङ्ग० विद्या० १०. ६ — १३ पू० वृत्तौ ।
[2] पुनश्चावृत्यवेगतः — ऊ, ऋ.
[3] विषयान्प्राप्य — मु, ओ.
[4] रजसः समाश्रितेन — ऊ, ऋ.
[5] सत्त्वेनाहंकारयते ना शब्दादि० — ऋ.
[6] मतङ्ग० विद्या० १८. ३ उ०, ४ पू० वृत्तौ ।
[7] मतङ्ग० विद्या० १८. १४ उ०, १५, २४–२६ पू० वृत्तौ ।
[8] तथैवं — मु, ओ.
[9] स्यात्पाशादिभि० — मु; स्याद्यागादिभि० — ऊ, ऋ.
[10] ०समायोगाद्गर्वमाश्रित्य सादरम् — ऊ, ऋ.
[11] ०गर्वेण — ऋ.
[12] मतङ्ग० विद्या० १८. २२, २३.
[13] ममैषा — मु, ओ.
[14] मद्दत्तं प्रति० — मु, ऊ, ऋ.
[15] इति मे निश्चिता मतिः ऊ, ऋ.

**तुष्टे मयि न भेतव्यं नाहं गच्छामि [1]सागरम् ॥१७॥**
**अस्मभ्यं [2]पृथुवासांसि [3]ह्येतद्भावाष्टकं मतम् ।**

**भावः** क्रिया, तस्य **अष्टकम्** आमन्त्रणविभक्तिसहितेन प्रथमादिविभक्तिसप्तकेन प्रतिपाद्यम् । यदेतत् तत्क्रियाशक्तिकार्यस्यैव [4]विशेषणकारणमित्यर्थः ॥

यथा चाहंकारस्य त्रैगुण्याद्वृत्तिषु वैचित्र्यमुक्तम् । एवं कार्ये[ष्वपी]त्युच्यते — 'सत्त्वेन' इत्यादि ।

**[5]सत्त्वेनापूरितस्यास्य [6]व्यज्यते निर्मलं मनः ॥१८॥**
**इन्द्रियार्थेषु पाटव्यं तच्च [7]गर्वात्प्रवर्तते ।**

अहंकारात्मनः कारणस्य **सत्त्वेनापूरितस्य** सतः कार्यमपि [8]वक्ष्यमाणसंकल्पवृत्ति **मनो निर्मलं** भवति इन्द्रियाण्येव [9]अर्थ्यन्ते भोगाय पुरुषेणेत्यर्थः । तेषु अहंकारकार्येषु तदानीं सत्त्वात् पूरात् पटुत्वमुपजायते । तच्च स्ववृत्तिभिरेव तेषां सिद्धमिति ॥

बुद्धीन्द्रियाणां तावद्वृत्तयः कथ्यन्ते — 'विस्पष्टं' इत्यादि ।

**विस्पष्टं शब्दविषयं श्रोत्रवृत्तमुदाहृतम् ॥१९॥**
**[10]त्वचश्च स्पर्शनं वृत्तं [11]चक्षुषश्चापि दर्शनम् ।**
**पाटवं [12]स्वादने ज्ञेयं जिह्वाया वृत्तमेव तत् ॥२०॥**
**[13]घ्राणस्याघ्राणनं वृत्तं [14]पञ्चकं यत्सुनिर्मलम् ।**
**ज्ञानशक्तिबलोपेतं पाटवं [15]स्यात्स्वकं स्वकम् ॥२१॥**

कर्मेन्द्रियाणामपि — 'वक्तव्यपाटवं' इत्यादि ।

**[16]वक्तव्यपाटवं वाचो दानादानं च [17]हस्तयोः ।**
**गमनं [18]पादयोर्ज्ञेयं पायोरुत्सर्जनं [19]मतम् ॥२२॥**
**[20]आनन्दश्चाप्युपस्थस्य [21]स्वकं वृत्तमुदाहृतम् ।**
**क्रियाशक्तिबलोपेतं पञ्चकं स्यात्सुनिर्मलम् ॥२३॥**

---

[1] सादरम् — ऊ, ऋ.
[2] यच्च वासांसि — ऊ. ऋ.
[3] एतद्भावाष्टकं — ऊ, ऋ, ओ.
[4] विशेषणकरण० — ऊ.
[5] सत्त्वेन पूरित० — ओ.
[6] व्यक्त्या ते निर्मलं — ऊ, ऋ.
[7] गव्यात्प्रवर्तते — मु.
[8] मतङ्ग० विद्या० १८. ८०–८२.
[9] अत्यन्ते — ऊ.
[10] त्वचः संस्पर्शनं — ऊ, ऋ.
[11] चक्षुषा चापि — ऋ; चाक्षुषं चापि — ओ.
[12] रसने — ऊ, ऋ; रसनं — ओ.
[13] घ्राणस्य जिघ्रणं वृत्तं — ऊ. ऋ.
[14] पाटवं — ओ.
[15] च स्वकं — ऊ, ऋ.
[16] वक्तव्यं पाटवं — ऊ, ऋ.
[17] पाणयः — ओ.
[18] पादयोर्वृत्तं — ऊ, ऋ.
[19] महत् — ओ.
[20] पाटवं चाप्युपस्थस्य — मु, ओ.
[21] सुखं — मु, ओ.

यदा तु — 'तमसा' इत्यादि ।

**तमसा [1]भूरि संपृक्ता [2]नष्टसत्त्व[3]रजास्तथा ।**
**भोक्तुर्ज्ञान[4]क्रियासत्ता [5]प्रसुप्ता चेव लक्ष्यते ॥२४॥**
**तदा गर्वस्य माहात्म्यं [6]प्रध्वस्तकरणं शनैः ।**
**[7]चित्ते लीनं [8]करोत्यन्तर्दुःखमाशयजं पशोः ॥२५॥**
**[9]एषाशक्तिरियं ज्ञेया तस्या वक्ष्यामि लक्षणम् ।**

अभिभूतसत्त्वरजोवृत्तित्वादहंकारः [10]सम[भि]व्यक्ततमोवृत्तिरेव भवति । तदा सुषुप्तावस्थायां विनिवृत्ताहंकारममकारवृत्तिरेव संपद्यत इति सैषाहंकाराशक्तिरित्युक्तम् ॥

तदशक्त्यैव च मनसोऽप्यशक्तिरित्युच्यते — 'मनसोऽपाटवं' इत्यादि ।

**[11]मनसोऽपाटवं मौढ्यं [12]संकल्पस्याप्यपाटवम् ॥२६॥**
**[13]ध्वस्तं तत्तमसा यस्मात्तस्मान्मूढे तु नायके ।**
**[14]शेषो यः परिवारोऽस्य सोऽतिमूढतरस्तदा ॥२७॥**

तस्मिंश्च [15]वक्ष्यमाणनयेनेन्द्रियाणां **नायके** मनस्यशक्ते तत्परिवारोऽपीन्द्रिय[16]वर्गोऽशक्त एव भवति ॥२६–२७॥

'किं तु' इत्यादि ।

**किं तु स्वाशय[17]माहात्म्याद्भागशोऽवसरागतम्[18] ।**
**भोक्तव्यं [19]भोगिना यस्मात्तस्मात्सर्वं न सर्वदा ॥२८॥**
**न सर्वत्र क्वचित्किंचि[20]त्सर्वमेतत्क्वचित्क्वचित् ।**
**अपाटवमशक्त्याह्वं [21]ततो वक्ष्याम्यतः परम् ॥२९॥**

कर्माशयबलेन **भागशः** कस्मिंश्चिदवसरे **क्वचिच्च** देशे **किंचिदेव** पुरुषेण [22]**भोक्तव्यम्** उक्तम् । [न] **सर्वं सर्वत्र सर्वदा** वेति ॥२८–२९॥

---

[1] भूरियं पृक्ता — ऊ, ऋ.
[2] सत्त्वेन रजसा तथा — ऊ, ऋ.
[3] रजस्तथा — ओ.
[4] ०क्रिया शक्ता — मु, ओ.
[5] प्रसुप्तेवाभिलक्ष्यते — ऊ, ऋ; प्रसुप्ता इव लक्ष्यते — ओ.
[6] प्रध्वस्तं करणं — ओ.
[7] चितेर्लीनं — ऊ, ऋ; चितौ लीनं — ओ.
[8] करोत्यन्तं दुःख० — ओ.
[9] एषाशक्तिरिति ज्ञेया — मु.
[10] समुदृक्ततमो० — ऊ.
[11] मानसापाटवो — मु.
[12] संकल्पश्चाप्यपाटवम् — मु, ओ.
[13] ध्वस्तस्तत्तमसा — मु; प्रध्वस्ततमसा — मु० पाठान्तरम् ।
[14] शेषोऽयं — मु०.
[15] मतङ्ग० विद्या० १८.४९ उ०–५६ पू० वृत्तौ ।
[16] ०वर्गोऽशक्तिरेव भवति — ऋ.
[17] माहात्म्यात्कलातोऽवसरा० — ऊ, ऋ.
[18] ०गतः — मु, ओ.
[19] भोगिनो — मु, ओ.
[20] ०त्सर्वमेव क्वचि० — ऊ, ऋ.
[21] तत्ते वक्ष्या० — ऊ, ऋ.
[22] भोक्तव्यं वक्तुं सर्वं — ऊ, ऋ.

अथ कथं तदर्थत्वं तेषां भवतीत्युच्यते —'शिवशक्तिकरावेशात्' इत्यादि ।

**शिवशक्तिकरावेशाच्चलितस्याभवच्छनैः ।**
**रजः [1]प्रणष्टसत्त्वं स्यादतिरिक्तं तमोऽखिलम् ॥३०॥**
**तदा [2]सर्वपरीवारो न [3]क्वचित्स्वासु वृत्तिषु ।**
**प्रवर्तते मुनिव्याघ्र हतव्यापारगोचरः ॥३१॥**

ईश्वरशक्तिचोदनया **चलितस्य** अहंकारस्यैतद्भवति । तदानीं हि सत्त्वरजसोरभिभवस्योत्पादात् **तम** एवोद्रिक्तं वर्तत इत्यहंकारकार्यस्याशक्तिः प्रसरति ॥३०–३१॥

सा च मनसः [4]प्राक्प्रदर्शिता बुद्धीन्द्रियकर्मेन्द्रियाणामत्र निर्दिश्यते — 'श्रोत्रेन्द्रियस्य' इत्यादि।

**श्रोत्रेन्द्रियस्य [5]बाधिर्यं त्वचः [6]कौष्ठं प्रजायते ।**
**जायते चक्षुषोऽन्धत्वं [7]जिह्वाया जडता तथा ॥३२॥**
**[8]घ्राणेन्द्रियस्याघ्राणत्वं मौक्यं वागिन्द्रियस्य च[9] ।**
**[10]कुणित्वं हस्तयोर्ज्ञेयं पादयोः पङ्गुता [11]तथा ॥३३॥**
**[12]गुदावर्तः स्मृतः पायोरुपस्थस्याप्यथोच्यते ।**
**क्लैब्यमेषा[13] प्रवक्तव्या ह्यशक्तिर्मुनिपुङ्गव ॥३४॥**

सैषा सा **क्लब्यपर्यन्ता** [14]द्वादशविधात्राशक्तिर्योद्दिष्टा सा बुद्धयवसितैव पुंसो भोग्या भवतीति बुद्धिधर्मत्वेन प्राग् [15]बुद्धितत्त्वप्रकरणे दर्शितेत्यविरोधः ॥३२–३४॥

सा च — 'सर्वात्मना' इत्यादि ।

**सर्वात्मना [16]निषण्णेयं स्थावराणां [17]यतस्ततः ।**
**तमसोत्कृष्टवीर्येण योगेन कमलात्मनः ॥३५॥**
**[18]सिसृक्षोः [19]प्रथमं जाता मुख्यास्तेन प्रकीर्तिताः ।**

अशक्तिरियं तद्वचनप्रकारैः सर्वैः, सह बुद्ध्यशक्त्या [20]प्राक् प्रदर्शितया **स्थावराणां** प्रवर्तते । **यतः**, ते **प्रथममेव** वेधसा **तमसैव** निर्मिता इति ॥

---

[1] प्रणष्टं सत्त्वं — ऊ, ऋ.
[2] गर्वपरीवारो — मु, ओ.
[3] क्वचित्तासु — मु, ओ.
[4] मतङ्ग० विद्या० १८. २६ उ०, २७.
[5] काठिन्यं — मु.
[6] कौष्ठ्यं — मु, ओ.
[7] जिह्वायां — मु, ओ.
[8] घ्राणेन्द्रियस्य चाघ्रात्वं — मु, ओ.
[9] तु — ऊ, ऋ.
[10] कुणितं — ऋ.
[11] स्मृता — मु.
[12] गुदावर्तं स्मृतं — ऊ, ऋ.
[13] क्लैब्यमेषां — मु, उ.
[14] मतङ्ग० विद्या० १७. १५१ उ० – १५७ पू० वृत्तौ ।
[15] मतङ्ग० विद्या० १७. २ वृत्तौ ।
[16] निषण्णोऽयं — मु; विषण्णेयं — ऊ, ऋ, ओ.
[17] यतस्तु ते — ऊ, ऋ.
[18] विसृक्षोः — ओ.
[19] परमे — मु; प्रथमे — मु० पाठान्तरम्, ओ.
[20] मतङ्ग० विद्या० १७, १५३ उ० — १५७ पू० वृत्तौ ।

अत्र मतङ्गमुनिः — 'स्थावरान्' इत्यादि ।

**मतङ्ग उवाच —**

**[1]स्थावरांश्चेतनानेके [2]वदन्त्यन्येऽप्यचेतनान् ।।३६।।**
**[3]संशयाङ्कुरमेतद्धि छिन्धि ज्ञानासिना [4]प्रभो ।**

केचिदाहुरार्हताः — "चेतनास्तरवः सर्वत्वगपहरणे मरणाद् मेषादिवत्"। सौगतास्तु "अन्यदेवैतत् तरुत्वार्द्रशुष्कताद्यात्मकं स्वरूपम् । अन्यदेव च प्राणादिप्रवृत्तिनिवृत्त्यात्मकं जीवनमरणं चैतन्याव्यभिचारीति, ततो दृष्टान्ते सिद्धाविनाभावस्याप्यस्य सविशेषणस्य हेतोः साध्यधर्मिणि विशेष्यासिद्धत्वम्" इत्याहुः । एवं स्थावराणां चैतन्यविप्रतिपत्तौ सर्वात्मनेयमशक्तिर्निषण्णेति यदुक्तं तन्न [5]निश्चेतुं शक्यमिति प्रश्नार्थः ।।

उत्तरं च — 'ऋतुमद्भावसंयुक्ताः इत्यादि ।

**परमेश्वर उवाच —**

**ऋतुमद्भावसंयुक्ताः पादपास्तरवो [6]यतः ।।३७।।**
**पुष्ट्यर्थं स्वाभिलाषेण पिबन्त्यम्बु यतः क्षितौ ।**
**म्रियन्ते च निराहारास्तरवो [7]मूढशक्तयः ।।३८।।**
**अन्योन्यमुपकारेण जङ्गमाः स्थावरैः सह ।**
**लक्ष्यन्ते चेतना वृक्षा [8]द्रव्यलोभाच्च सादरम् ।।३९।।**

"[9]ऋतावुपेयात्स्त्रियं पुरुष" इति श्रुत्या ऋतुर्विद्यते येषां, ते ऋतुमन्तः स्त्रीपुरुषाः, तेषां भावः स्वभावो योऽन्योन्यपरिष्वङ्गादिना शरीरविकारपुलकादिजननात्मकः, तेन संयुक्ताः **यतस्तरवः** केचिद्दृश्यन्ते । यतश्चैते चेतनाः यत्र हि कामिनीपरिष्वङ्गादिना शरीरविकारोत्पादः [10]सचेतने यथा कामुके, [तथा] दृष्टश्च कामिनीपरिष्वङ्गगण्डूषपादाघातादिभिः कुरवकबकुलाशोकादीनां पुष्पादिविकारोत्पादः । ततो**ऽन्योन्यमुपकारेणानेन** स्त्र्यात्मकद्रव्यानुरागाच्च **जङ्गमाः** स्थावरा अपि, ते ताव**च्चेतना लक्ष्यन्ते** । तत्साधर्म्यात् सर्वे एव तरवश्चेतनाः सिद्धाः । ततो नाचेतना इति । यदाहुः[11] —

"कुरवक कुचाघातक्रीडासुखेन वियुज्यसे
बकुलविटपिन्स्मर्तव्यं ते मुखासवसेचनम् ।
चरणघटनाशून्यो यास्यस्यशोक सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ।।" इति ।

---

[1] स्थावरा श्चेतना ह्येके — ऊ, ऋ.
[2] वदन्त्यन्ये ह्यचेतनाः — ऊ, ऋ.
[3] संशयं कुरुते तद्धि — मु, ओ.
[4] विभो — ऊ, ऋ.
[5] निश्चितं — ऋ.
[6] यथा — ऊ.
[7] मूढचेतसः — मु, ओ.
[8] दृव्यलोभाच्च — मु; द्रव्ययोगाच्च—ऊ, ऋ.
[9] 'ऋतावुपेयात्' गौतमधर्मसूत्रम् १. ५. १.
[10] सचेतनो यथा कामुकः — ऊ, ऋ.
[11] शार्ङ्गधरपद्धतौ १२६९. इति सुभाषितरत्नभाण्डागारे १३२ तमे पृष्ठे अरिपलायनप्रकरणे १७ तमश्लोकत्वेनोद्धृतः ।

यतश्च सर्वे एव पादेन अम्बु पिबन्तः पादपाः पुष्टाः, तदभावे चापुष्टा दृश्यन्ते। ततोऽपि चेतनाः, मेषादिवत् ।

[1]ननु अन्यथासिद्धोऽयं हेतुः केशनखादिवत् । न हि केशनखादीनां चैतन्यमस्ति। यथा चाचैतन्येऽपि तेषां तदाश्रयचेतनशरीरोपकारकान्नपानोचितसद्भावासद्भावाभ्यां पुष्टिशोषौ [भवतः], [2]तथा पृथिव्यात्मनो महाभूतदेवताशरीरस्योदकाद्युपयोगसंभवासंभवाभ्यां तरुष्वचेतनेष्वपि पुष्टि-शोषौ भविष्यत इति । तदयुक्तम् । तेषां देवदारुघृतप्रयोगोपदिष्टस्य घृतपानाच्चैतन्याव्यभि-चारिणः कार्यस्यात्र हेतुभूतत्वात् । यदाहुरायुर्वेदप्रयोगनिपुणाः[3] —

"पीत्वा वसन्ते मूलेन यद्ग्रीष्मप्रावृषोर्वृतन् ।
स्वदेहे सुरवृक्षेण त्यक्तं शरदि यत्तथा ॥
देवदारुघृतं [4]तत्स्याद् [5]मन्दाग्नीनां रसायनम् ।" इत्यादि।

[6]न चैतत् केशनखादीनामचेतनानां दृष्टमिति नान्यथासिद्धता। [7]पर्णशाखादीनां तु केश-नखादि[8]साधर्म्याभ्युपगमादत्र न कश्चिद्दोष इति ॥३७–३९॥

चेतना अपि सन्तो नास्मदादिवदहंकार[9]वृत्तियुक्तास्तेऽनुमातुं शक्याः — 'किं तु' इत्यादि।

**[10]किं तु ते नानुमानेन [11]त्वहंकारेण संस्थिताः ।**
**प्रध्वस्तशक्तयस्तस्माल्लुप्तसंज्ञा निरिन्द्रियाः ॥४०॥**
**पापेन महता [12]विद्धास्तेऽत्यन्तं मूढचेतसः[13] ।**

[14]यतोऽत्यन्तपापयोगात् ते अहंकारादिसर्वेन्द्रियाशक्त्या व्याप्ताः, ततो [15]न अस्मदादिवदहंकार-वृत्तिः स्फुटैव तेषामनुमातुं [16]शक्या। तद्रूपस्यासिद्धत्वादिति ॥

तथा हि — 'अनुमानं' इत्यादि ।

**अनुमानं न सर्वत्र जङ्गमेष्वपि दृश्यते ॥४१॥**
**ब्रह्मादिस्थावरान्तानामन्योन्या[17]पेक्षयादरात् ।**
**न [18]च संदृश्यते ज्ञानं तस्मादनियमो [19]ह्ययम् ॥४२॥**

---

[1] न तु — ऊ, ऋ.
[2] तदा — ऊ, ऋ.
[3] आकरो न लभ्यते।
[4] तस्यां — ए; तस्या — ऐ.
[5] मन्दाग्निर्ना रसायनम् — अ, इ; मन्दा-ग्निना रसायनम् — आ, ई, उ, ए, ऐ.
[6] 'न च' इत्येतन्नास्ति — अ, आ, ई, उ.
[7] तृणशाकादीनां — ऊ, ऋ.
[8] ०साधर्म्याभ्युपगमा। तत्र न — इ; साध-र्म्याभ्युपगमेऽप्यत्र न — ऊ, ऋ.
[9] 'वृत्ति' इति नास्ति — अ, आ, ई, उ.
[10] किं च ते नानुमानेन — मु; किं तेऽग्नि-रनुमानेन — उ; किं चग्निरनुमानेन — उ० पाठान्तरम्; किं तु निरनुमानेन — ऊ; कं च ते नाणुमात्रेण — ओ.
[11] तेऽहंकारेण — ऊ, ऋ; अहंकारेण — उ, ओ.
[12] विद्धा यान्त्यन्ये मूढ० — मु, उ, ओ.
[13] ०चेतनाः — ओ.
[14] 'यतो' इत्यत्र 'धर्मो' इति दृश्यते — अ; 'ततो' इति दृश्यते — आ.
[15] नकारो नास्ति — इ.
[16] शक्त्या — इ; शक्याः — ऊ, ऋ.
[17] ०पेक्षमादरम् — ऊ, ऋ.
[18] स — ऊ, ऋ.
[19] ह्यहम् — ऊ, ऋ.

मनुष्याणामपि हि[१] बालवृद्धातुराणां परस्परापेक्षया अहंकारादिवृत्तिः, [२]**आदराद्** इति[३] [४]अत्यन्ततात्पर्येणापि [५]न [६]समानुमातुं [७]शक्या। [८]किमुत ब्रह्मादिस्थावरान्तानां [९]शक्येति। तस्मात् सर्वत्राहंकारादिवृत्त्या सदृशयैव भाव्यमिति नायं नियमः ॥४१–४२॥

एवं [१०]वृत्तिभिस्त्रिविधोऽहंकारः [११]प्रोक्तः। अधुना तत्त्वान्तरकारणत्वेन त्रिविध एवोच्यते — 'तत्त्वधर्मैः' इत्यादि।

**तत्त्वधर्मैस्त्रिधा तावदहंकारस्य सुव्रत ।**
**वैकारिकस्तैजसश्च[१२] [१३]भूतादिरिति [१४]चैव हि ॥४३॥**

[१५]**तत्त्वधर्मोऽहंकारस्य**[१६] [१७]दध्न इव रसः[१८] [१९]सारासाररूपतया विभिन्नकार्य[२०]जनकस्वभावो [२१]वैकारिकतैजसभूतादि[२२]भेदभिन्न इत्युच्यते ॥४३॥

यतः — 'सत्त्वेन' इत्यादि।

**सत्त्वेनोत्कृष्टवीर्येण गर्वो [२३]वैकारिकः स्थितः ।**
**रजसा भूरिसंपृक्तस्तैजसः परिकीर्तितः ॥४४॥**
**भूतादिस्तमसोत्कृष्टस्तेषां वक्ष्यामि वृत्तयः ।**

सत्त्वेनोत्कृष्टोऽहंकार[२४]भागो **वैकारिकः** [२५]उच्यते। [२६]रजसोत्कृष्टस्तु[२७] **तैजसः**। [२८]तमसो-

---

[१] हिशब्दो नास्ति — इ, ऊ, ॠ, ऐ.
[२] 'आदरादिति' इत्येतन्नास्ति — इ, ऊ, ॠ.
[३] इतिशब्दो नास्ति — अ.
[४] अत्यन्ताद्विपर्ययेणापि — इ.
[५] नकारो नास्ति — ऊ, ॠ.
[६] सानुमातुं — अ; सहननुमातुं — इ.
[७] शक्त्या — इ; शक्याः — ऐ.
[८] किमु ब्रह्मादि० — आ, इ, ई, उ, ऐ.
[९] अशक्येति — अ, आ, इ, ई, उ, ए, ऐ.
[१०] वृत्तिभिस्त्रिभिस्तोऽहंकारः — ए.
[११] प्रोक्तम् — इ.
[१२] ०स्तैजसश्चैव — ऊ, ॠ; ०स्तेजसश्च — ओ.
[१३] भूतादिरितरोऽपि च — ओ.
[१४] चोच्यते — ई, उ.
[१५] तत्त्वधर्म्यहंकारस्य — इ; भुवनधर्मोऽहंकारस्य — ऊ, ॠ.
[१६] 'अहंकारस्य' इत्यनन्तरं 'वक्ष्यमाण इति तावच्छब्दः एकस्यैव चाहंकारस्य' इत्येतदधिकम् — ऊ; 'वक्ष्यमाण इति भावशब्दः एकस्यैव चाहंकारस्य' इत्येतदधिकम् — ॠ.
[१७] दध्नरूपरसः — अ, आ; दध्न इव रसं — इ; दध्न इव सारं — ऊ, ॠ; दध्नैव रसः — ऐ.
[१८] 'रसः' इत्यनन्तरं 'सारासारं च वैकारिकादि' इत्यधिकम् — ऊ, ॠ.
[१९] सारसाररूपतया — आ; सारास्साररूपतया — इ; साररूपतया — ऐ.
[२०] ०जनकस्वभावे — इ; ०जनकः स्वभावो — ऊ, ॠ.
[२१] वै सात्त्विकतैजसः भूतादि० — इ; वैकाशिकतैजसः भूतादि — ए.
[२२] भेदेन भिन्न उच्यते — ऊ, ॠ; भेदः किं इत्युच्यते — ए.
[२३] वैकारिकस्थितिः — उ.
[२४] ०भोगो — इ, ऐ.
[२५] अत्र इतिशब्दोऽधिकः — ए.
[२६] रसोत्कृष्टस्तु — अ, ऐ.
[२७] तुशब्दो नास्ति — ॠ.
[२८] तामसोत्कृष्टस्तु — अ.

त्कृष्टस्तु [1]पुनः **भूतादिः** इति। [2]एतेषां त्रयाणामहंकाराणां [3]वक्ष्यन्ते वृत्तयः इति। वृत्तिशब्देनात्र कार्यमुच्यते। तस्याः [4]प्रथममेवोक्तत्वादिति॥

तत्र — 'रजस्तमोभ्यां' इत्यादि।

> **[5]रजस्तमोभ्यामाक्रम्य बलं सम्यक् प्रवर्तते ॥४५॥**
> **ईषद्रजःसमायोगाद्विकारैः [6]स्वैरनिन्दितः।**
> **वैकारिकोऽक्ष[7]सेनायाः कारणं योनिरुच्यते ॥४६॥**

इह हि सात्त्विकस्याहंकारस्य [8]"संक्षुब्धः कारणेच्छातः" इत्यादिना पश्चात् [9]कार्यजातं मनोबुद्धीन्द्रियात्मकं वक्ष्यतीति, अत्र राजस एवाहंकारो [10]यः तैजसशब्देन [11]प्रागुक्तः, स एव विकारप्रयोजनयोगाद् वैकारिकशब्देनोच्यते कर्मेन्द्रियसेनायाः कारणतया। तस्याः क्रियावत्त्वेन [12]रजःप्रधानत्वादित्यविरोधः ॥४५–४६॥

[13]भूतादेरपि कार्यमुच्यते — 'योनिस्तन्मात्रसंघस्य' इत्यादि।

> **योनिस्तन्मात्रसङ्घस्य यदा सम्यक् प्रवर्तते।**
> **[14]तमोबलं समाक्रम्य यथावन्मुनिपुङ्गव ॥४७॥**
> **रजसः [15]सह सत्त्वेन [16]किंचित्तमस ईरणात्।**

[17]नन्वहंकारस्य सत्त्वादिगुण[18]त्रयभेदेन [19]त्रैविध्यमुक्तम्। [20]किमर्थं पुनः प्रत्येकं गुणान्तरसांकर्यमुच्यत [21]इति। [22]अत्रोच्यते — 'अन्योन्यजनकाः' इत्यादि।

> **अन्योन्यजनकास्त्वेते जगत्यस्मिन्सितासिते ॥४८॥**
> **गुणागुणमयं सर्वं जगत्स्थावरजङ्गमम्।**

---

[1] 'पुनः' इति नास्ति — ऐ.
[2] 'एतेषां' इत्यस्य स्थाने 'एषां' इति दृश्यते —इ, ऋ, ए, ऐ.
[3] वक्ष्यामि — अ, आ, इ, ई, उ, ए, ऐ.
[4] मतङ्ग० विद्या० १८. ४–१८ पू०.
[5] तेजसस्तमसोरेकबलं — उ.
[6] स्वैरनिर्मितः — ऊ, ऋ.
[7] ०सेनायां — मु, उ, ओ.
[8] मतङ्ग० विद्या० १८. ४९ उ०, ५०.
[9] कार्यजातमनो० — अ, ए; कार्यं मनो० — आ, ई, उ; कार्यमात्मनो ब्रुद्धी० — इ.
[10] यः तैः प्रकाशकः स एव — इ.
[11] मतङ्ग० विद्या० १८. ४४ उ०.
[12] रजःप्रधानकादित्य० — इ; रजसा प्रधानत्वादित्य० — ऐ.
[13] भूतादिरपि — ऊ, ऋ.
[14] तदा बलं — मु, उ, ओ.
[15] सहजत्वेन — मु, उ.
[16] किंचिद्रणसमीरणात्—उ; किंचिद्रजसमीरणात् ऊ, ऋ; किंचित्तमसमीरणात् — ओ.
[17] 'नन्वहंकारस्य' इत्यारभ्य 'इत्येतदर्थमुच्यते' इत्यन्तं नास्ति — इ; नत्वहंकारस्य — ऊ.
[18] ०त्रयाभेदेन त्रैविध्यमुक्त्वा किं पुनः — ऊ.
[19] मतङ्ग० विद्या० १८. ३ वृत्तौ।
[20] किं पुनः — ऋ, ए.
[21] इतिशब्दो नास्ति — अ, आ, ई, उ, ए, ऐ.
[22] 'अत्रोच्यते' इति नास्ति — अ.

"[1]नामिश्रं परिणमते" इत्येतदर्थमुच्यते। यदाहुः सांख्याः[2] —

[3]"अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः।" [4]इति॥

अधुना सात्त्विकस्याहंकारस्य [5]पूर्वनिर्दिष्टस्यापि कार्यजातं [6]विचारप्रक्रमायैव पश्चादुच्यते — 'संक्षुब्धः' इत्यादि।

**संक्षुब्धः कारणेच्छातो यदा गर्वस्तु सात्त्विकः ॥४९॥**
**तदा [7]संवृष्य [8]ते द्वेऽन्ये मिथुनं संप्रवर्तते।**
**[9]मिथुनाज्जायते गर्वान्मनश्चैवोभयात्मकम् ॥५०॥**

**यदा** ईश्वरशक्त्या [10]**स सात्त्विकः** [11]अहंकारः क्षोभितो भवति, **तदा** असौ **ते द्वे** [12]**अन्ये** रजस्तमसी[13] कर्मभूते [14]**संवृष्य** [15]संपात्य, एकत्र नीत्वा **मिथुनं संप्रवर्तते**। तेन [16]रजस्तमोलक्षणेन [17]वस्तुनैकत्र नीतेन सह मिथुनीभवतीत्यर्थः। तस्माच्च [18]**मिथुनाद्** मनो बुद्धीन्द्रियवर्गश्च जायते। यथा च मनसः कार्यत्वमेव न नित्यता तथा [19]परमाणुकार्यत्व[20]साधनन्यायोऽस्यापि दर्शितः [21]**प्रागे**-वेति स एवानुसंधेयः। किं च जडत्वे सति करणत्वादिन्द्रियादिवदिति॥४९–५०॥

अथ मनसो [22]वक्ष्यमाणप्रमाणसिद्धस्य [23]स्वरूप[24]मुभयात्मकं यदत्रोक्तं [25]तत् तावदुच्यते — 'द्वे कोटी' इत्यादि।

**द्वे कोटी[26] [27]मनसः सिद्धे शुद्धाशुद्धा च [28]साधने।**

---

[1] आकरो न लभ्यते।
[2] सांख्यका० १२ उ०.
[3] अन्योन्याभिर्भवाश्रयजनन० — इ; अन्योन्याभिभवजनन० — ऋ.
[4] इत्यादि — अ, आ, ई, उ.
[5] मतङ्ग० विद्या० १८. ४४ पू०; पूर्वोक्तस्यापि — ऋ.
[6] अविकारप्रकामायैव — अ; विकारप्रकामायैव — आ, इ.
[7] संवुष्य — उ, ओ.
[8] ते त्वन्ये — ऊ, ऋ.
[9] मिथुनं जायते — मु, ओ.
[10] 'स' इति नास्ति — आ, इ, ऊ, ऋ, ए, ऐ.
[11] अहंकारकः — ए.
[12] 'अन्ये' इत्यत्र 'त्वन्ये' इति दृश्यते — ऊ.
[13] रजस्तमसि — ए; रजस्तमसः — ऐ.
[14] संघटचैकत्वं नीत्वा — ऊ, ऋ.
[15] संपाद्य — अ.
[16] रजस्तमसोर्लक्षणेन — अ, आ, ए.
[17] वस्तुनैकत्वात्तेन — इ; वस्तुनैकत्वान्नीतेन — ऐ; वस्तुनैकतां नीतेन — ऊ, ऋ.
[18] मिथुनात्मनो — इ, ऐ; मिथुनं मनो — ई, उ; मिथुनात्मनश्च शब्दाद्बुद्धीन्द्रिय० — ऊ, ऋ.
[19] परमाणुसाधनन्यायो — आ.
[20] ०साधनन्यायस्यापि प्रदर्शितः — इ; ०साधनाय न्यायः प्रदर्शितः — ऊ, ऋ; ०साधनन्यायोऽस्याः स प्रदर्शितः — ए.
[21] मतङ्ग० विद्या० ६. ४४ वृत्तौ।
[22] मतङ्ग० विद्या० १८. ८०–८२ वृत्तौ।
[23] 'स्वरूपं' इत्यत्र 'रूपं' इति दृश्यते — ए.
[24] ०मुभयात्मकवदत्रोक्तं — इ.
[25] 'तत्' इति नास्ति — अ.
[26] अत्र चशब्दोऽधिकः — उ.
[27] मनः सिद्धे — उ०; मनसः शुद्धे — उ० पाठान्तरम्; मनसा सिद्धे — ऋ.
[28] शासने — ऊ, ऋ.

कोटिरवस्था, यद्भविष्यति[1] "यास्य रागोज्झितावस्था" इति। [2]चशब्दात् [3]तृतीया कोटिर्वक्ष्यमाणा[4] ॥

[5]तत्राशुद्धा कोटिः — 'संकल्पेन' इत्यादि।

**संकल्पेन सरागेण स्फुरद्वीर्येण वेगवत् ॥५१॥**
**[6]विनिष्कृष्याक्षमार्गेण प्रेरयित्वा तदिन्द्रियम् ।**
**अर्थेन सह संयोज्य [7]सरागं च निवर्तते ॥५२॥**

संकल्पो हि इन्द्रियाधिष्ठानात्मको वृत्तिर्मनसः साधनं चेति [8]वक्ष्यामः। [9]तेन रागसहभाविना पुरुषं [10]**विनिष्कृष्य** इन्द्रियमार्गे **प्रेरयित्वा, इन्द्रियमर्थेन सह संयोज्य** [11]**सरागमेव** मनो निवर्तते। ततस्तस्य सा कोटिः संसारकारणत्वाच्चाशुद्धोच्यते ॥५१–५२॥

द्वितीया तु [12]कोटिः — 'यास्य' इत्यादि।

**[13]यास्य रागोज्झितावस्था मनसोऽतीव निर्मला ।**
**तया संयुज्यते [14]योगे परे संकल्पितात्मवान् ॥५३॥**

[15]**या** तु मोक्षसाधने योगादावस्यावधानात्मिकावस्था सा [16]रागोज्झितत्वाच्छुद्धा कोटिरुच्यते ॥५३॥

तृतीया [17]कोटिर्दृश्यते — 'शुद्धाशुद्ध' इत्यादि।

**[18]शुद्धाशुद्धविभागोऽन्यो [19]दिव्यभूतिप्रसाधने ।**
**येन संकल्प्य संकल्प्य [20]लक्ष्यमभ्यासतो भवेत् ॥५४॥**

संसारापेक्षया अशुद्धो, मुक्त्यपेक्षया [21]तु शुद्धो योऽवस्थाविशेषो मनसः [22]कालाग्नितः [23]कपालेश-

---

[1] मतङ्ग० विद्या० १८. ५३ पू०.
[2] 'चशब्दात् तृतीया' इत्यारभ्य ५८ उत्तरार्धपर्यन्तं लुप्तम् — ऊ, ऋ.
[3] मतङ्ग० विद्या० १८. ५४ वृत्तौ।
[4] 'वक्ष्यमाणा' इत्येतन्नास्ति — आ.
[5] 'तत्राशुद्धा कोटिः' इत्येतन्नास्ति — आ; तत्राशुद्धकोटिः — ए.
[6] विनिष्क्रम्याक्षिमार्गेण — मु; विनिष्कृष्याक्षिमार्गेण — उ.
[7] सरागश्च — उ.
[8] मतङ्ग० विद्या० १८. ८०–८२ वृत्तौ।
[9] तेन तयो राग० — इ; तेन मनो राग० — ऐ.
[10] विनिष्कृत्य — इ.
[11] रागमेव — अ.
[12] कोटी — ऐ.
[13] यस्य — ओ.
[14] रागः परे — उ.
[15] यातुर्मोक्ष० — इ; धातुर्मोक्ष० — ए.
[16] रोगोच्छ्रितत्वाच्छुद्धा० — अ.
[17] 'कोटिः' इति नास्ति — इ.
[18] शुद्धाशुद्धा विभागो — ओ.
[19] रुद्रभूति० — मु० पाठान्तरम्, उ.
[20] लक्षमभ्यासतो — मु, उ, ओ.
[21] त्वशुद्धो — अ, आ, इ, ई, उ, ऐ.
[22] कालाग्निरुद्रकपालेशादिरुद्रान्त० — इ,
[23] कपालेशादि शतरुद्रान्त० — ए, ऐ.

रुद्रान्तपदसिद्धिनिमित्तः। **येन** कारणेन [1]मनसैव [2]तल्लक्षणं [3]**संकल्प्य** भावनाभ्यासतः साक्षात्-कृत्वा [4]साधकेनासाद्यत इति ॥५४॥

अथ [5]करणान्तरेभ्योऽस्य विशेषः — 'तदासन्नतमं' इत्यादि।

**तदासन्नतमं चित्तमिन्द्रियेभ्योऽस्मितात्मनः[6]।**
**[7]येनात्मवर्तिना नित्यमभिमानेन गर्वितः ॥५५॥**
**बुद्धीन्द्रियाणामुत्पत्तिं येन बुध्यति [8]भोगभुक्।**

तन्मनोलक्षणं [9]करणम् **इन्द्रियेभ्योऽस्मितात्मनः** अहंकारस्य [10]संनिकृष्टतरं कर्तुः। यतो [11]**येन** मनसान्तरङ्गेण युक्तोऽहंकारवृत्त्या **गर्वितः** भवतीति[12]। इन्द्रियाणां च व्यापारं बुध्यते पुरुषः। न हि [13]निरवधानस्यात्मपरामर्शो, विषयपरामर्शो वा समुपपद्यत इत्युक्तम्[14]। [15]अवधानं नाम मनसो वृत्तिरिति वक्ष्यामः[16] ॥

एवं मनसो [17]विचित्रं स्वरूपमुक्तम्। अधुना बुद्धीन्द्रियाणामपि[18] श्रोत्रादिक्रमेणोच्यते — 'श्रोत्रं' इत्यादि।

**श्रोत्रं श्रवणधर्मित्वात्प्रतिगृह्णाति स्वोचितम् ॥५६॥**
**[19]विषयं शब्दनामानं व्यक्तं वाव्यक्तमेव वा।**
**तदध्यात्ममिति ख्यातं [20]श्रोतव्यमधिभूतता ॥५७॥**
**विहिता [21]कारणेनात्र [22]दिशस्तत्राधि[23]देवताः।**

**श्रोत्रं** तावच्छ्रवणस्वभावत्वादेव [24]शब्दं **व्यक्तम्** अन्तिमवर्णपदाद्यात्मक[25]माकाशीयं गृह्णाति। [26]यदाहुः[27] —

---

[1] 'मनसैव तल्लक्षणं' इति नास्ति — ए.
[2] तत्तल्लक्षणं — आ, इ; तत्तल्लक्षं — ई, उ; तत्तल्लक्ष्यसंकल्पभावना० — ऐ.
[3] संकल्पभावनाभ्यासतः — अ, आ, इ, ई, उ, ए.
[4] साधकेनासाध्यत इति — ए; साधकेन साद्यते इति — ऐ.
[5] कारणान्तरेभ्यो — अ, ई, उ, ऐ.
[6] ०ऽस्मितात्मना — उ.
[7] तेनात्मवर्तिना — ओ.
[8] भोगभृत् — उ.
[9] कारणं — आ.
[10] उत्कृष्टतरं — इ; 'संनिकृष्टतरं कर्तुः' इति नास्ति — ए.
[11] 'येन' इत्यत्र 'यो' इति दृश्यते — अ; 'तेन' इति दृश्यते — इ, ऐ.
[12] इतिशब्दो नास्ति — इ, ऐ.
[13] निरवस्थानात्तस्यात्मनः परामर्शो — ऐ.
[14] मतङ्ग० विद्या० १०. ६–१३ पू० वृत्तौ।
[15] अथवा मनसो — इ.
[16] मतङ्ग० विद्या० १८. ८०–८२ वृत्तौ।
[17] विचित्रस्वरूप० — आ, ई, उ.
[18] अपिशब्दो नास्ति — इ, ए, ऐ.
[19] विषयाः — उ.
[20] श्रोतव्यमतिभूतता — मु, उ.
[21] करणेनात्र — ओ.
[22] दिशस्तस्याधि० — उ, ओ.
[23] देवता — ओ.
[24] शब्दव्यक्तमन्त्रवर्णपदा० — इ.
[25] ०माकाशं शिवं गृह्णाति — इ.
[26] यथाहुः — आ.
[27] आकरो नोपलभ्यते।

"आकाशवायुप्रभवः शरीरात् समुच्चरन्वक्त्रमुपैति नादः।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः॥" इति।

[1]**अव्यक्तम्** अन्यभूतान्तरगतमपि शब्दं गृह्णाति। [2]खटखटादिको हि पृथिव्यां शब्दः, चलचलादिको [3]हि जले, धमधमादिकोऽग्नौ, शकशकादिकस्तु वायाविति [4]दर्शयिष्यामः। [5]**तत्** [6]श्रोत्रमध्यात्मकत्वेनात्रोच्यते। अधिभूतस्तु [7]तद्विषयोऽर्थः[8]। अधिष्ठातृदेवता तु दिग्लक्षणा। इत्येतत्त्रितयाभिध्यानाच्छ्रोत्रेन्द्रियतत्त्वजयः साधकै[9]र्व्यवहिततत्तच्छब्दश्रवणकामैः कर्तव्य इत्यर्थः। एवमिन्द्रियान्तरेष्वपि [10]वाच्यम्॥

'त्वगिन्द्रियम्' इत्यादि।

**त्वगिन्द्रियमथोत्पन्नं स्पर्शोऽस्य च महामुने॥५८॥**
**विषयः सर्वदा ज्ञेयाः शीतोष्णमृदु[11]कर्कशाः।**
**[12]त्वगिन्द्रियं चाप्यध्यात्मं [13]स्प्रष्टव्यमधिभूतता॥५९॥**
**[14]तस्याधिदेवता सिद्धो मातरिश्वा महाबलः।**
**तस्माद्वैकारिकाद्गर्वादुत्पन्नं चक्षुरिन्द्रियम्॥६०॥**
**[15]विषयोऽस्य स्मृतं रूपं वर्णाकृतिप्रमाणतः।**
**[16]चक्षुरध्यात्म[17]मेवं [18]स्याद्द्रष्टव्यमधिभूतता॥६१॥**
**सूर्योऽधि[19]देवता [20]प्रोक्तस्तन्त्रेऽस्मिन्पारमेश्वरे।**
**जिह्वेन्द्रिय[21]मथो व्यक्तं विषयोऽस्य रसः सदा॥६२॥**
**[22]कट्वम्ललवणादीनि प्रतिगृह्णात्यसंशयः[23]।**
**[24]अध्यात्मं रसनं [25]प्रोक्तमास्वाद्य[26]माधिभौतिकम्॥६३॥**
**तत्रापि हि विजानीयाज्जलाध्यक्षोऽधिदेवता[27]।**

---

[1] अव्यक्तानुभूतान्तर० — इ, ऐ.
[2] घटघटादिको — अ, ए.
[3] हिशब्दो नास्ति — अ, इ, ई, उ, ए, ऐ.
[4] मतङ्ग० विद्या० १९. ८ वृत्तौ।
[5] तत्र — इ, ए, ऐ.
[6] श्रोत्रमाध्यात्मकत्वे ० — आ; श्रोत्रमध्यात्मत्वे० — इ ए, ऐ.
[7] तद्विषयार्थः — इ.
[8] 'अर्थः' इति नास्ति — ऐ.
[9] ०र्व्यवहितं तच्छब्दग्रहणकामैः — इ; ०र्व्यवहिततच्छब्दग्रहणकामैः — ए, ऐ.
[10] वाच्यः — ए.
[11] ०कर्कशः — मु, उ, ओ; कार्कशः — ऊ, ऋ.
[12] त्वगिन्द्रियस्याप्यध्यात्मं — उ; त्वगिन्द्रियमथाध्यात्मं — ऊ, ऋ.
[13] स्पृष्टव्यमतिभूतता — मु; अस्पष्टव्याधिभूततः — उ; स्पृष्टव्यमधिभूतता — उ० पाठान्तरम्, ऋ.
[14] तस्यादिदैवतं सिद्धे — ऊ, ऋ.
[15] विषयस्य — ऊ, ऋ.
[16] चक्षुषोऽध्यात्म० — उ.
[17] ०मेव स्याद् — ऊ, ऋ, ओ.
[18] स्याद्दृष्टव्य० — मु.
[19] ०दैवतः — ऊ, ऋ.
[20] प्रोक्ता तन्त्रे — मु.
[21] ०मतो व्यक्तं — ऊ, ऋ, ओ.
[22] कट्वाम्ल० — मु, उ.
[23] ०गृह्णत्यसंशयम्—ऊ; ०गृह्णाति संशयम्—ऋ.
[24] आध्यात्मं — मु, उ.
[25] प्रोक्तमस्वाद्य० — ऊ, ऋ.
[26] ०मधिभौतिकम् — मु, उ, ऊ, ऋ.
[27] ०दैवतम् — ऊ, ऋ.

घ्राणमिन्द्रियमित्युक्तं गन्धोऽस्य विषयः सदा ॥६४॥
[1]स च पूतिर्यथा[2]न्यायमुग्रतीव्रतया तथा ।
[3]क्वचित्सुरभिराह्लादी यथावत्प्रति[4]गृह्यते ॥६५॥
घ्राणमध्यात्ममेवोक्तमाघ्रेय[5]मधिभूतता ।
पृथिवी देवता तत्र बोद्धव्या शास्त्रचिन्तकैः ॥६६॥

**अथेति** श्रोत्रेन्द्रियोत्पत्ते[6]रनन्तरं **त्वगिन्द्रियमुत्पन्नम्** इत्यर्थः । [7]विषयापचयक्रमेणैवेन्द्रियाणामुत्पत्तेः। तथा हि — श्रोत्रं महा[8]विषयं पञ्चभूतगत[9]शब्दद्योतनात् । ततोऽल्प[10]विषया त्वक्, चतुर्भूतगतस्पर्शविषयत्वात् । ततोऽल्पविषयं [11]चक्षुः, भूतत्रयरूपग्राहकत्वात् । एवं ततो [12]न्यूना रसना भूतद्वयगतरसावद्योतनात्[13] । ततोऽपि च [14]न्यूनतरं घ्राणम्, एक[15]भूतगतगन्धावभासनादिति । अत एव श्रोत्रादीनि क्रमेण नाकाशादिभूतमयानि । [16]भूतान्तरगतस्यापि गुणस्य ग्राहकत्वाद्, [17]गुणव्यतिरिक्तस्य [18]वा कर्मसामान्यादेः [19]प्रकाशनाच्चित्तवदिति [20]भौतिकेन्द्रिय[21]वादी प्रतिक्षिप्तः । तेन [22]हि [23]भूतगुणग्रहण[24]नियमान्यथानुपपत्त्या नियतभौतिकत्वमिन्द्रियाणामभ्युपगतं [25]यतः । [26]यत्तूक्तम् [27]"आहंकारिकत्वाविशेषे [28]नैतेषां विषय[29]नियत[30]स्वभावभेद" इति । [31]तदपि

---

[1] स च सूते यथा० —उ; सोऽसुरभिर्यथा० —ऊ, ऋ.
[2] ०न्यायमुग्रं तीव्र० — मु; ०न्यायमुग्रं तीव्रं यथा तथा — उ.
[3] क्वचित्सुरभिमाह्लादं — मु, ओ; क्वचित्सुमहिमाह्लादं — उ.
[4] ०गृह्लते — उ, ओ.
[5] ०मतिभूतता — मु.
[6] ०रनन्तरत्वं च त्वगिन्द्रिय० — ऐ.
[7] विषयावयवक्रमे० — इ.
[8] ०विषयपञ्च० — इ.
[9] ०शब्दाद्योतनात् — आ, ई, उ; ०शब्दावद्योतनात् — ऊ, ऋ.
[10] ०विषयत्वात्त्वक् — अ, ऊ.
[11] चतुभूतत्रयरूप० —अ; चतुर्भूतत्रयरूप० — आ, इ ऐ.
[12] 'न्यूना' इत्यारभ्य 'ततोऽपि च' इत्यन्तं नास्ति — ऊ, ऋ.
[13] ०द्योतना — इ.
[14] अत्र 'विद्धि' इत्येतदधिकम् — इ.
[15] भूतवर्तिगन्धा० — ऊ, ऋ; भूतगतविषयं गन्धा० — ऐ.
[16] भूतान्तरस्यापि — आ.
[17] शुभव्यति० — ए.
[18] वाक्कर्म० — अ.
[19] प्रकाशना चित्त० — ऊ, ऋ.
[20] भूतिकेन्द्रिय० — ए.
[21] ०वादीति प्रतिक्षिप्तः — इ.
[22] 'हि' इत्यत्र 'वा' इति दृश्यते — अ.
[23] 'भूत' इति नास्ति — ऋ.
[24] नियमोऽन्यथा० — ए.
[25] 'यतः' इत्यत्र 'यदा' इति दृश्यते — अ.
[26] 'यत्तूक्तम्' इत्येतन्नास्ति — आ, ई, उ, ऊ ऋ, ए; यत्तत्र [त]महंकारिकतत्वाधिशेषे — इ; यत्र तमाहंकारिकतत्त्वाविशेषे — ऐ.
[27] अहंकारित्वाद्विशेषेणैतेषां — अ.
[28] कुत एषां विषये नियत० — ऋ.
[29] ०नियतः स्वभावः — इ, ऐ.
[30] ०स्वभावभेदाः भावभेद इति — ऐ.
[31] तदप्ययुक्तं यत — ऐ.

यत एवोत्पत्तिभेदादिक्षुविकाराणां [1]गुडखण्डशर्करादीनामिव[2] भविष्यतीति [3]न किंचि[दित]त् ॥५८–६६॥

अथ [4]कथमेकमेव [5]बुद्धीन्द्रियमनेकविषयं बुद्ध्यादिवन्नेष्यत इति । तत्रोच्यते — 'स्वं स्वं वृत्तम्' इत्यादि ।

**स्वं स्वं [6]वृत्तमथोपात्तं प्रतिगृह्णन्ति देवताः ।**
**न [7]जानन्त्युचितात्स्वार्थाद् [8]वृत्तमन्यतमं क्वचित् ॥६७॥**
**[9]दर्शयन्त्यखिलं [10]भोक्तुर्यतस्तेभ्यो विशिष्यते ।**

[11]वर्ततेऽस्मिन्करणत्वेनेन्द्रियमिति[12] **वृत्तं** शब्दादि वस्तु प्रमेयम् । [13]तत् **स्वं स्वं** येनैव दर्शन-श्रवणादिना प्रकारेण **उपात्तं** तेनैव [14]**गृह्णन्ति** । [15]देवताधिष्ठितत्वाद् [16]**देवताः** [17]इन्द्रियाण्युच्यन्ते । न तु [18]स्वविषयाद् [19]विषयान्तरं गृह्णन्तीति । अयमर्थः — [20]यद्येकमेवेन्द्रियं स्यात्, [21]तदा चक्षुषैव शब्दादयोऽपि[22] गृह्येरन्[23] । श्रोत्रादिना वा रूपादयः । न च [24]गृह्यन्ते । ततो [25]नैकम् । अपि तु बहूनि । [26]भिन्नमेव [27]सर्वं शब्दादिकं **भोक्तुर्दर्शयन्ति** । अत एवेन्द्रियव्यतिरिक्तो [28]भोक्ता सिद्ध इत्युक्तं **पुंपाशेश्वरप्रकरणे**[29] ॥

अधुना कर्मेन्द्रियाणामप्युच्यते[30] —'तस्माद्वैकारिकाद्' इत्यादि ।

---

[1] गुलखण्ड० — अ, ऋ; रसखण्ड — इ; शुद्धखण्ड — ए.
[2] 'इव' इत्यत्र 'अपि' इति दृश्यते — ऊ, ऋ.
[3] 'न किंचित्' इत्येतन्नास्ति — ऐ.
[4] कथमेतद्बुद्धी० — इ.
[5] बुद्धीन्द्रियमेकविषयं — आ, इ, ई, उ, ऐ.
[6] वृत्तं तथोपात्तं — ऊ, ऋ; वृत्तं यथोपात्तं —ओ.
[7] जानात्युदितान् स्वात्म्यान् — मु; जानात्यु-दिताच्छुक्लाद् — उ; जानन्त्युचितात्स्वा-क्यात् — ओ.
[8] उक्तादन्यतमं — मु० पाठान्तरम्, उ० पाठान्तरम्; रक्तमन्यतमं — उ; वृत्ता-नन्यतमं — ऊ; प्रत्तादन्यतमं — ओ.
[9] दिदृक्षेत्यखिलं — मु; न द्रष्टेत्यखिलं — मु० पाठान्तरम्; न दृष्टेत्यखिलं — उ, ओ.
[10] 'भोक्तुः' इत्यत्र 'प्रोक्तं' इति दृश्यते — मु, उ, ओ.
[11] वर्तते करण० — अ.
[12] ०त्वेनेन्द्रिय इति — ऐ.
[13] यत् — अ, आ, इ, ई, उ, ऊ, ए, ऐ.
[14] गृह्णाति — आ, इ, ई, उ, ए.
[15] देवताविष्टितत्वात् — ए.
[16] देवता इत्युच्यते — इ, ऐ.
[17] इन्द्रियाणीत्युच्यन्ते — अ, आ, ई, उ, ए.
[18] स्वकीयाद् — अ.
[19] विषयानन्तरं गृह्णातीति — ऋ.
[20] यद्येकमिन्द्रियं — ऊ; यदेकमिन्द्रियं — ऋ.
[21] तच्चक्षुषैव — अ, आ, इ, ई, उ, ऊ, ए, ऐ; तच्चक्षुषेव — ऋ.
[22] अपिशब्दो नास्ति — आ.
[23] गृह्यन्ते — ऋ.
[24] दृश्यन्ते — ऐ.
[25] नैमित्तिकबहूनि — ऊ, ऋ.
[26] अत्र 'तद्' इत्यधिकम् — ऋ.
[27] सर्वशब्दादिकं — आ.
[28] 'भोक्ता' इति नास्ति — इ, ऐ.
[29] मतङ्ग० विद्या० ६. १६–१९ पू० वृत्तौ; 'प्रकरणे' इत्यत्र 'प्रकरणेन' इति दृश्यते — इ.
[30] ०मप्युच्यन्ते — अ, आ, इ, ई, उ, ए.

तस्माद्वैकारिकादेव गर्वात्कर्मेन्द्रियाण्यपि ॥६८॥
व्यक्तिमायान्ति [1]संक्षोभात्सिसृक्षोः कारणात्मनः ।
वागिन्द्रियमिति ख्यातं वक्तव्येति क्रिया [2]मता ॥६९॥
या वर्णपदवाक्यैस्तु परत्र [3]विनिवेद्यते ।
विधि[4]स्तुतिजुगुप्साद्यैर्विकारैः [5]प्रविभिद्यते ॥७०॥
सेयमध्यात्ममुद्दिष्टं[6] [7]वक्तव्यमधिभूतता ।
देवता हुतभुक् [8]प्रोक्ता [9]सा च वायुसमीरणात् ॥७१॥
[10]वक्त्रहृत्कण्ठताल्वोष्ठपुटयोगेन नाभितः ।
[11]समुत्था या तु जिह्वाग्रे व्यक्तीभावमुपैति हि ॥७२॥
[12]हस्तेन्द्रियं समाख्यातं [13]दानादानादिका क्रिया ।
[14]हस्तावध्यात्ममुद्दिष्टमादानाद्याधिभौतिकम्[15] ॥७३॥
इन्द्रोऽधिदेवता विप्र [16]विहिता शूलपाणिना ।
पादावेवाक्षमित्युक्तं [17]तच्चाध्यात्मं महामुने ॥७४॥
क्रियाधिभौतिकं [18]तत्र [19]तत्प्रोक्तं गमनादिकम् ।
[20]केशवाधिष्ठितं तच्च स च [21]प्रोक्तोऽधिदेवता ॥७५॥
पायुः कर्मेन्द्रियं [22]तस्य ह्युत्सर्गश्चोदिता क्रिया ।
अध्यात्मं [23]पायुरित्युक्त[24]मुत्सर्गश्चाधिभौतिकः ॥७६॥
मित्रोऽधिदेवता [25]प्रोक्ता पायोर्मुनि[26]वरोत्तम ।
उपस्थं पञ्चमं प्रोक्तमिन्द्रियं सृष्टिकारणम् ॥७७॥
[27]तस्योदिता क्रियानन्दो वृत्तमत्रोदितं मया ।

---

[1] संक्षेपाद्विसृक्षोः—उ; संक्षोभाद्विसृक्षोः—ओ.
[2] सदा — मु, उ, ओ.
[3] विनिवेदिता — मु.
[4] ०स्तुतिर्जुगुत्सा० — मु.
[5] प्रतिकुर्वते — ऊ, ऋ.
[6] ०मुद्दिष्टा — ऊ, ऋ.
[7] वक्तव्यमतिभूतता — मु, ओ.
[8] भोक्ता — मु० पाठान्तरम् , उ, ओ.
[9] स च — ऊ, ऋ.
[10] व्यक्तो हृत्कण्ठ० — ऊ, ऋ.
[11] समुत्थाय तु — ऊ, ऋ, ओ.
[12] हस्ते दृढं समाख्याता — उ.
[13] दानादानादिकं क्रिया — मु; दानादानादिकक्रिया—उ; तदादानादिका क्रिया— ऊ, ऋ.
[14] हस्तमध्यात्ममुद्दिष्टम् — मु, ओ; हस्तादध्यात्ममेकोक्तिः — उ; हस्तावध्यात्मनेवोक्तं — ऊ, ऋ.
[15] 'आदानाद्याधिभौतिकम्' इत्यस्य स्थाने 'आदेयाद्याधिभौतिकम्' इति दृश्यते — मु; 'तदेवाध्याधिभौतिकम्' इति दृश्यते — उ.
[16] विहितः — उ.
[17] तथाध्यात्मं — ऊ, ऋ.
[18] तस्य — ऊ, ऋ.
[19] प्रोक्तं तद्गमनादिकम् — ओ.
[20] केशवो विहितस्तत्र — मु; ..दितस्तत्र — ओ.
[21] प्रोक्ताधिदेवता — मु; प्रोक्तोऽधिदैवतम् — ऊ, ऋ.
[22] तस्य ह्युत्सर्गे चोदिता — मु; तस्य उत्सर्गे चोदिता—उ; तस्य उत्सर्गश्चोदिता—ऊ, ऋ.
[23] पायुरेवोक्त० — मु, उ; पायुरुद्दिष्ट० — ओ.
[24] ०मुत्सर्गादाधिभौतिकम् — उ; ०मुत्सर्गश्चादिदैविकम् — ऊ, ऋ.
[25] ज्ञेया — ऊ, ऋ, ओ.
[26] ०वरेश्वर — ओ.
[27] तस्योचितो — मु; तस्योचिता — उ, ओ.

[1]उपस्थेन्द्रियमध्यात्म[2]मानन्दश्चाधि[3]भौतिकः ।।७८।।
प्रजापतिरिति [4]ज्ञेयो देवतात्वेन तत्र तु ।

**तस्मात्** [5]विकारप्रयोजनयोगेन [6]वैकारिकत्वेनोक्ताद् [7]राजसात् तैजसाख्यादहंकारात्कर्मेन्द्रियाण्यभिव्यज्यन्त इति[8] । तत्र वागिन्द्रिय[9]स्योक्त्यात्मिका क्रिया या हृत्कण्ठताल्वाद्यनेकस्थानोद्भवैः **वर्णपदवाक्यैः वक्तव्येति**[10] [मा] **परत्र** पुरुषे विधिस्तुतिनिन्देति[11]हासादिकमर्थं विभागेन कुर्वती[12] संवेद्यते । कर्मेन्द्रियाणामपि [13]स्वाध्यात्मादिभेदप्रति[14]पादनप्रयोजनं [15]पूर्वोक्तमेव । [16]अनेन च [17]कर्मेन्द्रियाणि ये नेच्छन्ति नैयायिकादयः, ते प्रति[18]क्षिप्ताः । [19]नाकरणा कृतिर्दृष्टा यतः । [20]यत्तूक्तम् — एवं हि भ्रूलतोत्क्षेपादीनां [21]दन्तच्छदनादीनां च कर्मणां [22]करणान्तराणि कल्पनीयानीत्यनन्तता कर्मेन्द्रियाणां प्रसज्यते । न पञ्चत्वमिति । [23]तत्सत्यं मुख्यतया यदि शरीरैकदेशवृत्तीनि तान्यभ्युपगम्येरन् । त्वगिन्द्रियवत् [24]सर्वशरीर[25]व्यापकत्वेन तेषां, हस्तस्यैवायं व्यापारो [26]भ्रूक्षेपणादिः, जीर्ण[27]विरेचकाद्यात्मकः पाय्वादेरिति नानन्तता । सर्वशरीर[28]व्यापकत्वे

---

[1] उपस्था सोऽयमध्यात्म० — ऊ, ॠ.
[2] ०मानन्दश्चाधिभौतिकम् — मु; ०मानन्दं चाधिभौतिकम् — उ;
[3] भौतिकाः — ओ.
[4] ज्ञेया — मु, उ.
[5] विधिकालप्रयोजन० — इ.
[6] वैकारिकेनोक्ताद् — अ.
[7] राजसतैजसाख्याद् — आ, ई, उ, ऊ, ॠ, ए; राजसाख्याद् — इ.
[8] ०व्यञ्जन्त इति — इ.
[9] ०स्योक्तात्मिका — ए.
[10] वक्तव्यैः — ऊ, ॠ.
[11] ०हासादिकमन्तं — ऊ, ॠ; ०हासादि किमर्थं — ऐ.
[12] अत्र 'परत्र' इत्यधिकम् — अ, आ, इ, ई, ॠ, ऐ; 'इति परत्र' इत्यधिकम् — ए.
[13] चाध्यात्मादि — ऊ, ॠ; साध्यात्मादि — ऐ.
[14] ०पादनं प्रयोजनं — इ, ए, ऐ.
[15] पूर्वमुक्तमेव — ऊ, ॠ; मतङ्ग० विद्या० १८. ५६ उ० –५८ पू० वृत्तौ ।
[16] अन्ये च — इ.
[17] ये कर्मेन्द्रियाणि नेच्छन्ति — ऊ, ॠ.
[18] ०क्षिप्ताः । किं च नाकरणा० — ॠ.
[19] नाकारणकृतिर्दृष्टा — आ; न कारणत्वादिति दृष्टा — इ; करणाकृतिर्दृष्टा — ए.
[20] यत्तूक्तमेव मूलतोत्क्षेपा० — अ, ई, उ, ए; यत्तूक्तमेव भूलतोत्क्षेपा० — आ; यत्र तमेव स्थूलतोत्क्षेपा० — इ; यदुक्तमेव मूलतोत्क्षेपा० — ऐ.
[21] दन्तच्छेदादीनां — अ, ई, उ, ए, ऐ; दन्तच्छेदनादीनां — आ; तच्चेन्द्रियादीनां — इ; 'दन्तच्छदनादीनां' इत्येतन्नास्ति — ऊ, ॠ.
[22] कारणाभाव. . .ल्पनीयानी० — अ; कारणान्तराणि — आ, इ, ई, उ, ऊ, ॠ, ए, ऐ.
[23] तत्सत्यमुच्यते तदपि शरीरैक० — ऊ, ॠ.
[24] 'सर्वशरीर' इत्यारभ्य 'नानन्तता' इत्यन्तं नास्ति — ई, उ.
[25] ०व्यापकत्वे तु तेषां — अ, आ, ऊ, ऐ; ०व्यापकत्वे तेषां — ॠ.
[26] भ्रूविक्षेपणादिजीर्ण० — इ; 'भ्रूक्षेपणादिः, जीर्णविरेचकाद्यात्मकः' इत्यस्य स्थाने 'स्तनादिना (सुतादिना) च क्षीरविरेकाद्यात्मकः' इति दृश्यते — ऊ, ॠ.
[27] विरेकाद्यात्मकः — इ, ऐ.
[28] ०व्यापारकत्वेति च यस्मि० — इ; ०व्यापारकत्वेति यस्मि० — ऊ; ०व्यापारकत्वेऽपि यस्मि० — ॠ.

सति [1]च यस्मिन्नधिष्ठाने विशेषाभिव्यक्तिः, [2]तन्नामानीन्द्रियाणीति[3] वागिन्द्रियमित्यादिव्यपदेशोऽप्युपपद्यत [4]इत्यविरोधः ॥

एवं च — 'इन्द्रियाणि' इत्यादि ।

**इन्द्रियाणि दशैकं च [5]वर्तनं समुदाहृतम् ॥७९॥**

बुद्धीन्द्रियकर्मेन्द्रियाणि **दश**, मनोलक्षणं च **एकम्** इन्द्रियमहंकारस्य कार्यत्वेनोदाहृतम् । [6]**वर्तनं** च शरीरधारणं प्राणादिव्यापारात्मकं तस्यैवोदाहृतम् ।

ननु "[7]सामान्य[8]करणवृत्तिः प्राणाद्या वायवः पञ्च ।" इति सांख्यैः [उक्तम्] । सत्यम् । अत [9]एवाहंकारिककारणत्वेन अहंकारस्य तत्सामान्य[10]रूपत्वादित्यविरोधः ॥७९॥

अथ [11]मनःसाधनम् — 'इन्द्रियम्' इत्यादि ।

**इन्द्रियं यत्पुरा प्रोक्तं मनश्चात्रोभयात्मकम् ।**
**विषयस्तस्य संकल्पः [12]सोमश्चास्याधिदेवता ॥८०॥**
**[13]द्विधाधिकारि तच्चित्तं [14]भोक्तुर्भोगोपपादकम् ।**
**बहिः [15]करणभावेन [16]स्वोचितेन यतः सदा ॥८१॥**
**इन्द्रियाणां तु सामर्थ्यं संकल्पेनात्मवर्तिना ।**
**करोत्यन्तःस्थितं[17] भूयस्ततोऽन्तःकरणं [18]मनः ॥८२॥**

[19]**यदिन्द्रिय**[20]**मुभयात्मकं** मनोलक्षणं [21]प्रागुक्तं, **तस्य विषयः** [22]कार्यं **संकल्पः** [23]अवधानमेकाग्रता, तेन हि तद्विषयीक्रियते । तथा [24]हि — संनिहितेष्वपि [25]इन्द्रियार्थेषु अनवहितस्य, [26]अर्थान्तरा-

---

[1] चास्मिन्नधिष्ठाने — अ.
[2] तन्नाम्ना पाणीन्द्रियमित्यादिव्यपदेशो — ऊ, ॠ.
[3] इतिशब्दो नास्ति — इ, ऐ.
[4] इति विरोधः — ॠ.
[5] वर्तिनं — ॠ.
[6] वर्तमानशरीरधारणः प्राणादि० — इ.
[7] सांख्यका० २९ उ०.
[8] करणं वृत्तिः — ऊ.
[9] एवाहंकारिकारणत्वेन — इ, ए; एवाहंकारिकीकरणकारणत्वेन — ऊ, ॠ.
[10] ०रूपत्वादिविरोधः — ऐ.
[11] मनःसाधारणम् — ॠ.
[12] सोमश्चैवाधि० — ऊ, ॠ; सोमस्तस्याधि० — ओ.
[13] द्विधाधिकरणं चित्तं — उ.
[14] हेतुर्भोगोप० — उ; भोक्तृभोगोप० — ऊ, ॠ.
[15] ०करणभागेन — ऊ, ॠ.
[16] स्वोदितेन — ऊ.
[17] स्थितो — उ.
[18] मतम् — मु, उ, ओ.
[19] यदीन्द्रिय० — अ, आ, इ, ई, उ.
[20] ०मुभयात्मिकमिमं मनो० — इ, ऐ; ०मुभयात्मकमनो० — ए.
[21] मतङ्ग विद्या० १८. ४९ उ० — ५६ पू० वृत्तौ ।
[22] कार्यसंकल्पः — ए.
[23] अवधारणमेकाग्रता — ऐ.
[24] हिशब्दो नास्ति — ऊ, ॠ.
[25] आत्मेन्द्रियार्थेषु — अ, आ, ई, उ, ऊ, ॠ, ऐ.
[26] अर्थान्तरासहितस्य — ए.

वहितस्य [1]वा [2]तदर्थविषयं ज्ञानं नोत्पद्यत इत्यवधानमपि ज्ञानोत्पत्तौ [3]कारणत्वेन सिद्धम् । तस्य [4]च न [5]बुद्धिर्हेतुः अहंकारो वा[6] । दृक्क्रियात्मकत्वेन [7]प्रत्ययरूपत्वाद्ग्राह्यग्राहक[8]प्रत्यययोर्हि[9] [10]तौ हेतू इत्युक्तम् । ततोऽन्यदेव [11]त्विदं [12]क्रियात्मकमवधानं नामेति । [13]यस्तस्य हेतुस्तन्मन इति । तच्च **चित्तं** मनो **द्विधेति** अन्तर्बहिश्च [14]**अधिकारि** । तत्र **बहिः स्वोचितेन** अवधानात्मना [15]**करणभावेन इन्द्रियाणां सामर्थ्यं करोति** । [16]यतो नानवहितस्यार्थेष्विन्द्रियाणि प्रवर्तन्त [17]इत्युक्तम् । **संकल्पेनैव**[18] **आत्मवर्तिना** आन्तरेण अन्तःस्थितबुद्ध्यहंकारव्यापारोऽप्युपपद्यत [19]इत्युक्तम् ॥८०-८२॥

[20]**न** केवलं [21]मन एव यावत् — 'मनो गर्वस्तथा बुद्धिः' इति ।

**मनो गर्वस्तथा बुद्धिर्द्वारमेतत्सदात्मनः ।**
**भूतये भूतनाथेन निर्मितं [22]करणं त्रिधा ॥८३॥**

त्रिविधमपि **एतत्** अन्तःकरणं [23]भोक्तुर्भोगाय **द्वारं** भगवता **निर्मितम्** [24]इति ॥८३॥

[25]अथ बुद्ध्यहंकारयोरपि प्रसङ्गादध्यात्मादिभेदः — 'अहंकारस्तथाध्यात्मम्' इत्यादि ।

**अहंकारस्तथाध्यात्ममभि[26]मानः स्वको ध्रुवम् ।**
**आधिभौतिकमेवोक्तं [27]रुद्रस्तस्याधिदेवता ॥८४॥**
**बुद्धिरध्यात्मभावेन स्वभावेनैव संस्थिता ।**

---

[1] च — आ.
[2] तत्त्वविषयज्ञानं — ए.
[3] कारणत्वे सिद्धम् — आ.
[4] चशब्दो नास्ति — ऊ, ऋ.
[5] बुद्धिहेतुः — इ, ए, ऐ.
[6] 'वा' इति नस्ति — इ.
[7] अप्रत्ययरूप० — अ, आ, इ, ई, उ, ऊ, ऋ, ए.
[8] ०प्रत्ययौ यौ हि — ऊ, ऋ.
[9] हिशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[10] तद्धेतूक्तम् — अ; तौ हेतूक्तम् — आ, ई, उ, ए; तौ प्रागुक्तम् — इ; तौ गतः — ऐ.
[11] 'त्विदं' इत्यत्र 'हि' इति दृश्यते — अ, आ, ई, उ, ए; 'त्वमिन्द्रियं' इति दृश्यते — इ; 'हेतु' इति दृश्यते — ऐ.
[12] दृक्क्रियात्मकम् — अ, आ, ई, उ, ए.
[13] यत्तस्य — ई, उ; यतस्तस्य — ऊ, ऋ.
[14] अधिकारी — ए.
[15] करणभावेन्द्रियाणां — अ, आ, ऐ; कारणभावेनेन्द्रियाणां — ऊ, ऋ; करणाभावेनेन्द्रियाणां — ए.
[16] यतो विना नानवहितस्यार्थेषु — अ; यतो विना नानवहितस्य तस्यार्थेषु — आ, ई, उ, ए; यतो विनानवहितस्यार्थेषु — इ, ऐ.
[17] मतङ्ग० विद्या० १०. ६-१३ पू० वृत्तौ ।
[18] एवकारो नास्ति — आ, ई, उ.
[19] मतङ्ग० विद्या० १८. ५५, ५६ पू० वृत्तौ ।
[20] नकारो नास्ति — ऐ.
[21] 'मन एव यावत्' इत्यस्य स्थाने 'एतद्' इति दृश्यते — अ, इ, ई, उ, ए, ऐ.
[22] कारणं — मु, उ.
[23] भोक्तुं भोगाय — ऊ, ऋ.
[24] इतिशब्दो नास्ति — अ.
[25] 'अथ' इत्यारभ्य "अध्यात्म्यादिभेदः' इत्यन्तं नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[26] ०मानं स्वकं ध्रुवम् — मु, उ, ओ.
[27] रुद्रस्तत्राधिदैवतम् — ऊ, ऋ.

**बोद्धव्य[1]मधिभूताख्यं तत्र ब्रह्माधि[2]देवता ॥८५॥**
**बाह्यार्थ[3]ग्रहणे भोक्तुर्द्वारमेतदुदाहृतम् ।**

अधुनान्तःकरणबाह्यकरणयोः परस्परतो विशेषः — 'यदन्तःकरणम्' इत्यादि ।

**यदन्तःकरणं नाम [4]त्रिकालविषयं मतम् ॥८६॥**
**[5]अतोऽवसीयते यस्माच्चिर[6]कालानुसंचितम् ।**
**[7]भोक्तुः स्मारयितुं [8]शक्तमाशयं प्रत्ययात्मकम् ॥८७॥**
**वर्तमानमतीतं च यच्चैष्यदनुमानतः ।**
**वर्तमानं बहिर्देवाः प्रेरिता मनसा यदा ॥८८॥**
**तदा [9]गृह्णन्त्यनायासं स्वोचितं यत्क्रमागतम् ।**

यदेतद् **अन्तःकरणं** पुंसः प्रोक्तं, तत् **त्रिकालविषयम्** । [10]**अतः** बुद्धिः [11]प्राक्तनानुभवसंस्कारद्वारेण स्मर्यमाणम् **अतीतम्**, [12]अनुभवसामर्थ्येन चेदंतया निर्दिश्यमानं **वर्तमानम्**, अनागतं [13]चाविनाभूतोन्नतमेघादिलिङ्गदर्शनाद् [14]वृष्टचाद्यात्मन. [15]प्रदर्शयन्ती त्रिकालविषया संवेद्यते । अहंकारोऽपि "[16]दृष्टो मया, पश्याम्यहं, [17]द्रष्टव्यं मया" इति त्रिकाल[18]संबन्ध्यात्मपरामर्शं कुर्वन्नेवानुभूयते । मनस्तु त्रिकालविषयावधानं[19] बुद्ध्यहंकारयोर्वृत्त्यनुगुणमुत्पादयतीति त्रिकालविषयं कथ्यते । बाह्यानि [20]तु करणानि मनःप्रेरितानि **वर्तमानमेव** वस्तु **गृह्णन्तीत्युक्तम्**[21] —

"[22]संबद्धं [23]वर्तमानेन [24]गृह्यते [25]चक्षुरादिना" इति ॥

अधुनैषामेव सत्त्वादि[26]गुणत्रयक्रियान्वयः कथ्यते — 'विकासः' इत्यादि ।

---

[1] ०मभिभूताख्यं — ऊ, ॠ; ०मतिभूताख्यं — ओ.
[2] ०दैवतम् — ऊ, ॠ.
[3] ०ग्रहणं — ऊ, ॠ.
[4] त्रिकालं विषयं — उ.
[5] कुतो० — उ, ऊ, ॠ.
[6] ०कालात्मसंचितम् — मु, ओ.
[7] भोक्तुं — मु, उ.
[8] शक्तमाशयः — उ; शक्तं स्वाशयं — ऊ, ॠ.
[9] गृह्णात्यनायासं — मु; गृह्यन्तनायासं — ऊ, ॠ.
[10] ततः — इ, ई, उ.
[11] प्रोक्तानुभव० — इ; प्राक्तनानुभाव० — ॠ, ऐ.
[12] अनुभाव० — ॠ.
[13] च विना० — ऐ.
[14] वृष्टचात्मनः — अ; वृष्टचाद्यनुमानं —इ; वृष्टचाद्यनुमानेन — ऊ, ॠ; वृष्टचाद्यमात्मनो — ए.
[15] प्रतिपादयन्ती — इ; प्रतीयन्ती — ऊ, ॠ; दर्शयन्ती — ए.
[16] दृष्टोऽपि मया — इ, ऐ.
[17] द्रष्टव्येति — इ; द्रष्टव्येति स मयेति — ऐ.
[18] संबन्धात्म० — इ, ॠ; संबुद्धचात्म० —ऊ.
[19] ०विषयानुमानं० — इ; ०विषयावधानेन — ऊ, ॠ.
[20] तुशब्दो नास्ति — अ, आ, ई, उ, ऐ.
[21] श्लोकवा० प्रत्यक्षसूत्रे श्लो० ८४ पू०.
[22] संबन्धं — अ, इ, ई, उ, ॠ, ऐ.
[23] वर्तमानतां — ॠ; वर्तमानं च — श्लोकवार्तिकपाठः ।
[24] गृह्यन्ते — अ, ॠ.
[25] चक्षुरादीनि — इ.
[26] गुणत्रयान्वयः — इ, ऊ, ॠ.

[1]विकासः सत्त्वसामर्थ्यात्प्रवृत्तिश्च रजोमयी[2] ॥८९॥
[3]प्रत्यागमनमागृह्य [4]यदेतत्तमसा स्मृतम् ।

[5]**विकासः** अर्थप्रकाशादियोग्यता. तत्र [6]**प्रवृत्तिः**, **प्रत्यागमनमागृह्य** अर्थं च निवृत्त्यात्मकमिन्द्रियाणां सत्त्वादिगुणत्रयरूपता ॥

अथ [7]प्रसङ्गात् [8]प्रागुक्तमन्तःकरणतरमपि विद्याख्यं [10]स्मर्यते — 'गृहीत' इत्यादि ।

**गृहीतोऽर्थोऽभिमानेन ख्यातिरध्यवसायिनी ॥९०॥**
**[11]निवेदयति [12]विद्याया विद्यया [13]विन्दते पुमान् ।**
**[14]इत्येषोऽनुक्रमः प्रोक्तो [15]भोक्तुर्भोगप्रवृत्तये ॥९१॥**
**प्रत्यागतानामर्थानां [16]ग्राहकः परिकीर्तितः ।**

[17]यदा चाहंकारेण ग्राहकरूपोऽर्थो[18] **गृहीतः**, [19]तदा [20]च [21]बुद्ध्याध्यवसायेन प्रत्युपस्थापितानर्थान् पुरुषो विद्यया क्रमेण [22]वेत्तीति स [23]क्रमः "[24]अक्षार्थसंगमोद्भूतः" इत्यादिना विद्यातत्त्व[25]प्रकरण एव दर्शितः ॥

अथ बुद्धीन्द्रियकर्मेन्द्रियाणां परस्परतो विशेषः — 'देवाश्चापि' इत्यादि ।

**[26]देवाश्चाप्यविकुर्वाणा बोद्धारो बुद्धि[27]संज्ञकाः ॥९२॥**
**[28]प्रच्यवन्ते [29]स्वकात्स्थानान्मनःसंकल्पिताः सदा ।**
**कर्माख्याः कर्मनिरताः कर्तुः कारणसैनिकाः ॥९३॥**

---

[1] प्रकाशः — ऊ, ऋ.
[2] ०त्प्रवृत्तिश्चरतो मयि — उ.
[3] प्रतीपागमनं ग्राह्ये — मु. ओ; प्रतीपागमनं ग्राह्यं — उ.
[4] यत्तत्तु मनसा स्मृतम् — उ; यत्तत्तत्तमसः स्मृतम् — ऊ, ऋ.
[5] 'विकासः' इति नास्ति — ऊ, ऋ.
[6] 'प्रवृत्तिः' इत्यारभ्य 'अथ' इत्यन्तं नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[7] 'प्रसङ्गात्' इत्यत्र 'अर्थप्रसङ्गात्' इति दृश्यते — इ, ए, ऐ.
[8] मतङ्ग० विद्या० १०. ४ उ०, ५ वृत्तौ ।
[9] ०करणान्तरमपि — अ, आ, इ, ई, उ, ए, ऐ.
[10] स्मारितः — अ, आ, इ, ई, उ, ए, ऐ.
[11] निवेदयन्ती विद्यायां — मु, उ.
[12] विद्यायां — ओ.
[13] वेदते — मु, ओ; वेदने — उ.
[14] इत्येषानु० — ऊ, ऋ.
[15] भोक्तुर्भोग्यप्रवृत्तये — ऊ, ऋ.
[16] ग्राहकाः परिकीर्तिताः — ऊ, ऋ.
[17] यथा — इ, ऊ, ए, ऐ.
[18] ०रूपार्थो — ए.
[19] यथा — इ, ऊ, ऐ; तथा — ए.
[20] चशब्दो नास्ति — इ, ए.
[21] बुद्ध्याद्यवसायेन — अ, आ, ई, उ, ऋ; बुद्ध्यवसायेन — ऊ; बुद्ध्यावसायेन — ऐ.
[22] वेत्तीति क्रमः — अ, आ, ई, उ, ए; वेत्ति स क्रमः — ऊ, ऋ, ऐ.
[23] 'क्रमः' इति नास्ति — इ.
[24] मतङ्ग० विद्या० १०. ६–१३ पू० वृत्तौ ।
[25] प्रकरणमेवं दर्शितम् — इ.
[26] देवाश्चापि विकुर्वाणा — मु, उ, ओ.
[27] ०संज्ञिकाः — ऋ.
[28] प्राप्नुवन्ति — मु, उ; प्रच्यवन्ति — ओ.
[29] स्वकात्स्थानात्स्थानं संकल्पितं सदा — उ.

तत्र [1]**बुद्धिसंज्ञकाः देवाः** मनःप्रेरिता एव केवलं [2]स्वस्मात्स्थानादर्थग्रहणाय [3]प्रवर्तन्ते। न तु [4]स्वस्थाने क्रियात्मकं विकार[5]मुत्पादयन्ति । **कर्माख्यास्तु** देवाः कर्मनिरतत्वादेव स्वाश्रये क्रियामुत्पादयन्तः कार्यं कुर्वन्तीति ॥९३–९३॥

किं च — 'साहित्येन' इत्यादि ।

**साहित्येन निबद्धास्तु यतस्तस्याभिलाषिणः ।**
**उद्यतस्याप्यथैकस्मिन्नर्थे [6]ह्याकुलतां ययुः ॥९४॥**
**[7]एकस्यार्थं प्रकुर्वन्ति संघातेन महामुने ।**

[8]इह भोक्तुः [9]**एकस्मिन्नर्थे** ग्रहणाय [10]बुद्धीन्द्रियेण **उद्यतस्य** [11]कर्मेन्द्रियाण्यपि **आकुलतां** यान्ति। यत एकस्मिन्नेव वस्तुनि [12]**एकस्य** पुंसो युगपदेव [13]ज्ञेयकार्यलक्षणं **अर्थ** [14]कुर्वन्तो बुद्धीन्द्रियकर्मेन्द्रियाण्यवसीयन्त एव ॥

किं च — 'विकृष्टम्' इत्यादि ।

**विकृष्टं बुद्धिदेवानां संनिकृष्टं क्रियात्मनाम् ॥९५॥**
**सिद्ध्यत्यन्योन्यसंघातान्नान्यथा तु [15]कदाचन ।**

भूयसा [16]विप्रकृष्टं वस्तु बुद्धीन्द्रियाणां [17]चक्षुःश्रोत्रघ्राणानां[18] वेद्यम्। [19]**संनिकृष्टमेव** [20]च कर्मेन्द्रियाणां कार्यम् । न [21]तु विप्रकृष्टम्[22]। कस्यचिदपि कार्यं [23]च बुद्धीन्द्रियकर्मेन्द्रियाणां संघातात्[24] **सिद्ध्यति**। [25]न केवलात् कर्मेन्द्रियात्; अज्ञातस्य [26]करणासंभवात् । बुद्धीन्द्रियाणि [27]तु कर्मेन्द्रियानपेक्षयैव [28]स्वकार्यं [29]कुर्वन्तीत्युक्तो विशेषः ॥

---

[1] बुद्धिसंज्ञिकाः — अ.
[2] स्वस्थानादर्थ० — ऋ.
[3] प्रवर्तते — अ, ऋ.
[4] संस्थाने — अ, आ, इ, ई, उ, ए, ऐ.
[5] ०मुत्पादयति — आ, ई, उ.
[6] व्याकुलता यतः — उ.
[7] तस्यार्थं प्रतिकुर्वन्ति — मु.
[8] महाभोक्तुः — ऊ, ऋ.
[9] एकस्मिन्नर्थग्रहणाय — ए.
[10] अत्र 'यद्' इत्यधिकम्—अ, आ, इ, ई, उ, ए, ऐ.
[11] कर्मेन्द्रियाण्यथापि — ऐ.
[12] एतस्य — इ, ऐ; 'एकस्य' इत्यत्र 'एकस्यैव' इति दृश्यते — ऊ, ऋ.
[13] ज्ञेयत्वकार्यलक्षणम् — इ, ऐ; ज्ञेयत्वकार्यत्वलक्षणम् — ऊ, ऋ.
[14] कुर्वतो — अ, आ, इ, ई, उ, ऊ, ए, ऐ.
[15] कथंचन — ऊ, ऋ.
[16] विप्रकृष्टवस्तु — आ, ए; विकृष्टं वस्तु — इ; विकृष्टवस्तु — ऐ.
[17] 'चक्षुः' इति नास्ति — इ.
[18] ०श्रोत्रपुराणानां — ऐ.
[19] स त्वेष्टमेव — इ.
[20] चशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[21] तुशब्दो नास्ति — अ, आ, इ, ई, उ, ए.
[22] विकृष्टम् — ऊ, ऋ, ऐ.
[23] न — अ; तु — ए.
[24] अत्र अपिशब्दोऽधिकः — ए.
[25] अत्र 'न केवलात् कर्मेन्द्रियाणां संघातात् सिद्ध्यति' इत्येतदधिकम् — आ.
[26] करणमसंभवात् — इ; करणं संभवात् — ऐ.
[27] तुशब्दो नास्ति — अ, ऊ, ऋ, ऐ.
[28] स्वं कार्यं — ऊ, ऋ.
[29] कुर्वतीत्युक्तो — ऐ.

इन्द्रियचैतनिकानां तु — 'येषां नात्मेति' इत्यादि ।

**[1]येषां नात्मेति वचनं [2]तेषामभ्युदितः क्रमः ॥९६॥**
**एकैकस्यैकमेकं स्याद्विज्ञानं [3]सुप्रतीतये ।**
**समस्तं यस्य [4]तज्ज्ञातुः सोऽस्मिन्नास्त्यस्फुटं वचः ॥९७॥**

**येषाम्** [5]इन्द्रियेभ्यो [6]ह्यन्यो **नात्मेति**[7] अभ्युपगमः, **तेषामप्युक्तः** [8]प्रतिक्षेपक्रमः **[9]पुंपाशेश्वरप्रकरणे**[10] । तदानीं [11]च [12]पञ्चानामपीन्द्रियाणाम् [13]**एकैकस्यैकमेकम्**[14] **स्याद्विज्ञानम्** इत्येकस्मिन्शरीरे देवदत्तयज्ञ[15]दत्तादिवत् पञ्च प्रमातारः स्युरिति । **यस्य** [16]**ज्ञातुः तद्** ज्ञानं रूपरसादि[17]समस्तार्थविषयत्वात् **समस्तं** [18]**सुप्रतीतये** परामर्शाय; [19]**स** [20]तथाभूतः प्रमाता **अस्मिन्** इन्द्रियचैतन्य[21]पक्षे [22]**नास्ति** इत्यर्थः । 'चेतनानीन्द्रियाणि' इति [23]**अस्फुटं वचः** प्रतिज्ञातम् । [24]सर्वेन्द्रिया[25]र्थानुभव[26]परामर्श[27]स्वभावैकात्मकद्रष्टुः स्वसंवेदनेन निराकृतत्वादित्युक्तं [28]**पुंपाशेश्वरप्रकरणे** [29]विस्तरेणेति ॥

अधुना [30]"योनिस्तन्मात्रसंघस्य" इत्युक्तं [31]व्याक्रियते — 'भूतादेः' इत्यादि ।

**भूतादेरप्यहंकारात्तन्मात्राणि भवन्ति हि ।**

नन्विन्द्रियवदहंकारादुत्पन्नत्वात् तन्मात्रमपि पुंसः करणं [32]कस्मान्न भवतीति [33]तत्रोच्यते — 'तमसोत्कृष्टवीर्येण' इत्यादि ।

---

[1] एषां — ओ.
[2] तेषामभ्युद्यतः क्रमात् — मु, उ.
[3] सुप्रतीयते — मु, ऊ, ऋ.
[4] तज्ज्ञातः — ऋ.
[5] इन्द्रियाणामन्यो — ऋ.
[6] हिशब्दो नास्ति — आ.
[7] इतिशब्दो नास्ति — ऋ.
[8] प्रतिपक्षोपक्रमः — इ.
[9] पुंपाशेशप्रकरणे — अ, आ, इ.
[10] मतङ्ग० विद्या० ६. १६–१९ पू०.
[11] चशब्दो नास्ति — इ, ऊ.
[12] पञ्चानामिन्द्रियाणाम् — अ, आ, इ, ई, उ, ए, ऐ; पञ्चानां प्रकाराणामपीन्द्रियाणाम्—ऋ.
[13] एकैकस्यैकैकं — आ.
[14] अत्र चशब्दोऽधिकः — ऋ.
[15] ०दत्तादिव पञ्च — ऊ, ऋ.
[16] 'ज्ञातुः' इति नास्ति — ऊ, ऋ; ज्ञातुस्तस्य ज्ञानं — ए; ज्ञातुः संज्ञानम् — ऐ.
[17] समस्तविषयत्वात् — अ.
[18] संप्रतीतयोः — इ.
[19] 'सः' इत्यत्र 'त्विष्टः' इति दृश्यते — ए.
[20] तथाभूतप्रमाता — अ, आ, इ, ई, उ, ए, ऐ.
[21] ०पक्षोऽस्तीत्यर्थः — इ.
[22] नास्त्यतश्चेतनानी० — ऊ, ऋ.
[23] अस्फुटप्रतिज्ञानम् — इ; अस्फुटा प्रतिज्ञा — ऊ, ऋ; अस्फुटप्रतिज्ञातम् — ऐ.
[24] अत्र 'अस्य' इत्यधिकम्—अ, आ, इ, ई, उ, ए, ऐ.
[25] ०र्थात्तदभावपरा० — इ.
[26] ०परापर्शः साक्षाद्वैकात्मकं दृष्टं — ए.
[27] ०स्वभावैकात्मद्रष्टुः — अ; ०स्वभावैकात्मकं द्रष्टुं — इ, ऐ; ०स्वभावैकात्मकदृश्यसुसंवेदनेन — ऊ; ०स्वभावैकात्मकत्वाद्दृश्यसुसंवेदनेन — ऋ.
[28] मतङ्ग० विद्या० ६. १६–१९ पू०.
[29] विस्तारेणेति — ऊ.
[30] मतङ्ग० विद्या० १८. ४७, ४८ पू०.
[31] व्याख्या क्रियते — इ.
[32] किमस्मान्न — ऐ.
[33] अत्रोच्यते — इ; उच्यते — ऊ, ऋ.

तमसोत्कृष्टवीर्येण [1]यथा सत्त्वं रजस्तथा ॥९८॥
[2]अभिभूतं तु [3]संघृष्य मिथुनाच्चाभवत्तदा ।
लेशानु[4]विद्धं रजसा तमस्तत्र विजृम्भते ॥९९॥
तेन [5]तत्करणं न स्यान्मूढत्वात्कार्यतां [6]गतम् ।
[7]करणस्थितये सिद्धं [8]यदाश्रित्य विचेष्टते ॥१००॥

भूताद्यहंकारवर्तिना [9]हि [10]अत्यन्तोत्कृष्टेन **तमसा** [11]**सत्त्वं रजश्च** [12]अभिभूतम् । अत एव तमोरजः[13]संवर्षणादेव **मिथुनात्** [14]**तन्मात्रमभवत्** । [15]तस्मिंस्तन्मात्रे रजोलेशानुविद्धम्[16] **तमः** [17]एव वर्तत इति यत उक्तं, **तेन** कारणेन [18]तमसात्यन्तं मूढीकृतत्वात् [19]तन्मात्रं **न** इन्द्रियवत् [20]**करणं** भवति । अपि तु [21]करणानां [22]स्थित्यर्थं **कार्यतामेव गतम्** । यतः करणैराविश्य [23]कार्यते चेष्टां योनितो [24]योन्यन्तरगमनात्मिकाम् । अतो [25]भूतवत् तन्मात्र[26]पञ्चकमपि सूक्ष्मदेहस्थं कार्यशब्देनोच्यत [27]इति ॥९८–१००॥

तत्र प्रथमम् — 'अभवच्छब्दतन्मात्रम्' इत्यादि ।

[28]**अभवच्छब्दतन्मात्रं** [29]**सूक्ष्मं नैवोपलक्ष्यते ।**
**वक्तव्यं ते मुनिव्याघ्र पुरस्तात्सुविचार्य** [30]**तु ॥१०१॥**
[31]**तन्मात्रशब्दः शेषार्थविनिवृत्त्यर्थमुच्यते ।**

---

[1] यदा — मु, उ, ओ.
[2] अभिभूतेषु संवृष्य — मु; अभिभूतेप् संपुष्य — उ; अभिभूतेषु संघुष्य — ओ.
[3] संघस्य — ऊ, ऋ.
[4] ०विद्धरजसा — उ; ० विष्टं रजसा — ऊ.
[5] तत्कारणं — ओ.
[6] गतः — उ.
[7] कारणस्थितये — मु, उ.
[8] समाश्रित्य — मु;
[9] हिशब्दो नास्ति — आ, ई, उ, ऊ, ऋ.
[10] अत्यन्तेनोत्कृष्टेन — आ, ई, उ; अनन्तोत्कृष्टेन — ऊ, ऋ.
[11] सत्त्वरजसश्चाभि० — इ.
[12] अभिभूतस्य सत एव — ऋ.
[13] संवर्षिणीयादेव — अ, आ; संकर्षिणी देव — इ, ऐ; संघनीयादेव — ऊ; संघाद्यादेव — ऋ; संकर्षि त्रिधा देव — ए.
[14] तन्मात्रमवव्यस्मिन् — ऊ, ऋ.
[15] तस्मिंस्तन्मात्रलेशानु० — अ.
[16] ०वेशानुसिद्धं — इ; ०लेशानुविद्धः — ए; ०लेशानुसिद्धं — ऐ.
[17] एवोक्तमिति — इ.
[18] तमसोऽत्यन्तमूढी० — अ, आ, इ, ई, उ, ए, ऐ.
[19] तत्तन्मात्रेणेन्द्रियवत् — ऊ; तन्मात्रेणेन्द्रियवत् — ऋ.
[20] कारणं — आ.
[21] कारणानां — ऊ, ऋ.
[22] सिद्ध्यर्थं — अ, इ.
[23] कार्यचेष्टितां योनितो — ऋ;
[24] योन्यन्तरागमना० — इ.
[25] 'भूतवत्' इति नास्ति — ऋ.
[26] ०पञ्चकं सूक्ष्म० — अ, आ, ई, उ, ए; ०पञ्चकसूक्ष्म० — इ, ऐ.
[27] इतिशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[28] अभावे चैव तन्मात्रं — उ.
[29] सूक्ष्मेणैवोपदृश्यते — उ.
[30] तम् — ओ.
[31] तन्मात्रशेषः शब्दार्थो विनि० — मु; तन्मात्रशेषे शब्दोत्थो विनि० — उ; तन्मात्रशब्दशेषार्थविनि० — ऊ, ऋ.

[1]तच्च [2]तन्मात्रमत्यन्तसूक्ष्मत्वादस्मदाद्य[3]गोचरमित्युक्तम् । [4]तच्चाकाशतत्त्वप्रकरणे [5]विस्तरेण वक्ष्यामः[6] । **तन्मात्रशब्दश्च** [7]तत्र शब्दगुणाच्छेषस्येति विशेषस्य [8]निवृत्त्यर्थमिति [9]**शब्दतन्मात्रं** [10]शब्दमात्रमेव । [11]तस्य [12]रूपमेव [13]तस्य [14]स्वरूपम् ; [15]न तु [16]स्पर्शतन्मात्रादिकमपीति यावत् ॥

'अतोऽन्यत्' इत्यादि ।

**[17]अतोऽन्यत्स्पर्शतन्मात्रं किंचिच्छब्दसमन्वितम् ॥१०२॥**
**रूपतन्मात्र[18]मप्येवं शब्दस्पर्शसमायुतम् ।**
**[19]ततोऽन्यद्रसतन्मात्रं प्रागुक्तत्रितयान्वितम् ॥१०३॥**
**गन्धतन्मात्रमप्येवं चतुष्टयसमन्वितम् ।**

अतश्च शब्दस्पर्शरूपरसगन्धतन्मात्राणि क्रमेण एकद्वित्रिचतुःपञ्चगुणानि सिद्धानि ॥

यद्येवं भूतान्यप्येवं[20]गुणान्येवेति तेभ्यस्तन्मात्राणां को विशेष इति । उच्यते — 'तन्मात्राणि' इत्यादि ।

**तन्मात्राण्यतिसूक्ष्माणि [21]भूतेभ्योऽनुपलब्धितः ॥१०४॥**

[22]तथागुणयोगेऽपि **भूतेभ्यस्तन्मात्राण्यतिसूक्ष्माणि** । [23]भूतानि [24]तु [25]स्थूलान्यस्मदाद्युपलभ्यानीत्ययं विशेषः ॥२०४॥

---

[1] 'तच्च' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[2] तन्मात्रमित्यत्यन्त० — ई, उ, ए.
[3] गोचर इत्युक्तम् — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[4] तच्चाकाशादितत्त्व० — ऊ, ऋ.
[5] विस्तारेण — इ.
[6] मतङ्ग० विद्या० १९. १८ उ० –२२ वृत्तौ ।
[7] तन्मात्रशब्दगुणाद्विशेषस्येति — इ; तत्र शब्दगतस्य शेषस्येति — ऊ; तन्मात्रशब्दगतस्य शेषस्येति — ऋ; तत्र शब्दगुणस्य शेषस्येति — ऐ.
[8] 'निवृत्त्यर्थमिति' इत्यस्य स्थाने 'ध्वनिः' इति दृश्यते — इ; 'विनिवृत्त्यर्थः' इति दृश्यते —ऊ; 'निवृत्त्यर्थः' इति दृश्यते — ऋ; 'निवृत्त्यर्थं' इति दृश्यते — ऐ.
[9] 'शब्दतन्मात्रं' इत्येतन्नास्ति — इ, ऊ, ऋ, ऐ.
[10] शब्दतन्मात्रमेव — अ, आ, इ, ए, ऐ.
[11] अस्य — ऐ.
[12] 'रूपमेव तस्य' इत्येतन्नास्ति — अ, आ, ऊ, ऋ; रूपमेवं — ई, उ, ए.
[13] 'तस्य स्वरूपं' इत्येतन्नास्ति — ई, उ, ए.
[14] 'स्वरूपं' इत्यत्र 'रूपं' इति दृश्यते — ऊ, ऋ.
[15] 'न तु' इत्यस्य स्थाने 'एवं' इति दृश्यते —अ, आ; 'न तु' इत्येतन्नास्ति — ई, उ, ए.
[16] तारामात्रादिकमपीति यावत् — इ; तारमद्रादिकमपीति यावत् — ऊ; तारमुद्रादिकमपीति यावत् — ऋ; तारमात्रादिकमपि यावत् — ऐ.
[17] अतोऽन्यत्स्थूलतन्मात्रं — ऊ;
[18] ०मित्येवं — ऊ, ऋ.
[19] अतोऽन्य० — ऊ ऋ; अथोऽन्य० — ओ.
[20] ०गुणान्येवं तेभ्यः — ऊ, ऋ.
[21] भूतेभ्योऽप्युपलब्धितः — ऊ, ऋ.
[22] तथानुगुण० — ए.
[23] 'भूतानि' इति नास्ति — ऊ, ऋ.
[24] तुशब्दो नास्ति — अ, इ, ऊ, ऋ, ऐ.
[25] स्थूलानि युष्मदाद्युप० — ऋ.

अथ तन्मात्रसाधनम् — 'कार्यत' इत्यादि ।

**कार्यतः कारणं सिद्धं कार्यं [1]स्यात्खादिपञ्चकम् ।**

भूतानि तावदाकाशादीनि पञ्च वक्ष्यमाणानि[2], तान्यस्मदादि[3]प्रत्यक्षत्वे सति बाह्येन्द्रियपरिच्छेद्यगुणत्वाद् घटादिवत् कार्याणि। अतस्तेषां कारणैर्भवितव्यम् । यानि [4]च [5]तानि कारणानि [6]तानि तन्मात्राण्युच्यन्ते ॥

अत एव — 'कार्यत्वम्' इत्यादि ।

**कार्यत्वं [7]कारणत्वं च तन्मात्राणां [8]प्रकीर्तितम् ॥१०५॥**
**नोपात्तं [9]करणत्वं स्यात्करणानि त्रयोदश ।**
**इन्द्रियाणि[10] दशैकं च गर्वो बुद्धिश्च सुव्रत ॥१०६॥**

अहंकारकार्यत्वं भूतकारणत्वमेव च **तन्मात्राणाम्** अत्र सिद्धम् । **न तु** [11]**करणत्वं** [12]कथंचनेति । [13]तत्र [14]**करणानि त्रयोदश** प्रोक्तानि । [15]तेषु [16]तु मध्यादेकादश करणान्येव । बुद्ध्यहंकारौ [17]तु [18]करणत्वेन कारणत्वेन च व्यवस्थिताविति ॥१०५–१०६॥

एवमहंकारादितत्त्वसप्तदशकं व्याख्यातमुपसंह्रियते — 'तत्त्वधर्म' इत्यादि ।

**तत्त्वधर्मोऽहंकृतश्च सेन्द्रियस्योपवर्णितः ।**
**[19]तन्मात्रैः सहितस्यास्य [20]दिङ्मात्रेण मयाधुना ॥१०७॥**
**कथ्यते [21]रुद्रवर्गस्य विभागोऽनुक्रमान्वितः ।**

---

[1] स्यात्ख्यातिपञ्चकम् — मु, उ, ओ.
[2] मतङ्ग० विद्या० १९–२३ प्रकरणेषु ।
[3] ०प्रत्यक्षे सति — इ, ऐ.
[4] 'च तानि' इत्येतन्नास्ति — ए.
[5] 'तानि' इति नास्ति — आ, ई, उ.
[6] 'तानि' इति नास्ति — ऊ.
[7] पञ्चतन्मात्रं मात्राणां परिकीर्तितम् — उ.
[8] प्रतिष्ठितम् — ऊ, ऋ.
[9] कारणत्वं स्यात्कारणत्वं त्रयोदश — ऊ, ऋ.
[10] इन्द्रियाणां — ऋ.
[11] कारणत्वं — अ, आ, ऊ, ऋ, ए, ऐ.
[12] कथंचिन्नेति — अ.
[13] 'तत्र' इति नास्ति — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[14] क्रमेणैतानि — इ.
[15] तेषां — इ.
[16] तुशब्दो नास्ति — अ, आ, ई, उ, ऋ; 'तु' इत्यत्र 'च' इति दृश्यते — ऊ.
[17] तुशब्दो नास्ति — ऐ.
[18] करणत्वे च व्यवस्थिता इति — इ; करणत्वे च व्यवस्थिताविति — ई, उ; करणत्वे कारणत्वे च व्यवस्थितः इति — ऐ.
[19] तन्मात्रस्य स्थितिश्चास्य — मु.
[20] तन्मात्रेण सहाधुना — मु; तन्मात्रेण मयाधुना — उ.
[21] रुद्रसर्गस्य — ऊ, ऋ.

अहंकृतः अहंकारस्य [1]सेन्द्रियस्य सतन्मात्रस्य [2]च [3]तत्त्वधर्मः, चशब्दाद् [4]वृत्तिधर्मश्चोपवर्णितः। अधुना [5]रुद्रवर्गस्य [6]विभागः भुवनधर्मः कथ्यते ॥

'श्रीकण्ठानुमताः' इत्यादि।

श्रीकण्ठानुमताः सन्तो ये रुद्रा भुवनेश्वराः ॥१०८॥
तेषां स्थानानि दिव्यानि नानारत्नोज्ज्वलानि तु।

[7]ते च रुद्राः सर्वे एव [8]अनन्तकृता अपि श्रीकण्ठस्यानुमतेन [9]कार्यकृतः ॥

तत्र [10]पञ्चाष्टकानां [11]मध्ये चतुर्णामष्टकानामाकाशादिषु [12]चतुर्षु भूतेषु [13]भुवनानि[14] [15]वक्ष्यमाणानीति, अत्र स्थूलेश्वरादेरेव पञ्चमस्याष्टकस्य भुवना[16]न्यष्टावुच्यन्ते — 'स्थूलेश्वरम्' इत्यादि।

स्थूलेश्वरमतः पूर्वं स्थानं मूर्धन्यवस्थितम् ॥१०९॥
चारुचामीकरप्रख्यं स्थानमन्यत्स्थलेश्वरम्।
शङ्कु[17]कर्णमतोऽधस्तात्तस्मात्कालञ्जरं स्मृतम्[18] ॥११०॥
मण्डलेशं च [19]माकोटं द्विरण्डमपरं ततः।
[20]छगलण्डं च विख्यातं स्थानं मुनिवरोत्तम ॥१११॥
स्थानान्येतानि रुद्राणां [21]भुवनैर्निचितानि तु।

एतानि [22]च भुवनानि, अहंकारादिभिः कर्मेन्द्रियान्तैर्द्वादशभिस्तत्त्वैरभिन्नाध्वनि[23] निविष्टानि[24], [25]तन्मात्रभुवनेषु रुद्रान्तराणां [26]वक्ष्यमाणत्वात्। विचित्रैश्च गृहैः एतानि उपेतानीति ॥

---

[1] 'सेन्द्रियस्य' इत्यत्र 'इन्द्रियस्य' इति दृश्यते — आ, इ, ऐ.
[2] चशब्दो नास्ति — अ, आ, इ, ई, उ ऊ, ऋ.
[3] तत्त्वधर्मश्च तत्त्वशब्दाद् — अ; तत्त्वधर्मस्य च शब्दाद् — इ; तत्त्वधर्मस्य शब्दाद् — ऋ; तत्त्वधर्मा च शब्दाद् — ए.
[4] व्यक्तिधर्म० — अ, इ, ऐ.
[5] रुद्रसर्गस्य — इ, ऊ, ऋ, ऐ.
[6] स्वभागो — इ, ऐ.
[7] एते — आ, इ, ई, उ, ए, ऐ.
[8] अनन्तकृतत्वेऽपि — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ; अनन्तकृतेऽपि — इ.
[9] कार्याः कृताः — ऊ; कार्यभूताः — ऋ.
[10] पञ्चकाष्टकानां — आ, ई, उ.
[11] मध्याच्चतुर्णा० — ऊ, ऋ.
[12] चतुर्भूतेषु च भुवनानि — इ; चतुर्भूतेषु भुवनानि — ऐ.
[13] भूतभुवनानि — अ.
[14] अत्र चशब्दोऽधिकः — इ.
[15] वक्ष्यतीत्यत्र — ऊ, ऋ; मतङ्ग० विद्या० १९. ३४ उ० –३८ पू०; २०, ५१ उ० – ५५; २१, १६ उ० –१९; २२. १३ –१५.
[16] ०न्यष्टाप्युच्यन्ते — इ.
[17] ०कर्णमधस्तात्तु — ऊ, ऋ.
[18] कालकरं स्मृतम् — उ; कलञ्जरं शुभम् — ऊ, ऋ.
[19] माकोटिं — ऊ, ऋ.
[20] छगलाण्डं — ऊ, ऋ.
[21] भुवनैर्निश्चितानि तु — ओ.
[22] चशब्दो नास्ति — इ.
[23] तत्त्वभिन्नाध्वनि — इ; 'अभिन्नाध्वनि' इति नास्ति —ऊ, ऋ.
[24] निर्मितानि — ऊ, ऋ.
[25] तन्मात्राभुवनेषु — ऐ.
[26] मतङ्ग० विद्या० १८. ११३ उ० –११५.

किं च — 'तेषाम्' इत्यादि ।

**तेषां स्वपरिभाषाभिः क्षेत्राण्यत्र स्थितानि तु ॥११२॥**
**निगूढ[1]करणाः सूक्ष्मा रुद्राः क्रीडन्त्यनिन्दिताः ।**

[2]पञ्चाष्टकानां [3]मध्ये [4]वक्ष्यमाणानां स्थाण्वादीनामिव **तेषामपि** स्थूलेश्वरादीनाम् **अत्र** अस्मिन् [5]भूलोके **[6]क्षेत्राणि** नामभिः प्रसिद्धान्येव[7] । यदुक्तं [8]बृहद्दाधीचे — "[9]पञ्चाष्टकानि स्थानानि [10]भूलोकेऽपि" इत्यभिधाय

"ये त्यजन्ति [11]स्वकान्प्राणान्स्थानेष्वेतेषु[12] मानवाः ।
[13]ब्रह्माण्डं ते विनिर्भिद्य यान्ति पञ्चाष्टकं पदम् ॥" इति ॥

तन्मात्रेषु [14]तु पञ्चैव [15]विश्वदेवादीनां पञ्चानां रुद्राणां [16]भुवनानीत्युच्यते — 'तन्मात्रेष्वथ' इत्यादि ।

**तन्मात्रेष्वथ [17]ये रुद्रा योगैश्वर्यबलान्विताः ॥११३॥**
**[18]क्रीडन्त्यक्लिष्टकर्माणस्तेषां नामानि मे शृणु ।**
**विश्वदेवो [19]विरूपाक्षः सहिष्णुर्विभुरेव [20]च ॥११४॥**
**मनोवेगश्च विख्यातः सूक्ष्माचार[21]गुणान्विताः ।**
**[22]येभ्यो [23]येऽनुचरास्तत्र तेषां संख्या न विद्यते ॥**
**सर्वज्ञाः सर्वकर्तारः स्वेच्छारूपविधायकाः ॥११५॥**

---

[1] किरणाः — मु, उ, ओ.
[2] पञ्चात्मकानां — ए.
[3] मध्याद् — ऊ, ऋ.
[4] वक्ष्यमाणादीनां — इ, ए, ऐ; मतङ्ग० विद्या० १९. ३४ उ० — ३८ पू०.
[5] भूर्लोके — अ, आ, ई, उ, ए, ऐ.
[6] 'क्षेत्राणि' इत्यत्र 'एतानि तन्मात्राणि' इति दृश्यते — इ.
[7] अत्र इतिशब्दोऽधिकः — अ, आ, इ, ई, उ, ए, ऐ.
[8] बृहद्दधीचे — अ, ऋ; ब्रह्मदधीचे — ए, ऐ; ग्रन्थोऽयं न लभ्यते ।
[9] पञ्चाष्टकस्थानानि — ऊ, ऋ.
[10] भूर्लोकेऽपीत्यभिधाय — अ, आ, ई, उ, ऐ; भूर्लोकेऽभिधाय — ऊ, ऋ; भूर्लोकेत्यभिधाय — ए.
[11] 'स्वकान्' इत्यत्र 'सदा' इति दृश्यते — ऊ, ऋ.
[12] स्थानेषु तेषु — इ.
[13] ब्रह्माण्डान्ते — अ, आ, ऐ; ब्रह्माण्डान्तं — ऊ, ऋ; ब्रह्माण्यन्ते — ए.
[14] तुशब्दो नास्ति — आ, ई, उ, ऊ, ऋ, ऐ.
[15] विश्वेदेवादीनां — अ, ऋ.
[16] भुवनान्युच्यन्ते — अ, आ, इ, ई, उ; भुवनानीत्युच्यन्ते — ऊ.
[17] रुद्रा ये — ऊ, ऋ, ओ.
[18] क्रीडन्त्युत्कृष्ट० — ऊ, ऋ; क्रीडन्त्यक्लिष्टकर्माणां — ओ.
[19] विरूपाक्षोऽसहिष्णुः — मु, उ, ओ.
[20] हि — मु, उ, ओ.
[21] ०गुणान्वितः — ऊ, ऋ.
[22] एभ्यो — ऊ.
[23] य उचितास्तत्र — मु; ये तु चितास्तत्र — उ; येऽनुचितास्तत्र — उ० पाठान्तरम्.

[1]अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय[2] श्लोकः — 'तत्त्वं मया' इत्यादि।

**तत्त्वं मया कारणकार्यभेदात् सूक्ष्माक्षयुक्तं [3]विधिनोपदिष्टम्।**
**[4]तच्चान्वयानन्वयधर्मसंस्थं भूतान्यथो विस्तरतः शृणुष्व ॥११६॥**

**तत्त्वम्**[5] अहंकाराख्यम्। एतद्वैकारिकादिकारणत्रय[6]भेदेन, बुद्धिकार्यतया [7]च, सूक्ष्मैस्तन्मात्रैरक्षैश्च इन्द्रियैर्युक्तम् **उपदिष्टम्** अहंकारादिसप्तदशतत्त्वात्मकमित्यर्थः। **तच्च** [8]प्रकृतत्वात् तैः सूक्ष्माक्षैः सह **अन्वयानन्वयधर्मसंस्थं** साधर्म्यवैधर्म्ययुक्त[9]मुपदिष्टम्। तथा हि — तैः सहाहंकारस्य कार्यत्वेन साधर्म्यं, कारणत्वेन त्विन्द्रियैः सह वैधर्म्यं, तन्मात्रैः साधर्म्यं, [10]करणत्वेन पुनस्तन्मात्रैर्वैधर्म्यम्, इन्द्रियैः [11]साधर्म्यमिति व्याख्यातस्योपसंहारः। [12]अथ व्याख्येयस्योपक्रमः — [13]**भूतान्यतो** [14]**विस्तरतः** [15]**शृणुष्व** इति ॥११६॥

इति [16]श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [17]मतङ्गवृत्तौ [विद्यापादे] [18]त्रिपर्वपदार्थे, [19]अहंकारादिसप्तदशतत्त्वप्रकरणम् [अष्टादशं समाप्तम्]
**अष्टादशः पटलः**

---

[1] अतः — ऐ.
[2] अत्र चशब्दोऽधिकः — अ.
[3] विधिवत्प्रदिष्टम् — उ.
[4] तस्यान्वयादन्वय० — ऊ, ऋ.
[5] अत्र 'एतद्' इत्यधिकम् — ऋ.
[6] ०भेदेन कार्यतया च — इ; भेदेन कार्यकार्यतया च — ऊ.
[7] चशब्दो नास्ति — आ, ई, उ.
[8] प्रकृतितत्त्वान्तैः — इ, ऐ.
[9] ०मुद्दिष्टम् — इ.
[10] कारणत्वेन — अ, ऊ, ऋ, ए, ऐ.
[11] सहधर्म्यमिति — ऐ.
[12] अथशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[13] भूतान्यतिविस्तरतः — ऊ, ऋ.
[14] विस्तारतः — आ,
[15] शृण्विति — इ, ऐ.
[16] 'श्रीभट्ट' इति नास्ति — अ; 'श्री' इति नास्ति — आ, ऋ, ऐ.
[17] मतङ्गप्रवृत्तौ — ऋ.
[18] त्रिपदार्थे — इ.
[19] 'अहंकारादि' इति नास्ति — ऊ, ऋ.

# एकोनविंशः पटलः

## आकाशतत्त्वप्रकरणम्

**अथ भूताधि[1]कारो यः प्राप्तो न्यायेन सांप्रतम् ।**
**वर्णयिष्ये [2]यथा तेभ्यस्तन्मात्रेभ्यो [3]विनिर्गतः ॥१॥**

**अथेति** अहंकारादितन्मात्र[4]पर्यन्तसप्तदश[5]तत्त्व[6]विचारादनन्तरं भूतानामधिकारः, [7]येन [8]भोगायतनान्यधिक्रियन्ते। स तत्त्वभूत[9]भुवनात्मकः त्रिपर्वपदार्थरूपो **यथा तन्मात्रेभ्यो** [10]**विनिर्गतः** तथा क्रमात् **प्राप्तः**[11] वर्ण्यत इति। अत्र [12]च पदार्थादि[13]संबन्धाः [14]प्राग्वदेव [15]द्रष्टव्याः। वाक्यात्मकस्तुसंबन्धः —

[16]"तन्मात्राण्यतिसूक्ष्माणि [17]भूतेभ्योऽनुप[18]लक्षितः ।"

इत्यादिभिरनेक[19]विधः ॥१॥

[20]अत्र तावद्भूतसाधनमुच्यते — 'भूतानाम्' इत्यादि ।

**भूतानां पञ्चकं सिद्धं क्षोण्यन्तं [21]खपुरस्सरम् ।**
**स्थितये सर्वभूतानां [22]शरीराण्यसृजत्पुरा ॥२॥**
**[23]ततोऽभिध्याय विश्वात्मा [24]ब्रह्मा लोकपितामहः ।**
**पानान्न[25]शयनाधारस्थानासनविसर्पणे ॥३॥**
**[26]स्थूलानि [27]तद्विशिष्टानि सृष्टवान्भूतनायकः ।**

---

[1] ०कारोऽयं — मु, उ, ऊ, ऋ.
[2] तथा — मु, उ, ओ.
[3] विनिःसृताः — उ, ओ; विनिःसृतः — ऊ, ऋ.
[4] ०पर्यन्तं सप्त० — अ, इ, ऊ, ऋ.
[5] 'तत्त्व' इति नास्ति — इ, ऐ.
[6] ०विरचनानन्तरं — अ, आ, ई, उ, ए; ०विरचितानन्तरं—इ; ०विचारतोऽनन्तरं — ऐ.
[7] यो न — ऊ, ऋ.
[8] भोगायतनान्यवधिक्रियन्ते — इ, ऐ; भोगायातान्यधिक्रियन्ते — ऊ, ऋ.
[9] ०भुवनात्मकत्रिपर्वपदार्थ० — अ, आ, ई, उ, ए, ऐ; ०भुवनात्मकत्रिपदार्थ० — इ.
[10] निर्गतः — ऋ.
[11] क्रमप्राप्तः — ऊ, ऋ.
[12] चशब्दो नास्ति — आ, ई, उ.
[13] संबद्धासंबद्धाः — ऊ; संबन्धः — ऐ.
[14] मतङ्ग० विद्या० तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत्।
[15] द्रष्टव्यः — ऐ.
[16] मतङ्ग० विद्या० १८. १०४ उ०; तन्मात्रा ह्यति० — इ.
[17] भूतेभ्योऽप्युप० — ऊ, ऋ.
[18] ०लभ्यते — आ.
[19] विधिः — इ.
[20] अथ — ऋ.
[21] च पुरा ततः — उ; खपुरः स्थितम्—ऊ, ऋ.
[22] शरीरमसृजत्प्रभुः— ओ.
[23] ततोऽभिधाय — ऋ.
[24] ब्रह्मलोक० — ऊ, ऋ.
[25] ०शयनाधारास्था० — ऋ.
[26] स्थलानि — ऋ.
[27] च विशिष्टानि — उ.

भूतपञ्चक[1]मेतत्तावत् [2]**सर्वभूतानां** मनुष्यादीनाम् आकाशादिपृथिव्यन्तं प्रत्यक्षादिना **स्थितये** [3]भुवनाकारतया **सिद्धम्** । **ततः** एव भूतपञ्चकात् **शरीराणि** स्थूलानां वक्ष्यमाणत्वात् सूक्ष्माण्यणिमादियुक्तानि कर्मविपाकवैचित्र्यम् **अभिध्याय** [4]**ब्रह्मा** लोकानां[5] [6]भूम्यादीनां पितामहः स्रष्टा न तु [7]देवयोन्यादिमध्यपठितः प्रथमम् **असृजत्** । ततः [8]पानान्नशयनादि भोगार्थं **स्थूलानि** शरीराणि तेभ्यः प्रागुक्तेभ्यः शरीरेभ्यो विशिष्टानि स एव [9]**सृष्टवानिति** ।।

ब्रह्मणोऽस्मिन् [10]भुवने शरीरादीनां [11]कर्तृत्वम् । न तु तत्त्वभुवनानाम् । अनन्तेशश्रीकण्ठाभ्यामेव तयोः कृतत्वादित्युक्तम्[12] । [13]तेन — 'विशेषाः' इत्यादि ।

**विशेषाः क्रमशो व्यक्ता धातुर्योगबलेरणात् ।।४।।**

[14]प्रागुक्ताः शरीराणां [15]सूक्ष्मत्वादयो **विशेषाः** ब्रह्मविहितसंबन्ध[16]प्रेरणया **व्यक्ताः** । यदुक्तम्[17]—

"[18]अष्टविकल्पो [19]दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ।" इति ।।४।।

तत्रापि — 'लोकत्रयविभूत्यर्थम्' इत्यादि ।

**लोकत्रयविभूत्यर्थं तदूर्ध्वं [20]सूक्ष्मजानि [21]तु ।**
**[22]यतस्ते योगिनो देवाः सूक्ष्मदेहा ह्यनिन्दिताः ।।५।।**
**विचरन्ति महात्मानः [23]शुद्धाचारगुणान्विताः ।**

---

[1] ०मेव तावत् — ऐ.
[2] सद्भूतानां — ई, उ.
[3] भुवनाधिकारतया — इ.
[4] ब्रह्मादिलोकानां—अ; ब्रह्मलोकानां—इ,ऋ.
[5] अत्र 'मध्ये' इत्यधिकम् — इ.
[6] भूरादीनां — ऊ, ऋ, ऐ.
[7] योन्यष्टकादिमध्य० — अ, आ, ई, उ, ए; योन्यादिमध्य० — इ; योगाष्टकमध्य० — ऐ.
[8] पानाशनादि — ऐ.
[9] सृष्टानीति — ऐ.
[10] भुवनेश्वरादीनां—इ ऐ; भुवने शरीराणां — ऊ, ऋ.
[11] कर्तृत्वभुवनानां — इ; कर्तृत्वं न भुवनानां — आ, ई, उ, ऊ, ऋ, ए.
[12] तत्त्वभुवनानामनन्तेशकर्तृकत्वोक्तिः — मतङ्ग० विद्या० ५. २८ उ० — ३०; ९. २–६ वृत्तौ; तत्त्वभुवनानां श्रीकण्ठकर्तृकत्वोक्तिः — मतङ्ग० विद्या० १६. १ — १३ पू० वृत्तौ ।
[13] ते च — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[14] प्रागुक्तशरीराणां — इ, ऐ.
[15] सूक्ष्मत्वात्तयोर्विशेषाः—इ; सूक्ष्मादयो विशेषाः — ऋ.
[16] प्रेरणाया व्यक्ताः — ऋ; प्रेरणयाप्युक्ताः–ए.
[17] सांख्यका० ५३.
[18] 'ऽअष्टविकल्पो' इत्यारभ्य ५. ६ पू० वृत्तौ 'व्यक्ताः' इत्यन्तं नास्ति — आ.
[19] दैवस्तैर्यग्योनिश्च — अ, ए; दैवस्तिर्यग्योनिश्च — इ; देवस्तिर्यग्योनिश्च — ई, उ; देवस्तैर्यग्योनिश्च — ऋ, ऐ.
[20] सूक्ष्मजा हि तु — ओ.
[21] हि — उ.
[22] ततस्ते — मु, उ, ओ.
[23] शुद्धाधारक्रिया० — मु, उ; शुद्धाचारक्रिया० — ओ.

[1]स्वर्भुवर्भूलक्षणेषु [2]त्रिषु लोकेषु भोगार्थं स्थूलस्थूलतरस्थूलतमक्रमेण व्यक्ताः। [3]तत ऊर्ध्वं महर्लोकादिषु चतुर्षु [4]सूक्ष्मसूक्ष्मतरादिक्रमेण शरीराणां [विशेषाः] व्यक्ताः। [5]**यतः** तेषु भुवनेषु [6]**देवाः** [7]सूक्ष्मदेहाः एवाणिमादि[8]गुणयोगेन **विचरन्ति**। [9]पूर्वेषु [10]त्रिषु मनुष्यादय इति। एवं [11]वक्ष्यमाणब्रह्माण्डान्तर्वर्ति[12]भूलोकादिविषयेऽस्मिन् [13]ब्रह्मणः [14]शरीरादिकर्तृत्वमुक्तम्[15]॥

अधुना [16]तनो वहिराकाशादीनां चतुर्णां भूतानामवस्थितिं दर्शयितुं तन्मात्रभेदेनोत्पत्तिरुच्यते[17]—'आकाशम्' इत्यादि।

> **आकाशं शब्दतन्मात्रादवकाशत्वलक्षणम् ॥६॥**
> **व्यक्तं व्यक्तिकरं विप्र पृथक्संस्थानसिद्धये।**
> **भूतानां भुवनानां च गत्यर्थं [18]चाध्वसन्ततौ ॥७॥**

[19]पूर्वं [20]ह्याकाशं कार्यत्वेन तन्मात्राद्व्यक्तमित्युक्तम्। अत्र तत्त्वचतुष्टयविशेष[21]दर्शनाय **शब्दतन्मात्राद् व्यक्तम्** इत्युच्यते। तच्च [22]अवकाशस्य भावोऽवकाशत्वं [23]येनाकाशस्य सिद्धिः। [24]अमूर्तत्वेन तल्लक्षणं, यस्य [25]तत्तथाभूतं व्यक्तम्। [26]अमूर्तं [27]ह्यात्मादिवत् स्वदेशेऽन्यस्यावकाशं प्रयच्छति। [28]न तु पृथिव्यादिवद् [29]मूर्तमित्यर्थः। तथा हि— **भूतानां, भुवनानां** [30] **च पृथक् स्थान-**

---

[1] स्वभूर्भुवलक्षणेषु — इ; स्वभुवर्लक्षणेषु — ए; स्वभूभुवलक्षणेषु — ऐ.
[2] त्रिलोकेषु — अ, इ, ऋ, ए, ऐ.
[3] ततस्तूर्ध्वं — ई, उ, ऐ; तदूर्ध्वं — ए.
[4] सूक्ष्मतरादि० — इ.
[5] ततः — अ, आ, ई, उ; 'यतः' इति नास्ति — ए.
[6] देहाः — आ.
[7] सूक्ष्मदेवाः — अ, ऋ.
[8] 'गुण' इति नास्ति — ऊ, ऋ.
[9] पूर्वेषां — इ.
[10] 'त्रिषु' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[11] मतङ्ग० विद्या० २३. १०–८५ श्लोकेषु।
[12] ०भूर्लोकादि० — आ, ई, उ, ऐ.
[13] ब्रह्मशरीरादि ० — इ.
[14] शरीरकर्तृत्वम् — ऊ, ऋ.
[15] मतङ्ग० विद्या० १६. ९ उ० –१३ पू० वृत्तौ; 'उक्तम्' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[16] ततोऽपि बहि० — ऊ, ऋ, ए, ऐ.
[17] ०भेदेनोत्पत्तिरित्युच्यते — ऊ.
[18] चोर्ध्वसन्ततौ — ओ.
[19] मतङ्ग० विद्या० १८. १०५ पू० वृत्तौ।
[20] ह्याकाशः — इ ए, ऐ; त्वाकाशं — ऋ.
[21] दर्शनात् — अ, आ, इ, ई, उ, ऊ, ऋ, ए.
[22] आकाशस्य — ऊ, ऋ.
[23] येनावकाशस्य — इ, ऊ, ऋ, ऐ.
[24] न मूर्तत्वेन — अ, आ, ई, उ, ए; तन्मूर्तत्वेन — इ.
[25] 'तत्' इति नास्ति — ऋ.
[26] अमूर्तो ह्यात्मादि० — इ; अमूर्त त्वात्मादि० — ऋ.
[27] 'ह्यात्मादिवत्' इत्यस्मिन्पदे 'वत्' इत्यतः प्रभृति २०. १ उ०, २ श्लोकवृत्तौ 'स्पर्शशब्दधृतिकम्प' इत्येतत्पर्यन्तं लुप्तम् — ऋ.
[28] ननु — इ.
[29] मूर्तत्वमित्यर्थः — आ.
[30] चशब्दो नास्ति — ऊ.

[1]सिद्धये, [2]गमनागमनाय [3]च [4]तद्व्यक्तिकरम्। न हि पृथिव्यादिवत् तस्मिन्नपि [5]मूर्ते [6]तेषामिव[7] तदुपपद्यते; अन्यस्य प्रसराभावादिति ॥६–७॥

अथ [8]तथाभूताकाशसिद्धौ प्रमाणम् — 'तच्छब्दगुण' इत्यादि।

**तच्छब्दगुण[9]साधर्म्यात्सिद्धं[10] यस्मात्तदाश्रितः।**
**शब्दोऽभिव्यक्तिमायाति नान्यथा मुनिपुङ्गव ॥८॥**

शब्दलक्षणस्य [11]गुणस्य यद्गुणान्तरैः[12] साधर्म्यं, ततः **सिद्धं तद् आकाशम्। यस्मात् तदाश्रितः** [13]यः [14]प्रतिश्रुत् **शब्दः, सोऽन्यथा** [15]**नाभिव्यक्तिमायाति।** अयमर्थः — वाय्वादीनामपि पृथिव्यन्तानां[16] महाभूतानां — [17]"तत्क्षोभादभवद्वायुर्द्विगुणो [18]व्यूहलक्षणः।" इत्यादिना, [19]'लोकधात्री महा[20]मुने', 'गुणैः पञ्चभिरन्विता'। इत्यन्तेन [21]शकशकादिकान् [22]खटखटान्तान् शब्दान् वक्ष्यतीति। तेभ्यो विशिष्टस्यास्य [23]प्रतिश्रुच्छब्दस्यापि [24]गुणत्वादवश्यमाश्रयेण गुणिना भवितव्यं, पृथिव्यादिगत[25]खटखटादि[26]शब्दस्येव। न च पृथिव्यादयस्तस्याश्रयत्वेन[27] संभवन्ति। [28]ततोऽन्यत्रैव [29]अवकाशगतत्वे[30]नोत्पत्तेः। [31]मूर्तद्रव्याभावा-

---

[1] ०सिद्धयो — ई, उ.
[2] गमागमाय — आ, इ, ई, उ, ऊ, ए.
[3] चशब्दो नास्ति — इ.
[4] तद्व्यक्तिकरणम् — इ; तदव्यक्तिकरम् — ई, उ; तद्व्यक्तिकारणम् — ए.
[5] मूर्तेः — इ.
[6] तेषामेव — इ, ए.
[7] इवशब्दो नास्ति — ऊ.
[8] 'तथा' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[9] सामर्थ्यात् — मु, उ.
[10] सिद्धि — ओ.
[11] 'गुणस्य' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[12] यद्गुणान्तरेण — अ, आ, इ, ई, उ, ए, ऐ.
[13] यतः श्रुतिः आकाशादिशब्दस्यान्यथा — इ; यतः प्रतिश्रुतीकादिशब्द . . . न्यथा — ऐ.
[14] प्रतिगृहीतशब्दः — अ; प्रतिश्रुक्शब्दः — आ; प्रतिशक्शब्दः — ई, उ; प्रतिश्रुत्कादिशब्दः — ऊ; प्रति यदृक्शब्दः — ए.
[15] निनादाभिव्यक्तिमायाति — इ, ऐ.
[16] 'अपि पृथिव्यन्तानां' इत्येतन्नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[17] मतङ्ग० विद्या० २०. २ पू०.
[18] व्यूहने प्रभुः — इ, ए, ऐ; प्रेहने प्रभुः — ऊ.
[19] मतङ्ग० विद्या० २३. १ पू०, उ०.
[20] ०मुनेः — आ, इ.
[21] शकशकान् — इ.
[22] कटकटान्तान् — अ; खटखटकानानन्तान् — इ; 'खटखटान्टान्' इति नास्ति — ऐ.
[23] प्रतिसृक्शब्द० — अ; प्रतिश्रुक्शब्द० — आ, ई, उ; प्रतिशुक्लादिशब्द० — इ; प्रतिश्रुत्कादिशब्द० — ऊ; प्रतिश्रुःशब्द० — ए; प्रतिश्रुतिकादिशब्द० — ऐ
[24] गुणत्वादस्या आश्रयेण — अ; गुणत्वादस्याप्याश्रयेण — आ, इ, ई, उ, ए; गुणत्वादप्याश्रयेण — ऐ.
[25] ०कटकटादि० — अ, आ; ०खटखटजटादि० —ऊ.
[26] ०शब्दस्येव च न पृथिव्या० — इ, ऐ.
[27] अत्र नकारोऽधिकः — ए.
[28] ततोऽन्यस्यैव — अ, आ, इ; 'ततः' इत्यस्यानन्तरं 'अन्यगतत्वेनाकाशगतत्वेनोत्पत्तेः' इत्यधिकम् — उ.
[29] आकाशगतत्वे० — अ, आ, ई, उ; आकाशभूतत्वे० — ए.
[30] ०नोपलब्धेर्नापि मूर्त० — ऊ.
[31] तद्द्रव्याभावात्म० — इ.

त्मकत्वेन [1]अवस्तुत्वादवकाशोऽप्याश्रयत्वेन [2]न संभवति। तत्पारिशेष्याद् योऽस्याश्रयस्तदाकाशं सिद्धमिति ॥८॥

[3]ननु कैश्चिज्जैमिनीयैरवकाशात्मक[4]मेवाकाशं प्रत्यक्षमिष्यते। तदतीन्द्रियत्वे हि दूरादाकाशदेशात् [5]पततः शकुनेरपराकाश[6]देशप्राप्ति[7]र्नावगम्यतेतराम्। [8]तस्याकाशदेशसंयोगस्य प्रत्यक्षत्वात् [9]तत्प्रत्यक्षमिति। यथाह **मण्डनो भावनाविवेके**[10] —

"कथं गम्येत [11]वयसो [12]नियतापरदेशतः[13]।
[14]पततो[15]ऽक्षनिवृत्तश्चेद्विहायोदेशसंगमः[16] ॥" इति।

तदयुक्तम्। यतः — 'नासतश्च' इत्यादि।

**नासतश्च प्रसिद्धं स्यात्तच्च वस्तुसमाश्रयात्।**

सतो मूर्तद्रव्याभावात्मकादवकाशात् [17]तदाकाशं सिद्धं **स्यात्**। [18]नाप्यसतोऽरूपात्[19]। यदाहुः[20] —

[21]"महद्यन्मूर्तद्रव्यत्वाद्रूपाच्चैवोपलब्धितः।" इति।

न [22]चावकाशस्य रूपमस्ति। किमिदं तर्हि दृश्यते। आलोकाख्यं तेजोद्रव्यमेव सकलभुवनव्यापीति। ततः [23]पततः शकुनेः [24]संयोगविभागाः प्रत्यक्षा इति, नातो[25]ऽन्यथासिद्धाद्धेतोराकाशस्य प्रत्यक्षत्वसिद्धिः। कथं [26]तर्हि लोकस्यावकाश एवाकाशमिति प्रतिपत्तिः। [27]मूर्तद्रव्याभावात्मकावकाशावच्छेदेन [28]तद् यतो वस्तुनः शब्दस्याश्रयतया [29]सिद्धम्। ततो भ्रान्त्या तद्रूपेण प्रतीयते। [30]न परमार्थत इति।

---

[1] अवस्तुत्वादित्यस्मिन्पदे 'स्तुत्वात्' इत्यारभ्य १७, १८ पू० वृत्तौ 'तमसा' इत्यन्तं लुप्तम् —ऊ; अवस्तुत्वाच्चावकाशो० — इ.
[2] नकारो नास्ति — इ, ई, उ.
[3] न तु — इ.
[4] ०मेवाकाशप्रत्यक्षम् — इ.
[5] प्राप्तिः — इ; प्रतिपत्तिः — ऐ.
[6] 'देश' इति नास्ति — ए.
[7] ०र्नावगम्यते गम्यतेतराम् — आ, ई, उ; र्नापगम्येत गम्यते तारं — इ, ऐ.
[8] तस्याकाशभेदेन सं० — इ.
[9] 'तत्' इति नास्ति — इ, ऐ.
[10] कारिका १९.
[11] वयसा — अ; वा यतो — ए.
[12] नियतपर० — ऐ; नियताधार० — मुद्रितभावनाविवेकपाठः।
[13] ०देशता — मुद्रितभावनाविवेकपाठः।
[14] चलतो० — मुद्रितभावनाविवेकपाठः।
[15] ०ऽक्षनिवृत्तिश्चेद् — अ, आ; ० ऽक्षातिवृत्ताश्चेद् — मुद्रितभावनाविवेकपाठः।
[16] ०संगमाः — मुद्रितभावनाविवेकपाठः।
[17] आकाशसंसिद्धि—अ; तदाकाशं संसिद्धि—आ.
[18] नात्यसतो — ए.
[19] ०ऽरूपत्वात् — इ.
[20] आकरो नोपलभ्यते।
[21] महवन्मूर्तद्रव्य० — आ; इत्यनेकद्रव्य० — इ; महत्यनेकद्रव्य० — ऐ.
[22] चाकाशस्य — इ, ऐ.
[23] 'पततः' इति नास्ति — इ, ऐ.
[24] संयोगा विभागाः — इ, ऐ.
[25] ०ऽन्यथा हि सिद्धा० — इ.
[26] तर्ह्यलोक० — ऐ.
[27] मूर्तिद्रव्याभावात्मिका० — इ; मूर्तिद्रव्याभावात्मका० — ऐ.
[28] यद् — इ; तद्यत्यन्तावस्तुनः — ऐ.
[29] सिद्धः — ऐ.
[30] नकारो नास्ति — इ.

तथा हि— 'स्थाण्वभावाद्' इत्यादि ।

**स्थाण्वभावाद्यथा चित्रं न क्वचित्संप्रदृश्यते ॥९॥**
**शब्दस्यापि ततोऽस्तित्वा[1]दाकाशं गुणवत्सदा ।**

शब्दो हि गुणत्वादाश्रयमपेक्षते । **यथा** [2]**चित्रं** पटकुड्यादीत्युक्तम् । न [3]चावकाशो [4]मूर्तद्रव्याभावात्मकत्वादाश्रयो भवितुमर्हति । ततस्तत्समानदेश[5]विशिष्टस्य **शब्दस्य** [6]तत्र **अस्तित्वाद् आकाशं** शब्द[7]गुणमत्र प्रतीयत इति ॥

अधुना यैर्महता क्लेशेनाकाशस्य नित्यत्वं साध्यते नैयायिकादिभिः तेषां [8]स वृथैव क्लेशः । [9]सत्कार्यदृष्टचैव तत्त्वान्तराणामिव तस्यापि [10]नित्यत्वसिद्धेरित्युच्यते—'तच्चापि' इत्यादि ।

**तच्चापि शब्दतन्मात्राद्व्यक्तं संप्रति लक्ष्यते ॥१०॥**
**संहारे तु प्रणष्टं स्याद्भोगिनं प्रति निश्चितम् ।**
**येनावकाशकं वस्तु न किंचिदपि विद्यते ॥११॥**

न केवलं पूर्वयुक्त्या [11]कारण[12]पूर्वकमेव यावत् [13]**तद्** आकाशं **शब्दतन्मात्राद्व्यक्तम्** [14]इत्युक्तम् । **संप्रति** वर्तमानावस्थायामस्यां **लक्ष्यते** इत्युक्तम् । [15]न त्वसदेवोत्पन्नम् । महा[16]प्रलयेऽप्यव्यक्तमेव [17]**नष्टं स्यात्** । न तु वस्तुतो नष्टम् । **येन** प्रागुक्तक्रमतो [18]मूर्तद्रव्याभावात्मकावकाशावच्छिन्नमाकाशात्मकं **वस्तु न किंचिदपि** व्यक्तात्मना तदानीं विद्यते । सर्वस्य शक्तिरूप[19]तयैवावस्थितेरित्युक्तं [20]प्राक् सत्कार्यसिद्धौ ॥१०—११॥

अत्र दृष्टान्तम्— 'ध्वस्ते' इत्यादि ।

**ध्वस्ते व्यापारनिलये प्रलीनस्य तदात्मनः ।**
**न [21]चास्यात्यन्तिकोऽभावो न चोत्पत्तिरिहेष्यते ॥१२॥**
**नित्यत्वान्मुनिशार्दूल स तथाप्युपचर्यते ।**

---

[1] ०दाकाशगुणवत्सदा — ओ.
[2] चित्ररूपं पट० — अ, आ, ऐ.
[3] चापराकाशो — इ; चास्वरकाशो — ऐ.
[4] मूर्तेर्द्रव्यभावा० — इ; मूर्तद्रव्यभावा० — ऐ.
[5] ०विशिष्टशब्दस्य — इ.
[6] तत्रास्थित्वा० — ए; तत्रास्थिततत्वा० — ऐ.
[7] ०गुणं नात्र — इ; ०गुणकमत्र — ऐ; ०गुणं तत्र — ऐ० पाठान्तरम् ।
[8] सत्यं वृथैव — अ; सर्वथैव — इ.
[9] सत्कार्यदृष्टैव — अ; सत्कार्यदृष्टचेव — ई, उ.
[10] नित्यत्वं सिद्धेरि० — अ; नित्यत्वसिद्धैरि० — इ.
[11] अकारण० — अ, आ, ई, उ.
[12] ०पूर्वकत्वमेव — अ.
[13] तावदाकाशं — अ, आ, ई, उ, ए.
[14] इतिशब्दो नास्ति — आ, इ, ई, उ, ए, ऐ.
[15] नन्वसदेवोत्पन्नम् — आ.
[16] ०प्रलयो व्यक्त० —इ, ऐ; ०प्रलयेऽपि व्यक्त० —ई, उ.
[17] नष्टव्यं स्यात् — ए.
[18] मूर्त दृष्ट्वा भावात्मका० — ए.
[19] ०तयैव स्थिते० — इ, ए.
[20] मतङ्ग० विद्या० ६. ४६, ४७ वृत्तौ ।
[21] चाप्यात्यन्तिको — उ.

व्यापारस्य निलये तत्त्वभूतभुवनात्मनि त्रिपर्वे[1]पदार्थरूपे महाप्रलयवशादुपसंहृते सति, तस्य भोक्तुरात्मनोऽपि **प्रलीनस्थास्य नात्यन्तम् अभावः, नापि** भोगादौ **उत्पत्तिरिष्यते नित्यत्वात्**। अथवा [2]उत्पन्नो भोक्ता नष्ट इत्युपचारादुच्यते यथा, तथा आकाशे शक्तिव्यक्त्यपेक्षया [3]नाशोत्पादावुपचारेणोच्येते[4]। न तु परमार्थत इति ॥

अत्रैव दृष्टान्तान्तरम् —'नेत्रोत्पाटाद्' इत्यादि।

**नेत्रोत्पाटाद्यथा पुंसो रूपाभावः [5]सुनिश्चितः ॥१३॥**
**न चाभावोऽस्ति रूपाणां शुक्लादीनां दृगात्मनाम् ।**

व्यञ्जकभावा[6]भावाभ्यामप्युत्पत्ति[7]विनाशावुपचारेण [8]भावानामुच्येते। यथान्धस्य रूपादीनामभावः कथ्यते। अन्येषां तु **दृगात्मनाम्** [9]अनन्धानां **न** शुक्लरूपादीनाम् **अभावः** प्रत्यक्षेण सिद्धः॥

एवं न केवलमाकाशमेव। यावन्त्यन्यानि —'न्यग्भूतकरणत्वात्' इत्यादि।

**न्यग्भूतकरणत्वाच्च चलतश्चाखिलानि तु ॥१४॥**
**व्यक्तिमायान्ति तत्त्वानि रचनाश्च पृथग्विधाः ।**

करणानां भावः करणत्वं [10]न्यग्भूतं [11]करणत्वं यस्मिन् स न्यग्भूत[12]करणत्वः महाप्रलयः, तस्मात् **चलतः** पुंसः सर्गकाले समस्तान्येव कलादिक्षित्यन्तानि **तत्त्वानि** भुवनानि [13]च भिन्नरचनानि [14]**व्यक्तिमायान्ति**; सन्त्येवोत्पद्यन्त इति, तान्यपि सत्कार्यदृष्ट्या[15] नित्यानीत्युच्यते[16]॥

तथा हि —'प्रतिसंचरतः' इत्यादि।

**प्रतिसंचरतः पुंसः [17]प्रध्वस्तान्युपचारतः ॥१५॥**
**शेषाणां स्थितये सन्ति किमाश्चर्यं महामुने ।**

यथा सर्गकाले शरीरान्तरं गच्छतः **पुंसः**, [18]पुरुषान्तराणामनष्टान्यपि [19]नष्टानि तत्त्वभुवनादी-

---

[1] ०पदार्थरूपैः — इ.
[2] चोत्पन्नो — इ.
[3] नाशोत्पादादुप० — इ.
[4] ०णोच्यते — अ, आ, इ, ई, उ, ए, ऐ.
[5] स निश्चितः — उ.
[6] ०भावाभ्यामुत्पत्ति० — आ, ए; भावानामपि व्युत्पत्ति० — ऐ.
[7] ०विनाशादुप० — इ, ए, ऐ.
[8] भावानामुच्यते — अ, आ, इ, ई, उ, ए, ऐ. ०मभावात्कथ्यते — ए.
[9] अनन्तानां मूर्त्यरूपादीनाम् — ए; अन्धानां न रूप्यादीनाम् — ऐ.
[10] न्यक्कृतं करणत्वं — इ.
[11] 'करणत्वं' इति नास्ति — ए.
[12] ०करणः — इ, ऐ.
[13] चाभिन्न० — ऐ.
[14] व्यक्तिं यान्ति — ए.
[15] ०दृष्टानि — अ.
[16] ०त्युच्यन्ते — अ, आ, इ, ई, उ, ए.
[17] प्रशस्तान्युप० — उ.
[18] पुरुषान्तराणां नष्टाद्यपि तत्त्व० — इ, ई, उ; पुरुषाणामनिष्टान्यपि तत्त्व० — ए; पुरुषान्तराणां नष्टाद्यन्यपि नष्टानि तत्त्व० — ऐ.
[19] 'नष्टानि' इत्यत्र 'नष्टान्यपि' इति दृश्यते — अ; 'नष्टानि' इति नास्ति — आ.

नीत्युपचारे[1]णोच्यते। [2]तथा महाप्रलये शक्तिरूपतां [3]प्राप्तान्युपचारेणैव नष्टान्युच्यन्त इति। तत् **किमाश्चर्यं**, यदाकाशमेव नैनित्यमिष्यते। सत्कार्य[4]दृशा सर्वेषामेव तत्त्व[5]भुवनादीनां नित्यत्वादिति ॥

अथ किं सर्वमेव वस्तुजातं भवद्भिर्नित्यमिष्यते। सत्यम् — 'किं तु' इत्यादि।

**किं तु बाह्याध्वसंहारात्सर्वं नाशमुपैति हि ॥१६॥**

**स्थूलेन** [6]व्यक्त्यात्मना रूपेणोपसंहृतत्वात् **सर्वम्** एतत् तत्त्व[7]भुवनादिकं [8]नष्टमित्युपचाराद्दुच्यते। न परमार्थतः। शक्त्यात्मनावस्थितमेव तद्यत इति ॥१६॥

एवं च — 'प्रणष्टस्य' इत्यादि।

**प्रणष्टस्यास्य जगतस्तमसा पूरितस्य हि।**
**किमपेक्ष्य सदाकाशमस्ति चेत्किमतः परम् ॥१७॥**
**[9]वक्तव्यमुचितस्यापि मुह्यसे केन हेतुना।**

कलादिक्षित्यन्तस्य [10]तत्त्वभूतभुवनात्मनोऽस्य [11]प्रागुक्तस्य **जगतः** व्यक्तरूपतया **प्रणष्टस्य**; अत एव [12]भोक्तृभोग्यभोगसंवेदनाभावात् **तमसा पूरितस्यैव**। **किमपेक्ष्य**या **सद् आकाशम्** उच्यते। [13]तस्यापि बाह्येन रूपेण [14]तदानीमुपसंहृतत्वात्। अथ [15]शक्तिरूपतया तद् **अस्ति** [16]इत्येवं **चेत्**। उच्यते। यद्येवम् **उचितस्य** अस्य [17]सत्कार्यपक्षस्य [18]यद् वक्तव्यं [19]किम्; **अतः** प्रागुक्तात् **परम्** [20]अस्य। एवं हि सर्वमेव वस्तुजातं नित्यं प्रसज्यत इत्युक्तं यतः। ततः कुतोऽयं व्यामोहो [21]भवतो नैयायिकादिपक्षस्थस्य[22]। येनाकाशमेव नित्यमुच्यते। न तु [23]कलादिक्षित्यन्तान्यपि तत्त्वभवनादीनीति[24]। अथ [25]तान्यनित्यान्युच्यन्ते; तदाकाशमपि तथैवास्त्वविशेषादिति प्रकरणार्थः ॥

---

[1] ०णोच्यन्ते — अ, आ, इ, ई, उ, ए.
[2] यथा — ऐ.
[3] प्राप्तानुप० — ई, उ.
[4] ०दृशां — ए, ऐ.
[5] ०भुवनादिना नित्य० — इ.
[6] व्यक्त्यात्मरूपेणोप० — अ.
[7] ०भुवनात्मकं — अ.
[8] नष्ट इत्युप० — इ.
[9] अव्यक्तमुचित० — उ.
[10] तत्त्वभुवनात्मनो — आ, ई, उ.
[11] मतङ्ग० विद्या० २. १६ उ०, १७ पू० वृत्तौ।
[12] जगतः संवेदनाभावात् — इ; भोक्तृभोग्य एव संवेदनाभावात् — ऐ.
[13] तथा हि येन रूपेण — अ.
[14] भूतादीनामुप० — ए.
[15] प्रकाशरूपतया — इ.
[16] इत्येवं सोच्यते — ऊ.
[17] सत्कार्यस्य पक्षस्य — अ.
[18] यदुक्तं तत्किमतः — इ.
[19] अत्र 'तत्' इत्यधिकम् — अ, आ, ई, उ, ए, ऐ.
[20] अस्त्येवं हि — ऊ.
[21] भवता — इ.
[22] नैयायिकपक्षस्थस्यैव — ऊ.
[23] कालादिक्षित्यन्तान्यमिततत्त्व० — ऊ.
[24] इतिशब्दो नास्ति — ऊ, ए.
[25] अन्यानि नित्यान्युच्यन्ते — अ; तानि नित्यान्युच्यन्ते — आ, इ, ई, उ, ए; तान्यनित्यानीत्युच्यन्ते — ऊ.

न [1]चाप्यकृतत्वेनामूर्तमाकाशम्। किं तु — 'अपेक्ष्योच्चम्' इत्यादि।

**[2]अपेक्ष्योच्चं ततो [3]निम्नं [4]निम्नतश्चाप्यथोच्छ्रितम्[5] ॥१८॥**
**लोकेऽपि [6]सुप्रतीतं स्याद्यथा च सुखदुःखयोः।**
**प्रवृत्तयः प्रपञ्चेऽस्मिन्नुपलब्धिः परस्परम् ॥१९॥**
**एवंविधं तदाकाशं सिसृक्षोः परमेष्ठिनः।**
**व्यक्तं तच्छब्दतन्मात्रात्तन्मात्रं समुदाहृतम् ॥२०॥**

यथा **निम्नमपेक्ष्योच्चं**, पूर्वं [7]चापेक्ष्य परमुच्यते [8]**लोके यथा च सुखदुःखयोरिति**। [9]प्रकृतेः **प्रवृत्तयः** [10]कारणकार्यरूपाः सूक्ष्मस्थूलभेदेनोक्ताः[11]। तदुपलब्धिश्च [12]भेदाभेदपूर्वकत्वेनोक्ता। तथाभूतं [13]**तदाकाशं शब्दतन्मात्राद्व्यक्तमिति**। अयमर्थः — पृथिव्याद्यपेक्षया [14]तच्च सूक्ष्ममुच्यते। न तु शब्दतन्मात्रापेक्षयापि। [15]कारणस्य [16]कार्यापेक्षया [17]सूक्ष्मत्वादिति वक्ष्यामः[18] —

"[19]यल्लघु व्यापकं [20]तत्स्यात्तद्व्याप्यं[21] [22]तदधः स्थितम्।
[23]तत्त्वं गुरुतरं यस्मात्तस्मादप्यपरं तथा॥
व्याप्यव्यापकभावेन [24]जगत्यन्तः [25]स्थितानि तु।" इति।

अत [26]एव तत्कारणं तन्मात्रं शब्द[27]मात्रमेवेत्युक्तम्[28]। एवमाकाशं कार्यतः [29]स्वरूपेण चोक्तम् ॥१८–२०॥

---

[1] चापि तु तत्त्वेनामूर्त० — इ; चाविकृतत्वेनामूर्त० — ऊ; चापि कृतत्वेनामूर्त० — ऐ.
[2] अपेक्षं च सतो — उ.
[3] निम्नो — ओ.
[4] निम्नगश्चा० — उ.
[5] ०प्ययोन्नतम् — ऊ.
[6] सुप्रतीतः — मु, उ.
[7] चापेक्ष्यापर० — ऊ.
[8] लोके च यथासुख० — ऊ.
[9] प्रकृते प्रवृत्तयः — अ; प्रकृतः प्रवृत्तयः — आ; प्रकृते प्रवृत्तः — इ; 'प्रकृतेः' इति नास्ति — ऊ; प्रकृते वः प्रवृत्तः — ऐ.
[10] कार्यकरणरूपाः — इ, ऊ.
[11] ०भेदोक्ताः — इ.
[12] भेदस्याभेदकत्वेनोक्ताः — अ; भेदस्याभेदपूर्वकत्वेनोक्ताः — आ, इ, ई, उ, ए, ऐ.
[13] तथाकाशं — ए.
[14] तत्सूक्ष्म० — ऊ.
[15] कारणत्वकार्यत्वापेक्षया — इ.
[16] कार्यत्वापेक्षया — ऐ.
[17] सूक्ष्मार्थादिति — ऐ.
[18] मतङ्ग० विद्या० २३. ८, ९ पू०.
[19] यल्लघुर्व्यापकं — अ, आ, ई, उ, ए.
[20] तद्धि व्याप्तं — इ, ऊ, ऐ.
[21] व्याप्तं — अ.
[22] तस्थादधःस्थितम् — इ, ऐ; तस्मादधः स्थितम् — ऊ.
[23] इदमर्धं नास्ति — इ, ऊ.
[24] जगत्यन्तं — आ, ई, उ.
[25] सूतानि तु — अ, आ, ई, उ.
[26] एव कारणतन्मात्रं — अ; एव कारणं तन्मात्रं — आ, ई, उ, ए; एव कारणात्तन्मात्रशब्द० — इ; एव कारणं तन्मात्रभूतशब्द० — ऐ.
[27] ०मात्रमेवेत्युच्यते — इ; तन्मात्रमेवेत्युक्तम् — ए.
[28] मतङ्ग० विद्या० १८. १०१, १०२ पू० वृत्तौ।
[29] स्वरूपेण च प्रोक्तम् — अ, आ, ई, उ, ए, ऐ; स्वरज्ञापप्रोक्तम् — इ.

[1]अथ सूक्ष्मदेहगतत्वेन वक्तुं प्रसङ्गात् तन्मात्राणामिव भूतानामपि [2]करणाधारहेतुत्वमुच्यते — 'न चाधारादृते' इत्यादि।

**न [3]चाधारादृते किंचिद्वस्तु [4]स्वाश्रयतः स्थितम्।**
**तन्मात्रा[5]णीह घटवद्[6]विशेषाश्च प्रलेपवत्॥२१॥**

इन्द्रियादिकं वस्तु नाधारं विना [7]स्वाश्रयेणैवावतिष्ठत इत्युक्तम्। अतस्तस्य [8]यथा **तन्मात्राणि** [9]घटवदाधारत्वेन स्थितानीत्युक्तं[10] [11]तन्मात्रविचारे प्रसङ्गेन तथा तत्लेपवद् भूतात्मका [12]**विशेषाः** इति॥२१॥

[13]ननु बाह्यं भौवनमेव शरीरं तस्येन्द्रियादिवस्तुनः आधारो भविष्यति। तत्किमनेनेति[14]। [15]तत्रोच्यते — 'ध्वस्ते' इत्यादि।

**ध्वस्ते पञ्चात्मके पिण्डे सति पुर्यष्टके पशोः।**
**शक्यते घटितुं भूतैर्नान्यथा [16]धारकादृते॥२२॥**
**एतावद्दशधा कार्यं शरीरं सर्वदेहिनाम्।**
**यत्समाश्रित्य करणं भोक्तुर्भोगोप[17]पादने॥२३॥**
**[18]समर्थं सर्वकार्येषु कर्तृत्वे [19]ह्यजुगुप्सितम्।**
**पुर्यष्टकसमायोगात्पुंसः [20]कर्मानुरूपतः॥२४॥**
**देहाद्देहान्तरप्राप्तिः पित्रोः संयोग एव हि।**

पञ्चात्मकग्रहणं चात्र सर्वस्यैव कालाग्न्यादेः [21]कपालेशभुवनान्तस्य [22]भौवनस्य पिण्डस्योपलक्ष-

---

[1] अतः — अ, आ, इ, ई, उ, ए, ऐ.
[2] कारणाधार० — ऊ.
[3] वाधारादृते — उ; चाधाराद्धृते — ओ.
[4] स्वाश्रयता स्थितिः — ओ.
[5] ०णीति कटवद् — उ, ओ; णीह कटवद् —ऊ.
[6] विशेषास्तत्प्रलेपवत् — उ; विशेषाच्चाथ लोपवत् — ऊ.
[7] स्वाश्रयेणैव तिष्ठत — इ; स्वाश्रयेणैवावस्थित — ऐ.
[8] यतस्तन्मात्राणि — आ; यदतन्मात्राणि — ऊ.
[9] कटवदाधार० — आ, इ, ई, उ, ऊ.
[10] मतङ्ग० विद्या० १८. १८ उ० –१०० वृत्तौ।
[11] तन्मात्रविचारप्रसङ्गेन — आ, ई, उ, ऊ; तन्मात्राविचारप्रसङ्गेन — इ, ऐ.
[12] विशेष इति — अ. ऐ.
[13] 'ननु' इत्यारभ्य 'भविष्यति' इत्यन्तं नास्ति —ऊ; न तु — इ.
[14] इतिशब्दो नास्ति — ए.
[15] 'तत्रोच्यते' इत्यारभ्य 'शरीरान्तरभोगसाधने' इत्यन्तं नास्ति — ए.
[16] तु घटादृते — उ; तु कटादृते — ऊ, ओ.
[17] ०पादकम् — ऊ.
[18] सर्वार्थसर्व० — उ.
[19] नाजुगुप्सितम् — ऊ.
[20] कर्मानुरूपता — ऊ; कामानुरूपतः — ओ.
[21] कपालीश० — अ, आ, इ, ई, उ, ए, ऐ.
[22] भौवनपिण्ड० — ऊ.

णम्। तस्मिन् ध्वस्ते सति,[1] [2]**पुर्यष्टके** [3]शरीरान्तरभोगसाधने [4]पुरुषस्य [5]इन्द्रियादिसमूहात्मके [6]सूक्ष्मदेहे। **भूतैरिति** [7]संभूतैरिन्द्रियादिभिराधाराद्विना [8]**न शक्यते** चेष्टितुं यतः। तत [9]**एतावद्** भूत[10]तन्मात्रकं दशविधं [11]'करणैराविश्य[12] कार्यते चेष्टाम्' इति कार्यशब्देन सूक्ष्मशरीरं पुंसामुच्यते। [13]कार्यसमाश्रयेणैव च [14]करणं [15]भोगार्थं [16]सर्ववेदनोत्पादनस्य च समर्थत्वा[17]दनिन्दितमुच्यते। कार्य[18]करणसंयोगादेव च **पुंसः** कर्मानुसारेण शरीराच्छरीरान्तर[19]प्राप्तिः; माता च पिता च [20]पितरौ तयोः **पित्रोः** संयोग[21]निमित्तत्वात्कथ्यते। [22]अन्यथा पुंसो [23]व्यापकत्वेन सर्वदा [24]तत्प्राप्तिर्न कदाचिदेव यतः॥

तच्च देहान्तरम्—'भूतानाम्' इत्यादि।

**भूतानां चोप[25]भुक्तानां रेतस्तत्परिणामजम्[26]॥२५॥**
**ऋतुकालमनुप्राप्य [27]तद्बीजादुपबृंहितम्।**
**[28]कललं जायते [29]तस्माद्भूयो बुद्बुदतां व्रजेत्॥२६॥**
**[30]शोणितं तु [31]ततो [32]भूयाच्चर्ममांसाङ्कुराः शनैः।**
**अन्नपानोपयोगेन [33]मातुर्निश्वसितेन च॥२७॥**

---

[1] अत्र चशब्दोऽधिकः—ऊ.
[2] पुर्यष्टकशरीरान्तर०—आ, ऊ.
[3] शरीरान्तर्भोग०—ऐ.
[4] पुरुषेन्द्रियादिभिराधाराद्विना—अ.
[5] इन्द्रियसमूहात्मके—इ.
[6] सूक्ष्मदेहेर्भूतैः—इ; सूक्ष्मदेहभूतैः—ऊ.
[7] संभूतैरित्यादिभिः—आ, ई, उ; संभूतैरितीन्द्रियादिभिः—इ, ऐ; सद्भूतैरिन्द्रियादिभिः—ऊ,
[8] नशब्दो नास्ति—आ, ऊ.
[9] एव तावद्—इ, ए, ऐ.
[10] ०तन्मात्रके—ऊ.
[11] तत्त्वसंग्रहे—श्लो० ४ पू०.
[12] करणैराविष्टं—ऊ; करणेनाविश्य—ए, ऐ.
[13] शक्यसमाश्रयेणैव—ए; 'कार्यसमाश्रयेणैव' इत्यारभ्य 'उच्यते' इत्यन्तं नास्ति—ऊ.
[14] कारणं—इ, ए, ऐ.
[15] भोगादेः संवेदनोत्पाद०—इ, ऐ.
[16] सर्वसंवेदनोत्पाद०—ए.
[17] ०दनित्यत्वमुच्यते—इ; ०दनिन्दितत्वमुच्यते—ऐ.
[18] ०कारणसंयोगादेव—ए.
[19] ०व्याप्तिः—अ.
[20] मातापितरौ—इ, ऐ.
[21] ०निमित्तात्कथ्यते—अ, आ, ई, उ, ए; निमित्ताः कथ्यन्ते—ऊ.
[22] 'अन्यथा' इति नास्ति—ऊ.
[23] व्यापकत्वे सर्वदा—ऊ.
[24] तत्प्राप्तिः कदाचिदेव—अ, आ, ई, ए; तत्प्राप्तिः कदाचिद्वा यतः—इ, ऊ, ऐ.
[25] भूतानां—उ.
[26] ०त्परिणामतः—उ, ०त्परिमाणजम्—ओ.
[27] तद्बीजाद्रूप०—उ; तद्बीजेनोप०—ऊ.
[28] सकलं—उ.
[29] यस्माद्भूयो—मु, उ.
[30] शोणितत्वं ततो—उ० पाठान्तरम्, ऊ, ओ.
[31] तयोः—उ.
[32] भूयो वर्ममांसा०—उ; भूयोभूयो मांसाङ्कुरं शनैः—ऊ.
[33] मातृनिःश्वासितेन—उ; मातुर्निःश्वसिते तदा—ऊ.

[1]धात्र्यम्भोऽग्नि[2]मरुद्व्योम्नां संयोगाद्व्यक्तिमेति हि।
[3]प्रादुर्भवन्त्यथाङ्गानि वर्धन्ते च शनैः शनैः ॥२८॥
[4]भूतान्येव विपक्वं [5]तच्छुक्लं वृद्धिमुदेति हि।
[6]लोमानि [7]मांसं रक्तं च मातृजं त्रिकमुच्यते ॥२९॥
मज्जास्थि[8]शुक्लसंघातं पितृजं तदुदाहृतम्।
प्रपुष्टमन्नपानाभ्यां षट्कमेवं [9]विवर्धते ॥३०॥
तद्भूतेभ्यः समुत्पन्नं भूतैरेवोपबृंहितम्।
बाह्यावयववृद्ध्यर्थं भूतान्येवं स्मृतानि [10]हि ॥३१॥
[11]न यान्ति [12]भर्तुराघाटात्कृतात्पर[13]तरं मुने।
व्यवस्थाकारिणी यस्मान्नियतिः [14]प्राग्यथोदिता ॥३२॥

अन्नपानादिभावेन **भूतानां** पृथिव्यादीनामुप[15]भुक्तत्वाद् **रेतः** पित्रोः संभवति। ततः [16]कललादिक्रमेण [17]षाट्कौशिकं [18]शरीरमात्मनामुत्पद्यते। पुनश्चान्नपानाद्यात्मना **भूतैरेव** परिपोष्यत इति, बाह्यशरीरात्मना तेन [19]भूतान्येव [20]स्थितानीत्युच्यते। तानि च [21]स्वमर्यादातो [22]नान्यत् परं तन्मात्रभुवनं, [23]परतरं वा [24]**न यान्ति। एवं** तान्यपि [25]नेहायान्ति; नियत्या नियमितत्वादित्युक्तं[26] **प्राक्** ॥२५–३२॥

अथोपसंहारः — 'एवम्' इत्यादि।

**एवं चराचरं कृत्स्नं सत्याकाशे विसर्पितम्।**

---

[1] धात्र्या भोगी मरु० — उ; धात्र्याम्भोऽग्नि० — ओ.
[2] ०मरुद्व्योमसं० — उ, ऊ.
[3] प्रादुर्भवन्ति चाङ्गानि — उ.
[4] भूतान्येवं विभक्तानि शुक्रं वृद्धि० — ऊ.
[5] तच्छुक्लवृद्धि० — ओ.
[6] रोमाणि — ऊ.
[7] मांसरक्तं — ओ.
[8] ०शुक्रं० — ऊ.
[9] विवृद्धये — ऊ; निवर्तते — ओ.
[10] तु — ऊ, ओ.
[11] न यातु — उ.
[12] भर्तुरावातात् — मु, उ; भर्तुरापट. . त् — ऊ.
[13] ०तमं मुने — मु, उ.
[14] प्राग्यथोचिता — उ.
[15] ०भूतत्वाद् — इ; ०भुक्तत्वादेरतः — ऐ.
[16] कलादि० — इ; ललनादि० — ई, उ.
[17] षट्कौशिकं — ऊ; षट्कौह्यकं — ऐ.
[18] शरीरात्मनोत्पद्यते — अ, ई, उ; शरीरा न उत्पद्यते — आ; शरीरात्मनामुत्पद्यते — इ; शरीरात्मना नोपपद्यते — ए.
[19] भूतान्येवेत्युच्यन्ते — इ; भूतानीत्युच्यन्ते — ऊ.
[20] स्थितानीत्युच्यन्ते — ई, उ; अवस्थितानीत्युच्यन्ते — ए.
[21] स्वयमर्यादातो — अ, आ, इ, ई, उ.
[22] नान्यं परं — अ, आ, इ, ई, उ, ए, ऐ.
[23] परं वा — इ, ऊ, ऐ.
[24] नायान्ति एवं तान्यपि — आ; न याज्येव तान्यपि — इ; यो. . व तान्यपि — ऊ; न यान्त्येवं तान्यपि — ए; न यां तेभ्य व तान्यपि — ऐ.
[25] नेह यान्ति नियत्या — आ; नेहायान्त्या नियत्या — इ; नेह व याता नियत्या — ऐ.
[26] मतङ्ग० विद्या० १३. ४, ५ पू० वृत्तौ।

[1]एवं सूक्ष्मदेहावस्थिते **सति आकाशे** [2]**चराचरं** विश्वं [3]**विसर्पितम्**। [4]नासति समुदायकार्यस्यैकापायेऽप्यसंभवात्। [5]शिबिकोद्वाहिनरवत्॥

तदियता — 'तत्त्वधर्मः' इत्यादि।

**तत्त्वधर्मः [6]स्मृतो व्योम्नः शिववक्त्राम्बुजोद्भवे ॥३३॥**
**तन्त्रे भुवन[7]धर्मोऽपि संक्षेपात्कथयामि ते।**

[8]पारमेश्वरे शास्त्रे [9]यो **व्योम्नः तत्त्वधर्मः** [10]**स स्मृतः** उदित इत्यर्थः। अधुना [11]तस्य **भुवनधर्मः** प्रोच्यत इति॥

'स्थानानि' इत्यादि।

**स्थानानि भुवनेशानां पवित्राणि शुभानि च ॥३४॥**
**अमेयसुखपूर्णानि [12]रम्याणि विविधानि च।**
**प्रधानत्वेन[13] तान्यष्टौ [14]तत्रादौ [15]स्थाणुसंज्ञकम् ॥३५॥**
**[16]सुवर्णाक्षमतो यस्माद्भद्रकर्णमतः परम्।**
**[17]गोकर्णमपरं [18]रम्यं स्थानमुक्तं सुशोभनम् ॥३६॥**
**[19]महालयं पञ्चमं स्यात्स्थानं [20]स्थानवतां वरम्।**
**[21]षष्ठमप्यविमुक्ताख्यं रुद्र[22]कोटयाह्वमेव च ॥३७॥**
**[23]वस्त्रापदमतोऽधस्ताद्विख्यातं भुवनत्रये।**

पञ्चाष्टकेषु मध्यादत्र स्थाण्वष्टक[24]स्यैवाष्टौ भुवनानीति॥

---

[1] 'एवं' इति नास्ति — आ, ई, उ.
[2] चराचरीं — ऐ.
[3] सर्मर्पितम् — ऊ.
[4] नास्ति समुदाय० — अ; नासत समुदाय० — इ; नास्तीति समुदाय० — ई, उ; नासती समुदाय० — ऐ.
[5] शिबिकोद्वाहिनां यत् — ए.
[6] स्थितो — ई, उ, ओ.
[7] ०धर्माश्च — ऊ.
[8] पारमेश्वरधर्मयोर्व्योम्नः — इ; पारमेश्वरतन्त्रे यो व्योम्नः — उ; पारमेश्वरशास्त्रे यो व्योम्नः — ए.
[9] 'यो' इति नास्ति — ऐ.
[10] संस्मृत इत्यर्थः — इ; संस्मृतोऽनूदित इत्यर्थः — ऊ; स स्मृत इति तत इत्यर्थः — ऐ.
[11] 'तस्य' इत्यत्र 'तत्त्व' इति दृश्यते — इ; 'तस्य' इति नास्ति — ऊ.
[12] रस्यानि — ऊ.
[13] प्रधानतत्त्वे — ऊ; प्राधान्येन तु — ओ.
[14] तन्त्रादौ — उ, ओ.
[15] श्रृणु — ऊ.
[16] सुवर्णाख्यं ततोऽधस्ताद्भद्र० — उ.
[17] रम्यं स्थानं चतुर्थाख्यमुक्तं परमशोभनम् — मु.
[18] स्थानं — उ, ओ.
[19] महालम्पं — मु.
[20] स्थानवता वरम् — ऊ.
[21] षष्ठमप्यतिमुक्ताख्यं — मु, उ; षष्ठमस्य विमुक्ताख्यं — ऊ.
[22] ०कोटचण्डमेव च — मु; ०कोटचाख्यमेव च — ऊ.
[23] वस्त्रपादमतोधस्ता० — मु; वस्त्रपादमतो यस्मा० — उ; वस्त्रं पदमतोऽधस्ता० — ओ.
[24] ०स्येवाष्टौ — ऊ.

अधुनाहंकारादि[1]भुवनस्य स्थूलेश्वरा[2]द्यष्टकस्यैवास्याष्टकस्यास्मिन् [3]भूर्लोके अत्राप्युच्यन्ते —'तत्प्राप्त्यै' इत्यादि ।

**तत्प्राप्त्यै भारते पुण्ये मनुष्याणां [4]हिताशया ॥२८॥**
**[5]निर्मितानि पुरा धात्रा येषु संनिहितो [6]हरः ।**

तेषां स्थाण्वादिभुवनानामाकाशवर्तिनां [7]प्राप्त्यर्थमस्मिन् भारते वर्षे धात्रा श्रीकण्ठनाथेन स्थानानि निर्मितानि। येषु लिङ्गात्मस्व[8]भिव्यक्तो [9]भगवानिज्यत इति ॥

अथ व्याख्यानस्य प्रकरणस्योपसंहाराय व्याख्येयस्य [10]चोपक्रमाय श्लोकः — 'व्यक्तं यथानु-क्रमतः' इत्यादि ।

**[11]व्यक्तं यथानुक्रमतः प्रधानाद्विवृद्धये[12] तज्जगतो [13]यथावत् ।**
**तथा मयोक्तं गगनं [14]समासाद्वायोरिदानीं प्रभवं विधास्ये ॥**

यथा [15]तद् आकाशं प्रधानाद् बुद्ध्यहं[16]कारशब्दतन्मात्रक्रमेणाभिव्यक्तं जगतश्च [17]वृद्ध्यर्थं [18]व्यक्तम् उक्तमित्यर्थः। [19]मूर्ते हि [20]तस्मिन्नान्यस्य भूतभुवनादेः संनि[21]वेशात्मिका[22]वृत्तिः संभवति [23]इत्युक्तम्। तथा मयोक्तमिति [24]व्याख्यातार्थोपसंहारः। अथ व्याख्येयोपक्रमः — **वायोरिदानीं प्रभवं विधास्ये** [25]इति ॥२९॥

[26]इति [श्री][27]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [28]मतङ्गवृत्तौ [विद्यापादे]
त्रिपर्वपदार्थे, आकाशतत्त्वप्रकरणम् एकोनविंशं [समाप्तम्]
**एकोनविंशः पटलः**

---

[1] अत्र 'स' इत्यधिकम् — इ.
[2] ०द्यष्टकस्यैवास्या० — अ, आ, ऐ.
[3] भूर्लोके — आ, ई, उ, ऊ, ए, ऐ.
[4] हितैषया — ऊ; हिताशयात् — ओ.
[5] निमित्तानि — ओ.
[6] नरः — ओ.
[7] बाह्यार्थमस्मिन् — ए.
[8] ०स्वाभिव्यक्तो — अ.
[9] भगवान्निर्मित इति — अ; भगवानासन्न्यत इति — ऊ.
[10] उपक्रमाय च श्लोकः — अ; उपक्रमाय श्लोकः — आ, ऐ.
[11] वृत्तं — ओ.
[12] निवृत्तये — ओ.
[13] हिताय — ऊ.
[14] समाप्तं वायो० — ऊ.
[15] तथा — इ, ए, ऐ.
[16] ०कारशब्दतन्मात्रेणाभि० — अ; ०कार-तन्मात्रक्रमेणाभि० — आ.
[17] वृत्त्यर्थं — ई, उ; विवृद्ध्यर्थं — ऊ.
[18] व्यक्तं मूतमित्यर्थः — अ, आ, इ, ई, उ, ए; व्यक्ताव्यक्तं मूर्तमित्यर्थः — ऐ.
[19] अमूर्ते हि — इ, ऐ.
[20] तस्मिन्नन्यस्य — ई, उ; तस्मान्नान्यस्य — ऊ.
[21] ०वेशात्मका — ऐ.
[22] वृद्धिः — अ, ऐ; 'वृत्तिः संभवति' इत्यस्य स्थाने 'वृत्तिं निबोध' इति दृश्यते — ऊ.
[23] मतङ्ग० विद्या० १९. ६ उ०, ७ वृत्तौ; 'इत्युक्तं। तथा मयोक्तमिति' इत्येतन्नास्ति—ऊ.
[24] व्याख्यातस्योपसंहारः — अ, आ.
[25] इत्यादि — आ.
[26] इतिशब्दो नास्ति — ऊ.
[27] 'भट्ट' इति नास्ति — अ, आ, इ, ई, उ, ऐ.
[28] श्रीमन्मतङ्गवृत्तौ — आ; श्रीमातङ्गवत्तौ—ए.

# विंशः पटलः

## वायुतत्त्वप्रकरणम्

**अथ वायोः [1]समुत्पत्तिं [2]कथ्यमानां निबोध मे ।**

[3]अथेति आकाशादनन्तरं **वायोः** [4]**समुत्पत्तिं** [5]**निबोधे**ति । पदार्थादि[6]संबन्धाश्चात्र [7]प्राग्वद् द्रष्टव्याः । वाक्यात्मकस्तु संबन्धः — "[8]धात्र्यम्भोऽग्निमरुद्व्योम्नाम्" [9]इत्यादिभिरनेकविधः ।।

पूर्वं च "[10]कार्यं स्यात्खादिपञ्चकम्" इत्यनेनैव वायोरपि कार्यत्वात्तन्मात्र[11]पूर्वकत्वं प्रतिपादितम्, अत्र तु विशेषान्वयात् स्पर्शतन्मात्रकारणत्वं ज्ञाप्यते — 'यत्तत्प्राग्' इत्यादि ।

**यत्तत्प्राक्स्पर्शतन्मात्रं तामसं समुदाहृतम् ।।१।।**
**तत्क्षोभादभवद्वायुर्द्विगुणो व्यूहलक्षणः[12] ।**
**शब्दस्पर्शसमायोगात्स्वभावेन सदागतिः ।।२।।**

[13]स च **वायुः** शकशकादि[14]शब्दाविनाभूतविशिष्ट[15]स्पर्शयोगाद् **द्विगुणः** सिद्धः । प्रोक्तं च[16] वैशेषिकैः[17] —

[18]"स्पर्शशब्दधृतिकम्पलिङ्गो वायुः" इति ।

धृतिकम्पावस्य लिङ्गत्वेन [19]वक्ष्यमाणौ । [20]व्यूहश्च रचना लक्षणं यस्य [21]घटादिव्यूहोऽपि ।

---

[1] समुत्पत्तिः कथ्यमाना — ऊ.
[2] कथ्यमानं — मु, उ.
[3] अथेत्यादि — इ.
[4] समुत्पत्तिः — अ, इ, ऊ, ए.
[5] निबोधयति — अ, आ, इ, ई, उ, ऊ.
[6] संबन्धश्चात्र — आ, इ, ई, उ.
[7] तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत् ।
[8] मतङ्ग० विद्या० १९. २८ पू०.
[9] इत्यादिरनेकविधः — अ, आ, ऊ; इत्याद्यनेकविधः — इ.
[10] मतङ्ग० विद्या० १८. १०५ पू०; कार्यस्य तत्खादिपञ्चकम् — ए.
[11] ०पूर्वकत्वमुक्तं ज्ञाप्यते — अ, आ, इ, ई, उ, ए, ऐ.
[12] व्यूहलक्षणात् — उ.
[13] स एव वायुः — अ, आ, इ, ई, उ, ए, ऐ.
[14] ०शब्दाविशिष्टाविनाभूत० — अ, ई, उ, ऐ; ०शब्दाविष्टाविनाभूत० — आ; ०शब्दादिशिष्टाविनाभूत० — इ; ०शब्दविशिष्टाविनाभूत० — ए.
[15] ०स्पर्शसमायोगाद् — ऊ.
[16] चशब्दो नास्ति — ऊ.
[17] प्रशस्तपादभाष्यम् ५४.
[18] शब्दस्पर्शधृति० — ऊ.
[19] मतङ्ग० विद्या० २०. ३–८ वृत्तौ ।
[20] व्यूहं च — अ, आ, ई, उ, ऐ.
[21] घटादिर्व्यूहोऽपि — अ, ऊ, ऋ.

[1]प्राणाख्यबललक्षणवायुश्चेष्टापूर्वक एव सिद्धो यतः। स च वायुः स्वभावेनैव सदा[2]प्रवहणात्मकः सिद्धः।

[3]ननु वैशेषिकैः [4]न स्पर्शवद्विशेषगुणः शब्दः। अस्मदादिप्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्, [5]अयावद्द्रव्यभावित्वात् सुखादिवदिति [6]शब्दस्य वाय्वादिविशेषगुणत्वं निषिद्धमेव। तदयुक्तम्। सिद्धसाधनत्वात्। यतो नास्माभिरपि [7]स्पर्शवतां विशेष[8]गुणः शब्द [9]इष्यते। अपि तु [10]भूततन्मात्रवर्तित्वेन सामान्यगुण एव। [11]अथ स्पर्शवतां गुणो न [12]भवतीत्येतावदेव साध्यते। तत्रापि [13]यदि [14]प्रतिश्रुत् शब्दो धर्मी, तथापि सिद्धसाधनतैव। तस्याकाश[15]गुणत्वेनोक्तत्वा[16]दस्पर्शवद्गुणत्वं सिद्धमेव यतः। अथ [17]खटखटादिकः शब्दो धर्मी, तत्रापि प्रत्यक्षविरोधः[18]। यतः प्रत्यक्षेणासौ स्पर्शवतां पृथिव्यादीनामेव धर्मत्वेन प्रतीयते "शकटे शब्दो, घटे शब्द" इति। न च[19] प्रत्यक्ष[20]विरुद्ध[21]मनुमानं प्रमाणतामासादयति। अथ [22]शब्दतन्मात्रं [23]धर्मि, तत्रापि [24]सामान्यस्य तद्गुणत्वात् सिद्धसाधनमेव। [25]अकारणगुणपूर्वकत्वादिति [26]च हेतु[27]रन्यतरासिद्धः। [28]तथा हि स्पर्शवद्भूतकारणेषु तन्मात्रेष्वस्माभिः शब्दोऽभ्युपगम्यत एव। परमाणूनां तत्कारणत्वस्य[29] [30]प्राक् **पुंपाशेश्वरप्रकरणे** निरस्तत्वात्। [31]संयोगादिभि[32]रनैकान्तिकश्च। [33]तेषामकारणगुणपूर्वकत्वेऽपि [34]स्पर्शवद्गुणत्वात्। दृष्टान्त[35]श्चोभयधर्मासिद्धः। अत्र सुखादौ साधन[36]धर्मस्याकारण[37]गुणपूर्वकत्वस्य, साध्यधर्मस्य[38] च स्पर्शवद्गुणनिषेधस्यासिद्धेः। येनास्माभिरात्मगुणनिषेधपूर्वकं सुखादीनि स्पर्श-

---

[1] प्राणाख्यवद्बललक्षण० — इ; प्राणाख्यलक्षणो वायु० — ऐ.
[2] प्रवहणात्मसिद्धः — ऐ.
[3] ननु न वैशेषिकैः स्पर्श० — ऊ, ऋ.
[4] नकारो नास्ति — इ, ई, उ, ऐ.
[5] यावद्द्रव्य० — इ, ए.
[6] शब्दस्तु वाय्वादि० — ए.
[7] स्पर्शवता — ऊ
[8] ०गुणशब्द इष्यते — ऊ, ऋ, ए; ०गुणशब्दोऽपीष्यते — ऐ.
[9] इष्यन्ते — अ, आ, इ, ई, उ.
[10] शब्दतन्मात्रवृत्तित्वेन — अ.
[11] अतः — अ, ऋ.
[12] भवति ते तावदेव — ऐ.
[13] यद्यप्रतिश्रुक् — ऐ.
[14] प्रतिश्रुक्शब्दो — अ, आ, ई, उ, ए; प्रतिश्रुतिशब्दो — इ; प्रतिश्रुत्काशब्दो—ऊ, ऋ.
[15] ०गुणेनोक्तत्वा० — अ; गुणत्वेनोक्ता० — ऊ, ऋ.
[16] ०दस्पर्शगुणत्वमेव सिद्धम्। अथ — इ.
[17] कटकटादिकः — अ, इ.
[18] ०विरोधी — ऊ, ऋ.
[19] अत्र 'स' इत्यधिकम् — ऊ, ऋ.
[20] ०सिद्धमनुमानं — आ, ई, उ.
[21] ०मनुमानप्रमाणता० — इ.
[22] शब्दमात्रं धर्मी — आ, ई, उ; शब्दमात्रं धर्मि — ऊ, ऋ; शब्दमात्रधर्मी — ए.
[23] धर्मी — अ, ई.
[24] सामान्यस्यातद्गुणत्वात् — अ, आ, इ, ऋ, ए; सामान्यस्यागुणत्वात्—ऊ.
[25] आकाशगुण० — इ.
[26] चशब्दो नास्ति — अ, आ, इ, ऋ.
[27] ०रन्यतरसिद्धः — ऊ, ऋ.
[28] 'तथा' हि' इत्यत्र 'येन' इति दृश्यते — ऊ, ऋ.
[29] तत्कारणत्वेन — ऊ, ऋ.
[30] मतङ्ग० विद्या० ६. ४४ वृत्तौ।
[31] सांख्ययोगादिभि० — आ, इ, ई, उ.
[32] ०रनेकान्तश्च — ए.
[33] तेषां कारणगुण० — इ.
[34] स्पर्शवद्गुणाः दृष्टान्त० — ऐ.
[35] ०श्चोभयथासिद्धः — अ, आ, इ, ई, उ, ए, ऐ.
[36] धर्मस्य कारण० — इ.
[37] ०गुणात्पूर्वकस्य — ऊ, ऋ; 'गुण' इति नास्ति — ऐ.
[38] ०धर्मत्वस्य — ऐ.

वतामपि गुणत्वेन, सत्त्वादिगुणत्रयकारण[क]त्वेन च [1]प्राक् **पुंपाशेश्वरप्रकरणे** [2]साधितानीति । [3]अयावद्द्रव्य[4]भावित्वादिति [5]च हेतुरन्यतरासिद्धः[6] । येनास्माभिः [7]सशब्दकपरिणामादशब्दकपरिणामोऽन्य एव [8]भवतीत्यभ्युपगम्यते । अथ द्रव्यमात्राभिप्रायेणास्य हेतुत्वं भविष्यतीत्युच्यते । [9]तदामलक[10]श्यामलत्वादि[11]नानैकान्तः । न हि तस्यापि यावद्द्रव्यभावित्वं[12] पीतत्वोत्पत्त्या निवृत्तिसिद्धेः । अथ पाकजोत्पत्तिक्रमेण श्यामगुणयुक्तामलकनिवृत्तौ, अन्यदेव पीत[13]गुणयुक्तमामलकान्तरमुत्पद्यत इत्युच्यते । [14]यद्येवमसिद्ध [15]एवायमित्युक्तम् । एवं हि [16]सशब्दकात् परिणामा[17]दशब्दकस्यान्यत्वेन [18]सिद्धेः । [19]दृष्टान्तश्चात्र साध्यधर्मासिद्ध [20]एवेति । [21]योऽप्यत्रैवाश्रयादन्यत्रोप[22]लब्धेरिति हेतुः कथितः । सोऽप्यसिद्ध एव । इह घटे शकटे वा शब्द इति शब्दस्य [23]स्वाश्रय[24]गतत्वेनोपलब्धेरित्युक्तम्[25] । [26]यत्तूक्तं तीव्रतरशब्दश्रुत्यविनाभूतकर्णव्यथान्यथानुपपत्त्या शब्दस्याश्रयान्तरे श्रोत्रदेशे एवोप[27]लब्धेरित्यनुमानम् । तत्प्रत्यक्ष[28]विरुद्धत्वादयुक्तमेव । येन हि प्रत्यक्षतो [29]भेर्यां तीव्रः शब्द इति प्रतिपत्तिः । [30]न तु श्रोत्रदेश इति । श्रोत्रव्यथा तु तीव्रतरेण शब्देन सहोत्पन्नाद्वायोरेव[31] सिद्धेति । न [32]तु तदन्यथानुपपत्त्या [33]शब्दस्य [34]प्रत्यक्षसिद्धा स्वाश्रयोपलब्धिर्निराकर्तुं [35]शक्या । अन्यथानुपपत्तेरेवासिद्धेः । विपक्षैक[36]देशवृत्तित्वादनैकान्तिकश्च । येन

---

[1] 'प्राक्' इति नास्ति — इ.

[2] साधित इति — इ.

[3] अथ यावद्द्रव्य० — इ, ऋ, ए, ऐ.

[4] ०भावित्वादिहेतु० — इ.

[5] चशब्दो नास्ति — आ, ई, उ, ऊ, ऋ, ए.

[6] ०सिद्धिः — ऐ.

[7] सार्थशब्दकपरिणामादिशब्दकपरि० — इ; सशब्दकात्परिणामादशब्दः परि० — ऊ; सशब्दकात्परिणामादशब्दकपरि० — ऋ.

[8] भवतीत्युपगम्यते — इ, ई, उ, ऊ, ऋ, ए, ऐ.

[9] तदामलकस्य मलत्वादिना — ऊ, ऋ.

[10] ०श्यामत्वादिना — आ, इ, ई, उ, ए, ऐ.

[11] ०नानैकान्तम् — आ, ए; ०नानैकान्ताः —ऐ.

[12] ०द्रव्याभिभावित्वं — ऐ.

[13] ०गुणामलकान्तर० — अ; ०गुणयुक्तामलकान्तर० — ए, ऐ.

[14] यद्येवं सिद्ध — अ, इ.

[15] एवायं हेतुरित्युक्तमेव हि — ऊ, ऋ.

[16] सशब्दकतत्परिणामा० — आ, ई, उ, ए, ऐ; सशब्दकं तत्परिणामादिशब्दक० — इ.

[17] ०दशब्दस्यास्यान्यत्वेन — अ, ०दशब्दकस्याप्यन्यत्वेन — ऊ, ऋ; ०दशब्दकस्यास्यान्यत्वेन — ए.

[18] सिद्धिः — अ.

[19] दृष्टान्तश्चासाध्य० — ऊ.

[20] एव भवति — अ.

[21] योऽत्रैवाश्रया० — आ, इ, ई, उ.

[22] ०लब्ध इति — ऋ.

[23] आश्रय० — आ, ई, उ.

[24] ०पदत्वे० — अ, ऋ.

[25] ०लब्धिरित्युक्तम् — ऋ, ए.

[26] यत्तु तीव्रतर० — अ, इ, ऊ, ऋ, ऐ.

[27] ०लब्धेरनुमानम् — आ, इ, ई, उ, ए, ऐ.

[28] ०विरुद्धादयुक्तमेव — इ.

[29] भेर्यादौ तीव्रप्रतिपत्तिः — इ; भेर्यां तीव्रशब्दप्रतिपत्तिः — ऐ.

[30] 'न तु' इत्येतन्नास्ति — ए.

[31] 'एव' इत्यत्र 'इव' इति दृश्यते — आ, ई, उ.

[32] 'तु' इति नास्ति — ऊ, ऋ.

[33] 'शब्दस्य' इत्यस्य स्थाने 'शब्दस्वाश्रयसिद्धत्वे तद्गुणत्वम् । रूपादीनां च गन्धस्तथा सिद्धः' इति दृश्यते — ऊ, ऋ.

[34] 'प्रत्यक्षसिद्धा' इत्यारभ्य 'असिद्धेः' इत्यन्तं नास्ति — ऋ.

[35] शब्दस्यान्यथानुप० — अ.

[36] ०देशागमनवृत्तित्वादनैकान्तिकश्च — अ.

ह्यत्र[1] वैधर्म्यदृष्टान्ततयोपात्तेषु रूपादिषु मध्याद् गन्धे वर्तत एव । अत एवास्माभिर्गन्धस्य [2]द्रव्यसहितस्यैव[3] घ्राण[4]देशागमनं [5]कल्प्यत इति चेत्; शब्दस्याप्येवं [6]कल्पनमस्त्विति न स्पर्शवतां शब्दो गुणत्वेन प्रत्यक्ष[7]सिद्धत्वादेवंविधैरनुमानावस्करैर्निषेद्धुं शक्यत [8]इति ॥१–२॥

अथ [9]स्पर्शशब्दवद्धृतिकम्पावपि वायोः साधनत्वेन दर्शयितुं व्यापारवैचित्र्यमुच्यते—'येनाविष्टम्' इत्यादि ।

> येनाविष्टं जगत्कृत्स्नं [10]विस्फुरद्वृद्धिमेति च ।
> येन संचार्यते ह्यात्मा[11] धार्यते च जगत्सदा ॥३॥
> [12]यत्र बद्धा विमानानां [13]कोटयोऽष्टौ च विंशतिः ।
> भ्रमन्ति चक्रवत्सोऽयं वायुः प्राणभृतां वरः ॥४॥
> लोकत्रयकृतावासः [14]सप्तधा यो महामुने ।
> येन संप्रेर्यते बीजं [15]शरीरेऽन्तरवस्थितम् ॥५॥
> येनावयवनिष्पत्तिः प्रसूतिश्चोपजायते ।
> [16]जरायुणा मुखे [17]छन्ने [18]कण्ठे च कफवेष्टिते ॥६॥
> [19]वायोर्गतिनिरोधाच्च न गर्भस्थः प्ररोदिति ।
> [20]प्राणः प्राणमयो यस्मात्प्राणिनां [21]जीवनं हि तत् ॥७॥
> [22]यदत्रोच्छ्वसनं प्रोक्तं [23]प्राणस्तेनाथ नाभितः ।
> समुत्थाय [24]हृदुद्गारैश्चेष्टते च महाबलः ॥८॥

**येन** आक्रान्तं **जगत्** चेष्टायोगाद् **वृद्धिमेति**। निश्चेष्टस्य [25]मृतशरीरस्य [26]वृद्ध्यदर्शनाच्चेष्टा

---

[1] ह्यत्रैव — ए, ऐ.

[2] दृष्टस्य हि तस्यैव — ए; दृश्यद्रव्यसहितस्यैव — ऐ.

[3] एवकारो नास्ति — इ.

[4] ०देशगमनं — ई, उ, ऊ, ऐ.

[5] कल्पित इति — अ, इ, ऐ.

[6] कल्प्यत्वमस्त्विति —अ, आ, इ, ई, उ, ए, ऐ.

[7] ०सिद्धत्वादित्येवं० — आ.

[8] इतीति — ऐ.

[9] स्पर्शवद्धृतिकम्पनापि — अ, ए; स्पर्शवद्धृतिकम्पावपि — आ, इ, ई, उ, ए.

[10] स्फुटते वृद्धि — मु, ओ; सुलभाद्वृद्धि० — उ; विस्फुरद्वृद्धिमेव च — ऋ.

[11] ह्यस्माद् — ऋ.

[12] यत्राबद्ध० — मु, उ; यात्राबद्ध० — ओ.

[13] कोटयोऽप्यष्टविंशतिः — मु, उ; कोटयोऽष्टा च विंशतिः — ऊ, ऋ.

[14] अष्टमो यो महामुने — ऊ, ऋ.

[15] योनावुत्पत्तिकारणम् — मु० पाठान्तरम्, ऊ, ऋ, ओ.

[16] जरायूणां — मु; जरायुना — उ, ऊ, ऋ.

[17] छिन्ने — मु, उ.

[18] कण्ठोरस्कवचोष्णता — उ.

[19] वायोस्तत्र निरोधाच्च — मु, उ.

[20] प्राणयः प्राणिनो यस्मात् — उ; प्राणो य प्राणयो यस्मात् — उ० पाठान्तरम्; प्राणाः प्राणमयो यस्मात् — ओ.

[21] जीवनं हितम् — ऊ; जीवितं हितम् — ऋ.

[22] यदत्रोच्छ्वासनं — मु, उ.

[23] प्राणस्सोऽप्यथ नादितः — ऊ, ऋ.

[24] हृदुद्गाराद्विचेष्टति — मु, ओ; ततोद्गाराद्विचेष्टति — उ.

[25] धृतशरीरस्य — अ.

[26] वृद्ध्यदर्शनाद्वायु० — आ.

च वायुव्यापार एव। **येन च आत्मेति** स्थूलशरीरं [1]**संचार्यते, जगच्च** [2]तृणपर्णाद्यूर्ध्वमना[3]धार एव **धार्यते**, स [4]च वायुरित्युक्तः[5] "धृतिकम्पलिङ्गो वायुः" इति। **यत्र** चागमेषु [6]**विमानानां कोटयो भ्रमन्ति** इति श्रूयते। [7]यश्चास्मिन् [8]भूर्भुवस्स्वर्लक्षणे लोकत्रये [9]**सप्तधा**[10] [11]तत्स्कन्धेष्ववस्थित इति [12]श्रुतीतिहासादावुक्तः। **येन** [13]च [14]स्त्रीपुंसयोर्गर्भजननव्यापारकाले [15]**शरीरेऽन्तरवस्थितं बीजं** प्रेर्यते। [16]गर्भस्य[17] [18]च मातृ[19]कुक्षौ **अवयवनिष्पत्तिः**, ततश्च योनिद्वारेण [20]जन्म क्रियते स वायुः। यस्य च [21]गर्भाशयादिना **गतिनिरोधाद् न** [22]गर्भस्थैरगर्भस्थैरिव शब्द उच्चार्यते। न चैतावता गर्भस्थस्य विपत्तिरिति संभावनीयम्। **यस्मात्** [23]**प्राणो** यो [24]वक्ष्यमाणः [25]स जीवनमयो हीति। यस्मात्तदेव **प्राणिनां जीवन**मुच्यते। तस्मिन्निवृत्ते मरणदर्शनादिति। [26]**यदत्र** गर्भे [27]समुच्छ्वसन-मुक्तं **प्राणः तेन** [28]कारणभूतेन [29]**नाभितः समुत्थाय** हृदयसंक्षोभात् **चेष्टते** इति [30]न गर्भस्थस्य पञ्चतेति। [31]यस्यैतद्व्यापारवैचित्र्यं स वायुः सिद्धः ॥३-८॥

अथ तस्य [32]भेदाः—'स वायुः' इत्यादि।

**स वायुः पञ्चधा भिन्नो यथा भवति तच्छृणु।**
[33]**प्राणोऽपानः समानश्च** [34]**ह्युदानो व्यान एव च ॥९॥**

---

[1] संचार्यन्ते — इ, ऐ; संचाल्यते — ऊ; सन्वक्ष्यते — ए.
[2] तृणपर्णादूर्ध्व० — अ, आ, ई, उ, ऊ, ऋ.
[3] ०धारमेव — अ.
[4] चशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[5] ०रित्युक्तम् — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[6] मतङ्ग० विद्या० २३. ५२ उ०, ५३ पू०.
[7] यच्चास्मिन् — अ, ऊ, ऋ.
[8] भूर्भुवर्लक्षणे — अ.
[9] सप्त तथा — अ.
[10] अत्र 'वा' इत्यधिकम् — ऊ, ऋ.
[11] तत्स्कन्धेषु स्थित — इ; तच्छन्नेष्ववस्थित —ऊ.
[12] श्रुतीतिहासादौ वृत्तम् — इ; ऋग्वेदे ५. ५२. सू०. वाल्मीकिरामायणे बाल० ४७.
[13] चशब्दो नास्ति — ऊ, ऋ.
[14] स्त्रीपुंसोगर्भजनन० — अ, आ, इ; स्त्रीपुंसार्गर्भजनन० — ई, उ.
[15] शरीरान्तरावस्थितं — अ, इ, ऐ.
[16] अत्र 'न चैतावता' इत्यधिकम् — अ, इ, ऊ.
[17] गर्भस्थस्य — अ, ऊ.
[18] चशब्दो नास्ति — ऋ. चशब्दादनन्तरं 'विपत्तिरिति संभाव्यम्। यस्मात्प्राणे यो वक्ष्यमाणः स जीवनमयो हीति। यस्मात्तदेव प्राणिगर्भस्य' इत्यधिकम् — ऊ, ऋ.
[19] ०कुक्ष्यवयव० — अ.
[20] जनीक्रियते — ए.
[21] गर्भशयनादिना — आ, इ, ई, उ, ऊ, ऋ; यस्य शयनादिना — ऐ.
[22] गर्भस्थस्यैव गर्भस्थैरिति शब्द — अ, ऊ.
[23] प्राणे — अ, ऐ.
[24] वक्ष्यमाणस्य जीवन० — ए; वक्ष्यमाणसंजीवन० — ऐ.
[25] सन् जीवन० — अ.
[26] 'यदत्र' इत्यस्य स्थाने 'तत्र' इति दृश्यते — ई, उ.
[27] समुच्छ्वासन० — अ, आ, इ, ई, उ, ए, ऐ.
[28] करणभूतेन — ई, उ, ऊ, ऋ.
[29] नाभिह्नितः — ऊ, ऋ.
[30] नकारो नास्ति — ई, उ, ए; ना — ऐ.
[31] यस्य तद्व्यापार० — ऊ, ऋ.
[32] भेदः — अ, इ, ऐ; भेदात् — ऊ, ऋ, ए.
[33] प्राणापानसमानाश्च — ओ.
[34] उदानो — उ, ऊ, ऋ, ओ.

तत्र प्राणस्य लक्षणम् — 'प्राणो बलम्' इत्यादि ।

**प्राणो बलं [1]समाख्यातं [2]तच्चैवाणोर्न हीयते ।**
**न च प्राणादृते कश्चित्स्पन्दते मुनिसत्तम ॥१०॥**
**[3]नासारन्ध्रवहो यो हि वेगवान्प्राण उच्यते ।**
**लाघवं दीप्तिरायामो [4]मेधा च प्राणवृत्तयः ॥११॥**

योऽयं [5]श्वासात्मको वायुः, स [6]**प्राणः** । स एव [7]च **बलम्** अहंकार[8]वृत्तित्वेनोक्तमिति, **अणोः** सकलस्य **न हीयते** । प्रलयकेवल[9]विज्ञानकेवलयोस्तु अहंकाराद्यभावात् तस्याप्यनंभव एव । तस्य च [10]लाघवाद्या वृत्तयः ॥२०–११॥

अथापानस्य — 'अपानाख्येन' इत्यादि ।

**अपानाख्येन भेदेन [11]पानाद्याघ्रातमेव [12]सः ।**
**नयत्यधस्ताद्विण्मूत्ररेतांसि च यथाक्रमम् ॥१२॥**
**नाभेरधस्ताद्यो वायुस्तेन [13]संधुक्ष्यतेऽनलः ।**
**कृत्वाम्भोऽध[14]स्ततो ह्यन्नमुपरिष्टाद्विपच्यते ॥१३॥**
**तद्विपाको द्विधा याति [15]स्थूलः सूक्ष्मश्च सुव्रत ।**
**स्थूलो विण्मूत्रसंज्ञोऽन्यः [16]सूक्ष्मः कोशविवृद्धये ॥१४॥**

**अपानाख्येन भेदेन** पानाद्याघ्रातमिति पीतं भुक्तं च **सः** [17]वायुः, [18]**अधस्तान्नयति विण्मूत्ररेतांसि च** यथाद्वारम् । यश्चासौ [19]अधः स्थितो वायुः अपानाख्यः, तेनैव [20]वह्निः जाठरः [21]**संधुक्ष्यते** । तत एव हेतोर्जलम् **अधः कृत्वा** [22]तेन [23]**अन्नं** पच्यते । [24]तत्प्रेरणयैव [25]चान्नविपाकोऽपि स्थलसूक्ष्म-

---

[1] समाख्यातः — मु, उ, ओ.
[2] स एवाणोर्न — मु, उ.
[3] मनसा रन्ध्रपायोर्हि — उ.
[4] द्वेधा प्राणस्य वृत्तयः — ओ.
[5] श्वासप्रश्वासात्मको — ऊ, ॠ.
[6] प्राणाः — ॠ.
[7] चशब्दो नास्ति — ऐ.
[8] ०वृत्तित्वेन । तेनोक्त० — इ, ॠ.
[9] ०विज्ञानकलयोस्तु — ऊ, ॠ; ०विज्ञान-केवलिनोस्तु — ए.
[10] लाघवाद्यवृत्तयः — इ.
[11] पानान्नादिजिघृक्षता — उ.
[12] च — मु, उ, ओ.
[13] संधुक्षते — ऊ, ॠ.
[14] ०स्ततोऽत्यन्न० — मु, उ; ०स्ततोऽप्यन्न० — ओ.
[15] स्थूलसूक्ष्मश्च — ऊ, ॠ, ओ.
[16] सूक्ष्मकोश० — ओ.
[17] 'वायुः' इत्यारभ्य 'अधःस्थितो' इत्यन्तं लुप्तम् — ॠ.
[18] रसस्थानं नयति — ए.
[19] व्यवस्थितः — अ.
[20] 'वह्निः' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[21] संधुक्षते — अ.
[22] 'तेन' इति नास्ति — ए.
[23] अन्यं — ऊ.
[24] तत्र प्रेरण० — ए.
[25] चशब्दो नास्ति — ऊ, ॠ; चात्यन्तविपाको हि — ऐ.

भेदेन याति। स्थूलभेदोऽपि विण्ठादिभेदेन। सूक्ष्मभेदस्तु[1] [2]पूर्वोक्तस्य षट्संख्यात्मनः कोशस्य [3]वृद्धये इति ॥१२–१४॥

समानस्य स्वरूपम् — 'समानो नाम' इत्यादि।

समानो नाम यो भेदो [4]वायोस्तेन [5]विधार्यते।
रसः सोऽपि द्विधा भूयो रक्तं स्थूलतरं तयोः ॥१५॥
[6]रक्तान्मांसं नाडयश्च त्वग्वपुश्चोपजायते।
सूक्ष्मभेदात्पुनर्भेदो [7]रसस्येह [8]विभिद्यते ॥१६॥
[9]स्थूलाच्छुक्लविपाकोऽन्यः [10]सूक्ष्मान्मज्जोपजायते।
[11]तस्मात्सूक्ष्मतमो यो हि तेनास्थीनि भवन्ति हि ॥१७॥
तस्मादप्यपरः सूक्ष्मो [12]रसपाकविभेदजः।
तेन लोमानि केशाश्च [13]नखानि मुनिपुङ्गव ॥१८॥
प्रादुर्भवन्त्यथाङ्गानि कान्तिश्चैवोपजायते।
मेदोऽन्यो धातुरुद्दिष्टः सोऽप्यत्र [14]रसपाकजः ॥१९॥
[15]समानमरुदुत्क्षेपाद् [16]रसः [17]सर्वशरीरगः।
नाडीरन्ध्रेषु सूक्ष्मेषु [18]पुष्ट्यर्थमुपसर्पति ॥२०॥
इन्द्रियाणां [19]हृदुत्थाभिर्नाडीभिर्दशभिः स्थितः।

येन [20]सर्वधातुक्रमेण शरीरे रसः समतां नीयते, [21]स समानो नाम वायुः। तच्छक्त्यैव [22]च रसः अत्यन्तसूक्ष्मेष्वपि नाडीरन्ध्रेषु इन्द्रियस्थानेषु च उपसर्पति ॥

---

[1] सूक्ष्मभेदेन — अ; सूक्ष्मस्तु — इ, ऐ.
[2] मतङ्ग० विद्या० १९. २५ उ० –३२.
[3] वृत्तये — इ.
[4] वायुस्तेन — उ.
[5] विसार्यते — ऊ, ऋ.
[6] रक्तान्मांसात्मनो यच्च — उ; रक्तं मांसं नाडयश्च — उ० पाठान्तरम्; रक्तमांसं नाडयश्च — ओ.
[7] रसस्येव — ऋ.
[8] निगद्यते — उ.
[9] स्थूलं चक्रविपाको० मु, उ, ऊ; स्थूलचक्रविपाको — ऋ.
[10] सूक्ष्मो मज्जोप० — ऊ, ऋ.
[11] तस्माच्चक्षुस्तमो — उ.
[12] रसः पाक० — ऊ, ऋ.
[13] वायास्ते मुनि० — उ; नखश्च मुनि० — ऊ, ऋ.
[14] रसधातुजः — उ.
[15] समानमरुतो वक्ष्ये — उ; समानमरुद्विक्षेपाद् — उ० पाठान्तरम्, ओ; समानमारुतक्षेपाद् — ऊ, ऋ.
[16] वायोस्सर्वशरीरिणः — उ,
[17] सर्वशरीरिणाम् — ऊ, ऋ; सर्वशरीरिणः — ओ.
[18] पुत्रार्थमुपसर्पति — उ; पुष्ट्यत्वमुपसर्प्यते — उ० पाठान्तरम्; पुष्ट्यर्थमुपसर्पते — ओ.
[19] यदुत्थाभि० — उ, ओ.
[20] सर्वधातुषु क्रमेण — अ, आ, इ, ई, उ, ए, ऐ.
[21] 'स' इति नास्ति — ऋ.
[22] चशब्दो नास्ति — अ, इ.

अथ प्रसङ्गाद् [1]नाडीनां स्वरूपप्रतिपादनाय [2]मध्यमनाड्याः स्वरूपं तावदुच्यते — 'पादाङ्गुष्ठाग्रतः' इत्यादि ।

पादाङ्गुष्ठाग्रतो व्यक्ता नाभितो हृदयं गता ॥२१॥
सुषुम्ना नाम सा ज्ञेया ब्रह्मरन्ध्राब्जनिर्गता ।
प्राणिनां प्राण[3]संचारे निर्मिता परमेष्ठिना ॥२२॥
अपानस्यापि [4]संचारे [5]सर्पितेयं [6]सुविस्तृता ।
[7]गुदे यो वर्तते वायुरधस्तादुपयाति हि ॥२३॥
सर्वासामेव नाडीनामुद्भवो [8]नाभिदेशतः ।
[9]तस्माद्दशाङ्गुलं नालं [10]निबद्धा [11]यात्र वर्णिता ॥२४॥
[12]पद्मस्याष्ट[13]दलस्योर्ध्वं तन्मध्ये भोगभुक् सदा ।
[14]संस्थितः सर्वगोऽप्यस्मात्कारणात्सुप्रतीयते ॥२५॥
[15]येनाशु विषयान्दृष्ट्वा [16]विचारयति सादरम् ।
[17]शोकं क्रोधं विषादं वा [18]विस्मयं तापमेव वा[19] ॥२६॥
[20]हर्षं वाप्यथ संचिन्त्य हृदयेनैव भावयेत् ।
[21]ताभ्योऽन्या नाड्यः सूक्ष्मास्ताभ्यः [22]सूक्ष्मतमास्तथा ॥२७॥
एवं [23]ता लोमकूपान्ता नाड्यो [24]विस्तृता मुने ।
समीकरोति [25]सर्वाङ्गैर्विपक्वं तद्रसं सदा ॥२८॥
नाडीरन्ध्रेषु [26]तेनोक्तः [27]समानोऽयं सदागतिः ।

---

[1] नाडीनादस्वरूप० — अ.
[2] मध्यनाड्याः — ई, उ, ऋ; मध्यमनाड्यां — ए.
[3] ०संचारान्निर्मिता — उ, ओ.
[4] संचारात् — उ.
[5] सर्पतीयं — ओ.
[6] सुविस्मिता — उ; सविस्तृता — ओ.
[7] गुदादौ वर्तते — मु, उ; गुदे या वर्तते — ऊ, ऋ.
[8] नाभिर्दर्शितः — उ; नाडिदेशतः — ओ.
[9] तस्मादेवाङ्कुरे नालं — उ.
[10] निरुद्धा — ऋ.
[11] यत्र — उ० पाठान्तरम्.
[12] पुत्रस्याष्ट० — उ.
[13] दलस्येत्थं — मु, उ, ऊ, ऋ.
[14] सान्निध्यः सर्व० — मु, उ, ओ; सो स्थितः — ऊ, ऋ; वृत्त्यनुसारेणात्र 'संस्थितः' इति पाठः संपादितः ।
[15] यान् गृह्य विपयान् — उ; येनाशु विभयान् — ओ.
[16] विचारं याति — ऊ; ऋ.
[17] शोकः क्रोधो विषादो वा — मु; शोकः क्रोधे विषादे वा — उ; शोकः क्रोधो विषादोऽपि — ओ.
[18] विस्मयस्ताप एव वा — मु, ओ; विस्मयस्ताप एव च — उ.
[19] च — ऊ, ऋ.
[20] हर्षो वाप्यथ — मु, उ, ओ.
[21] नाड्योऽन्या — उ; नाभ्योऽन्या — ऋ.
[22] स्थूलतमा० — उ.
[23] तल्लोमरूपान्ता — मु, उ; ता लोमरूपान्ता — ओ.
[24] विसृता — मु, उ, ऊ; विधृता — ऋ.
[25] सर्वाङ्गो विपक्वं तं रसं — ऊ, ऋ.
[26] तेनोक्तं — उ, ऊ; तेनोक्ताः — ऋ.
[27] समानेयं — ऋ.

सा च [1]मध्यमनाडी तालुब्रह्मरन्ध्रेण[2] [3]द्वादशान्तव्यवस्थितं सकलजगज्जीवनभूतं [4]शशिकुशेशयं यावन्निर्गता। [5]ततश्च तेन मार्गेण [6]योगिनस्ततोऽमृतमुप[7]युज्यामृतीभवन्तीति। [8]तन्मध्याच्च नाभिदेशादन्यासां रसवायु[9]वहानां नाडीनामुत्पत्तिः। [10]ततश्च नाडीचक्रमध्यादूर्ध्वं [11]हृत्कुशेशयकर्णिकायां [12]**भोगभुक्** [13]पुरुषः **संस्थितः**। स च [14]**सर्वगोऽपि अस्माद्** हृदयस्थानाद्धेतोर्यतः सुष्ठु प्रतीयते, ततस्तत्र संस्थितः इत्युपचारादुच्यते। **येन** हृदयस्थान एवासौ कार्यकरणैरभिव्यक्तः [15]सन् **विषयान् दृष्ट्वा विचारयति** शोकक्रोधादिकं च **संचिन्त्य**। **हृदयेनैवेति** हृदयाव[16]स्थितैर्बुद्ध्यादिभिरेव [17]भावयन् [18]शक्तो दृष्टः। तेन [19]तत्राभिव्यक्त [20]इत्युच्यते॥

उदानस्य लक्षणम् — 'उदानो ह्यूर्ध्वगमनः' इत्यादि।

[21]**उदानो ह्यूर्ध्व[22]गमनो वह्निना [23]सह सर्पितः॥२९॥**
**श्लेष्माणमुदरादूर्ध्वं पित्तं वाप्यथ लोहितम्।**
**वमयत्यन्न[24]पानं वा सोद्गारः [25]क्षुद्विजृम्भिका॥ ३०॥**
[26]**कास[27]शोषादयश्चापि [28]विकारास्तत्समुद्भवाः।**
**तस्मिन्नेव निबद्धा [29]वाग्व्यज्यते तदुदीरणात्॥३१॥**
**उन्मीलने च नेत्राणां तथा [30]संमीलनेऽपि च।**
**भ्रूविकारे च साटोप उदानः [31]प्रविजृम्भते॥३२॥**

---

[1] मध्यनाडी ब्रह्मरन्ध्रेण — आ; मध्यमनाडी ब्रह्मरन्ध्रेण — ई, उ, ए; मध्यमा नाडी तालुरन्ध्रेण — ऊ, ऋ; मध्यमनाडी तालुरन्ध्रेण — ऐ.
[2] अत्र 'तद्' इत्यधिकम् — ऊ, ऋ.
[3] द्वादशान्तं व्यवस्थितं — ए.
[4] शशिकेशेशयं — अ, ए; शक्तिकुशेशयं — ऊ, ऋ; शशीकुशेशयं — ऐ.
[5] ततश्चेतनेन मार्गेण — अ; ततश्चेतनमार्गेण — ऐ.
[6] योगिनस्ततोऽत्रतमुप० — इ; योगेन ततोऽमृतमुप — ऊ, ऋ; योगिनस्तदमृतमुप० — ए.
[7] ० युज्याथास्यामृतीभवतीति — ऊ, ऋ.
[8] तं मत्यच्चि — इ.
[9] ०वहनानां — अ, आ, इ, ई, उ, ए, ऐ.
[10] ततश्चासीत्क्रमध्यानमूर्ध्वं — इ.
[11] 'हृत्कुशेशय' इत्यस्य स्थाने 'कुशेशया' इति दृश्यते — ऊ, ऋ.
[12] भोगात्पुरुषसं० — इ.
[13] पुरुषसं० — ऐ.
[14] सगर्वोऽपि — आ.
[15] सन् विषयं दृष्ट्वा — अ, आ, ई, उ, ए, ऐ; स विषयं दृष्ट्वा — इ.
[16] ०स्थिते बुद्ध्यादि० — ऋ, ऐ.
[17] भाव्यं — ऋ; भावयेत् — ऐ.
[18] शक्तेः — इ.
[19] तत्राव्यक्त — इ.
[20] इतिशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[21] उदानऊर्ध्व — उ, ऊ, ऋ, ओ.
[22] ०गमने — ओ.
[23] सर्पितस्तदा — मु, उ, ओ.
[24] ०पाने वा — मु.
[25] क्षुद्विजृम्भिताः — मु; क्षुद्विजृम्भकाः — ओ.
[26] काश० — मु.
[27] ०शोषादयः क्वापि — उ; ०श्वासादयश्चापि —ऊ, ऋ; ०शोषादयस्यापि — ओ.
[28] विकारस्त० — उ, ओ.
[29] वाग्युज्यते — ऋ.
[30] संमीलनेऽनिलः — उ; सन्मीलनेऽनिलः — ऊ; सन्मीलितेऽनिलः — ऋ.
[31] प्रविजृम्भितः — मु, उ.

**वह्निना** जाठरेण **सह** ऊर्ध्वगमन[1]निमित्तं धातूनां प्रवृत्तो यः, [2]स उदानः। [3]तथा हि श्लेष्मादिकम् [4]**उदरादूर्ध्वं** [5]**वमयतीति** उद्गिरति[6] [7]**अन्नपानं** च **सोद्गारो** भूत्वा। तथा [8]क्षुताद्याः [9]कासादयश्च [10]तन्निबन्धना एव। [11]तत्रैव **निबद्धा वाग्**, यतः **तदुदीरणादेव** [12]**व्यज्यते। नेत्राणाम्** उन्मीलनादौ, [13]भ्रूविक्षेपे च स एव प्रवर्तते॥२९–३२॥

अथ [14]व्यानस्य लक्षणम् — 'आक्षेपाकुञ्चने' इत्यादि।

> [15]**आक्षेपाकुञ्चने** [16]**व्याने गमने च प्रसारणे॥३३॥**
> [17]**चलनास्फोटने चैव बहिश्चेष्टासु सर्वदा।**
> **प्रवृत्तः कुरुते व्यानः पञ्चमो योऽनिलो महान्॥३४॥**

आक्षेपाकुञ्चनादिषु **बहिश्चेष्टासु** [18]**प्रवृत्तः व्यानः**, तास्तावत् **कुरुते**॥३३–३४॥

'कर्माशयवशाद्' इत्यादि।

> **कर्माशय[19]वशाद्बीजं** [20]**निषिक्तं योनिमध्यतः।**
> **मातुर्दर्पबलान्नारी पितुर्दर्पबलात्पुमान्॥३५॥**
> **समदर्पबलोत्साहात्कललात्तु[21] नपुंसकम्।**

[22]कर्मविपाकं च सहकारिणमपेक्ष्य, मातापित्रो[23]रन्यतर[24]स्योभयोर्वान्तर्दर्पात्मको भूत्वा स वायुः स्त्रीपुंनपुंसकानां हेतुत्वं याति॥

---

[1] ०निमित्तमणूनां — अ, आ, इ, ई, उ, ए, ऐ.
[2] 'स' इति नास्ति — ऊ, ऋ.
[3] 'तथा हि' इत्येतन्नास्ति — अ, इ, ए, ऐ; तथापि — ऊ, ऋ.
[4] उदरोर्ध्वं — आ; उदरादूर्ध्वे — ऐ.
[5] वामयतीति — ऊ, ऋ; गमयतीति — ए.
[6] अत्र इतिशब्दोऽधिकः — ऊ, ए.
[7] अन्नं पानं च — आ, इ, ऐ.
[8] क्षुधाद्याः — अ, आ, इ, ई, उ, ए, ऐ.
[9] काशादयश्च — अ, ऊ.
[10] तन्निबन्ध एव — ऊ, ऋ.
[11] तत्रैव निबन्धा यतः — अ, इ; तत्रैवानिबन्धा वाग्यतः — आ; तत्रैव च वचनं निबद्धं यतः — ऊ; तत्रैव च वचनं निरुद्धं यतः — ऋ; तत्रैव निबन्धा वाग्यतः —
[12] व्यज्यन्ते — अ, इ, ए, ऐ.
[13] भ्रूक्षेपे च सर्व एव — ऊ, ऋ.
[14] वक्तव्यस्य — अ, आ, ई, उ.
[15] उत्क्षेपाकुञ्चने — ऊ, ऋ.
[16] व्यानो — ऊ.
[17] वल्गनास्फोटने — ऊ; वर्गणास्फोटने — ऋ.
[18] प्रवक्तव्यो न तावत् — अ; प्रवृत्तो व्यानस्तावत् — आ, इ, ई, उ, ऊ, एं, ऐ.
[19] वशाद्बीजान् — ओ.
[20] निषक्तं — ऋ; निक्षिप्तं — ओ.
[21] केवलात्तु — मु, उ, ओ; कलिलात्तु — ऊ, ऋ.
[22] कर्मविपाकश्च — अ, आ, इ, ई, उ, ऐ.
[23] ०रन्यतमस्यो० — इ, ऊ, ऋ, ऐ.
[24] ०स्योभयोर्वा दर्पात्मको — ए.

'मातापित्रोः' इत्यादि ।

**मातापित्रोरनाचारादशुभैश्च [1]पुराकृतैः ॥३६॥**
**भवेत्कुब्जः [2]कुणिः [3]पङ्गुर्मूको वामन एव च ।**

तेन च वायुनोपकृताद्[4] **माता**[5]**पित्रोः** [6]संबन्धिनः [7]प्रागार्जिताद्, इदानीं [8]वानुष्ठितादशुभात् कुब्जवामनादिविकृताङ्गो जायते ॥

'तयोः' इत्यादि ।

**[9]तयोर्भावसमायोगो[10] [11]विकारैरपि जायते ॥३७॥**
**[12]पितृशीलः [13]पुमानत्र [14]मातृशीला कुमारिका ।**
**[15]शीलेनोभयथोपेतमभवत्तन्नपुंसकम् ॥३८॥**

तस्यैव [16]च वायोः, शुभाशुभकर्माक्षिप्तैः **विकारैः** [17]मातृपितृगतेन [18]शरीरस्वभावेन योगः पुत्रादौ भवति ॥३७–३८॥

'विभिन्ने' इत्यादि ।

**विभिन्ने वायुना [19]शुक्ले द्विधा भेदः [20]प्रवर्तते ।**
**कुक्षिद्वयं समाश्रित्य युग्ममुत्पद्यते तदा ॥३९॥**
**अपानानिल[21]विक्षोभाद्भेदैर्यावद्भिरीर्यते[22] ।**
**तावत्यः[23] सूतयस्तस्य [24]रेतसः संभवन्ति हि ॥४०॥**

---

[1] पुरातनैः — ऊ, ऋ.
[2] कुणः — ऊ, ऋ.
[3] पङ्कुः — मु, उ.
[4] वायुनोपकृता — इ, ए, ऐ.
[5] ०पितृसंबन्धिनः — ऊ, ऋ.
[6] संबन्धिनि न प्रागार्जिताद् — इ.
[7] प्रागर्जिताद् — ऊ.
[8] चानुष्ठिता० — अ, आ, इ, ई, उ, ए, ऐ.
[9] तयोर्भोगे समा० — उ.
[10] ०समायोगाद् — मु, ऊ, ऋ.
[11] विपाकैरुपजायते — ऊ; विपाकेनोपजायते— ऋ; विकारैरुपजायते — ओ.
[12] मातृशीलः — उ, ऊ, ऋ.
[13] पुमांस्तत्र — ऊ, ऋ.
[14] पितृशीला — उ, ऊ, ऋ.
[15] शीलेनोभयकोपेत० — मु, उ, ओ.
[16] चशब्दो नास्ति — इ, ए, ऐ.
[17] मातापितृ० — आ.
[18] शरीरस्य भावेन — अ, आ, इ, ई, उ, ए, ऐ.
[19] शुक्रे — ऊ, ऋ.
[20] प्रपद्यते — मु, उ, ओ.
[21] ०विक्षेपा० — ऊ, ऋ.
[22] ०द्भिरिष्यते — मु, उ, ओ.
[23] तावन्तः — मु, उ.
[24] शक्तितः — उ.

[1]तेन चापानवायुसहभूतेन वायुना यावन्तो भेदा निषेककाले [2]मातृयोनौ बीज[3]स्योत्पाद्यन्ते, तावन्त्यपत्यानि [4]ततो भवन्तीति ॥३९–४०॥

'पित्रोः' इत्यादि ।

> [5]पित्रोः कर्मानुरूपत्वात्स्वाश्रयस्यानुरूपतः[6] ।
> भवेदपत्यं विप्रेन्द्र निषेकसमयात्पुनः ॥४१॥
> [7]यद्धातुस्तद्भवेच्छुक्लमनिलेनाकुलीकृतम् ।
> प्रकृतिस्तद्वशात्तस्य[8] [9]तादृगेवोपजायते ॥४२॥
> वातस्थानगते [10]शुक्ले कृशो रूक्षोऽनवस्थितः ।
> चलस्वभावो लघ्वाशी [11]विकृतेक्षण एव च ॥४३॥
> पित्ताशयगते [12]शुक्ले गौरः पिङ्गेक्षणस्तथा[13] ।
> अकाल[14]पलितो दक्षस्तेजस्वी चोपजायते ॥४४॥
> [15]श्लेष्मधातौ जलघ्राणः [16]स्निग्धत्वक् स्थिर एव [17]च ।
> शुक्लाक्षः सुभगश्चैव सुकेशवदनस्तथा ॥४५॥
> आमाशयगते [18]शुक्ले स्थूलो [19]जीर्णस्थितिस्तथा ।
> [20]विमिश्राण्यपि चिह्नानि [21]विमिश्रैः संभवन्ति हि ॥४६॥
> [22]भावैरन्तर्विशेषाच्च कालभेदैश्च[23] सुव्रत ।
> [24]कामभेदैश्च जायन्ते [25]वर्णाकारसमाधयः ॥४७॥

तेनैव [26]च वायुना मातृपितृकर्मानु[27]रूपतः, पुत्राद्याश्रयकर्मणोऽनुसाराच्च [28]निषेककाले वात-

---

[1] तेनापानवायुभूतेन — अ, आ, ई, उ, ए; तेन वायुभूतेन — इ; तेन चापाने वायुसहभूतेन — ऊ, ऋ; तेनापानभूतेन — ऐ.

[2] मातृप्रधानौ बीज० — अ.

[3] ०स्योत्पात्यन्ते — ई, उ.

[4] 'ततः' इति नास्ति — ऋ.

[5] अर्धमिदं — मु, उ, ओ, कोशेषु ४३ पूर्वार्धादनन्तरं दृश्यते ।

[6] ०त्स्वाशयाच्चानुरूपतः — मु, उ; ०त्स्वाशयश्चानुरूपतः — ओ.

[7] धातुस्थं यद्भवेच्छुक्रं मलिनेनाकुली०—ऊ, ऋ.

[8] ०द्वशात्तत्र — ऊ, ऋ.

[9] तादृश्येवोप० — ओ.

[10] शुक्रे दृशो रूक्षो० — ऊ, ऋ.

[11] प्रकृतेः क्षीण एव च — उ.

[12] शुक्रे — ऊ, ऋ.

[13] ०स्तदा — मु, उ.

[14] ०फलितो — मु, उ, ओ.

[15] श्लेष्मधातुर्जलाघ्राणः — मु, उ; श्लेष्मजान्तर्जडः प्राणी — ऊ, ऋ.

[16] स्थिरत्वक् — ऊ; स्थिरत्वात् — ऋ.

[17] सः — ऊ, ऋ.

[18] शुक्रे — ऊ, ऋ.

[19] जीर्णस्थितिः सदा — मु, ओ; वायुर्यतः सदा — उ.

[20] विमिश्राद्धि विमिश्राणि — उ.

[21] विशिष्टैः — ऊ, ऋ.

[22] भावैरन्नविशेषाच्च — ऊ, ऋ.

[23] ०भेदाच्च — ऊ, ऋ.

[24] शुक्लभेदैश्च — मु० पाठान्तरम्; कामभेदाश्च —उ; शुक्लभेदाश्च — उ० पाठान्तरम् ।

[25] वर्णागमसमाधयः — ऊ, ऋ.

[26] चशब्दो नास्ति — आ.

[27] ०रूपं पुत्रा० — अ, आ, इ, ई, उ, ए, ऐ.

[28] निषेककालवात० — ऊ, ऋ.

[1]पित्तादिधातुष्वन्य[2]तमस्मिन् बीजं [3]प्रेर्यते । [4]यत्प्रेरणया [5]कृशरूक्षादिप्रकृति पुत्राद्युत्पद्यत इति ।।४१–४७।।

'तत्सर्वं' इत्यादि ।

**तत्सर्वं [6]वायुसामर्थ्यात्प्रसूतेरुपवर्णितम्[7] ।**
**[8]प्राधान्यं कर्मणः [9]प्रोक्तं तद्विपाक[10]वशात्स्फुटम् ।।४८।।**
**आयुः कर्म तथा [11]वित्तं विद्या जन्म च यादृशम् ।**
**प्राप्नोति नान्यथा यस्मात्तस्मादेतत्सुनिश्चितम् ।।४९।।**
**बोद्धव्यं मुनिशार्दूल [12]वायोरप्यस्वतन्त्रता ।**
**स्वतन्त्रः परमेशानो [13]यदायत्तं जगत्सदा ।।५०।।**
**तत्त्वधर्मप्रसङ्गेन वायोरुक्तं [14]विचेष्टितम् ।**

यद्यपि च [15]सर्वं कर्मतः परमेश्वरप्रेरितात् पुंसो भवतीत्युक्तम्[16] । तथाप्येतत्प्र[17]सूत्यादिकमान्तरवायुसहकारिणो भवतीति वायोस्तत्त्वधर्मः प्रोक्तः ।।

अथ [18]वायौ भुवनान्युच्यन्ते — 'स्थानानि' इत्यादि ।

**स्थानानि तत्र रुद्राणामष्टावत्यद्भुतानि तु ।।५१।।**
**भीमं [19]भीमेश्वरस्योक्तं स्थानमन्यत्सुखावहम् ।**
**महेन्द्रं चारु रत्नाढ्यं [20]मन्त्रेशस्य च धीमतः ।।५२।।**
**महानादस्य नाथस्य [21]चाट्टहासाख्यमेव हि ।**
**विमलं विमलस्योक्तं स्थानं रुद्रस्य शोभनम् ।।५३।।**
**[22]नाखलं [23]नाखलेशस्य [24]ततोऽन्यद्विपुलं मुने ।**

---

[1] ०पित्तादिष्वन्य० — आ.
[2] ०तमस्य बीजं — ऊ, ऋ.
[3] प्रेर्यन्ते — इ, ऐ.
[4] यत्प्रेरकेण शरीरं क्ष्मादिप्रकृति — इ.
[5] कृशरूपक्ष्मादिप्रकृतिरिति — अ.
[6] युगसामर्थ्या० — ऊ, ऋ.
[7] ०त्प्रमृतेरुपवर्णितम् — उ; प्रसूतेरपि वर्णितम् —ऊ, ऋ.
[8] प्राधान्ये — ऊ, ऋ.
[9] प्रोक्तः — ऋ.
[10] ०वशाद्ध्रुवम् — ऊ, ऋ.
[11] वृत्तं — मु.
[12] वायोरपि स्वतन्त्रता — ऋ.
[13] यस्यायत्तं — ऊ, ऋ.
[14] विचेष्टितः — ओ.
[15] सर्वे कर्मतः — ऊ, ऋ; सर्वकर्मतः — ऐ.
[16] मतङ्ग० विद्या० ८. ११६ उ० — १२१.
[17] ०सूत्यादिकर्मान्तिरवायु० — आ, इ, ई, उ, ए; ०सूत्यादिकमन्तरवायु० — ऊ, ऋ, ऐ.
[18] वायुभुवना० — ऊ, ऋ.
[19] भीमेश्वरं प्रोक्तं — उ.
[20] तद्व्रतेशस्य धीमतः — ऊ, ऋ; तादृशे यस्य धीमतः — ओ.
[21] चाट्टहासस्य चैव हि — उ; अट्टहासाख्यमेव च — ऊ, ऋ, ओ.
[22] नाबलं तु बलेशस्य — उ.
[23] नखलेशस्य — मु, ओ; तु खलेशस्य — उ० पाठान्तरम्.
[24] तन्त्रेऽत्र विपुलं मुने — उ; ततोऽन्यद्विमलं मुने — ऊ, ऋ.

[1]स्थानं च नखलेशस्य तन्नाम्ना चारुमण्डितम् ॥५४॥
[2]कुरुक्षेत्रमतोऽधस्तात्स्थानं रुद्रस्य कीर्तितम् ।
गयेति [3]नाम यत्स्थानं तत्रासौ प्रपितामहः ।
रुद्रैरात्मगुणोपेतैर्वृतः स परमेश्वरः ॥५५॥

पञ्चाष्टकानां [4]मध्यादत्र [5]भीमाद्यष्टकक्रमेणाष्टौ भुवनानीति ॥५१–५५॥

अथ व्याख्यातस्य [6]प्रकरणस्योपसंहाराय व्याख्येयस्य [7]चोपक्रमाय[8] श्लोकः — 'वायोः' इत्यादि ।

**वायोर्मयाध्यात्म[9]बहिः स्थितस्य धर्मः समासात्कथितो विभज्य ।**
**एकोऽपि [10]सन् भिद्यते वृत्तिभेदात् वह्नेरिदानीं शृणु विस्तरं मे ॥५६॥**

य **एकोऽपि** [11]**सन्** [12]प्रागुक्तैर्वृत्तिभेदैः [13]**भिद्यते**; तस्य **वायोः** [14]शरीरान्तर्बाह्यविभागेन **धर्मः कथितः** इति [15]व्याख्यातार्थोपसंहारः । अथ व्याख्येयोपक्रमः — "**वह्नेरिदानीं शृणु** [16]**विस्तरम्**" इति ॥५६॥

[17]इति [श्री][18]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [19]मतङ्ग[20]वृत्तौ [विद्यापादे]
त्रिपर्वपदार्थे वायुतत्त्वप्रकरणं [विंशं समाप्तम्] ॥
**विंशः पटलः**

---

[1] स्थानं कनकलेशस्य — मु, उ; स्थानं कनखलेशस्य — ऊ, ऋ; स्थानं च नाखलेशस्य — ओ.

[2] रुद्रक्षेत्रमतो — मु; कुरुक्षेत्रं ततो — ऊ, ऋ.

[3] नामतः स्थानं — मु, उ. ओ.

[4] मध्यादष्टक० — ए.

[5] भीमाद्यष्टकस्वक्रमेणाष्टौ — ऊ, ऋ.

[6] प्रकरणोप० — ऊ.

[7] चशब्दो नास्ति — आ, ए.

[8] अत्र चशब्दोऽधिकः — अ.

[9] ०महीस्थितस्य — उ.

[10] सन् भिद्यति — उ, ओ; संभिद्यत — ऊ, ऋ.

[11] सत् — ए.

[12] प्रागुक्तैः प्रतिभेदैः — इ; प्रागुक्तैर्भेदैः — ऋ; प्रागुक्तैर्व्यक्तिभिर्भेदैः — ए.

[13] भिद्यन्ते — इ, ऐ; विभिद्यते — ऋ.

[14] शरीरान्तरस्य ह्यविभागेन — अ; शरीरबाह्यविभागेन — आ, इ, ए, ऐ; शरीरस्यास्य विभागेन — ई, उ.

[15] व्याख्यातार्थस्योप० — ऊ, ऋ.

[16] विस्तारम् — अ, इ, ऐ.

[17] इतिशब्दो नास्ति —ऊ, ऋ.

[18] 'भट्ट' इत्येतन्नास्ति — अ, आ, इ, ई, उ, ऐ.

[19] अत्र 'श्रीमन्' इत्यधिकम् — आ, ए.

[20] ०प्रवृत्तौ — ऋ.

# एकविंशः पटलः

## वह्नितत्त्वप्रकरणम्

> अथेदानीं जगद्धातुरमोघेनात्मतेजसा[१]।
> [२]सृजतो रूपतन्मात्रात्संक्षुब्धादभवत्तदा ॥१॥
> [३]त्रिगुणोऽग्निः स्ववीर्येण [४]रूपेणातीवशोभिना।
> शब्दस्पर्शसमायोगात्तत्तेजः पक्तिलक्षणम् ॥२॥

**अथेति** वायुतत्त्वोत्पत्तेरनन्तरम् अग्निः ईश्वरस्य **सृजतः** सामर्थ्येन क्षुब्धाद् **रूपतन्मात्रादभवत्** इत्युच्यते। पदार्थादिसंबन्धाश्चात्रापि[५] [६]प्राग्वदेव वाच्याः। वाक्यात्मकस्तु संबन्धः [७]"वह्निना सह सर्पितः" [८]इत्यादिवाक्यैरनेकविधः। स च [९]**रूपेण** प्रथिव्यादिविलक्षणेन [१०]प्रकाश-स्वभावेन, [११]स्पर्शेन [१२]चौष्ण्यादिना, धमधमादिना [१३]च शब्देन योगात् [१४]त्रिगुणोऽग्निः स्वेन [१५]कारणात्मना वीर्येण। न तु [१६]संसर्गवशात्तस्य [१७]ते गुणा इत्यर्थः। तच्च तस्य रूपं तेजो-लक्षणं [१८]प्रकाशकं दिव्यं, भौमम्, [१९]आकरजं हिरण्यात्मकमिति[२०] त्रिविधम्। [२१]औदरं पुनः **पक्ति-लक्षणमेव**। [२२]न तु प्रकाशात्मकम् ॥१–२॥

तथा [२३]हि—'येन' इत्यादि।

> **येनान्तर्वर्तिना सर्वं** [२४]**जगत्पाकमुपैति हि।**

---

[१] ०नाथ तेजसा — उ.

[२] सृजते — ओ.

[३] त्रिविधोऽग्निस्व० — ओ.

[४] स्वरूपेणातिशोभनः — मु, उ.

[५] अपिशब्दो नास्ति — आ, ई, उ.

[६] तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत्।

[७] मतङ्ग० विद्या० २०. २९ उ०.

[८] इतिवाक्यैरनेक० — आ, ए; इत्यादिभि-र्वाक्यैरनेक० — ऊ, ऋ.

[९] क्रमेण — ए.

[१०] प्रकाशो भास्वरस्वभावेन — आ; प्रकाश-शोभास्वभावेन — ई, उ, ऋ, ए; प्रकाश-सौरस्वभावेन — ऊ; प्रकाशोऽस्य भावेन — ऐ.

[११] 'स्पर्शेन' इति नास्ति — आ.

[१२] चौष्ण्यात्मना — ऊ, ऋ.

[१३] चशब्दो नास्ति — आ, ऊ.

[१४] त्रिविधोऽग्निः — ऊ, ऋ.

[१५] कार्यात्मना — अ.

[१६] संबन्धवशा० — ए.

[१७] एते — ऊ.

[१८] प्रकाशदिव्यभौमम् — इ, ऐ.

[१९] आकरजमरण्यात्मकम् — अ; आकरजं मण्या-त्मकं — आ, इ, ई, उ, ऊ, ऋ, ए; आकरजं मह्यात्मकम् — ऐ.

[२०] इतिशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.

[२१] औदर्यं — आ, इ, ई, उ, ए, ऐ; उदर्यं — ऊ, ऋ.

[२२] 'नतु' इत्येतन्नास्ति — आ.

[२३] हिशब्दो नास्ति — ऊ, ऋ.

[२४] जगत्पक्तिमुपैति हि — ओ.

**येन** [1]उदरस्थेन वह्निना **सर्वं जगद्** जन्मवज्जन्तुचक्रं नाना[2]शरीरात्मकमवस्थाभेदेन [3]**पाकम्** एति ॥

भौमोऽपि हि कश्चिदग्निस्तथाभूत [4]एवेत्युच्यते — 'ऊष्मतः' इत्यादि ।

**ऊष्मतो[5]ऽङ्कुरितं [6]बीजमुच्छूनं वृद्धिमेति हि ॥३॥**

भौमेन [7]ह्यूष्मणा शाल्यादि**बीजम् अङ्कुरितं** सदुच्छूनोच्छूनतरादिक्रमेण **वृद्धिम्** अङ्कुरादि-[8]लक्षणम् **एति** । ततः पाक [9]एव तस्यापि विद्यते । न [10]प्रकाश इति ॥३॥

[11]पूर्वस्तु न पाकवृत्तिरेव । किं तु — 'क्षुत्पिपासा' इत्यादि ।

**क्षुत्पिपासापरीतापपक्तिवृत्तेन चाप्यणोः ।**
**[12]नाभिस्थो वायुना सार्धं यत्कोष्ठेऽन्नादिकं [13]गतम् ॥४॥**
**तत्पचत्यात्मसामर्थ्यात्सुसमिद्धो[14]दकेन्धनः ।**

पुरुषस्य **नाभिस्थः** [15]जाठराग्निः वायुसहितः [16]**क्षुत्पिपासादिनान्येनापि**[17] **वृत्तेन** कोष्ठस्थमाहारादि [18]स्वशक्त्यैव **पचति** । यतः **सुसमिद्धो**ऽग्नौ उदकाद्याहारेन्धनः । यदाहुः[19] —

"आहारमग्निः पचति दोषानाहारवर्जितः ।
धातून्क्षीणेषु दोषेषु [20]जीवितं धातुसंक्षये ॥" इति ॥

द्वितीयः पुनः — 'बाह्यतः' इत्यादि ।

**बाह्यतः स विशेषत्वाद्दहनालोकपक्तिभिः ॥५॥**
**जगतश्चोपकाराय [21]स्थापितोऽग्निः स्वयंभुवा ।**

---

[1] उदरस्थितेन — ऊ, ॠ.
[2] ०शरीरात्मकं दिव्यमवस्था० — इ, ऐ.
[3] पाकमेवेति — इ.
[4] एवोच्यते — अ, आ.
[5] ०ऽङ्कुरतो — मु; ०ऽङ्कुरितो — उ.
[6] बीजात्क्रमशो वृद्धि० — मु; बीजात्क्रमेण वृद्धि० — उ.
[7] सूक्ष्मेण — अ; सूक्ष्मणा — ए.
[8] लक्षणमभितः पाक — इ; लक्षणा चेति ततः पाक — ॠ.
[9] एतस्यापि — आ, ई, उ.
[10] प्रकाशक इति — इ, ऐ; प्रकाशत इति — ऊ.
[11] पूर्वं तु न पाकादिवृत्ति० — आ; पूर्वोक्तनानुपाकवृत्ति० — इ; पूर्वोक्तं न पाकवृत्ति — उ; पूर्वं तेन पाकवृत्ति० — ए.
[12] नाभिस्थवायुना — ॠ.
[13] गतः — उ.
[14] ०दकेन्धनम् — उ० पाठान्तरम् ।
[15] जाठरोऽग्निः — ऊ, ॠ; जठराग्निः — ए, ऐ.
[16] क्षुदादिना० — ऊ, ॠ.
[17] ०नाद्येनापि — अ, आ, इ, ई, उ, ए, ऐ.
[18] स्वशक्त्यैः पचति — ए.
[19] आकरो न लभ्यते ।
[20] जीवितुर्धातुसंक्षयः — अ, ऐ.
[21] स्थापितोऽयं स्वयंभुवा — ऊ, ॠ.

बाह्ये तु यः [1]पूर्वोक्ताद्भौमाद्विशिष्टः **सः विशेषत्वाद्**[2] [3]दहनप्रकाशपचनैः **जगतः**[4] [5]वक्ष्यमाणोपकाराय **स्थापितः** इति भौम एवोद्भूतानुद्भूत[6]दाहप्रकाशवृत्तिभेदेन उभयविशेषात्मकः कथितः ॥

अथ कोऽसौ वक्ष्यमाणोऽस्य वह्नेर्जग[7]दुपकार इति । तत्रोच्यते — 'स्वर्गावाप्त्यै' इत्यादि ।

**स्वर्गावाप्त्यै त्रिधा [8]स्थाप्य [9]हूयते वेदवित्तमैः ॥६॥**
**[10]तद्भेदो गार्हपत्याग्निर्गीयते कल्पितः पुरा ।**
**ततश्चाहवनीयाख्यो दक्षिणाग्निश्च कीर्तितः ॥७॥**
**[11]यतोऽग्नावास्थिताः सत्यः प्रीयन्ते सर्वदेवताः ।**

यो ह्येष [12]जाठरः — 'असावग्निः' इत्यादि ।

**[13]असावग्निरिति ज्ञेयो [14]जीर्यते येन यौवनम् ॥८॥**

सोऽपि **अग्निरिति** [15]एवं जगदुपकाराय प्राणाग्निहोत्रविधिना स्वर्गादिसाधनत्वेन **ज्ञेयः** ज्ञानिभिः । **येन** तेषां [16]ज्ञानिनां **यौवनं** [17]**जीर्यते**; न विकाराय प्रभवतीति ॥८॥

ततश्च — 'धर्मोऽस्य' इत्यादि ।

**[18]धर्मोऽस्य [19]सहजो ह्यौष्ण्यं मरुद्योगा[20]च्चलात्मकः ।**
**दृश्यते मुनिशार्दूल न [21]कदाचिन्निरिन्धनः ॥९॥**

[22]**अस्य** अग्नेर्द्विविधस्यापि **ह्यौष्ण्यं** [23]स्वभावसिद्धो **धर्मः** । न त्वाकरजस्य । तस्य प्रकाशरूपत्वेऽपि अनुद्भूत[24]स्पर्शत्वात् । अस्य [25]च द्विविधस्यैव [26]वायुसंयोगाच्चलात्मकत्वं; न [27]तृणवत् सहजम् । न चायमाकरजवह्नि[28]वदनिन्धनः क्वचिदपि दृश्यत इति ॥९॥

---

[1] पूर्वोक्तत्वाद् — ई, उ.
[2] अत्र एवकारोऽधिकः — ऋ.
[3] अग्निप्रकाश० — इ.
[4] अत्र चशब्दोऽधिकः — ऊ, ऋ.
[5] मतङ्ग० विद्या० २१. ६ उ०-८.
[6] ०दहनप्रकाश० — ऋ.
[7] ०दुपकारायाग्निरिति — इ; ०दुपकाराय स्थापित इति — ऐ.
[8] व्याप्य — मु.
[9] स्तूयते — उ; भूयते — ओ.
[10] वेदादौ गार्ह० — ऊ, ऋ; भेदो वा गार्ह० — ओ.
[11] यतोऽत्रावस्थिताः — ऊ, ऋ.
[12] जठरः — इ.
[13] असौ वह्निरिति — मु, उ.
[14] येन जीर्यति यौवनम् — मु, उ, ओ.
[15] एव — ऐ.
[16] निरामययौवनं — इ.
[17] शीर्यते — ए.
[18] धर्मोऽथ — ओ.
[19] सहजोष्णत्वं — मु, उ, ओ.
[20] ०च्चलात्मता — मु, उ, ओ.
[21] कदाचिदबिन्धनम् — उ.
[22] अस्यामन्तर्द्विविध० — ए.
[23] स्वभावे सिद्धो धर्मः — ऊ; स्वभावो ह्यौष्ण्यो धर्मः — ऋ.
[24] ०स्पर्शनात् — इ.
[25] चशब्दो नास्ति — ए.
[26] वायोः संयोगा० — इ; वायुसंवेगा० — ऐ.
[27] त्वौष्ण्यवत् — ऊ, ऋ.
[28] ०वदनिबन्धनः — अ, ई, उ, ऐ.

अथ [1]चतुर्थो दिव्यः प्रकारो वह्नेः क्रमेणोच्यते — 'संग्रहेऽम्भोऽणवः' इत्यादि ।

**संग्रहेऽम्भोऽणवो ज्ञेयाः सर्वास्विन्धनजातिषु ।**
**तासु काठिन्य[2]भावो यः [3]सूक्ष्मः क्ष्माणुमयो हि सः ॥१०॥**
**[4]दह्यतश्चाग्निना तस्य द्विधा [5]भेदः प्रजायते ।**
**[6]पार्थिवाणोः परा काष्ठा भस्मत्वमुपयाति हि ॥११॥**
**[7]अम्भोऽणवश्च नीहारन्यायेनोर्ध्वं विनिर्ययुः ।**
**प्रयान्ति स्वोचितं स्थानं [8]यद्दत्तं प्राक् स्वयंभुवा ॥१२॥**

[9]द्विविधस्याप्यग्नेः **इन्धनजातयो** याः, तासु संग्रहनिमित्तं जलपरमाणवः स्थिताः । [10]कठिनात्मना च पार्थिवाः परमाणवः । तथा च दाहेन इन्धनस्य यः पार्थिवो [11]भागः स भस्मसाद्भवति । जलपरमाणवस्तु धूममार्गेण [12]**ऊर्ध्वं** मेघस्थानं यान्ति । [13]मेघात्मकोऽप्यग्निर्वक्ष्यमाण[14]नयेनादित्यकिरणात्मक एव यतः ॥१०–१२॥

[15]यदप्यदग्धमुदकं तदपि — 'प्रजार्थम्' इत्यादि ।

**प्रजार्थं रश्मिभिः शेषमर्कस्याम्भोऽपकृष्यते ।**

प्रजोप[16]कारायैवावशिष्टं तद् **अर्कस्य** संबन्धिभिः किरणैराकृष्यते । [17]तदिदमाहुः[18] —
"सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ।"

अतश्च — 'संविभज्य' इत्यादि ।

**संविभज्यैकमेवात्र विधात्रा तद्द्विधा कृतम् ॥१३॥**
**[19]स्थितये त्वग्निभावेन तथा लोकाय भास्करः ।**

---

[1] चतुर्थोऽस्य दिव्यप्रकारो — आ, इ; चतुर्थोऽस्य दिव्यः प्रकारो — ई, उ, ऊ; प्रकारचतुर्थस्य दिव्यप्रकारो — ऋ; चतुर्थोऽस्य दिव्यः प्रकाशो — ए, ऐ.

[2] ०तापोऽयं — उ.

[3] सूक्ष्मक्ष्माणु० — ऊ, ऋ, ओ.

[4] दह्यतश्चानतीतस्य — उ; महतश्चाम्भसस्तस्मात् — ओ.

[5] भेदोपजायते — उ.

[6] पार्थिवा परमा काष्ठा — मु.

[7] अम्भोऽणवस्सनीहार० — उ.

[8] यदन्तं प्राक् — उ.

[9] द्विविधस्याप्यस्याग्नेः — ऊ, ऋ; द्विविधस्याग्नेः — ऐ.

[10] कठिनात्मत्वादिना पार्थिवाः — ऊ, ऋ.

[11] भावः — अ, आ, इ, ई, उ, ए, ऐ.

[12] ऊर्ध्वमेव स्थानं — इ, ए.

[13] मेघात्मकोऽग्निः — इ.

[14] मतङ्ग० विद्या० २१. १३–१५ पू०.

[15] यद्यपीदमुदकं — इ.

[16] ०करणायैवावशिष्टं — आ, ई, उ.

[17] 'तदिदमाहुः' इत्यारभ्य 'रविः' इत्यन्तं नास्ति — अ, आ, इ, ई, उ, ए, ऐ.

[18] रघुवंशे १. १८ उ.

[19] स्थितयेऽग्नित्वभावेन — ऊ; स्थितयेऽग्निस्वभावेन — ऋ.

**एकमेव** इदं तेजः संसारस्थित्यर्थं [१]भूमौ वह्निरूपतया, [२]दिव्यमादित्यात्मना [३]च भगवता स्थापितम् ॥

अत एव — 'वह्निः' इत्यादि ।

**[४]वह्निः संलीयते [५]भानौ समाप्येन्धनराशयः [राशिकम् ?] ॥१४॥**

[६]भौमाग्निरर्चिर्मार्गेणादित्यात्मन्येव **लीयते** इति श्रुतयोऽप्युपपन्नाः । [७]यच्छ्रूयते —

"[८]अग्निः प्रविशति सूर्यमन्तर्धीयते ततः ।" इति ॥१४॥

[९]यस्माच्चैवमर्ककिरणैरेव [१०]जलमाकृष्यते — 'तस्माद्' इत्यादि ।

**तस्मात्ते किरणा भानोर्वर्षन्ति च [११]तपन्ति च ।**

**तस्मात्** [१२]कारणात् [१३]**ते किरणाः** मेघरूपतया **वर्षन्ति** । तेजोरूपत्वेन **च** [१४]**तपन्ति** इति । [१५]यदुक्तम्[१६] —

"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।" इति[१७] ॥

अतश्च — 'व्यक्तिः' इत्यादि ।

**व्यक्तिर्ज्योतिष्मतां सिद्धा [१८]नान्यतो [१९]हुतभोजनात् ॥१५॥**
**[२०]तत्त्वमेतत्समाख्यातं स्वधर्मेण यथा तथा ।**

**ज्योतिष्मतां** चन्द्रादीनां **न** भानोः [२१]**अन्यतः व्यक्तिः सिद्धा** । [२२]स्वतेजोमयत्वेन तेषां [२३]प्रकाशा-

---

१ भूमावग्निरूप० — आ, ई, उ, ऊ, ऐ.
२ दिव्यादित्यात्मना — आ, इ, ई, उ, ए; दिव्यादिव्यात्मना — ऊ, ऋ; दिव्यादिव्यात्मनः — ऐ.
३ चशब्दो नास्ति — इ, ए.
४ वह्निस्वयं लीयते — उ.
५ भानोः — मु, उ, ओ.
६ भौमोऽग्नि० — ऊ, ऋ.
७ श्रूयते — आ, इ, ई, उ; यच्छ्रूयन्ते — ए.
८ अग्निर्वा संसूर्यमनुप्रविशति ततोऽन्तर्धीयत इति — आ, इ, ई, उ, ए, ऐ; अग्निर्वास्तं सूर्यमनुप्रविशति ततोऽन्तर्धीयत इति —ऊ, ऋ.
९ यस्माच्चैकमर्क० — अ.
१० जलमाकर्ष्यन्ते — इ; जलमाकर्ष्यते — ए.
११ पतन्ति च — ऋ.
१२ किरणात् — अ.
१३ तेऽर्ककिरणाः — ऊ, ऋ.
१४ पतन्तीति — ऊ, ऋ.
१५ 'यदुक्तम्' इत्यारभ्य 'इति' इत्यन्तं नास्ति — ऊ, ऋ.
१६ मनुस्मृतौ ३. ७६ उ०.
१७ इत्यादि — अ, ऊ, ऋ.
१८ नान्यत्र व्रतलक्षणः — उ; नान्यत्र हुतभूषणात् — उ० पाठान्तरम् ।
१९ ब्रह्मभूषणः — ऊ, ऋ; वृतभूषणा — ओ.
२० तत्त्वमेव तवाख्यातं — ऊ, ऋ.
२१ 'अन्यतः' इति नास्ति — अ.
२२ स्वतो जलमयत्वेन — आ, इ, ई, उ, ऊ, ए, ऐ; सतो जलमयत्वेन — ऋ.
२३ प्रकाशसंभवादिति — इ, ऊ; प्रकाशसद्भावादिति — ऋ.

संभवादिति[1]। जलपात्रप्रतिबिम्बप्रकाशवत् तेषामपि यथा [2]प्रकाशस्तथा ज्योतिःशास्त्रे विस्तरेण [3]दर्शितमिति [4]तत एवाव[5]धार्यम्। [6]तेन [7]प्रकाशात्मकमेतदित्यग्नेस्तत्त्वधर्मः प्रोक्तः ।।

अथात्र भुवनानि — 'तस्मिन्न्ये' इत्यादि ।

**तस्मिन्न्ये भुवनेशाना रुद्रा बालेन्दुमौलयः ।।१६।।**
**तेषां स्थानानि दिव्यानि दिव्याचारगुणानि तु ।**
**नामभिः कीर्तयिष्यामि यथावदनुपूर्वशः ।।१७।।**
**भैरवं नाम [8]तत्रैकं [9]केदारं चाप्यतः [10]परम् ।**
**तृतीयं मध्यमं नाम महाकालं चतुर्थकम् ।।१८।।**
**पञ्चमं स्थानमन्यच्च नाम्ना [11]त्वाम्रातिकेश्वरम् ।**
**[12]जल्पेश्वरमतोऽधस्ताच्छ्री[13]शैलं च ततः परम् ।**
**हरिश्चन्द्रं च विख्यातमष्टमं मुनिसत्तम ।।१९।।**

पञ्चाष्टकानां मध्याद् भैरवाद्यष्टकस्यैवात्र क्रमेण[14] भुवनान्यष्टाविति ।।१६-१९।।

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य [15]चोपक्रमाय[16] श्लोकः — 'येनाशेषम्' इत्यादि ।

**येनाशेषमिदं स्वधर्मकिरणैश्चित्रं जगद्द्योतित-**
**मापः[17] संपरिवेष्टिता[18] दशगुणोत्सेधेन[19] क्षिप्त्वोदरे[20] ।**
**सोऽयं वह्नि[21]रमोघवीर्यबलवान्संक्षेपतो वर्णितो[22]**
**वक्तव्यं विधिवन्मुने [23]समुचितं प्राप्तं पयोऽनुक्रमात् ।।२०।।**

---

[1] 'इति' इत्यत्र 'इत्यादि' इति दृश्यते — अ.
[2] प्रकाशकस्तथा — ऐ.
[3] प्रदर्शितमिति — ऊ, ऋ.
[4] अत एवाव० — अ.
[5] ०धार्यताम् — इ.
[6] 'तेन' इत्यारभ्य 'अथात्र भुवनानि' इत्यन्तं नास्ति — ऊ, ऋ.
[7] प्रकाशात्मकं तदित्यग्ने० — अ, इ, ऐ; प्रकाशात्मकमेव तदित्यग्ने० — ई, उ, ए.
[8] तत्पूर्वं — ऊ, ऋ.
[9] केदारश्चाप्यतः — मु, उ.
[10] पुनः — उ.
[11] त्वाम्रादिकेश्वरम् — मु, उ, ओ.
[12] जलेश्वरमतो० — मु; जल्पेश्वरं तनो० — ऊ, ऋ.
[13] ०शैलश्च ततः परम् — उ; ०शैलमपरं ततः — ओ.
[14] ०स्यैव क्रमेण — अ; ०स्येव च क्रमेण — आ; ०स्यैव च क्रमेण — इ, ई, उ, ए; स्यैव चाक्रमेण — ऐ.
[15] चशब्दो नास्ति — आ.
[16] अत्र चशब्दोऽधिकः — इ.
[17] 'आपः' इत्यत्र 'स्वापः' इति दृश्यते — मु.
[18] ०वेष्टितं — उ.
[19] ०गुणोच्छ्रायेण — ऊ, ऋ, ओ.
[20] क्षित्योदरे — मु; कृत्वोदरे — ऊ, ऋ; क्षिप्तोदरे — ओ.
[21] ०रमोघमेघबलवान् — ऊ, ऋ.
[22] संक्षिप्य चोक्तोऽधुना — मु.
[23] समुचितप्राप्तं — ऊ, ऋ.

येन[1] अग्निना अशेषमिदं [2]जन्तुचक्रं स्वधर्मैः [3]दाहपाकादिभिः जाठरभौमविशेषरूपेण, किरणैः[4] [5]प्रकाशात्मकैर्दिव्य[6]भौमाकरजरूपेण द्योतितम्। येन चाम्भो भुवनात्मना बाह्यतो वेष्टितम्। यदुक्तम्[7] —

"सलिलेन क्षितिर्व्याप्ता व्याप्तं सलिलमग्निना।" इति।

[8]**सोऽयं वह्निरमोघवीर्यबलवान्संक्षेपतो वर्णितः"** इति व्याख्यातार्थोपसंहारः। अथ [9]व्याख्येयस्योपक्रमः — **"वक्तव्यं . . पयोऽनुक्रमाद्"** इति ॥२०॥

[10]इति [श्री][11]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [12]मतङ्गवृत्तौ[13] [विद्यापादे] त्रिपर्वपदार्थे [14]वह्नितत्त्वप्रकरणम् [एकविंशं] समाप्तम्॥

**एकविंशः पटलः**

---

[1] अत्र चशब्दोऽधिकः — ए.
[2] जन्तुधर्मोपाधिभिः जाठर० — इ.
[3] देहपाकादिभिः — ऐ.
[4] अत्र चशब्दोऽधिकः — ऊ, ऋ.
[5] प्रकाशकैः — अ.
[6] ०भौमार्कजरूपेण — इ; ०भौमाकरणरूपेण — ऊ, ऋ.
[7] आकरो न लभ्यते।
[8] सोऽयमग्निरमोघ० — अ, इ; योऽयं वह्निरमोघ० — ऐ.
[9] व्याख्येयोप० — आ, इ, ई, उ, ए, ऐ.
[10] इतिशब्दो नास्ति — ऊ, ऋ.
[11] 'भट्ट' इति नास्ति — अ, आ, इ, ई, उ, ऐ; 'भट्ट' इत्यारभ्य 'विरचितायां' इत्यन्तं नास्ति — ऐ.
[12] अत्र 'श्रीमत्' इत्यधिकम् — आ.
[13] मतङ्गप्रवृत्तौ — ऋ.
[14] अग्नितत्त्व० — ऊ, ऋ.

## द्वाविंशः पटलः

## अप्तत्त्वप्रकरणम्

**अथातः संप्रवक्ष्यामि सान्वयोपात्तलक्षणम् ।**
**तोयं यद्रसतन्मात्रात्संक्षुब्धात्कारणेच्छया ॥१॥**
**व्यक्तं लोकोपकाराय [1]तच्चैवाणोश्चतुर्गुणम् ।**

**अथेति** अधिकारार्थः । [2]**अत इति** अग्नितत्त्व[3]विचारादनन्तरं तोयं प्रवक्ष्यामि; तोयतत्त्वविचारोऽधिक्रियत इत्यर्थः । अत्रापि पदार्थादिसंबन्धाः [4]प्राग्वदेव द्रष्टव्याः । वाक्यात्मकस्तु संबन्धः "[5]संग्रहेऽम्भोऽणवः" इत्यादिभिरनेकविधः । तच्च [6]सह कारणेन उपात्तं लक्षणं यस्य [7]तत् तथाभूतं प्रवक्ष्यामि । [8]**यद्** यस्माद् **रसतन्मात्राद्** ईश्वरेच्छया [9]क्षुब्धादभिव्यक्तं; तस्मात् [10]**सान्वयोपात्तलक्षणम्** एवोच्यत इति । **तच्च** लोकानामुपकाराय सरित्समुद्रादिभावेन साधारणात्मना **व्यक्तम्** । अणोश्च प्रकृतत्वा[11]दुपकारायासाधारण[12]सूक्ष्मदेहगतत्वेन व्यक्तमित्युक्तं [13]प्राक् । [14]वक्ष्यमाणैश्च [15]तत् चतुर्भिर्गुणैर्युक्तम् ॥

तत्र — 'रसः' इत्यादि ।

**[16]रसः स्वाक्योऽस्य बोद्धव्यस्त्रयोऽन्ये संकरोद्भवाः ॥२॥**
**शब्दः स्पर्शश्च रूपं च यतो[17]ऽन्योन्यं समीरिताः ।**
**[18]विशेषा व्यक्तिमायान्ति तमसा पूरिता भृशम् ॥३॥**

मधुरो **रसः** [19]प्रोक्तैर्भूतैः [20]सहास्यासाधारणः । शब्दस्पर्शरूपात्मकास्तु गुणाः क्रमेणाकाशा-

---

[1] तथैवाणो० — मु, उ.
[2] 'अत' इत्यारभ्य 'इत्यर्थः' इत्यन्तं नास्ति — ऊ, ऋ; अथ इति — आ, इ, ई, उ.
[3] विचारानन्तरं — अ, इ, ए, ऐ.
[4] तृतीयनवमप्रकरणयोः प्रारम्भे प्रोक्तवत् ।
[5] मतङ्ग० विद्या० २१. १० पू०.
[6] सहजान्वयेनोपात्तं — ऊ, ऋ.
[7] 'तत्' इति नास्ति — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[8] यस्मात् तद्रसतन्मात्राद् — ऊ, ऋ.
[9] क्षुब्धमभि० — ऊ, ऋ.
[10] सान्वयोक्तलक्षणम् — अ.
[11] ०दुपकरणायासाधारण० — अ; ०दुपकाराय साधारण — ऋ.
[12] ०सूक्ष्मदेहेन — इ; ०मदहेतुत्वेन — ए.
[13] मतङ्ग० विद्या० १९. २२–२५ पू० वृत्तौ ।
[14] मतङ्ग० विद्या० २२. २ उ०, ३; वक्ष्यमाणैश्चतुर्भिः — आ, ई, उ, ए, ऐ.
[15] 'तत्' इति नास्ति — अ.
[16] रसः स्वादुः प्रबोद्धव्य० — मु, उ.
[17] ०ऽन्योन्यसमीरिताः — ऊ, ऋ.
[18] विशेषाद्व्यक्ति० — मु, उ.
[19] प्रोक्तै रसैर्भूतैः — आ.
[20] सहास्याः साधारणः — अ, ऐ; सह स्यात् साधारणः — इ; सहास्य साधारणाः — ऊ, ऋ.

दिभिः सह साधारणतयास्य जाताः। तत्र शब्दः [1]चलचलादिकः। स्पर्शः शीतः। रूपं [2]तु शुक्लमेवेति। [3]न चैते शब्दादयो गुणा जले न सन्तीति वाच्यम्। यतः परस्परमभि[4]भवायापि प्रेरितास्ते विशेष[5]गुणात्मकाः **व्यक्ति** भेदेनैव [6]**आयान्ति** "[7]अयमम्बरस्य शब्दः, अयं वायोरग्नेर्वा, अयं तु जलस्येति। एवं स्पर्शादयोऽत्रैकान्वयेऽपि [8]विशिष्टा एव व्यक्तिमायान्ति। न चैकान्वयो भेदप्रत्ययविरोधी। यतोऽहंकारादिसप्तदशतत्त्वप्रकरणप्रतिपादितनयेन[9] तमसान्विता [10]अप्येते रूपरसादयो गुणा भेदेनैव प्रकाशन्त इति॥२–३॥

अथान्तर्बहिश्च तोयस्यापि स्वरूपमुच्यते — 'बीजम्' इत्यादि।

**बीजं भूत[11]विपाकोत्थं [12]भूतैरेव विवर्धितम्।**
**तदेव भोग्यं भोक्तृत्वं शरीरं हि शरीरिणाम्॥४॥**
**कृतकं [13]चाप्यनित्यं च दुःखानामालयं परम्।**

**शरीरिणां तदेव** तोयं **बीजं** [14]शुक्लाख्यं [15]वक्ष्यमाणाभ्यां हेतुभ्याम्। तच्चान्न[16]पानाख्यान्महाभूतपरिपाकादुत्पन्नम्। महाभूतैरेव [17]चान्नपानादिद्वारेण [18]**विवर्धितम्**॥[19]तदेव [20]**च** [21]स्त्र्याद्याकारशरीरात्मना परिणतं **भोग्यम्**। [22]भोक्तृशरीराकारेण [23]च [24]परिणतत्वं भोक्तृत्वम्। अन्यथा पतितबाह्यशरीरस्य, अप्राप्तबाह्यशरीरस्य च भोक्तृत्वाभावात्। तदेव [25]च संसारात्मकम्। **हीति** यस्मात्[26] कृतकानित्य[27]दुःखाद्यात्मकः संसारः[28] शरीरिणां[29] शरीरमेव। तच्च[30] तोयात्मनो बीजस्यैव विशेषा[31]वस्थानात्मकमिति॥

---

[1] छलछलादिकः — अ, आ, ई, उ, ऊ, ए, ऐ; छलफलादिकः — ॠ.
[2] तुशब्दो नास्ति — ऊ, ॠ.
[3] न च शब्दादयो — इ; न चैत एव शब्दादयो — ऐ.
[4] ०भावायापि — ऊ; ०भावतयापि — ऐ.
[5] ०गुणात्मिका व्यक्तिभेदेनैव — ऐ.
[6] आयाति — ऐ.
[7] 'अयं' इति नास्ति — इ, ऐ.
[8] विशिष्ट एव व्यक्तिमायाति — इ.
[9] मतङ्ग० विद्या० १८. ५उ०–११, ४७, ४८ पू०, ९८–१०४ पू०.
[10] अप्यन्ते — इ.
[11] ०विकारोत्थं — मु, उ.
[12] भूतान्येव विसर्पते—उ; भूतैरेव विसर्पते—ओ.
[13] चापि नित्यं च — ॠ.
[14] शुक्राख्यं — ऊ, ॠ; शक्त्याख्यं — ए.
[15] मतङ्ग० विद्या० २२, ५ उ०, ६ पू०.
[16] ०पानाख्यमहाभूत० — अ, इ, ए, ऐ; ०पानादिमहाभूत० — आ, ई, उ.
[17] वचनादिद्वारेण — ॠ.
[18] वर्धितम् — ऊ, ॠ.
[19] 'तदेव च' इत्यत्र 'तदेव वपुः' इति दृश्यते — अ; 'तदेवं' इति दृश्यते — ए.
[20] चशब्दो नास्ति — आ, इ, ई, उ, ऐ.
[21] पुत्राद्याकार० — आ, ई, उ, ए; वस्त्राद्याकार० — इ.
[22] भोक्तुं शरीरकारणे — इ.
[23] चशब्दो नास्ति — आ, ई, उ.
[24] 'परिणतत्वं' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ; परिणतं — ऊ.
[25] चशब्दो नास्ति — ऊ, ॠ, ए.
[26] अत्र 'तस्मात्' इत्यधिकम्—अ, आ, ई, उ, ए, ऐ.
[27] ०दुःखाद्यात्मकसंसारः—अ, आ, इ, ई, उ, ए, ऐ.
[28] अत्र 'सः' इत्यधिकम् — आ, ई, उ, ए.
[29] अत्र 'सः' इत्यधिकम् — ए.
[30] अत्र 'तोयात्मकं' इत्यधिकम् — अ, आ, इ, ई, उ, ए, ऐ.
[31] ०वस्थात्मकमिति — अ.

अथ तद्बीजं तोयात्मकमेव । न तु [1]पृथिव्याद्यात्मकमपीत्यत्र को हेतुरित्युच्यते — 'येन' इत्यादि ।

**येन [2]विक्लिद्यते यद्धि यत्प्रभावाच्च संग्रहम् ॥५॥**
**[3]प्रयान्ति क्ष्माणु[4]संघातास्तत्तत्तोयाणुवीर्यतः ।**

**येन** हि पृथिवीद्रव्यं [5]**विक्लिद्यते** । [6]यस्य [7]प्रभावाच्च [8]पृथिवीपरमाणवः **संग्रहं** यान्ति तत्तोयमुच्यते । बीजेन [9]च स्वशक्त्यनुसारेण पृथिवीद्रव्यं [10]तावन्मात्रमेव [11]विक्लिद्यते, संग्रहं च नीयत इति तत्तोयस्वभावमेव सिद्धचति । [12]न [13]पृथिव्याद्यात्मकमपीति तोयस्य भूतान्तरेभ्योऽयं[14] प्रकर्षः प्रोक्तः ॥

अथ [15]गुणान्तराण्युच्यन्ते — 'शीतत्वं' इत्यादि ।

**शीतत्वं च द्रवत्वं च [16]स्निग्धता चाम्भसः सदा ॥६॥**

अन्योऽपि — 'धर्मो यश्च' इत्यादि ।

**धर्मो यश्च शरीरे[17]ऽस्मिञ्श्लेष्मरक्तादिको गुणः ।**
**[18]पयसस्तं विजानीयात्काठिन्यं पार्थिवो गुणः ॥७॥**
**धातवः [19]पयसः सिद्धाः पार्थिवाः [20]स्थूलतां गताः ।**
**[21]आग्नेयेनाथ वीर्येण [22]पच्यमानाः शनैः शनैः ॥८॥**
**[23]ततः पिण्डत्व[24]मापन्ना विभक्ताश्चापि [25]वायुना ।**
**[26]खमाहात्म्यमनुप्राप्ताः स्वेन स्वेन महामुने ॥९॥**
**धर्मेणैवोप[27]लक्ष्यन्ते देहे [28]व्योम्ना प्रकाशिताः ।**

---

[1] पृथिव्यात्मक० — ऊ, ऋ.
[2] प्रक्लेद्यते तद्धि—ऊ, ऋ; प्रक्लिद्यते यद्धि—ओ.
[3] प्रयाति — ऊ, ऋ.
[4] संघातस्तद्गतो योऽणु० — उ; संघातस्तच्च तोयाणु० — ऊ, ऋ.
[5] विक्लेद्यते — अ, इ, ई, उ, ऊ, ऋ.
[6] 'यस्य' इत्यारभ्य 'विक्लिद्यते' इत्यन्तं नास्ति — ई, उ.
[7] भावाच्च — ऊ, ऋ, ऐ.
[8] 'पृथिवीपरमाणवः' इत्यारभ्य 'स्वशक्त्यनुसारेण' इत्यन्तं नास्ति — अ, ऐ.
[9] चशब्दो नास्ति — ऊ, ऋ.
[10] तावन्मात्रकमेव — आ, इ, ऊ, ए, ऐ.
[11] विक्लेद्यते — अ, इ, ई, उ, ऊ, ए, ऐ.
[12] नकारो नास्ति — ए.
[13] पृथिव्यात्मकमपीति — ऊ, ऋ.
[14] अत्र 'विशेषः' इत्यधिकम् — ए.
[15] गुणान्तरा अस्योच्यन्ते—अ, आ, इ, ई, उ, ए, ऐ.
[16] स्निग्धभावोऽम्भसः — ऊ, ऋ.
[17] ०ऽस्मिन्रक्तश्लेष्मादिको—मु; ०ऽस्मिन्कृत्स्नश्लेष्मादिको — उ० पाठान्तरम्, ऊ, ऋ, ओ.
[18] पयसस्तद्विजानी० – मु, ओ; पयसः संविजानी० — ऊ, ऋ.
[19] पयसा सिद्धाः — मु, उ, ओ.
[20] लघुतां — मु, उ.
[21] वह्न्येनाथ — ओ.
[22] पच्यमानः — ऋ.
[23] यावतः पिण्डमापन्नं — उ.
[24] ०मापन्नं — ओ.
[25] वा पुनः — ओ.
[26] स्वमाहात्म्य० — ओ.
[27] ०लक्ष्येण देहे — उ.
[28] व्योम्नावकाशिताः — ऊ, ऋ.

[1]योऽपि **श्लेष्मरक्ताद्यात्मकः शरीरे** धातुविशेषो लक्ष्यते । सोऽपि तोयस्यैव **गुणः** । [2]काठिन्यं स्थौल्यं [3]च तत्र पार्थिवो गुण इति [4]वक्ष्यामः । पाकस्तु[5] [6]तत्राग्नेयो[7]गुणः, अवयवविभागस्तु [8]वायवीयो गुण इत्युक्तम्[9] । ते [10]च भूम्यादय[11]स्तत्रार्थाः **खस्य** [12]**माहात्म्यसंबन्धम् अनुप्राप्ताः** इत्युक्तम् । यतो **व्योम्ना** सह [13]**प्रकाशिताः** तत्र **देहे स्वेन स्वेन धर्मेण** [14]प्रागुक्तेनापि[15] पञ्चापि लक्ष्यन्ते । व्योम्नोऽत्र स्थितिः [16]स्वकार्यसिद्धेत्यर्थः[17] । यदाहुः[18] —

"आकाशवायुप्रभवः शरीरात्समुच्चरन्वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥" [19]इति ।

ततश्च [20]तोयात्मकमपीदं पञ्चभूतात्मकमेव शरीरमिति प्रसङ्गात्कथितम् ॥

प्रकृतं तु — 'जीवनं' इत्यादि ।

**जीवनं सर्वजन्तूनां कार्यस्य [21]करणस्य च ॥१०॥**
**तत्सर्वमम्भसो वीर्यं पोषणं पुष्टिवर्धनम् ।**
**[22]तृट्तापवारणं लोके [23]तदेवामृतमुत्तमम् ॥११॥**

यत् **सर्वजन्तूनां** संबन्धिनः कार्य[24]करणस्य **जीवनम्** ओजःशब्दवाच्यं [25]वैद्यशास्त्रप्रसिद्धं, येन शरीरं [26]धार्यते । तदप्यम्भस एव कार्यम् । यदाहुः[27] —

पानीयं प्राणिनां [28]प्राणो [29]विश्वमेव हि तन्मयम् ।
अतोऽत्यन्तनिषेधेन न [30]क्वचिद्वारि वार्यते ॥" इति[31] ।

---

[1] सोऽपि — ऐ.
[2] काठिन्यस्थौल्यं — अ, ऊ, ऐ.
[3] चशब्दो नास्ति — अ, आ, इ, ई, उ, ऊ, ए, ऐ.
[4] मतङ्ग० विद्या० २३. ५.
[5] तुशब्दो नास्ति — ए.
[6] तत्राग्नेयो — आ, इ, ई, उ.
[7] 'गुणः' इति नास्ति — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[8] सावयवीयो — आ.
[9] आग्नेयो गुणः मतङ्ग० विद्या० २१. ३–६ पू० वृत्तौ । वायवीयो गुणः मतङ्ग० विद्या० २०. ६ वृत्तौ ।
[10] चशब्दो नास्ति — अ, ऋ.
[11] ०स्तत्राकाशस्य — अ, आ, इ, ई, उ, ए, ऐ.
[12] माहात्म्यं संबन्धम्—अ, आ, इ, ई, उ, ए, ऐ.
[13] प्रकाशितः — ए.
[14] मतङ्ग० विद्या० १९. २५ उ० —३३ पू० वृत्तौ ।
[15] अपिशब्दो नास्ति — ऊ, ऋ.
[16] स्वकात्सिद्धेत्यर्थः — ऊ, ऋ.
[17] ०सिद्धेरित्यर्थः — अ, ऐ. ०सिद्धचेत्यर्थः — ई, उ.
[18] आकरो न लभ्यते ।
[19] इतिशब्दो नास्ति — अ, आ, इ, ई, उ, ऐ.
[20] तोयमपीदं — आ, इ, ई, उ, ए; तोयप्रधानमपीदं — ऊ, ऋ; तोयात्ममपीदं — ऐ.
[21] कारणस्य — ओ.
[22] तृष्णापवारणं—ऊ, ऋ; तद्वातवारणं — ओ.
[23] तदेवामृतमुच्यते — उ; तद्देवामृतमुत्तमम् — ओ.
[24] ०कारणस्य— अ, आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[25] वैद्यकशास्त्रप्रसिद्धः — अ; वैद्यशास्त्रे प्रसिद्धं — आ; वैद्यकशास्त्रप्रसिद्धं—ऊ, ऋ, ऐ.
[26] जायते — अ, ए.
[27] आकरो न लभ्यते ।
[28] प्राणा — इ, ऋ.
[29] पानमेव हि — इ.
[30] क्वचिद्वापि वार्यते — ऐ.
[31] इतिशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.

तच्च तस्य **पोषणम्**। [1]पुष्टेस्तु वर्धनम्। [2]तदेव [3]च [4]तृड्दाहक्लेशादिशमनहेतुत्वाद् **अमृतम्** [5]इत्युच्यते [6]**लोके**॥१०–११॥

[7]तदेवं च — 'विभज्य' इत्यादि।

**विभज्य धात्रा स्थितये बहिरन्तश्च कल्पितम्।**
**परापरेण भेदेन जगत्यस्मिन्सितासिते॥१२॥**

**परापरेण भेदेन** [8]तोयं विभागेन **अन्तर्बहिश्च** ईश्वरेण ब्रह्मादि[9]स्थावरान्ते **जगति** निर्मितमिति तत्त्वधर्मोऽस्य[10] कथितः॥१२॥

अथाप्तत्त्वे भुवनान्युच्यन्ते — 'स्थानान्यत्र' इत्यादि।

**स्थाना[11]न्यत्र मुनिव्याघ्र रुद्राणाममितौजसाम्।**
**निर्मितान्यधिकाराय श्रीकण्ठेन महात्मना॥१३॥**
**लाकुलं प्रथमं तत्र [12]भारभूत्याह्वमेव च।**
**तृतीयं [13]डिण्डि नाम्ना वै [14]ह्याषाढीशमतः परम्॥१४॥**
**[15]पुष्करं पञ्चमं प्रोक्तं [16]नैमिशं षष्ठमुच्यते।**
**प्रभासमपरं [17]रम्यं तस्माद[18]प्यमराह्वयम्॥१५॥**

[19]पञ्चाष्टकानां मध्यादत्र [20]लाकुलाद्यष्टकस्य क्रमेणाष्टौ भुवनानीति॥१३–१५॥

अथ किमेतान्येवैषां[21] रुद्राणां स्थानानि। नेत्युच्यते — 'स्थानान्यन्यानि' इत्यादि।

**[22]स्थानान्यन्यानि तत्प्राप्त्यै भूलोकेऽपि [23]महात्मनाम्।**

---

[1] पुष्टेश्च — ऊ, ऋ; तुष्टेस्तु — ऐ.
[2] 'तदेव च' इत्यारभ्य 'तदेवं च' इत्यन्तं नास्ति — ऋ.
[3] चात्र मोहक्लेशादि — इ.
[4] तृण्मोहक्लेशादि — अ, आ, ई, उ, ए, ऐ.
[5] इत्युक्तम् — इ.
[6] 'लोके' इति नास्ति — ऊ.
[7] तदेव च — अ, आ, इ, ई, उ, ए, ऐ.
[8] 'तोयं' इत्यत्र 'उक्तोऽयं' इति दृश्यते — ऊ, ऋ.
[9] ०स्थावराज्जगति — इ.
[10] असौ — अ, आ, इ, ई, उ, ए, ऐ.
[11] ०न्यत्राथ रुद्राणामष्टानाममितौजसाम् — उ, ऊ, ऋ, ओ.
[12] भारभृत्याह्व० — उ.
[13] दण्डिनाम्नो वै—मु, उ; दिण्डिनाम्ना वै — ऊ, ऋ.
[14] आषाढीश० — ऊ, ऋ, ओ.
[15] पौष्करं — ऊ, ऋ.
[16] नैमिषं — ऊ, ऋ.
[17] तस्मात्तदप्यपराह्वकम् — ऊ, ऋ;
[18] ०प्यपराह्वयम् — मु, उ.
[19] पञ्चात्मकानां — अ, ए.
[20] लाकुल्यादष्ट० — अ, ए; कुलाद्यष्टकस्य — ऐ.
[21] 'एषां' इत्यत्र 'एतेषां' इति दृश्यते — ऊ.
[22] स्थानान्येतानि — मु, ऊ, ऋ.
[23] महात्मना — ऊ, ऋ.

**स्थापितानि जगद्धात्रा पुण्यतोयानि [1]सर्वतः ।**
**[2]एषु नित्यं [3]शिवः साक्षादनुगृह्णाति [4]भावितः ॥१६॥**

[5]तेषां [6]पञ्चाष्टकानां प्राप्त्यर्थमस्मिन् [7]**भूलोके** [8]**अन्यानि** [9]**स्थानानि** श्रीकण्ठनाथेन तदभि[10]धानान्येव निर्मितानि तेषां रुद्राणामित्युक्तम् । [11]एतेषु चाधिकरणभूतेष्विह पञ्चाष्टकेषु सर्वदा परमेश्वरः संनिहितो भक्ताना[12]मनुग्रहं करोतीति[13] ॥१६॥

अथ [14]व्याख्यातस्य प्रकरणस्योपसंहाराय [15]व्याख्येयस्य चोपक्रमाय[16] श्लोकः — 'प्रथितगुण' इत्यादि ।

**प्रथितगुणगणोक्त्या वर्णितं तत्त्वमाप्यं**
**शिववदनसमुत्थैर्वाक्यरत्नैर्यथावत् ।**
**प्रविकसितविवेका तत्त्वधर्मेण लेशा-**
**दवसरपदमाप्ता वर्ण्यतेऽतो धरित्री ॥१७॥**

[17]लोकप्रसिद्धसमस्तगुणसमूहाभिधानेनाप्तत्त्वमेवं[18] [19]परमेश्वरोक्तैरेव **वाक्य**[20]**रत्नैः** कथितमिति व्याख्यातोपसंहारः । व्याख्येयोपक्रमस्तु "[21]**प्रविकसितो**[22]ऽतिविस्तीर्णो **विवेको** भुवनात्मको यस्याः, सा तथाभूता । **अवसरपदमाप्तेति** — [23]अवसरप्राप्ता [24]**धरित्री वर्ण्यते तत्त्वधर्मेण**। **लेशादिति** अल्पया मात्रयेति ॥१७॥

[25]इति श्री[26]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [27]मतङ्गवृत्तौ
[विद्यापादे] [28]त्रिपर्वपदार्थे अप्तत्त्वप्रकरणं [द्वाविंशं समाप्तम्]
**द्वाविंशः पटलः**

---

[1] सुव्रत — ऊ, ॠ.
[2] येषु — ओ.
[3] भवः — उ.
[4] भाविनाम् — ऊ, ॠ; भावितान् — ओ.
[5] 'तेषां' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[6] पञ्चाष्टकस्थानानां — ऊ, ॠ.
[7] भूर्लोके — आ, ऊ, ॠ, ऐ.
[8] यानि — अ, ए.
[9] 'स्थानानि' इति नास्ति — इ, ऐ.
[10] ०धानाख्यपरिनिर्मितानि — ऊ, ॠ.
[11] तेषु — ऊ, ॠ.
[12] ०मनुग्रहार्थं — ऊ, ॠ.
[13] इतिशब्दो नास्ति — इ.
[14] व्याख्यातस्यार्थस्योप० — आ.
[15] व्याख्येयोपक्रमाय — ऊ, ॠ, ऐ.
[16] अत्र चशब्दोऽधिकः — अ, ऊ, ॠ, ऐ.
[17] लोके प्रसिद्ध० — अ, आ, इ, ई, उ, ए, ऐ; लोकप्रथित० — आ.
[18] 'एवं' इत्यत्र 'एव' इति दृश्यते — अ, ऊ, ॠ.
[19] तत्परमेश्वरोक्तेनेव — ऊ, ॠ.
[20] ०रचनैः — ए.
[21] 'प्र' इति नास्ति — आ; प्रविकथितो — ऐ.
[22] 'अति' इति नास्ति — आ, इ, ई, उ, ऊ, ॠ.
[23] अवसरे प्राप्ता — ऊ, ॠ.
[24] धरणी — अ.
[25] 'इति श्री' इति नास्ति — ऊ, ॠ.
[26] 'भट्ट' इत्यारभ्य 'विरचितायां' इत्यन्तं नास्ति — ऐ.
[27] मतङ्गप्रवृत्तौ — ॠ.
[28] 'त्रिपर्वपदार्थे' इति नास्ति — ऊ.

# त्रयोविंशः पटलः

## पृथिवीतत्त्वप्रकरणम्

[1]**अथोच्यते समासेन** [2]**लोकधात्री महामुने।**

**अथेति** अप्तत्त्वादनन्तरं **लोकधात्री** [3]पृथिवी तत्त्वभूतभुवन[4]परिपाटचा **उच्यते**। पदार्थादि-[5]संबन्धाश्चात्र [6]पूर्ववदेव[7] द्रष्टव्याः। वाक्यात्मकस्तु संबन्धः — [8]"काठिन्यं पार्थिवो गुणः" इत्यादिभिरनेकविधः॥

सा च — 'संक्षुब्धाद्' इत्यादि।

**संक्षुब्धाद्गन्धतन्मात्राद्गुणैः पञ्चभिरन्विता॥१॥**
[9]**स्वाक्योऽसौ गन्ध एवोक्तश्चत्वारोऽन्येऽनुषङ्गजाः।**
[10]**तस्याणोर्व्यक्तिमापन्ना निबिडत्वेन बाह्यतः॥२॥**

गन्ध[11]तन्मात्रकारणाच्छब्दादिभिर्गन्धपर्यन्तैः **पञ्चभिर्गुणैरन्विता** पुंसो **व्यक्तिमापन्ना** इति संबधः। [12]एतस्याश्चासाधारणो गुणो **गन्ध एव**। **अन्ये**[13] रसादयो गुणा जलादिष्वपि [14]भूतान्तरेष्वनुषक्ताः सन्तोऽत्र [15]जाताः; तेष्वपि [16]विद्यन्त इत्यर्थः। [17]तत्र गन्धो [18]द्विविधः सुरभिरसुरभिश्च। [19]रसस्त्वस्यास्तिक्तमधुरादिभेदेन षड्विधः। रूपं पुनः सितरक्तादि[20]भेदेनानेक[21]विधम्। स्पर्शोऽनुष्णाशीतः। शब्दस्तु [22]खटखटादिभेदेनानेकविध इति। [23]एषा च [24]**निबिडत्वेन** बाह्ये भुवनरूपतया व्यक्ता॥१–२॥

---

[1] अथेदानीं — मु, उ, ओ.
[2] 'लोकधात्री' इति नास्ति — आ.
[3] पृथिवीतत्त्वं — ऊ, ॠ.
[4] ०परिमाणा — ऊ, ॠ.
[5] संबन्धा अत्र — इ; संबन्धश्चात्र — ऐ.
[6] तृतीयनवमप्रकरणयोरुपक्रमे प्रोक्तवत्।
[7] एवकारो नास्ति — इ, ई, उ, ऊ, ए, ऐ.
[8] मतङ्ग० विद्या० २२.७ उ०.
[9] स्वभावो गन्ध — उ; स्वाक्योऽस्य गन्धस्यैवोक्ता० — ऊ, ॠ.
[10] तस्याणोर्वृत्ति० — ओ.
[11] तन्मात्राच्छब्दादिभि० — ऊ, ॠ.
[12] एतस्याश्च साधारणो — ऊ, ॠ; एतस्यासाधारणो — ऐ.
[13] अत्र तुशब्दोऽधिकः—अ, आ, इ, ई, उ, ए, ऐ.
[14] भूतान्तरेषु निषक्ताः — ऊ, ॠ.
[15] जातः — ऐ.
[16] विद्यत — ए.
[17] 'तत्र' इति नास्ति—अ, आ, इ, ई, उ, ऊ, ए, ऐ.
[18] विषयः — इ.
[19] रसस्तस्या० — ऊ, ॠ.
[20] 'भेदेन' इत्यारभ्य 'अनेकविधः' इत्यन्तं नास्ति—ऊ; 'खटखटादि' इत्यन्तं नास्ति—ॠ.
[21] विधः — ए.
[22] कटकटादि० — अ, इ; घटघटादि० — ऐ.
[23] एष च — अ, ऊ, ॠ.
[24] निषिद्धत्वेन — अ, आ, ए; निबन्धत्वेन — इ; निबन्धनत्वेन — ऐ.

अन्तः पुनः— 'आपादतल' इत्यादि ।

**आपादतलमस्तिष्कं शरीरत्वेन सर्पिता ।**

शरीरात्मना विचित्रावयव[1]संनिवेशेन [2]प्रवृत्तेति ॥

ननु [3]प्रागप्तत्त्व[4]हेतुकं शरीरमित्युक्तम् । सत्यम् । किं तु — 'तस्मादेव' इत्यादि ।

**तस्मादेव पराद्बीजाच्छुक्लाख्यात्क्लेदिता सती ॥३॥**
**अम्भसा [5]पक्तिमायाता वह्निना मुनिपुङ्गव ।**
**वायुना शोषमापन्ना [6]नानाभेदेन संस्थिता ॥४॥**
**सारं तावत्परा काष्ठा [7]नखदन्तास्थि[8]स्नायवः ।**
**कोशाश्च [9]वर्णिताः पूर्वं [10]ते च संक्षेपतोऽधुना ॥५॥**
**[11]बाह्योपवर्णनं वस्तु युक्तितश्चोप[12]वर्ण्यते ।**

[13]**तस्मादिति** हेतौ [14]पञ्चमी । [15]तेनैव [16]शुक्लाख्येनाप्तत्त्वेन **क्लेदिता सती** मांसपरमाणुरूपा पृथिवी, **वह्निना** [17]च परिपाकं प्रापिता, **वायुना**[18] [19]प्रागुक्तक्रमेणावयव[20]विभागपूर्वं बहिस्त्वगात्मना परिशोषिता, नानावयवभेदेन पुरुषोपकारायापाद[21]तलमस्तकं **संस्थिता** शरीरे । अपि चास्याः **सारमिति** [22]काठिन्यादनपेतं [23]प्रकृष्टतरं काठिन्यं [24]**काष्ठा** तदात्मकत्वाद् नखदन्तास्थि[25]प्रकाराः, त्वङ्-मांस[26]स्नाय्वाद्याश्च कोशाः । [27]**ते च कोशाः पूर्वम्** [28]**आकाशप्रकरणे** [29]**संक्षेपतो वर्णिताः** [30]एव ।

---

[1] संनिकर्षेण — अ.
[2] प्रवृत्तेरिति — इ.
[3] मतङ्ग० विद्या० २२. ४–६ पू०.
[4] ०हेतुकशरीर० — ए.
[5] पक्तिमायाति — मु, उ, ओ.
[6] प्रभेदेन च संस्थिता — मु, उ.
[7] खेदयत्याशुजातयः — उ.
[8] ०जातयः — मु, ऊ, ऋ.
[9] निर्मिताः — उ.
[10] तेन संक्षेप० — उ, ओ.
[11] बाह्योपवर्णितं — मु, ओ; बाह्यस्य वर्णितुं — उ; बाह्यस्य वर्णिनं — उ० पाठान्तरम्.
[12] ०लभ्यते — ऊ, ऋ.
[13] 'तस्मादिति' इत्येतन्नास्ति — ऊ, ऋ.
[14] पञ्चमीति — ऊ, ऋ.
[15] तेनैवं — ए.
[16] शुक्राख्ये० — ऊ.
[17] च पाकं परिप्रापिता — ऊ, ऋ.
[18] अत्र 'च वायुना' इत्यधिकम् — ऊ, ऋ.
[19] मतङ्ग० विद्या० १९. २५ उ०–३२ वृत्तौ ।
[20] अत्र 'पूर्वं' इत्यधिकम् — इ, ऐ.
[21] ०तलान्मस्तकं — ऊ, ऋ.
[22] काठिन्यौदानोपेतं — अ; काठिन्यौदनभूतं — आ, ई, उ; काठिन्योदनपेतं — इ, ऐ; काठिन्यायादनपेत० — ऊ, ऋ; काठिन्येदनुभूतं — ए.
[23] ०प्रकृष्टतरकाठिन्यं — ऊ.
[24] काष्ठात्मकत्वाद् — अ, ए.
[25] ०प्रकारत्वङ्मांस० — अ, ऋ.
[26] ०स्नाय्वादयश्च — ऊ, ऋ.
[27] 'ते च कोशाः' इत्येतन्नास्ति — अ, आ, इ, ई, उ, ऐ.
[28] मतङ्ग० विद्या० १९. २५ उ० –३२.
[29] संक्षेप्ता एवं — अ.
[30] एवं — इ, उ, ए.

**अधुना** शरीराद्बाह्यस्य [1]भुवनकारणस्य पार्थिवस्य [2]तत्त्वस्य वर्णनम्। तच्च वर्ण्यमानं **वस्तु** [3]**युक्तितः** आगमतश्च [4]वर्ण्यत इति ॥

[5]तत्र — 'देवमानुष' इत्यादि।

**देवमानुषतिर्यञ्चो [6]यदाश्रित्य समासते ॥६॥**
**तत्तत्त्वं पार्थिवं विद्याद् गुरुत्वादप्यधो[7]गतम्।**

देवाः पिशाचादिपितामहान्ता लोकपालाः, [8]प्रागुक्तेभ्यो बुद्धितत्त्ववर्तिभ्योऽन्ये एव [9]भूतसर्गवर्तिनः। यदुक्तं सांख्यैरपि[10] —

[11]"अष्टविकल्पो [12]दैवस्तैर्यग्योनश्च[13] पञ्चधा [14]भवति।
[15]मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥" इति।

[16]यत्र चैते देवादयो वसन्ति, **तत् पार्थिवं तत्त्वम्**। [17]तत् [18]सर्वेभ्यस्तत्त्वेभ्योऽधो वर्तते। [19]अत्र युक्तिः **गुरुत्वात्**। [20]**अपीति** अपि[21]शब्देनात्यन्तं [22]व्याप्यत्वाच्चेति ॥

अथैतस्यैव युक्तिद्वयस्योपपत्तिः — 'युगपच्च' इत्यादि।

**युगपच्च समुत्पत्तिस्तत्त्वानां ग्रन्थितः स्मृता ॥७॥**
**यल्लघु व्यापकं [23]पूर्वं तद्व्याप्यं तदधःस्थितम्।**
**[24]तत्त्वं गुरुतरं यस्मात्तस्मा[25]दप्यपरं तथा ॥८॥**

---

[1] भुवनात्माकारस्य — अ; भुवनाकारस्य — — आ, ई, उ, ऐ; भुवनात्मकस्य — इ; भुवनाकाशस्य — ए.
[2] 'तत्त्वस्य' इत्यत्र 'तस्य' इति दृश्यते — ऐ.
[3] 'युक्तितः' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[4] वर्णित इति — आ.
[5] तच्च — अ.
[6] समाश्रित्य — उ.
[7] ०गतः — मु, उ.
[8] मतङ्ग० विद्या० १७. १६–२२ पू०.
[9] भूतवर्गवर्तिनः — ए.
[10] अपिशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[11] सांख्यका० ५३.
[12] देव० — ऐ.
[13] ०स्तिर्यग्योनश्च — ऊ, ॠ.
[14] भवन्ति — इ.
[15] मानुष्यैश्चैक० — इ.
[16] यत्रैते — इ.
[17] 'तत्' इति नास्ति – आ, ई, उ, ऊ, ॠ, ए, ऐ.
[18] सर्वेभ्योऽधो वर्तते — ऊ, ॠ.
[19] तत्र — अ.
[20] 'अपीति' इति नास्ति — अ.
[21] ०शब्देनान्तर्व्याप्तत्वाच्चेति — ऊ, ॠ; ०शब्देनात्यन्तावाप्यत्वाच्चेति — ऐ.
[22] व्यापकत्वाच्चेति — ए.
[23] पूर्वं तद्व्याप्य — मु; तद्धि तद्व्याप्यं — उ; न स्यात्तद्व्याप्य — उ० पाठान्तरम्; तद्धि व्याप्यं तस्मादधः — ऊ, ॠ; तत्स्यात्तद्व्याप्यं — ओ.
[24] यद्यद्गुरुतरं — उ.
[25] ०दप्युत्तरं तथा — ऊ; ०दप्युत्तरं यथा — ॠ.

**[1]व्याप्यव्यापकभावेन [2]जगत्यन्तः स्थितानि तु।**
**तत्त्वानि तत्त्वमार्गेऽस्मिन्यथावद्रचितानि तु[3] ॥९॥**

माया[4]तत्त्वे ह्युपसंहृतानि सर्वाण्येव तत्त्वानि [5]अविशेषतः शक्तिरूपतयावस्थितानि। [6]ततश्चाहर्मुखे **युगपदेव** [7]कलाद्यात्मना समुत्पन्नानि। तेषां [8]तु स्वसौन्दर्यादिव[9] [10]**यल्लघु व्यापकं** च तत् **पूर्वम्** उपर्ये[11]वाभिव्यज्यते। यत्तु[12] ततोऽपि गुरु **तद् व्याप्यं** चाल्पत्वा[13]त्तदधोवर्ति भवति। [14]एवं सर्वाण्येतानि[15] [16]**तत्त्वानि तत्त्वमार्गे** पृथिव्यन्तं यावत् [17]प्रवृत्तानीति [18]भवत्येव पृथिवीतत्त्वस्य सर्वतत्त्वेभ्योऽधोभावोऽस्माद्युक्तिद्वयादिति । न [19]तु [20]कार्यकारणभावा[21]देवोच्चाधोभावस्तत्त्वानां [22]वाच्यः। तस्य भागासिद्धत्वात्। [23]येन हि [24]परस्परकार्यकारणानामपि विद्याराग[25]कालनियत्यात्मकानां [26]तत्त्वानां, तन्मात्राणां चोर्ध्वाधो[27]भावोऽदृष्ट इति। एवं पृथिव्यास्तत्त्वधर्मो भूत[28]धर्मश्चोक्तः ॥७–९॥

अधुना त्रिपर्वपदार्थैक[29]देशतां दर्शयितुं तृतीयोऽपि प्रकारो भुवनधर्मः प्रोच्यते — 'व्यक्तमण्डम्' इत्यादि।

**[30]व्यक्तमण्डमतोऽव्यक्तात्कपाल[31]युगलान्वितम्।**

---

[1] व्याप्याव्यापित्वभावेन — उ.

[2] जगन्त्यन्तः शृतानि — मु; जगत्यन्तस्तृणानि — उ; जगत्यन्तः श्रुतानि — उ० पाठान्तरम्; जगत्यन्तं सृतानि — ऊ, ऋ; जगत्यन्तसृतानि — ओ; मतङ्ग० विद्या० १९ तमे पटले १८–२० श्लोकवृत्तौ 'व्याप्यव्यापकभावेन जगत्यन्तः स्थितानि तु' इत्युद्धृतम्। तदनुसारेणात्र पाठः शोधितः।

[3] अस्मिन्युक्तिवद्रचितानि — उ.

[4] ०तत्त्वेऽप्युगपत्संहृतानि — अ; तत्त्वेऽभ्युप० — इ, ऐ.

[5] अविशेषितशक्ति० — अ.

[6] ततश्चाहर्मुखैः — ए.

[7] कलात्मना — ऊ, ऋ.

[8] तुशब्दो नास्ति — ऊ, ऋ, ऐ.

[9] एवकारो नास्ति — ऊ, ऋ.

[10] यद्यल्लवु — ऊ, ऋ.

[11] ०वातिव्यज्यते — इ; ०वाति स व्यज्यते— ऐ.

[12] तुशब्दो नास्ति — इ.

[13] ०त्तदधो भवति – ऋ; ०दधोवर्ती भवति – ए.

[14] एव — ऐ.

[15] 'एतानि' इति नास्ति — ऊ, ऋ.

[16] अत्र 'तानि' इत्यधिकम् — अ, ऐ.

[17] 'प्रवृत्तानीति' इत्यत्र 'प्रवृत्ता' इति दृश्यते — ऊ, ऋ.

[18] भवत्येवं — अ.

[19] तुशब्दो नास्ति — ऊ, ऋ.

[20] कार्यकारणाभावा० — आ; कारणकार्यभावा० — ऊ, ऋ.

[21] ०देवोच्चारः ये भावः — इ; ०देवोर्ध्वाधोभावः — ऊ, ऋ.

[22] प्राप्यः — आ, ए; व्याप्यः — इ, ई, उ, ऐ.

[23] 'येन हि' इत्यत्र 'न हि' इति दृश्यते — इ.

[24] परस्परं कार्य० — आ, ई, उ, ए; परस्परमकार्य० — ऊ, ऐ; परमकार्य — ऋ.

[25] ०कालनियत्यात्मनां—अ, ए, ऐ; ०कलानियत्यात्मनां—आ; ०कालनियत्यात्मना–इ, ई, उ.

[26] 'तत्त्वानां' इति नास्ति — इ, ऐ.

[27] ०भावो दृष्ट इति — इ.

[28] ०धर्मश्चोक्ताः — इ.

[29] ०देशे दर्शयितुं — अ; ०देशतां दर्शयितुः — ए; देशे तां दर्शयितुं — ऐ.

[30] व्यक्तमण्डलतो — ऊ, ऋ.

[31] ०द्वययुग्भवेत् — उ.

**यदधस्तात्कपालं [1]तत्तामसं परिकीर्तितम् ॥१०॥**
**राजसं [2]स्यादथोर्ध्वं तु तयोर्योगस्तु सात्त्विकः ।**
**कुतोऽवसीयते यस्माद्विकासः [3]सत्त्व उच्यते ॥११॥**
**विकासो नाम तन्मध्ये सर्वज्योतिष्मतां [4]स्थितिः ।**

**अतः** पृथिवीतत्त्वात् [5]सूक्ष्मभूतरूपत्वेन [6]अव्यक्ताभिधानाद् ब्रह्माण्डं [7]कपालद्वययुक्तं [8]**व्यक्तम्** । तस्य च **यद् अधस्तात् कपालं तत् तामसं** कृष्णवर्णमेव । यत्तूपरिष्टात् तद् **राजसं** लोहितम् । **तयोर्योगस्तु** संधिलक्षणः शुक्लः । यतो ज्योतिश्चक्र[9]निबन्धास्तत्र ज्योतिष्मन्तः सवितृ[10]प्रधानाः प्रकाशमाना [11]इत्यण्डस्य [12]ध्येयाकारकथनम् । गुणात्मनां तु सत्त्वादीनां यथाण्डमध्ये [13]**स्थितिः** तथा [14]दर्शितं **गुणतत्त्वप्रकरणे**[15] । [16]प्रोक्तं च सांख्यैः[17] —

"ऊर्ध्वं [18]सत्त्वविशालस्तमो[19]विशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादि[20]स्तम्बपर्यन्तः ॥" इति ।

तदेतदण्डम् — 'बाह्यतः' इति ।

[21]**बाह्यतश्चावृतं [22]रुद्रैस्तेजस्संभूतवृत्तिभिः ॥१२॥**

[23]**बाह्यतः** [24]वक्ष्यमाणैः शत[25]**रुद्रै**र्धार्यते । [26]**तेजः** इति विशेष[27]स्यात्र श्रवणाद् [28]निर्विशेषादनुपाधेः परमेश्वरात्मन[29]स्तेजसः, **संभूतेति** समुद्भूता समभिव्यक्ता [30]**वृत्तिः** ज्ञानक्रियात्मिका येषां, तैः पर-

---

[1] स्यात्तामसं — मु, उ, ओ.
[2] स्यादधोवक्त्रं — ऊ, ऋ; स्यादधोर्ध्वं तु —ओ.
[3] सत्यमुच्यते — ऊ, ऋ.
[4] स्थितेः — ऊ, ऋ.
[5] सूक्ष्मरूपत्वेन — ए.
[6] अभिव्यक्ताभि० — ऊ, ऋ, ऐ.
[7] कपालयुगलद्वय० — ऊ, ऋ.
[8] 'व्यक्तं' इति नास्ति — आ, ई, उ.
[9] ०निबन्धस्तत्र — आ, ई, उ, ए; ०निबन्धं तत्र — इ.
[10] ०प्रधानः — इ.
[11] इत्यप्यस्य — ए.
[12] ध्येयाकाशकथनम् — ए.
[13] स्थितः — इ.
[14] दर्शनं — ए.
[15] मतङ्ग० विद्या० १६. ९ उ० –१३ पू०.
[16] यदुक्तं सांख्यैः — ऊ, ऋ.
[17] सांख्यका० ५४.
[18] तत्त्वविशाल० — ऋ.
[19] ०विशालतश्च — आ, ऊ.
[20] ०स्तम्भपर्यन्तः — ऊ.
[21] बाह्यतस्तत्पदं — उ; बाह्यतस्तद्वृतं — ऊ, ऋ.
[22] रुद्रैः स्वतेजोद्भूत० — मु, उ; रुद्रैस्तेजसो भूत० — ऊ, ऋ.
[23] बाह्यतोऽपेक्ष्यमाणैः — ऐ.
[24] मतङ्ग० विद्या० २३. १३–४४ पू०.
[25] ०रुद्रैर्ध्यायिन्ते — इ; ०रुद्रैर्ध्यायिते — ए; ०रुद्रैर्धार्यन्ते — ऐ.
[26] तेजस इति — ऊ.
[27] ०स्यात्राश्रवणाद् — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[28] निर्विशेषेणानु० — ऊ, ऋ.
[29] ०स्तेजस्त्वं भूतेति — इ; ०स्तैजसो भूतेति ऊ; ०स्तैजसोद्भूतोऽपि — ऋ; ०स्तेजः-संभूतेति — ए.
[30] वृत्तिश्च न क्रियात्मिका — ऋ.

मेश्वर[1]नियुक्तैः शतरुद्रैर्धार्यते। न त्वनन्तादिनियुक्तैरित्यर्थः। [2]वक्ष्यति [3]च — "[4]नियुक्ताः परमेशेन" इति। अतश्च [5]कलाभुवनेशवत्, [6]श्रीकण्ठक्रोधेशादिवच्चैतेऽपि[7] [8]शिवनियुक्ता[9] एवेति। तथा च वक्ष्यति **संहारप्रकरणे**[10] —

"शतरुद्रादयः [11]शूराः [12]शिवयोगिबलान्विताः।" इति ॥१२॥

## [शतरुद्राः]

### [ ऊर्ध्वदिशि[13] ]

तेषां च मध्यात् — 'ऊर्ध्वमण्डकटाहस्य' इत्यादि।

**[14]ऊर्ध्वमण्डकटाहस्य [15]विधृतं यैर्महात्मभिः।**
**तेषां नामानि [16]कथ्यन्ते रुद्राणामप्यनुक्रमात् ॥१३॥**
**विचक्षण इति ख्यातो [17]लिप्सुरन्यो [18]नभस्तथा।**
**[19]विवाहश्च महातेजाः [20]संवाहश्चापि वीर्यवान् ॥१४॥**

---

[1] ०निवृत्तैः — ए.

[2] अत्र 'यद्' इत्यधिकम्—आ, इ, ई, उ, ऊ, ऋ, ए.

[3] चकारो नास्ति — आ, ई, उ, ऊ; चकारस्य स्थाने इतिशब्दो दृश्यते — इ, ए, ऐ.

[4] मतङ्ग० विद्या० २३. ४४ उ०.

[5] कलाभुवनेशाः शिवनियुक्ताः— 'शिवेच्छयैवात्र अनुमता नियुक्ताः। न तु कपालेशादिवदनन्तनियुक्ता इत्यर्थः।' मतङ्ग विद्या० ९. ४२ उ०, ४३ पू० वृत्तौ।

[6] श्रीकण्ठनाथेशादिवच्चैतेऽपि — अ, ए; श्रीकण्ठक्रोधेशादिवदेतेऽपि — ऐ.

[7] अत्र चशब्दोऽधिकः — ए.

[8] 'शिव' इत्येतन्नास्ति — इ.

[9] श्रीकण्ठः शिवनियुक्तः — 'स्वेच्छाविधायिनः शिवाद्वचक्तः सकलत्वेऽपि कलाभुवनेशवच्छिवनियुक्तः। न त्वनन्तनियक्त इत्यर्थः'। मतङ्ग० विद्या० १५. २ उ०, ३ पू० वृत्तौ। क्रोधेशादयः शिवनियुक्ताः-'तेषां च प्राग्योगियोगेश्वरश्रुत्यैवेश्वरत्वस्य प्रतिपादितत्वात्, पारमेश्वरश्रुत्या साक्षात्परमेश्वरनियुक्तत्वं सकलत्वेऽपि भुवनवासिनामिव, श्रीकण्ठस्येव च प्रतिपाद्यते।' मतङ्ग० विद्या० १६. ४ उ०, ५ पू० वृत्तौ।

[10] मतङ्ग० विद्या० २५. ५१ पू०.

[11] शर्वाः — ऊ, ऋ.

[12] मातृकासु सर्वास्वपि 'शिवयोगबलान्विताः' इत्येव पाठो दृश्यते। तथापि मतङ्ग० विद्या० २५. ५१ श्लोकवृत्तिमनुसृत्यात्र 'शिवयोगिबलान्विताः' इति पाठः संपादितः।

[13] ऊर्ध्वदिक्स्था दश रुद्राः — "विचक्षणः, लिप्सुः, नभः, विवाहः, संवाहः, सुरार्चितः, त्र्यक्षः, गणाध्यक्षः, विभुः, शंभुः" इति।

[14] ऊर्ध्वमन्यत्कटाहस्य — मु, उ; ऊर्ध्वभागः कटाहस्य — ऊ, ऋ.

[15] विहितो — ऊ, ऋ.

[16] वक्ष्यन्ते दशानामप्यनु० — ऊ, ऋ.

[17] विशिष्टोऽन्यो — मु; विविप्सोऽन्यो — उ, ओ; लिप्सोऽन्योन्यो — ऊ, ऋ.

[18] नभस्तदा — मु, उ; भुवस्तदा — ओ.

[19] विभावश्च — मु.

[20] संवाहश्चेति — ऊ, ऋ.

[1]सुरार्चितोऽपरस्त्र्यक्षो गणाध्यक्षस्तथापरः।
[2]विभुश्च शम्भुनामा च बलं कमलजन्मनः ॥१५॥
आक्रम्य [3]संस्थितास्तस्य तेनैवेज्यन्त्यनिन्दिताः।
ऊर्ध्वभागे महात्मानो ब्रह्मणोऽण्डस्य धारकाः ॥१६॥

[ ईशानदिशि[4] ]

सुखदुःखकरः श्रीमान्सर्वविद्याविधायकः।
तथा बलिप्रियो नाम्ना भूतपालश्च वीर्यवान् ॥१७॥
पञ्चमः पिङ्गलो [5]नाम्ना षष्ठो मातृ[6]वृतस्तथा।
वेदानां पारगो रुद्रः [7]सर्वज्ञश्च प्रतापवान् ॥१८॥
ज्ञान[8]भुग्विमलः [9]श्रीमांस्तथा विद्याधिपोऽपरः[10]।
दशैते शूलिनस्त्र्यक्षा [11]ईशाननिलयान्विताः ॥१९॥
ईशानबलमाक्रम्य विचरन्ति यशस्विनः।
ईशेनैव प्रपूज्यन्ते यथेप्सितफलप्रदाः ॥२०॥

[ कुबेरदिशि[12] ]

कामरूपी प्रसादश्च लक्ष्मीवांश्च [13]प्रचण्डदृक्।
सौम्यदेहोऽपरो धन्यो रूपवांश्च [14]महाबलः ॥२१॥
[15]निधीशो रत्नधारी च [16]जटामुकुटभृत्तथा।
[17]कौबेर्यां संस्थिता रुद्राः कुबेरेण [18]प्रपूजिताः ॥२२॥
तद्बलं [19]चाप्यवष्टभ्य संस्थिताः कारणेच्छया।

---

[1] सुरतोऽपरस्त्रियक्षोऽथ — उ; सुरतो वरस्त्र्यक्षोऽथ — उ० पाठान्तरम्; सुराचितो वरस्त्र्यक्षो — ओ.

[2] द्विगुणाः शंभु० — उ.

[3] संस्थितास्त्वेते नैव त्यज्यन्त्यनिन्दिताः —मु, उ.

[4] ईशानदिक्स्था दश रुद्राः — "सुखदुःखकरः, सर्वविद्याविधायकः, बलिप्रियः, भूतपालः, पिङ्गलः, मातृवृतः, वेदपारगः, सर्वज्ञः, ज्ञानभुक्, विद्याधिपः" इति।

[5] नाम — ओ.

[6] ०वृतस्तदा — मु; ०व्रतस्तथा — ओ.

[7] सर्वज्ञश्चापि तापवान् — उ.

[8] ०भुग्विपुलः — मु; ०भुक्पिङ्गलः — उ.

[9] श्रीमान्सर्वविद्या० — उ.

[10] वरः — ओ.

[11] ईशाननिलयाञ्चिताः — उ; ईषद्दिङ्निलयाः शिवाः — ऊ, ऋ; . . . स्थाननिलयाश्रिताः — ओ.

[12] कुबेरदिक्स्था दश रुद्राः — "कामरूपी, प्रसादः, लक्ष्मीवान्, प्रचण्डदृक्, सौम्यदेहः, धन्यः, रूपवान्, निधीशः, रत्नधारी, जटामुकुटभृत्" इति।

[13] प्रचण्डधृत् — मु, उ; प्रचण्डधृक् — ओ.

[14] महाबलाः — ऋ.

[15] निरीशो — उ.

[16] जटामकुटधृक् — मु, उ, ओ.

[17] कौरव्यां — ऊ, ऋ.

[18] च पूजिताः — मु, उ, ओ.

[19] चाभ्यवष्टभ्य — उ; चाप्यवष्टम्भ्य — ओ.

[ वायुदिशि[1] ]

मेघकेतुः कपर्दी च रुद्रः [2]पञ्चशिखी परः ॥२३॥
पञ्चान्तकोऽन्यो विख्यातस्तस्मादन्यः क्षयान्तकः।
तीक्ष्णः सूक्ष्मश्च विख्यातो वायुवेगश्च वीर्यवान् ॥२४॥
लघुनामापरस्तत्र शीघ्रश्चैवातिविक्रमः।
[3]वायव्यां ब्रह्मणोऽण्डस्य रुद्रा वायुप्रपूजिताः ॥२५॥
वायोर्बलं समाक्रम्य [4]क्रीडन्त्युत्कृष्टचेतसः।

[ वरुणदिशि[5] ]

भीषणो वडवावक्त्रस्तृतीयोऽथ जलान्तकः ॥२६॥
दीर्घबाहुश्च विख्यातो [6]जयभद्रश्च वीर्यवान्।
श्वेतो महाबलश्चैव पाशहस्तश्च [7]सुव्रत ॥२७॥
[8]अतिबलोऽन्यो बलस्तस्माद्वारुण्यां [9]दिशि संस्थिताः।
वरुणस्य बलं जित्वा प्रक्रीडन्त्यनिवारिताः ॥२८॥
पूज्यन्ते [10]वरुणेनैव सर्वकामफलप्रदाः।

[ निर्ऋतिदिशि[11] ]

[12]दंष्ट्री च लोहितो धूम्रो विरूपाक्ष[13]स्तथैव च ॥२९॥
[14]ऊर्ध्वशेफश्च विख्यातस्ततश्चान्यो [15]भयानकः।
क्रूरदृक् [16]शत्रुहन्ता च मारणश्चेति कीर्तितः ॥३०॥
दशमो नैर्ऋतो नाम्ना रुद्रश्चातिबलोत्कटः।

---

[1] वायुदिक्स्था दश रुद्राः — "मेघकेतुः, कपर्दी, पञ्चशिखी, पञ्चान्तकः क्षयान्तकः, तीक्ष्णः, सूक्ष्मः, वायुवेगः, लघुः, शीघ्रः," इति।

[2] पञ्चशिखोऽपरः — ऊ, ऋ; . . शिखरोऽपरः — ओ.

[3] बाह्यं ब्रह्मर्हणोऽण्डस्य — उ; वायव्या ब्रह्म० —ऊ, ऋ.

[4] क्रीडन्त्यक्लिष्टचेतसः — ऊ; क्रीडन्त्यक्लिष्टचेतसा — ऋ.

[5] वरुणदिक्स्था दश रुद्राः — "भीषणः, वडवावक्त्रः, जलान्तकः, दीर्घबाहुः, जयभद्रः, श्वेतः, महाबलः, पाशहस्तः, अतिबलः, बलः" इति।

[6] जयरुद्रश्च — ऋ.

[7] सुव्रतः — ऋ.

[8] अबलोऽन्योबल० — मु, उ; अतिबलोऽन्योन्योन्यबल० — ऊ, ऋ.

[9] संस्थिताः शिवाः — ऊ, ऋ.

[10] वरुणे चैव — ऋ.

[11] निर्ऋतिदिक्स्था दश रुद्राः — "दंष्ट्री, लोहितः, धूम्रः, विरूपाक्षः, ऊर्ध्वशेफः, भयानकः, क्रूरदृक्, शत्रुहन्ता, मारणः, नैर्ऋतः" इति।

[12] दंष्ट्रानां लोहितो — ऊ, ऋ.

[13] ०स्तथापरः — ऊ, ऋ.

[14] ऊर्ध्वकेशश्च — ऊ, ऋ.

[15] . . यान्तकः — ओ.

[16] शास्त्रहस्ता च — उ.

नैर्ऋत्यां संस्थिता [1]रुद्रास्तद्दिशेशेन पूजिताः ॥३१॥
बलमाक्रम्य चेष्टन्ते [2]निर्ऋतेर्भीमविक्रमाः ।

[ यमदिशि[3] ]

वियोक्ता चैव संयोक्ता रुद्रो [4]धर्मपरस्तथा ॥३२॥
तस्माद्धर्मपतिश्चैव काल[5]रुद्रश्च वीर्यवान् ।
कर्ता विधाता धाता च तस्मान्मृत्यु[6]हरोऽपरः ॥३३॥
[7]याम्यश्चेति यमस्यैते बलमाक्रम्य संस्थिताः ।
[8]धर्मराजेन पूज्यन्ते रुद्राश्चन्द्रार्धमौलयः ॥३४॥

[ अग्निदिशि[9] ]

[10]क्षयान्तको महातेजा [11]रुद्रो भस्मान्तकस्तथा ।
[12]बभ्रुश्च ज्वलनश्चैव [13]हरश्चैव महाद्युतिः ॥३५॥
पिङ्गलः खादकोऽन्योऽपि हुताशी चातिवीर्यवान् ।
अग्नि[14]रुद्रश्च हीत्येते समीहितफलप्रदाः ॥३६॥
आग्नेय्यां संस्थिताश्चाग्नेर्बलमाक्रम्य शक्तिभिः ।
अग्निना च प्रपूज्यन्ते रुद्राः स्वच्छन्द[15]गामिनः ॥३७॥

[ इन्द्रदिशि[16] ]

त्रिदशेशः पिनाकी च [17]शास्ता चाव्यय एव च ।

---

[1] रुद्रास्तदीशेन प्रपूजिताः — उ; रुद्रा नैर्ऋतेन प्रपूजिताः — उ० पाठान्तरम्; रुद्रास्तद्दिशीशेन पूजिताः — ऊ, ऋ, ओ.
[2] नैर्ऋतेर्भीम० — मु; नैर्ऋते भीम० — उ; तत्र ते भीम० — ऊ, ऋ.
[3] यमदिक्स्था दश रुद्राः — "वियोक्ता, संयोक्ता, धर्मपरः, धर्मपतिः, कालरुद्रः, कर्ता, विधाता, धाता, मृत्युहरः, याम्यः" इति ।
[4] धर्मपतिस्तथा —ऊ, ऋ; धर्मवरस्तथा—ओ.
[5] ०रुद्रोऽतिवीर्यवान् — ऊ; ०रुद्रोऽथ वीर्यवान् — ऋ.
[6] ०हरो हरः — उ; ०हरः परः — ऊ, ऋ.
[7] याम्यं तेजो यमश्चैते — उ; याम्यश्चेति यमश्चैते — ओ.
[8] यमराज्येन — ऊ, ऋ.
[9] अग्निदिक्स्था दश रुद्राः — "क्षयान्तकः, महातेजाः, भस्मान्तकः, बभ्रुः, ज्वलनः, हरः, पिङ्गलः, खादकः, हुताशी, अग्निरुद्रः" इति ।
[10] जयान्तको — उ.
[11] रुद्रा भस्मान्त० — मु.
[12] प्रभूतज्वलन० — उ.
[13] हरश्चेति महा० — ऊ, ऋ, ओ.
[14] ०रुद्राश्च हीत्येते — मु; ०रुद्रश्च इत्येते —उ, ऊ, ऋ, ओ.
[15] जीविनः — मु, उ, ओ.
[16] इन्द्रदिशि दश रुद्राः — "त्रिदशेशः, पिनाकी, शास्ता, अव्ययः, विभूतिः, प्रमर्दनः, वज्रदेहः, बुद्धः, अजः, कपालीशः" इति ।
[17] शास्ताथाव्यय — ओ.

विभूतिश्च महातेजा रुद्रस्तस्मात्प्र[1]मर्दनः ॥३८॥
वज्रदेहश्च [2]बुद्धश्चाप्यज[3]श्चातिमहाबलः ।
कपालीशेन सहिता दिशीन्द्रस्य व्यवस्थिताः ॥३९॥
विचरन्ति महा[4]भागाः शक्रेणैव प्रपूजिताः
बलमाक्रम्म [5]शक्रस्य मोदन्ते दुःखवर्जिताः ॥४०॥

[ अधोदिशि[6] ]

क्षितिभृच्चेति विख्यात[7]स्ततोऽन्यः सर्वतोमुखः ।
ग्रसनो धैर्यनामा च [8]विषभुक् चापरः स्मृतः ॥४१॥
[9]वृषश्चैव सुतेजस्वी पातालाधि[10]पतिस्तथा ।
[11]वीरश्च पालकश्चैव [12]तथानन्तः प्रतापवान् ॥४२॥
एते रुद्रा दश प्रोक्ता अधस्ताद्भीमविक्रमाः ।
अनन्तबलमाक्रम्य विचरन्ति यशस्विनः ॥४३॥
अनन्तेनैव पूज्यन्ते [13]भोक्तारः पारमेश्वराः ।

[14]ऊर्ध्वादिक्रमेणाधो[15]दिशं यावद्दशस्वपि दिक्षु प्रतिदिशं दश रुद्राः स्थिता इति । एवं विचक्षणा[16]द्यनन्तान्तानां रुद्राणां [17]शतमत्र [18]भुवनशते व्यवस्थितमिति ॥

ते च [19]प्रोक्तनयेन किं परमेश्वरनियुक्ता एव चेष्टन्ते । उत नेति । उच्यते — 'नियुक्ता' इत्यादि ।

नियुक्ताः परमेशेन श्रीकण्ठेन महात्मना ॥४४॥
[20]वृतमेभिर्महावीर्यैरण्डं कमलजन्मनः ॥

---

[1] ०मर्दकः — मु, उ, ओ.
[2] ब्रध्नश्च अजश्चाति० — ऊ, ऋ.
[3] ०श्चेति महाबलः — मु, उ, ऊ, ऋ.
[4] ०भोगाः — मु, उ, ओ.
[5] तच्छक्रं मोदन्ते — ऊ, ऋ, ओ.
[6] अधोदिशि दश रुद्राः — "क्षितिभृत्, सर्वतोमुखः, ग्रसनः, धैर्यनामा, विषभुक्, वृषः, पातालाधिपतिः, वीरः, पालकः, अनन्तः" इति ।
[7] ०स्तथान्यः — ऊ; ०स्तथान्यत् — ऋ.
[8] ततो वृक्षापनः स्मृतः — उ; वृषभश्चापरस्तथा — ऊ, ऋ.
[9] वृक्षश्चेव — मु, उ; वृषश्चेति — ऊ, ऋ.
[10] ०पतिस्ततः — ऋ.
[11] पारश्च पारकश्चैव — मु, उ; वीरश्च पारकश्चैव — ओ.
[12] तथानन्तो महाबलः — ऊ, ऋ.
[13] मोक्तारः परमेश्वराः — ऊ, ओ; मुक्तारः परमेश्वराः — ऋ.
[14] ऊर्ध्वाधो क्रमेणाधो० — अ, इ, ऐ; ऊर्ध्वाधः क्रमेणाधो० — आ, ई, उ.
[15] ०दिशा — इ.
[16] ०द्यनन्तानां — आ, इ; ०द्यनन्तेशान्तानां —ऊ, ऋ.
[17] शतमन्तभुवनशते — ऐ.
[18] भुवने शतैर्य्येव० — आ, ई, उ; भुवनशतं तेष्ववस्थित० — ऊ, ऋ.
[19] मतङ्ग० विद्या० २३. १२ उ०. वृत्तौ ।
[20] धृत० — म, उ, ओ.

सत्यम् । [1]परमेश्वरनियुक्ता एवेत्युक्तम् । तदाज्ञयैव तु **श्रीकण्ठेनापि महात्मना** शिवशिष्येण **नियुक्ताः** [2]सन्तश्चेष्टन्ते इति । एवं [3]बाह्यतो **वृतमेभिः** ब्रह्माण्डमिति ॥

[ सप्तलोकनाथभुवनम्, सप्तलोकाश्च ]

'तदन्तः संस्थिताः' इत्यादि ।

**तदन्तः संस्थिता लोकाः सप्तामी [4]तान्निबोध मे ॥४५॥**
**कटाहस्योर्ध्वभागे तु [5]रुद्रेभ्योऽधः स्थितं [6]पुरम् ।**
**लोकनाथस्य रुद्रस्य शुद्धस्फटिक[7]संनिभम् ॥४६॥**
**वृतं [8]गणैः सहस्रैस्तु वीरभद्रपुरःसरैः ।**
**सत्यलोकस्ततोऽधस्ताद्ब्रह्मा [9]यत्र विराजते ॥४७॥**
**[10]ततोऽधोऽन्यस्तपो[11]लोको यत्र ते ब्रह्मणः सुताः ।**
**सनकाद्या [12]महात्मानः सततं योगतत्पराः ॥४८॥**
**वसिष्ठ[13]पुलहाद्याश्च साध्याश्चापि व्यवस्थिताः ।**
**[14]जनलोके मुनिव्याघ्र ततोऽधः [15]संस्थितो महान् ॥४९॥**
**कृताधिकारिणो [16]यस्मिन्निन्द्राद्याः [17]संव्यवस्थिताः ।**
**स्वर्लोकश्चाप्यतोऽधस्ताद् ध्रुवो यत्र व्यवस्थितः ॥५०॥**
**[18]ऋषयश्च महाभागा ग्रहाश्च [19]मुनिपुङ्गव ।**
**तस्याप्यधो भुवर्लोको यत्रादित्यपुरःसराः ॥५१॥**
**आसते वसवो रुद्रा दिव्याचारगुणान्विताः ।**
**विंशत्यष्टौ विमानानां [20]कोटयश्च [21]महात्मनाम् ॥५२॥**
**[22]आध्रुवान्तान्निबद्धास्तु सुखिनस्ते दिवौकसाम् ।**

---

[1] अत्र 'यथा' इत्यधिकम् — ऐ.
[2] सर्वे चेष्टन्ते — अ, आ, इ, ई, उ, ए, ऐ.
[3] बाह्यतोद्धृतमेति ब्रह्माण्ड० — अ; बाह्यत आवृतमेव हि ब्रह्माण्ड० — इ; बाह्ये वृतमेभिर्ब्रह्माण्ड० — ऊ, ऋ; बाह्यतो वृतमेव हि ब्रह्माण्ड ० — ऐ.
[4] तान्निबोधत — मु, उ, ऊ, ऋ.
[5] तदूर्ध्वेऽवस्थितं — मु; रुद्रेभ्योऽधस्थितां — ऋ; तदूर्ध्वाविस्थितं — ओ.
[6] परम् — ऋ.
[7] ०निर्मलम् — ऊ, ऋ.
[8] गुणसहस्रैस्तु — मु, उ, ऊ, ऋ.
[9] तत्र — ऊ, ऋ.
[10] अन्यो यस्तु तपो० — मु, उ; अतोऽन्यस्तु तपो० — ओ.
[11] ०लोके — ऊ, ऋ.
[12] महात्मानो योगिनो योग० — मु, उ, ओ.
[13] ०पुलकाद्याश्च — ओ.
[14] जनोलोको — मु, उ.
[15] 'संस्थितं महः' इति भवितव्यम् । तादृशः पाठो न लभ्यते ।
[16] यत्र इन्द्राद्याः — उ; यत्र शक्राद्याः — ऊ, ऋ.
[17] संस्थितो महान् — ऋ.
[18] त्र्यर्षयश्च — उ.
[19] मनिपुङ्गवाः — उ.
[20] कोटयः खेचरात्मनाम् — ऊ, ऋ.
[21] परात्मनाम् — ओ.
[22] साध्यानां ते निबद्धास्तु — मु, उ; आध्रुवान्तान्निबध्नास्तु — ओ.

[1]भूलोकस्तधस्तात्तु सप्त[2]द्वीपार्णवान्वितः ॥५३॥
नानारत्नविचित्राढ्यो नगरारामपर्वतैः ।
[3]सरिद्भिश्चातिसंकीर्णो मृगपक्षिसमाकुलः ॥५४॥
मनुष्याः [4]पशवश्चैव मृगाः पक्षिण एव च ।
सरीसृपाः स्थावराश्च यत्र [5]भोगभुजः स्थिताः ॥५५॥

[ मेरुपर्वतः, ब्रह्मसभा, ज्योतिष्कं शिखरम् ]

तन्मध्ये [6]क्षितिभृच्छ्रीमान्मेरुनामा[7] [8]दिवौकसाम् ।
निवासो निर्मितो धात्रा तन्मध्ये ब्रह्मणः [9]सभा ॥५६॥
पूर्वोत्तरे तु दिग्भागे [10]ज्योतिष्कं शिखरं महत् ।
तत्राहं मुनिशार्दूल लोकानुग्रहकारणात् ॥५७॥
[11]कृताधिवासस्तत्रापि रुद्रा वृषभवाहनाः ।
[12]नैके त्रिशूलिनस्त्र्यक्षाः स्फुरच्चन्द्रार्धधारिणः ॥५८॥

[चक्रवाटः, अष्टौ लोकपालपुर्यः]

[13]सभायाश्चाप्यधोभागे [14]चक्रवाटः [15]प्रतिष्ठितः ।
अष्टौ तत्र स्थिताः पुर्यः शक्रादीनां महात्मनाम् ॥५९॥
पूर्वेणेन्द्रस्य [16]विख्याता पुरी नाम्नामरावती ।
अग्नेस्तेजोवती [17]नाम्ना दिश्याग्नेय्यां व्यवस्थिता ॥६०॥
याम्यायां तु यमस्योक्ता नाम्ना संयमनी पुरी ।
[18]रक्षोऽधिपस्य नैर्ऋत्यां पुरी कृष्णेति [19]संज्ञिता ॥६१॥
शुद्ध[20]वत्यथ वारुण्यां पुरी ज्ञेया प्रचेतसः ।
वायोर्गन्धवती [21]नाम्ना [22]वायव्यां संस्थिता गिरेः ॥६२॥

---

[1] भूर्लोक० — ऊ, ऋ, ओ.
[2] ०द्वीपार्णवान्विताः — ऊ, ऋ; ०द्वीपार्णवायुतः — ओ.
[3] सरिद्भिश्चार्णवैः कीर्णो — मु, उ, ऊ, ऋ.
[4] "पशवः = ग्राम्याश्चतुष्पदाः गवाश्वादयः, मृगाः = आरण्याश्चतुष्पदाः हरिणादयः" सांख्यतत्त्वकौमदीटीका, पृष्ठं ४५२.
[5] भोग इह स्थिताः — उ.
[6] क्षितिभुक् श्रीमान् — ओ.
[7] ०मेरुनाम्ना — ऊ, ऋ.
[8] दिवौकसः — ऋ.
[9] सदा — उ, ऊ, ऋ.
[10] ज्योतिष्काः शिखरं — ओ.
[11] कृतिधिकारस्तत्रापि — मु; कृताधिकारास्तत्रापि — ऊ, ऋ.
[12] लोके — ओ.
[13] स्वभागस्याप्यधो० — उ.
[14] ह्यक्षपादाः — मु; अक्षपादाः — उ; अक्षवाटा — ओ.
[15] प्रतिष्ठिताः — मु, उ, ओ.
[16] सा ख्याता — उ.
[17] नाम — ओ.
[18] यक्षाधिपस्य — मु, उ.
[19] शब्दिता — मु, उ, ओ.
[20] ०वत्यधिवारुण्यां — ओ.
[21] नाम — ऊ, ऋ, ओ.
[22] वायव्यायां स्थिता मुने — ऊ, ऋ.

**महोदयाप्युत्तरतः कुबेरस्य पुरी शुभा।**
**सुखावहा तथैशान्यामीशानस्य पुरी मुने ॥६३॥**
**योजनानां [1]स्मृतो लक्षं [2]मेरुरुच्छ्रायतोऽचलः।**

ब्रह्माण्डस्यान्तः सत्यलोकाद्याः **सप्त लोकाः**। [3]तदूर्ध्वं चोर्ध्वकटाहभित्तिमध्य[4]लग्नं सप्तलोकेश्वरस्य **रुद्रस्य** भुवनम्। [5]ततोऽधस्तात् सत्यलोकादिषु क्रमेण,

[6]"ब्रह्मा ब्रह्मसुताः [7]साध्या विनिवृत्ता ध्रुवादयः।
आदित्या लोकपालाश्च स्थिताः [8]सप्तसु सप्ततः॥" इति।

[9]भूलोकमध्ये [10]च मेरुः। तस्य मध्ये **ब्रह्मणः** स्थानम्। [11]ईशानकोणे तु [12]**ज्योतिष्कं** नाम **शिखरम्**। [13]"**तत्राहं मुनिशार्दूल लोकानुग्रहकारणात्। कृताधिवासः" इति**। मतङ्गमुनिगुरुरयं श्रीकण्ठनाथः [14]स्वात्मनः स्थितिदेशं, व्यापारं च दर्शयति लोकानुग्रहकारणादिति। तेनाहमेव प्रपञ्च[15]व्याप्त्या सत्यलोकादूर्ध्वमपि भुवने लोकनाथतया [16]पूर्वप्रतिपादितोऽवस्थित इत्यर्थः। ततः पूर्वादिक्रमेणेन्द्रादयोऽष्टौ लोकपालाः॥

[सप्त द्वीपाः, अष्टौ समुद्राः]

'अधोभागे' इत्यादि।

**अधो[17]भागे [18]क्षितौ विष्टः सहस्राणि तु षोडश ॥६४॥**
**क्षितेरुपरि यो भागश्चतु[19]राशीतिरुच्छ्रितः।**
**[20]जम्बुः शाकः कुशः क्रौञ्चः प्लक्षो गोमेद एव च ॥६५॥**
**पुष्करश्चेति सप्तैते द्वीपा मुनिवरोत्तम।**
**[21]क्षारः क्षीरं दधि सर्पिस्तथेक्षुरससंज्ञकः ॥६६॥**

---

[1] स्मृतं — मु, उ.
[2] मेरुरुच्छ्रयतेऽचलः — मु, उ.
[3] तदूर्ध्वकटाह० — इ; तेभ्यश्चोर्ध्वमूर्ध्वकटाह० — ऊ, ऋ;
[4] ०लसन्तं — इ; ०लीनं — ए.
[5] ततो यस्मात् — अ.
[6] ब्रह्मब्रह्मसुताः — ऊ, ए; आकरो न लभ्यते।
[7] साध्यविनिवृत्ता — इ ऐ; साध्या इन्द्रान्तास्तु — ऊ, ऋ.
[8] सप्त ससप्तत इति — आ, ई, उ.
[9] भूर्लोक० — आ, ई, उ, ऊ, ऐ.
[10] चशब्दो नास्ति — अ, आ, इ, ई, उ, ऋ, ए, ऐ.
[11] ऐशानकोणेषु — अ; ऐशानकोणे तु — आ, इ, ई, उ, ऐ.
[12] ज्योतिष्मन्नाम — इ.
[13] तत्राह — आ, ई, उ.
[14] स्वात्मनः स्थितिमेवं — अ, आ, इ, ई, उ, ऐ; स्वात्मस्थितिमेवं — ए.
[15] ०व्याप्तः सत्य० — ऐ.
[16] मतङ्ग० विद्या० १. ४ पू० वृत्तौ।
[17] ०भागात् — ऊ, ऋ.
[18] क्षिताविष्टं — मु; क्षिताविष्टौ — उ.
[19] ०राशीत्यथोच्छ्रितः — मु, उ; ०रशीत्यथोच्छ्रितः — ओ.
[20] जम्बूः — उ; जम्बूशाककुशक्रौञ्चाः — ओ.
[21] क्षारः क्षीरोदधिः सर्पि० — मु, उ; क्षारक्षीरदधिसर्पि० — ओ.

[1]मदिरोदस्ततः स्वादुः सागराः सप्त कीर्तिताः।
[2]गर्भोदश्चातिविस्तीर्णः सोऽष्टमः परिमण्डलः ॥६७॥
बहुनात्र किमुक्तेन वस्तुमात्रं हि कारणम्।

[3]मेरुवैपुल्याद् [4]अधोभागे षोडश सहस्राणि। यदुक्तं श्रीमत्किरणे[5] "[6]मेरोऽस्तु पार्श्वतस्त्वष्टौ सहस्राणि" इति। एवं [7]चोभयपार्श्वतः [8]षोडशैवेत्युक्तं भवति। [9]क्षितौ च विष्टस्तु मेरुः षोडशैव [10]सहस्राणि इत्युभयत्रापि [11]संख्या सिद्धा। [12]ततो मेरो[13]रधस्तमेव परिवृत्य सप्त द्वीपाः, अष्टौ समुद्राश्च [14]यथा [15]व्यवस्थिताः,[16] तथानन्तरप्रकरणे विस्तरेण भविष्यति[17]॥

[सप्त पातालभुवनानि]

'भूमेरधः' इत्यादि।

[18]भूमेरधोऽसुराणां तु पुराणि विविधानि वै ॥६८॥
सर्वरत्नोज्ज्वलानि स्युस्तेषां नामानि [19]तच्छृणु।
तलं वितलसंज्ञं तु [20]नितलं [21]सुतलं तथा ॥६९॥
तलातलं पञ्चमं स्यात्ततश्चान्यद्रसातलम्।
पातालं सप्तमं ज्ञेयं [22]बलिर्यत्रासुरो महान् ॥७०॥
एषु रक्षोरगा दैत्याः शतशोऽथ सहस्रशः।
क्रीडन्ति सुखिनः [23]शूराः कन्यकाभिः समावृताः ॥७१॥

---

[1] मदिराथ तथा स्वादु — मु; मधुरोऽथ तथा स्वादु — उ; मदिरोदस्तथा स्वादु — ओ.
[2] गर्भोदश्चेति — मु, उ.
[3] मेरोर्वैपुल्याद् — उ, ऋ; मेरुवैपुल्याद् — ऐ.
[4] अधोभागः — ऊ, ॠ.
[5] किरणे विद्या० ८. ६९ उ०.
[6] मेरोः पार्श्वतोऽष्टौ — अ, आ, इ, ई, उ, ए; मेरोस्तु पार्श्वतोऽष्टौ — ऊ, ऋ; मेरोः पार्श्वदेशेऽष्टौ — ऐ; सुमेरोः पार्श्वतश्चाष्टौ — मुद्रितकिरणागमपाठः; किरणागमवृत्तिमनुसृयात्र पाठः संपादितः।
[7] चोभयं पार्श्वतः — इ.
[8] षोडश वेत्युक्तं — ऊ.
[9] क्षितौ च विशिष्टस्तु — अ, ऐ; क्षितौ निविष्टस्तु — ऊ, ॠ.
[10] 'सहस्राणि' इति नास्ति — ऊ, ॠ.
[11] संख्यासिद्धिः — आ, इ, ई, उ, ऊ, ॠ, ए.
[12] 'ततः' इत्यत्र 'तं' इति दृश्यते — इ.
[13] ०रधस्तनमेवावृत्य — अ, आ, ई, उ, ए, ऐ; ०रधस्तमेवावृत्य — इ.
[14] तथा — अ.
[15] अवस्थिताः — ऊ, ॠ.
[16] अत्र चशब्दोऽधिकः — आ.
[17] मतङ्ग० विद्या० २४. ३१ उ० — ३७.
[18] भूमेरधः सुराणां — मु, उ.
[19] मे शृणु— ऊ, ऋ; मच्छृणु — ओ.
[20] निर्मलं — उ.
[21] स्वतलं — ॠ.
[22] बली यत्रासुरो — मु, उ, ओ.
[23] शूद्राः — उ; शूलाः — ऊ, ॠ.

तत्र **मनुष्याणां** संहारकालस्तावद् **एकः** शरीरविलयात्, **स हि** [1]जात्यायुर्भोगप्रदस्य कर्मणः कस्यचित् परिक्षयात्[2] स्थूलशरीरविषयो भवति।

[3]"विज्ञानयोगसंन्यासै[4]र्भोगाद्वा कर्मणः [5]क्षयात्" [इति]।

सर्वस्य तु [कर्मणः क्षयात्] [6]सूक्ष्मशरीर[7]विषयोऽपीति स एव असाधारणस्य तत्त्वसर्गस्य विलयः। तदानीं हि[8] विज्ञान[9]केवलित्वमेवेत्युक्तम्[10], स च [11]**देहान्तदर्शनाद् लक्ष्यते** इति। द्वितीयस्तु भूरादिलोकानामुपसंहारात् ॥२–३॥

अथ कथं तेषां संहार इति, [12]तत्रोच्यते[13] — 'क्रीडतोऽस्य' इत्यादि।

> [14]**क्रीडतोऽस्य जगत्कार्यं श्रीकण्ठस्यामितद्युतेः।**
> **जगदात्मवशं [15]कर्तुमथ तस्मात्स लीलया ॥४॥**
> **तीव्रेण योगवीर्येण शरीरं पद्मजन्मनः।**
> **समाविश्य जगत्कर्ता तमसा भूरिणा [16]यदा ॥५॥**
> **ब्रह्मणः सात्त्विकं वृत्तमभि[17]भूतं शिवेच्छया।**
> [18]**स्वापयित्वा च [19]कालाख्यं विवेश भुवनेश्वरम् ॥६॥**

श्रीकण्ठनाथस्य **क्रीडतः** क्लेशं विनैवेच्छया यतो **जगत्कार्यम्** इत्युक्तं [20]**गुणप्रकरणे**। [21]**तस्मात् स जगत्कर्ता लीलयैव**[22] इच्छामात्रेण तदेव **जगदात्मवशं कर्तुं**[23] स्वात्मनिष्ठं विश्रामयितुं, [24]योग्यष्टकमध्यपठितत्वाद् योगशक्त्यैव ब्रह्माणमुद्भूततमोवृत्तिं कृत्वा; अत एव प्रस्वाप्य, [25]कालानलं **भुवनेश्वरं** [26]परेण वह्निरूपेण [27]**विवेशेति** ॥४–६॥

---

[1] जात्यायुर्वैर्योग० — इ.
[2] अत्र 'स्थूल' इत्यधिकम् — अ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[3] परमोक्षनिरासकारिका ५४ उ०; पौष्करे, विद्यापादे २. १४६ उ०.
[4] ०र्भोगद्वारेण कर्मणः — इ.
[5] क्षये — पौष्करपाठः।
[6] स्थूलशरीर० — ऊ.
[7] विषयो भवति स एव — अ, ऐ.
[8] हिशब्दो नास्ति — ए.
[9] ०केवलित्वमेवोक्तम् — अ, आ, इ, ई, उ, ए; ०केवलत्वमेवोक्तम् — ऐ.
[10] मतङ्ग० विद्या० २. १–२ पू० वृत्तौ; ९. ३४–३५ वृत्तौ।
[11] देहान्तर्दर्शनाद् — अ, आ, इ; देहान्तरदर्शनाद् — ऊ, ऋ.
[12] अत्रोच्यते — ए.
[13] अत्र इतिशब्दोऽधिकः — अ.
[14] क्रीडतो देवदेवस्य श्री० — मु, उ, ओ.
[15] कर्तुर्यतस्तस्मा० — ऊ, ऋ; कर्तुमतस्तस्मा० — ओ.
[16] यथा — मु, उ; तदा — ऊ; सदा — ऋ.
[17] ०भूय शिवेच्छया — ऊ, ऋ.
[18] क्षोभयित्वा — मु, उ; स्थापयित्वा — ऊ, ऋ.
[19] लौकाख्यं विश्वेशं भुव० — ओ.
[20] मतङ्ग० विद्या० १६. १ उ०–४ पू० वृत्तौ।
[21] तस्माज्जगतः कर्ता — अ, आ, इ, ई, उ, ए, ऐ.
[22] एवकारो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[23] अत्र इतिशब्दोऽधिकः — अ, आ, इ, ई, उ, ऊ, ए, ऐ.
[24] योगाष्टकं पठित० — इ; योगाष्टकमध्यपठित० — ऊ, ऋ; मतङ्ग० विद्या० १६. २७ उ० — ३४ पू० वृत्तौ।
[25] कालानलभुव० — इ.
[26] 'परेण' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[27] विशेषयति — इ.

ततोऽनन्तरम् — 'तेनाग्निना' इत्यादि ।

**[1]तेनाग्निना [2]क्षोभितश्च कालरुद्रः प्रतापवान् ।**
**बृंहितः सहसा [3]क्रोधाज्ज्वालयामास स्वां तनुम् ॥७॥**

**तेन** [4]श्रीकण्ठतेजसोपबृंहितः [5]सन्नत्यन्तावेशाद् [6]**ज्वालयामास स्वां तनुमिति** ज्वालासहस्रमालिनं शरीरमकरोदित्यर्थः ॥७॥

[7]ततश्च 'तस्य' इत्यादि ।

**तस्य ज्वाला[8]समूहेन सुशुभेनातितेजसा ।**
**[9]निर्दहत्याशु चाविष्टो लोकानां त्रितयं मुने ॥८॥**

[10]**तस्य** ईश्वरतेजसा समुप[11]बृंहितस्याग्नेः संबन्धिना **ज्वालासमूहेन लोकानां त्रितयं** कालाग्निर्दहतीति ॥८॥

[12]तत्र मतङ्गमुनिः — 'एवं श्रुत्वा' इत्यादि ।

**एवं श्रुत्वा वचस्तस्य देवदेवस्य विप्रराट् ।**
**प्रणिपत्य यथान्यायं [13]पृष्टवान्परमेश्वरम् ॥९॥**

'भुक्तभोगस्य' इत्यादि ।

**मतङ्ग उवाच —**

**[14]भुक्तभोगस्य [15]देहाख्यप्रलयो देहसंक्षयात् ।**
**[16]स च प्रत्यात्मकः पुंसां नित्यं [17]भोगवशात्स्थितः ॥१०॥**
**[18]न तस्य नियमः सिद्धो भोग एव प्रदर्शकः ।**
**वक्तव्यो ब्रह्मणः [19]स्वापो यथावत्सुविनिश्चयात् ॥११॥**

---

[1] तेनाग्निनास्यारेख्यानां काल० — उ.
[2] सरौद्रेण काल० — ऊ, ऋ; सुरौद्रेण काल० — ओ.
[3] क्रोधात्प्रजज्वाल स्वकां तनुम् — मु, उ.
[4] श्रीकण्ठेन तेजसोप० — अ, इ, ऋ, ऐ; श्रैकण्ठचेन तेजसोप० — आ, ई, उ; श्रौकण्ठेन तेजसोप० — ए.
[5] सन्नत्यन्तेऽभिनिवेशाद् — अ; सन्नत्यन्तप्रतापवान् ज्वाल० — ऐ.
[6] ज्वालामालासहस्रां तनु० — अ. ज्वलयामास स्वां — आ, इ, ई, उ, ऊ, ऋ, ए.
[7] अतश्च — ऊ, ऋ.
[8] सहस्रेण सुशुभ्रेणा० — मु, उ, ओ.
[9] निर्दहत्यैश्वराविष्टो — ओ.
[10] 'तस्य' इत्यारभ्य ९–११ वृत्तौ 'उक्तं हि' इत्यन्तं नास्ति — ए.
[11] ०बृंहिता अस्याग्नेः — इ; ०बृंहितेनास्याग्नेः—ऐ.
[12] अत्र — आ, ऊ, ऋ, ऐ.
[13] पृष्टवान् कारणेश्वरम् — मु, उ, ओ.
[14] भोक्ता भोग्यस्य — मु; भोक्तुर्भोग्यस्य — मु० पाठान्तरम्, उ, ऋ, ओ.
[15] देहाख्यः प्रलयो—मु, ओ; देहाख्यं प्रलयो—उ.
[16] स च वृत्त्यात्मकः — मु; वचः प्रत्यात्मकः—उ.
[17] क्षोभवशात्स्थितः — मु.
[18] वृत्तस्य — मु; तत्तस्य — उ, ओ.
[19] स्वापे — मु, उ.

उक्तं हि प्राक्,

[1]"कालो [2]नाम मनुष्याणां द्विविधः प्रलयात्मकः" इति।

[3]तत्र, [4]"उपभोग[5]क्षयादेकः स च [6]देहान्तदर्शनात्। लक्ष्यते" इत्यनेन तत्रैवैकस्य देहप्रलयाख्यस्य प्रति[7]पुरुषमनियतकालभावित्वेन [8]सिद्धस्य [9]जात्यायुर्भोगप्रदकर्म[10]क्षयो निमित्तत्वे[11]नोक्तः। यस्तु युगपत् पुंसां प्रलयात्मकः कथयितुमुपक्रान्तः, तस्य किं निमित्तम्। [12]यदि ब्रह्मस्वाप एव; तर्हि सोऽपि वक्तव्यः [13]कस्मिन्काले भवतीति ॥१०–११॥

अत्र सिद्धान्तः — 'ततः प्रोवाच' इत्यादि।

**ततः प्रोवाच [14]विश्वात्मा मतङ्गाय [15]सुमेधसे।**

**परमेश्वर उवाच —**

**स्वस्थस्य पुरुषस्याक्षिनिमेषांशस्त्रुटिः स्मृता[16] ॥१२॥**
**सातिसूक्ष्मतया ग्राह्या [17]तदतीतो न लक्ष्यते।**
**कालः कालप्रवाहेऽस्मिन्नप्रमेयोऽप्यथोच्यते ॥१३॥**
**[18]विभागस्थितये विप्र स [19]च [20]त्रुटचादिभिः स्थितः।**
**[21]कलादिरुच्यते [22]कृत्स्नः संख्यानेन तवाधुना ॥१४॥**

[23]पुरुषाक्षि[24]निकोचनिमेषांशस्तावत् [25]**त्रुटिः** कथ्यते। सैव च तावदत्यन्तं सूक्ष्मतया **न** पुरुषैर्व्यवहाराय ग्रहीतुं शक्या[26]। किमुत **तदतीतः कालः** अत्यन्तसूक्ष्मतरो यः [27]संग्रहीतुं शक्यत [28]इति। [29]अतः **त्रुटचादिभिरेव** भागैः **अप्रमेयोऽपि** [30]स्वतः **कालः** विभाग[31]क्रमेण **उच्यते** इति ॥१२–१४॥

---

[1] मतङ्ग० विद्या० २५.२ उ०.
[2] 'नाम' इति नास्ति — ए.
[3] अत्र — इ.
[4] मतङ्ग० विद्या० २५.३.
[5] ०क्षयादेकस्य च — इ.
[6] देहान्तरदर्शनात् — ऐ.
[7] ०पुरुषं नियत०—इ; ०पुरुषनियत० — ए.
[8] सिद्धः अस्य — इ.
[9] जात्यात्मभोग० — ए.
[10] ०क्षयनिमित्त० — ऊ, ऋ.
[11] ०नोक्तम् — अ, इ, ए.
[12] यदि स्वाप एव — ऋ.
[13] तस्मिन्काले — इ.
[14] भगवान् — ऊ, ऋ.
[15] सुवेधसे — उ.
[16] ०स्त्रुटिः स्मृतः — मु; ०स्तुटिः स्मृताः — ऊ; स्तुटिः स्मृता—ऋ. ०स्तुटिः स्मृतः—ओ.
[17] तदानीं नो न लक्ष्यते — उ; तदतीतेन लक्ष्यते — ऊ, ऋ, ओ.
[18] विभङ्गस्थितये — ओ.
[19] तु — उ.
[20] न्यान्यादिभिश्चितः — उ; तुटचादिभिः स्थितः — ऊ, ऋ, ओ.
[21] कलाभिरुच्यते — ऋ.
[22] कृत्स्नं संख्यानेन — मु, उ; कृत्स्नसंख्यानेन — ऊ, ऋ, ओ.
[23] पुरुषाक्षनिकोचनिमेषः तस्यांशस्तुटी — ऐ.
[24] 'निकोच' इति नास्ति — ऊ, ऋ.
[25] तुटिः — आ, ई, उ, ऊ, ऋ.
[26] शक्यामः — ऐ.
[27] स गृहीतुं — ऋ; त्वं गृहीतुं — ए.
[28] इति। तुटचादि० — आ, ई, उ, ऐ; इत्यर्थः। तुटचादि० — ऋ.
[29] 'अतः' इति नास्ति — अ, इ, ए.
[30] सुलभः कालः — ऊ, ऋ.
[31] क्रमेणैवोच्यते — ए.

'त्रुटिर्नाम' इत्यादि ।

[१]त्रुटिर्नाम [२]कला सूक्ष्मा लवस्तद्द्विगुणः स्मृतः ।
लवद्वयं [३]निमेषस्तु काष्ठा पञ्चदशात्मिका ॥१५॥
[४]त्रिंशत्काष्ठात्मको [५]वाहो [६]वाहास्त्रिंशत्प्रपिण्डितः ।
मुहूर्त[७]संज्ञो लोके[८]ऽस्मिंस्तैस्त्रिंशद्भिस्तु सुव्रत ॥१६॥
अहोरात्रं समाख्यातं तन्त्रेऽस्मिन्पारमेश्वरे ।
पक्षो[९]ऽहोरात्रवर्गेण ज्ञेयः पञ्चदशात्मना ॥१७॥
पक्ष[१०]द्वयं स्मृतो मासो द्वौ मासावृतुरिष्यते[११] ।
ऋतूनां[१२]त्रितयेन स्यादयनं मुनिसत्तम ॥१८॥
अयनद्वितयेनापि वत्सरः परिभाष्यते ।
सौरो [१३]मानुषजातीनां तेषां [१४]षष्ट्यधिकैः शतैः ॥१९॥
त्रिभिर्दिवौकसा[१५]मब्दं कथितं [१६]तत्त्वदर्शिभिः ।
चत्वार्यब्दसहस्राणि वैबुधानि कृतं युगम् ॥२०॥
संध्याशतानि[१७] तावन्ति [१८]संध्यांशस्तावदेव हि ।
एकैकह्रासतोऽन्यानि त्रेताद्यानि युगानि तु ॥२१॥
संध्यासंध्यांशयुक्तानि [१९]कलिनिष्ठान्यतः परम् ।
[२०]सर्वमेकत्र संख्यातमब्दानां तु चतुर्युगम् ॥२२॥
सहस्राणि दश द्वे च तस्मान्मन्वन्तरं परम् ।
चतुर्युगैकसप्तत्या विज्ञेयं [२१]गणितार्थिभिः ॥२३॥
स्वव्यापारनियुक्तानामिन्द्राणामायुरुच्यते ।
एकैकस्य भवेदायुर्युगानामेकसप्ततिः ॥२४॥
तैश्चतुर्दशभिः शक्रैर्दिनं कमलजन्मनः ।
लोकत्रय[२२]स्थितिरियं समासेन तवोदिता ॥२५॥

---

[१] तुटिर्नाम — ऊ, ऋ, ओ.
[२] कलाः सूक्ष्मा — ऋ.
[३] निमेषोऽस्तु — ऊ, ऋ.
[४] त्रिंशत्काष्ठात्मिका — मु, उ, ओ.
[५] वाहा — ओ.
[६] वाहास्त्रिंशत्प्रपीडितः — मु, उ; वाहास्त्रिंशत्प्रपिण्डितम् — ओ.
[७] ०संज्ञा लोके ० — मु, ऊ, ऋ.
[८] ०ऽस्मिंस्तत्त्रिंशद्भिश्च — मु, उ; ०ऽस्मिंस्तत्त्रिंशद्भिस्तु — ओ.
[९] ०ऽहोरात्रि० — ऋ.
[१०] द्वयात्स्मृतो — मु, उ.
[११] ०वृतुरुच्यते — ऊ, ऋ, ओ.
[१२] त्रितयं यत्स्या० — मु, उ.
[१३] मानुष्य — मु, उ; मनुष्य० — ऊ, ऋ.
[१४] षष्टचाधिकैः — ओ.
[१५] ०मब्दः कथितः — उ.
[१६] तत्र दर्शनात् — मु, उ; तन्त्रदर्शनात् — ओ.
[१७] ०गतानि — मु.
[१८] सन्ध्यांशश्चैव पण्डितः — ऊ; सन्ध्यांशश्चैव पण्डिताः — ऋ; सन्धां सा तावदेव हि — ओ.
[१९] कल्पनिष्ठा० — मु, उ.
[२०] सर्वमेतत्समाख्यात० — मु, ओ.
[२१] गणितादिभिः — मु; गुणितादिभिः — मु० पाठान्तरम्.
[२२] ०स्थितिर्यावित् — मु, उ.

[1]विरिञ्चेस्तावती रात्रिर्यस्यां लोकत्रयं मुने ।
क्षयं याति [2]ततः प्राप्ते [3]तदवस्थमहर्मुखे ॥२६॥
ब्रह्माप्युत्थाय [4]शयनादादिष्टः [5]कारणात्मना ।
रुद्र[6]शक्तिबलाद्भूयो निर्मिणोति जगत्सदा ॥२७॥
एतद्ब्राह्ममहोरात्रम् ”

तत्र [7]त्रुटयादिसंवत्सरान्तः कालः सौरेण मानेनात्र [8]लोकसिद्ध एव कथितः। यश्च [9]लौकिकसंवत्सरः, [10]स एवोत्तरायणदक्षिणायन[11]भेदेन देवानामहोरात्रम्। [12]अत एव तेषामिति [13]मनुष्यसंवत्सराणां [14]षष्टयधिकेन शतत्रयेण [15]देवानां संवत्सरः। दिव्यानां संवत्सराणा[16]मष्टशताधिकानि [17]चत्वारि सहस्राणि [18]सह संध्यातदंशाभ्यां कृत[19]युगम्। [20]एवं त्रेता[21]युगं शतषट्केन [22]सह सहस्रत्रयम्। [23]द्वापरयुगं [24]सह शतचतुष्टयेन सहस्र[25]द्वयमेव। कलिः पुनः शतद्वयेन [26]सह सहस्र[27]मित्येकचतुर्युगसंख्या[28] दिव्यानि द्वादशसहस्राणीति। तेषां चतुर्युगानामेकसप्तत्या मन्वन्तरं[29] प्रत्येकस्येन्द्रस्य आयुः। [30]तैश्चतुर्दशभिः [31]इन्द्रैरतीतैर्ब्रह्मणो दिनं लोकत्रयस्य [32]स्थितिकालः। दिनसमैव च रात्रिः ब्रह्मणो लोकत्रयस्य संहार इति। एतद्ब्राह्म[33]महोरात्रं कनिष्ठकल्पात्मकं मतङ्गमुनि[34]प्रश्नितकारणायोक्तम् ॥

---

[1] वैरिञ्ची तावती — ऊ, ॠ.
[2] तमः — मु, उ, ओ.
[3] तदवस्थं महामुने—मु; तदवस्थमहर्मुने—ऊ, ॠ.
[4] शयनादाविष्टः — उ, ऊ, ॠ, ओ.
[5] करणात्मना — मु; कमलात्मना — उ; करणात्मनः — ओ.
[6] शक्तिर्बला० — ॠ.
[7] तुटयादि० — आ, ॠ, ऐ; तुटयादिः —ऊ.
[8] लोकः सिद्ध एव—ए; लोकसिद्धिः स एव—ऐ.
[9] 'लौकिक' इति नास्ति — आ; लौकिकः संवत्सरः — इ, ई, उ, ऊ, ॠ, ए.
[10] 'स' इति नास्ति — ॠ.
[11] 'भेदेन' इति नास्ति — अ.
[12] अत्यद्भुतमेषामिति — ऐ.
[13] अमानुष्यं संवत्सराणां — ॠ; मनुष्यवत्सराणां — आ, ई, उ.
[14] षष्टयधिकशत०—ए; षष्टयधिकोनशत०—ऐ.
[15] देवतानां संवत्सरम् — ए.
[16] ०मष्टाशताधिकानि — आ, ई, उ, ॠ.
[17] चत्वारिंशत्सहस्राणि — इ.
[18] सह संध्या सा तदंशाभ्यां — अ, इ; सह स तदंशाभ्यां — आ; सह संध्यांशतदंशाभ्यां — ऊ, ॠ.
[19] ०युगः — ऊ, ॠ.
[20] 'एवं' इति नास्ति — ऊ, ॠ.
[21] ०युगः — ऊ, ॠ.
[22] 'सह' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[23] द्वापरस्तु सह — ऊ, ॠ.
[24] 'सह' इति नास्ति — ए, ऐ.
[25] ०द्वयमेवं कलिः — आ, इ, ई, उ.
[26] 'सह' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[27] ०मित्येकत्र चतुर्युग० — आ, इ, ई, उ, ऊ, ॠ, ए, ऐ.
[28] ०संख्यानि — इ.
[29] अत्र 'चरन्तं' इत्यधिकम् — इ.
[30] तैश्चतुर्भिर्दशभिः — ई, उ.
[31] इन्द्रैरिति ब्रह्मणो — इ.
[32] स्थितिकेवलम् — ए.
[33] ०माहोरात्रमत्र कनिष्ठ० — आ, ई, उ; ०महोरात्रान्तोऽत्र कनिष्ठ० — इ.
[34] ०प्राश्नितकारणायोक्तम् — अ, ऐ; ०प्राश्नितकारणयुक्तम् — आ; ०प्रश्नाय कारणयुक्तम् — इ; प्रङ्गनिराकरणायोक्तम् — ऊ; प्रङ्गकरणायोक्तम् — ॠ.

अधुना — 'महाकल्पश्च' इत्यादि ।

**"महाकल्पश्च कीर्त्यते ।**

चशब्दाद्[1]मध्यमकल्पश्च [2]कीर्त्यते इति ॥

तत्र मध्यम[3]कल्प एव तावदुच्यते — 'एवमेव' इत्यादि ।

**एवमेव भवेत्संख्या तेषां षष्ट्यधिकैः शतैः ॥२८॥**
**[4]त्रिभिरब्दं समाख्यातमब्दानां तु शतं प्रभुः ।**
**जीवेद्ब्रह्मा मुनिव्याघ्र नात्र कार्या विचारणा ॥२९॥**

[5]ब्राह्मणामेवाहोरात्राणां षष्ट्यधिकेन शतत्रयेण[6] [7]ब्राह्म[8]संवत्सरः । तेषां **शतं** [9]**ब्रह्मा** जीवति[10] । [11]स एव मध्यमप्रलयस्य गुणान्तस्य काल इत्यत्रैव [12]वक्ष्यामः ॥२८–२९॥

अथ कीदृशी कनिष्ठप्रलये भुवनेशादीनां स्थितिः, कीदृशी वा मध्यमप्रलये भवेदित्युच्यते — 'कालाग्निरुद्रः' इत्यादि ।

**कालाग्निरुद्रो दीप्तात्मा ज्वलच्छक्तिमरीचिभिः ।**
**[13]ऊर्ध्वगाभिः सुघोराभिर्ददाह भुवनत्रयम् ॥३०॥**
**ये [14]चात्र भुवनेशाना रुद्राः शुद्धेन्दुमौलयः ।**
**कूष्माण्ड[15]हाटकाद्यास्तु योगवीर्योपबृंहिताः ॥३१॥**
**कारणानुमताः सन्तः स्वस्थानानि विहाय तु ।**
**सूक्ष्मेण वपुषा वह्नेरसंप्राप्तास्तु गोचरम्[16] ॥३२॥**
**[17]लीलयैव तदा सर्वे [18]प्रविष्टास्तनुमैश्वरीम् ।**

कालाग्निर्यदैव[19] लोकत्रयदाहाय प्रवृत्तः, तदैव [20]कूष्माण्डहाटकलोकपालाद्याः [21]प्रागुक्ता भुव-

---

[1] मध्यः कल्पश्च — अ; मध्यकल्पश्च — ऋ.
[2] कीर्तित इति — अ, ऋ, ऐ.
[3] 'कल्प' इति नास्ति — अ; कल्पं — ऋ.
[4] त्रिभिरायुः समा० — उ.
[5] ब्रह्मण एवाहो० — ऋ; ब्रह्मणामेवाहो० — ए, ऐ.
[6] अत्र चशब्दोऽधिकः — अ.
[7] ब्रह्म० — अ, इ; ब्रह्मा० — ऋ.
[8] ०संवत्सरवत्तेषां — ए.
[9] 'ब्रह्मा' इति नास्ति — ऊ, ऋ.
[10] अत्र इतिशब्दोऽधिकः—अ, ए; जीवितेति—इ.
[11] 'स एव' इत्यत्र 'एवं' इति दृश्यते — अ.
[12] मतङ्ग० विद्या० २५. ४७ उ०–५० वृत्तौ ।
[13] ऊर्ध्वभागं सघोराभि० — उ; ऊर्ध्वगतिश्च घोराभि० — ऋ.
[14] तत्र — ऊ, ऋ.
[15] हाटकाद्याश्च — ऊ, ऋ.
[16] ०प्राप्ताः सुगोचरम् — मु; ०प्राप्ताः सुगोचराम् — उ; ०प्राप्ता सुगोचरम् —ओ.
[17] लीलया वितथं सर्वे — उ.
[18] प्रविष्टा तनु० — ऊ, ऋ.
[19] ०र्यदेव — अ, इ, ऊ, ऋ, ऐ.
[20] कूश्माण्ड० — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[21] कूष्माण्डभुवनम्, मतङ्ग० विद्या० २४. १०; हाटकभुवनम्, मतङ्ग० विद्या० २३. ८१ उ० —८४ वृत्तौ; लोकपालभुवनम्, मतङ्ग० विद्या० २३. ५९ उ०—६३ वृत्तौ ।

नेश्वराः अणिमादियोगवीर्येण श्रीकण्ठनाथाज्ञयैव [1]च **स्वस्थानानि** परित्यज्य, [2]उपसंहृताधिकारित्वात् [3]**प्रविष्टाः तनुमिति** [4]वितताम्; उपसंहृताधि[5]काराणामीश्वराणां [6]भूमिं [7]महर्लोकमित्यर्थः । यदुक्तम् —

"[8]कृताधि[9]कारिणस्तत्र शक्राद्याः संव्यवस्थिताः ।" इति[10] ।

'शेषाः' इत्यादि ।

**शेषा निर्दग्धतनवो [11]जन्तवः सचराचराः ॥३३॥**
**[12]क्रन्दमानाः सुवित्रस्ता नष्टभोगाः सुकेवलाः ।**
**समुत्सृज्य शरीराणि मूढाः [13]करणवर्जिताः ॥३४॥**
**[14]जनलोकं हि संप्राप्ता नष्टसंज्ञाः परस्परम् ।**
**अज्ञानतमसा [15]विष्टास्तिष्ठन्त्याभूतसंप्लवम् ॥३५॥**

भुवनेशेभ्योऽन्ये [16]वक्ष्यमाणाः [17]षड्विधा अणवो दग्धबाह्यशरीरत्वात् [18]प्रणष्टभोगाः [19]सूक्ष्मदेह[20]मात्रसंबद्धा एव वह्नि[21]संयोगप्रेरणया[22] [23]जनलोकं प्राप्ता[24] ब्रह्मनिशान्तं यावत्तत्र[25] **तिष्ठन्ति**[26] इति ॥ ३३–३५॥

अथ कथं हाटकादिवत्तेऽपि महर्लोके न तिष्ठन्तीति । [27]तत्रोच्यते — 'तेनाटोपेन' इत्यादि ।

**तेनाटोपेन महता[28] ध्रुवान्तमुप[29]सर्पिणा ।**

---

[1] चशब्दो नास्ति — अ, ऐ.
[2] उपसंहृतत्वात् — ए.
[3] प्रविष्टः — इ, ऐ.
[4] सीदताम् — ए.
[5] ०कारिणा० — आ, ई, उ, ऋ.
[6] भूमिः — अ, इ, ऋ, ए, ऐ.
[7] महर्लोक इत्यर्थः — अ, ऊ, ऋ.
[8] मतङ्ग० विद्या० २३. ५० पू.
[9] ०'कारिणो यस्मिन्निन्द्राद्याः' इति मतङ्ग० विद्या० २३.५० पू० पाठः ।
[10] इतिशब्दो नास्ति — अ, ऊ, ऋ.
[11] जङ्गमाः — मु, उ, ओ.
[12] कृतान्ता जङ्गमा न स्युः वित्रस्ता भोगकेवलाः — उ; क्रममाणाः सुवित्रस्ता म्लिष्टभोगास्तु केवलाः — ऊ; क्रममाणाः सुवित्रस्ताल्लब्धभोगास्तु केवलाः — ऋ.
[13] कारणवर्जिताः — मु, उ.
[14] जनोलोकं — मु, उ.
[15] ०विद्धा० — ओ.
[16] वक्ष्यमाणत्वात् — ए; मतङ्ग० विद्या० २५. ३८.
[17] षड्विधा अणवः मनुष्यादिस्थावरान्ताः । मतङ्ग० विद्या० २३. ५५; लिङ्गपुराणे ८८. ६६ उ०–६९.
[18] प्रणष्टरोगाः — ऊ, ऋ.
[19] सूक्ष्मे देहसंबन्धा एव — अ.
[20] ०मात्रसंबन्धा एव — आ, ई, उ; ०मात्रे संबन्धा एव — इ; ०मात्रेण संबन्धा एव — ए, ऐ.
[21] ०संवेगप्रेरणया — इ, ऐ; ०संवेगं प्रेरणया — ई, उ; ०संरोगप्रेरणया — ऊ, ऋ.
[22] अत्र एवकारोऽधिकः — आ, ई, उ.
[23] जनलोकप्राप्ता — अ, ऐ; जनलोके प्राप्ता — आ, इ, ई, उ, ए.
[24] अत्र इतिशब्दोऽधिकः — आ, ई, उ.
[25] अत्र एवकारोऽधिकः — ऊ, ऋ.
[26] तिष्ठति — इ.
[27] 'तत्रोच्यते' इति नास्ति — ऋ, ऐ.
[28] ब्रह्मान्तमुप० — ऊ, ऋ.
[29] ०सर्पिणः — ओ.

**वह्नेर्ज्वालासमूहेन ये महर्लोकवासिनः ॥३६॥**
**[1]प्रपालयन्ति संत्रस्ता [2]ध्रुवमूर्ध्वेन वर्त्मना ।**
**विश्रामश्च ततस्तेषां [3]जनलोकेऽभयात्मनाम् ॥३७॥**

[4]लोकत्रयं हि ध्रुवावधि[5] [6]प्रज्वालितो वह्निः साक्षाद्दहत्येव। **आटोपेन** तु [7]वेगेनार्चिःस्वरूपेण चतुर्थं महर्लोकमुद्वासयतीति, तन्निवासिनामपि यत्र स्थितिर्न संभवति[8], तत्र कुतस्तेषां [9]प्रणष्टबाह्यशरीराणां [10]भवेत् । भुवनेश्वराणां [11]तु भुवन[12]निवास्यपेक्षया सातिशय[13]शक्तियोगात् तत्रावस्थानमुपपद्यते ॥३६–३७॥

न तु लोकत्रयेऽपीति — 'निर्दग्धुम्' इत्यादि ।

**निर्दग्धु[14]मुद्यतस्यास्य [15]न वृक्षा न सरीसृपाः ।**
**न पक्षिणो मृगाश्चैव पशवो न च [16]मानुषाः ॥३८॥**
**न देवा दानवा नागा न चान्ये तत्र वासिनः ।**
**नाचलाः सरितो नैव न सरांसि न सागराः ॥३९॥**
**तिष्ठन्ति मुनिशार्दूल क्षणार्धमपि भूतले ।**
**लोकत्रयस्य कृत्स्नस्य दह्यमानस्य सुव्रत ॥४०॥**
**न शक्नुवन्ति वै सोढुं तेजः परमदुर्जयम् ।**

ततश्च — 'एवं वृत्ते' इत्यादि ।

**एवं वृत्ते निशाकाले ब्रह्मामरगुरुः प्रभुः ॥४१॥**
**[17]प्रबुध्यते [18]यदाविष्टः [19]श्रीकण्ठेन महात्मना ।**
**तदानुध्याय विश्वात्मा [20]प्रज्ञायोचित[21]संपदम् ॥४२॥**

---

[1] पालयन्त्यतिसंत्रस्ताद्धृतमूर्ध्वेन — ऊ, ऋ.
[2] ध्रुवमूढेन — मु, उ, ओ.
[3] जनोलोके — मु.
[4] लोकत्रये — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[5] ध्रुवावधौ — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[6] प्रज्वलितो — ऊ.
[7] वेगेनाग्निरूपेण — अ; वेगेनार्चीरूपेण — आ, ई, उ, ऐ; वेगेनार्चिरूपेण — इ; कुवेगेनार्चिरूपेण — ए.
[8] अत्र इतिशब्दोऽधिकः — ऋ.
[9] पतितबाह्य० — ऊ, ऋ.
[10] 'भवेत् भुवनेश्वराणां' इत्येतन्नास्ति — ऊ, ऋ.
[11] त्रिभुवन० — अ, आ, इ, ई, उ, ए, ऐ.
[12] ०विनाश्यपेक्षया — ऋ.
[13] 'शक्ति' इति नास्ति — अ, आ.
[14] ०मुदितस्यास्य — ऋ.
[15] न व्यक्ता — ऋ.
[16] मानुष्याः — ऊ, ऋ.
[17] प्रबुद्ध्यति — मु, उ, ओ.
[18] समाविष्टः — मु, उ; मुदाविष्टः — ओ.
[19] श्रीकण्ठेनामितात्मना — मु, उ, ओ.
[20] प्रज्ञयोचित० — मु; प्रादायोचित० — मु० पाठान्तरम्; प्रज्ञायोजित०—उ०पाठान्तरम्; प्राङ न्यासोदित० — ऊ, ऋ.
[21] ०संपदः — उ; संमदम् — ऊ, ऋ.

**[1]सिसृक्षुर्जगतो धाता [2]योगेनातिबलीयसा ।**
**एवमब्दशतं पूर्णं भावाभावपरिभ्रमात्[3] ॥४३॥**

[4]एवंविधे **ब्रह्मणो निशाकाले** [5]दिनसमे एव व्यतीते, ब्रह्मा श्रीकण्ठनाथप्रेरणया [6]बुद्धः सन्, [7]प्रागुक्तनयेन आत्मनः सात्त्विकीं **संपदम्** अवलम्ब्य, अणिमादियोगैश्वर्येण [8]युक्तो [9]**जगतो धाता सिसृक्षुश्च** पुनर्भवति। पुनश्च [10]प्रागुक्त[11]संहारमनुक्रमाद्भवति यावज्जगत्सृष्टिसंहारक्रमं कुर्वतस्तस्य [12]वर्षशतं स्वमानेन [13]**पूर्णम्** ॥४१–४३॥

ततश्च — 'स्वाधिकारं' इत्यादि ।

**स्वाधिकारं [14]समाप्यैवं महत्तत्त्वे स विश्वराट् ।**
**बुभोज विपुलान्भोगान्भोगस्थानं [15]यतस्तु तत् ॥४४॥**

तस्मिन् ब्रह्मणः संवत्सरशते पूर्णेऽधिकार[16]समाप्तिनिमित्तमस्य [17]**महत्तत्त्वे** भोगस्तावत्कियन्तं कालं भवति ॥ ४४॥

अनन्तरम् — 'लयश्चास्य' इत्यादि ।

**लयश्चास्य पदे ज्ञेयो गुणाख्ये गुणवत्तरे ।**

तस्मिन् [18]स्वाधिकार[19]समाप्तिनिमित्तेऽस्य भोगे [20]क्षीणे तस्मादूर्ध्वं गुणतत्त्वभुवने, **गुणवत्तरे** चाव्यक्तादि[21]कपालेशभुवनान्ते [22]पूर्वार्जितस्वकर्मवशाद् **अस्य** [23]भोगान्भुञ्जतः कदाचित् **लयः** प्रलय-

---

[1] विसृक्षु० — ओ.
[2] यो जानाति बलीयसा — उ; योगेनैव बलीयसा — उ० पाठान्तरम् ।
[3] ०परिश्रमात् — उ.
[4] एवंविधो — अ, ऋ; एवंविधैः — इ.
[5] दिनसमये व्यतीते — अ; दिवस एव व्यतीते — ए.
[6] प्रबुद्धः सः प्रागुक्त० — ऊ, ॠ.
[7] प्रागुक्तेन नयेन — अ, आ, इ, ई, उ, ए, ऐ; मतङ्ग० विद्या० १६. ९ उ०–१३ पू० वृत्तौ ।
[8] युतो — अ.
[9] 'जगतो' इति नास्ति — ऊ, ॠ.
[10] मतङ्ग० विद्या० २५. १५–२८ ०पू
[11] ०संहारक्रममनुभवति — अ, आ, इ, ई, उ, ए, ऐ.
[12] वर्ष शतं — ई, उ.
[13] पूर्वम् — इ, ॠ, ए.
[14] समाप्योच्चैः — ऊ, ॠ; समाप्यैव — ओ.
[15] यतस्ततः — ऊ, ॠ.
[16] समाप्तिः निमित्त० — इ; समाप्तिनिवृत्त० — ए.
[17] महत्तत्त्वभोग० — अ.
[18] तदधिकार० — ऊ, ॠ.
[19] ०समाप्तिनिमित्तस्य — इ, ऊ; ०समासनिमित्तस्य — ॠ.
[20] क्षीणो — इ.
[21] ०कपालीशादिभुवनान्ते — इ.
[22] पूर्वतनार्जित० — आ; पूर्वतरार्जित० — इ; ई उ, ऊ, ॠ; पूर्ववर्तनार्जित० — ए.
[23] भोगान्भुक्त्वा — अ; भोगं भुञ्जनास्य — ऊ, ॠ.

केवलित्वम् । [1]कदाचित्तु कर्मक्षयाद्विज्ञानकेवलित्वमिति । [2]न तु बुद्धितत्त्वादधोऽस्य [3]भोगः । [4]तदधः [5]परिक्षीणकर्मण एव ब्रह्मत्वेऽधिकारात् ॥

अत एव — 'न्यायेनानेन' इत्यादि ।

**न्यायेनानेन संसिद्धा नेतारो जगतः पुरा ॥४५॥**
**[6]ये चान्येषां न तेभ्योऽस्ति संख्या मुनिवरोत्तम ।**

**ये** [7]**जगतो नेतारो** [8]ब्रह्माणो [9]भूत्वा भविष्यन्ति **च**, तेषां **संख्या न** विद्यते । एतच्च **अन्येषाम्** [10]अप्यशुद्धानां भुवनेशानां द्रष्टव्यम् ॥

किं सर्वदैव [11]तेषामेषैव वार्ता । सत्यम् — 'किंतु' इत्यादि ।

**किं तु ये बुद्धितत्त्वात्तु [12]श्रीकण्ठेच्छाप्रचोदिताः ॥४६॥**
**तेऽधिकारपदातीताः[13] शतधा पद्मयोनयः ।**

तेभ्यो [14]मध्याद् **ये** बुद्धितत्त्वव्यवस्थिताः सन्तः श्रीकण्ठेन, शिवेच्छया च चोदिताः **ते अधिकार**[15]**पदाद्** मायालक्षणाद् **अतीताः** बहवो **बुद्धितत्त्वाद्** एव मुक्ता भवन्त्येव । एवं तत्त्वान्तरवर्तिनोऽपि वाच्याः । भुवने [16]भुवने हि गुरवः प्रतिवसन्तीति । तदियता कनिष्ठप्रलये [17]**भुवनेशादीनां** स्थितिवैचित्र्यमुक्तम् ॥

[18]अथ मध्यमप्रलये कथ्यते — 'यावदब्दशतम्' इत्यादि ।

**[19]यावदब्दशतं भाव्यं तस्मिन्नेवान्तरे प्रभुः ॥४७॥**
**ब्रह्मणोऽण्डं स्ववीर्येण संहृत्य सचराचरम् ।**
**जले [20]संयोजयेत्तोयं पृथिव्या सहितं ततः ॥४८॥**

---

[1] 'कदाचित्तु' इति नास्ति — ऊ, ऋ.
[2] अत्र 'बुद्धितत्त्वादधः कर्मसु क्षीणेष्वेव कलिब्रह्मत्वं प्राप्तमनेन' इत्येतदधिकम् — ऊ, ऋ.
[3] भोगाः — ऊ, ऋ.
[4] 'तदधः' इति नास्ति — अ, ऊ, ऋ, ऐ.
[5] अपरिक्षीणकर्मण — इ; परिक्षीणाधःकर्मण — ऊ, ऋ; परिक्षीणे कर्मण — ए.
[6] एवं मूर्तिं न — ऊ, ऋ; ये चाप्येष्यन्न–ओ.
[7] जगन्नेतारो — इ, ई, उ, ऊ, ए, ऐ.
[8] ब्रह्मणे — अ; ब्रह्मणो — इ, ई, उ, ऋ.
[9] भूता — आ, इ, ई, उ, ऊ, ए, ऐ.
[10] अपि शुद्धानां — ऋ.
[11] तेषां सैवाज्ञा सत्यम् — अ, आ, इ, ई, उ, ऐ; तेषामेषा वार्ता — ऋ; तेषां सैवेश्वराज्ञा सत्यम् — ए.
[12] श्रीकण्ठेन प्रचोदिता — ऊ, ऋ.
[13] ०पदे नीताः — उ.
[14] मध्यादेव बुद्धि० — उ; मध्ये ये बुद्धि० — ऊ, ऋ.
[15] ०पदा विमाया महामायालक्षणाद् — अ.
[16] 'भुवने' इति नास्ति — अ.
[17] भुवनेशानां — अ, आ, इ, ई, उ, ए. ऐ.
[18] 'अथ' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[19] यावदन्यच्छतं — ऊ, ओ; यावदन्यच्छुभम् — ऋ.
[20] संयोजयेत्पृथ्वीं — उ० पाठान्तरम्.

**वह्नौ लयमवाप्नोति वह्निः [1]पृथ्व्यम्बुना सह ।**
**वायौ प्रलीयते वायुस्तैः सार्धं पार्थिवादिभिः ।४९।।**
**व्योम्नि संलीयते व्योम गर्वे गर्वो महत्यपि ।**
**महान् गुणेषु विप्रेन्द्र गुणास्तत्त्वे परे ययुः ।।५०।।**

एवमब्दशते [2]ब्रह्मणः स्थितिकालतया श्रीकण्ठदिनत्वेनैकस्मिन् भाविते, ततोऽन्यद्द्वितीयं ब्रह्मोपसंहारात्मकं श्रीकण्ठरात्रितया तदानीम् **अब्दशतं [3]यावद् भाव्यं** [4]संपाद्यं भवति। [5]**तस्मिन्नेव** अवसरे श्रीकण्ठनाथः **स्ववीर्येण** [6]न तु [7]प्राग्वत् [8]कालाग्निदर्दाहकारी; तदानीं कालाग्न्यादीनामप्युपसंहार्यत्वात्[9]; ब्रह्माण्डं सर्वमेव **संहृत्य** [10]पृथिवीतन्मात्रे संयोजयतीत्यध्याहारः। तत [11]एवास्योत्पत्तेः [12]प्रागुक्तत्वात्[13]। न तु जलात्। यत [14]एव चोत्पत्तिस्तत्रैव लयः। यद्वक्ष्यति[15] —

"[16]ये यतो विसृता भावाः [17]सविकाराः सपुद्गलाः।
ते तत्रैव प्रलीयन्ते" इति।

अत[18]एव **जले** इति जलतन्मात्रे [19]**संयोजयेत्तोयमिति** व्याख्येयम्। **पृथिव्या सहितम्** [20]इत्यपि [21]यदैव पृथिवी [22]स्वतन्मात्रे तदैव [23]**तोयं** जलतन्मात्र [24]इति व्याख्येयम्। एवं [25]**वह्नाविति** वह्नितन्मात्रे **वह्निः** ताभ्यां **सहेति**। **वायाविति** वायुतन्मात्रे **वायुः** पृथिव्यादिभिः सहेति व्याख्येयम्। **व्योम्नीति** च व्योमतन्मात्रे **व्योम** [26]पृथिव्यादिभिः [27]लीयत इति। **गर्वे इति** अहंकारे,

---

[1] धात्र्यम्भसा सह — ऊ, ॠ; वाय्वम्बुना सह — उ.
[2] 'ब्रह्मणः' इत्यत्र 'ब्रह्मणापि' इति दृश्यते — ॠ.
[3] संपद्भाव्यं — ए.
[4] संभाव्यं — अ.
[5] ततस्तस्मिन्नेव — आ, ई, उ, ए; ततोऽस्मिन्नेव — ऐ.
[6] नकारो नास्ति — आ, इ, ई, उ, ऊ, ॠ, ए.
[7] मतङ्ग० विद्या० २५. ७, ८; प्रागुक्तकालाग्निदाहकारीन् तदानीं — इ; प्रागुक्तकालाग्निदाहकाधिकारी तदानीं — ऐ.
[8] कालाग्निदाहकारी तदानीं — आ, ए; कालाग्निदाहकारी न तदानीं — ई, उ; ज्वलनाग्निदाहद्वारेण तदानीं — ऊ, ॠ.
[9] ०संहारित्वात् — ऐ.
[10] पृथिवीं तन्मात्रे — इ.
[11] एव चास्यो० — इ.
[12] मतङ्ग० विद्या० २३. १०–१२ पू०
[13] प्रागुक्ता — इ, ऐ.
[14] एवोत्पत्ति० — अ, आ, इ, ई, उ, ए, ऐ.
[15] मतङ्ग० विद्या० २५. ५५ उ०, ५६ पू०; 'यद्वक्ष्यति' इत्यत्र 'वक्ष्यति' इति दृश्यते — इ; 'यद्वक्ष्यति' इति नास्ति — ऊ, ॠ.
[16] य एते विसृता — अ; ध्येयतो विहिता — ऐ.
[17] 'सविकाराः सपुद्गलाः' इत्येतन्नास्ति — ऊ, ॠ, ऐ.
[18] एवं — इ.
[19] संहरेत्तोयमिति — ऊ, ॠ.
[20] 'इत्यपि' इति नास्ति — इ.
[21] यथैव — अ, ऊ, ॠ; यद्येवं — इ.
[22] 'स्व' इति नास्ति — ॠ.
[23] 'तोयं' इति नास्ति — ऊ, ॠ.
[24] इतिशब्दो नास्ति — ॠ.
[25] वह्नावपीति — अ, ॠ.
[26] 'पृथिव्यादिभिः' इति नास्ति — आ, इ, ई, उ, ऊ, ॠ, ऐ.
[27] प्रलीयत इति — आ, इ, ई, उ, ऊ, ॠ; प्रविलीयते — ऐ.

अत एव प्रकृतत्वाद् [1]एतत्तन्मात्रपञ्चकं [2]सेन्द्रियवर्गम्। [3]**गर्वस्तु महति, महान् गुणेषु** [4]**गुणास्तु अव्यक्ताख्ये परे** [5]**तत्त्वे** लयं यान्तीति । गुण[6]प्रलयान्तो मध्यमप्रलयः श्रीकण्ठरात्रि-रुक्ता ॥४७–५०॥

तदानीं च भुवनेशाः — 'शतरुद्रादयः' इत्यादि।

> **शतरुद्रादयः [7]शूराः [8]शिवयोगिबलान्विताः ।**
> **श्रीकण्ठभुवनं प्राप्य क्रीडन्त्यविरतेन्द्रियाः ॥५१॥**

ये शिवबलान्विताः शतरुद्राः। आदिग्रहणाद् ये [9]च पञ्चाष्टकादयः। [10]युज्यते परमेश्वर-प्रसादादैश्वर्येणेति [11]योगी अनन्तेशः, तस्य बलेनान्विताः। ते एव श्रीकण्ठभुवने तदानीं [12]क्रीडन्ति। श्रीकण्ठनियुक्तानां तु कालाग्न्यादीनामुपसंहार इत्यर्थः। श्रीकण्ठभुवनं [13]चात्राव्यक्त-वर्त्येव। न तु गुणवर्त्यपि। तदानीं [14]गुणानामुपसंहृतत्वात् ॥५१॥

'ततः' इत्यादि।

> **ततः श्रीकण्ठवीर्येण सर्वकर्तृत्वकारिणा ।**
> **प्रधान[15]मचलद्भूयो भूयोऽप्येवं सहस्रधा ॥५२॥**
> **भूत्वा भूत्वा"**

अनन्तरं श्रीकण्ठनिशायां व्यतीतायां तद्वीर्येणैव प्रधानं कार्यात्मना भूत्वा, पुनस्तद्दिनक्षये संहारा-त्मना [16]चलति। [17]पुनश्च[18] भूत्वा[19] [20]पुनश्चलतीति [21]यावच्छ्रीकण्ठवर्षसहस्रमित्युक्तो मध्यमः प्रलयः॥

[22]अथ महाप्रलयः — 'लयं याति' इत्यादि।

> **"लयं [23]याति ग्रन्थौ मायात्मके क्रमात् ।**

---

[1] एतत्तु तन्मात्र० — अ, आ, इ, ई, उ, ए, ऐ; एव तन्मात्र० — ऋ.
[2] सहेन्द्रियवर्गं — इ, ऊ, ऋ, ए, ऐ.
[3] गर्वं तु — इ, ऐ; गर्वश्च — ऊ.
[4] गुणस्तु अतिव्यक्ताख्ये — ऋ.
[5] तन्त्रे — ऋ.
[6] ०प्रलयतो — अ, ए.
[7] शान्ताः — उ.
[8] शिवयोगबला० — मु, उ, ऊ, ऋ.
[9] चशब्दो नास्ति — ऋ.
[10] युज्यन्ते — अ, ए, ऐ.
[11] भोगी — अ, ए; योगो — आ, ई, उ, ऊ, ऋ.
[12] तिष्ठन्ति — ऊ.
[13] चात्राप्यव्यक्त० — ई, उ, ए.
[14] गुणानामप्युप० — अ.
[15] ०मचलं भूयो — मु, उ, ऊ, ऋ.
[16] चलन्ती — ऐ
[17] अत्र 'पुनः' इत्यधिकम् — आ, ई, उ, ए.
[18] चशब्दो नास्ति — ऊ, ऋ.
[19] अत्र 'भूत्वा' इत्यधिकम् — ऊ, ऋ.
[20] पुनः पुनश्चलति — आ, इ, ई, उ, ऐ.
[21] यावच्छ्रीकण्ठच० — अ, आ, ई, उ, ए; याव-च्छ्रीकण्ठ० — इ, ऐ; यावच्छ्रीकण्ठं — ऋ.
[22] 'अथ महाप्रलयः' इति नास्ति — ऋ.
[23] यान्ति — मु, उ.

तदव्यक्तमेवं[1] [2]श्रीकण्ठवर्षसहस्रे पूर्णे मायायां [3]लीयते । **क्रमादिति** [4]स्वकारणकलाक्रमेण ।।

अथेदानीं [5]भुवनेशानां का वार्तेत्युच्यते — 'लुप्तायासमदा' इत्यादि ।

**[6]लुप्तायासमदा रुद्राः क्षेत्रिणश्च विचेतसः ।।५३।।**
**[7]सुषुप्तकरणाः सन्तः [8]प्रतीक्षन्ते निशाक्षयम् ।**
**[9]प्राप्ते चाहर्मुखे पत्युरनन्तेशस्य धीमतः ।।५४।।**
**विस्फूर्जन्ति स्वकार्येषु [10]भोगासक्ता मदातुराः ।**

[11]तदानीं हि तत्त्वसर्गस्यापि सूक्ष्मदेहात्मनः समुपसंहृतत्वात् प्रलयकेवलित्वेनैव [12]अशुद्धभुवनेशाः[13] [14]क्षेत्रज्ञाश्च महाप्रलयनिशान्तं [15]यावद्वर्तन्ते । पुनश्च परमेश्वरसंबन्धिनि **अहर्मुखे प्राप्ते** योऽसौ [16]भगवतानन्तेशोऽन्यो नियुज्यत [17]इत्युक्तः, तस्य कार्ये तत्त्व[18]भुवनादिके स्वकर्मानुसारेण भोगान्भुञ्जते ।।

[19]अथ किं [20]सर्वं जगद् वह्नौ [21]शलभबृन्दवद् मायायामेव [22]प्रलयं यातीति[23] । नेत्युच्यते — 'ये यत' इत्यादि ।

**ये [24]यतो [25]विसृता भावाः [26]सविकाराः सपुद्गलाः ।।५५।।**
**ते तत्रैव [27]प्रलीयन्ते नान्यत्र मुनिपुङ्गव ।**

यथा हि मायातोऽवान्तरप्रकृति[28]कलादिद्वारेण सर्गः प्रोक्तो जगतः, तथैव संहारो नान्यथेति ।

---

[1] 'एवं इत्यत्र 'एव' इति दृश्यते — आ, ई, उ, ऋ, ऐ.
[2] श्रीकण्ठेन वर्ष० — ऊ, ॠ.
[3] लीयन्ते — इ.
[4] स्वकारणकालक्रमेण — ऊ; स्वकारणक्रमेण — ॠ.
[5] गुणभुवनेशानां — ए.
[6] लुप्तायां — उ, ओ.
[7] सुषुप्तकिरणाः — मु, ओ.
[8] प्रतीक्षन्तो — मु, ओ.
[9] प्राप्तं — ऊ, ॠ.
[10] भोगसक्ता — मु, ओ.
[11] तदानीं विहितत्वसर्ग० — ऐ.
[12] अशुद्धा भुव० — ऊ, ॠ.
[13] ०भुवनेशानेशा— ऐ.
[14] क्षेत्रज्ञश्च — ऊ, ए.
[15] यावद्वर्तते — ऊ.
[16] भगवाननन्तेशान्यो — अ, ए; भगवाननन्तेशोऽन्यो — आ, इ, ई, उ, ऐ.
[17] मतङ्ग० विद्या० ५. १० उ०— १५ वृत्तौ ।
[18] 'भुवनादिकेषु स्व० — इ; ०भुवनादिके स्वस्व० — ॠ.
[19] अत्र 'अन्ये' इत्यधिकम् — ए.
[20] सर्वजगद् — ऊ, ॠ.
[21] शलभवन्माया० — ऐ.
[22] प्रलयमेवं याति — आ, ई, उ.
[23] 'इति' शब्दो नास्ति — इ, ऊ, ॠ, ए, ऐ.
[24] यत्र — मु.
[25] विसृताभासः — मु.
[26] सविकारास्तु पुद्गलाः — मु, ओ; विकारास्ते तु पुद्गलाः — उ.
[27] विलीयन्ते — ओ.
[28] ०कालादि० — ऊ.

एवं ये पुद्गला यत्र भोक्तृतया [1]स्वकर्मतो वर्तन्ते, [2]ते तत्कर्मणामपि भेदेनैव मायायां लय इति [3]नैकाधिकरणाः । [4]न पुनः [5]सर्गकाले[6] भोगसंकर इत्यर्थः ॥

अथ मायायास्तदानीमपि सत्त्वात् [7]तद्भुवनेश्वराणां का वार्तेत्युच्यते — 'मायोर्ध्वच्छदने' इत्यादि ।

**[8]मायोर्ध्वच्छदने रुद्रा [9]व्याख्याता [10]गहनादयः ॥५६॥**
**[11]ग्रन्थीशा [12]दीपवद्भान्ति [13]ध्यानासक्ताः सदैव हि ।**
**[14]येऽप्यधश्छदनाधस्तात्स्फुरन्माणिक्यमौलयः ॥५७॥**
**मायान्ध[15]कारगहने [16]खद्योता इव निर्मलाः ।**

[17]ये [18]मायाया ऊर्ध्वाधिश्छदनयोर्ग्रन्थौ च **स्फुरन्माणिक्यमौलयो रुद्राः** [19]पूर्वमुक्ताः, तेऽपि तस्यामवस्थायां सर्वतत्त्वभुवनोपसंहारात् प्रलयकेवलित्वेन[20] वर्तन्ते । तद्भुवनानामपि तदानीमुपसंहार इत्यर्थः ॥

कथं तर्हि [21]ते "[22]खद्योता इव निर्मला" [23]इत्युक्तम् । तत्रोच्यते —'ये वर्गा' इत्यादि ।

**ये वर्गा भुवनेशानां रुद्राणाममितात्मनाम् ॥५८॥**
**शक्तयस्तान्विजानीयात्क्रीडतः परमेष्ठिनः ।**
**एवं [24]ह्यनादि[25]मध्यान्ता दानादानादिवर्त्मना ॥५९॥**
**अक्षीणविभवाः सूक्ष्माः [26]सर्वतत्त्वविसर्पिताः ।**

शक्तिपक्षाश्रयेणैवमुक्तम्[27] । न त्वणुपक्षाश्रयेण[28] । भुवनेशाधि[29]ष्ठायिकाः शिवशक्तयस्तदानीं

---

[1] सहकर्मतो — अ; 'स्व' इति नास्ति — आ, ई, उ; सकर्मतो — ए.
[2] 'ते' इति नास्ति — ऊ, ऋ.
[3] नैकाधिकारिणाः न पुनः — अ; नैकाधिकारिणास्ततः पुनः — आ, इ; नाधिकरणैक्यात्पुनः — ऊ, ऋ; नैकाधिकारिणां न पुनः — ए; नैकाधिकारणाः न पुनः — ऐ.
[4] नकारस्य स्थाने 'ततः' इति दृश्यते — ई, उ.
[5] सर्गादिकाले — इ.
[6] अत्र नकारोऽधिकः — आ, इ, ई, उ, ए.
[7] 'तद्' इति नास्ति — इ, ई, उ, ए, ऐ.
[8] मायाधश्छदने — ऊ, ऋ.
[9] मायाख्या — उ.
[10] गगनादयः — मु, उ, ओ.
[11] ग्रन्थीशो — उ.
[12] दीपवद्भाति — उ; द्वीपवद्भान्ति — उ० पाठान्तरम् ।
[13] ध्यानाशक्ताः — मु, उ; ज्ञानासक्ताः — ओ.
[14] येऽप्यूर्ध्वच्छदनेऽवस्थाः — ऊ, ऋ.
[15] ०कारे गहने — ओ.
[16] खद्योत इव — ओ.
[17] 'ये' इति नास्ति — अ, ऋ.
[18] मायामौर्ध्वाध० — अ.
[19] मतङ्ग० विद्या० ८. ७९ उ० — ८९.
[20] अत्र एवकारोऽधिकः — ए.
[21] 'ते' इति नास्ति—अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.
[22] मतङ्ग० विद्या० २५. ५८ पू०.
[23] इत्युक्ता — ऐ.
[24] चानादि० — ऊ, ऋ.
[25] ०मध्यान्तं — मु, उ,
[26] सर्पितास्तत्त्वसर्पिते — मु, उ, ओ.
[27] ०पक्षाश्रयेण तदुक्तम् — ऊ, ऋ.
[28] अत्र एवकारोऽधिकः — अ, ऊ.
[29] ०ष्ठायकाः — ऊ, ऋ.

**निर्मलाः खद्योता इव** [1]भान्तीत्युक्ता [2]इत्यविरोधः । एवं च [3]प्रवाहतोऽनादिमध्यान्त[4]युक्तमायादि[5]भुवनेशाधिष्ठातृत्वाच्छक्तयोऽप्यादिमध्यान्तनिरस्ताः सिद्धा इत्यध्याहारः ॥

[6]यद्येवमशुद्धत्वात्तेषां मायागर्भाधि[7]कारिणां [8]प्रलयोत्तरं का वार्तेत्युच्यते — 'प्रलये' इत्यादि ।

**प्रलये [9]ये यथा पूर्वं संहृतास्ते तथैव हि ॥६०॥**
**भोगिनो भोगसिद्धयर्थं शरीराणि विशन्ति हि ।**

[10]क्षेत्रज्ञवत्तेऽपि च कर्मयुक्ता एवोपसंहृता इति [11]पुनरहर्मुखे **भोगसिद्धयर्थं शरीराणि** प्राप्नुवन्तीत्युक्तं [12]कनिष्ठसंहारे ॥

अथ शुद्धानां [13]मायागर्भेश्वराणां तदानीं कीदृशी स्थितिरित्युच्यते — 'प्रलयोऽन्योऽपि' इत्यादि ।

**प्रलयोऽन्योऽपि [14]शुद्धानां [15]भूयो येन गतज्वराः ॥६१॥**
**नाप्नुवन्ति जराजन्ममरणार्णवमायतम् ।**

तदानीं हि तेषां [16]प्रागुक्तेभ्यो [17]मायागर्भाधिकारिभ्यः अन्येषाम् **अन्यः** [18]एवापुनरावृत्तिलक्षणः **प्रलयः**। यतस्ते [19]**भूयः** [20]अत्यन्तं शुद्धाः, ततो **नाप्नुवन्ति** पुनः [21]संसारमिति ॥

के [22]पुनस्ते [23]इत्युच्यते — 'शुद्धाध्वपतयः' इत्यादि ।

**शुद्धाध्वपतयो देवा मन्त्राश्चामोघशक्तयः ॥६२॥**
**न सीदन्ति न [24]लुप्यन्ति [25]पीड्यन्ते न च केनचित् ।**
**समाप्य [26]स्वाधिकारांस्ते प्रयान्ति पदमुत्तमम् ॥६३॥**

---

[1] भान्तीत्युक्तत्वादित्यविरोधः — ए.
[2] इति विरोधः — ऋ.
[3] प्रवाहभुवनेशनामतोऽनादिमध्यान्त० — ऊ; प्रवाहभुवनेशानामतोऽनाद्यमध्यान्त० — ऋ.
[4] ०युक्तं मायादि० — इ.
[5] ०भुवनेश्वराधिष्ठातृ० — आ, इ, ई, उ, ए, ऐ.
[6] यदेव० — ए.
[7] ०कारिणा — आ; ०काराणां — ऋ.
[8] 'प्रलयोत्तरं' इत्यारभ्य 'मायागर्भेश्वराणां' इत्यन्तं नास्ति — ए; प्रलयानन्तरे — अ, आ, इ, ई, उ, ऊ, ऐ.
[9] च — मु, उ, ओ.
[10] क्षेत्रज्ञवन्तोऽपि कर्म० — ऊ, ऋ.
[11] पुनरहर्मुखभोग० — ई, उ.
[12] मतङ्ग० विद्या० २५. ४५ उ०, ४६ पू० वृत्तौ ।
[13] माया तद्गर्भे० — ऊ, ऋ.
[14] सिद्धानां — ऊ, ऋ, ओ.
[15] भूयोभूयो गतज्वराः — ऊ, ऋ.
[16] मतङ्ग० विद्या० ८. ७९ उ०—८९.
[17] यथागर्भाधि० — ऊ, ऋ.
[18] एव पुनरावृत्ति० — आ, इ, उ, ऋ, ए.
[19] 'भूयः' इत्यत्र 'रुद्रादयः' इति दृश्यते — इ.
[20] अत्यन्ताशुद्धाः — आ; अत्यन्तशुद्धाः —ई, उ.
[21] संहारमिति — ए.
[22] पुनस्तदुच्यते — इ.
[23] इत्युच्यन्ते — ऊ, ऋ.
[24] लुप्यन्ते — ऊ, ऋ.
[25] न च पीड्यन्ति केनचित् — मु, उ, ओ.
[26] स्वाधिकारं ते — ओ.

**शुद्धाध्वपतयः** अनन्तादिविद्येशाः, **देवास्तु** मायागर्भाधिकारिणः श्रीकण्ठादयः [1]'पूर्वं शिवनियुक्तत्वेन प्रतिपादिताः, **मन्त्राश्च** [2]इत्येते। यस्माद् **अमोघशक्तयः** निर्मलाः, क्षीणकर्मत्वाच्च **न केनचित्** कर्मणापि अवसादादिकं त्रयं [3]नीयन्ते; तस्मात् **ते** स्वाधिकारमायासर्गादि[4]पञ्चविधं कृत्यं [5]परिसमाप्य **उत्तमं पदं** परां मुक्तिं युगपद्गच्छन्तीति [6]दर्शितं [7]प्राक् ।।६२–६३।।

अथ तदानीं [8]'बिन्दुतत्त्वभुवनेश्वराणां [9]प्रागुक्तानां सद्योजातादीनां कीदृशी स्थितिरिति। तत्रोच्यते — 'अन्योऽपि हि' इत्यादि।

**अन्योऽपि हि लयस्तेषां यदा मन्त्रतनुः शिवः ।**
**[10]पदात्पदं निवृत्त्यादिशान्त्यन्तं यच्चतुष्टयम् ।।६४।।**
**[11]वहन् प्रयात्यथायाति [12]तथा तेऽप्यनुवर्तिनः ।**
**[13]तच्चित्तास्त्यक्तकलुषा विचेष्टन्ते पदात्पदम् ।।६५।।**

**तेषाम्** [14]अस्मात् [15]प्रागुक्ताल्लय[16]द्वयाद् **अन्यः** एव तदानीं **लयः**। योऽशुद्धाधिकारिवन्न संसारहेतुः। [17]नाप्यनन्तादिवदपुनरावृत्तिहेतुः। किं तु [18]**यदा** सदाशिवभट्टारको निवृत्त्यादिभुवनपञ्चकं **पदात्पदम्** उपसंहरन्, शिवतत्त्वं **प्रयाति आयाति** च ततः [19]पुनस्तदेव **पदात्पदम्** [20]उपचारयितुमित्युक्तं [21]पतिपदार्थप्रकरणे। [22]तदैवं [23]सद्योजातादयोऽपि लयसर्गौ भजन्त इत्युक्तो [24]विचित्रः प्रलयः।। ६४–६५।।

---

[1] मतङ्ग० विद्या० २३. १२ उ० वृत्तौ।
[2] इत्यन्ते — इ, ऐ.
[3] नीयते — अ, इ; 'नीयन्ते' इत्यत्र 'न तेषां' इति दृश्यते — ऐ.
[4] 'पञ्चविधं कृत्यं परिसमाप्योत्तरं पदं' इत्यत्र 'पञ्चविधकृत्यपरिसमाप्तौ' इति दृश्यते — अ, आ, इ, ई, उ, ए, ऐ.
[5] परिसमाप्योत्तरं पदं परमां मुक्तिं — इ.
[6] दर्शितः — आ.
[7] मतङ्ग० विद्या० ५. ९ उ० — १५ वृत्तौ।
[8] 'बिन्दुतत्त्व' इत्यारभ्य 'सद्योजातादीनां' इत्यन्तग्रन्थस्य स्थाने 'अधिकारावस्थस्य' इति दृश्यते — ऐ.
[9] 'प्रागुक्तानां' इति नास्ति — अ, आ, इ, ई, उ, ए; मतङ्ग० विद्या० ३. २१ पू०–३० वृत्तौ
[10] पदात्पदनिवृत्त्यादौ — उ.
[11] रमति प्रत्ययातीतः — मु० पाठान्तरम्; परं प्रया० — ऊ, ऋ; हरन् प्रया० — ओ.
[12] तथाप्येवानु० — मु; तदा तेऽप्यनु० — उ, ऋ, ओ.
[13] तन्मनास्त्यक्त० — उ; तन्मतास्त्यक्त०—ओ.
[14] मध्यात् — अ, इ, ऋ, ऐ.
[15] मतङ्ग० विद्या० २५. ६० उ–६२ पू० वृत्तौ।
[16] ०वर्गाद् —आ; ०द्वन्द्वाद् — ई, उ; ०तत्त्वाद् — ए.
[17] ना पुनरनन्तादिवदपुनरा० — अ; नाप्यनादि यः पुनरा० — इ; नाप्यनन्तादिवत्पुनरा० — ए.
[18] यदा शिवभट्टारको — अ; यथा शिवभट्टारको — अ, इ, ई, उ, ए, ऐ.
[19] पुनस्तदैव — ऐ.
[20] उपरचयितु० — अ, ए; उपचरयितु० — इ, ऐ; उच्चारयितु० — ई, उ.
[21] मतङ्ग० विद्या० ३. २३ उ० — ३५; ४. २ —५ पू० वृत्तौ।
[22] तथैव — आ, इ, ऊ, ऋ, ए; तदेव — ई, उ.
[23] अत्र 'तथैव' इत्यधिकम् — ऐ.
[24] विचित्रप्रलयः — अ, आ, ई, उ, ऊ, ऋ, ए, ऐ.

भूमिशब्देनेह [1]भूलोक एवोच्यते। न तु [2]तदेकदेशः। यथा संहितान्तरेषूक्तं [3]'भूर्लोकोऽयं सप्तपाताल:' [4]इति। भूरादेर्लोकत्रयस्य [5]पातालादिभ्यः पृथक्संख्यया [6]वक्ष्यमाणत्वादिति ॥६८–७१॥

[चत्वारिंशदधिकशतं नरकभुवनानि, कूष्माण्डभुवनं च]

[7]पातालेभ्यस्त्वधः — 'विमानकोटयः' इत्यादि।

**[8]विमानकोटयोऽधस्तान्नरकाणां [9]व्यवस्थिताः।**
**अष्टाविंशतिविख्याताः पापकर्मरतात्मनाम् ॥७२॥**
**भुवनानां शतं तत्र [10]चत्वारिंशच्च नामभिः।**
**तदहं कीर्तयिष्यामि [11]श्रृणुष्वैकमना मुने ॥७३॥**

चत्वारिंशत्समधिकशतसंख्येषु [12]नरकभुवनेष्वन्तः, [13]**विमानानां** निर्माणानां नरकविभागलक्षणानां **कोटयः** अष्टाविंशतिः याः, तास्तद्भुवनशुद्धयैव [14]दीक्षया शोध्या इति, भुवनान्येवात्र क्रमेणोच्यन्ते ॥७२–७३॥

[ द्वात्रिंशन्नरकभुवनानि[15] ]

'रौरवम्' इत्यादि।

**[16]रौरवं प्रथमं तत्र [17]महारौरवमेव च।**
**कालसूत्रमिति ख्यातं भुवनं [18]पापकर्मणाम् ॥७४॥**
**अङ्गार[19]निचयस्तस्मात्कुम्भी[20]पाकः सुदुःसहः।**

[1] भूर्लोक — आ, ई, उ, ऊ, ए.
[2] तदेकदेशकम् यथा — अ, आ, ई, उ, ए, ऐ; तदेकः यथा — इ.
[3] भूलोकोऽयं — अ, आ, इ, ई, उ.
[4] इत्यादि — ऐ.
[5] अत्र 'सप्त' इत्यधिकम् — आ.
[6] मतङ्ग० विद्या० २४. ६–१८ वृत्तौ।
[7] पातालेभ्योऽप्यधः — ऊ, ऋ.
[8] समान० — उ.
[9] व्यवस्थितम् — ओ.
[10] चत्वारिंशत्तु — मु, उ.
[11] श्रृणुष्वेकमना मुने — मु, उ; श्रृणुष्वैकाग्रमानस — ऊ, ऋ; श्रृणुष्वैकमनाधुना — ओ.
[12] 'नरक' इति नास्ति — अ.
[13] विमाननिर्माणानां — अ, ऐ; विमाननिर्माणात् —इ.
[14] दीक्षायां शोध्या इति — अ, आ, ई, उ, ऊ, ऋ; दीक्षाशोध्यमिति — इ.
[15] 'रौरवम्, महारौरवम्, कालसूत्रम्, अङ्गारनिचयः, कुम्भीपाकः, क्षुराधारः, लोहदण्डः, असृङ्मेदः, पूतिपूर्णः, क्रकचच्छेदः, अस्थिभङ्गः, विट्पूर्णः, वृष्टिः, अम्बरीषः, क्षुत्पिपासः, उष्णः, शीतः, संजीवनः, पद्मः, महापद्मः, त्रपुलेपः, असिपत्रवनम्, पङ्कः, तप्तलाक्षः, पूतिमांसः, निरुच्छ्वासः, उच्छ्वासः, युग्माचलः, कूटशाल्मलिः, वैतरणी, कृमिनिचयः, अवीचिः' इति द्वात्रिंशन्नरकाणि।
[16] रौरवः प्रथमस्तत्र — ऊ, ऋ.
[17] महारौरव एव च — ओ.
[18] पापकर्मिणाम् — ऊ, ऋ.
[19] ०निरयस्तस्मात्कुम्भी० — उ; ०राशिभुवनं कुम्भी० — ऊ, ऋ.
[20] ०पाकश्च दुस्सहः — मु, उ, ओ.

[1]क्षुराधारो महाघोरो [2]लोहदण्डश्च दारुणः ॥७५॥
[3]असृङ्मेदस्तथा [4]पूतिपूर्णोऽतीव भयंकरः ।
[5]क्रकचच्छेदोऽस्थिभङ्गो विट्पूर्णश्च [6]भयावहः ॥७६॥
[7]वृष्टिस्ततोऽम्बरीषश्च क्षुत्पिपासश्च दुःसहः ।
उष्णः [8]शीतश्च [9]नरकस्तथा [10]संजीवनो महान् ॥७७॥
[11]तस्मात्पद्ममहापद्मौ [12]त्रिपुलेपस्तथापरः ।
[13]असिपत्रवनं घोरं ततः [14]पङ्कः [15]सुदारुणः ॥७८॥
[16]तप्तलाक्षोऽपरो [17]नाम्ना [18]पूतिमांसोऽतिभीषणः ।
निरुच्छ्वासस्ततो[19]च्छ्वासस्ततो युग्माचलोऽपरः ॥७९॥
कूटशाल्मलिनामा च नदी [20]वैतरणी तथा ।
[21]कृमीणां [22]निचयो [23]घोरो ह्यवीचिश्च भयंकरः ॥८०॥
[24]अवीचिश्चाम्बरीषश्च रौरवश्चाति[25]दुःखदः ।

[26]एवं [27]रौरवादीन्यवीच्यन्तानि द्वात्रिंशन्नरकभुवनान्यत्र प्रतिपादितानि । तेभ्यो मध्याच्च त्रीणि प्रधानानीति ॥

---

[1] क्षुरधारो — ऊ, ऋ, ओ.
[2] लोकतुण्डश्च — उ; लोहखण्डश्च — ऊ.
[3] अस्त्रं मेद० — मु; अस्रमेद० — ऊ.
[4] पूयः पूर्णोऽतिविषयङ्करः — उ; पूयपूर्णोऽतीव — ऊ, ऋ; पूयापूर्णोऽतीव — ओ.
[5] क्रकचोऽतोऽस्थिभङ्गश्च — मु, उ; करच्छेदोऽस्थिभङ्गश्च — ओ.
[6] भयानकः — ऊ, ऋ.
[7] पृष्टस्ततो — उ; पुष्टिस्ततो — उ० पाठान्तरम्; धृष्टिस्ततो — ऊ, ऋ; वृष्टिस्तथा — ओ.
[8] शीतस्तु — ओ.
[9] नरकास्तत्र — मु; नरकस्ततः — ओ.
[10] सन्दीवनो — ओ.
[11] तस्मात्पद्मो महापद्मो — मु, उ.
[12] त्रिपुलेपस्तथा परः — उ० पाठान्तरम्; त्रपुलेपस्ततोऽपरः — ऊ, ऋ.
[13] असितानलं महाघोरं — मु, उ; असिताममहाघोरं — ओ.
[14] पङ्कं — ओ.
[15] सुदारुणम् — मु, उ, ओ.
[16] तप्तलाक्षापरो — मु, उ, ओ; तप्तलोहपरो — ऋ.
[17] नाम — मु, उ.
[18] पूतिमांसो विभीषणः — उ; पूतिमानतिभीषणः — ऊ, ऋ.
[19] ०च्छ्वासः सप्तयुग्मं महीधराः — उ.
[20] वैतरिणी — मु, उ.
[21] क्रमीणां — मु.
[22] निरयो — उ.
[23] घोरोऽप्यवीची च — मु, उ.
[24] अवीची त्वम्बरीषश्च — मु, उ, ओ.
[25] ०दुःखदम् — ओ.
[26] 'एवं' इति नास्ति — इ, ऐ; 'एवं' इत्यारभ्य 'उच्यन्ते' इत्यन्तं नास्ति — ए.
[27] रौरवादीन्यत्राचिन्त्यानि — अ; रौरवादीन्यपि विचिन्त्य द्वा० — इ; रौरवादीन्यविचिन्तानि — ई, उ; रौरवादीन्यवीचिन्तानि — ऋ.

[1]अथान्यान्यप्ये[2]तदन्तर्भाविनोच्यन्ते —'अष्टभेदाः' इत्यादि ।

**[3]अष्टभेदाः [4]स्मृता ह्येते चतुर्भेदास्तथा परे ॥८१॥**
**ब्रह्महत्यादिभिः पापैर्गुरुद्रोहादिभिस्तथा ।**
**परदाराप[5]हरणैरन्यायैश्चापरैरपि ॥८२॥**
**[6]पात्यन्ते पापकर्माणः क्रूराः क्रूरेण कर्मणा ।**
**दृष्ट्वा सुखभुजो [7]देवान्मानुषांश्चाजुगुप्सितान् ॥८३॥**
**तप्यन्ते पापिनः सर्वे [8]ह्यतस्ते ह्यूर्ध्वदृष्टयः ।**
**[9]देवा ह्यधोदृष्टयस्तु स्वैश्वर्यमद[10]गर्विताः ॥८४॥**

एते [11]तावदवीच्यम्बरीषरौरवास्त्रयो [12]नरकाः प्रधानत्वेन [13]ये प्रोक्ताः, ते प्रत्येक[14]मष्टाभिर्भेदैरवस्थिता इति चतुर्विंशतिर्भवन्ति[15] । अवशिष्टास्त्वेकोनत्रिंशत्संख्याता ये प्रोक्ताः, ते प्रत्येकं [16]चतुर्भेदैः षोडशाधिकं शतं भवन्ति[17] । एवमेतच्चत्वारिंशत्समधिकं शतं नरकाणां शोध्यमिति । [18]एतेभ्यश्चोर्ध्वमध्वसंख्या[19]प्रकरणे कूष्माण्डस्य भुवनं पृथक्संख्याभेदेन वक्ष्यति[20] । न तु पातालेषु [21]हाटकस्येव [22]तदन्तर्भाविनैवेति तदपि भेदेन शोध्यम् ॥८१–८४॥

[ कालाग्निभुवनम् ]

'एभ्योऽधः' इत्यादि ।

**एभ्योऽधः संस्थितो रुद्रः कालाग्निरिति विश्रुतः ।**
**[23]भुवने भुवनेशानैर्वृतो[24]ऽनेकैर्महाबलैः ॥८५॥**

---

[1] अथान्या व्यपेत्य तदन्त० — अ; अथान्यान्यप्येत्य तदन्त० — इ; अथान्यान्यपेत्य तदन्त०—ई, उ; अथान्यान्यपेक्ष्य तदन्त०—ऐ.
[2] ०तदन्तर्भूतभावे० — आ.
[3] अष्टौ भेदाः — मु.
[4] स्मृतास्त्वेते — मु, ओ; स्मृतास्त्वेताः — उ.
[5] ०हरणैर्न्यायैश्चैवापरैरपि — उ.
[6] यान्ति ते — उ; यान्त्यन्ये — ऊ, ऋ; यात्यन्ते — ओ.
[7] देवा मानुषा० — मु, उ; देवान्मानुष्यांश्चाजुगु०—ऊ, ऋ; देवान्मानुषांश्चजुगु०—ओ.
[8] यतस्ते — ऊ, ऋ.
[9] देवाधोदृष्टयस्सर्वे — उ, ओ; सर्वेऽधोदृष्टयो देवाः — ऊ, ऋ.
[10] ०दर्पिताः — मु, उ, ओ.
[11] तावद्दिव्यम्बरीष० — ए.
[12] नरकतः — इ.
[13] 'ये' इति नास्ति — ऊ, ऋ, ए.
[14] ०मष्टभि० — आ.
[15] ०र्भवति — इ, ऐ.
[16] चतुर्भिर्भेदैः — आ, इ, ई, उ, ए, ऐ; चतुर्भेदत्वात् — ऊ, ऋ.
[17] अत्र इतिशब्दोऽधिकः — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[18] एतेभ्य ऊर्ध्वं०—अ; तेभ्यश्चोर्ध्वं०—ऊ, ऋ.
[19] ०प्रकरणे तु ग्राह्यस्य भुवनं — ए.
[20] मतङ्ग० विद्या० २४ .१०.
[21] हाटकस्यैव — अ, आ, इ, ऊ; हाटकस्य प्रस्तावः — मतङ्ग० विद्या० २५. ३१ उ०.
[22] तदन्तर्भाविनेति — इ, ऊ.
[23] भुवनैर्भुवने० — मु, उ.
[24] ०ऽनन्तैर्महा० — ओ.

नरकेभ्यः अधः कालाग्निः [1]स्वभुवने [2]स्थित इति । एवं पृथिवीतत्त्वे सप्तपञ्चाशदधिकं शतद्वयं भुवनानाम् । तेन सह त्रिपर्वपदार्थे चतुष्षष्टयधिकं शतत्रयमिति । तथा हि —

"[3]कालाग्निर्नरकाणां तु चत्वारिंशच्छतं ततः ।
कूष्माण्डः सह पातालैः सप्तभिर्लोकसप्तकम् ॥
रुद्रश्चेत्यण्ड[4]मध्योऽयं ततो रुद्रशतं बहिः ।
स्थानानां द्वे शते क्ष्मैवं सप्तपञ्चाशता [5]युते ॥
[6]पञ्चाष्टकानां द्वात्रिंशत्ततो भूतचतुष्टये ।
[7]तन्मात्रेषु ततः पञ्च [8]विश्वदेवास्ततोऽष्टकम् ॥
पञ्चाष्टकानां शिष्टं यत्सेन्द्रिये गर्व एव [9]तत् ।
[10]स्थिता बुद्धौ [11]ततो देवा अष्टावष्टौ च योगिनः ॥
[12]गुणेषु चाष्टौ क्रोधान्ताः शिखेदाद्याः [13]परास्ततः ।
काले नियतिसंयुक्ते [14]पतद्रुक्प्रमुखास्तथा ॥
अङ्गुष्ठाद्यास्तु रागेऽष्टौ द्वादशैकशिवादयः ।
विद्यायां [15]तु कलातत्त्वे वामाद्याः [16]परतो दश ॥
[17]एवं त्रिपर्वणि प्रोक्तं भुवनानां [18]शतत्रयम् ।
चतुष्षष्टयधिकं तेषु [19]विचित्रा भुवनेश्वराः ॥
शैवाः केचित्तथानन्ताः [20]श्रीकण्ठानुमतास्तथा ।" इति संग्रहश्लोकाः ॥८५॥

अथ व्याख्यातस्य प्रकरणोस्योपसंहाराय व्याख्येयस्य [21]चोपक्रमाय[22] श्लोकः — 'तत्त्वं मया' इत्यादि ।

**तत्त्वं मया ते कथितं धराख्यं समासत[23]स्तत्त्वविधानमार्गैः ।**
**प्रमाणमस्या[24]प्यधुनाभिधास्ये कालेन सार्धं तव विप्रमुख्य ॥८६॥**

---

[1] 'स्वभुवने' इत्यत्र 'भुवने' इति दृश्यते — इ, ऊ, ऋ; स्वभुवनस्थित — आ, ई, उ.
[2] अवस्थित — ऊ.
[3] आकरो न लभ्यते ।
[4] ०मध्यो यः — ए.
[5] युतैः — आ; युता — इ; युताः — ऐ.
[6] 'पञ्चाष्टकानां' इत्यारभ्य 'विश्वदेवास्ततोऽष्टकम्' इत्यन्तं नास्ति — अ, ऊ.
[7] तन्मात्रेति — इ.
[8] विश्वेदेवा० — इ, ऋ, ऐ.
[9] 'तत्' इत्यत्र 'तु' इति दृश्यते — ए.
[10] स्थितं — ऊ, ऋ.
[11] तदा — ऐ.
[12] गुणेष्वष्टौ तदा व्यक्तिः क्रोधाद्याः परतस्ततः — ऊ, ऋ.
[13] परस्ततः — ऐ.
[14] प्रादुर्प्रभृतयस्तथा — अ; पतद्रुप्रभृतिस्तथा — आ; प्रडुप्रभृतयस्तथा — इ, ऐ; तद् प्रभृतिस्तथा—ई, उ; . . . प्रभृतयस्तथा—ए.
[15] कालतत्त्वे तु — इ.
[16] परितो — अ.
[17] 'एवं' इत्यत्र 'इत्येवं' इति दृश्यते — अ.
[18] शतद्वयम् — इ.
[19] विचित्रभुव० — इ, ऐ; विचिता भुव० — ऊ; विदिता भुव० — ऋ.
[20] श्रीकण्ठाः केचिदेव तु — ऊ, ऋ.
[21] चशब्दो नास्ति — आ, ई, उ.
[22] अत्र चशब्दोऽधिकः — अ, आ, ई, उ.
[23] ०स्तत्र विधानमार्गैः — उ; ०स्तत्त्वविमानमार्गैः — ऊ; ०स्तत्त्वविमानमार्गे — ऋ.
[24] ०प्यधुना विवास्ये — मु, ओ.

[1]**धराख्यं तत्त्वं** यथा प्रतिज्ञातं [2]त्रिपर्वपदार्थे [3]तथा [4]समासेन तत्त्वभूतभुवनात्मना **कथितम्** इति [5]व्याख्यातार्थोपसंहारः । [6]अथ व्याख्येयस्योपक्रमः — **प्रमाणमस्यापि** इति अपिशब्दाद् [7]ब्रह्माण्ड-क्रमेण [8]सर्वस्यैवाध्वनः [9]**कालः** प्रलयः । यद्वक्ष्यति[10] —

"कालो नाम मनुष्याणां द्विविधः [11]प्रलयात्मकः ।" इति ।

[12]तेन सह [13]प्रतिपाद्यत [14]इति ॥८६॥

[15]इति [16]श्री[17]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [18]मतङ्ग[19]वृत्तौ [विद्यापादे] त्रिपर्वपदार्थे [20]पृथिवीतत्त्वप्रकरणं [त्रयोविंशं समाप्तम्]

**त्रयोविंशः पटलः**

---

[1] ईश्वराख्यं — अ; धराख्यतत्त्वं — ऊ.
[2] मतङ्ग० विद्या० २. १६ उ०—१७ पू० वृत्तौ
[3] 'तथा' इति नास्ति — आ, ई, उ, ऊ, ऋ, ए, ऐ.
[4] समस्ततत्त्व० — इ.
[5] व्याख्यातस्यार्थस्योप० — ऊ; व्याख्यातस्या-स्योप० — ऋ.
[6] 'अथ' इति नास्ति—अ, आ, इ, ई, उ, ए, ऐ.
[7] ब्रह्माण्डे क्रमेण — इ, ऐ.
[8] अस्यैवाध्वनः—इ, ए; सर्वस्यैवाधुना—ऋ.
[9] कालप्रलयः — ऊ, ऋ.
[10] मतङ्ग० विद्या० २५. २ उ०.
[11] प्रलयात्मनः — इ, ऐ.
[12] 'तेन सह' इत्येतन्नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[13] प्रतिपद्यत — ऊ, ऋ.
[14] इतिशब्दो नास्ति — ऊ, ऋ.
[15] 'इति श्रीभट्ट' इत्येतन्नास्ति — आ, ए, ऐ; 'इति श्री' इत्येतन्नास्ति — ऊ, ऋ.
[16] 'श्री भट्ट' इत्येतन्नास्ति — इ, ई, उ.
[17] 'भट्ट' इति नास्ति — अ.
[18] अत्र 'श्री' इत्यधिकम् — आ.
[19] 'वृत्तौ' इत्यत्र 'प्रवृत्तौ' इति दृश्यते — ऋ.
[20] धरातत्त्व० — ऊ, ऋ.

# चतुर्विंशः पटलः

## अध्वसंख्याप्रकरणम्

**अथाध्वपरि[1]संख्यानं वर्णयिष्ये यथाक्रमम् ।**

**अथेति**[2] त्रिपर्वपदार्थविचारादनन्तरं वक्तव्यतया [3]प्रतिज्ञातं यत् [4]प्रमाणं सर्वस्यैवाध्वनः [5]संख्यानं, [6]मूलसूत्रे च पदपङ्क्तिपदेनार्थादाक्षिप्तम्, [7]असंख्यातस्य [8]पदपङ्क्तित्वायोगात्

"[9]आपः संपरिवेष्टिता दशगुणोच्छ्रायेण [10]क्षिप्त्वोदरे"

इत्यादिभिश्च[11] वाक्यैः सूचितं [12]तत् तावद्वर्ण्यते । **यथाक्रममिति** [13]पृथिव्यादीनां क्रमेण[14]। अतश्च[15] कालः पश्चात् [16]प्रकर[17]णान्तरेणोक्तो भवति । एवं [18]सति [19]नासंबन्धतास्य प्रकरणस्येति ॥

तच्च — 'पार्थिवाणुचतुष्केण' इत्यादि ।

**पार्थिवाणुचतुष्केण [20]त्रुटिरेकाभिधीयते ॥१॥**
**[21]लीक्षा [22]त्रुटिचतुष्केण द्वे [23]लीक्षे कणिका भवेत् ।**
**कणिकानां चतुष्केण [24]सिद्धार्थश्चाभिधीयते ॥२॥**
**सिद्धार्थकचतुष्केण [25]यवमात्राभिधीयते ।**
**[26]यवाष्टकेन विज्ञेयमङ्गुलं मुनिसत्तम ॥३॥**
**[27]अङ्गुलानां चतुर्विंशो हस्त इत्यभिधीयते ।**

---

[1] ०संख्यानां — ओ.
[2] इतिशब्दो नास्ति — इ.
[3] मतङ्ग० विद्या० २३. ८६.
[4] 'प्रमाणं' इति नास्ति — ऊ, ऋ.
[5] संख्यानां — इ.
[6] पूर्वसूत्रे — ऊ, ऋ; मतङ्ग० विद्या० २. १पू०.
[7] असंख्यातपद० — ऊ, ऋ.
[8] पङ्क्तियोगात् — ऋ, ऐ.
[9] मतङ्ग० विद्या० २१. २० पू०.
[10] क्षिप्तोदरे — अ, इ, ऐ; कृत्वोदरे — ऊ; कृतोदरे — ऋ.
[11] चशब्दो नास्ति — ऊ.
[12] 'तत्' इति नास्ति — ऋ, ए.
[13] पृथिव्यादिना — अ, आ, इ, ई, उ, ऊ, ऋ.
[14] अत्र इतिशब्दोऽधिकः — ऊ, ऋ.
[15] चशब्दो नास्ति — ऊ, ऋ.
[16] पञ्चविंशप्रकरणेनोक्तः ।
[17] ०णान्तरेणाभ्युक्तं भवति — ऊ, ऋ.
[18] 'सति' इत्यत्र चशब्दो दृश्यते — आ, इ ई, उ, ऊ, ऋ, ए.
[19] नासंबध्यतास्य — ए.
[20] तुटि० — ऊ, ऋ, ओ.
[21] लक्षं — मु, उ; ऋक्षा — ऊ, ऋ.
[22] तुटि० — ऊ, ऋ, ओ.
[23] लक्षे — मु, उ; ऋक्षे — ऊ, ऋ.
[24] सिद्धार्थं चाभिधीयते — मु, उ; सिद्धार्थक उदाहृतः — ऊ, ऋ.
[25] यवसंज्ञाभि० — मु, उ.
[26] 'यवाष्टकेन विज्ञेयम्' इत्यस्य स्थाने 'चतुर्हस्तं धनुर्ज्ञेयम्' इति दृश्यते — ऊ, ऋ.
[27] चतुर्विंशत्यङ्गुलानां हस्त — ऊ, ऋ.

[1]चतुर्हस्तो धनुर्ज्ञेयः शास्त्रेऽस्मिन्पारमेश्वरे ॥४॥
धन्वन्तरसहस्रेण व्याघाटः समुदाहृतः ।
व्याघाटानां चतुष्केण क्रोश इत्यभिधीयते ॥५॥
क्रोशानां [2]च चतुष्केण योजनं परिकीर्तितम् ।

लौकिकमेवात्र [3]त्रुटयादियोजनान्त[4]संख्यानम् । [5]न त्वपूर्वमिति ॥

अनेन संख्यानेन — 'ब्रह्मणोऽण्डकटाहश्च' इत्यादि ।

ब्रह्मणोऽण्ड[6]कटाहस्य [7]कोटिर्भित्तिः प्रकीर्तिता ॥६॥
कालानल[8]पुरं [9]कोटिस्तज्ज्वाला दशकोटयः ।
तमःशेषं निरालम्बं योजनानां प्रमाणतः ॥७॥
कोटयः [10]पञ्च तस्योर्ध्वं नरकाः संप्रकीर्तिताः ।
एकलक्षोच्छ्रयाः सर्वे [11]द्वात्रिंशदपि सुव्रत ॥८॥
नवतिर्नवलक्षाणि चैकैकस्य [12]यदन्तरम् ।
गत्वा त्रिंशत्सहस्राणि योजनानां [13]तथोपरि ॥९॥
कूष्माण्डभुवनं [14]रम्यं रुद्रस्य नवतिस्तथा ।
नवलक्षाणि [15]चोत्सेधस्तस्मात्पातालसप्तकम् ॥१०॥
नवयोजनसाहस्रमुच्छ्रितानि पुराणि तु ।
सहस्रान्तरितानि स्युर्यावद्भूपृष्ठमागतम् ॥११॥
कालाग्ने[16]र्भूतलं यावत्सर्वमेकत्र पिण्डितम् ।
योजनानां तु पञ्चाश[17]त्कोटयोऽध्वा प्रतिष्ठितः ॥१२॥

तच्च ब्रह्माण्डभित्त्या सह कालाग्नि[18]भुवनज्वालाधूमान्तं [19]सप्तदशकोटयः । ततः, नरकाः प्रत्येकं लक्ष[20]संख्यत्वात्,

"नवतिर्नवलक्षाणि चैकैकस्य यदन्तरम् ।"

---

[1] चतुर्थश्लोकस्योत्तरार्धं पञ्चमश्लोकश्च न दृश्यते — ऊ, ऋ.
[2] तु — ऊ, ऋ, ओ.
[3] तुटयादि० — आ, ई, उ, ऊ, ऋ.
[4] ०संख्यातम् — आ; संख्यानां — ऊ, ऋ.
[5] नकारो नास्ति — अ, इ, ई, उ, ऐ.
[6] ०कटाहश्च — मु, उ.
[7] कोटिस्थौल्येन कीर्तितः — मु, उ; कोटिस्तौल्येन कीर्तिता — ओ.
[8] ०पुटं — ओ.
[9] कोटिमुज्ज्वला — ऊ, ऋ.
[10] तस्य पञ्चार्धं — ऊ, ऋ.
[11] द्वात्रिंशच्चापि — ऊ, ऋ.
[12] तदन्तरम् — ऋ.
[13] ततः परम् — ओ.
[14] दिव्यं — ऊ, ऋ.
[15] चोत्सेधं — ऊ, ऋ.
[16] ०र्भूतले — मु, ओ.
[17] ०त्कोटयोर्ध्वप्रतिष्ठितम् — ओ.
[18] ०भुवनमाज्वाला० — अ, आ, इ, ई, उ, ए, ऐ.
[19] अत्र 'भुवन' इत्यधिकम् — ऋ.
[20] संख्यातत्वात् — आ, ई, उ; संख्या तावन्नवलक्ष्याणि — ऋ; संख्यात्वात् — ए.

इति श्रुत्या च[1], अधोभूमि[2]सहितेनान्तरालद्वात्रिंशता सह द्वात्रिंशत्कोटयः। ताः पूर्वाभिः सप्तदशभिः सहैकोन[3]पञ्चाशद्भवन्ति।

ततः, [4]त्रिंशत्सहस्रिकया भूम्या सह,

> "**कूष्माण्डभुवनं [5]रम्यं रुद्रस्य नवतिस्तथा।**
> **नवलक्षाणि [6]चोत्सेधः**"

इति श्रुतेः सहस्रत्रिंशता युक्तानि नव[7]नवतिलक्षाणि भवन्ति।

ततः पातालसप्तकं [8]प्रत्येकं नवसहस्रोच्छ्रितम्। ततः सहस्रसंख्येन [9]स्वाधःपुटेन अन्तराल[10]सप्तकेन युक्तत्वात् सप्ततिसहस्राणीति; पूर्वोक्तकूष्माण्डसंख्यया सह [11]कोटिर्भवति। ततश्च ब्रह्माण्डभित्तितो भूर्लोकादधो यावत् पञ्चाशत्कोटयो योजनानां भवन्तीति ॥६–१२॥

ततः — 'भूपृष्ठाद्' इत्यादि।

> **[12]भूपृष्ठाद्व्यथाध्वानमाध्रुवान्तं महामुने।**
> **[13]दश पञ्च च संख्याया लक्षाणां नात्र संशयः ॥१३॥**
> **एतल्लोकत्रयं [14]प्रोक्तमत ऊर्ध्वं प्रवर्ण्यते।**
> **स्वर्लोकात्परतोऽध्वा तु[15] योजनानां महामुने ॥१४॥**
> **द्वे कोट्यशीतिलक्षाणां पञ्चभिश्चाप्यथाधिकाः[16]।**
> **[17]उच्छ्रायेण स्थितस्तत्र महर्लोको मुनीश्वर ॥१५॥**
> **अष्टकोट्यन्तरे [18]तस्माज्जनलोकः प्रतिष्ठितः।**
> **[19]द्वादशैव स्मृताः कोट्यो जनादन्यस्तपः स्थितः ॥१६॥**
> **तस्मात्सत्यं विजानीयाद्दश षट् चाप्यतीत्य तु।**
> **दशकोट्यन्तरे तस्माच्छ्रीकण्ठस्य निकेतनम् ॥१७॥**
> **अण्डमप्युच्छ्रितं [20]कोटिर्योजनानां [21]तदूर्ध्वतः।**
> **एतावत्पार्थिवं तत्त्वं शतकोट्युच्छ्रितं [22]मतम् ॥१८॥**

---

[1] चकारस्य स्थाने 'यद्वा' इति दृश्यते — अ.
[2] ०सहितेनान्तरा यद्वा त्रिंशता सह — अ, आ, इ, ई, उ; ०सहितेनान्तरालश्च त्रिंशता सह — ऋ; ०सहितेनान्तरं यद्वा द्वात्रिंशता सह — ए; ०सुतैर्नान्तिरा यद्वा त्रिंशता सह — ऐ.
[3] ०पञ्चाशद्भवति — ऊ, ऋ.
[4] त्रिंशत्सहस्रकया — इ, ऐ; त्रिंशत्सहस्रिकायां — ए.
[5] दिव्यं — इ, ऊ, ऋ, ए, ऐ.
[6] चोत्सेधम् — ऊ, ऋ.
[7] ०नवतिर्लक्षाणि — उ; ०नवतिलक्षणानि — ए.
[8] 'प्रत्येकं' इत्यत्र 'तावत्' इति दृश्यते—ऊ, ऋ.
[9] चाधःपुटेन — आ, इ, ई, उ, ए.
[10] ०सप्तके युक्तत्वात् — इ.
[11] कोटिर्भवन्ति — अ, ऐ.
[12] भूपृष्ठादुच्यतेऽध्वान० — मु, उ, ओ.
[13] भासकं पञ्च संख्याया — मु, उ, ओ.
[14] प्रोक्तं तदूर्ध्वमपि वर्ण्यते — ऊ, ऋ.
[15] ०ऽध्वानं — मु, उ, ओ.
[16] ०प्यथाधिका — आ.
[17] इदमर्धं न दृश्यते — मु, उ, ओ.
[18] तस्माज्जनो लोकः — मु, उ, ओ.
[19] दश द्वे च स्मृताः — मु, उ, ओ.
[20] कोटियोजनानां — मु, उ, ऊ, ऋ.
[21] तथोपरि — मु, उ, ओ.
[22] भवेत् — ओ.

भूरेव पृष्ठं पाताल[1]सप्तकस्येति, तस्माद् **भूपृष्ठाद्** ऊर्ध्वं लोकसप्तकमेकोन[2]चत्वारिंशत्कोटयः । तेभ्य ऊर्ध्वं श्रीकण्ठभुवनं कोटि[3]दशकमित्यूर्ध्वाण्डभित्त्या सह [4]पञ्चाशत्कोटय एव भूमेर्ब्रह्माण्डमिति ॥१३–१८॥

[5]अथाध्वसंख्यानप्रसङ्गेन भूमेर्वैपुल्यसंख्यानमप्युच्यते — 'भूर्लोकस्य' इत्यादि ।

**[6]भूर्लोकस्याप्यथेदानीं प्रमाणमुपवर्ण्यते ।**

[7]अस्या मेरुमवधिं कृत्वा चतुर्ष्वपि दिक्षु संख्योच्यते —

**योजनानां सहस्राणि मेरोरर्धेन [8]पूर्वतः ॥१९॥**
**इलावृतस्यैकदेशः सहस्राणि नवोदितः ।**
**[9]सहस्रं माल्यवांस्तस्माद्योजनानां [10]प्रविस्तरात् ॥२०॥**
**[11]द्वात्रिंशत्तु सहस्राणि भद्राश्वं [12]वर्षकं मुने ।**

[13]तत्र [14]प्रागुक्ताधोवैपुल्य[15]संख्यत्वात्पूर्वेण तावन्मेरुरेवमष्टौ सहस्राणि योजनानाम् । तत इलावृतभागो **नव सहस्राणि** । [16]ततस्तु दक्षिणोत्तरयोः [17]वक्ष्यमाणनिषध[18]नीलाख्यपर्वतद्वयावधिः **माल्यवान्** पर्वतो विष्कम्भात् [19]**सहस्रम्** । ततः परं **द्वात्रिंशत्सहस्राणि** [20]**भद्राश्वं** नाम [21]वर्षं समुद्रान्तमिति [22]पञ्चाशत्सहस्राणि जम्बू[23]द्वीपं पूर्वेण ॥

'पूर्ववद्' इत्यादि ।

**पूर्ववत्पश्चिमेनापि मेरोरर्धं प्रतिष्ठितम् ॥२१॥**
**इलावृतस्यापि तथा [24]माल्यवद्गन्धमादनः ।**
**वर्षं हि केतुमालाख्यं भद्राश्वमिव संस्थितम् ॥२२॥**

---

[1] ०सप्तकमिति — अ; ०सप्तमस्येति — आ, ई, उ.
[2] ०चत्वारिंशत्कोटयः — आ, इ, ई, उ, ऊ, ए.
[3] ०दशकमध्य' इत्यूर्ध्वा० — ऊ, ॠ.
[4] पञ्चाशत्कोटय एवाभूमे० — ऊ; पञ्चाशत्कोटय एव भूमे० — ॠ, ए.
[5] अथशब्दो नास्ति — ऊ, ॠ.
[6] भूलोक० — मु, उ, ओ.
[7] 'अस्याः' इत्यारभ्य 'संख्योच्यते' इत्यन्तं नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[8] सर्वतः — ऊ, ॠ.
[9] सहस्रे — मु.
[10] सहस्रशः — मु; प्रविस्तरः — उ, ओ.
[11] द्वात्रिंशतिसह० — मु, उ, ओ.
[12] वरिषं मुने — ऊ, ॠ.
[13] ततः — अ, आ, इ, ई, उ, ए, ऐ.
[14] मतङ्ग० विद्या० २३. ६४ उ०–६८ पू० वृत्तौ ।
[15] संख्यात्पूर्वेण — अ.
[16] ततो दक्षिणो० — ऊ, ॠ.
[17] निषधपर्वतस्योक्तिः मतङ्ग० विद्या० २४. २३ उ०, २४ पू० । नीलपर्वतस्योक्तिः मतङ्ग० विद्या० २४. २८ पू०.
[18] ०नीलपर्वत० — ऊ, ॠ.
[19] सहस्रतः पुनर्द्वात्रिंश० — इ.
[20] भद्राश्ववर्षं नाम समु० — ऊ, ॠ; भद्राश्वनाम वर्षं समु० — ऐ.
[21] वर्षसहस्रान्त० — इ.
[22] पञ्चाशद्वर्षसहस्राणि — इ.
[23] ०द्वीपः — ऊ, ॠ.
[24] माल्यवान्गन्ध० — मु, उ,.

**पश्चिमेनापि मेरोरर्धं** सेलावृतं सप्तदशसहस्राणि। ततो नीलनिषधपर्वतद्वयावधिरेव गन्धमादनपर्वतो[1] विष्कम्भात् [2]सहस्रम्। ततः **केतु[3]मालाख्यं वर्षं** समुद्रान्तमेव द्वात्रिंशत्सहस्राणीति [4]पञ्चाशत्सहस्राण्येव योजनानामिति ॥२१–२२॥

अधुना तु दक्षिणतोऽपि मानमुच्यते — 'मेरोः' इत्यादि।

**मेरोरिलावृतस्यापि दक्षिणेन तु पूर्ववत् ।**
**निषधस्याचलेन्द्रस्य विस्तारो [5]मुनिसत्तम ॥२३॥**
**योजनानां सहस्रे द्वे [6]तस्माच्च [7]वर्षकं परम् ।**
**[8]हरिनाम्ना च वैपुल्यात्सहस्राणि नवैव तु ॥२४॥**
**[9]हेमकूटोऽचलस्तस्मात्सहस्रद्वयविस्तृतः[10] ।**
**ततः किंपुरुषं नाम विज्ञेयं हरिवर्षवत् ॥२५॥**
**हिमवान्पर्वतेन्द्रस्तु [11]विस्ताराद्धेमकूटवत् ।**
**भारतस्यापि विस्तारो यथा किंपुरुषाह्वये ॥२६॥**

**मेरोः** सेलावृतस्य तदेवात्रापि मानं [12]सप्तदशसहस्राणि योजनानाम्। ततः पूर्वापरसमुद्रान्तस्य निषधपर्वतस्य [13]विष्कम्भः सहस्रद्वयम्। [14]ततो हरिवर्षं तथा [15]दीर्घं[16]विष्कम्भान्नवसहस्राणि। [17]ततो [18]निषधपर्वतवद्दीर्घो हेमकूटपर्वतः सहस्र[19]द्वयमेव विष्कम्भात्। ततस्तथैवायतं किंपुरुषवर्षं विष्कम्भान्नव[20]सहस्राणि। ततो निषधवदवस्थितो हिमवान् विष्कम्भात्सहस्रद्वयमेव। ततो भारतं नाम वर्षमर्धचन्द्राकृत्या समुद्रान्तं नवसहस्राणीत्येवं [21]पञ्चाशदेव सहस्राणि[22] [23]दक्षिणे इति ॥२३-२६॥

'उत्तरेणापि' इत्यादि।

**उत्तरेणापि शैलेन्द्र[24]राजार्धं [25]पूर्ववत् स्मृतम् ।**

---

[1] अत्र अपिशब्दोऽधिकः — ऐ.
[2] सहस्राणि — इ.
[3] ०माल्याख्यं — ए.
[4] पञ्चाशदेवं योजना० — ए.
[5] हेमकूटवत् — मु.
[6] तस्माच्चावर्षकं मतम् — मु, उ.
[7] वरिषं — ऊ, ॠ.
[8] हरिनामसहस्राणि वैपुल्येन तु वेदितम् — मु, उ; . . . सहस्राणि वैपुल्येन नवोदितम् — ओ.
[9] हेमकूटाचल० — मु, उ, ऊ.
[10] ०द्वयवान् स्मृतः — मु, उ, ओ.
[11] विस्तारो हेम० — मु, उ, ओ.
[12] 'सप्तदश' इति नास्ति — अ, आ, इ, ई, उ, ॠ, ए, ऐ.
[13] विष्कम्भसहस्र० — आ, ऐ; विष्कम्भस्य सहस्र० — ऊ, ॠ.
[14] 'ततः' इति नास्ति — अ.
[15] दीर्घं वि० — अ, आ, इ, ई, उ, ऊ, ए, ऐ; द्वयं वि० — ॠ.
[16] विष्कम्भं नव० — इ.
[17] परतो — अ, आ, इ, ई, उ, ए, ऐ.
[18] निषधवद्दीर्घो — अ, आ, ई, उ, ऊ, ॠ, ए, ऐ.
[19] ०द्वयमेवं — आ, ई, उ.
[20] सहस्रवर्षाणि — ॠ.
[21] पञ्चदशैव — ऊ, ॠ.
[22] अत्र 'इत्येवं' इत्यधिकम् — ऐ.
[23] दक्षिणत इति — ऊ, ॠ.
[24] ०राजादर्धस्य पूर्ववत् — ऊ, ॠ.
[25] पूर्ववन्मतम् — ओ.

**[1]तद्वत्त्विलावृतस्यापि प्रमाणं कीर्तितं मुने ॥२७॥**
**नीलो निषधवज्ज्ञेयः पर्वतः [2]पूर्वपश्चिमः ।**
**तस्योत्तरेण [3]रम्याख्यं [4]सहस्रनव[5]संमितम् ॥२८॥**
**तस्माच्च क्षितिभृच्छ्वेतः सहस्र[6]द्वयविस्तृतः ।**
**[7]मानं हिरण्मयस्यापि सहस्राणि [8]नवोदितम् ॥२९॥**
**[9]शृङ्गवानपि [10]विस्ताराच्छ्वेतवत्पर्वतोत्तमः ।**
**[11]उदक्स्थितं शृङ्गवतः कुरुवर्षमिति [12]स्मृतम् ॥३०॥**
**तद्धि भारतवज्ज्ञेयं सर्वमेकत्र पिण्डितम् ।**

[13]मेरोः शैलेन्द्र[14]राजस्यार्धस्य [15]सेलावृतस्य मानं **पूर्ववत्**। ततो [16]नीलपर्वतः पूर्वापरसमुद्रावधिविष्कम्भात् सहस्रद्वयम्। ततो [17]रम्यकं वर्षं तद्वदायतं विष्कम्भात् सहस्राणि नव। ततः श्वेतपर्वतोऽपि[18] विष्कम्भात् सहस्रद्वयम्। ततो हिरण्मयं वर्षं विष्कम्भतो [19]**नव सहस्राणि**। [20]ततोऽपि **शृङ्गवान्** [21]पर्वतो नीलवदायतो विष्कम्भात् [22]सहस्रद्वयम्। ततः परं **कुरुवर्षं** [23]नवसहस्राणीति **उत्तरेणापि** पञ्चाशत्सहस्राण्येव ॥

'लवणार्णवपर्यन्तम्' इत्यादि।

**लवणार्णवपर्यन्तं लक्षमेकं समन्ततः ॥३१॥**
**[24]जम्बूद्वीपस्य विख्यातं तद्बहिर्लवणोदधिः ।**
**[25]द्विगुणस्तद्भ्रमः शाकस्तस्माच्च [26]द्विगुणं पयः ॥३२॥**

---

[1] ततो नीलगिरेश्चापि — मु; तदादीलावृतस्यापि — मु० पाठान्तरम्, उ; तद्वदिलावृतस्यापि — ओ.
[2] पर्वतोत्तमः —मु० पाठान्तरम्, उ० पाठान्तरम्, ओ; पर्वभिश्चितः — ऊ; पर्वं उत्थितः — ऋ.
[3] हर्याख्यं — मु.
[4] सहस्रं नव० — मु, उ.
[5] ०संज्ञितम् — ओ.
[6] ०द्वयसंमितः — ऊ, ऋ; ०द्वयविस्तृतम् — ओ.
[7] हिरण्योऽपि सविस्तारः — मु, उ, ओ.
[8] नवोदितः — मु, उ, ओ.
[9] शृङ्गारानपि — ऊ, ऋ.
[10] विस्तारः श्वेत० — मु, ओ; विस्तारे श्वेत० — उ.
[11] उदक्संस्थं – मु, उ, ओ.
[12] स्थितम् — मु, उ; श्रुतम् — ऊ, ऋ.
[13] 'मेरोः' इति नास्ति — ई, उ.
[14] ०राजादवश्यमिलावृतस्य — ऊ, ऋ.
[15] इलावृतमानं — ऐ.
[16] नीलगिरिः — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[17] रम्यवर्षं — अ, इ, ई, उ, ए, ऐ.
[18] अपिशब्दो नास्ति — इ, ई, उ, ऐ.
[19] नवैव च सहस्राणि — आ, ई, उ; नवैव सहस्राणि — इ, ऐ.
[20] तदपि — इ; तस्मादपि — ऊ.
[21] 'पर्वतो' इत्यत्र 'परं' इति दृश्यते — इ.
[22] सहस्रं द्वयम् — ऐ.
[23] नवतिसहस्राणि — अ.
[24] जम्बुद्वीपस्य — ऊ, ऋ.
[25] द्विगुणस्तु भ्रमः — मु, उ; तत्समो द्विगुणः शाकः — ऊ, ऋ.
[26] द्विगुणः पयः — ऊ, ऋ.

[1]द्वीपाद्द्वीपं द्विगुणितमब्धेरब्धिस्तथैव च ।
[2]मृष्टाम्भोनिधिपर्यन्तं [3]शैलेन्द्रार्धाच्च संख्यया ॥३३॥
कोटिद्वयं योजनानां सार्धं मुनिवरोत्तम ।
लक्षाणां त्रितयं [4]चापि सार्धं [5]विद्धि न संशयः ॥३४॥

[6]ततो वैपुल्या[7]ज्जम्बूद्वीपो [8]लक्षं योजनानाम् । "**तद्बहिर्लवणोदधिः**" इति [9]प्रकृतत्वाल्लक्षमेव । [10]"**द्विगुणस्तद्भ्रमः शाकः**" इति लक्ष[11]संख्याताज्जम्बूद्वीपाद् **द्विगुणः** द्विलक्षः; [12]तस्येव [13]भ्रमः पारिमाण्डल्यं यस्य [14]सः, [15]तथाभूतः शाक[16]द्वीपः । **तस्माच्चेति** सजातीयाल्लवणोदधेर्द्वि[17]गुणः, पयसा क्षीरेणोप[18]लक्षितः [19]समुद्रो द्विलक्ष एव । [20]एतच्चोपलक्षणमेव[21] । [22]"**द्वीपाद्द्वीपं** [23]**द्विगुणितमब्धेरब्धि**[24]**स्तथैव** [25]**च**" इति [26]श्रुतेः । [27]ततश्च [28]शाक[29]द्वीपाद् द्विलक्षादनन्तरं कुश-क्रौञ्चप्लक्षगोमेदपुष्कराः [30]पूर्वनिर्दिष्टाः, [31]अर्धं सप्तमो येषां ते, अर्धसप्तमाश्च ते द्वीपाः, [32]तेषां संख्याः क्रमेण चतुरष्टषोडशद्वात्रिंशच्चतुष्षष्टि[33]लक्षा भवन्तीति, [34]जम्बुद्वीपादारभ्य, [35]अर्धसप्तमद्वीप-

---

[1] इदमर्धं नास्ति — मु, उ, ओ.
[2] दध्यम्भोनिधि० — मु, उ; मृष्टाम्भोदधिपर्यन्तं — ऊ, ॠ.
[3] शैलेन्द्रं चार्धसंख्यया — मु, उ.
[4] वैव — मु, उ, ऊ, ॠ.
[5] वृद्धिर्न — मु, उ.
[6] तदतो — ऊ; 'ततो' इत्यारभ्य 'प्रकृतत्वाल्लक्षमेव' इत्यन्तं नास्ति — ॠ.
[7] ०ज्जम्बुद्वीपो — ऊ.
[8] लक्षयोजनात् — आ, ई, उ; लक्षयोजनम् — इ; लक्षयोजना — ए; लक्षयोजनाम् –ऐ.
[9] प्रकृतित्वा० — ऊ.
[10] द्विगुणस्तद्भूमेः शाकः — अ; द्विगुणस्तावद्भूमौ शाकः — इ; द्विगुणस्थादभ्रमः शाकः — ऐ.
[11] ०संख्याता जम्बू० — इ; ०संख्यानाज्जम्बु० — ऊ, ॠ; ०संख्यातः जम्बू० — ए.
[12] तस्यैव — अ, आ, इ, ई, उ, ए, ऐ.
[13] भूमेः — अ, ऐ; भूमिः — इ.
[14] 'स' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[15] तथाभूतशाक० — अ, ऐ; तथाभूतं — आ, इ, ई, उ, ॠ, ए.
[16] ०द्वीपम् — अ, आ, इ, ई, उ, ए, ऐ.
[17] ०गुणम् — अ, आ, इ, ई, उ, ए, ऐ.
[18] ०लक्षितं — अ, आ, इ, ई, उ, ए, ऐ.
[19] समुद्रद्विलक्षमेव — अ, ई, उ, ए; समुद्रं द्विलक्षमेव — आ, इ; समुद्रद्विलक्षणमेव — ऐ.
[20] तच्चोप० — इ.
[21] ०लक्षणमेतत् — इ; ०लक्षणमेवं — ऊ, ॠ.
[22] द्वीपाद्द्वीपो — अ, आ, इ, ई, उ, ऊ, ॠ, ऐ; 'द्वीपात्' इति नास्ति — ए;
[23] द्विगुणितस्त्वब्धेस्तथैव च — अ, ऐ; द्विगुणितोऽब्धे० — आ, इ, ई, उ, ऊ, ॠ, ए.
[24] ०स्तथा च — आ, ई, उ, ए.
[25] चशब्दो नास्ति — इ.
[26] श्रुतिः — आ, इ, ई, उ, ए, ऐ.
[27] तच्च — ऊ, ॠ.
[28] 'शाक' इति नास्ति — अ.
[29] ०द्वीपो द्विलक्षान्तरं — इ.
[30] मतङ्ग० विद्या० २३. ६५ उ०, ६६ पू०.
[31] 'अर्धं' इत्यारभ्य 'अर्धसप्तमाश्च ते' इत्यन्तं नास्ति — अ, आ, इ, ई, उ, ए, ऐ; अनेन विवरणेन मूले 'अर्धसप्तमद्वीपाः' इति पदघटितमर्धमेकं भाव्यमिति प्रतीयते।
[32] 'तेषां संख्याः' इत्येतन्नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[33] ०लक्षणा — अ; ०लक्षणानि — ऊ, ॠ.
[34] 'जम्बुद्वीपाद्' इत्यारभ्य '०चतुष्षष्टिलक्षा भवन्तीति' इत्यन्तं न दृश्यते — अ, आ, इ, ई, उ, ए, ऐ.
[35] अर्धसप्तद्वीपा द्विलक्षादनन्तरं संख्या पञ्चाशत्सहस्राधिकनवषड्विंशतियुक्ता — ॠ.

संख्या पञ्चाशत्सहस्राधिकषड्विंशति[लक्ष]युक्ता कोटिर्योजनानां भवति । तथा 'अब्धेरब्धिर्द्विगुणितः' इति क्षीरसमुद्राद् द्विलक्षादनन्तरं "दधिसर्पिस्तथेक्षुरससंज्ञकः, मदिरोदस्ततः स्वादुः" इति पूर्वक्रमाधीताः [1]सागराः चतुरष्टषोडशद्वात्रिंशच्चतुष्षष्टिलक्षा भवन्तीति सप्त सागर[2]संख्यापि [3]सप्तविंशति[4]लक्षाधिका कोटिः संपद्यत इति भवति । [5]एवं मेर्वर्धात् [6]स्वादूदं यावद्द्वीपार्णवानां पञ्चाशत्सहस्राधिकत्रिपञ्चाशल्लक्षयुतं कोटिद्वयं संख्येति ॥३१–३४॥

ततोऽनन्तरम् — 'दशकोटिप्रविस्तीर्णा' इत्यादि ।

**दशकोटिप्र[7]विस्तीर्णा स्वादूदात्परतः स्थिता ।**
**[8]शुद्धहेममयी भूमिर्देवानां क्रीडनाय [9]तु ॥३५॥**
**तद्बहिः पर्वतो नाम्ना लोकालोकः [10]प्रविस्तरात् ।**
**सहस्राणि [11]दश ज्ञेयो योजनानां समन्ततः ॥३६॥**
**[12]कृत्स्नार्णवप्रमाणेन लोकालोकस्य बाह्यतः ।**
**चक्रवत्स तु बोद्धव्यो [13]गर्भोदश्च समुद्रराट् ॥३७॥**
**ततस्तस्मान्महा[14]घोरं तच्चेदानीं प्रवर्ण्यते ।**
**पञ्चत्रिंशत्समाख्याता योजनानां [15]च कोटयः ॥३८॥**
**[16]ऊनविंशतिभिर्लक्षैश्चाधिका[17] व्रतभूषण[18] ।**
**चत्वारिंशत्सहस्रैश्च[19] सर्वमेकत्र पिण्डितम् ॥३९॥**
**सार्धमण्डकटाहेन [20]कोटयोऽर्धेन मेदिनी ।**
**[21]पञ्चाशदन्यत्तद्वत्स्यादर्धं मेरोस्तु पूर्ववत् ॥४०॥**
**एवं कोटिशतं [22]प्रोक्तं पार्थिवं [23]तत्त्वमत्र तु ।**

दशकोटि[24]संख्याता हिरण्मयी देव[25]भूमिः । [26]ततः परतः [27]लोकालोक[28]पर्वतः **सहस्राणि दश**

---

[1] 'सागराः' इत्यारभ्य 'भवन्तीति सप्त' इत्यन्तं नास्ति — ऋ.
[2] संख्यादि सप्त० — इ.
[3] सप्तत्रिंशल्लक्षादिका — ऋ.
[4] लक्षणाधिका — ऐ.
[5] एवमेव स्वादूदकं याव० — इ; एवमेवं द्वादशं स्वादूदकं याव० — ए.
[6] आस्वादूदं — आ, ई, उ; स्वादूदकं — ऐ.
[7] ०विस्तीर्णात्स्वादूदात्पुरतः — ऊ, ऋ.
[8] शुद्धदेहमयी — ऊ, ऋ; शुद्धे हेममयी —ओ.
[9] च — ऊ, ऋ.
[10] प्रविस्तरः — मु, उ, ओ.
[11] स विज्ञेयो — मु, उ.
[12] कृष्णार्णव० — ऊ, ऋ.
[13] गर्भोदधिस्समुद्र० — ऊ, ऋ, ओ.
[14] घोरस्तस्येदानीं–ऊ, ऋ; घोरांस्तच्चेदानीं–ओ.
[15] तु — ऊ, ऋ, ओ.
[16] एकान्तलक्षविंशत्या त्वधिका — ऊ, ऋ.
[17] ०श्चाधिकं — ओ.
[18] ०भूषणम् — ओ.
[19] ०त्सहस्राणि — मु, उ, ओ.
[20] कोटयोऽनेन — ऊ.
[21] पञ्चाशत्तत्त्वमन्यत्स्यादर्धे — मु, उ; पञ्चाशत्तद्वदन्यस्मादर्ध० — ओ.
[22] पूर्णं — ऊ, ऋ, ओ.
[23] तत्र तत्र तु—मु, उ; तत्त्वमेव तत्—ऊ, ऋ.
[24] संख्याताभिर्हिरण्मयीं — इ; संख्याता हिरण्मयीं — ऐ.
[25] ०भूमिं — इ, ऐ.
[26] तत्परतो — ऊ, ऋ.
[27] लोकालोकः पर्वतः — उ.
[28] ०पर्वः — आ.

**योजनानाम्**। ततोऽनन्तरं गर्भोदधिः सप्तविंशति[1]लक्षाधिककोटिः। [2]तत्परतः, [3]तमः चत्वारिंशत्सहस्राधिकैकोनविंशति[4]लक्ष[5]युक्ताः **पञ्चत्रिंशत्** [6]**कोटयः** इति, [7]**अण्डकटाहेन** कोटिसंख्येन [8]सह, [9]**पञ्चाशत्कोटयो**[10] योजनानां [11]भूर्लोकोऽर्धेन[12] भवति। ततो [13]द्वितीयेनार्धेन सह **कोटिशतम्** [14]एतत्पृथिवीतत्त्वमिति॥

एवं प्रासङ्गिकं [15]परिसमाप्य प्रकृते — 'तस्माद्दशगुणं' इत्यादि।

**तस्माद्दशगुणं तोयं तोयादग्निस्ततोऽनिलः॥४१॥**
**अनिलाच्चाप्यथाकाशस्तन्त्रेऽस्मिन्कारणोदिते।**
[16]**आकाशाच्चाप्यहंकारस्तस्माच्च** [17]**परतो महान्॥४२॥**
**महतः परतो ज्ञेयं गुणानां त्रितयं मुने।**
**गुणत्रयात्प्रधानाख्यं तत्त्वं दशगुणोत्तरम्॥४३॥**
**शतोत्तरगुणानि स्युः शेषाण्युक्तानि** [18]**शासने।**
**मायान्तानि** [19]**तु तत्त्वानि** [20]**तदूर्ध्वं तु सहस्रधा॥४४॥**
**यावत्सदाशिवं तत्त्वं तत्परं** [21]**लक्षधा स्थितम्।**
**चतुष्कं शान्तिपर्यन्तं ततोऽमेयः परः शिवः॥४५॥**

पृथिवीतत्त्व[22]भुवनविभागादनन्तरं क्रमेण दशगुणया वृद्ध्या जलादितत्त्वानां [23]प्रागुपवर्णितानि [24]भुवनानि यावदव्यक्तभुवनम्। ततो मायाभुवनान्तं शतगुणया प्रमाणवृद्ध्या। तस्मादूर्ध्वं

---

[1] ०लक्षाधिका कोटिः — ई, उ, ऊ; ०लक्षाधिकं कोटिः — ऐ.
[2] तत्पुरतः—इ; तत्परः—ऊ, ऋ; तत्पुरः—ए, ऐ.
[3] 'तमः' इति नास्ति — आ.
[4] लक्ष्ययुक्ताः — ऐ.
[5] ०युताः — अ, आ, इ, ई, उ.
[6] कोटि — इ; कोटयः — ऊ, ऋ, ए.
[7] अण्डकटाहभेदेन — इ; अण्डकवाटेन —ऊ, ऋ; अण्डह्राटकेन — ए.
[8] सहस्रपञ्चाशत् ० — ऐ.
[9] पञ्चाशत्कोटियोजनविस्तीर्णभूलोकस्तेन भवति — इ.
[10] ०त्कोटयो—आ, ई, उ, ऊ, ऋ; ०त्कोटया—ए.
[11] अत्र 'तत्' इत्यधिकम् — ए.
[12] भूर्लोकार्धेन — ऊ, ऋ.
[13] द्वितीयार्धेन — आ.
[14] अतोऽपि पृथिवी० — ऊ, ऋ; पृथिवीतत्त्वस्य कोटिशतयोजनासंख्यानिरूपणम् — एकस्मिन्नर्धे सप्तार्णवानां सप्तद्वीपानां च संख्या २,५३,५०,००० योजनाः, शुद्धहेममयदेवभूमेः संख्या १०,००,००,००० योजनाः, लोकालोकपर्वतस्य संख्या १०,००० योजनाः, गर्भोदधेः संख्या १,२७,००,००० योजनाः, महाघोरतमः संख्या ३५,१९,४०,००० योजनाः अण्डकटाहसंख्या १.००,००,००० योजनाः, आहृत्य ५०,००,००,०००. एवं द्वितीयार्धे ५०,००,००,०००. एवं १००,००,००,००० कोटिशतं योजनाः।
[15] 'परि' इति नास्ति — आ, ई, उ.
[16] असतोऽतोऽप्यहंकार० — ऊ, ऋ.
[17] परितो — उ, ओ.
[18] सा मुने — ऊ.
[19] च — ऊ.
[20] तेभ्यस्तत्त्वं सहस्रधा — मु, उ, ओ.
[21] लक्षधाधिकम् — मु, ओ; लक्षणाधिकम् —उ.
[22] 'भुवन' इति नास्ति — आ.
[23] मतङ्ग० विद्या० १५–२२ प्रकरणेषु वर्णितानि।
[24] 'भुवनानि' इति नास्ति — अ.

सहस्र[1]गुणया [2]यावत्सदाशिव[3]भुवनम् । तत्परतो [4]लक्षगुणया शान्तिभुवनं यावत् । **अमेयस्तु** परमेश्वर इति ॥४१–४५॥

व्याख्यातस्य [5]प्रकरणस्योपसंहाराय[6] व्याख्येयस्य चोपक्रमाय[7] श्लोकः — 'प्रमाणमुक्तम्' इत्यादि ।

**प्रमाणमुक्तं निखिलं विभागात्**
**[8]तत्त्वाध्वनस्ते मुनिराजमुख्य ।**
**समासतश्चाप्यनुलोममार्गात्**
**[9]प्रदर्श्यते ते विलयो यथावत् ॥४६॥**

[10]**तत्त्वाध्वनः** भुवन[11]विभागक्रमेण **प्रमाणमुक्तम्** इति व्याख्यातार्थोपसंहारः । अथ [12]व्याख्येयस्योपक्रमः **समासतः** यथा सर्गः सृष्टिक्रमेणोक्तस्तथा [13]संहारोऽपि संहार[14]क्रमेणैवोच्यत इति ॥४६॥

[15]इति [16]श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ[17]
[विद्यापादे]अध्व[18]संख्याप्रकरणं [चतुर्विंशं समाप्तम्] ।
**चतुर्विंशः पटलः**

---

[1] गुणतया — ऐ.
[2] यावत्सादाशिवं — ऊ.
[3] ०भुवनान्तात्परतो — इ.
[4] लक्षणगुणया — अ, आ.
[5] व्याख्योपकरणस्योप० — ऐ.
[6] अत्र 'अथ' इत्यधिकम् — आ.
[7] अत्र चशब्दोऽधिकः — अ, आ, इ, ई, उ.
[8] तत्त्वाध्वसंस्थं — मु, उ; तत्त्वाध्वनिस्थं —ओ.
[9] प्रकथ्यते ते — ऊ, ऋ; प्रकथ्यते तैः — ओ.
[10] तत्त्वात्मनः — इ.
[11] ०विभावक्रमेण — अ, ए.
[12] व्याख्येयोपक्रमः — अ, आ, इ, ई, उ, ए, ऐ.
[13] संहारेऽपि – आ.
[14] ०क्रमेणोच्यत इति — आ, ई, उ, ऊ, ऋ, ऐ.
[15] इतिशब्दो नास्ति — ऋ.
[16] 'श्रीभट्ट' इति नास्ति — अ, इ, ई, उ, ए, ऐ; श्रीमन्नारायण० — आ; 'श्री' इति नास्ति — ऊ, ऋ.
[17] अत्र 'त्रिपर्वपदार्थे' इत्यधिकम् — ऋ.
[18] ०संख्यान प्र० — अ, आ, इ, ई, उ, ए. ऐ.

## पञ्चविंशः पटलः

## सकलाध्वसंहारप्रकरणम्

**अथ सर्वाध्वनोऽधस्तात्स्फुरदग्निमरीचिभिः[१] ।**
**कालाग्निरुद्रो भगवाञ्श्रीकण्ठेन महात्मना ॥१॥**
**संस्थापितो[२]ऽधिकारे स्याद्यावत्कालस्य पर्ययः ।**

**अथेति** पतिशक्तिपशुत्रिपर्व[३]पदार्थैः प्रतिपादितात् [४]सर्गादनन्तरं [५]प्राग्वक्तव्यत्वेनोप[६]क्रान्तः, [७]निवृत्तिशब्देन [८]चादिसूत्रप्रतिज्ञातः, [९]पत्युः, गुणानां च प्रकरणे शुद्धाशुद्धभेदेनानेकवाक्याभिहितो विलयो [१०]यः [११]सर्वस्यैवाध्वनः, [१२]स क्रमेणोच्यत इति [१३]नासंबन्धतास्य प्रकरणस्येति । तत्र [१४]पूर्वं यः **सर्वाध्वनोऽधस्तात्** कालाग्निः प्रतिपादितः, [१५]स **श्रीकण्ठेन महात्मनेति** गुणतत्त्वनिवासिना स्वाधिकार[१६]कालान्तं **यावद् अधिकारे**[१७]ऽवस्थापितः ॥

अथ [१८]कः श्रीकण्ठस्य स्वाधि[१९]कारान्तः संहारकालः, को वा मनुष्याणामित्युच्यते — 'कालो-नाम' इत्यादि ।

**कालो नाम मनुष्याणां द्विविधः प्रलयात्मकः ॥२॥**
**उपभोगक्षयादेकः स च देहान्तदर्शनात् ।**
**लक्ष्यते[२०]ऽन्योऽपि संहारो लोकत्रयपरिक्षयात् ॥३॥**

---

[१] ०दग्नेर्मरीचिभिः — मु, उ.

[२] ०ऽधिकारेण याव० — उ, ऊ, ऋ; ०ऽधिकारोऽस्य याव० — ओ.

[३] ०पदार्थेषु प्रति० — अ, आ, ई, उ, ए, ऐ; ०पदार्थे प्रति० — इ.

[४] सर्गानन्तरं — इ.

[५] मतङ्ग० विद्या० २३.८६; प्राग्वक्तव्यो तेनोप० — ऋ; प्राग्वक्तव्येनोप० — ऐ.

[६] ०क्रान्ते — अ.

[७] मतङ्ग० विद्या० २. १.

[८] चादिशब्दे प्रति० — अ.

[९] मतङ्ग० विद्या० पतिप्रकरणे ३. २९–३३; ४. ३२–३४ पू० वृत्तौ; गुणप्रकरणे १६. १४ उ०–१७ पू० वृत्तौ ।

[१०] 'यः' इत्यस्यानन्तरं 'सः' इत्यधिकम् — ऐ.

[११] 'सर्वस्यैवाध्वनः' इत्यत्र 'सर्वस्येति सर्वाध्वनः' इति दृश्यते — ऊ, ऋ.

[१२] संक्रमेणोच्यत — अ, इ, ऊ, ऋ; संहारक्रमेणोच्यत — ऐ.

[१३] संबन्धतास्य — इ; नासंबद्धतास्य — ऊ; संबद्धतास्य — ए; नासंबद्धः संबद्धतास्य — ऐ.

[१४] मतङ्ग० विद्या० २३. ८५.

[१५] 'सः' इति नास्ति — आ, ए.

[१६] ०कालान्तरं — ऐ.

[१७] ०ऽवस्थितः — ए.

[१८] 'कः' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.

[१९] ०कारान्तसंहार० — अ, इ; ०कारसंहार० — ऊ, ऋ; ०कारः संसार० — ऐ.

[२०] ०ऽन्योपसंहारलोकक्षयपरि० — ऊ, ऋ.

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य [1]चोपक्रमाय[2] श्लोकः — 'सकल' इत्यादि ।

**सकलभुवनमार्गे [3]वर्णितो यो लयस्ते**
**प्रतिभुवन[4]निवृत्तिं ये [5]यथा प्राप्नुवन्ति ।**
**तनुकरणविचेष्टानिर्जितान्यादरेण**
**गुरुलघुविनियोगात्सांप्रतं [6]मे निबोध ॥६६॥**

सर्वस्मिन्नेव भुवनमार्गे शुद्धाशुद्धभेदभिन्ने कालाग्न्यादिविन्द्वन्ते [7]प्रलयो वर्णितः । [8]न केवलं तस्मिन्नेव यावत्, ये[9] पतिशक्तिपशुत्रिपर्वाख्याश्चत्वारः पदार्थाः, ते प्रतिभुवनं **यथा** निवृत्तिं **प्राप्नुवन्ति**, सोऽपि सर्वतत्त्वलयो वर्णित इति व्याख्यातार्थोपसंहारः । अथ [10]व्याख्येयोपक्रमः —तनवश्च करणानि च विचेष्टाश्च विचित्रभोग[11]प्राप्तिफलाः, [12]ताभिर्निर्जितानि स्वीकृतानि [13]अधिगतानि **आदरेण** यानि, तानि [14]वक्ष्यमाण[15]फलात् कर्माणि तीव्रमन्दभेदेन कथ्यमानानि [16]अवधार्यन्तामिति वक्ष्यमाणस्य भोगपदार्थस्योपक्रमः ॥६६॥

[17]इति [श्री][18]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां
[19]मतङ्गवृत्तौ [विद्यापादे] सकलाध्वसंहारप्रकरणं [पञ्चविंशं] समाप्तम् ॥
**पञ्चविंशः पटलः**

---

[1] चशब्दो नास्ति — इ, ऊ, ॠ.
[2] अत्र चशब्दोऽधिकः — अ, इ, ए.
[3] वर्णितोऽयं लयस्ते — ऊ, ॠ, ओ.
[4] ०विभूतिं — उ.
[5] यथा वाप्नुवन्ति — मु; यथा चाप्नुवन्ति —उ, ओ.
[6] भो निबोध — मु, उ, ओ.
[7] 'प्रलयो वर्णितः' इत्यारभ्य 'चत्वारः' इत्यन्तं लुप्तम् — ऊ, ॠ.
[8] 'न केवलं' इत्यत्र 'तस्मिन्न केवलं' इति दृश्यते — अ, आ, ई, उ, ए, ऐ; 'तस्मिन् केवलं' इति दृश्यते — इ, ऐ.
[9] अत्र 'वेति' इत्यधिकम् — इ.
[10] व्याख्येयस्योप० — ऊ, ॠ.
[11] ०प्राप्त्यप्राप्तिफलाः — ऊ; प्राप्त्यप्राप्यभोगफलाः — ॠ.
[12] ताभिराजितानि — इ.
[13] अधिकृतानि — आ.
[14] मतङ्ग० विद्या० — २६. ४.
[15] बलात् — अ, आ, इ, ई, उ, ऊ, ॠ, ए, ऐ.
[16] अवधार्यतामिति — ऊ.
[17] इतिशब्दो नास्ति — ऊ, ॠ.
[18] 'भट्ट' इति नास्ति — अ, आ, इ, ई, उ, ऐ.
[19] श्रीमन्मतङ्गवृत्तौ — आ; मतङ्गप्रवृत्तौ — ॠ.

## षड्विंशः पटलः

## भोगपदार्थप्रकरणम्

**अथातः संप्रवक्ष्यामि धर्माधर्मविनिर्णयम् ।**

**अथेति** पत्यादि[1]त्रिपर्वान्तपदार्थचतुष्टयनिर्णयादनन्तरं [2]धर्माधर्माख्यस्य भोग[3]पदार्थस्य निर्णयं वक्ष्यामि। यतो दीक्षादौ [4]स एव [5]शोध्यः। [6]तदाक्षिप्तश्च सर्व एव त्रिपर्वपदार्थस्ततो हेतोरिति। एवं [7]च पदार्थसंबन्धोऽत्र भोगपदार्थः। सौत्रस्तु[8] सोपान[9]पदोपात्तः। वाक्यात्मकस्तु — "[10]धर्मा[11]धर्मविपाकाख्याः" [12]इत्यादिभिरनेकविधः। [13]प्रकरणादिसंबन्धस्तु [14]प्राग्वदेवात्रापीति ॥

नन्वस्यापि[15] भोगपदार्थस्य[16] [17]प्राग् [18]लक्षणमुक्तमेव। सत्यम्। किं तु — 'अधर्माद्' इत्यादि।

**[19]अधर्माद्यद्भवेद्दुःखं धर्माच्चैव सुखं पशोः ॥१॥**
**[20]तत्सामान्यगिरा प्रोक्तं कलातश्चोपसर्पितम् ।**
**वासनावशगं [21]भोक्तुस्तद्विपाकेन [22]सर्पति ॥२॥**
**स भोगो भोगिनां [23]सिद्धस्त्रिविधः कर्मभेदतः ।**
**[24]दानेन भोगवाँल्लोके [25]तच्चेदानीमथोच्यते ॥३॥**

---

[1] ०त्रिपर्वपदार्थ० — ऋ.
[2] धर्माधर्मयोर्भोग० — अ.
[3] ०पदार्थविनिर्णयं — ऊ, ऋ.
[4] 'स' इति नास्ति — ए.
[5] साध्यः — ऊ.
[6] तदाक्षिप्ताश्च — ऊ, ऋ.
[7] चशब्दो नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[8] अत्र 'प्राग्वदेवात्रापीति ननु अस्यापि' इत्येतदधिकम् — इ.
[9] ०पदोक्तः — आ.
[10] मतङ्ग० विद्या० २. १८ उ.
[11] ०धर्मविपाकाख्यः — अ, ऊ, ऋ; ०धर्मा विपाकाख्याः — ई, उ, ए.
[12] इत्याद्यनेकविधः — अ.
[13] पदादि० — अ, ई, उ, ऊ, ऋ; पादादि — आ, ए; पदार्थादि० — इ.
[14] तृतीयप्रकरणोपक्रमे प्रोक्तवत् ।
[15] अपिशब्दो नास्ति — इ.
[16] अत्र अपिशब्दोऽधिकः — ऋ.
[17] मतङ्ग० विद्या० २. १८ उ०—१९.
[18] लक्षणमेत्रोक्तमेव — ऊ, ऋ.
[19] अधर्मादि भवेद् — ऋ; अधर्माद्युद्भवेद् — ओ.
[20] तत्सामान्यं पुरा — ओ.
[21] प्रोक्तं तद्विपाकोऽनु — मु; भोक्तुस्तद्विपाकोऽनु — ऊ, ओ.
[22] सर्पते — मु, ऊ.
[23] सिद्धं त्रिविधं — ओ.
[24] दानवान्भोग० — उ.
[25] तच्च दानमथो० — मु, उ, ओ.

[1]पूर्वं हि सामान्येन धर्माधर्मात्मकं कर्म सुखदुःखफलप्रदमुक्तम्। महाप्रलये च मायाया[2]मव-स्थाय, पुनरहर्मुखे [3]कलादिद्वारेण ततः [4]पुंसो विपाका[5]त्मनैवोपसर्पति । **स** एव [6]च [7]**भोगो** [8]**भोगिनां सिद्धः** [9]इत्येतदप्युक्तम्[10]। **इदानीं** तु स एव **त्रिविधः** इति बहु[11]प्रकारं कर्म[12]वैचित्र्य-मुच्यते। **चशब्दात्** [13]तत्साधनदानादिकमपीति । [14]यतो [15]दानादिना धर्मरूपेण कर्मणा **भोगवान्** पुरुषः **सिद्धो** [16]**लोके** इति; लोकसिद्धे स्मृत्यादिशास्त्रे। यदुक्तम्[17]— "दानेन भोगी [18]भवति" इत्यादि। न [19]त्वतीन्द्रियेऽत्र वस्तुनि लोक[20]स्यान्यतः सिद्धि[21]र्यतः ॥१–३॥

तदेव प्रकार[22]बहुत्वमुच्यते — 'आर्तेभ्य' इत्यादि ।

**[23]आर्तेभ्यश्चार्तिनाशाय वाङ्मनःकायकर्मभिः ।**
**सुखिभ्योऽसुखनाशाय पूर्ववत्त्रिविधं मतम् ॥४॥**

क्षुधाद्युपतप्तेभ्यो दीनानाथेभ्यो यद् आर्तिनाशाय [24]अन्नादिदानं [25]यच्च कर्मणा, [26]अध्यापना-ख्येन [27]वाचः शास्त्र[28]पाठात्मनोऽध्ययनस्य दानं, यच्चापि व्याख्यानकर्मणा शास्त्र[29]विषयाया [30]बुद्धे-र्दानं, यदपि श्रान्त[31]संवाहनादिना कर्मणा स्वशरीरस्य दानं, यच्चापि[32] सुखिभ्यः [33]नार्तेभ्यो [34]द्वि-जातिभ्यः [35]शास्त्रीयेण रूपेण [36]ग्रामसुवर्णादिदानं तत् तावत्, सामान्येन [37]दातुः [38]**असुखनाशाय**

---

[1] मतङ्ग० विद्या० १०. ३, ४ पू० वृत्तौ ।
[2] ०मास्थाय — ऐ.
[3] 'कलादि' इति नास्ति — ऊ, ऋ.
[4] पुंसोऽपि पाका० — आ, इ, ई, उ, ए.
[5] ०त्मनेवोप० — इ, ए.
[6] चशब्दो नास्ति — अ.
[7] 'भोगो' इति नास्ति — इ, ऐ; विभागो — ऊ, ऋ; भोगे — ए.
[8] भोगः सिद्धः — ऊ, ऋ.
[9] इत्येवमुक्तम् — अ, आ, इ, ई, उ, ए, ऐ.
[10] मतङ्ग० विद्या० १०. २ वृत्तौ ।
[11] ०प्रकारः — ऊ, ऋ.
[12] ०वैचित्र्यादुच्यते — ऊ, ऋ.
[13] तत्साधनं धनादिक० — आ; तत्साधनं दाना-दिक० — इ, ए, ऐ; तत्साधनं धातुनादिक० — ई, उ; तत्साधनादिक० — ऋ.
[14] अतो — ऐ.
[15] दानादीनां धर्म०—अ; दानादिधर्म०—आ.
[16] 'लोके इति' इत्येतन्नास्ति — ए.
[17] महाभारते अनुशासनपर्वणि २६९. १३ पू०.
[18] भवतीत्यादिना त्वतीन्द्रिय० — ऊ, ऋ.
[19] त्वतीन्द्रिये त्रिवस्तुनि — इ; त्वतीन्द्रियेऽत्र वस्तुविलोक० — ऐ.
[20] ०स्यान्यथासिद्धि० — अ, आ, ई, उ, ए.
[21] ०र्युतः — ई, उ.
[22] बहु समुच्यते — ए.
[23] आर्तेभ्य आर्ति० — ऊ, ऋ.
[24] अन्नदानं — आ, ए.
[25] यद्वत्कर्मणा — इ; यच्च द्विकर्मणा — ऊ; यच्च द्विकर्मणा — ऋ, ऐ.
[26] व्यापाराख्येन — ऊ, ऋ.
[27] 'वाचः' इत्यत्र चशब्दो दृश्यते — अ; वाचा — ऐ.
[28] ०पाठाद्यात्मनो०—ऊ, ऋ; ०पाठात्मना०—ए.
[29] ०विषयाय बुद्धे०—अ, ऊ; ०विषयबुद्धे० —ऋ.
[30] बुद्धेरादानं — इ.
[31] संवाहादिना — अ, आ, इ.
[32] अपिशब्दो नास्ति — ऋ.
[33] नातुरेभ्यो — ए.
[34] द्विजादिभ्यः — ई, उ.
[35] शास्त्रीयरूपेण — आ, ई, उ.
[36] ग्राससुवर्णादि० — अ, इ, ई, उ, ऋ, ए, ऐ; ग्रासं सुवर्णादि० — आ.
[37] 'दातुः' इति नास्ति — ऐ.
[38] सुखनाशाय दुःखवृत्तये — ए.

दुःखनिवृत्तये पर्यवस्यतीति, तदार्तिनाशादेः प्रयोजनस्य, धनादेर्वा साधनस्य गुरुलघुमध्यभेदेन [1]स्वफलं दुःखविनाशं [2]गुरुलघुमध्यभेदेनैव विदधातीति **त्रिविध**मुच्यते ॥४॥

[3]तदपि त्रिविधम् — 'भूयः' इत्यादि।

**भूयः कालविशेषेण पुनः पात्रविशेषतः ।**
**भिन्नं क्षेत्रविशेषाच्च भूयो वित्तानुसारतः ॥५॥**
**[4]भूयस्तद्गुणभेदेन विभिन्नं बहुधा मुने ।**

[5]पुनः प्रत्येकं ग्रहण[6]संक्रान्त्युत्तरायणादिरूपस्य गुरुलघुमध्यात्मनः कालस्य भेदात्, पात्रस्य च विद्वच्छ्रोत्रि[7]याहिताग्नि[8]लक्षणस्य गुरुलघुमध्यात्मन एव [9]भेदात्, [10]प्रागुक्तपञ्चाष्टकक्षेत्राणां कुरु[11]क्षेत्रादीनामुक्तानामध्वस्थित्यपेक्षया [12]क्षेत्रपतीनां पञ्चाष्टकानां गुरुलघुमध्यभेदेनैव भेदात्, वित्तस्यापि च गुरुलघुमध्यानुक्रमेण[13] भेदात्, तत्रापि च तद्गुणस्य[14] [15]उत्तमाधममध्यभेदेन भेदात् [16]कर्म [17]**बहुधा** [18]अनन्तभेदं भवति ॥

[19]अनुमानेनाप्येतत्कर्मवैचित्र्यं प्रतीयत एव। तथा हि — 'जातिभेदाद्' इत्यादि।

**जातिभेदाद्रूप[20]भेदाच्छौर्यविज्ञानभेदतः ॥६॥**
**सौभाग्य[21]भेदतश्चापि दौर्भाग्येन च लक्ष्यते ।**
**एवं [22]मध्योत्तमा भोगाः [23]कनिष्ठाश्चापि भोगिनाम् ॥७॥**
**[24]न्यूनन्यूनतमानि स्युः [25]श्रेष्ठश्रेष्ठतमानि च ।**
**पशूनामुप[26]सर्पन्ति [27]विभागस्तेऽधुनोच्यते ॥८॥**

---

[1] स्वफलदुःख० — इ, ई, उ, ऐ.
[2] गुरुमध्यलघु० — ऋ.
[3] तदानीं त्रिविधम् — ए.
[4] त्रयस्तद्गुण० — उ.
[5] ततः — इ.
[6] 'संक्रान्ति' इत्यत्र 'संक्रमण' इति दृश्यते—ए.
[7] ०याभिवाद्यलक्ष० — अ, आ, इ, ई, उ, ए; ०याभिधलक्ष० — ऐ.
[8] 'लक्षणस्य' इत्यत्र 'स्य' इत्यारभ्य 'क्षेत्रपतीनां पञ्चाष्टकानां' इत्यन्तं नास्ति–इ, ई, उ.
[9] भेदादेव प्राक्पञ्चाष्टक० — ऊ, ऋ.
[10] मतङ्ग० विद्या० १८–२२ पटलेषु।
[11] ०क्षेत्रादीनामवस्थितापेक्षया — अ, ए, ऐ; क्षेत्रादीनामवस्थितिरपेक्षया — आ.
[12] क्षेत्राधिपतीनां — आ, ए, ऐ; क्षेत्रादिपतीनां — ऊ, ऋ.
[13] अत्र एवकारोऽधिकः — ऊ, ऋ.
[14] अत्र चशब्दोऽधिकः — आ.
[15] धर्म्याधर्म्यमध्यभेदेन — ऊ, ऋ; उत्तमाधमाधममध्य० — ए.
[16] तत्कर्म — ऊ, ऋ.
[17] चाप्यनन्तभेदं — इ; बह्वनन्तभेदं — ऊ, ऋ.
[18] अनन्तभेदा भवन्ति — ए.
[19] अनुमानेनाप्यं तत्कर्म० — ऊ.
[20] ०भेदाच्छूरविज्ञान० — उ.
[21] ०देवताश्चापि — ऊ, ऋ.
[22] मध्योतमाद्भोगात् — मु; मध्योत्तमान् भोगान् — उ, ओ.
[23] कनिष्ठाच्चैव भेदतः — मु, ओ; कन्यसाच्चैव भोगिनः — उ.
[24] न्यूनं न्यून० — मु, ओ.
[25] श्रेष्ठं श्रेष्ठ ० — मु, ओ.
[26] ०सर्पन्ती — ओ.
[27] विभागस्त्वेष चोच्यते — मु; विभागस्तेष्वथोच्यते — उ; विभागस्त्वेष उच्यते —ओ.

[1]तुल्येऽपि [2]मनुष्यदेहलाभे [3]केचिदग्रजन्मानो[4]ऽन्येऽन्त्य[5]जन्मानोऽपरे क्षत्रियादिमध्यजाति-युक्ताः। तेष्वपि केचित् [6]सुरूपाः, [7]परे दुरूपाः। तेषामपि केचिच्छूराः, [8]केचित् कातराः, तदन्ये [9]शूरतराः। तेष्वपि केचिज्ज्ञानिनोऽपरे त्वज्ञा एव। तत्रापि [10]केचित् [11]सुभगाः [12]सुभग-तराः, [13]सुभगतमाः। [14]केचिद्दुर्भगाः, दुर्भगतराः, दुर्भगतमा [15]इत्यादिभेदो **लक्ष्यते**। तेषामपि[16] मध्यात् केषांचिदुत्तमाः, परेषां [17]मध्यमाः, अन्येषां तु **कनिष्ठाः** [18]उपसर्पन्तो [19]**भोगाः** लक्ष्यन्त [20]इति [21]तदन्यथानुपपत्त्यात्र[22] [23]**न्यूनन्यूनतमानि** [24]**श्रेष्ठश्रेष्ठतमानि** च कर्माणि पुंसां **स्युः** इत्यनु-[25]मानेनापि वैचित्र्यं कर्मणां लक्ष्यत इति ॥६–८॥

अधुना कर्मणामेव [26]वैचित्र्यविभाग उच्यते — 'महद्‌भिः' इत्यादि।

> **महद्‌भिः पातकैः क्रूराः परपीडाकरा नराः।**
> **नरकेषु निषीदन्ति तेभ्यः [27]क्षीणैः स्वकर्मभिः ॥९॥**
> **तिर्यग्जातिषु सर्वासु प्रविशन्ति क्रमान्मुने।**

तत्र ये परोपतापनिरताः **क्रूराः**, ते तावत् तैः [28]परोपघातात्मकैः [29]कर्मभिः [30]महापातकैर्नरकं प्रयान्ति। तत्र [31]च दुष्कृतानि भोगतः [32]क्षपयित्वा, **तेभ्यः** नरकेभ्यः [33]**तिर्यग्जातिषु** तैरेव दुष्कृतैः

---

[1] अल्पोऽपि — ए.
[2] मानुष्य० — ऊ, ॠ.
[3] केचिदग्रच० — ऊ, ॠ.
[4] ०ऽन्येभ्यो जन्मानोऽपरोक्षक्रियादि० — ए.
[5] ०जन्मानमपरेषु क्षत्रि० — इ; ०जन्मानः परे — ऊ, ॠ.
[6] स्वरूपाः — अ, इ, ॠ, ऐ; वसुरूपाः — ए.
[7] 'परे' इति नास्ति — आ; परेषु रूपाः — इ; परिचक्ररूपाः — ए.
[8] क्वचित् — ए.
[9] श्रुततराः — अ.
[10] 'केचित्' इत्यत्र 'इतराः' इति दृश्यते — इ.
[11] 'सुभगाः' इति नास्ति — आ, इ, ई, उ, ऊ, ॠ, ए, ऐ.
[12] 'सुभगतराः' इति नास्ति — अ, इ.
[13] 'सुभगतमाः' इति नास्ति — अ.
[14] केचिदन्ये दुर्भगाः — इ, ए; केचिदन्ये तु दुर्भगाः — आ, ई, उ, ऊ, ॠ, ऐ.
[15] इत्यादिर्भेदो — ऊ.
[16] अत्र 'केषांचिद्' इत्यधिकम् — आ, इ, उ, ए.
[17] 'मध्यमाः, अन्येषां' इत्येतन्नास्ति — आ, इ, ई, उ, ऊ, ॠ, ए, ऐ.
[18] उपसंहारतो — अ; उत्पत्तौ — इ; उप-सर्पतो — ऊ, ऐ; उपसर्पन्ते — ए.
[19] 'भोगाः' इति नास्ति — उ, ॠ; 'भोगाः' इत्यत्र 'अत्र भोगाः' इति दृश्यते — ए.
[20] इतिशब्दो नास्ति — अ, ए.
[21] 'तदन्यथा' इत्यारभ्य 'लक्ष्यत' इति इत्यन्तं नास्ति — ॠ.
[22] 'अत्र' इति नास्ति — अ, ऐ.
[23] न न्यूनतमानि — ऊ.
[24] 'श्रेष्ठ' इति नास्ति — ए.
[25] ०मानेन वैचित्र्यमपि कर्मणां — आ, इ, ई, उ, ऊ, ए, ऐ.
[26] वैचित्र्यस्य विभाग० — आ, इ, ई, उ, ऊ.
[27] क्षीणेषु कर्मभिः — मु, उ; क्षीणैस्तु कर्मभिः — ओ.
[28] पदोप० — ए.
[29] 'कर्मभिः' इति नास्ति — आ, ई, उ, ऊ, ॠ, ए, ऐ; कर्ममहापातकै० — इ.
[30] 'महापातकैः' इति नास्ति — ऊ, ॠ.
[31] चशब्दो नास्ति — ऊ, ॠ, ए.
[32] क्षपयितृभ्यो नरकेभ्यः — अ.
[33] तिर्यग्योनिषु — अ, आ, इ, ई, उ, ए, ऐ.

[1]**क्षीणैः** अन्तिमसंस्काररूपैः **प्रविशन्ति**। [2]तत्र च [3]यस्यायुर्भोगप्रदानि कर्मान्तराणि [4]सन्ति, स तैर्धार्यते। नो चेज्जन्मसमनन्तरमेव विपद्यत इति ॥

'नास्तिक्य' इत्यादि।

**नास्तिक्य[5]भावनाविष्टा मूर्खत्वेनातिभूरिणा ॥१०॥**
**स्थावराः कर्मशेषेण [6]तत्तुल्याशयजीविनः।**

[7]ये तु लोकायतिकशास्त्रनिरताः, अश्रुतशास्त्राश्च मूढाः, एतयोश्च दुष्टमित्रयोराशयजीविनो ये, ते त्रिविधा अपि तद्दोषशेषेण **स्थावराः** भवन्ति। [8]प्राग्वच्च वर्तन्त इति ॥

'क्रूरभावोत्कटा' इत्यादि।

**[9]क्रूरभावोत्कटा दीनाश्छिद्रघ्ना न्यायवर्जिताः ॥११॥**
**सरीसृपा भवन्तीह [10]विपाकवशजीविनः।**

ये पुनरत्यन्त[11]दैन्यात्मना [12]स्थिताः, **क्रूरभावेन** युक्ताः, [13]ये च विश्वासादि[14]लक्षणं छिद्रमाश्रित्य [15]विश्वस्तमेव घ्नन्ति, [16]ये च न्यायं [17]बुद्ध्वापि [18]तमुत्सृज्यान्यायेन वर्तन्ते, [19]ते [20]**सरीसृपाः** [21]एव कर्मशेषेण भवन्ति [22]तथैवेति ॥

'वाग्भूरिदोष' इत्यादि।

**[23]वाग्भूरिदोषसंश्लिष्टाः पक्षिणो दुष्टचेतसः ॥१२॥**

---

[1] क्षीणैरिति संस्कार० — ऊ; क्षीणैरित्यसंस्कार० — ॠ.
[2] अत्र — इ.
[3] तस्यायुर्भोग० — आ, इ, ई, उ, ऐ; तस्याः भोग० — ए.
[4] सन्ति चेत्तैर्धार्यते — अ, आ; सन्ति चेत्स— इ, ई, उ, ए, ऐ.
[5] ०भावनाविष्टमूर्ख० — ऊ, ॠ.
[6] तद्दुःखवशजीविना — मु; तद्दुःखवशजीविनः — उ.
[7] 'ये तु' इत्यारभ्य 'वर्तन्त इति' इत्यन्तं नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[8] मतङ्ग० विद्या० २६. ९, १० पू० वृत्तावुक्तवत्।
[9] क्रूरपापोत्कटादीनां — मु; क्रूरभागोत्कटादीनां — ऊ, ॠ; क्रूरभावोत्कटादीनाच्छिद्रघ्नान्न्याय० — ओ.
[10] विपाकाशयजीविनः — ऊ, ॠ.
[11] दैन्यात्मनः — ऊ, ॠ; दैन्यात्मनां — ऐ.
[12] 'स्थिताः' इति नास्ति — इ, ऊ, ॠ, ऐ.
[13] येऽपि च — आ, ई, उ.
[14] ०लक्षणाच्छिद्र० — अ, ऐ; लक्षणच्छिद्र० — आ, इ, ई, उ, ऐ.
[15] विश्वस्तमेवायान्ति — इ.
[16] ये चान्यायं बुद्ध्वा तमुत्सृज्य न्यायेन — ॠ.
[17] बुद्ध्वाप्युत्सृज्य न्यायेन — इ.
[18] तदुत्सृज्या० — ऐ.
[19] 'ते' इति नास्ति — अ, इ, ए.
[20] 'सरीसृपाः' इत्यारभ्य १२ उ० वृत्तौ 'दुष्टाशयाश्च ते' इत्यन्तं नास्ति — इ.
[21] 'एव कर्मशेषेण' इति नास्ति — अ, आ, ई, उ, ए, ऐ.
[22] 'तथैवेति' इति नास्ति — अ, आ, ई, उ, ए, ऐ; मतङ्ग० विद्या० २६. ९ – १० पू० वृत्तावुक्तवत्।
[23] वाग्दोषभूरिसंश्लिष्टाः — मु, उ, ओ.

ये[1] [2]देवगुरुद्विजातिष्वत्यन्तं वाग्दोष[3]युक्ताः, [4]दुष्टाशयाश्च ते [5]सद्य एव कर्मशेषेण [6]**पक्षिणः** भवन्ति ॥१२॥

'पराभिभव' इत्यादि ।

> **पराभिभव[7]सामर्थ्यवासिता मृगजातयः ।**
> **भयदानाच्च विप्रेन्द्र विह्वलाः सुखवर्जिताः ॥१३॥**

[8]ये तु [9]परस्याभिभवे तिरस्कारमात्रे यत् **सामर्थ्यं**, तेन **वासिताः**, न तु [10]परपीडाकराः, [11]ते मृगा भवन्ति। ये तु [12]परेषां भयंकराः, [13]ते नित्यभीताः **सुखवर्जिताश्च** प्राणिषु भवन्ति ॥१३॥

'क्रव्यादा' इत्यादि ।

> **क्रव्यादाः क्रव्यभोक्तारो [14]येऽन्यायेनार्थगृध्नवः ।**

[15]ये तु **अन्यायेनैव**[16] **अर्थगृध्नवः**,[17] ते क्रव्यं मांसम् अदन्तीति **क्रव्यादाः** [18]सिंहादयो भवन्ति[19] ॥

'शौचाचार' इत्यादि ।

> [20]**शौचाचारपरि[21]त्यागाच्छौर्याच्चाति[22]भयंकरात् ॥१४॥**
> **भवन्त्यशुचिभोक्तारः [23]श्वादयोऽन्ये च तत्समाः ।**
> [24]**अन्नपानापहर्तारः क्षुत्पिपासापरिप्लुताः ॥१५॥**

[25]ये तु परित्यक्तशौचा[26]चाराः, येऽपि चातिभयंकराकारेणाशास्त्रीयेण[27] शौर्येण युक्ताः, ते

---

[1] अत्र तुशब्दोऽधिकः — अ, आ, ई, उ, ए, ऐ.

[2] 'देवगुरुद्विजातिष्वत्यन्तं' इत्येतन्नास्ति — अ, आ, ई, उ, ए, ऐ.

[3] 'युक्ताः' इत्यारभ्य १३ श्लोकवृत्तौ 'परस्याभिभवे' इत्यन्तं नास्ति — अ.

[4] 'दुष्टाशयाश्च' इति नास्ति-अ, आ, ई, उ, ए, ऐ.

[5] 'सद्य एव' इति नास्ति — ऊ, ॠ.

[6] 'पक्षिणः' इति नास्ति — आ, ई, उ.

[7] ०सामर्थ्याद्वासिता — ओ.

[8] 'ये तु' इत्यारभ्य 'ते मृगा भवन्ति' इत्यन्तं नास्ति — ऊ; 'ये तु' इत्यारभ्य 'प्राणिषु भवन्ति' इत्यन्तं नास्ति — ॠ.

[9] 'परस्याभिभवे' इत्यत्र 'परस्याभिहेतव' इति दृश्यते — इ.

[10] परिपीडाकराः — अ, आ, ई, उ.

[11] 'ते मृगा भवन्ति। ये तु परेषां भयङ्कराः' इत्येतन्नास्ति — आ, इ, ई, उ, ए, ऐ.

[12] 'परेषां भयंकराः' इत्यत्र 'निष्कारणमेव भयदानशीलाः' इति दृश्यते — ऊ.

[13] 'ते' इत्यत्र 'तेन' इति दृश्यते — आ.

[14] येऽन्यायेन लुलुप्सवः — मु, ऊ, ॠ, ओ.

[15] ये त्वदन्यायेनैवार्थं गृध्नवः — ऐ.

[16] एवकारो नास्ति — ए.

[17] अर्थं गृध्नवः — अ, आ, इ, ई, उ, ॠ ए ऐ.

[18] पिशाचादयो — अ; वृकादयो — ऐ.

[19] अत्र इतिशब्दोऽधिकः — ऊ.

[20] चोराचार० — ऊ, ॠ.

[21] ०त्यागाच्चौर्यादिति० — मु; ०त्यक्ताश्चौर्येणाति०—उ; त्यागाच्छौर्यादिति०—ओ.

[22] ०भयङ्कराः — मु, उ, ओ.

[23] श्वानोऽन्येऽपि च — मु, उ,

[24] अन्नपानापहर्तारः—ऊ; अधुना पाकहर्तारः—ॠ.

[25] येऽपि परि० — इ; ये च परि० — ॠ.

[26] ०चारादयोऽपि चातिभयङ्करेणा० — ऊ, ॠ.

[27] ०णाशास्त्रेण — ऐ.

[1]सृगालादयः **अन्येऽपि च तत्समाः अशुचिभोक्तारः** एव सूकरादयो भवन्तीति । [2]**अन्नपानाप-हर्तारः क्षुत्पिपासा**युक्तास्तेऽपि[3] भवन्तीति[4] ॥१४–१५॥

'गृहदारापहरणैः' इत्यादि ।

**गृहदाराप[5]हरणैर्वस्त्राणां हरणेन च ।**
**परपीडाकरा मूढाः कर्मभिश्चातिदारुणैः ॥१६॥**
**पशवस्ते भवन्त्यत्र परतन्त्राः सदा मुने ।**

ये पुनर्गृह[6]वस्त्रदारापहरणैः परपीडामुत्पादयन्ति, तेऽपि[7] [8]कर्मशेषेणात्यन्तमूढतराः **परतन्त्राश्च पशवो भवन्ति** ॥

'एवं नानाप्रकाराणि' इत्यादि ।

**एवं नानाप्रकाराणि जातिजात्यन्तराणि [9]च ॥१७॥**
**[10]प्राप्य शेषाशय[11]वशान्मानुषा दुःखजीविनः ।**
**जघन्यजातयस्तावन्नित्यं शीतातपादिभिः ॥१८॥**
**[12]तप्यन्ते निःस्व[13]करणा [14]बाध्यमानाः परैर्नरैः ।**
**[15]केचिन्मूढा [16]दुराचारा [17]मूर्खत्वात्पशुवत्स्थिताः ॥१९॥**
**परपीडाशयाविद्धास्तद्विकारप्रदर्शकाः ।**
**[18]छिन्ननासाक्षि[19]कर्णास्यमेढ्रपादादयस्तथा ॥२०॥**
**निसर्गेणैव [20]केचिच्च मूकान्धबधिरा नराः ।**
**[21]पङ्गवो वामनाः कुब्जाः [22]कुणयो [23]व्याधितास्तथा ॥२१॥**
**व्यङ्गिनो नष्टवपुषो भवन्त्यन्येऽनिकेतनाः ।**

---

[1] सृकलादयः — इ
[2] अन्नपानापहर्तारः — ऊ; अन्नपानीयाप० — ए.
[3] ०स्तेषामपि — ऊ, ऋ.
[4] इतिशब्दो नास्ति — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[5] ०हारेण वस्त्राणां — ऊ, ऋ; ०हरणे वस्त्राणां — ओ.
[6] ०वस्तु० — अ, आ, इ, ई, उ, ऊ, ऋ, ए.
[7] अपिशब्दो नास्ति — ऊ, ऋ.
[8] कर्मविशेषेणा० — अ, आ, इ, ई, उ, ए, ऐ.
[9] तु — मु, उ, ओ.
[10] शेषावयवदात्पश्चान्मानुषाद् — उ; शेषाशयवशात्पश्चान्मानुष्या — ऊ, ऋ.
[11] वशा मानुषा — ओ.
[12] तप्यन्ति — ऊ, ऋ, ओ.
[13] ०करुणा — मु, उ.
[14] ०वध्यमानाः — मु, उ.
[15] केचिन्मूढाधमा० — उ; केचिन्मूर्खा — ऊ, ऋ, ओ.
[16] निराचारा — ऊ, ऋ.
[17] मूढत्वाशयवत्स्थिताः — मु, उ; मूर्खत्वाशयवत्स्थिताः — ओ.
[18] छन्न० — उ; भिन्न० — ऊ, ऋ.
[19] कर्णाश्च मेढ्र० — ऊ, ऋ, ओ.
[20] मूर्खाश्च — ऊ, ऋ.
[21] पङ्क्वो — उ.
[22] कुणपोच्छ्वासिनस्तथा — मु, उ; कुणपा व्या० — ऊ, ऋ.
[23] व्याधिनस्तथा — ओ.

**एवं** [1]दुष्कृताशयशेषेण [2]तिर्यगादीन्युक्तानि जात्यन्तराणि **प्राप्य** पुनस्तदाशयसंस्कारेण मनुष्यलोकेऽत्यन्तहीनजातिषु **दुःखजीविनः** अत्यन्तदरिद्रा [3]जडा [4]अज्ञाः क्रूराशयाः [5]पराभिभवभाजो भवन्ति। [6]अङ्गहीना [7]व्याधिताश्च [8]भवन्तीति॥

'सौम्याशयवशाद्' इत्यादि।

> **सौम्याशय[9]वशात्केचित्कदाचित्कालपर्ययात्[10] ॥२२॥**
> **अदातारो [11]दरिद्राश्च [12]यद्यप्युत्तमजातयः।**
> **[13]स्वकाय[14]पोषणायासान्न समर्थाः प्रतर्पितुम् ॥२३॥**
> **[15]एकमप्यतिथिं श्रान्तं किं पुनश्चाति[16]विस्तृतान्।**

ये [17]तु [18]दुष्कृतकारिणोऽपि कस्यचिच्छुभस्याशयस्य [19]सामर्थ्यान्मर्त्यलोके भवन्ति। ते ब्रह्म[20]जन्माप्यवाप्य, [21]अत्यन्तदरिद्राः, कार्पण्यादिदोषयुक्ताश्च भवन्ति। यत् [22]स्वशरीरपोषण[23]मात्र एवोपक्षीणत्वाद् नान्यत् स्वल्पमपि [24]देवगुर्वतिथ्यादिपूजनं कुर्वन्तीति॥

'स्वात्मानं तु' इत्यादि।

> **स्वात्मानं तु पुरस्कृत्य सहस्राणि शतानि च ॥२४॥**
> **तर्पयन्ति महा[25]भागा ये[26]च्युताः स्वर्गगोचरात्।**

ये पुनः **महाभागाः** सुकृत[27]शेषान्मनुष्यलोकं प्राप्ताः, ते[28]ऽत्यन्तमाढ्याः सुखिनः सहस्राणामुपकारका देवाग्निद्विजपूजा[29]रताश्च [30]भवन्तीति॥

---

[1] कर्माशय० — अ, आ, इ, ई, उ, ए, ऐ.
[2] तिर्यगादित्युक्तम् — इ.
[3] मूढाज्ञाः — ऐ.
[4] 'अज्ञाः' इति नास्ति — ऊ, ऋ.
[5] पराभवभाजो — ऊ, ऋ; पराभिभाजो — ऐ.
[6] हीनावयवा व्याधि० — इ; हीनावयवव्याधि० — ऊ, ऋ.
[7] अत्र वाशब्दोऽधिकः — आ, ई, उ, ऐ.
[8] जायन्त इति — ऊ, ऋ
[9] ०वशावेगात् — मु; ०वशाद्वेगात् — उ.
[10] कार्यपर्ययात् — ऋ.
[11] दरिद्रास्तु — ऊ, ऋ, ओ.
[12] यदप्युत्तम० — ऊ, ऋ.
[13] स्वकार्य० — मु, उ, ओ.
[14] ०षोजणायत्ता न–मु उ; ०पोषणाथासा न–ओ.
[15] स्वल्पमप्यतिथिं शान्तं — उ; एकमप्यतिथिश्राद्धं — उ० पाठान्तरम्।
[16] ०विस्तृतात् — उ, ऊ, ऋ.
[17] तुशब्दो नास्ति — अ, आ, इ, ए.
[18] दुष्कृतकर्मकारि० — इ.
[19] सामर्थ्यान्मनुष्य०—आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[20] जन्माप्यात्यन्त० — ऊ.
[21] 'अत्यन्त' इति नास्ति — ऐ.
[22] 'स्व' इति नास्ति — ऐ.
[23] मात्र एवमक्षीण० — ऊ, ऋ; मात्रेण वोपक्षीण० — ए.
[24] अत्र इतिशब्दोऽधिकः — ऐ.
[25] ०भोगा — मु.
[26] च्युता दिवि गोचराः — मु, ओ; च्युता दिवि गोचरात् — उ.
[27] ०शेषेण मनुष्य०–ऊ, ऋ; ०विशेषान्मनुष्य०–ए.
[28] ०ऽत्यन्ताढ्याः — आ, ई, उ, ऊ, ऋ, ऐ; ०ऽत्यन्तदाढर्याः — ए.
[29] ०रतश्च — आ, इ, ई, उ, ऊ, ऋ.
[30] भविष्यन्तीति — अ, आ, इ, ई, उ, ए, ऐ.

'हिंसातो' इत्यादि ।

हिंसातोऽल्पायुषः सन्ति [1]तथासत्यगिरो नराः ॥२५॥
पूति[2]गन्धाः सुवर्णस्य [3]हरणे वाथ कुष्ठिनः ।
ब्रह्मघ्नाः क्षयिणः सन्ति [4]दुश्चर्मा गुरु[5]तल्पगः ॥२६॥
[6]सुरापः श्यावदन्तस्तु [7]केकरः पुष्पतस्करः ।
मूको [8]ज्ञानापहरणे [9]श्वित्री [10]चाग्निप्रदीपकः ॥२७॥
कुब्जः [11]शय्यापहरणे गृहचोरः [12]प्रवासवान् ।
पर[13]दारानुगः षण्डो भ्रूणहा चोदरी भवेत् ॥२८॥
[14]छत्रापहारी [15]खल्वाटः पङ्गुः पत्रापहारतः[16] ।
[17]पिञ्छापहरणाद्व्याधिर्भवेन्नाम्ना [18]भगंदरः ॥२९॥
[19]अश्वादियानापहरणाद् भवेद्वामनको नरः ।
बधिरः कूटसाक्षित्वादृणी [20]द्रव्यानुरूपतः ॥३०॥
[21]दरिद्रः पुस्तकहरः [22]कल्लः क्रोशाद् [23]भवेदिह ।

तेऽपि हि दुष्कृतवशा[24]दायुःक्षयादिभिर्दुष्टफलैरुपभुक्तमहापातकब्रह्महत्यादिशेषफलैश्च क्षयादिभिर्युज्यन्ते[25] । यदुक्तम्[26] —

---

[1] सत्यं सत्यवचो नराः — उ; सन्त्यसत्यगिरो नराः — ऊ; सत्यसत्यगिरो नराः — ऋ.
[2] ०वक्त्राः — मु; ०वक्त्रः — उ.
[3] हरणेनावकुण्ठिताः—मु; हरणेनावकुण्ठितः— उ; हरणेनाथ कुष्ठिनः — उ० पाठान्तरम् ।
[4] दौश्चर्या — मु; दौश्चर्मी — उ; दौश्चर्म्याः — ओ.
[5] ०तल्पगाः — मु, ओ.
[6] सुरापाः श्यामदन्तास्तु — ऊ, ऋ.
[7] केकराः पुष्पतस्कराः — ऊ, ऋ.
[8] ज्ञानापहारेण — ऋ.
[9] चित्रं — ओ.
[10] वापि प्रदीपहा — मु, उ, ओ.
[11] शौर्यापहारेण — उ.
[12] प्रतापवान् — उ, ऊ, ऋ.
[13] ०दारागमाच्छण्डो — ऊ; ०दारानुभवे षण्डो — ओ.
[14] खट्वाङ्गहारः —मु, उ; चित्रापहारी — उ० पाठान्तरम्, ओ.
[15] खट्वाङ्गपङ्गुः — उ.
[16] ०हारकः — ऊ, ऋ, ओ.
[17] इच्छाविहरणा० — उ; पीठापहरणे व्या०— ऊ, ऋ; पिच्छापहरणा० — ओ.
[18] भगन्धरः — मु, उ.
[19] अर्शांसि वा भवन्तीह यानाद्वामनको भवेत् —उ; अर्चांसि वा भवन्तीह यानाद्वामनको भवेत् — ऊ; अर्चांसि वा भवन्तीह भवेद्वामनको नरः — ऋ; अर्शांसि वा भवन्तीह यानाद्वाहनको भवेत् — ओ.
[20] द्रव्यापहारतः — मु, उ.
[21] दरिद्रो वस्त्रहा नग्नः — मु० पाठान्तरम्, उ० पाठान्तरम्, ओ; दरिद्रो वस्त्रापहृतात् — ऊ, ऋ.
[22] कुल्लः — मु, उ, ओ; कलः — ऋ.
[23] ०भवेदिति — उ; भवेत्सदा — ऊ, ऋ.
[24] ०दायुषः क्षया० — आ.
[25] ०र्युज्यते — अ, आ, इ, ऐ.
[26] आकरो न लभ्यते ।

[1]अवीचौ नरके कल्पं [2]वसेयुर्ब्रह्मघातकाः ।
क्षेत्रदारहरा[3]श्चैवासत्याश्च कृतघातिनः ॥" इति ।

उपभुक्तदुष्कृतलिङ्गैरसत्यवचनादिभिः [4]श्यावदन्तादिभिश्च संबध्यन्ते। असत्यवचनादीनामपि ह्यभोग[5]रूपत्वेन स्वतो [6]दुष्कृत[7]रूपत्वतो दुष्टफलान्तरारम्भकत्वान्न [8]कर्मफलत्वम् । अपि तु [9]श्यावदन्तादीनामिवोप[10]भुक्तदुष्कृत[11]चिह्नत्वमस्तीति । **मूको ज्ञानाप[12]हरण इति** शास्त्रापहरणे[13] । यश्चान्यतो[14]ऽधीत्य तदपह्नवेन गुर्वन्तरादध्ययनं प्रकाशयति, सोऽपि [15]ज्ञानापहार्येवेति । [16]**पङ्गुः पत्राप[17]हारत इति** [18]पत्रं वाहनमुच्यते शिबिकाद्येव । [19]अश्वादियानापहरणे वामनत्वस्यात्र[20] श्रुतेः । **ऋणी द्रव्यानु[21]रूपतो दरिद्र इति** यस्य [22]द्रव्यस्यापहरणाद् ऋणी तद्द्रव्यदरिद्र एव [23]भवतीत्यर्थः । [24]**कल्लः [25]क्रोशाद्भवेदिति** [26]साध्वाक्रोशाद्भवेदिति[27] ॥

'एवमादीनि' इत्यादि ।

**एवमादीनि चिह्नानि लोकेऽस्मिन्मुनिसत्तम ॥३१॥**

आदिग्रहणादन्यान्यपि शिवधर्म[28]शास्त्रगीतानि[29], श्रुतिस्मृतीतिहासादिगीतानि च दुष्कृतफलानि ज्ञात्वा [30]दुष्कृतानि परिहरणीयानीत्यर्थः ॥३१॥

---

[1] अशुचौ — ऐ.
[2] वसन्ति ब्रह्म० — आ.
[3] ०श्चैवासत्यानृतवादिनः — अ, आ, इ, ऐ; ०श्चैवासत्यासत्यानृतवादिनः — ई, उ; ०श्चैव सत्याश्चानृतवादिनः — ऊ, ऋ.
[4] श्याम० — ऊ, ऋ.
[5] ०रूपतो न स्वतो — ऋ.
[6] दुष्कररूप० — आ, इ, ई, उ.
[7] ०रूपत्वेन — आ.
[8] कल्पफलत्वम् — ऊ, ऋ.
[9] श्याम० — ऊ, ऋ.
[10] ०भोक्तृदुष्कृत० — ऋ.
[11] चिह्नत्वमपीति — आ, ई, उ, ऊ, ऋ, ए; चिह्नमपीति — इ, ऐ.
[12] ०हारत इति — अ.
[13] ०हारेण — अ, इ, ई, उ.
[14] ०ऽधिगम्य — इ.
[15] ज्ञानापहार्येति — अ; ज्ञात्वापहार्येवेति — ई, उ.
[16] पङ्कुः — अ, आ, इ, ई, उ, ऐ; पात्रः — ए.
[17] ०हरण इति — अ, ऊ, ऋ, ऐ; हरणमिति — इ.
[18] पत्रो — ऊ, ऋ.
[19] अश्वादीनि याना० — ए.
[20] 'अत्र' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[21] रूपतश्च दरिद्र० — ऊ.
[22] द्रव्यापहरणादृणी — अ; द्रव्यापहरणादीनि तद्द्रव्य० — इ.
[23] भवन्तीत्यर्थः — अ.
[24] कल्पः — अ, इ, ऋ, ऐ; कुल्लः — आ, ई, उ; कल्वः — ए.
[25] क्रोशो भवेदिति — ऊ, ऋ.
[26] साधु सात्क्रोशा० — आ; साध्वात्क्रोशा० --इ, ऐ; साध्वन्यात्क्रोशा० — ई, उ; साध्व-सात्क्रोशा० — ए.
[27] 'भवेदिति' इत्येतन्नास्ति — अ, आ, इ, ई, उ, ऊ, ऋ, ए.
[28] शास्त्रगतानि — इ, ऐ; शास्त्रादिगीतानि — ऊ, ऋ.
[29] अत्र अपिशब्दोऽधिकः — आ, इ, ई, उ, ए, ऐ.
[30] दुष्कृतपरि० — ए.

'सुभगः' इत्यादि ।

**[1]सुभगोऽभयदानेन [2]दीर्घायुश्चैव जायते ।**

एवं [3]सुकृतफलान्यपि कर्माणि ज्ञेयानीति ॥

'पूर्तधर्मेण' इत्यादि ।

**[4]पूर्तधर्मेण विभवो लोकेऽस्मिन्पूर्ववत्स्थितः[5] ॥३२॥**
**उपवास[6]यमैः सिद्धा जातिर्द्वीपे[7]ष्वनिन्दिता ।**
**इष्टधर्म[8]वशाल्लोकाः [9]क्रमाद्यज्ञानुरूपतः ॥३३॥**
**यां यां यत्रोपचारेण [10]देवतामुपसर्पति ।**
**तस्य तस्य भवेत्तद्धि [11]भोगस्थानानुरूपतः ॥३४॥**

तत्र [12]पूर्तेन मठसत्रादिकरणात्मना **धर्मेण** [13]**अस्मिन्नेव** भूर्लोके **विभवः** [14]प्रागुक्तोऽतिशयक्रमेणावस्थितः। [15]यमनियमैस्तु द्वीपान्तरेषु शाकादिषु [16]**जातिरिति** [17]जन्म अनिन्दितं सिद्धम्। इष्टस्य तु यागात्मनो ज्योतिष्टोमादेः सामर्थ्याद् [18]भूर्भुवस्सुवर्लक्षणादिलोकान्तरप्राप्तिः सत्य[19]लोकं यावद्यज्ञफलत्वात् । यदुक्तम्[20] —

[21]महायज्ञैश्च [22]यज्ञैश्च [23]ब्राह्मीयं क्रियते तनुः" इति ।

[24]ब्रह्माण्डात्परतस्तु तत्तद्भुवनेश्वराराधनात् तत्तद्भुवन[25]भोक्तृत्वमनुक्रमत इति । यदुक्तम्[26]—

---

[1] सुभगोदयदानेन — उ.
[2] दीर्घायुश्चापि — ऋ.
[3] क्रतुफलान्यपि — ए.
[4] पूर्वधर्मेण — ओ.
[5] स्थितम् — ओ.
[6] ०यमात्सिद्धा — मु, ओ; ०समाधिस्था –उ.
[7] ०ष्वनिन्दिताः — ओ.
[8] ०वशाल्लोकाक्रमा० — मु, ओ; ०वशाल्लोकक्रमा० — उ.
[9] क्रमाद्यज्ञानरूपतः — मु.
[10] देवतामनुसर्पति — ऊ, ऋ.
[11] स्थानं भोगानुरूपतः — ऊ, ऋ.
[12] वृत्तेन मन्त्रादि० — अ; पूर्तेन मन्त्रादि० — इ, ई, उ; पूर्ते मठसत्रादि० — ऊ, ऋ.
[13] अस्मिन्नव — ऐ.
[14] प्रागुक्तेनातिशय० — अ, आ, इ, ई, उ, ए, ऐ; प्रागुक्तेऽतिशय० — ऊ.
[15] 'यमनियमैस्तु' इत्यत्र 'धर्मैस्तु' इति दृश्यते — इ.
[16] 'जातिरिति' इत्येतन्नास्ति — इ.
[17] जन्मादि निन्दितं — आ, ऐ; जन्मानिन्दितसिद्धधर्मः इष्टस्य — इ; जन्मानिर्मितं सिद्धम् — ऊ, ऋ.
[18] भूर्भुवस्स्वर्लक्ष० — ई, उ; भुवस्स्वलक्ष० — ऊ.
[19] ०लोके — इ.
[20] महाभारते आश्वमेधिकपर्वणि ११०. ५३ उ०
[21] महायज्ञैश्च ब्रह्मतनुरिति — इ; महायज्ञश्च यज्ञश्च ब्राह्मया — ऐ.
[22] 'यज्ञैश्च' इति नास्ति — ई, उ.
[23] ब्राह्मी या — अ, आ, ई, उ.
[24] ब्रह्माण्डवत्परतस्तु — इ.
[25] भोगत्वमनु० — अ, आ, ऋ.
[26] मतङ्ग० योग० शिवतत्त्वोपलब्धिपटले एतद्विषयविवरणरूपः सार्धश्लोको (श्लो० ६०, ६१ पू०) दृश्यते। यथा — "सारूपाः शान्तिपृष्ठस्थाः शान्त्यतीताश्रिताश्च ये । सामीप्याः शान्तिनिलया ज्ञानकेवलिनो मताः ॥ सालोक्याश्चैव विद्याङ्गे" इति ।

"तत्र [1]सारूप्यगाः केचित्समीपस्थास्तथापरे ।
[2]सलोकस्थास्तथा चान्ये त्रिधैव भुवनस्थिताः ॥" [3]इति ॥ ३२–३४॥

अत्र मतङ्गमुनिः — 'सुखं वा' इत्यादि।

**मतङ्ग उवाच —**

**सुखं वाप्यथवा दुःखमायुर्मरणमेव च।**
**कर्माशय[4]वशात्प्राप्तं कस्तं शक्नोति वारितुम् ॥३५॥**
**[5]हर्तुं वाप्यथवा [6]दातुं [7]शक्तः स्यादस्वतन्त्रतः ।**
**न [8]कर्तुर्दृश्यते [9]यस्मात्तस्मात्सर्वमनर्थकम् ॥३६॥**

एवं हि पुंसः कर्मपारतन्त्र्येण स्वातन्त्र्याभावा[10]दकर्तृत्वमेव; स्वतन्त्रस्यैव कर्तृत्वात् । यदुक्तम्[11] —

"प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः ।
अप्रवृत्तः [12]प्रवृत्तो वा स कर्ता नाम कारकः ॥" [13]इति ।

**तस्मात् [14]सर्वमनर्थकं[15]** [16]कर्तृत्वाभिधानं [17]पुंसः। यदुक्तम्[18] —

"[19]यां यां यत्रोपचारेण देवता[20]मुपसर्पति"। [21]इति ॥३५–३६॥

अत्र सिद्धान्तः — 'यो येनाशयभावेन' इत्यादि ।

**परमेश्वर उवाच —**

**यो येनाशयभावेन वशीकृत्य [22]शिवेच्छया।**
**नियुज्यतेऽसौ [23]भोगेषु [24]कर्मभ्योऽथ [25]तदात्मिकाम् ॥३७॥**

---

[1] सारूपगाः — आ, ई, उ; सायुज्यगाः — इ, ऊ, ऋ; सूरूपकाः — ए; सारूप्याः — ऐ.
[2] सालोक० — आ; स्वलोक — ऋ; संलोक० — ए.
[3] इतिशब्दो नास्ति — अ, इ, ए, ऐ.
[4] ०वशात्सिद्धं — ऊ, ऋ.
[5] भोक्तुं — मु; भर्तुं — उ; हन्तुं — ऋ; भुक्तं — ओ.
[6] दुःखं — ऋ.
[7] शक्नोति स्यात्स्वतन्त्रतः — उ; शक्नोति स्यात्स्वतन्त्रता — ऊ, ऋ, ओ.
[8] कर्तुं दृश्यते — उ, ओ.
[9] तस्माद्यस्मात्सर्वं० — उ.
[10] ०दकर्तृकत्वमेव — आ, ई, उ.
[11] आकरो न लभ्यते।
[12] प्रवृत्तौ — अ, ऋ, ए.
[13] इतिशब्दो नास्ति — अ.
[14] 'सर्वमनर्थकं' इत्यत्र 'सर्वमन्यं' इति दृश्यते — ए.
[15] अत्र 'इत्यानर्थक्यं' इत्यधिकम् — ऐ.
[16] आत्मकर्तृत्वाभिधानं — अ; कर्त्रभिधानं — इ, ई, उ, ऊ, ऋ' ऐ.
[17] पूर्वं यदुक्तं — अ; पुंसां यदुक्तं — ऊ, ऋ.
[18] मतङ्ग० विद्या० २६. ३४ पू०
[19] यासां यत्रोप० — अ; 'यां यां' इत्येतन्नास्ति — इ; याम्यां यत्रोप० — ऐ.
[20] ०मुपसेव्यति — इ.
[21] इत्यादि — अ.
[22] भवेच्छया — ऊ, ऋ.
[23] भाग्येन — मु; भोगेन —मु० पाठान्तरम्, उ० पाठान्तरम्, ओ.
[24] कर्मस्वथ — मु, उ, ओ.
[25] तदात्मिका — ओ.

**प्राप्नोति [1]वासनां भूयस्तद्विपाकवशात्पुनः ।**
**युज्यते सुखदुःखाभ्यां कर्मणा [2]च तदात्मना ॥३८॥**
**एवं [3]श्रद्धा स्थितिः प्राप्तिः [4]वृद्धिश्चैवोपजायते ।**

न कर्माणि [5]पुंसोऽस्वातन्त्र्यकर्तृत्वे शक्तानि। अपि [6]तु [7]फले। तथा हि—द्विविधः पुरुषः [8]कर्मान्तराक्षिप्त[9]व्यापारः कर्मान्तरानाक्षिप्तव्यापारश्च । तत्र [10]योऽदृष्टकर्मशक्त्यनुसारेणान्यदेव फलं साधयितुं प्रवृत्तोऽन्यदेव [11]फलमासादयेत्; क्षेत्रखननप्रवृत्त इव निधानम्। स एव कर्मान्तराक्षिप्तव्यापार उच्यते। यदाहुः[12]—

"[13]यतो यतः [14]पूर्वकृतस्य कर्मणः
फलं [15]निधानाख्यमिवावतिष्ठते ।
[16]ततस्ततस्तत्प्रतिपादनोन्मुखी
प्रदीपहस्तेव मतिः प्रवर्तते ॥" इति

**एवं [17]श्रद्धा स्थितिः प्राप्तिः** समृद्धिश्च प्रजायते अन्यार्थादपि [18]कर्मणस्तस्येति। न चैतावता [19]कर्मणि तस्मिन्नपि [20]तस्य कर्तृत्वाभावः; प्रयोज्यस्यापि [21]कर्तृत्वादिति ॥

द्वितीयस्तु—'आदरानादराविष्टः' इत्यादि ।

**आदरानादराविष्टः प्रेरितो वाथ केनचित् ॥३९॥**
**[22]भयाद्रागवशात्कर्ता तादृगेवोप[23]लक्ष्यते ।**

---

[1] वासना — ऊ, ॠ, ओ.
[2] वा — मु, उ.
[3] शुद्धा — उ, ऊ, ॠ.
[4] ऋद्धि० — मु, उ; समृद्धिरूप० — ओ.
[5] पुंसां स्वातन्त्र्यं कर्मत्वे कर्तुं शक्तानि — ऊ; पुंसां स्वातन्त्र्यं कर्मत्वे कर्तुं शक्यानि — ॠ.
[6] तुशब्दो नास्ति — आ.
[7] 'फले' इत्यत्र 'फलजनने' इति दृश्यते — ऐ.
[8] कर्मान्तराक्षुब्धव्यापारश्च तत्र — इ;
[9] ०व्यापारोऽकर्मान्तराक्षिप्तव्यापारश्च — अ, आ, ई, उ, ए, ऐ; ०व्यापारोऽनाक्षिप्तव्यापारश्च — ऊ, ॠ.
[10] योऽदृष्टार्थशक्त्यनु० — अ, आ, इ, ई, उ, ए.
[11] फलमासादयन् — इ; फलमासादयत् — ई, उ; फलमासादयति — ऊ, ॠ; फलमापादयत् — ऐ.
[12] आकरो न लभ्यते।
[13] 'यतः' इति नास्ति — इ.
[14] सर्वकृतस्य — अ.
[15] निधानाद्यमिवा० — आ, इ, ई, उ, ए, ऐ; निधानस्थमिवा० — ऊ, ॠ.
[16] ततस्तत्प्रतिपादनो — ए; ततस्तत्तत्प्रतिपादनो — ऐ.
[17] शुद्धा — ऊ, ॠ, ए.
[18] 'कर्मणस्तस्येति' इत्यत्र 'कर्म' इति दृश्यते — अ, ऐ.
[19] स्वकर्मणि — ऊ, ॠ; 'कर्मणि तस्मिन्नपि' इत्येतन्नास्ति — ऐ.
[20] तस्मिन्नस्य कर्तृत्वा० — ऊ, ॠ; तस्यानर्घ्यकर्तृत्वा० — ऐ.
[21] कर्तृत्वादपि — आ.
[22] भयात्पापवशात्कर्ता — उ; भयाभयवशात्कर्ता — ऊ, ॠ.
[23] ०लभ्यते — ॠ.

यस्तु आदरेण [1]तीव्रतरफलगर्व[2]भावात्मना [3]फलविषयेण गर्वेणाविष्टः [4]काम्यस्य कर्मणो ज्योतिष्टोमादेः कर्ता, यश्च अनादरेण फल[5]गर्वाभावात्मनाविष्टः कल्याणमित्रेण [6]**प्रेरितो वा** कर्तव्यमिति कृत्वा नित्यनैमित्तिकात्मनोऽग्निहोत्राष्टकादेः कर्मणः [7]कर्ता, यश्च निषिद्धस्य ब्रह्महननपरद्रव्यापहरणादे[8]र्दृष्टार्थतयैव भयरागादिवशात् कर्ता, स तादृक्कर्तृरूप एव [9]स्वतन्त्रो लक्ष्यत इति, तस्यापि पारतन्त्र्याभावात् कुतः पूर्वोक्तदोषावकाश इति ॥

एवमाक्षेपं परिहृत्य, न केवलं भुवनेश्वराराधनादेव [10]भुवनप्राप्तिः पुंसां, यावत् कर्मान्तरेभ्योऽपीत्युच्यते[11] — 'अनश्नतः' इत्यादि ।

**अनश्नतः [12]खावरणे [13]भृगुपातात्तथानिले ॥४०॥**
**[14]अग्निलोकेऽग्निपाताच्च [15]जलावेशाज्जलात्मके ।**
**प्राप्तिः सामान्यतो दृष्टा [16]विशेषश्चाप्यथोच्यते ॥४१॥**

अनशनादाकाशभुवनं प्राप्यते । [17]भृगुपाताद् वायुभुवनम्, अग्निप्रवेशादग्निभुवनं, [18]जलप्रवेशाज्जलावरणभुवनमिति[19] भुवनप्राप्तिरनशनादेः [20]सामान्येनैवमुक्ता ॥४०–४१॥

अथास्यैव विशेषः कथ्यते — 'दानाद्' इत्यादि ।

**दाना[21]त्सत्यात्सह त्यागाद्व्यवसायाच्च भावितात् ।**
**स्मरणाच्च [22]भवेत्प्राप्तिस्तस्य तस्य तदात्मिका ॥४२॥**
**[23]अनुक्रमाद्यथा पूर्वं [24]विभवश्चोपजायते ।**

---

[1] तीव्रतरकामनात्मना० — ऊ, ऋ; तीव्रतरभावनात्मना — ऐ.
[2] ०भावनाविष्टः — अ.
[3] 'फल' इति नास्ति — ऊ, ऋ.
[4] 'काम्यस्य' इति नास्ति — अ, आ, इ, ई, उ, ए, ऐ.
[5] ०गर्वाभावकल्याण० — अ.
[6] ०मित्रप्रेरितो — ऊ, ऋ.
[7] 'कर्ता यः' इति नास्ति — ऐ.
[8] ०र्दृष्टतयैव — ऐ.
[9] स्वातन्त्र्ये लक्ष्यते — ऊ ऋ.
[10] 'भुवन' इति नास्ति — ऋ.
[11] ०ऽपीष्यते — ऊ, ऋ.
[12] खाद्यावरणे — उ.
[13] मरुत्पातात्तथा० — ऊ, ऋ.
[14] अग्निगोऽग्निनिपाताच्च — उ; अग्निलोके निपाताच्च — ऊ, ऋ.
[15] जलयोगा० — उ; जलपाना० — ऊ; जलपाता० — ऋ.
[16] विशेषाच्चाप्ययो० — मु, उ; विशेषाश्चाप्यथो — ओ.
[17] भृगुप्रपाताद् — ऊ, ऋ.
[18] जले पाताज्जला० — अ.
[19] ०ज्जलभुवनमित्यादि — इ; ०ज्जलावरणभुवनमित्यादि — ऐ.
[20] समानमेवोक्तम् — इ; सामान्येनेयमुक्ता — ऊ, ऋ; सामान्यैरेवमुक्ता — ऐ.
[21] ०त्सत्यवशात्त्यागा० — मु, ओ; ०त्सत्त्ववशात्यागा० — ऊ, ऋ.
[22] भवत्प्राप्ता तस्य — मु; भवेत्प्राप्तस्तस्य — ओ.
[23] अनुक्रमो यथा — ऊ, ऋ.
[24] विभागाच्चोप० — ओ.

**दानाद्** अनशनादिभिः **सह भाविताद्** [1]योजितात्, [2]सत्याद् [3]वा तैः सह भावितात्, **त्यागाद्** वा, [4]यद्वा [5]**व्यवसायात्**, **स्मरणाद्** वा तैः सह [6]भाविताात् **तस्य तस्य** [7]पुंसोऽनशनादि[8]सहकृत-दानादियुक्तस्य [9]**तदात्मिका** [10]इति [11]तद्भुवनकारण[12]तन्मात्रविषयप्राप्तिः, **विभवश्च** भोगो भव-तीति। तत्रापि च [13]अनुक्रमेण **यथा पूर्वम्** अनशनादेः खाद्यावरण[14]क्रमेणोक्तं तथैव दानादि-युक्तस्यापि खादितन्मात्रक्रमेणेत्यर्थः ॥

किं च — 'स्थानं स्याद्' इत्यादि।

**स्थानं स्यात्तीर्थमाहात्म्यात्तच्चैवात्रोदितं पुरा ॥४३॥**

पञ्चाष्टकक्षेत्रमाहात्म्यात् पञ्चाष्टकस्थानं प्राप्यत इत्युक्तं[15] श्रीमद्**बृहद्वाधीचे**ऽपि[16] —

"ये त्यजन्ति [17]स्वकान्प्राणान्स्थानेष्वेतेषु मानवाः।
[18]ब्रह्मणोऽण्डं विनिर्भिद्य यान्ति पञ्चाष्टकं पदम् ॥" इति।

**तच्च** अहंकारतत्त्वान्तमित्युक्त[19]महंकारतत्त्वप्रकरणे[20]। बुद्ध्यादिभुवनप्राप्तिसाधनानि तु [21]बुद्धि-तत्त्व[22]प्रकरण एव दर्शितानीति नेह पुनरुक्तानि[23] ॥

'अग्निहोत्रादिभिः' इत्यादि।

**अग्निहोत्रादिभिः [24]पूर्तैस्तथा चान्द्रायणादिभिः।**
**लोक[25]त्रयेऽपि मोदन्ते विमानस्था यशस्विनः ॥४४॥**

---

[1] 'योजितात्' इति नास्ति — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ.
[2] सत्त्वात् — अ; सत्त्वसामर्थ्याद् — ऊ, ऋ.
[3] 'वा' इति नास्ति — अ; 'वै' इति दृश्यते —आ, ई, उ.
[4] 'यद्वा' इति नास्ति—आ, इ, ई, उ, ए, ऐ, औ.
[5] 'व्यवसायात्' इत्यत्र 'अध्यवसायात्' इति दृश्यते — ऊ; 'अप्यवसायात्' इति दृश्यते —औ.
[6] भाविता तस्य — इ; भाविताः तस्य —ऐ.
[7] पुंसोऽशनादि — इ; पुंसोऽनशादि — ऋ.
[8] ०सहभूतदानादि० — ऊ, ऋ; ०सहकृतं दानादि० — ए.
[9] तादात्मिका — आ, इ, ई, उ, ऊ, ऋ, ऐ.
[10] इतिशब्दो नास्ति — ऊ, ऋ.
[11] 'तद्भुवनकारण' इत्यत्र 'तद्भुवनकारणं' इति दृश्यते — आ, इ, ऐ, औ; 'तत्तद्भुवनकारणा-त्मिका' इति दृश्यते — ऊ; 'तत्तद्भुवनानु-करणात्मिका' इति दृश्यते — ऋ; तत्तद्-भुवनकारणं — ए.
[12] तन्मात्रविषया प्राप्तिः — इ, ई, उ, ए, औ; तत्तन्मात्रा विषया प्राप्तिः — ऊ, ऋ.
[13] अनुक्रमो यथा — ऊ.
[14] ०क्रमेणोक्ता — आ, ई, उ, ए; ०क्रमेणोक्तः — ए; ०क्रमेणोक्ताः — औ.
[15] मतङ्ग० विद्या० १९.३८; २२.१६ वृत्तौ।
[16] आकरो न लभ्यते।
[17] 'स्वकान्' इत्यत्र 'सदा' इति दृश्यते — इ, ऊ, ऐ; 'स च' इति दृश्यते — ऋ.
[18] ब्रह्माण्डान्ते विनिर्भिद्य — आ, ई, उ; ब्रह्मणो भुवि निर्भिद्य — ए.
[19] ०महङ्कारप्रकरणे — ऋ.
[20] मतङ्ग० विद्या० १८. १०९ उ० –११३ पू० वृत्तौ।
[21] मतङ्ग० विद्या० १७. ६५ उ०–१०३ वृत्तौ।
[22] ०प्रकरणवद्दर्शि० — औ.
[23] अत्र तुशब्दोऽधिकः — इ.
[24] पूतैस्तथा — उ, ओ; प्रातस्तथा — ऊ, ऋ.
[25] ०त्रयेण मोदन्ते –ऊ, ऋ; ०त्रयेऽनुमोदन्ते –ओ.

यदुक्तम्[1] — "पूर्तधर्मेण विभवः" इत्यादिना [2]सार्धश्लोकेन, तस्यायमनुवादः ॥४४॥

'शाक्रं पदं' इत्यादि ।

**शाक्रं पदमवाप्नोति [3]यष्ट्वा क्रतुशतं [4]विधेः ।**

[5]**शाक्रं पदम्** अत्र [6]क्रतुशतसाध्यत्वादिन्द्रत्वमेव । स्वर्गलोकादेश्च तत्पदस्य ज्योतिष्टोमाद्यनेकक्रतुसाध्यत्वादित्युक्तम्[7] —

"इष्टधर्म [8]वशाल्लोकाः क्रमाद्यज्ञानुरूपतः ।" इति ॥

अधुना अनवाप्तदीक्षाणां भक्तिश्रद्धाभिः शिव[9]धर्मोदितातिमार्गकर्मनिष्ठानां कुत्रावस्थितिरित्युच्यते — 'या गतिः' इत्यादिना ।

**या गतिः शिवभक्तानां शाठ्येनापि महात्मनाम् ॥४५॥**
**न सा यज्ञसहस्रेण प्राप्यते मुनिपुङ्गव ।**
**किं पुनः श्रद्धया [10]युक्तास्तन्निवेशितबुद्धयः ॥४६॥**
**रुद्रास्ते नात्र [11]संदेहस्तत्र तत्र निवासिनः ।**
**ध्यायिनो ध्यान[12]सामर्थ्याद् भक्ता भक्तिवशान्नराः ॥४७॥**
**केचित्कर्मवशात्सिद्धास्तेऽपि रुद्रास्त्रिशूलिनः ।**
**क्रीडन्त्यमित[13]भोगास्ते [14]नष्टशोका महाधियः ॥४८॥**

परिणतमलस्य भगवति [15]भक्तिर्भवतीत्युक्तम्[16] । केवलमुत्कटपरिपाकाभावाद् यदि [17]नामास्मिन्[18] जन्मनि तस्य दीक्षा [19]न संपन्ना । तथापि[20] मलपरिणतिवशादशेषदुष्कृत[21]प्रतिबन्धतः [22]पूर्वसुकृतगतिरेव तस्य भवति । यदाहुः[23] —

"शुचीनां श्रीमतां गेहे योग[24]भ्रष्टोऽभिजायते ।" इति ।

---

[1] मतङ्ग० विद्या० २६. ३२ उ०–३३.
[2] 'सार्धं' इति नास्ति — इ, ऐ; सार्धेन श्लोकेन — ऊ, ऋ.
[3] इष्टा — ऊ, ऋ; यष्टा — ओ .
[4] विधौ — ऊ, ऋ.
[5] 'शाक्रं पदं' इत्येतन्नास्ति — ऐ, औ.
[6] क्रतुशतं साध्य० — ए, ऐ, औ.
[7] मतङ्ग० विद्या० २६. ३३ उ०.
[8] ०वशान् लोकान् — ऐ.
[9] ०धर्मोदितादिमार्ग० — इ, ई, उ, ऐ, औ; ०धर्मोऽमितातिमार्ग० — ऋ.
[10] विद्धास्तन्निवेशित० — मु, ओ; विद्धास्तन्निवेदित० — ऊ, ऋ.
[11] संदेहो यत्र यत्र — मु, उ, ऊ, ऋ.
[12] सामर्थ्याद्भक्त्या भक्ति० — मु, उ, ओ; सामर्थ्याद्भक्ताद्भक्ति० — ऋ.
[13] ०भोगाढ्या नष्ट० — ऊ, ऋ, ओ.
[14] त्यक्तशोका — उ.
[15] 'भक्तिर्भवतीत्युक्तम्' इत्यत्र 'प्राप्ता' इति दृश्यते — ऊ; 'भक्तिर्भवतीत्युक्तम्' इति नास्ति — ऋ.
[16] मतङ्ग० विद्या० ४. ४४, ४९, ५० वृत्तौ ।
[17] नाम नास्मिन्—ऊ, ऋ; 'नाम' इति नास्ति—ए.
[18] 'अस्मिन्' इत्यत्र 'तस्मिन्' इति दृश्यते —ए.
[19] नकारो नास्ति — ऊ, ऋ.
[20] अपिशब्दो नास्ति — आ, इ, ई, उ, ए, औ.
[21] प्रकृतिबन्धतः — इ, ऐ.
[22] पूर्वं सुकृत० — इ, ऐ; पूर्वः सुकृत०— ए, औ.
[23] भगवद्गीता — ६. ४१ उ०.
[24] ०भ्रष्टो हि जायते — आ, इ, ए.

**किं** [1]पुनः ये च [2]**श्रद्धया युक्ताः** शिवधर्मविहितमति[3]मार्गकर्म कुर्वन्ति [4]ते रुद्रा न भवन्ति; [5]रुद्रा एव ते संपद्यन्त इत्यर्थः। ते च तत्कर्मानुष्ठानप्रकर्षक्रमतः **तत्र तत्र** [6]ऊर्ध्वक्रमतश्च प्रकर्षभाविनी भुवने [7]**निवासिनः** संपद्यन्ते। तत्रापि च प्राप्ताः **ते** [8]पूर्वाभ्यासतः **केचिद् ध्यायिनः, भक्ताः** केचित्[9] ज्ञानिनः परे कर्मनिष्ठाश्च भवन्ति यावद्दीक्षाक्रमेण मुक्तिं न [10]प्राप्ता इति ॥४५–४८॥

तथा — 'कालानलात्' इत्यादि।

> **कालानलाच्छिवं [11]यावद्वर्तन्त्यस्मिन्सितासिते ।**
> **[12]म्रियन्ते योजितास्तस्मिन्भुवनेशसमा नराः ॥४९॥**

ये तु [13]क्रमेणाधः कालाग्नितो बिन्द्वन्तभुवनेष्वेव दीक्षया **योजिताः** कथंचिद्दैवान्मानुष्याद्वा[14] प्रति[15]बन्धाद् [16]ऊर्ध्वमप्राप्तदीक्षा एव [17]विपन्नाः, ते तेष्वेतेषु भुवनेश्वरसमा एव तावद् भवन्ति, यावन्न दीक्षया [18]तत्तद्भुवनवासिभिर्गुरुभिरूर्ध्वं योजिता इति ॥४९॥

तथैव — 'ध्यानेन' इत्यादि।

> **[19]ध्यानेन वाथ संकल्पात्पदं यन्मनसोप्सितम् ।**
> **प्राप्नुवन्ति मुनिव्याघ्र तस्मिन्नेव रमन्ति ते ॥५०॥**

ये च दीक्षिता अपि तत्तद्भुवनभोगाभिलाषिणः साधकाः, **ते**ऽपि तत्तद्भुवनं [20]योगादिना प्राप्य भोगान्भुञ्जत इति [21]**योगपादे** भविष्यति। प्रोक्तं च श्रीमत्स्वायंभुवे[22]—

---

[1] पुनर्ये श्रद्धया—ऊ, ॠ; पुनरेव श्रद्धया —ऐ.
[2] शुद्धया — औ.
[3] ०मार्गं कर्म — ऊ, ॠ.
[4] 'ते रुद्रा न भवन्ति' इत्येतन्नास्ति — आ, इ, ई, उ, ए, ऐ.
[5] रुद्रा य एव ते — इ, औ; रुद्रा य एवं संपद्यन्त — ऐ.
[6] ऊर्ध्वमप्रकर्ष० — ऊ, ॠ; ऊर्ध्वक्रमश्च प्रकर्ष० — ए.
[7] निवासितः — इ; निवासनं सं० — ॠ.
[8] पूर्वाभ्यासचिद्ध्यायिनो — इ; पूर्वाभ्यासवशा ध्यायिनो — ऐ.
[9] केचिच्च — ऊ, ॠ; केनचित् — ए.
[10] 'प्राप्ता' इति नास्ति — ऊ, ॠ.
[11] वर्तन्त्यस्मिन्महाध्वरे — उ; यावद्वर्तन्त्यस्मिन्महाध्वनि — ऊ, ॠ.
[12] प्रयान्ति योजिता० — मु, ओ; प्रयान्ति चोदिता० — उ.
[13] क्रमेणाथ – इ, ऐ.
[14] दैवान्मानुषाद्वा — आ, इ, ई, उ, ए, ऐ, औ.
[15] बलाद् — ऊ, ॠ.
[16] ऊर्ध्वं प्राप्त० — आ, इ, ई, उ, ए, ऐ, औ.
[17] विपन्नास्तेषु तेषु — ऊ, ॠ.
[18] 'तत्' इति नास्ति — इ; 'तत्तद्भुवन' इत्यारभ्य उत्तरत्र ६३ तमश्लोकवृत्तावुदाहृतचर्यापादश्लोके 'वर्णयिष्यामि' इत्यन्तो भागः लुप्तः — ऊ, ॠ.
[19] ध्यानतो वाथ — मु.
[20] 'योगादिना' इति नास्ति — आ.
[21] मतङ्ग० योग० तत्त्वसाधन-शिवोपलब्धि-पटलयोः।
[22] स्वायम्भुवे ३९.२; सूक्ष्मस्वायम्भुवे — इ, ई, उ, ए, ऐ, औ.

"यो यत्राभिलषेद्भोगान्स तत्रैव नियोजितः।
सिद्धिभाङ्मन्त्रसामर्थ्यात्" इति ॥५०॥

अधुना मतङ्गमुनिः — 'प्राधानिकं' इत्यादि।

**मतङ्ग उवाच —**

**प्राधानिकं मनः प्रोक्तं प्रधानातीतवर्त्मनि[1]।**
**न तद्व्यापयितुं [2]शक्तं ध्यानं स्यात्तद्विना कुतः ॥५१॥**

**मनः**शब्देनात्र बुद्धिरुच्यते ध्यानप्रस्तावात् [3]"प्रत्ययैकतानता **ध्यानं**" यतः। तस्याश्च प्रधान-कार्यत्वेन [4]अव्यापकत्वात् [5]प्रधानादिविषये एव तावत् प्रवृत्तिर्न संभवति। **कुतः** तदतीतात्यन्त-व्यापके [6]परमेश्वरान्तमहाध्वनीति। तदेतदुक्तमस्माभिरन्यत्र[7] —

"बुद्धौ मितायां नेशस्य प्रतिबिम्बोऽमितत्वतः।
[8]खड्गेऽभीशुमतो यद्वत्तदंशस्य त्वसौ भ्रमः॥" इति।

ततश्च यदुक्तम्[9] —

"ध्यानेन वाथ संकल्पात्पदं यन्मनसीप्सितम्।
प्राप्नुवन्ति"

तदित्येतदनुपपन्नमिति ॥५१॥

तत्रापि प्रतिविधानम् — 'मणेरग्निः' इत्यादि।

**परमेश्वर उवाच —**

**[10]मणेरग्निः समुद्भूतस्तत्तेजो[11]ऽभ्यधिको यथा।**
**व्याप्नोति [12]तदतीतानि मनस्तद्वन्महाध्वनि[13] ॥५२॥**
**प्रवृत्तं योगिनो [14]विप्र [15]लक्षेन्धनसुदीपितम्।**
**प्रकाशयति तत्त्वानि [16]ध्यातृध्यानेरणात्सदा ॥५३॥**

---

[1] ०वर्त्मना — उ.
[2] शक्तो — मु, उ.
[3] योगसू० ३. २; प्रत्यैकता ध्यानं — औ.
[4] न व्यापकत्वात् — ऐ.
[5] प्राधानातीतविषय एव — आ, ई, उ, ए, ऐ, औ.
[6] परमेश्वरान्ते महा० — ई, उ, ए, औ; पार-मेश्वरान्ते महा० — ऐ.
[7] आकरो न लभ्यते। मोक्षकारिकावृत्तौ १०६ तमश्लोकविवरणेऽपि 'उक्तमस्माभिरन्यत्र' इति निर्दिष्टोऽयं श्लोकः।
[8] खड्गेभ्यः सुमतयो — ऐ.
[9] मतङ्ग० विद्या० २६. ५०.
[10] मणेरग्नेः समुद्भूतं — उ.
[11] ०ऽभ्यधिकं यथा — उ; ०ऽप्यधिको यथा — ओ.
[12] तदधीनानि — उ.
[13] महामुने — मु.
[14] विप्रा — उ.
[15] लक्ष्येऽध्वनि न पीडितः — उ.
[16] ध्यातुर्ध्याने० — ओ.

[1]**यथा मणेः**[2]संबन्धी प्रकाशो मणावव्यापके[3]ऽप्यभिव्यक्तो गृहादिव्यापक एव भवति; [4]**तद्वद् मनः** बुद्धयादि [5]अव्यापकमपि [6]महत्यत्यन्तव्यापके परमेश्वरादौ [7]**प्रवृत्तं** [8]लक्षेण [9]इन्धनेन परमेश्वरेण त्वनलवदुद्दीपितं [10]व्यापकान्यन्यानि **तत्त्वानि ध्यातृध्यानेरणात् प्रकाशयतीति**। तत्रेश्वरशक्तिः सर्वार्थप्रकाशिका[11] [12]व्यापिकैवाभिव्यज्यते। [13]ततस्तदनाकारमेव [14]वस्त्ववद्योतयतीति न दोष इत्यर्थः ॥५२–५३॥

अत एवात्मयोगे इव ईश्वरयोगेऽपि चित्तजय एव कारणमुच्यते—'बिभर्ति धारितं' इत्यादि।

**बिभर्ति धारितं पाति [15]पालितं चलितं क्षणात्।**
**चालयेच्चालितं [16]योगान्नयत्यूर्ध्वमधः स्मृतम् ॥५४॥**
**[17]दीपितं वर्णभेदाच्च नानाकर्माणि कारयेत्।**
**अथ किं बहुनोक्तेन योगपादे प्रविस्तरात् ॥५५॥**
**वक्तव्यं मुनिशार्दूल [18]यद्वक्तव्यतया स्थितम्।**
**[19]तदस्मिन्नातिविस्ताराच्छृणुष्वैक[20]मना मुने ॥५६॥**

[21]समस्तवृत्तिनिरोधेन चित्तं धार्यमाणं [22]दृक्शक्तिमपि ध्येये निरुणद्धि। [23]चित्तं दोष[24]निर्हरणेन च स्थिरीक्रिय[25]माणं प्रशान्तवाहि; न स्कन्दि। दृक्शक्तिमपि[26] तत्र स्थिरीकरोति यथा न विषयान्तरं याति। अन्यथा स्वभावेन चञ्चलत्वात् क्षणमात्रेण ततोऽनिरोधात् चित्तं [27]चलति। **चलितं** च दृक्शक्तिमपि बलादेव ध्येयाच्चालयित्वा **ऊर्ध्वमधश्च नयति** इति। एतच्च तस्य रूपं [28]तत्तदाकारग्रहणेन प्रतीयत इति नासिद्धिराशङ्क्या। [29]ततश्च चित्तं नानाविधशुक्लकृष्णा[30]द्या-

---

[1] यथा हि मणेः – इ, ई, उ, ए, औ; तथा हि मणेः — ऐ.
[2] संबन्धप्रकाशो — इ; सम्बन्धिप्रकाशो — ई, उ, ए, ऐ, औ.
[3] व्यक्तिव्यक्तो — ए.
[4] तन्मनः — ए.
[5] अव्यापकमहत्यन्त० — आ; अव्यापकमहत्यत्यन्त — इ, ई, उ.
[6] महत्यन्त० — ऐ.
[7] प्रवृत्तौ — इ, ऐ.
[8] लक्ष्येण — ए, औ; लक्षणे — ऐ.
[9] 'इन्धनेन' इति नास्ति — इ, ऐ.
[10] व्यापकान्यानि तत्त्वानि — आ, इ; व्यापकान्यन्यात्मनि तत्त्वानि — ए.
[11] ०प्रकाशिता — इ.
[12] व्यापिकैवापि० — इ; व्यापकैवाभि० — ऐ, औ.
[13] ततस्तदाकरमेव — इ.
[14] वस्तुवद् द्योत० — ए; वास्तवं द्योत० — ऐ.
[15] चालितं चलति क्षणात्—मु० पाठान्तरम्, उ, ओ.
[16] वेगान्नयत्पूर्वं प्रकाशते — उ; वेगान्नयत्यूर्ध्वमयं स्मृतम् — ओ.
[17] दीप्तिं वै वर्ण० — उ.
[18] यद्वक्तव्यं तथा — मु, उ.
[19] तद्यन्मिनोति विस्तारा० — उ; तदस्मिन्निति विस्तारा० — ओ.
[20] ०मनाधुना — उ, ओ.
[21] समस्तप्रवृत्ति० — आ; समस्तसृष्टि० — ए.
[22] दुःखशक्तिमपि — ऐ.
[23] चित्तदोष० — ऐ.
[24] ०निर्भरणेन — इ, ए, ऐ.
[25] ०माणस्पृशान्त० — इ.
[26] अत्र तुशब्दोऽधिकः — इ.
[27] चलयति — औ.
[28] तदाकार० — ए.
[29] तच्च — आ, ई, उ, ए.
[30] ०द्याकारादिभि० — इ.

काराभि [1]ध्यानोद्दीपितं नानाविधशान्तिवश्यादिकार्याणां साधकं भवतीत्येवमादि सर्वं विस्तरेण **योगपादे**[2] वक्ष्यामः। अत्र तु **वक्तव्यतया** [3]यद्भोगपदार्थत्वेन कर्मास्ति [4]तदेव संक्षेपेणोच्यते ॥५४–५६॥

'शासनस्यापि' इत्यादि ।

**शासनस्यापि ये भक्तास्तेऽपि दुःखविवर्जिताः ।**
**अप्सरोभिर्वृता नित्यं क्रीडन्त्युत्कृष्टचेतसः ॥५७॥**

लौकिकेनैव रूपेण [5]प्रकृतत्वादस्य शास्त्रस्य, तदनुष्ठातुश्च पुत्रकादेः **भक्ताः** योगक्षेमादिकं वहन्ति; ते स्वर्गनिवासिनः ॥५७॥

'लिङ्गं' इत्यादि ।

**लिङ्गं माहेश्वरं प्रीत्या नमस्कारेण [6]ये यथा ।**
**पूजयन्ति नराः [7]शूरास्तेऽपि सिद्धा गणेश्वराः ॥५८॥**
**रमन्ति विविधैर्भोगैः प्राप्य स्थानमुमापतेः ।**

**ये** लौकिकैरेव [8]स्तुतिगीतनमस्कारादिभिः **लिङ्गं** व्यक्ताव्यक्तादिभेदभिन्नं **पूजयन्ति**; **ते** ब्रह्मलोकादूर्ध्वमुमापतिभुवननिषेविणो भवन्तीति ॥

'शतरुद्रान्तिकम्' इत्यादि ।

**शतरुद्रान्तिकं स्थानं सकृल्लिङ्गार्चनाल्लभेत्**[9] **॥५९॥**

येऽपि लौकिकेनैव रूपेण [10]लिङ्गार्चनरताः, ते शतरुद्रपदनिषेविणः ॥५९॥

'आलये' इत्यादि ।

**आलये शिवलिङ्गस्य भक्त्या [11]निर्वर्तिते शुभे ।**
**श्रीकण्ठपदमारुह्य सुखमत्यद्भुतं लभेत् ॥६०॥**

ये तु तथैव [12]भगवतः प्रासादादिकं कुर्वन्ति, ते गुण[13]पृष्ठवासिश्रीकण्ठभुवनं प्राप्नुवन्तीति ॥६०॥

---

[1] ०ध्यानाद्दीपितं — ऐ; ०ध्यानेनोद्दीपितं — औ.
[2] मतङ्ग० योग० कर्मयोगपटले ।
[3] यावद्भोग० — इ, ऐ.
[4] तत्तदेव — इ, ए, ऐ, औ.
[5] प्राकृतत्वा० — आ, ई, उ.
[6] पाद्यतः — मु; येऽप्यथ — ओ.
[7] शूद्रास्तेऽपि — उ.
[8] स्तुतिनमस्कारा० — आ.
[9] ०र्चनाद्भवेत् — ओ.
[10] लिङ्गार्चनारताः — इ.
[11] निर्वर्तते — ओ.
[12] भवतः — आ, ई, उ.
[13] ०पृष्ठावासि० — ई, उ.

'एवम्' इत्यादि।

**एवं भक्तिविभागेन [1]धर्मैर्वाभिरताः सदा।**
**[2]उपासते महादेवं तेऽपि सिद्धा नरोत्तमाः ॥६१॥**
**प्रधानविषयातीताः [3]सर्वे दुःखविवर्जिताः।**
**यथेप्सितभुजः सन्तो नावसीदन्ति कर्मणा ॥६२॥**

ये लौकिकेनैव रूपेण सर्वेभ्यो महान् कश्चिदस्तीति व्यवस्थाप्य, तमेव [4]भक्त्या यमादिभिस्तपोभिः **उपासते तेऽपि** प्रधानातीतभुवनभोक्तारः क्रमेण भवन्तीति ॥६१–६२॥

अथ मायातीतभुवनसिद्धावुपायः कः? उच्यते — 'सदाशिवपदं' इत्यादि।

**[5]सदाशिवपदं योगाच्चर्यातो वाथ दीक्षया।**
**प्राप्यते चित्तभेदेन मोक्षो वाथ चतुष्टयात् ॥६३॥**

सदाशिवपदस्यात्रोपलक्षण[6]त्वान्मायोर्ध्वभुवनप्राप्तिः साधकानां तद्भुवनेश्वर[7]साक्षात्कारफलाद् योगपादवक्ष्यमाणप्रत्याहाराद्यङ्गोपकृताद् **योगाद्** [8]भवति। **चर्यातो वेति** [9]आचरणं चर्या साधकानुष्ठेयस्तद्भुवनेश्वराराधनकर्मविशेषः; यद्वक्ष्यति **चर्यापादे**[10] —

"[11]बाह्याभ्यन्तरतः कर्मी स्नानपूजाग्नि[12]कर्मसु।"

इत्यादिना कर्मयोगज्ञानात्मक[13]साधन[14]त्रयस्य भेदात् [15]साधकानामपि त्रैविध्यात्। न तु भिक्षा[16]शौचाद्यात्मकः तस्य पुत्रकादि[17]विषयत्वेन सर्वार्थित्वात्। यद्वक्ष्यति तत्रैव[18] —

"अथातः सर्वसामान्यं विधानमिदमुत्तमम्।
वर्णयिष्यामि संक्षेपात्"

---

[1] लिङ्गैर्वा विरताः – मु, उ.
[2] उपासन्ते — मु; उपासन्ति — उ.
[3] सर्वे राकेन्दुधारिणः — उ; सर्वदुःख० —ओ.
[4] शक्त्या — इ.
[5] सदाशिवं पदं — औ.
[6] ०त्वान्मायोर्ध्वं भुवनप्राप्तिसाधकानां तत्तद्भुवने० — ऐ.
[7] ०साक्षात्कार्यफलाद् — ए.
[8] भवन्ति — आ, ई, उ, ऐ.
[9] आचारणं — आ, इ, ई, उ.
[10] मतङ्ग० चर्या० त्रितयविधानपटले ३ पू०.
[11] बाह्याध्वरतः कर्मी — आ, ई, उ; बाह्याध्वातः कर्मी — इ, औ; बाह्याध्वतः कर्मी — ए; बाह्याध्वारतः कर्मी — ऐ; 'बाह्याभ्यन्तरतः कर्मी' इति चर्यापादस्थपाठोऽत्र स्वीकृतः।
[12] ०कर्मस्वित्यादिना — ए.
[13] साधनं त्रयस्य भेदात् — इ; साधनत्रयस्य भेदात् — ई, उ, ए, ऐ; साधनत्रयकस्य भेदात् — औ.
[14] ०त्रयस्याभेदात् — आ.
[15] साधकानां त्रैविध्यम् — 'बाह्याभ्यन्तरतः कर्मी स्नानपूजाग्निकर्मसु। लक्षाभ्यासजये सक्तो योगीति परिभाषितः ॥ ज्ञानोद्रेकरतो ज्ञानी लुप्तसंदेहकिल्बिषः'। मतङ्ग० चर्या० त्रितयविधानपटले ३. ४ पू०.
[16] ०शौचाद्यात्मनः — इ, ऐ; ०शौचात्मकः — ए.
[17] ०विषयत्वेनासर्वार्थि० — ए, औ.
[18] मतङ्ग० चर्या० आचारलक्षणपटले १. २ पू०.

इत्युक्त्वा,

"आचारो द्विविधः शास्त्रे चरतां भावितात्मनाम् ।"

[1]इत्यादिना स्नानभिक्षादि [2]चर्यास्वरूपमिति । तया साधकचर्यया वा, **दीक्षया वा** तत्तद्भुवनयोजनतः [3]तत्तद्भुवनप्राप्तिः । यदुक्तम् [4]श्रीमत्सूक्ष्मस्वायंभुवे[5] —

"यो यत्राभिलषेद्[6]भोगान्स तत्रैव नियोजितः ।
सिद्धिभाङ्मन्त्रसामर्थ्यात्" [7]इति ।

**चित्तभेदेनेति** ज्ञानविशेषेण वा तत्तद्भुवनेश्वर[8]स्वरूपव्याप्त्यादिविचारनिष्ठेन शास्त्रविषयेण [9]तत्तत् **प्राप्यते** इति । **मोक्षस्तु चतुष्टयाद्** अस्मात् [10]समुच्चितादेव; [11]नैकैकस्मात् । भोगो वेति वाशब्दार्थः । तथा हि — चर्यायोगयोस्तावज्ज्ञानं विना अनुष्ठानमेव नोपपद्यते । [12]न ह्यज्ञातेऽर्थे योगः समाधिः, [13]चर्या [14]वा प्रागुक्ता संभवति । ज्ञानमपि [15]च, द्रव्यत्वान्मलादीनां [16]बन्धानां न दीक्षाख्यं व्यापारं विना तेभ्यः पुंसो मोक्षं कर्तुं [17]क्षममित्युक्तं **शुद्धविद्याप्रकरणे**[18]—

"तस्मान्मन्त्रक्रिया [19]मुख्या सेश्वरी भुक्तिमुक्तिदा ।" इति ।

[20]अतो दीक्षैव मोक्षहेतुरिति । ज्ञानादीनां [21]चाचार्यसंस्कारद्वारेण दीक्षायां विनियोगदर्शनात्[22] । [23]यद्वक्ष्यति **दीक्षाप्रकरणे**[24] —

[25]"विद्यापादार्थकुशलः क्रियापाद[26]गतक्रमः ।
योगपादकृताभ्यासश्चर्यापादानुवर्तकः ।।
गुरुर्दीक्षां प्रकुर्वीत" इति ।

[27]केवलमसद्योनिर्वाण[28]दीक्षयारब्धकार्याणां कर्मणामनुपक्षयात् [29]तद्भोगोपरोधेन,[30] मलमायीययोरपि

---

[1] इत्यादि स्नान० — आ, इ, ई, उ, ए, ऐ, औ; इत्यादिना भिक्षादि — ऊ, ॠ.
[2] चर्यादिस्वरूपमिति—आ, इ, ई, उ, ए, ऐ, औ.
[3] तद्भुवनेश्वरप्राप्तिः — इ, ॠ; तत्तद्भुवनेश्वरप्राप्तिः — ऊ, ऐ; तद्भुवनप्राप्तिः —ए.
[4] 'श्रीमत्' इति नास्ति — आ, इ, ई, उ, ए, ऐ, औ.
[5] स्वायम्भुवे ३९. २.
[6] भोगान् सर्वत्रैव — ऊ, ॠ.
[7] इतिशब्दो नास्ति — ए.
[8] ०स्वरूपरूपकव्याप्त्यादि० — ऊ, ॠ.
[9] तत्प्राप्यते — आ, इ, ई, उ, ऊ,ॠ, ऐ, औ.
[10] समुचितादेव — ऊ, ॠ, ऐ.
[11] नैकैकात् — इ, ऊ, ॠ, ऐ.
[12] 'न' इत्यत्र 'तेन' इति दृश्यते — आ; नकारो नास्ति — इ, ऐ.
[13] चर्यया वा प्रागुक्ता — ए; चर्याविद्वा प्रागुक्ता — ऐ.
[14] वाशब्दो नास्ति — इ.
[15] चशब्दो नास्ति — आ, ई, उ. ए, ऐ, औ.
[16] बन्धान्न दीक्षा०—इ; बन्धनान्न दीक्षा० —ए.
[17] 'क्षमं' इति नास्ति — ऊ, ॠ.
[18] मतङ्ग० विद्या० ७. ७४ पू०.
[19] मुख्यसेश्वरी — इ, ऐ.
[20] 'अतः' इति नास्ति — ऐ.
[21] चाचर्य संस्कार० — इ.
[22] अत्र 'प्राप्यति' इत्यधिकम् — इ, ऐ.
[23] 'यद्वक्ष्यति' इति नास्ति — इ.
[24] मतङ्ग० क्रिया० अधिवासनपटले ३ उ०—४ पू०
[25] विद्यापदार्थ० — आ, इ, ई, उ, ऐ, औ.
[26] ०कृतक्रमः — ॠ.
[27] केवलं सद्यो० — इ, ए, औ; केवलसद्यो०— ई, उ.
[28] ०दीक्षारब्ध० — इ; ०दीक्षा आरब्ध० — ऐ.
[29] 'तद्' इति नास्ति — आ, इ, ई, उ, ॠ, ए, ऐ, औ.
[30] अत्र चशब्दोऽधिकः — आ, इ, ई, उ, ए, ऐ, औ.

पाशयोः [1]सर्वथानवध्वंसितत्वेन [2]शिवत्वस्यानभिव्यक्तत्वाद् दीक्षोत्तरकालं ज्ञानादिभिः, तथा अपचयक्रमेण प्रत्यहं तेषां [3]पाशानां विच्छित्तिः, [4]शिवत्वस्य चाभिव्यक्तिः क्रियते। यथा आरब्धकार्याणां [5]कर्मणां न भोगोपरोधो जायते। नापि च पाशानां पुनः [6]प्ररोहः, व्यापारान्तरेण[7] [8]वा निवृत्तिः, [9]शिवत्वस्य [10]व्यापारान्तरेण [11]वाभिव्यक्तिरिति भवत्येव चतुष्टयाद्दीक्षाज्ञानादेर्यथा [12]स्वव्यापारभेदान्मुक्तिरिति[13] सूक्तं "**मोक्षो वाथ चतुष्टयाद्**" इति। [14]अत एवात्र **क्रियापादे** [15]दीक्षाप्रकरणमध्य एव नित्यादिकर्मणां [16]पाठो दीक्षापूर्वत्वेन मात्रयापि[17] स्वफलमोक्षसाधनप्रदर्शनायोपपद्यते। अन्यथा [18]तु "[19]न [20]ह्यन्यस्य [21]तन्त्रेऽन्यः प्रवर्ततेऽन्यः [22]प्रतायते" इति [23]न्यायेन निष्प्रयोजनत्वाद्वक्तुरकौशलमेव प्रतिपादयन्नीत्ययुक्तमेव। दीक्षोपक्रमोपसंहार[24]युक्तश्च **क्रियापादः** सर्वत्र श्रूयमाणः [25]एनमेवार्थमभिद्योतयति। [26]यथा च तदुपक्रमे [27]भविष्यति —

[28]"अथातः संप्रवक्ष्यामि दीक्षाविधिमनुत्तमम्।
साङ्गं समासतः सर्वम्" इति।

उपसंहारेऽपि —

[29]"तद्वक्त्रानलनिर्गमोक्तिविधिना दीक्षेयमत्रोदिता" इति।

अन्यथा तस्या अपि श्रुतेरनुपपत्तिरेवेति। अत एव च यत्क्रियापादोपक्रमे वाक्यं भविष्यति[30] —

[31]"येषामध्यवसायोऽस्ति [32]न विद्यां प्रत्यशक्तितः।
सुखोपायमिदं तेषां विधानमुदितम्" इति।

---

[1] सर्वथातपध्वंसि० — ऊ, ऋ.
[2] शिवस्यानभि० — आ, इ, ई, उ, ऐ; शिवत्वस्याहोऽनवाभि० — ऊ, ऋ; शिवतत्त्वस्यानभि० — ए.
[3] पाशविच्छित्तिः — ऊ, ऋ.
[4] शिवतत्त्वस्य — ए.
[5] 'कर्मणां' इति नास्ति — ऐ.
[6] 'प्ररोहः' इत्यत्र 'पुराणो' इति दृश्यते — ए.
[7] अत्र 'पुनः प्ररोहो' इत्यधिकम् — ऊ; 'पुनःप्ररोहो व्यापारान्तरेण' इत्यधिकम् — ऋ.
[8] 'वा' इति नास्ति — ऋ.
[9] शिवतत्त्वस्य — ए.
[10] 'व्यापारान्तरेण' इति नास्ति — आ, इ, ई, उ, ए, ऐ, औ.
[11] वा व्यक्ति० — इ, ऊ, ऐ, औ; या व्यक्ति० — ऋ.
[12] स्वं व्यापार० — आ, ई, उ, ऊ, ऋ, ऐ; स्वस्य व्यापार० — इ; सव्यापार० — औ.
[13] मूर्तिरिति — इ.
[14] अत्र — ई, उ.
[15] दीक्षादिप्रकरण एव नित्यादि० — आ, ई, उ, ए, औ; दीक्षाप्रकरणे नित्यादि — इ, ऐ.
[16] परमो दीक्षापूर्वकत्वेन — ए.
[17] अत्र 'स्वफलं' नित्यादिकर्मणा (कर्मणां—ऋ) इत्यधिकम् — ऊ, ऋ.
[18] तुशब्दो नास्ति — आ, ऋ, ऐ.
[19] नकारो नास्ति — औ.
[20] ह्यस्य — ए.
[21] तन्त्रे विस्तारितेऽन्यः प्रतते — ऊ, ऋ; तन्त्रेभ्यः प्रतते — ए.
[22] प्रतते — इ, ई, उ, ऐ, औ.
[23] आकरो न लभ्यते।
[24] युक्तं च — ए.
[25] एवमेवार्थमभि० — आ, इ, ई, उ, ए, ऐ, औ.
[26] तथा च — ऊ, ऋ.
[27] 'भविष्यति' इत्यारभ्य 'यत्क्रियापादोपक्रमे' इत्यन्तो भागो नास्ति — आ, इ, ई, उ, ए, ऐ, औ.
[28] मतङ्ग० क्रिया० दीक्षापटले १.
[29] मतङ्ग० क्रिया० समुदायपटले ५३.
[30] मतङ्ग० क्रिया० दीक्षापटले २.
[31] एवमध्यव० — ए.
[32] नाविद्यां — ऐ; न विद्याः — औ.

तत्राप्ययमर्थः — [1]**येषां** मोक्षतुहेतुतया ज्ञानं प्रति बुद्धिरेव नास्ति, ज्ञानस्य [2]दर्शनान्तरापरिदृष्ट-[3]द्रव्यात्मक[4]मलाख्यबन्धनिवृत्तावुक्तनयेन शक्त्यभावादिति युक्तितः, तेषां शैवानां मोक्षाय **सुखोपायम्** [5]एतद्दीक्षाख्यं साधनम् **उदितम्** इति [6]वक्ष्यामः। तन्न विरोधः। न त्वत्र समयदीक्षा व्याख्येया। तस्या दीक्षोपक्रमार्थत्वेन ज्ञानादिभिः सह विकल्पसमुच्चयनिरूपण[7]स्यात्राप्रकृतत्वात्। यद्वक्ष्यति तत्प्रकरणे[8] —

[9]"गुरुः शिष्यनिमित्तं तु पूर्णां वह्नौ [10]प्रपातयेत्।
येनासौ समयी भूत्वा दीक्षासंस्कारमर्हति॥" इति।

[11]अपि तु [12]अध्वशुद्धिलक्षणैव। [13]तस्या एव सिद्ध्युपायत्वेनाप्यत्र प्रस्तुतत्वात्। यदुक्तम् —

"सदाशिवपदं योगाच्चर्यातो वाथ दीक्षया।
प्राप्यते" इति॥६३॥

अस्तु योगादीनां सिद्ध्युपायत्वं न तु [14]ज्ञानस्य [15]तद्विरुद्धत्वात्। यदुक्तम्[16] —

[17]"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते" इति।

[18]तत्रोच्यते — 'प्रात्यात्मिके' इत्यादि।

[19]**प्रात्यात्मिके न भोगः स्याद्विद्यया परया क्वचित्।**
[20]**विवेकः खलु कृत्स्नस्य बन्धस्या**[21]**स्यामितात्मनः॥६४॥**
[22]**विच्छित्तिकारणं प्रोक्तं** [23]**षट्पदार्थमयं शुभम्॥**

[24]प्रत्यात्मं भवः [25]**प्रात्यात्मिकः** चित्तभेदः [26]प्रागुक्तः, तस्मिन्सांख्यादिज्ञाने सति [27]प्रकृतिपुरुष-

---

[1] एषां — औ.
[2] दर्शनान्तरपरिदृष्ट० — ऊ, ऋ.
[3] ०द्रव्यद्रव्यात्मक० — ऋ.
[4] ०मालाख्यबन्ध० — आ, इ, ई, उ, ऊ; मालाख्यं बन्ध० — ऋ; मलबन्ध० — ए; कलाख्यबन्ध० — औ.
[5] एतद्दीक्षाख्यसाधनम् — औ.
[6] मतङ्ग० क्रिया० दीक्षापटले २ वृत्तौ।
[7] ०स्यात्र प्रकृतत्वात् — आ, इ, ई, उ, ऋ, ए, ऐ, औ.
[8] मतङ्ग० क्रिया० भुवनदीक्षापटले १५.
[9] गुरुशिष्य० — ऊ, ऋ, ऐ, औ.
[10] प्रतापयेत् — आ, ऐ; प्रदापयेत् — ए.
[11] 'अपि तु' इति नास्ति — इ, ऊ, ऐ.
[12] अशुद्धिलक्षणैव — आ, ई, उ, ऋ, औ.
[13] तस्य एव शुद्ध्युपाय० — इ.
[14] ज्ञातस्य — ई, उ, ऊ, ऋ, ए, ऐ.
[15] तदविरुद्ध० — आ, इ, औ.
[16] कामिके पूर्वभागे ४. ५५ पू० भगवद्गीता, ४, ३७
[17] ज्ञानादिः सर्व० — औ.
[18] अत्रोच्यते — ऋ.
[19] प्रत्यात्मके न — उ, ऊ, ऋ.
[20] विवेकदुःखकृत्स्नस्य — ऋ.
[21] ०स्यामितात्मनाम् — उ; ०स्यमितात्मनः — ओ.
[22] व्युच्छित्ति० — ऊ, ऋ.
[23] षट्पादार्थ० — मु, उ, ओ.
[24] प्रत्यात्मकं भवः — ई, उ; प्रत्यात्मभवः — ऊ, औ; प्रत्यात्मभावः — ऋ; प्रत्यात्मभुवः — ए; प्रत्यात्मकं भावः — ऐ.
[25] प्रत्यात्मिकः — आ, इ, ई, उ, ऊ, ऋ, ए, ऐ, औ.
[26] मतङ्ग० विद्या० २६, ६३
[27] 'प्रकृति' इति नास्ति — इ; प्रकृतपुरुष० — औ.

विवेकस्योत्पन्नत्वाद् गुणत्रय[1]विषयो **भोगः** सिद्धि[2]लक्षणो **न** संभवति । तथा अपरेण [3]मल-पुरुषविवेकविषयेण [4]ज्ञानेन **क्वचित्** पुरुषविशेषे समुत्पन्नेन, यतः सर्वेभ्यो मलकर्ममायाबन्धेभ्यो **विवेकः** जायते; तत [5]एतत् [6]**षट्**[7]**पदार्थमयं** [8]परं ज्ञानं बन्ध[9]विच्छित्तेर्मोक्ष[10]लक्षणायाः कारण-मुक्तम्। न तु [11]सिद्धयात्मनो भोगस्य। एतदुक्तं भवति — तन्न [12]सिद्धिसाधनम्। अपि तु[13] ततोऽन्यदेव तद्भुवनेश्वर[14]स्वरूपादि[15]विषयमेव ज्ञानमित्यविरोधः ॥

एवं भोगपदार्थप्रपञ्चे [16]व्याख्यातेऽत्र प्रसङ्गाद् मतङ्गमुनिः — 'व्याख्यातम्' इत्यादि ।

**मतङ्ग उवाच —**

**व्याख्यातं भवता [17]स्पष्टमज्ञानं बन्धकारणम् ॥६५॥**
**तद्विच्छित्तिकरं ज्ञानं [18]ते चाणोः संप्रतिष्ठिते ।**
**प्रसूति[19]र्नासतो यस्माद्विद्यते चेद्विरुध्यते ॥६६॥**
**[20]नेष्येते [21]युगपच्छिष्टे[22]रालोकतमसी क्वचित् ।**

यद्येवं द्विरूपस्यापि ज्ञानस्याज्ञाननिवर्तकत्वेनाभ्युपगमाद् युगपदेव ज्ञानाज्ञानयोरेकस्मिन्पुंसि [23]सहनिष्ठाप्रसङ्गः । न च विरुद्धयोरालोकान्ध[24]कारयोरिव **युगपद्** एकस्मिन्धर्मिणि स्थितिरुप-पद्यते। अथोच्यते — "य एव ज्ञानस्योत्पत्तिकालः, स एवाज्ञानस्य निवृत्तिकालः। ततो न विरोध" इति । यद्येवमसत्कार्यवादाभ्युपगमप्रसङ्गः । निराकृतश्चासौ । ततः सत्कार्यदृष्टचा यदि ज्ञानं प्रागपि[25] विद्यमानमिष्यते, ततस्तत्र[26] तद् [27]अज्ञानेन सह **विरुध्यते** एवेति ॥

---

[1] विषयभोगः — इ, ऋ, ऐ; विषये भोगः — ऊ; विषयभोग० — औ.
[2] ०लक्षणेन संभवति — ऊ; ०लक्षणे संभवति — ऋ.
[3] मलविवेक० — इ, ऊ, ऋ, ऐ.
[4] ज्ञाने क्वचित् — ऋ.
[5] एव तत् — ए, ऐ.
[6] 'षट्' इति नास्ति — ऊ, ऋ.
[7] ०पदार्थकादिनिर्विषयमेव ज्ञानं — ऋ.
[8] अपरं ज्ञानं — औ.
[9] ०विच्छित्त्यै मोक्ष० — ऐ.
[10] ०लक्षणाः — इ; ०लक्षणायां — ए.
[11] सिद्धात्मनो — आ, इ, ई, उ, ऋ, ए, औ.
[12] सिद्धसाधनम् — आ, ऋ, ए, ऐ.
[13] तुशब्दो नास्ति — ऊ.
[14] स्वरूपकादि० — इ, ऐ, औ; स्वरूपरूपकादि० — ऊ.
[15] ०विजयमेवं ज्ञान० — इ.
[16] व्याख्याते तत्र — ऐ.
[17] सर्वमज्ञानं — उ; पृष्टमज्ञानं — ऊ, ऋ.
[18] चेतसाणोः प्रतिष्ठिते — उ.
[19] ०र्नाशितो — उ.
[20] नेष्यते — मु, उ, ऊ, ऋ; तेष्वेते — ओ.
[21] युगपच्छिल्ष्टे आलोक० — ऊ, ऋ.
[22] ०रालोकस्तादृशी क्वचित् — उ.
[23] सहनिष्ठानप्रसङ्गः — इ, ई, उ, ए, ऐ, औ; सहप्रतिष्ठानप्रसङ्गः — ऊ, ऋ.
[24] ०कारयोरेव — आ.
[25] अपिशब्दो नास्ति — आ, इ, ई, उ, ए, ऐ, औ.
[26] 'तत्र' इति नास्ति — ऊ, ऋ.
[27] ज्ञानेन — इ, ऐ.

अत्र सिद्धान्तः — 'यथाग्निः' इत्यादि ।

**परमेश्वर उवाच —**

**यथाग्निर्भस्मसात्सर्वान्[1] [2]करोतीन्धनसंचयान्[3] ॥६७॥**
**तत्स्थोऽप्युपायरहितो न विभाति स्वतेजसा ।**
**विद्याविद्यात्मकं तद्वद्युगपत्पशु[4]संततौ ॥६८॥**

[5]**यथा** [6]**अग्निः** अभिव्यक्त एव [7]**इन्धनसंचयान्** [8]दहतीति, तैः [9]सह विरुध्यते । न [10]त्वनभिव्यक्तोऽरणि[11]लक्षणेन्धनान्तःसंस्थितोऽपि; शक्त्यवस्थायां विरोधाभावात् । एवं **विद्याविद्यात्मकमपि** वस्तु[12]द्वयं शक्तिव्यक्तिभेदेन **युगपद्** एकत्र [13]भवदविरुद्धमेवेति । एवमभ्युपगम्यात्मनि ज्ञानादन्यदज्ञानं, [14]तयोर्विरोधः परिहृतः ॥६७–६८॥

अधुना [15]तु [16]ज्ञानाभाव [17]एवाज्ञानम् । न ज्ञानान्तरान्यत् । न [18]चाभावेना[19]वस्तुरूपेण सह कस्यचिद्विरोधः; वस्तुविषयत्वात्तस्येत्युच्यते — 'या परा संस्पृशेत्' इत्यादि ।

**या परा संस्पृशेत्कोटिं परां काष्ठां [20]विवेकिनः ।**
**[21]गतिः सैवावबोद्धव्या धर्मान्तरनिदर्शनात् ॥६९॥**

**विवेकिनः या परा** [22]**गतिः** ज्ञानं, **परां** [23]**काष्ठां** [24]सर्वाध्वान्त[25]प्रवर्तिनीं [26]शिवत्वलक्षणां **कोटिं संस्पृशेत्** इति संभाव्यते; **सैव** [27]बोद्धव्या [28]वस्तुतः । न तु तदभावोऽन्यदज्ञानं [29]नाम किंचित् ।

---

[1] सर्व — मु; सर्वाः — ऊ, ऋ.
[2] करोति तूलराशयः — उ.
[3] ०संचयम् — मु, ऋ.
[4] ०मन्दता — उ.
[5] 'यथा' इति नास्ति — ए.
[6] ह्यग्निरभि० — ऊ, ऋ; वह्निरभि० — ए.
[7] इन्धनस्य संचयान् — आ.
[8] दहन्तीति — ए.
[9] 'सह' इत्यत्र 'स' इति दृश्यते — ऋ.
[10] त्वनभिव्यक्ते — इ; त्वभिव्यक्तो — ऊ; त्वभियुक्तो — ऋ.
[11] ०लक्षणान्तः — ऊ, ऋ.
[12] ०द्वयशक्तिभेदेन — इ; ०द्वयं शक्तिभेदेन — ऊ, ऋ; ०द्वयमभिव्यक्तिभेदेन — ए; ०द्वयं शक्तिसक्तिभेदेन — ऐ.
[13] भवेदविरुद्ध० — ऊ, ऋ; भवद्विरुद्ध० — ए, ऐ, औ.
[14] 'तयोः' इत्यारभ्य 'ज्ञानान्त' इत्यन्तं नास्ति — ऊ, ऋ.
[15] न — इ, ऐ.
[16] ज्ञानभाव — आ, ई, उ, औ.
[17] एवाज्ञानान्तरान्यत् — इ, ऐ.
[18] चाभावो नावस्यारूपेण — ऊ,
[19] ०वस्तुस्वरूपेण — आ, इ, ई, उ, ऊ, ऐ.
[20] विवेकतः — मु, उ.
[21] इति सैवाव० — मु; गतिर्या साव० — उ, गतिः सा एव बोद्धव्या — ऊ, ऋ.
[22] गतिज्ञानं — आ, इ, ए, ऐ, औ.
[23] काष्ठा — आ, इ.
[24] सर्वाध्वप्रवर्तिनीं — ऊ, ऋ; सर्वाध्यातप्रवर्तिनं — ऐ.
[25] ०प्रवर्तनीं० — ए.
[26] शिवतत्त्वलक्षणां — आ, ई, उ, ए, औ; शिवलक्षणां — इ; तत्त्वशिवलक्षणाम् — ऐ.
[27] बोद्धव्यम् — ए.
[28] वस्तुनः — औ.
[29] 'नाम' इति नास्ति — ऋ.

तस्यैव ज्ञानात्मनो गतिलक्षणस्य धर्मान्तरस्य [1]दर्शनात्। तद्व्यतिरिक्तस्याज्ञानात्मनोऽवस्तुभूतस्य कस्यचिद्धर्मस्यादर्शनादित्यर्थः। ज्ञानाभाव [2]एव मलयोगतो ज्ञानानुत्पत्तौ मूर्च्छाद्यवस्थास्विव भवति। [3]न त्वज्ञानात्मनः कस्यचिदुपलब्धिर्यतः ॥६९॥

ननु विपरीतज्ञानात्मक[4]मप्यज्ञानं [5]प्रदृश्यत एव। [6]तत्रोच्यते — 'शेषं स्यादुपचारेण' इत्यादि।

**शेषं स्यादुपचारेण भोक्तुरध्यवसायजम्।**
**स्थितये निर्मितं धात्रा नासतो [7]व्यज्यते क्वचित् ॥७०॥**
**[8]किंचिदण्वपि लोकेऽस्मिन् किं पुनः [9]शिवतापरम्।**

यदेतत् — "[10]अनित्याशुचिदुःखानात्मसु [11]नित्यशुचि[12]सुखात्मप्रतिपत्तिरविद्या" इति विपरीत-[13]प्रतिपत्त्यात्मकमज्ञानं तद् **उपचारेण** आत्मनः कथ्यते; [14]न तु मुख्यतोऽध्यव[15]सायजत्वात्तस्येत्युक्तं [16]**बुद्धितत्त्वप्रकरणे**। तच्च, कर्मतद्भोगस्थित्यर्थमेव **निर्मितं** भगवता। न हि तेन विनात्यन्ताशुद्धेषु [17]कर्मतत्फलेषु कस्यचित् प्रवृत्तिरुपपद्यते। [18]तस्मादप्यज्ञानं नोपचारमात्रतयाप्यसदुत्पद्यत इति कुतः **शिवतापरं** ज्ञानमसदुत्पद्यमानं संभाव्यते भगवतेति ॥

ननु [19]तस्याप्यज्ञानस्य [20]विच्छित्तिकारणं [21]प्रोक्तमत्र[22] ज्ञानमिति विरोध[23]स्तदवस्थ एवेति। तत्रोच्यते — 'उक्तं तथापि' इत्यादि।

**उक्तं तथाप्युपायोक्त्या न चोत्पत्तिः परात्मनः ॥७१॥**

---

[1] 'दर्शनात्' इत्यारभ्य 'कस्यचिद्धर्मस्य' इत्यन्तं नास्ति — ए, औ.

[2] एवकारो नास्ति — इ, ऊ, ऋ, ऐ.

[3] यत्त्वज्ञानात्मनः — ऐ; न च ज्ञानात्मना — औ.

[4] ०मपि ज्ञानं — आ; ०मप्यन्यज्ञानं — ऊ, ऋ.

[5] प्राग्दृश्यत एव — ऊ.

[6] अत्रोच्यते — ए.

[7] व्यन्जते — ओ.

[8] किंचिदन्तेऽपि — मु, उ, ओ.

[9] शिवदां पराम् — उ; शिवदां पुरा — ओ.

[10] योगसू० २. ५.

[11] नित्यं शुचि० — इ, ऐ.

[12] सुखात्मकप्रति० — ए; दुःखात्मप्रति० — ऐ.

[13] प्रतिपत्त्यात्मकं ज्ञानं — आ, इ, ई, उ, ए, ऐ, औ.

[14] न मुख्यतो — ऊ, ऋ; तदनु मुख्यतो — ए.

[15] ०सायजत्वतस्तस्येत्युक्तं — आ, इ, ई, उ, ए, औ.

[16] मतङ्ग० विद्या० १७. २ वृत्तौ।

[17] 'कर्मतत्फलेषु' इत्यारभ्य 'उत्पद्यत इति' इत्यन्तस्य ग्रन्थस्य स्थाने 'कस्यचिदुपपद्यत इति' इति दृश्यते — ऊ, ऋ.

[18] 'तस्माद्' इत्यारभ्य 'भगवतेति' इत्यन्तो ग्रन्थो नास्ति — इ.

[19] तस्यापि ज्ञानस्य — ऋ.

[20] विच्छित्तिकरं — अ, ई, उ, ए; व्युच्छक्तिकरणं — इ; व्युच्छित्तिकारणं — ऋ; व्युच्छित्तिकरं — औ.

[21] मतङ्ग० विद्या० २६. ६५ पू०.

[22] 'अत्र' इत्यस्य स्थाने 'तत्र' इति दृश्यते — आ, इ, ई, उ, ए, ऐ, औ.

[23] 'तदवस्थ एव' इत्यारभ्य 'सहभावलक्षणो विरोधः' इत्यन्तो भागो लुप्तः — ए.

[1]यद्यपि तथोक्तम्। **तथाप्युपायोक्त्या** [2]भिन्नाधिकरणतया तन्निवर्तकत्वेनोक्तमिति विरुद्धता तस्य भूषणमेव। न [3]तु दूषणम्। तत्राऽपि च [4]न तयोः सहभावलक्षणो विरोधः। किं तु यैव तस्य [5]ज्ञानात्मनः समुत्पत्तिः, सैव [6]तस्याज्ञानस्य निवृत्तिः। न तु ज्ञानात्मनः, तन्निवृत्तेः [7]समुत्पत्तिः **परा** अन्येत्यदोषः ॥७१॥

अत एव — 'ज्ञानाभिव्यक्तये' इत्यादि।

**ज्ञानाभिव्यक्तये व्यक्तं [8]शिवतत्त्वमणुं प्रति।**
**व्यक्तोऽसौ शिववद्भाति शिव एव तनुक्षये ॥७२॥**

नात्र व्यापारद्वयम्। अपि तु ज्ञानाभिव्यक्त्यर्थमेव **शिवतत्त्वमणुं प्रति** [9]अभिव्यक्तमित्युक्तम् "[10]शिवाज्ज्ञानं प्रवर्तते" इत्यादौ। [11]न त्वज्ञाननिवृत्त्यर्थमपीति[12]। तेन ज्ञानेन **व्यक्तः** [13]विनिर्वर्तिताशेषाज्ञानः[14] **असौ** पुरुषः **शिववद्भाति** जीवन्मुक्त एव[15]। [16]शरीराभावे तु शिव-सम इति [17]कुतोऽस्याज्ञानसंभवः ॥७२॥

[18]यस्त्वयं विरुद्धयोः सहावस्थानप्रसङ्गन्यायो भवता दर्शितः,[19] स तु [20]न — 'अमुक्तानाम्' इत्यादि।

**अमुक्तानामयं न्यायः [21]शिवबोधादनन्तरम्।**
**परि[22]पूर्णः [23]सुनिर्वाणः पतिरेव न संशयः ॥७३॥**

ये [24]ह्यमुक्ताः [25]सांख्यादयः, तेषामेव **अयं** ज्ञानाज्ञानयोर्विरुद्धयोः सहावस्थानप्रसङ्गदोषः,

---

[1] 'यद्यपि' इति नास्ति — ऐ.
[2] भिन्नानि नाधिकरण० — ॠ.
[3] तुशब्दो नास्ति — ऊ, ॠ, ऐ, औ.
[4] नकारो नास्ति — आ, ई, उ, ऊ, ऐ.
[5] 'ज्ञानात्मनः' इत्यत्र 'आत्मनः' इति दृश्यते — आ.
[6] तस्य ज्ञानस्याज्ञाननिवृत्तिः — ॠ.
[7] सकाशादुत्पत्तिः — ऊ, ॠ.
[8] व्यक्तं तत्त्व० — उ; तत्त्वमुक्तमणुं — उ० पाठान्तरम्, ऊ, ॠ, ओ.
[9] अभिव्यक्तमुक्तम् — आ; 'अभिव्यक्तमित्युक्तम्' इत्यत्र 'अभिव्यक्तम्' इति दृश्यते — ऊ.
[10] स्वायम्भुवे ३२. २ उ०.
[11] न तु ज्ञान० — ॠ.
[12] इतिशब्दो नास्ति — ऐ.
[13] 'वि' इति नास्ति — औ.
[14] ०ताशेषज्ञानः — आ, इ, ॠ, ए, ऐ, औ.
[15] अत्र तुशब्दोऽधिकः — आ, इ, ई, उ, ए, ऐ, औ.
[16] शरीरभावेन तु — आ, इ, ई, उ, ए, ऐ, औ.
[17] कुतोऽस्याज्ञानात्मभिः स्वस्वधर्मविरुद्धयोः — ए.
[18] यः स्वयं — आ, इ, ई, उ, ॠ, ए, ऐ, औ.
[19] मतङ्ग० विद्या० २६. ६५ उ० — ६७ पू० वृत्तौ।
[20] नकारो नास्ति — आ, इ, ई, उ, ए, ऐ, औ.
[21] न्यायो बोद्धुरनन्तरम् — उ.
[22] ०पूर्णसुनिर्वाणः — ओ.
[23] स निर्वाणपति० — मु, उ.
[24] हिशब्दो नास्ति — ऐ.
[25] सांख्यादिनः तेषां — इ, ऐ; सांख्यादिज्ञानिनः तेषां — ऊ, ॠ.

सर्वथा [1]कैवल्यानुत्पादादिति दर्शितं **बुद्धितत्त्वप्रकरणे**[2]। यस्तु [3]मुक्तः शिवज्ञानोदयमात्रादेव [4]विनिवृत्तसमस्ताज्ञानो भवतीति, कुतस्तस्य तयोः सहभावप्रसङ्गः इत्युक्तम् ॥७३॥

एवं च — 'योऽभिलाषात्मकः' इत्यादि ।

> **योऽभिलाषात्मको भावो [5]ममत्वेनात्मवर्तिना ।**
> **सोऽङ्कुरोऽणोरविद्याख्यः संसारोत्पत्तिकारणम् ॥७४॥**
> **तत्संश्लिष्टा कला सूक्ष्मा वासितानादि[6]कर्मणा ।**
> **यदा [7]विद्याग्निना प्लुष्टा साविद्या कलया सह ॥ ७५॥**
> **[8]मदादयस्तदा [9]सर्वे [10]ह्याशयाश्चोर्ध्वगोचराः ।**
> **ध्वंसमायान्ति वै क्षिप्रं [11]तत्क्षणात्क्षीणकर्मणः ॥७६॥**
> **[12]पुंसोऽमितं शिवत्वं [13]स्यात्प्रकटं सर्वतोमुखम् ।**

यः एव रागजनितोऽभिलाषः [14]सहाहंकारवृत्तिना [15]अहंकारममकारात्मना चित्त[16]धर्मेण चाविद्याख्यसंसाराङ्कुर[17]भूतः पुंसां, स [18]एवात्राज्ञानमित्युक्तः। यतस्तद्बलादेव कलादि[19]कार्यकरण-[20]संबन्धः कर्मानुसारेण तेषां जायत इत्युक्तम्। [21]न तु तदभावेन[22] [23]विज्ञानकेवल्यादेः[24]। तत्तु **यदा** अनेन [25]शिवविद्याग्निना ज्ञानेन [26]दग्धं भवति, तदा स रागः [27]तदादिः सर्वोऽयमविद्याप्रपञ्चो वासनात्वेनापि वर्तमानो **ध्वंसम्** आयाति। [28]तत्क्षयाच्च [29]कर्मणो ह्यस्य [30]भोगपदार्थत्वेन वक्तुं

---

[1] कैवल्यानुमानादिति — आ, इ, ई, उ, ऋ, ए, ऐ, औ.

[2] मतङ्ग० विद्या० १७. ५०— ५१ पू० वृत्तौ ।

[3] मुक्ताः शिव० — ए; मुक्तशिव० — ऐ.

[4] 'वि' इति नास्ति — ऊ, ऋ, ए.

[5] समत्वं नात्म० — ऊ, ऋ.

[6] ०कर्मणः — ओ.

[7] विद्याग्निसंप्लुष्टा — ऊ, ऋ.

[8] मदोदयास्तदा — मु, ओ.

[9] सर्वो — उ.

[10] ह्याशया चोर्ध्व० — मु, उ; हिशब्दो नास्ति — ऊ, ऋ.

[11] तत्क्षणात्क्षणकर्मणः — मु.

[12] पुंसोचितं — मु, उ, ओ.

[13] स्यात्प्रकृतः सर्वतोमुखः — उ.

[14] साहंकार० — ऋ.

[15] सहकार० — ए; अहंकारमहंकारात्मना — आ.

[16] ०धर्मेणाविद्याख्य० — ऊ, ऋ; ०धर्मेण विद्याख्य० — ऐ.

[17] ०भूतद्विपुंसां — इ; भूतञ्च पुंसां — ऐ; भूतो द्विपुंसां — औ.

[18] एवात्र ज्ञान० — आ, इ, औ.

[19] ०कार्यकारण० — इ.

[20] ०संबद्धं कर्मानु० — औ.

[21] ननु — औ.

[22] तदभावे — ए.

[23] 'विज्ञान' इति नास्ति — आ.

[24] ०कैवल्यादेः — इ, ई, उ, ऊ, ऋ, ए, ऐ, औ.

[25] शिवतत्त्वाविद्यात्मना ज्ञाना . . . नेन — ऊ; शिवविद्यात्मना ज्ञाना...नेन — ऋ; शिवविद्याग्निनानेन — ऐ.

[26] क्वादग्धं भवति — ऐ.

[27] तदादि सर्वो यत्र विद्या० — ए.

[28] 'तत्क्षयाच्च' इत्यत्र 'क्षणाच्च' इति दृश्यते — इ; 'तत्क्षणं यच्च' इति दृश्यते — ए; 'क्षीणाच्च' इति दृश्यते — ऐ.

[29] कर्मणोऽप्यस्य — ऊ, ऋ; कर्मणोऽस्य — ए.

[30] 'भोगपदार्थत्वेन' इत्यारभ्य 'अस्य' इत्यन्तं नास्ति — ऋ.

प्रकृतस्य, [1]सहफलस्य, [2]सतत्साधनस्य च [3]क्षयो जातः। अस्य [4]क्षीणाविद्याकर्मणः **पुंसः** मुक्तिः परा भवतीति, ज्ञानोदयमात्रादे[5]वाज्ञाननिवृत्तिसिद्धेः,[6] प्राकृतस्य[7] भोगपदार्थस्यापि निवृत्तिसिद्धिरिति [8]सप्रसङ्गस्य भोग[9]पदार्थप्रकरणस्योपसंहार इति श्रेयः ॥७४–७६॥

अथ विद्यापादोपसंहाराय येन क्रमेण पुरुषोऽस्मिन्नधिकारी [10]यादृशश्च, [11]यच्चास्य फलं तत्तावत्, श्लोकद्वयेनोच्यते — 'यस्याशेष' इत्यादि ।

**यस्याशेषभवार्णवोदरगता [12]भावा [13]भवेच्छार्दिता**
**ध्वस्तास्तत्किरणोद्गतासिलतया [14]सोऽनादरात्सांप्रतम् ।**
**क्रीडन्क्रीडनकैरपीन्द्रियवशात्स्वच्छेन युक्तो हृदा**
**[15]तत्सङ्गाम्बुविधूत[16]पापपटलाः पुण्या नराः क्ष्मातले ॥७७॥**

**यस्य** पुंसो मायात्मकाशेषसंसारसमुद्रान्तर्वर्तिनो **भावाः** सर्वे एव आणव[17]कार्ममायीयबन्धलक्षणाः **भवेच्छया** परमेश्वरशक्तिपातेन **अर्दिताः** [18]परामसामर्थ्यपदवीं [19]प्रापिताः मलपरि[20]पाकापेक्षयैवेत्युक्तं प्रागेव[21]। तदनन्तरं च यस्य [22]ते एव भावाः **ध्वस्ताः** क्षयं नीताः; तस्यैव परमेश्वरस्य [23]संबन्धिनो ये **किरणाः** सर्वार्थ[24]प्रकाशकशास्त्रात्मकाः, तेभ्यः समुद्गतया [25]**असिलतया** दीक्षाख्यया। यच्छ्रूयते[26] — "दीक्षाविच्छिन्नबन्धनाः" इति। ततोऽनन्तरं [27]**सः** पुरुषः **अनादराद्** अगर्वतः **सांप्रतं** वर्तमानावस्थायाम् [28]**इन्द्रियवशाद्** इति भोगसाधनैः स्त्र्यादिभिः **क्रीडन्** भोगान् भुञ्जानः **स्वच्छेन** निर्मलेन **युक्तो हृदा** ज्ञानक्रियात्मना सद्भावेन भवति। [29]न [30]पुनर्भोगतत्साधनैर्मलिनी[31]क्रियत इत्यर्थः। यदाहुः[32] —

---

[1] सफलस्य — ऊ, ऐ.
[2] तत्तत्साधनस्य — ऐ.
[3] क्षये — ऊ.
[4] क्षीणविद्या० — आ.
[5] ०वाज्ञानिवृत्तिसिद्धेः — ए.
[6] ०सिद्धिः — ॠ.
[7] प्रकृतस्य — आ, इ, ई, उ, ॠ, ए, ऐ, औ.
[8] प्रसङ्गस्य — ऊ, ॠ.
[9] ०पदार्थस्योप० — ऊ, ॠ.
[10] यादृक्च — आ, इ, ई, उ, ए, ऐ, औ.
[11] यद्वास्य — ए.
[12] भावो — मु.
[13] भवेच्छार्पिता — ऊ, ॠ.
[14] येनादरात् — ऊ, ॠ.
[15] यद्गङ्गाम्बु० — ऊ, ॠ.
[16] पापकलुषाः — उ, ऊ, ॠ.
[17] ०कर्ममायीय० — ऐ.
[18] परमसामर्थ्यपिदवीं — आ; परमसामर्थ्यपदवीं — इ, ई, उ, ए, ऐ, औ.
[19] 'प्रापिताः' इति नास्ति — आ, ॠ; प्राप्ताः — ई, उ.
[20] ०पाकापेक्षयेत्युक्तं — ऊ, ॠ.
[21] मतङ्ग० विद्या० २६. ४५ उ० – ४८ वृत्तौ।
[22] 'ते' इति नास्ति — आ, इ, ई, उ, ए, ऐ, औ.
[23] 'संबन्धिनो' इत्यारभ्य ७८ तमश्लोकवृत्तौ 'परमेश्वरस्य' इत्यन्तो भागो लुप्तः— ऊ, ॠ.
[24] ०प्रकाशात्मक० — ई, उ.
[25] 'असिलतया' इति नास्ति — आ, ई, उ, ऊ, ॠ.
[26] रौरवे विद्या० २. २२ पू०.
[27] 'सः' इति नास्ति — ऐ.
[28] इन्द्रियत्ववशाद् — ऐ.
[29] नकारो नास्ति — ए, ऐ, औ.
[30] पुनः पुनर्भोग० — ऐ, औ.
[31] ०क्रियन्त इत्यर्थः — ए, ऐ.
[32] महाभारते १२.३०४.६

"वसन्विषयमध्येऽपि न वसत्येव [1]बुद्धिमान् ।" इति ।

[2]तस्य चैवंविधस्य पुंसः [3]संबन्धिना **सङ्गाम्बुना** अन्येऽपि **नराः** क्षालितपाप[4]मलाः **पुण्याः** एवात्र भूर्लोके भवन्ति ॥७७॥

**येनाशेषपदार्थदारुनिचितं [5]तत्त्वाश्मशङ्गोच्छ्रितं**
**विद्यारत्नसमुज्ज्वलं प्रतिदिनं ध्यातं विभोर्मन्दिरम् ।**
**तत्तेजोत्थमयूखपाशवशगः [6]प्राप्नोत्यसौ तत्क्षणात्**
**[7]प्रास्यैतां कुटिकां [8]प्रधानतृणजां पश्यत्यधस्तात्सदा ॥७८॥**

**येन** [9]मोक्षाय कारणाय **विभोः** परमेश्वरस्य **मन्दिरं** स्थानं **ध्यातम्** । [10]कीदृग्भूतं तन्मन्दिरमिति तदर्थमेतत् — [11]**अशेषपदार्थदारुनिचितमिति** । यद्यपि [12]सर्वपदार्थशब्देन [13]सर्वे एव पत्यादयस्तत्त्वभाव[14]भूतभुवनात्मकाः सहोपायपदार्थेन षडर्थराशयः प्रोक्ताः । [15]"तथाप्यत्र तत्त्वानां [16]पदान्तरोपात्तत्वाद् गोबलीवर्दन्यायेन[17] तत्त्व[18]व्यतिरिक्तभावभूत[19]भुवनात्मका एवो- च्यन्ते । [20]ते एव दारूणीव मन्दिरप्रतिपत्त्येकदेशभूतत्वात्, तैर्निचितम् । तेषां व्यापकमित्यर्थः । तत्त्वानि [21]पृथिव्यादिबिन्द्वन्तानि [22]पत्यादिपदार्थैकदेशत्वेन संगृहीतानि अश्म[23]शृङ्गाणीव सारत्वा- दुन्नतत्वाच्च, तैरुच्छ्रितम् । [24]शिवतत्त्वस्य सर्व[25]तत्त्वोर्ध्वप्राप्यत्वेनोक्तत्वात् । एवं च दार्वश्ममयं [26]यन्मन्दिरम् । [27]**विद्येति** विद्यापादोऽयम्, सैव रत्नं, तेन [28]दीपेनेव प्रकटं तथाभूतं मन्दिरं येन **प्रतिदिनं** नित्यानुष्ठेयतया ध्यातमित्युपलक्षणम् । इष्टं ध्यातं ज्ञातं चेति । यदुक्तम् —

---

[1] सिद्धिमान् — औ.
[2] यस्य — इ.
[3] संबन्धिन्या — इ, ऐ, औ.
[4] ०मलात्पुण्याः — इ, ऐ, औ.
[5] तत्त्वात्मश्रृङ्गोच्छ्रितं — मु, उ; तत्त्वात्मकूटोच्छ्रितम् — ऊ, ऋ.
[6] प्राप्नोति तस्मिन्क्षणात् — मु, उ, ओ.
[7] प्राप्यैतां — मु; प्रास्यैताः — ऊ, ऋ; पश्यैतां — ओ.
[8] प्रधानतरणात् पश्य० — उ.
[9] मोक्षाधिकारिणा विभोः — ऐ.
[10] किं भूतं तदिति — ऊ, ऋ; कीदृग्भूतजन्मान्तरमिति — ए.
[11] 'अशेष' इति नास्ति — इ, ऊ, ऋ, ए, ऐ, औ.
[12] पूर्वं पदार्थ० — ऊ, ऋ.
[13] स एव — आ.
[14] 'भूत' इति नास्ति — ए.
[15] अथाप्यत्र — ऋ.
[16] पदार्थत्वेनोपात्तत्वाद् —आ, इ, ई, उ, ए, ऐ; अपदार्थत्वेनोपात्तत्वाद् — औ.
[17] 'गोबलीवर्दन्यायः' लौकिकन्यायाञ्जलौ प्रथमभागे पृ० २५.
[18] ०व्यतिरिक्ताभावभूत० — इ, ऊ, ऋ, ए, ऐ, औ.
[19] ०भुवना एवो० — इ; ०भुवनात्मान एवो० — ऊ.
[20] अत एव — ऊ, ऋ.
[21] पृथिव्यादीनि बिन्द्वन्तानि — आ, ऋ, ए.
[22] इत्यादि० — ए.
[23] ०शृङ्गानिव — इ, ऐ, औ; शृङ्गानीव —ऊ, ऋ.
[24] 'शिवतत्त्वस्य' इत्यारभ्य 'तथाभूतं मन्दिरं' इत्यन्तं नास्ति — आ; शिवतत्त्वं सर्व० — इ, ई, उ, ऋ, ए, ऐ; उच्छ्रिततां नीतं सर्व० — ऊ; शिवतत्त्वसर्व० — औ.
[25] ०तत्त्वाध्वप्राप्य० — ई, उ, ऊ, ऋ, औ; ०तत्त्वार्थप्राप्य० — ए.
[26] 'यत्' इति नास्ति — इ, ऐ.
[27] विद्यतेति — इ.
[28] दीप्तेनैव — इ, ऐ.

[1]"सदाशिवपदं योगाच्चर्यातो वाथ" इत्यादि। **प्राप्नोत्यसावाति** [2]एवंविधाधिकारयुक्तः एवंविधश्च। [3]तदापि परमेश्वरतेजोत्थशक्तिप्रेरित [4]एव तन्मन्दिरं **क्षणात्** प्राप्नोतीति।

[5]नन्वेतदयुक्तं दीक्षयास्य तनोरक्षपितत्वेन [6]क्षणमात्रतस्तत्प्राप्तेरसंभवात्। यदुक्तम्[7] — "शिव [8]एव तनुक्षये"[9] इति। तदर्थमेतत् — [10]**प्रास्य** क्षिप्त्वा भोगेन, [11]उत्क्रान्त्या वा **एतामिति**[12] प्रत्यक्षां [13]भौवनीं [14]**कुटिकां** वेश्मस्थानीयां तनुम्। तथा प्रधत्ते [15]स्वां मूर्तिमिति [16]मायैवोपचारतः प्रधानं, तस्य तृणानीव कलादिक्षित्यन्तानि[17] [18]तत्त्वानि, तज्जां कलादि[19]सूक्ष्मदेहात्मिकामपि [20]कुटिकां प्रास्येति। अथ कथं [21]तावद्द्विरूपामपि तनुमसौ प्रास्यतीति तदर्थमेतत् — **पश्यति** अधो हेयत्वेन यतस्तां द्विरूपामपि तनुं **सदा** इति; क्रिया[22]पादवक्ष्यमाणशरीरदाहादिनित्यकर्मणा। [23]ततस्तत्क्षयसमनन्तरमेव क्षणमात्रेण प्राप्नोत्यसौ [24]तन्मन्दिरमित्यविरोधः ॥७८॥

अधुना विद्यापादोपसंहाराय क्रियापादोपक्रमाय [25]च श्लोकः —

> [26]**पादोऽयमाद्यः** [27]**प्रविभागयुक्त्या**
> **विद्यात्मकस्ते कथितो यथावत्।**
> [28]**कर्मात्मकोऽनुक्रमतस्त्ववाप्तः**
> **प्राक्सूचितो** [29]**यत्र मुने शृणुष्व** ॥७९॥

आद्यानां प्रधानत्वेन[30] संगृहीतानां पत्यादिपदार्थानां यः **प्रविभागः** [31]परस्परं प्रविवेकः, तस्य [32]**युक्तिः** अनुमानं, तया **विद्यात्मकोऽयं** [33]**पादः कथितः** इति व्याख्यातार्थोपसंहारः। अथ व्याख्ये-

---

[1] मतङ्ग० विद्या० २६. ६३.
[2] एवं वाधिकार० — आ.
[3] तथापि च परमेश्वर० — ऊ, ऋ.
[4] एव मन्दिरं — ऊ, ऋ; एवं मन्दिरं — औ.
[5] नत्वेतदयुक्तं — इ; नन्वैतदयुक्तं — ए.
[6] ध्यानलक्षणमात्र० — ऊ, ऋ.
[7] मतङ्ग० विद्या० २६. ७२ उ०.
[8] एवकारो नास्ति — इ.
[9] ०क्षयाद् इति — ऋ.
[10] अत्र 'तत्' इत्यधिकम् — आ, ई, उ.
[11] उत्क्रान्त्या शिवे तां प्रत्यक्षां — आ, ई, उ, औ.
[12] इतिशब्दो नास्ति — इ, ए, ऐ.
[13] भौवनां — आ, इ, ई, उ, ए, ऐ, औ; भवनीं — ऋ.
[14] कोटिकां — ऋ.
[15] स्वमूर्तिमिति — ए.
[16] मायैवानुपचरितं प्रधानं — ऊ; मायैवोपचरितं प्रधानं — ऋ; मायैवोपचारता प्रधानं — ए, औ.
[17] अत्र इवशब्दोऽधिकः — ए.
[18] 'तत्त्वानि' इति नास्ति — आ.
[19] सूक्ष्मदेहिकामपि — ए.
[20] 'कुटिकां' इति नास्ति — ए.
[21] तां द्विरूपां तनु० — ऊ, ऋ.
[22] ०पादे वक्ष्य० — ऐ.
[23] तत्तत्क्षय० — ऐ; तत्तत्क्रियासमन० — औ.
[24] तदित्यविरोधः — ऊ, ऋ, ऐ.
[25] चशब्दो नास्ति — ऋ.
[26] पादो विभागः प्रवि० — ऋ.
[27] प्रविभागयन्त्या — ओ.
[28] क्रियाक्रमोऽप्यत्र क्रमादवाप्तः — मु, उ, ओ.
[29] योऽत्र मुने — मु, उ; मत्तमुने — ओ.
[30] प्रधानत्वे — आ, इ.
[31] परापरः तस्य — आ, इ, ई, उ, ए, औ; क्रमपरः तस्य — ऐ.
[32] युक्ति — इ; युक्तम् — औ.
[33] पदार्थः कथितः — ऊ, ऋ.

योपक्रमः — [1]**कर्मात्मकोऽनुक्रमतस्त्ववाप्तः प्राक् सूचितो** [2]**यत्र मुने शृणुष्व** इति **कर्मात्मकः** पादः क्रियापादोऽत्राधुना [3]व्याख्यायत इति ॥

[4]इति [श्री][5]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [6]मतङ्गवृत्तौ[7]
[विद्यापादे] [8]भोगपदार्थप्रकरणं [षड्विंशं समाप्तम्]

**षड्विंशः पटलः**

[9]**इति विद्यापादः समाप्तः**[10] ॥

---

[1] क्रियाक्रमोऽनुक्रमावाप्तः — आ, ई, उ; क्रियात्मकोऽप्यत्र क्रमादवाप्तः — ए.

[2] योऽत्र मुने शृणु ममात्मकवक्त्रादिति क्रिया० — आ, इ, ई, उ, ए, औ; योऽत्र मुने शृणुष्व मा वृक्तादिति क्रिया० — ऐ.

[3] व्याख्येय इति — आ, ई, उ, ए.

[4] इतिशब्दो नास्ति — ऊ, ऋ, ए.

[5] 'भट्ट' इति नास्ति — आ, इ, ई, उ, ऐ, औ.

[6] श्रीमन्मतङ्गवृत्तौ — आ, ई, उ, ऊ, ऐ, औ; श्रीमतङ्गवृत्तौ — ए.

[7] अत्र 'त्रिपर्वपदार्थे' इत्यधिकम् — ऋ.

[8] भोगपादप्रकरणं — ऊ, ऋ.

[9] 'इति विद्यापादः समाप्तः' इत्यत्र 'समाप्तः' इति दृश्यते — ई; "समाप्ता च मतङ्गतन्त्रार्थप्रकाशिका विद्यापादविवृतिः । 'श्रीमद्विद्यापादे नारायणकण्ठसूनुना रचिता । वृत्तिरियं मातङ्गी काश्मीरिकभट्टरामकण्ठेन ॥" इति दृश्यते — ऊ, ऋ; 'समाप्तश्चायं विद्यापादः' इति दृश्यते — ए. पुष्पिकायाः परतः 'हरिः ओम्, शुभमस्तु' इत्यधिकम् — आ; 'हरिः ओम् । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः (விபவ ஞு வைகாசி மாஸம் ய௱௨ मतङ्गवृत्ति எழுதி முகிஞ்சுது.) — इ; 'शिवशक्तये नमः । सुन्दरलिङ्गपण्डारनाम्न इदं पुस्तकम् । विभववर्षे भाद्रपदमासे कृष्णपक्षे तृतीयायां बुधवासरे स्वातीनक्षत्रे शुभलग्नशुभयोगे अन्नदानकुलजातेन कमलप्पण्डारनाम्नः स्वहस्तेन लिखितः । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । सुन्दरलिङ्गपण्डारनाम्नः स्नेहितं सार्वथाकालमस्तु । कमलाम्बिकायै नमः' इत्यधिकम् — ई; 'श्रीमच्छ्रीकण्ठगुरुभ्यो नमः' इत्यधिकम् — ए; 'शिवार्पणमस्तु ग्रन्थसंख्या ५८००' इत्यधिकम् — ऐ; 'करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । गणपतये नमो नमः । ब्रह्मपुरं, व्याघ्रपुरं, बदरिकारण्यं, सिद्धक्षेत्रं, [अवि]मुक्तं, काशी, भुचरण्यं पुरं, श्रीमद्आदिचिदम्बरं, मङ्गलं पुरम्' इत्यधिकम् — औ.

[10] 'ऐ' कोशे ग्रन्थसमाप्त्यनन्तरमयं भागोऽधिकतया लभ्यते ।

लेखकपरिचयः —

योगीन्द्रनाथफणिभूषणपादपद्म-
द्वन्द्वाश्रितस्य मकरन्दजगन्धलोभात् ।
संचालितस्य प्रतिकूलसमीरणेन
विप्रस्य चैष प्रतिलेखविधौ प्रयासः ॥
'मेदिनीपुर'देशीय 'मालञ्च' ग्रामवासिनः ।
नानाशास्त्रसुनिष्णातश्रीनाथतातसेविनः ॥
शाके पक्षाङ्गवस्विन्दुमिते विंशतितमे दिने ।
पञ्चाननस्य यत्नेन लेखोऽयं शेषतां गतः ॥

२३४७ वङ्गाब्दीयसौरवैशाखमासस्य विंशतिदिवसे शुक्रवासरे एकादश्यां तिथौ (१९४०) खृष्टाब्दीय मेमासस्य तृतीयदिवसे इं राजाधिकृतकालिकाताराजकीयमहाविद्यालय (संस्कृतकालेज्) ग्रन्थागारे लेखोऽयं शेषतां गतः ॥ शुभमस्तु ॥ श्रीपञ्चाननदेवशर्मा (तर्कसांख्यवेदान्ततीर्थः)

# अनुबन्धः

[विद्यातत्त्वप्रकरणे २६–२८ श्लोकप्रभृति बुद्धितत्त्वप्रकरणे २४ तमश्लोकपर्यन्तं 'ऊ, ऋ' कोशयोः परमुपलभ्यमानाया रामकण्ठीयमतङ्गवृत्तेः स्थाने विजातीया काचन अनिर्दिष्टकर्तृका वृत्तिः 'ऐ' कोशे परमुपलभ्यते, सेयं वृत्तिरत्रानुबन्धे दीयते। मूलश्लोकसंख्या वृत्तेरन्ते दत्तास्ति। वृत्तिरशुद्धभूयिष्ठत्वाच्छोधिता। मातृकापाठाः टिप्पण्यां दीयन्ते। ३२० तमपृष्ठे २७ तमसंख्यागता टिप्पण्यपि द्रष्टव्या।]

## दशमः पटलः

## विद्यातत्त्वप्रकरणम्

... [1]प्रसवस्वभावमलश्चानात्मन्यात्माभिमानात्मकः, तत्सर्वं निर्दग्धं भवति। ततो[2]ऽग्निरिवाग्निः। **साधकः** निर्विघ्नं तं [3]मन्यते। परमोक्षं यातीति ॥२६–२८॥

ततः प्रसङ्गात् पुनर्मतङ्गमुनिः — "**आशयो नाम**" इत्यादि। ननु कोऽयं प्रश्नः पूर्वं [4]शुद्धविद्यातत्त्वप्रकरणनिरस्तत्वात् पुनरुक्त एव। सत्यम्। पूर्वं दीक्षया सर्वपाशविशुद्धौ समनन्तरमेव शरीरपातप्रसङ्ग इति प्रश्नः। तत्समाधिश्च सद्योनिर्वाणदीक्षायां सर्वबन्धक्षयेऽपि कियन्तं कालं —

[5]"तिष्ठति संस्कार[6]वशाच्चक्रभ्रमवद्धृतशरीरः" इत्युक्तम्।

असद्योनिर्वाणदीक्षायां तु आरब्धकार्यकर्माक्षिप्तपाशानामपरिशोध्यत्वान्न शरीरपातप्रसङ्ग इति। अत्र तु **आशय**शब्देन आरब्धकार्यकर्मोद्भूतशरीराद्यर्थ उच्यते। स च सुखदुःखसंवेदनरूपभोगे आत्मकार्यत्वं न यस्य स तदालम्बनेन स्थितो नान्यथेत्यर्थः। **स तु अणोः** दीक्षितस्य शुद्धविद्यात्म**ज्ञानोदये** सति ज्ञानाग्निना निर्दग्धो भवति। [7]तदास्य

[8]"न हृष्यत्युपचारेण नापकारेण[9] कुप्यति।
यः समः सर्वभूतेषु जीवन्मुक्तः स उच्यते।"

इति न्यायतः परमुक्तात्मन इव सुखदुःखभोगसंवेदनग्रहणलिङ्गस्य रागद्वेषादेरभावात् **किमर्थं** श्रूयतेऽस्य शरीरादिरिति दीक्षोत्तरकालविषयप्रश्नः। ततो नात्र पुनरुक्तिदोषः ॥२९॥

अत्र समाधिः — [10]"**यथोष्णदग्धबीजानि**" इत्यादि। नैतदनैकान्तिकत्वात्। तथा हि —

---

[1] ३२० तमपृष्ठे १४ तमपङ्क्तिमारभ्य व्याख्येयं प्रारभ्यते।

[2] ०ऽग्निरिवाग्निसाधकः — ऐ.

[3] मन्वते — ऐ.

[4] मतङ्ग० विद्या० ७. ५९–६२.

[5] सांख्यकारिका ६७ उ०.

[6] ०वशाच्चक्रममृतशरीरः — ऐ.

[7] तदाश्यात् पृषत्युपचारेण — ऐ.

[8] आकरो न लभ्यते।

[9] त्रव्यति — ऐ.

[10] 'यथोष्णदग्ध' इति पाठः एतद्व्याख्यातृसंमत इति भाति।

**यथा लोके** अग्निना दग्धव्रीह्यादिबीजानि स्वकार्याङ्कुरोत्पत्ति[1]निमित्तत्वेन न स्थितानि। किं तु स्थित्यर्थमेव। तथा **अस्मिन्** अपि पुरुषे **शरीराणि** इति बहुवचनात् स्थूलसूक्ष्मपररूपाणि स्थित्यर्थं स्थितान्येव ॥३०॥

ननु स्थितिनियमः कः, [2]अफलं मध्ये वेत्युच्यते — "**प्राक्तनस्य**" इत्यादि। **प्राक्तनस्य** संचितकर्मणां मध्ये परिपाकवशात् कस्यचित् फलोन्मुखस्य जात्यायुर्भोगप्रदत्वेन स्त्रीरूपस्य "इयमस्यात्मनः **उपभोगाय** [3]स्थातव्या" इतीश्वरेण [4]**निबद्धस्य** अतिलङ्घयितुमशक्यतया तस्य स्थित्यन्तमेव स्थितिनियमः। तस्य भोगतः क्षये शरीरादेः **क्षयः** इति। ननु तत्स्थित्यर्थं वर्तमानस्य आगामिनः कर्मणः सत्त्वात् तस्य का वार्तेत्युच्यते — **आगामिनश्चापि दग्धबीजस्य क्षयः** इति। शिवमन्त्रेण निरुद्धबलत्वादूषरोप्तबीजमिव [5]क्षीणप्रायमेव। न हि फलाय [6]कल्पत इति भावः। **नान्यथा** इति बलवद्विशेषशास्त्रव्यतिकरजातस्य शिवमन्त्रेणानिरुद्धस्य [7]आगमातिक्रमणस्य न क्षयः, फलाय [8]कल्पत एव। तदुक्तम्[9] —

"आज्ञाविलङ्घनात्प्रोक्तं क्रव्यादत्वं शतं समाः।" इति ॥३१॥

अत एव "[10]**उपायोऽपि परः**" इत्यादि। **वासना** संसारवासना तस्या **अन्तः** दीक्षोत्तरकालभाविपरोन्मुखीभावः तस्मिन् निर्विघ्नमोक्षावाप्तये परमेश्वर[11]प्रणीतत्वेन **परः** निरतिशयफलप्रदसामान्यादिशास्त्र[12]विहितेभ्यः **सूक्ष्मः** साधने लघीयान् **उपायः** **व्यवस्थितः** तत एवेति निश्चितः ॥३२पू०॥

कोऽसावुपाय इत्युच्यते — "**अनात्मन्यात्मभावः**" इत्यादि। सर्वेषां मुख्यबन्धकारणं यः **अनात्मन्यात्मभावः**। स एव नान्यः। ततस्तं परित्यज्य, **निर्विशङ्कः** इति पृथिव्यादिशिवान्ततत्त्वज्ञानेन पृथिव्यादिविषये असन्दिग्धप्रक्रियाज्ञानाभ्यासयुक्तः सन्, तदुक्तम्[13] —

"न परं प्रक्रियाज्ञानान्न [14]शमात्परमं सुखम्।
[15]न योगात्परतः सिद्धिर्न [16]शर्वाद्व्यापकं परम्।" इति ॥

[17]**परावस्थः** इति परमात्मन्यैक्यभावनाविष्टो यो वर्तते स एव निर्विघ्नः। तदुक्तं श्रीमन्**मृगेन्द्रे**[18] —

---

[1] ०निमित्तेन स्थीयते। किं तु — ऐ.
[2] आवृलमध्ये — ऐ.
[3] स्थातव्यम् — ऐ.
[4] निबन्धस्य — ऐ.
[5] क्षयप्रायमेव — ऐ.
[6] कल्प्यत — ऐ.
[7] आगमरेनाणवत्वाग्निशयः — ऐ.
[8] कल्प्यत — ऐ.
[9] 'समयोल्लङ्घनात्प्रोक्तं क्रव्यादत्वं शतं समाः' इति सार्धत्रिशतिकालोत्तरे २५. २ उ०.
[10] 'उपायोऽपि सूक्ष्मो परः वासनान्तो व्यवस्थितः' इति पाठः एतद्व्याख्यातृसंमतः।
[11] ०प्राणितत्त्वेन — ऐ.
[12] ०विहीनेभ्यः — ऐ.
[13] सर्वज्ञानोत्तरे विद्या० ५. ५
[14] क्षमात्परमं सुखम् — ऐ; शिवाद्व्यापकं परम् — मुद्रितसर्वज्ञानोत्तरपाठः।
[15] नियोगात्परतः — मुद्रितसर्वज्ञानोत्तरपाठः।
[16] सर्वाद्व्यापकं परम् — ऐ; शमात्परमं सुखम् — मुद्रितसर्वज्ञानोत्तरपाठः।
[17] 'परावस्थः' इति पाठः एतद्व्याख्यातृसंमतः।
[18] मृगेन्द्रे योग० श्लो० ५२. 'सर्वान्पदार्थान् संत्यज्य शिवतत्त्वं समभ्यसेत्' इति।

[1]"हेयान्पदार्थान्संत्यज्य शिवतत्त्वं सदाभ्यसेत् ।" इति ।
तदुपाययुक्तः **क्रीडन्नपि** सहस्रस्त्रीविषयासक्तोऽपि **न बाध्यते** पद्मपत्रे पय इव तत्रासक्त्यभावात् कोटिश आगामिभिः [2]कर्मभिर्युक्तोऽपि पुनः संसारी न भवतीति भावः ॥ ३२उ०–३३पू० ॥

पद्मपत्राप इव तत्रासक्त्यभाव इति केन लिङ्गेन गम्यत इत्यत्रोच्यते — '**गतिः**' **सर्वत्र**' इत्यादि । सर्वपुरुषाणां **सर्वत्र** सर्वव्यवहारेषु **गतिः** प्रवृत्तिः रागवशात् सुखभोगाभिलाषात् **वासना-वशवर्तिनी** तत्तज्जातितत्तद्योनिवासनानुरोधेनोत्पन्ना **विख्याता** प्रसिद्धा । तेषु मध्यात् [3]**सिद्धे** परो-न्मुखीभावपुरुषे तु पूर्वं **यथा रागवशात्** प्रवृत्ता **बन्धुवर्गे**ऽपि पुत्रमित्रकलत्रादिषु च **तथा न** प्रवृत्ता । किं तु **विपन्नाः** अहःप्रवृत्तप्रदीपवद् [4]विषयानुन्मुखीभावेन नष्टा सा प्रदृश्यते । [5]**तदा** तदायं **विरक्तः** इति **ध्रुवं** निश्चेतव्यमिति ॥३३उ०–३४॥

अथ सातिरिक्तप्रासङ्गिकमुपसंहरति — "**जीवन्नपि**" इत्यादि । **यः** परमात्मैक्यभावनायुक्तो **भवार्णवात्** संसारसागरात् **विरक्तः जीवन्नपि** [6]शरीरादिभिश्च स युक्तोऽपि मुक्तात्मवद्विषया-सक्त्यभावेन केवलं **स्थित्यर्थम्** एव वर्तते, तस्य **न बन्धः** इति । आरब्धकार्यकर्माक्षिप्तं, मलादि-पाशाश्च, आगामिकर्मपाशाश्च अस्य बन्धत्वेन न [7]प्रवर्तन्त इत्यर्थः ॥३५॥

एवं प्रासङ्गिकं समाप्य प्रकृता शुद्धविद्योत्पन्ना, पूर्वा वाविद्या च किं करोतीत्युच्यते — "**चर्या येयम्**" इत्यादि । यस्मिन्पुरुषे शुद्धविद्योत्पन्ना **बन्धप्रध्वंसिनी** तस्य सर्वपाशक्षयं कृत्वा तस्मिन्न-नादिसिद्धसर्वज्ञत्वसर्वकर्तृत्वशिवत्वमभिव्यज्य सर्वविषयतां च करोति । तदनुत्पन्नपुरुषे पूर्वोक्ता '**येय-मविद्याख्या चर्या** अनात्मन्यात्मभावना वासनास्य **सर्वबन्धस्य कारणं** भवति ॥३६॥

**अथैकस्मिन्** पुंसि, विद्या च शुद्धविद्या च सांकर्येण स्वं स्वं व्यापारं करोति वा पृथगित्य-नयोर्विभागः क्रियते — "**तावद्बलवती**" इत्यादि । **यो यावत्**, [9]अदग्धस्रोतोऽधिष्ठात्र्या वामा-शक्त्या प्रेरितो[10]ऽविद्याविष्टो विद्यातत्त्वोन्मीलितया [11]अनात्मादिष्वात्माभिमानादिरूपया चित्तवृत्त्या युक्तः सन् **भोगात्** प्रकृत्यन्ततत्त्वेषु जातस्रक्चन्दनवनितादिसुखभोगात् **परं** [12]मुख्यः पुरुषार्थः **न हि** क्वचिदपि नास्तीति **जानाति** मन्यते; **तावत्** तस्मिन् पशुसंततौ बद्धात्मनि **पाशवी** कलोद्भूता विद्या **बलवती** मोहिकसामर्थ्ययुक्ता स्वव्यापारं करोति । नात्र शुद्धविद्याप्रगम इति **ज्ञेया** मन्तव्या यदा तस्मिन्नेव पुंसि मलपरिपाकवशात् परमेश्वरशक्तिर्निपतति **तदा अविद्यां** [13]मोहिकामविद्यां **प्रोत्सार्य** उन्मूल्य **विद्या** शुद्धविद्या तस्मिन्पुंसि अनादिसिद्धं सर्वज्ञत्वसर्वकर्तृत्वरूपं बलं **सादरं** सर्व-विषययुक्तं यथा भवति तथाभिव्यज्य [14]स्वव्यापारं पृथगेव **करोति** । नात्र सांकर्येणेति ॥३७–३८॥

---

[1] पाठोऽयं मृगेन्द्रवृत्तिकारेणोद्धृतः ।
[2] कर्मभिरुक्तोऽपि — ऐ.
[3] 'सिद्धे विपन्ना दृश्यते ध्रुवम्' इति पाठः एतद्व्याख्यातृसंमतः ।
[4] विषयोन्मुखीभावेन — ऐ.
[5] 'तदा' इति पाठः एतद्व्याख्यातृसंमतः
[6] शरीरादिश्च — ऐ.
[7] प्रवर्तत — ऐ.
[8] येयं विद्याख्या — ऐ.
[9] दग्धस्रोतो० — ऐ.
[10] ०ऽविद्याविष्टविद्या० — ऐ.
[11] आत्मादिष्वात्माभि०
[12] मुख्यं — ऐ.
[13] मौहिकां विद्या — ऐ.
[14] स्वव्यापारे — ऐ.

अथानयोरुपसंहारायोच्यते — "**एवं परा**" इत्यादि। **एवं** पूर्वोक्तप्रकारेण भोगदशायाम् **अपरा** विद्या स्वव्यापारं करोति। **परा** विद्या मुक्तिदशायां स्वव्यापारं करोतीति मन्तव्या ॥३९पू०॥

एवं तत्त्वरूपेण विद्यातत्त्वं प्रसाध्य भुवनरूपेणापि त्रिपर्वपदार्थैकदेशप्रख्यापनायोच्यते — "**तस्यां ये**" इत्यादि। **एते रुद्राः** कलाभुवनेश्वरा इव न परमेश्वरनियुक्ताः, अनन्तपरमेश्वरनियुक्ता एव। **भुक्तिमुक्तिप्रदाः** इति स्वभुवनादधोवर्तिसर्वरुद्राणां गुरुत्वे नियुक्ता एवेत्यर्थः ॥३९उ०–४४॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः — "**द्विषट्कमाला**" इत्यादि। **भुवनेश्वराणाम्** एकशिवादिभुवनेश्वराणां या **द्विषट्कमाला** पङ्क्तिः अत्रोक्ततयाध्याहार-तया **आश्रिता** तद्भुवनाधारतया स्थिता। **कारणतुल्यवीर्या** स्वकारणकलया तुलितं [1]वीर्यमात्मनां ज्ञानशक्त्युन्मीलनं यस्याः सा **विद्या** विद्यातत्त्वम्। **विभज्य** पराविद्याया [2]अस्या विभागं कृत्वा **समासतः** संक्षेपयुक्त्या **कथिता** प्रोक्तेत्युपसंहारः। अथ व्याख्येयस्योपक्रमः — **अधुना** विद्यातत्त्वाद-नन्तरं प्रवृत्तिक्रमेणोपस्थितो **रागः** रागतत्त्वं **विस्तरतः** यथा प्रमाणसिद्धो भवति तथा विस्तरीकृत्य **अभिधास्ये** वक्ष्ये इत्युपक्रमः ॥४५॥

इति श्रीमन्मतङ्गवृत्तौ विद्यातत्त्वप्रकरणम् ।

**दशमः पटलः**

---

[1] वीर्यमात्मनो ज्ञानशक्त्युमनसा . . . स्याः सा — ऐ.

[2] अस्य अविभागं — ऐ.

# एकादशः पटलः

## रागतत्त्वप्रकरणम्

**अथ** इति त्रिपपर्त्रंदार्थैकदेशविद्यातत्त्वव्याख्यानादनन्तरं रागतत्त्वमभिधास्य इति पूर्वक्रियाभिसंबन्धः। [1]पदार्थादिसंबन्धः पूर्ववत्। वाक्यात्मकस्तु —

"यथा रागवशात्सिद्धे विपन्ना दृश्यते ध्रुवम्।"

इत्यादिभिरनेकविध एवेति।

अथ रागतत्त्वोत्पत्तिक्रम उच्यते — **अथ** विद्यातत्त्वोत्पत्त्यनन्तरं **तस्मादाश्रयात्** यस्माद्विद्यातत्त्वं जातं तत्कारणभूतात् कलातत्त्वात् **सूक्ष्म** आत्मगतत्वेन प्राकृताद्रागात् सूक्ष्मो **रागः** जायते। कस्य विषय इत्युच्यते — **अणोरस्य** प्रलयकेवलस्य **वेगतः** इति तत्कर्मणां मध्ये परिपाकवशाद् [2]वेगतः। फलदानोन्मुखीकृतं यत्कर्म तद्भुक्त्यर्थं **कलाविद्धस्य परमेश्वरेण** कलया संबन्धीकृतस्य ततो **विसृतस्य** [3]विकसितकर्तृभावस्य। **विद्ययोन्मीलितस्य** विद्यातत्त्वेनोद्दीपितज्ञानशक्तियुक्तस्य। [4]**प्रवृत्तस्य** किंनिमित्तं जायते [5]प्रवृत्तिः, यस्मादभिलाषेण विषयग्रहणकाङ्क्षया [6]प्रवृत्तः। यतः सोऽनिच्छन्न प्रवर्तते, तदभिलाषकारणतया रागो जातः। एतदुक्तं भवति — [7]यो यतः प्रवर्तते तथायमपि भोगाभिलाषेण प्रवर्तते [8]ततो धिष्ण्यमलावृतत्वेन केनापि कारणान्तरेणो मीलकेन। ईश्वरेच्छावन्न स्वतः [9]प्रवृत्तः। ततोऽस्याभिलाषजनकेन केनापि भवितव्यमिति तत्कारणतया रागो जातः ॥१–२०पू॥

अथ तत्सिद्धौ लिङ्गानि प्रपञ्चेनोच्यन्ते — "[10]**येनाणू रञ्जितः**" इत्यादि। येन अशुद्धेन रागेण **रञ्जितः** रागयुतो भवति सः **अणुः** आत्मा [11]**क्षिप्रम्** विशेषतया **भोगभुक्** अनित्याशुचिदुःखानुषङ्गान् भोगान् भुङ्क्ते। किं च **भोगतत्परः** तद्भोगान्संपादयितुं सर्वदोद्युक्तो भवति। किं च **तेषु** भोगेषु **सहसा प्रीतिं बध्नाति** पर[12]स्त्र्यादिष्वभिलाषित्वेनातिमात्रेण। स्वस्त्र्यादिषु वासक्तो भवति। किं च **यया** प्रीत्या तेषु परस्त्र्यादिष्वभिज्ञैर्निरुद्धोऽपि **निमज्जति** अपरित्याज्यो भवति। किं च भोगान् परस्त्र्यादिभोग्य[13]वस्तूनि **आनन्दाह्लादकत्वेन** आनन्दजनकत्वेन आनन्दः [14]परो मोक्षः, तेन जनित आह्लादो निरतिशयसुखं सः। तेषां स्त्रियो [15]दिविष्ठा या आघ्राता इत्यानन्दाह्लादकाः, तेषां भावः आनन्दाह्लादकत्वं तेन **विभाव्यते** मन्यते। तज्जन्याह्लाद एव परा मुक्तिरिति लोकायतादयो मन्यन्त इत्यर्थः। किं च तन्मयेन आत्मभावनां [16]त्यक्त्वात्मानं विषय-

---

[1] पदार्थसंबन्धः — ऐ.

[2] वेगता — ऐ.

[3] विकसितस्य कर्तृ० — ऐ.

[4] 'प्रवृत्तस्य' इति नास्ति — ऐ.

[5] प्रातिः — ऐ.

[6] प्रवृत्ते . . . सोऽनिनच्छन्न — ऐ.

[7] यो यः प्रवर्तते — ऐ.

[8] ततो दिष्णया मलावृत्तत्वेन — ऐ.

[9] प्रवृत्ताः — ऐ.

[10] 'येनाणू रञ्जितः' इति पाठः एतद्व्याख्यातृसंमतः।

[11] क्षिप्रे विचारतया भोगभुक् — ऐ.

[12] ०स्त्र्यादिष्वपालत्वेन मात्रेण — ऐ.

[13] ०वस्तून् — ऐ.

[14] परं — ए.

[15] दिविष्टया . . . घृत इत्यानन्दा० — ऐ.

[16] त्यक्तात्मानं — ऐ.

स्वरूपेण विभाव्यते। किं च [1]**सदा स्निग्धतया** स्नेहभावेन तान् **भोगान्** जुगुप्सितत्वेऽपि **परित्यक्तुं नोत्सहेत**। एवंभूतै रागिगतविकारैर्लिङ्गैः रागोऽनुमीयत इत्यर्थः ॥२३०-४पू०॥

अथैवंभूतं प्रबलवीर्यं रागस्य केन कारणेन लभ्यत इत्यत्रोच्यते — [2]"**समीपवर्तिमायातः**" इत्यादि। मायायाः [3]प्रथमक्षोभ्यत्वाद् मोहकत्वाच्च समीपवर्तिमाया कलोच्यते। ततः **क्षुरितः** येन कारणेन तदुत्पन्नः, तेन कारणेन च। किं च पशुत्वेन मलेन युक्तेनात्मना **सह येन** कारणेन **उपरक्तः** संयुक्तः, तेन कारणेन च। यदुक्तं **श्रीमत्स्वायम्भुवे**[4] —

"यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किंकृता।
[5]मुक्ते पुंसि न तद्भोगो [6]जाघटीति विपश्चितः॥" इति।

अतः स्वरागो बलवान्भवति। अत एव ब्रह्मज्ञानादिसहस्रसद्गुणयुक्तोऽपि येन जन्येन **लौल्येन** [7]लोलायाः परमप्रीत्याः भावो लौल्यं तेन परस्त्र्यादिष्वभिलाषेण युक्तश्चेद् **रागी** सोऽयं [8]रागयात्माभिभूतो न विरक्त इति लोकैः **समुपलक्ष्यते** सम्यग्दृश्यते ॥

एवंभूतस्य बलवतोऽति[9]बलवान् सहायोऽपि संयुक्त इत्युच्यते — "**सति तस्मिन्**" इत्यादि। **तस्मिन्** रागे पशुत्वेन मलेन [10]संयुक्तमोहकत्वे च विद्यमाने [11]**सति**। **प्रधानात्मा** प्रधानजन्यगुणजन्यत्वात् प्रधानशब्देनात्र बुद्धिरुच्यते। तस्या आत्मस्वरूपो ऽवैराग्यो [12]गुणः सप्तमो महान्यतो बुद्धितत्त्वपटले[13] —

"बुद्धिस्तस्य [14]तमोपेता किंचिद्रागानुवासिता।
कारणेच्छेरिता भोक्तुरवैराग्येण वर्तते॥"

इति वक्ष्यमाणत्वात् **स्थूलः** ग्राह्यगतः। अयमभिप्रायः — ग्राहकगतः सूक्ष्मो यो रागः सामान्यरूपेण विषयग्रहणे प्रवृत्तिं जनयित्वा तिष्ठति। तत्रात्माक्षद्वारेण विषयान् गृहीत्वा बुद्ध्याध्यवस्थितो यदा भवति, तदा हेयोपादयोपेक्षाबुद्धिर्जायते। [15]तत्रोपादेयतया बुद्ध्यादौ विषयाणां सौन्दर्यादिगुणास्तेषु पूर्वं भुक्तसुख[16]वासनया तु जन्यन्ते। सैव बुद्धिगतो रागः सर्ववादिभिर्दृष्टत्वाच्च परिमित इति। ननु पूर्वं,

"[17]मोहो मदश्च रागश्च विषादः शोष एव च।
[18]वैचित्र्यमथ हर्षश्च सप्तैते सहजा मलाः॥"

---

[1] 'सदा' इति पाठः एतद्व्याख्यातृसंमतः।
[2] 'समीपवर्तिमायातः' इति पाठः एतद्व्याख्यातृसंमतः।
[3] प्रथमक्षोपकत्वात् — ऐ.
[4] स्वायम्भुवे ३३. ४.
[5] शुद्धे पुंसि — स्वायंभुवपाठः।
[6] जायते . . . ता स्वरागो — ऐ.
[7] लोलाया परमप्रीत्या भावं — ऐ.
[8] रागात्माभिभूतो — ऐ.
[9] ०बलवानसाहायोऽपि — ऐ.
[10] संयुक्तत्वं मोहकत्वं च — ऐ.
[11] 'सति' इत्यत्र 'सत्यपि' इति दृश्यते — ऐ.
[12] गुणसप्तमाहायतो — ऐ.
[13] मतङ्ग० विद्या० १७. १४८.
[14] 'तमोपेता' इति पाठः एतद्व्याख्यातृसंमतः।; अत्र 'तमोपेता' इति प्रयोग आर्षः।
[15] तत्रोपादेया बुद्ध्यादिविषयाणां — ऐ.
[16] ०वासनया त्वजन्यते — ऐ.
[17] मतङ्ग० विद्या० ६. १०३ उ०, १०४ पू०.
[18] वैचित्र्यमभाषाख्यश्च — ऐ.

इत्युक्तम्। तत्र रागोऽप्याणवमलोद्भवः [1]स्थितः, तं विहाय प्रधानात्मा रागोऽत्र किमर्थमुच्यते। सत्यम्[2]। निष्कलात्मनि मलसद्भावेऽपि तस्मिन्मदादयो नो दृष्टाः सकलात्मन्येव दृष्टास्तस्मान्मले सति बुद्धौ तत्त्रिगुणात्मकत्वेन जाता मदादय एवात्र "मोहो मदश्च रागश्च" इति मलकार्यत्वेनोक्ताः। न ते मलस्य पृथक्कार्या इत्यतोऽत्र नोक्तः। अतः सूक्ष्मस्थूलरूपेण [3]रागद्वय इति [4]मन्तव्यः। [5]**तं प्रति युज्यते** तेन युक्तो भवति। **पश्चाद्** विषयजन्यरागोत्पत्त्यनन्तरं **ततः** तेन **एकीभूतः क्षणात् बलवान् जायते**। स्वयं बलवान् सहाययुक्तोऽत्यन्तबलवान्भवतीति किं पुनरिति भावः ॥४उ०–६पू०॥

उक्तार्थोपसंहारायोच्यते — "**येनाभिभूतः**" इत्यादि। **येन** प्राकृतरूपरागेण **अभिभूतः** सन् स रागो **बाह्येषु प्रत्ययेषु** स्रक्चन्दनवनितादिगुणग्रहणबुद्धिषु [6]**अनुरज्यते** अतिप्रीतिदो भवति। **तेन** कारणेन **अयं** रागः **सुखदः** इति **प्रोक्तः**, ततश्चाति[7]बलवान् स्यात्। **तद्वीयणोपबृंहितः** एवंभूतबलवतो रागस्य देहरूपवीर्येण युक्तो यो संसारी [8]**स मूढः** [9]शिवाद्यविज्ञानतः, **तत्परो भूत्वा** विषयग्रहणात्परमन्यत् किमपि नास्तीति मत्वा **सुखमेवानुमन्यते**। दुःखाभिभूता विषयग्रहणबुद्धिः सुखरूपेण [10]ज्ञाता भवति ॥ ६उ०–७॥

अथैवं पूर्वोक्तन्यायेन प्राकृतेन रागेण संयुक्तो यो रागो बलवान् भवति यदि प्राकृत एवोक्तः। किमन्येन विवक्षितेनेत्यत्रोच्यते — "[11]**तस्मादणुः**" इत्यादि। **तस्मात्** पूर्वोक्ताद् ग्राहकगताद्रागात् **विरक्तात्मा** विषयोन्मुखाद्विनिवृत्तस्वेच्छारूपो यस्य सः **अणुः** आत्मा, **विचेतनेन** मोहरूपेण **सान्द्रेण** विषयं प्रति निबिडेनैवंभूतेन **बलीयसा प्राकृतेन** रागेण **अभिरञ्जितुं न शक्यते**। स निर्दोषविरक्तो भवति। यदा अस्माद्रागादविरक्तः, विषयत्यागापेक्षया प्राकृताद्रागाद्विरक्तो यो भवति स निर्दोषविरक्तो न भवति। यथा नेत्रं दृश्याभावे सदपि न किंचित्करं स्यात्, तथा विषयाभावाद्विरक्त इति वीतरागाभावः प्रसज्यत इति रागद्वयमपि विवक्षितमिति भावः ॥८॥

अथात्मनां ज्ञत्वकर्तृत्वकारकद्वयादिच्छाकारकत्वेन रागो मुख्यकारकमित्युच्यते — "**कलयोद्भूतसंयोगात्**" इत्यादि। प्रलयकाले **पुंसश्चात्मनः कलया** [12]**विद्यया** च सहानुद्भूतसंयोगान्न वासनाप्रवृत्तिस्तदास्तु। **विधौ** सृष्टिकाले ताभ्यामुद्भूतसंयोगे सत्यपि ज्ञानक्रिययोः प्रवृत्तिर्न दृष्टा। किं तु **रागवशाद् यदा प्रदृश्यते तदा** ततो राग एव **ध्रुवं** मुख्यकारणम्। अयमर्थः — आत्मनो ज्ञानक्रिययोरुन्मीलने [13]सत्यप्यनिच्छतस्तस्य प्रवृत्त्य[14]योगाद्दीक्षोल्लेखनकृद्रागोऽस्य प्रधानकारकमिति ॥९॥

---

[1] स्थितं विहाय — ऐ.
[2] 'सत्यम्' इत्यस्यानन्तरं 'मलकार्यत्वे' इत्यधिकम् — ऐ.
[3] रागत्रय इति — ऐ.
[4] मन्तव्याः — ऐ.
[5] संप्रति — ऐ.
[6] अनुरञ्जते — ऐ.
[7] ०बलात् स्यात् — ऐ.
[8] 'स मूढः' इति पाठः एतद्व्याख्यातृसंमतः।
[9] शिवाद्यविज्ञातः — ऐ.
[10] ज्ञायतो भवति — ऐ.
[11] 'तस्मादणुः' इति पाठः एतद्व्याख्यातृसंमतः।
[12] विद्या सहा — ऐ.
[13] सत्यप्यनिच्छितस्य — ऐ.
[14] ०योगाद्दीक्षोल्लेखन० — ऐ.

अथैवंभूतरागाभिभूतस्यात्मज्ञानं च शिवादिज्ञानं च नास्तीत्युच्यते — "प्रध्वस्तात्मगुणो भूत्वा" इत्यादि। **प्रध्वस्तात्मगुणः** आत्मगुणः सर्वज्ञतादि। तदुक्तं श्रीमत्**सर्वज्ञानोत्तरे**[1] —

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च निरामयात्मा विशुद्धदेहः स शिवत्वमेति।" इति।

प्रध्वस्ताश्च ते आत्मगुणा यस्य सः। अत एव कलादिना जन्यकिंचिज्ज्ञ[2]त्वाद्यपरगुणो **भूत्वा** रागादिना **मोहितः** सन् आत्मानं च **न विजानाति**। किं च **यत् स्वाभिजनं** स्वस्य रूपबोधकजनं स्वाभिजनमाचार्यादि यस्य तत् स्वाभिजनं परकैवल्यम्। **तत्** किंभूतं **दिव्यं** स्वप्रकाशरूपं, न तु वेदान्तवादिनामिव स्वस्य परमालयरूपम्। **अविनाशि** बौद्धादीनामिव स्वस्य सर्वस्य विनाशो न भवतीत्यविनाशि। लोकायतादीनामिव न **जुगुप्सितम्**। **नित्यं** [3]कापालिकादीनामिव नोद्भवम्। **अत्यन्तम्** [4]अतिक्रान्तमन्तं यस्येति अत्यन्तं सत्त्वसंभोगवामवन्नान्तयुक्तम्। **अमलं** सांख्यानामिव न मलयुतम्। **असादृश्यगुणान्वितं** सूर्यादिसारूप्यपक्षस्येव न सादृश्यगुणान्वितम्। **अनभिप्लुतसामर्थ्यं** [5]महाव्रतादीनामिव न स्वसामर्थ्यस्य सर्वकर्तृत्वस्याभावः[6]। **अनाख्यं** [7]नकुलेश्वरादिकालामुखादिपक्षस्येव न नामयुक्तम्। **अमितात्मकं** तारकाभुवनवासिनामिव न परिमितात्मकम्। **न विजानाति** एवमादिगुणयुक्तं परकैवल्यं, तत्कारणभूतं[8]शिवत्वादिकं न विजानातीत्यर्थः ॥१०—११॥

अत्र प्रसङ्गान्मतङ्गमुनिः — "**धर्मात्सुखम्**" इत्यादि। **धर्मात्** पूर्वार्जितधर्मरूपकर्मणः परिपाकात् **सुखं** सुखहेतुः स्त्र्यादिको विषयो जातो भवति। **ततो रागः** धर्मस्य सुखरूपफलप्रदानमात्रे चरितार्थत्वादात्मनस्तस्मिन् भोगसंवेदनविषये कारणान्तरापेक्षायां राग उपस्थितो भवति। अस्यापि प्रवृत्तिजननमात्रे चरितार्थत्वात् कथं [9]सुखप्रदत्वमित्यत्रोच्यते — "[10]**स चाह्लादात्मकः**" इति। सुखरूपा बुद्धिरनुरञ्जकत्वेन यस्य सः आह्लादात्मकः। तदुक्तं पूर्वं

[11]"येनाभिभूतो बाह्येषु प्रत्ययेष्वनुरज्यते[12]।
तेनायं सुखदः प्रोक्तः" इति।

तत उक्तः। एतदुक्तं भवति — राग आत्मनां विषयग्रहणे प्रवृत्तिं जनयित्वावैराग्यरूपया बुद्ध्या युक्तः सुखप्रदश्च भवतीति रागिण एव सुखम्। ननु विरक्तस्यापि सुखं भवतु। को दोषः इत्यत्रोच्यते — **अनेन न्यायेन विरक्तस्य दुःखं भवेद्** इति **गम्यते** इति। अयमर्थः — "कारणाभावे कार्याभावः" इति न्यायेन[13] विरक्तस्य रागाभावात् तत्कार्यं सुखमपि नास्तीति न्यायप्राप्तं दुःखं निवारयितुं ब्रह्मणापि न शक्यमिति पूर्वपक्षः ॥१२॥

---

[1] सर्वज्ञानोत्तरे विद्यापादे २. ५६.
[2] ०त्वादि परगुणो — ऐ.
[3] कपालादीनामिव — ऐ.
[4] अतिकास्तमन्तं यस्येत्यत्यन्तं — ऐ.
[5] माहाव्रता० — ऐ.
[6] 'अभावः' इति नास्ति — ऐ.
[7] नहीश्वरादि कालाधिपत्यपक्षस्यैव — ऐ.
[8] शिवादिकत्वं — ऐ.
[9] सुखप्रदम् इत्युच्यते इत्यत्रोच्यते — ऐ.
[10] 'स चाह्लादात्मकः' इति पाठः एतद्व्याख्यातृसंमतः।
[11] मतङ्ग० विद्या० ११. ६ उ०, ७ पू०.
[12] ०ष्वनुरञ्जते — ऐ.
[13] 'कारणाभावात् कार्याभावः' वैशेषिकसूत्रम् १. २. १; निमित्ताभावे नैमित्तिकस्याप्यभावः' लौ० न्या० साहस्री पृ० १८८; 'कारणनाशे कार्यनाशः' इति न्यायः लौकिकन्यायसंग्रहे पृ० १४५.

अत्र सिद्धान्तस्तु — "**सुखदः सर्वदा**" इत्यादि। "**सर्वदा रागः सुखदः**" इति यदुक्तं, तत् सत्यमेव। **किंतु** स रागः सर्वजन्तुषु सामान्यरूपेण सुखप्रदो वा, केनापि [1]विशेषेण युक्तो वा। तत्राद्यपक्षे **श्वयोनौ यो भोगः** तत्पञ्चेन्द्रियविषयजातो विद्यते **सोऽपि, राज्यसुखोदये** एकच्छत्रच्छायानिवासादौ यो भोगः सोऽपि [2]सदृशात्मकरूप इति **मन्तव्यः** भवतेति शेषः। तत्र हेतुः — **स्वशरीरस्य पालनात्**। श्वा तद्योनि[3]भोगाशयैव [4]स्वशरीरं यत्नेन पालयति। राजापि तथा। कारणभेदाभावात्कार्यस्यापि भेदो नास्तीति सर्वयोनिभोगसदृशदोषः प्रसज्यते। द्वितीयपक्षे तु **ये यत्र** श्वादियोनिषु **वासिताः** तत्र तद्वासनायुक्तो रागस्तेष्वेव सुखप्रदो भवति। [5]नान्यत्र सुखप्रद इति वासनाभेदाद्भोगभेदः, तस्मान्न सदृशदोषः [6]प्रसज्यत इति चेत्। विरक्तस्यापि विरक्तवासनायाः सत्त्वात्तद्गतराग[7]सुखोदय एवास्तु, दुःखस्य किमागतमिति भावः ॥१३–१४पू०॥

एवं परमतमभ्युपगम्य च विरक्तस्य दुःखाभावमुक्त्वास्य हेतोरनैकान्तिकत्वमप्युच्यते — "**न केवलं सुखाय**" इत्यादि। **सदा भोगभुजः आत्मनः केवलं रागः सुखाय** सुखनिमित्तत्वेन **न** उक्तः। किं तु **दुःखेष्वपि** दुःखनिमित्तत्वेनापि **बोद्धव्यः**। यदा रागाभिहतात्मनां मध्ये **यस्य स्नेहेन** स्निग्धपदार्थस्य **नावाप्तिः** स्यात्, तदा तद्गतरागस्य दुःखनिमित्तत्वमपि दृश्यत इत्यनैकान्तिकः।

किं च **विरक्तस्य** रागजनितदुःखमपि नास्ति, रागाभावात्। अतो विरक्तस्य **सुखं** रागिणः क्वचिदपि नास्त्येव ॥१४उ०–१७पू०॥

न विरुद्धधर्मद्वयस्यैकत्र स्थातुमशक्यत्वात् कथं रागः सुखस्य, दुःखस्यापि कारणं भवेदित्यत्रोच्यते — "[8]**दुःखं रागाभिभूतस्य**" इत्यादि। अपेक्षावशाद्विरुद्धधर्मद्वयसद्भावो युज्यत एव। तथा हि — "**रागाभिभूतस्य**[9][10]**अप्राप्तौ** पदार्थस्य **यदपेक्ष्य दुःखं** जायते। **प्राप्तौ** तदिच्छापदार्थस्य प्राप्तौ सत्यां **तदपेक्ष्य सुखं** जायत इत्येकत्र सुखं दुःखमप्यपेक्षावशादभवत्येव। न दोषः कश्चित्।

ननु विरक्तस्य दुःखं सर्वजनैर्दृश्यते। तन्नास्तीत्युक्ते प्रत्यक्षविरोध इत्यत्रोच्यते — "**विरक्तं प्रति यो रागः**" इत्यादि। अयमर्थः — विरक्तोऽहमिति मत्वा सर्वसङ्गपरित्यागं कृत्वा पश्चात् तत्किंचिदपेक्षते, तस्य विरक्तस्य स **रागः** सर्वदुःखस्य **कारणं** भवति। सत्यमेव। [11]ततोऽन्येन **रक्तेभ्यः** सर्वविषयेभ्यो **विरागः** कर्तव्यः। स विरागः परमसुखकारणं भवति। तस्माद्राग एव दुःखकारणं, न विरागाद् दुःखमिति ॥१७उ०–१९पू०॥

अतो विरक्तानां [12]रागिभिः संयोगो न [13]कर्तव्य इत्युच्यते — "**योऽन्योऽन्यम्**" इत्यादि। [14]सरागाणाम् **अन्योन्यं** च विरागाणामन्योन्यं च **यो योगो भवेत्, तेन** योगेन **समो** हेतुः **सुखे** सुख-

---

[1] विशेष्येण — ऐ.
[2] सादृश्यात्मक० — ऐ.
[3] ०भोग्ययेशैव — ऐ.
[4] शरीरम् अयत्नेन — ऐ.
[5] नात्र — ऐ.
[6] प्रसज्जत इति — ऐ.
[7] सुखदये वास्तु — ऐ.
[8] स्नेहपादार्थेन वाप्तिर्न स्यात् — ऐ.
[9] सुखं — ऐ.
[10] ०भूतस्याप्राप्तस्याप्रप्तेद्वा पदार्थस्य — ऐ.
[11] ततोऽन्येन — ऐ.
[12] रागसंयोगो — ऐ.
[13] कर्तव्यम् — ऐ.
[14] 'सरागाणाम्' इत्यत्र 'रागाणाम्' इति दृश्यते — ऐ.

विषये कश्चिदपि **नास्ति** एव। [1]सरागविरागयोः **द्वयोः** यो योगो भवेत, तेन योगेन समो हेतुर्दुःखविषये परो नास्त्येव। योगविकल्पे **वा**शब्दः ॥१९उ०–२०पू०॥

अत एव रागिणां परवशत्वमपि महद् दुःखं भवता ज्ञायत इत्युच्यते — "**सर्वं परवशम्**" इत्यादि। मोहशक्तियुतकारणजन्यत्वाद्रागस्य तद्युतः **अणुः** आत्मा **परवशं दुःखं न विजानाति**। विरक्तस्य तदभावात् **आत्मवशं सुखम्** एव भवेत्। [2]तदविज्ञानतः पृष्टवान् भवेदिति भावः ॥२०उ०–२१पू०॥

अत्र प्रसङ्गान्मतङ्गमुनिः — "**सुखं रागाभिभूतस्य**" इत्यादि। **रागाभिभूतस्य अणोः** आत्मनः **सुखं च दुःखं च** पूर्वोक्तन्यायेन भवेद् **यदि रागः** एवोभयत्राप्येककारणतया **अनादिमान्** [3]मुख्यः **सिद्धः** बुद्ध्यादिरिव। अत एव तदनभ्युपगतनैयायिकादयः प्रक्षिप्ताः। तदस्तु। [4]**विरागस्य** उत्पत्तिः सर्वेष्वात्मसु दृष्टा। सा [5]**किमागता** सुखदुःखयोरकारणत्वे किमर्थमुत्पद्यते। अस्तु वा विरागस्योत्पत्तिः, तत्कारणतया कस्यापि तत्त्वेष्वपठितत्वादिति पूर्वः पक्षः ॥२१उ०–२२पू०॥

अत्र समाधिः — "**भोग्येन**" इत्यादि। कस्मादुत्पद्यते विराग इति यदुक्तं तत्रोच्यते[6]। उक्तमोहाद्यस्मात्कारणादयमात्मा[7] स्वस्य **भोगाय** भोगनिमित्तं [8]**भोग्येन** बुद्धौ भोग्यान्प्रत्युत्पन्नेनावैराग्येण[9] **आकृष्टः** [10]सन् **यावत्** यस्मिन् भोग्ये विषये **न परिहीयते** वैराग्यं न गच्छति। **तावत्तस्मिन्** भोग्ये **स** आत्मा **रागी** स्यात्। **भुक्ते** सति **वैराग्यमेति** तस्मै तं प्रति तद्बुद्धितत्त्वाद्वैराग्यं जायते। अत एव बुद्धितत्त्वादेव विरागस्योत्पत्तिरिति मन्तव्येति भावः ॥२२उ०–२३पू०

किमर्थं विरागस्योत्पत्तिरित्यत्रोत्तरं "**विरागात् तत्परित्यज्य**" इत्यादि। **पुद्गलः** आत्मा स्वेन यद् भुक्तं तद्वस्तु **विरागात्परित्यज्य यदुचितं** भोक्तुमुचितम् **अन्यत्फलं** भोग्यवस्तु, **तस्मिन् रागबलाविष्टः** अवैराग्येण युक्तो रागतत्त्वेन प्रेरितः सन् **प्रीतिं बध्नाति**। अत एव तद्वैराग्यमेव भुक्तस्य परित्यागे कारणं भवतीति मन्तव्य इति भावः ॥२३उ०–२४पू०॥

अत्र पुनर्मतङ्गमुनिः — "**रागेण युज्यते**" इत्यादि। पूर्वं पूर्वोक्तन्यायेन **सरागाणां** रागयुक्तानां सर्वेषामात्मनां भुक्तार्थपरित्यागस्य बुद्धितत्त्वाद् **विरागः** वैराग्यं [11]जात इत्युक्तम्। रागिणामेव सुखं च दुःखं च भवतीत्यपि प्रोक्तम्। विरक्तानां केवलं [12]सुखमित्यप्युक्तम्। तस्माल्लोके कश्चित् **प्रीतौ** प्रीतार्थविषये **रागेण युज्यते**। **विरागेण वियुज्यते** च। [13]यददृष्टं **तत् किमर्थं** सुखं [14]दुःखनिमित्तमिति पूर्वः पक्षः ॥२४उ०–२५पू०॥

---

[1] रागविरागयोः — ऐ.
[2] तदविज्ञातः — ऐ.
[3] मुख्यसिद्धो बुद्ध्यादेरिव त एव — ऐ.
[4] विरागाय उत्पत्तिः — ऐ.
[5] किमागता इति पाठः एतद्व्याख्यातृसंमतः
[6] तत्रोक्त महाहीति — ऐ.
[7] कारणात्वायात्मा — ऐ.
[8] भोगेन — ऐ.
[9] प्रत्युत्पन्नेन वैराग्येण — ऐ.
[10] सन् न यावत् — ऐ.
[11] जातमित्युक्तम् — ऐ.
[12] सुखमित्यप्युक्ते। — ऐ.
[13] यदृष्टं — ऐ.
[14] ०दुःखनिमित्तमेवेति — ऐ.

[1]अत्रोतरं — "**दुखं प्रति न रागोऽस्ति**" इत्यादि। नैतदनैकान्तिकत्वात्। तथा हि — कस्यचित् पौरुषप्रवृत्त्या सुखार्थेषु स्त्र्यादिषु रागेण युज्यमाने **कर्मणां वशात्** पूर्वजन्मार्जितदुष्कर्मपरिपाकवशात् तदुद्भवव्याध्यादिना दुःखं च भवति। तद्**दुःखं** प्रति स रागेण युक्तो न स्यात्। तथा कस्यचिद् दुःखितस्य त्यक्तबन्धुजनस्य बहिर्गतस्य सुकर्मपाकवशाद् निक्षेपादिप्राप्त्या सुखं च स्यात्। तत्सुखं प्रति स विरागेण युक्तो न स्यात्। तस्माद्रागविरागाभ्यां प्रीत्यर्थयोगवियोगौ न सुखदुःखयोः कारणमिति मन्तव्यौ॥२५उ०–२६पू०॥

अत एवात्मनः रागविराग[2]युक्तेनापि स्वातन्त्र्येण सुखदुःखरूपं स्वकर्मफलं साधयितुमशक्यमित्युच्यते — "**यत्कर्मणः**" इत्यादि। **पशोः** संसारिणो रागविरागयुक्तस्य **कर्मणः** पूर्वजन्मार्जितधर्माधर्मरूपस्य **विपक्वस्य** परिपाकं प्राप्तस्य **यत्** सुखरूपं वा दुःखरूपं वा **अत्युत्कटम्** अतिवेगेन समीपगं भवेत्, **तत् फलं कारणकराविष्टं** परमेश्वर[3]शक्त्याविष्टम्। अत एव **स्वातन्त्र्यतः क्वचिदपि** भोक्तुं **न** शक्यम्। परमेश्वरेण कालदेशजात्याद्यवेक्ष्य यत्प्रदत्तं तदेव भोक्तुं शक्यमिति भावः॥२६उ०–२७पू०॥

न केवलं कर्मफलमात्रं रागविरागावपि शिवशक्त्या प्रेरितावेव पशुषु [4]प्रवर्तेते इत्युच्यते — "**तस्माद्रागः**" इत्यादि। **तस्माद्** बन्धानां तद्गुणानां च स्वातन्त्र्याभावाद् **अणुसङ्घस्य** आत्मनः **अस्मिन् सितासिते** सुखदुःखभोगसंवेदनरूपे **वर्त्मनि** मार्गे **रागो** वा **विरागो वा कारणात्मवशात् कारणस्य** परमेश्वरस्य आत्मा शक्तिः, तद्वशात् तत्प्रेरणयैव **प्रवर्तते**। न स्वातन्त्र्येणेति मन्तव्यः॥२७उ०–२८पू०॥

ननु रागविरागावात्मगुणावेव रागबुद्ध्याख्यतत्त्वद्वयव्यवधानेन शिवशक्त्याभिव्यक्तौ। ततः स्वातन्त्र्येण ज्ञानक्रियावत्प्रवर्तेताम्। किमर्थं पुनरपि शिवशक्त्याश्रयेणेत्यत्रोच्यते — "**स्वाम्नायोचितकालस्य**" इत्यादि। **स्वाम्नायोचितकालस्य** स्वेषां स्वेषां पञ्चेन्द्रियविषयाणामन्नादीनामाम्नायः संततिः, तस्या उचितकालः भोक्तुं परिपक्वं प्राप्तं यस्मिन् काले स उचितकालः, तस्य **मर्यादा** इयदन्तं कालमस्य सुखफलं भोक्तव्यमियदन्तं कालं दुःखफलमिति परमेश्वरेण [5]कृतोऽवधिः। सा च **अवसरागता** सुखदुःखफल[6]प्रदानाय कर्मक्षयावसरे प्राप्तां **तां** कालमर्यादां **व्यतिक्रम्य** परिलङ्घ्यास्य रागो वा विरागो वा **न प्रयाति**। तदानयोः [7]शिवशक्तिः, तत्त्वव्यवधानेनाभिव्यक्तिं न करोतीत्यर्थः॥२८उ०–२९पू०॥

अथोक्तार्थोपसंहारायोच्यते — "**तस्मात्सुखं च दुःखं च**" इत्यादि। **तस्मात्** पूर्वोक्तन्यायतो [8]**रागी** रागयुक्तः पुरुष एव **सुखं च दुःखं च समुपलक्ष्यते**। ईश्वरेण [9]भोजयितव्यो भवेदित्यर्थः॥२९उ०॥

अथ विरक्तस्य रागाभावात् कथं सुखलाभ इत्यत्रोच्यते—"**न च रागविरागाभ्याम्**" इत्यादि। पुरुषसाधारणेन सर्वेषां रागविरागौ स्त एवेत्यर्थः॥३०पू०॥

---

[1] 'अत्रोत्तरम्' इत्यत्र 'अत्रोक्तम्' इति दृश्यते — ऐ.

[2] ०युक्तेऽपि — ऐ.

[3] ०शक्त्या विलुप्तमतये एव — ऐ.

[4] प्रवर्तत सा च इति — ऐ.

[5] कृतावधि — ऐ.

[6] ०प्रदः कर्मक्षया० — ऐ.

[7] शिवशक्तितत्त्व० — ऐ.

[8] 'रागी समुपलक्ष्यते' इति पाठः एतद्व्याख्यातृसंमतः।

[9] भोजतिव्यो — ऐ.

अथ विरक्तस्य किंभूतो राग इत्युच्यते — "**रागोऽन्योपि**" इत्यादि। **विरक्तानां** पुंसां [1]**रागः तदात्मकात्** पश्वात्मनि स्थिताद् **अस्माद्** मायीयरागतत्त्वजनिताद्रागावधिगोचरात्[2] पुनर्बन्धविषयाद् [3]**अन्यः परः** [4]शुद्धः **सूक्ष्मः** शिवादिवस्तुषु सक्तत्वाद्विशिष्टशक्ति[5]निपातयुक्तपुरुषमात्रवर्तित्वात्। एतद्विशिष्टत्वमस्य केन प्रमाणेनेत्यत्र [6]**हेतुः — येन निःश्रेयसे प्रवृत्तिरुपजायते** [7]इति। **येन** रागेण तद्युक्तानां **पुंसां** मुक्त्यर्थं प्रयत्नो भवति। किं च **आचार्यान्वेषणे रागी** शैवाचार्यशुश्रूषणे अभिलाषो भवति। किं च **शिवमुद्दिश्य सादरं प्रवर्तते।** शिवे अचला भक्तिर्भवति। एवंभूतैश्चिह्नैरयं **परो रागः** इत्यनुमीयत इत्यर्थः ॥३०उ०–३३पू०॥

अथ सप्रपञ्चं रागद्वयं [8]प्रसाध्य कलाविद्यारागाख्यं तत्त्वत्रयमात्मनां बलोद्दीपनेन कञ्चुकमिव कञ्चुकत्रयं भवतीत्युच्यते — "**रागविद्याकलाख्येन**" इत्यादि। **रागविद्याकलाख्येन** कञ्चुकत्रयेण **प्रच्छादितः** निरुद्धमल[9]स्वरूप एव। **समर्थात्मा** समर्थीकृतः आत्मा स्वस्वरूपं यस्य सः। **क्षेत्री** स्थूलसूक्ष्मरूपं भोगायतनशरीरमस्यास्तीति क्षेत्री। [10]एवंभूतविशेषविशिष्टो भवत्यात्मा। किं प्रति **क्षेत्रफलं प्रति** एव। क्षेत्रे बुद्धौ स्थितस्वार्जितकर्मफलभोगनिमित्तमेवंभूतो भवतीत्यर्थः ॥३३उ०–३४पू०॥

अत एव कञ्चुकत्रययुक्तानामेव भोक्तृत्वं भवतीत्युच्यते — "**इदं तावदणोः**" इत्यादि। **इदं** कञ्चुकत्रयं यावद् **अणोः** आत्मनो **नियतं** नियतबन्धं भवेत्, **तावद्** एवास्य **भोक्तृत्वम्** इति **ज्ञेयम्**। एतदेव मूलकारणं भोक्तृत्वे इत्यर्थः ॥३४उ०॥

ननु आत्मनां भोगावसरे जातो धर्मो हि भोक्तृत्वं, तत् कथं कञ्चुकत्रययुक्तकाले भवेदित्यत्रोच्यते — "**प्रध्वस्तावयवः**" इत्यादि। कर्मणां प्रवाहानादित्वात् तद्भोक्तृत्वं चानादिकाल एव [11]सम्यग्विहितं भवति। तथापि प्रलयकेवलावस्थायां **प्रध्वस्तावयवः** इति प्रध्वस्ता अवयवाः कलादिक्षित्यन्ता भोगाङ्गा यस्य सः। अत एव **सूक्ष्मः** केवलः। **अतिनिर्गुणः** सकलावस्थायां किंचिज्ज्ञत्वमात्रं च भवेत्। तदपि तदवस्थायां **न** प्राप्तः। अत एव **अशक्तः**। एवंभूतस्यात्मनः कर्मपरिपाके सति परमेश्वरेण सृष्टिकाले **बलीयसा** ज्ञानक्रियेच्छाशक्त्युद्दीपनसामर्थ्ययुक्तेन **कञ्चुकेन** कञ्चुकत्रयेण [12]योगे कृते सति आत्मा **प्राकृतान् भोगान् भोक्तुं शक्नोति**। अत एव भोक्तृत्वमात्मनामनादिसिद्धमिति मन्तव्यमिति भावः ॥३५–३६पू०॥

एवं तत्त्वरूपेण रागतत्त्वं प्रसाध्य भुवनरूपेणापि प्रोच्यते — "**तत्त्वधर्मः समाख्यातः**" इत्यादि ॥ ॥३६उ०–४०॥

---

[1] रागं — ऐ.
[2] रागावधगोचरात् — ऐ.
[3] अन्यपरः — ऐ.
[4] शुद्धसूक्ष्मशिवादि० — ऐ.
[5] ०निपतितपुरुष० — ऐ.
[6] 'हेतुः परः' इति पाठः एतद्व्याख्यातृसंमतः।
[7] इतिशब्दो नास्ति — ऐ.
[8] प्रसाद्य — ऐ.
[9] ०स्वरूपो एकसमर्थात्मा — ऐ.
[10] एवंभूतविशिष्टो — ऐ.
[11] सम्यग्वहितो भवति — ऐ.
[12] योगः कृते — ऐ.

अथैते रुद्रा अनन्तपरमेश्वर[1]नियुक्ता न परमेश्वरनियुक्ता एव मण्डलाधिपतय इत्युच्यते — "**एते रुद्राः**" इत्यादि ॥४१–४२॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्योपक्रमाय च श्लोकः — "**रागो [2]यथायम्**" इत्यादि । **अणोः** आत्मनः **सुखदुःखभोगे** सुखदुःखभोगनिमित्तं **रागः** रागतत्त्वं **यथा प्रवर्तते तथा सकषाययुक्त्या** सिद्धानुमानेन [3]**अखिलोक्तः** भुवनादिधर्म[4]सहित उक्त इति व्याख्यातोपसंहारः । **अधुना अवसरागतः** प्रवृत्तिक्रमावसरप्राप्तः यः **अयं कालः** कालतत्त्वं, तं **वच्मि** इति व्याख्येयोपक्रमः ॥४३॥

इति श्रीमन्मतङ्गवृत्तौ रागतत्त्वप्रकरणम् ॥

**एकादशः पटलः**

---

[1] ०नियुक्तात्मन परमेश्वर० — ऐ.

[2] यथावदित्यादि — ऐ.

[3] अखिललोको भुवनादि — ऐ.

[4] ०सहितमुक्त इति व्याघातोपसंहारः — ऐ.

## द्वादशः पटलः

## कालतत्त्वप्रकरणम्

**अथ** इति रागतत्त्वादनन्तरं कालतत्त्वं वच्मीति पूर्वक्रियाभिसंबन्धः। पदार्थादयः संबन्धाः पूर्वोक्ता एव। वाक्यात्मकस्तु —

"[1]स्वाम्नायोचितकालस्य मर्यादावसरागता।"

इत्यनेकविधः। **येन** कारणेन **सूक्ष्मः** इत्युपलक्षणम्। लवत्रुटिनिमेषचिरादिकालपरिमाणं **कल्प्यते असौ कालः** इति मन्तव्यः। स चात्मनां **कञ्चुकत्रयदर्शनात्** कलाविद्यारागाख्येन तत्त्वत्रयेण क्रियाज्ञानेच्छाख्यशक्तित्रयोन्मीलनात् **पश्चात्** क्रमात् क्षिप्रं करोमि विजानामि [2]निमेषमिच्छामीति [3]तदवच्छेदकतया **प्राप्तः** संबध्यते ॥१॥

अथ "[4]**शिवसामर्थ्ययोगतः**[5]" इत्युक्तम्। कासौ शिवशक्तिरित्यत्रोच्यते — "कलयित्री" इत्यादि। **कारणाज्ञानुवर्तिनी** [6]कारणस्यानन्तेश्वरस्येच्छानुवर्तिनी। **कलयित्री** [7]"कल गतिसंख्ययोः" इति [8]धात्वर्थगतिसंख्ययोः प्रवर्तयित्री। अत एव **महाशक्तिः**। सा **कालमाश्रित्य** काल[9]मधिष्ठाय, **अखिले विश्वे** कलादिक्षित्यन्ते **पुद्गलान् प्रेरयति** भोगमोक्षाय प्रवर्तयति। शिवशक्त्याधिष्ठितानन्तपरमेश्वरशक्तिरेव कलयित्रीति भावः ॥२॥

अत्र नैयायिकादिसाधितकालात्, शिवागमसाधित[10]कालस्य विशेषजिज्ञासया मतङ्गमुनिश्चोदयति — "**कालः सर्वगतः सूक्ष्मः**" इत्यादि। योऽयं **कालः** त्वया प्रोक्तः, स यदि नैयायिकादिभिरिव **सर्वगतो** नित्यश्चेष्यते। यदाहुः[11] —

"नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम्।
व्यापारव्यतिरेकेण कालमेके[12] प्रचक्षते॥" इति।

तदा "[13]कालः क्रमात् प्राप्तः" इत्यादिना "मायातत्त्वादुपादाना[14]दुत्पत्तिः, अनन्तरं तस्य सर्वविश्व-[15]प्रेरकत्वम्" इति यदुपगतं तत्कथं **गम्यते**; तन्नोपपद्यत इत्यर्थः।

अथवा ज्योतिःशास्त्रसिद्धया **अमूर्तिमान्** [16]**सूक्ष्मोऽनन्तः** इति चेष्यते। यदुक्तम्[17] —

---

[1] मतङ्ग० विद्या० ११. २८ उ०.
[2] निमेषमिक्षमीति — ऐ.
[3] तदवच्छेदतया — ऐ.
[4] मतङ्ग० विद्या० १२. १ उ०.
[5] ०योगात् — ऐ.
[6] कारणस्यान्तरेश्वरस्य — ऐ.
[7] कल गतौ संख्याने च — १८८९ तमो धातुः
[8] धात्वर्थगता संख्या प्रवर्तयित्री — ऐ.
[9] ०मधिष्ठाय . . . ला विश्वे — ऐ.
[10] ०कालविशेष० — ऐ.
[11] वाक्यपदीये ३. ९. १.
[12] कालमेव — ऐ.
[13] मतङ्ग० विद्या० १२. १ पू०; कालक्रमात्प्राप्तः — ऐ.
[14] ०दुत्पत्तित्यनन्तरं — ऐ.
[15] प्रेरकत्वेन यदुपतमं — ऐ.
[16] सूक्ष्मानन्तः इति शष्यते — ऐ.
[17] वाक्यपदीये ३. ९. ७६.

"आदित्यग्रहताराादिपरिस्पन्दमथापरे।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः।" इति।

[1]यद्येवममूर्तिमानसर्वगतः, कर्मविशेषत्वात् पाकादिवत्। "असर्वगतद्रव्य[2]परिमाणा हि मूर्तिः" इत्युच्यते परैः। ततश्च तस्याव्यापकत्वात् पुनरपि मायातत्त्वादधः सर्वप्रेरकत्वं नोपपद्यते।

अथवा वेदान्तसौगतदृशा व्यवहारनिबन्धनतया असत्यत्वात् [3]**अकर्ता निष्कामः** चेष्यते। यदाहुः[4]—

"केचिद्बुद्ध्यनुसंधानपूर्वकत्वं [5]प्रचक्षते।
ज्ञानानुगत [6]शक्तिर्वा बाह्येनासत्यतः स्थितः[7]॥
कालात्मानमनाश्रित्य व्यवहारो न शक्यते।" इति।

अत्र च [8]द्विचन्द्रादिवदविद्यारूपत्वेनासत्यत्वादिति प्रेरकत्वानुपपत्तिरेव।

अथ सांख्यदृशा [9]प्रकृतेः स्वभावः परिणत्यात्मकोऽसौ कालः। अत एव **निरवस्थानोऽचेतनः** इतीष्यते। यदाहुः[10] —

"[11]परिणामः पृथग्भावो व्यवस्थाक्रमतः सदा।
भूतैष्यद्वर्त[12]मानात्मा कालरूपो विभाव्यते॥" इति।

तदाप्यनवस्थितः कालः। [13]परिणतेः [14]क्रियात्वेनाचेतनत्वादवस्थानासंभवाच्चेति मायातत्त्वादधोऽध्वनि प्रेरकत्वानुपपत्तिरेव।

एवं नैयायिकादिपशुमतसिद्धः[15]**विभुः** काल एव परमेश्वरमतसिद्धः कालः, तदन्यो वेति पूर्वः पक्षः॥३–४पू०॥

सिद्धान्तस्तु — "**यद्यद्विनश्वरम्**" इत्यादि। नैयायिकादिपशुमतदृष्टकाललक्षणं सर्वं निराकरणीयमिति, सिद्धान्तसिद्धकाललक्षणं यथा भवति तथा साध्यते। तत्र नैयायिकादन्यवादिनां [16]निरवस्थानत्वं समानमिति कृत्वा, प्रथमं [17]निरवस्थानत्वं कालस्य न सिद्धमित्युच्यते। लोके **यद्यद्** वस्तु नश्वरत्वादिधर्मयुक्तं, **तस्य तस्य**[18]**तदावस्था धर्मान्तरविसर्पिणी** उत्पत्तिस्थितिनाश[19]धर्मान्तरेषु विसर्पिता भवति। ततस्तत्तदवस्थाकृता केनापि [20]भवितव्यम्। तस्य तत्तदवस्थायामप्यवस्थानात्तस्याप्यवस्थानं सिद्धमेव॥४उ०–५पू०॥

[21]उक्तावस्थाया विस्तरः — "**भोक्तुः**" इत्यादि। आत्मनां भुवनजदेहः उभयवादिसिद्ध एव।

---

[1] यद्येवं मूर्तिमानसर्वगतः — ऐ.
[2] ०परिमाणं हि — ऐ.
[3] आर्ता निष्कामः — ऐ.
[4] वाक्यपदीये ३. ९. ५७ उ०, ५८.
[5] प्रचक्ष्यते — ऐ.
[6] ०शक्तित्वाद्बाह्येन सत्यतः — ऐ.
[7] स्थितम् — ऐ.
[8] द्विचन्द्रादिव न विद्यारूपत्वेन सत्यत्वादिति — ऐ.
[9] प्रकृते स्वभाव परि० — ऐ.
[10] आकरो न लभ्यते।
[11] परिणामापृथग्भावो — ऐ.
[12] ०मानात्मकालरूपो — ऐ.
[13] 'परिणतेः' इति नास्ति।
[14] क्रियात्वेन चतनं न त्वादस्थानासंभवाश्चेति — ऐ.
[15] विभो — ऐ.
[16] निरवस्थानं समानं — ऐ.
[17] निरवस्थानं कालस्य — ऐ.
[18] तदवस्था — ऐ.
[19] धर्मान्ताद् विसृम्भिता भवति — ऐ.
[20] भवितव्यम्। स तस्या तत्तदवस्था० — ऐ.
[21] उद्रपां विस्तारं किं च भोक्तुः — ऐ.

तस्य **कुमारादि** [1]**जरान्तिका अवस्था** [2]**कालकृता** एवेति मन्तव्या। तत्तदवस्थाया दीर्घकालभावित्वात् कालस्याप्यवस्थितिः सिद्धैवेति भावः ॥५उ०–७पू०॥

अथात्र मतङ्गमुनिः कालस्य त्रिविधत्व[3]मसहमानः प्रत्यवस्थितः — "**एष्यन्नतीतो देवेश**" इत्यादि। [4]अस्मिँल्लोके **एष्यन्नतीतः** च सर्वजनैः सुनिश्चित एव। [5]**यः तृतीयो वर्तमानः** इत्युक्तः **सः** केन प्रमाणेन सिद्धो भवतीति पूर्वः पक्षः ॥७उ०–८पू० ॥

अथात्र समाधिः – "**योऽयम्**" इत्यादि। **योऽयं** वर्तमानकालः स प्रत्यक्षप्रमाणसिद्धः। तथा हि — **योऽयमर्थक्रियायोग्यो घटः** [6]स सर्वव्यवहारेषु जलाद्याहरणादिषु प्रत्यक्षेणोपयुक्तो भवति। **ततो** वर्तमानकालः **उपादेयः** अभ्युपगन्तव्यः। [7]**तत्र** स्थितिविषये **अतीतसमयः** भूतकालो **न युज्यते** न योग्यो भवति; एष्यत्कालोऽपि। [8]एतद् दृष्टान्तेन दृढयति — वर्तमानकाले योऽयमर्थक्रियायोग्यः स्वविषयजलाहरणादिक्रियायां समर्थः सोऽयमिति सिद्धो घटः **सर्वत्र युज्यते**। [9]तत्तत्स्थितिनिमित्तं सर्वकार्यक्षमो भवति स्वविषयार्थक्रियायोग्यत्वात्। एष्यत्काले **शकलात्मकः** [10]शकलीकृतः स क्रियाया अयोग्यत्वात् न सर्वत्र युज्यते। भूतकालेऽपि **मृत्पिण्डकत्वात्** [11]सत्कार्यदृशा मृत्पिण्डस्वरूपत्वात् सर्वत्र **न** युज्यते। अतः स्थितिनिमित्तं वर्तमानकालोऽङ्गीकर्तव्य इति भावः ॥८उ०–१०॥

ननु कौमारावस्थायां यातायामागतयां [12]यौवनावस्थायां च मध्ये वर्तमानावस्था न काचिद् दृष्टा। अतो वर्तमानकालो नेत्यत्रोच्यते — "**नावस्थान्तरभेदेन**" इत्यादि। **अवस्थान्तरभेदेन** अवस्थाद्वयमध्ये तदवस्थाद्वयभेदेन वर्तमानावस्थाया अभावात् वर्तमानकालो **न** स्यादिति वा मन्यसे तन्न स्यात् प्रत्यक्षविरोधत्वात्। तथा हि — लोके सर्वजनैरेवं हि गीयते "**शिशिरः कालोऽतीतः, मधुः** वसन्तकालोऽयं वर्तमानः, **निदाघः** निदाघकालः **एष्यति**" इति प्रगीयते। भवता न श्रूयते वेति भावः। किं च **येन** [13]**त्वमसि** इत्यादि। आरब्धापरिसमाप्ता क्रियोपलक्ष्यते। यत्र यो वर्तमानकाल इति प्रसिद्धः, **सोऽयं कालो** वर्तमानकालः **ते** त्वयापि **सुनिश्चितः** स्यात्। [14]वर्तमानमनभ्युपगतवतस्तव च सुसिद्धो भवति। तथा हि — [15]यतः पूर्वं **वेणुं वादितुमारब्धः त्वं** भावितोऽसि [16]आरब्धापरिसमाप्तां क्रिया[17]मुद्भावितवानसि। ततस्त्वया स्वयं निश्चितः। किं पुनः पृच्छसीति भावः ॥११–१२॥

---

[1] ०जरातिमावस्था — ऐ.
[2] कालकृते वेति मन्तव्या — ऐ.
[3] ०मसह्यमानः — ऐ.
[4] अस्मिन् लो . . . श्चातितच्च सर्व० — ऐ.
[5] यत् तृतीयो — ऐ.
[6] 'सः' इति नास्ति — ऐ.
[7] 'तत्र युज्यतेऽतीतसमयः' इति पाठः एतद्व्याख्यातृसंमतः।
[8] तद्दृष्टान्तेन दृष्टयति — ऐ.
[9] तत्त्वस्थिति० — ऐ.
[10] शकलीकृता स क्रियायोग्यत्वात् — ऐ.
[11] सत्कार्यदृश्य मृत्पिण्ड० — ऐ.
[12] यौवनावस्थायाश्च — ऐ.
[13] 'त्वमसि' इति पाठः एतद्व्याख्यातृसंमतः —ऐ.
[14] वर्तमानानभ्युपगतस्य तव — ऐ.
[15] इतः पूर्वं — ऐ.
[16] आरब्धोपरि० — ऐ.
[17] ०मुद्भावितोऽसि — ऐ.

अथ अवस्थातोऽवस्थान्तरवत् शिशिरमधुकालयोर्मध्ये च न वर्तमान इत्यत्रोत्तरं प्रासङ्गिकोपसंहाराय बोध्यते — "**एवं सर्वत्र मन्तव्यः**" इत्यादि। तत्र पूर्वस्य समाधिः शिशिरवसन्तकालयोर्मध्ये चायनात्मक इत्युपलक्षणम्। संक्रान्तिविषुवायननानामभेदेन वर्तमानो वर्तत एव। **एवं सर्वत्र** अवस्थातोऽवस्था युगादिषु च संध्यात्मकतया वर्तमानकालो वर्तत इति **मन्तव्यः**। शतपत्रपत्रशतं मया सूच्या युगपद्भिद्यत इत्यादिषु च **वर्तमानो** वर्तत एव। तथापि **अतिसूक्ष्मत्वादेव नोपलक्ष्यते स्थितये** सिद्धयेऽवस्थितिः कालस्य दीर्घावस्थितिसिद्धत्वादिति भावः। अत एव हि कालस्य सूक्ष्मत्वमस्माभिरभ्युपगतमिति प्रासङ्गिकोपसंहारः। अथ प्रकृतमनुसृत्योच्यते — **तथापीति**। **अस्मिन्प्रपञ्चे** पूर्वोक्तन्यायेन **स्थिर एकः काल** इति मन्तव्यः॥ [1]वृत्तिभेदाद्भिन्नोऽपि काल एक एव। अतो नास्यानवस्थानत्वमिति भावः॥१३–१४पू०॥

अथामूर्तस्य कर्तृत्वं कथमित्यत्रोत्तरमुच्यते — "**तस्मात्कालयिता**" इत्यादि। यथा अमूर्तिमतां वाय्वादीनामपि वृक्षकम्पनादिलिङ्गैः कर्तृत्वमनुमीयते, तथामूर्तिमतः कालस्यापि कालव्याप्तिसिद्धैर्लिङ्गैः कर्तृत्वमनुमीयत एव। तथा हि — लोके **कश्चिदपि नाकालाज्जायते**। किं च कश्चिदपि **अकाले न म्रियते**। किं च कश्चिदपि **नाकालाद्वृद्धिमेति**। एतैस्त्रिविधैर्लिङ्गैश्च, **ऋतुमद्भिः** वसन्तर्त्वादौ **सदा** नियमेन पुष्पादियुतवृक्षविकारैश्च **लिङ्गैः** [2]स्वैश्च तत्तज्जातिगतरसोद्भवादिलिङ्गैश्च **कालोऽभिलक्ष्यते** यतः, ततश्च प्रेरकत्वं सिद्धमेवेति॥१४उ०–१६पू०॥

अथ चैष अकर्ता निष्कामः, तस्य कर्तृत्वं कथमित्यस्योत्तरं "**निष्कामस्यापि**" इत्यादि। **यो अस्य स्वभावः** सोऽस्य सदानिवर्तित एव। [3]**यथाग्निः पचनादिषु** स्वस्वभावेषु सत्सु न तद्धर्मान्निवर्तते। तत्कर्ता भवति। तथा निष्कामश्च कालः शरीरिणामवस्थाभेदकर्तृत्वयुक्तो भवति॥१६उ०–१७पू०॥

अथास्य सर्वगतत्वं, [4]विभुत्वं, नित्यत्वं च यदुक्तं तदपि न युक्तमित्युच्यते — "**त्रुटयादिभिः**" इत्यादि। यतः त्रुटयादिभिः अनित्याभिः **कलाभिः** अनन्तत्वम्। प्रवहन् प्रवहति कालः, ततः [5]अचैतन्ये सत्यनन्तत्वाद् घटादिवदित्यनित्यत्वमस्यानिवार्यमेव। किं च कालतत्त्वे **एव संस्थानं** च करोति। ईश्वर इति शेषः। भुवनाधारत्वेन पुरादिवत्। अनित्यो भवतीति भावः। किं च सर्वगतत्वं चास्य न सिद्धम्। यतो "मायाकार्यः कालो न सर्वगतः, **कलातो व्यतिरिक्तत्वात्** मायाकार्यकलादिभ्योऽन्यतरत्वात् [6]सत्त्वादिगुणवत्" इत्यनुमानेन सर्वगतत्वं चास्य **न स्फुटं** भवति॥१७उ०–१८॥

अमूर्तिमानित्यपि यदुक्तं पूर्वं तदपि न स्फुटं भवति। यतः — "**वस्तुनः**" इत्यादि। **वस्तुनः उद्भवे च नाशे च वृद्धौ च** कालस्य **कर्तृत्वं लक्ष्यते स्वयं रूपं क्वचिदपि न** लक्ष्यते **अमूर्तत्वाद्** इति। [7]एतत् प्राकृतचाक्षुषत्वापेक्षयैवोक्तम्। परमार्थतश्चास्यापि कलादेरिव भुवनाधारत्वेन मूर्तत्वादिति भावः॥१९–२०पू०॥

---

[1] वृत्तिभेदाद्भेदोऽपि कालः — ऐ.
[2] स्वैश्च जातिगत० — ऐ.
[3] यथाग्निपवनादिषु — ऐ.
[4] विभुत्वानित्यत्वं तदुक्तं — ऐ.
[5] आचैतन्ये — ऐ.
[6] सत्त्वगुणवत् — ऐ.
[7] 'एतद्' इत्यत्र 'तत्' इति दृश्यते — ऐ.

ननु सत्कार्य[1]वाददृशा सर्वेषां तत्त्वानां नित्यत्वात् [2]कालस्यैवात्रानित्यत्वं कथं विभाव्यत इत्यत्रोच्यते — "**स तस्माद् ग्रन्थिविवरात्**" इत्यादि। **तस्मात्** सर्वेषां तत्त्वानामनादिसिद्धत्वात् परमार्थत उत्पत्तिविनाशौ नोच्येते। किं तु **चलतोऽणोः** इति प्रचलतः स्वकर्मणः परिपाके प्राप्ते सति भोगोन्मुखीभावं प्राप्तस्य पुंसः **क्रमशः तत्त्वानां** [3]**व्यक्तौ च विभागशः** [4]**स्थितये ग्रन्थिविवरात्** मायाधिकरणात् सृष्टिकाले उत्पत्तिः **विभाव्यते** उपचारादुच्यत इति भावः। **संहारे च पत्युर्हरणात् नष्टः इत्युपचर्यते**॥२०उ०–२१॥

अथैतद् दृष्टान्तेन दर्शयति — "**नात्मा प्रसूयते**" इत्यादि। **लोके अयमात्मा उत्पन्नो नष्टः** इत्युच्यते **हि** इति। यस्मात् परमार्थत आत्मनो नित्यत्वात् [5]स **न च प्रसूयते, न च नाशमुपैति**। ताभ्यां **योगविभागाभ्यां** [6]यतो **युक्त** एव भवति। आत्मनो [7]योगविभागयोः किं निमित्तमित्युच्यते — **कलात्मकात् संयोगाद्** इति कलाद्यारब्धशरीरयोगादुत्पन्न इत्युपचर्यते। तद्वियोगान्नष्ट इति चोपचर्यते। तथा कालस्याप्युपचारादनित्यत्वमुक्तमित्यविरोधः।

एवं कालस्य परोक्तलक्षणेषु निरवस्थानत्वं सर्वगतत्वं नित्यत्वं च सर्वदा न युक्तमिति निराकृत्य, अनन्तत्वं मूर्तत्वं सूक्ष्मत्वं च क्वचित् [8]पक्षतयाङ्गीकृत्य, अन्यलक्षणयुक्तस्य प्रवृत्त्ययोगदोषं परिहृत्य निर्दोषकाललक्षणमुक्तम्। तत्र च सत्कार्यवाददृशा[9] सर्वतत्त्वानामिव कालस्याप्युत्पत्तिनाशावुपचरितावित्युक्तम् ॥२२–२३पू०॥

अधुना तु कालनियतिकलाख्यत्रयाणां तत्त्वानां मायाया एकदाभिव्यक्तत्वे कृते सति कलाविद्यारागाणामनन्तरं कालनियत्योः प्रवृत्तिः कथमुच्यत इत्यत्र सर्वतत्त्वानां प्रवृत्तिक्रमः श्लोकषट्केनोच्यते — "**तस्याणोः**" इत्यादि। तस्य प्रलयेन [10]स्वकर्मकृतभोगानुन्मुखीभावं प्राप्तस्य **अञ्जनेन कलादिना** अञ्जयन्ति स्वभासं कुर्वन्तीति अञ्जनानि कलादीनि तत्त्वानि, तैः **रञ्जितस्य** क्रमेण क्रियाज्ञानेच्छाशक्त्युन्मीलनयुतस्य। ततः परं **कालः पुद्गलं प्रति** प्रतिपुरुषं **स्फुटं** स्फुटं कृत्वा **प्रवर्तते**। कथं प्रवर्तत इत्युच्यते — **अनन्तपराक्रमो विश्वराट् महातेजाः कालरूपी रुद्रः** अनन्तपरमेश्वरः, तेन प्रेरितः सम्प्रवर्तते। ततः **कञ्चुकैरवकुण्ठितः**[11] कालेन **अधोमुखो जन्तुः पशुः** आत्मा **कलितः** अभवत्। केन कारणेनेत्युच्यते — **अनन्ततेजसाकालेन क्षिप्रं पशुत्वात् कलितः** अभूत्। पशुत्वेन मलेन युक्तत्वात् तद्व्यपोहनाय [12]कलितोऽभवदित्यर्थः। **स पश्चात् नियत्याख्येन तत्त्वेन नियम्यते**। ततः स आत्मा **येन जगदापूरणं प्रति पुंभावमायाति**। **जगच्छब्देन मायातः** मायाजन्यकळोद्भवत्वात् **प्रधानमभिधीयते**। **पश्चात्** पुंभावयोगादनन्तरं **तेन** प्रधानतत्त्वेन **एकत्वमवाप्नोति**। कथमेकत्वमित्यत्रोच्यते — **ताम्रकालिकवत्** इति। **यथा** पशुत्वेन मलेन ताम्रकालिक-

---

[1] ०वादशसर्वेषां — ऐ.
[2] कालस्य मात्रमनित्यत्वं — ऐ.
[3] व्यक्ते च — ऐ.
[4] 'स्थितये' इत्यनन्तरं नशब्दोऽधिकः — ऐ.
[5] 'स' इति नास्ति — ऐ.
[6] 'यतः' इत्यत्र 'यदि' इति दृश्यते — ऐ.
[7] योगविभागं किमित्युच्यते — ऐ.
[8] पक्षतयानङ्गीकृत्य — ऐ.
[9] ०वादिदृशा — ऐ.
[10] स्वकर्मणा कृतः भोगोन्मुखभावं — ऐ.
[11] "अवकुण्ठितः" इति एतद्व्याख्यातृसंमतः पाठः।
[12] कलितो भवेदित्यर्थः — ऐ.

वद्योगात् [1]**शुद्धात्मा महामायां न विजानाति**, तथा प्रकृतिपुरुषविवेको यथा न भवति तथैकत्वमवाप्नोतीत्यर्थः। पश्चात् तदनन्तरं क्रमेण **प्रच्छादितः** गुणत्रयबुद्ध्यहंकारतत्कार्यैर्युक्तः, [2]तथैव **प्रबुद्धात्मा** प्रविकसितस्वेच्छाज्ञानक्रियास्वरूपः आत्मा **सर्वाङ्गालिङ्गने** स्वकर्मजनितबुद्धिगतसुखदुःखमोहरूपसर्वभोगसंवेदने **क्षमः** अभूत्। यदैव प्रवृत्तिक्रमेण तत्त्वैर्युक्तो भवति **तदा पुद्गलः शब्दादिविषयान् स्फुटं** कृत्वा **गृह्णाति**। अतो नित्यत्वयुक्तोऽप्यात्मा सूक्ष्मस्थूलशरीरयुक्तः, तद्द्वारेण कालकलितो नियत्या विभुत्वयुक्तो भवतीति [3]कालनियत्योश्च प्रवृत्तिः कलाविद्यारागेभ्यः पश्चात् प्रोच्यते एतच्च तेभ्यः परं कालनियत्योः शोधनार्थमुक्तमिति भावः ॥२३उ०–२९पू०॥

अथोक्तार्थोपसंहारायोच्यते — "**एवं कालेन**" इत्यादि। **एवम्** उक्तप्रकारेण **कालेन**, "अयेमामहं करोमि, इतः परमिमाम्, इतः परमिमाम्" इति **पुनः पुनः** क्रियमाणां क्रियां **बहुधा** कल्पयित्वा तत्तत्संसारकृत्योन्मुखः सन्, **आत्मानं च देवतां च उत्तमां** सिद्धिं **च न** जानाति ॥२९उ०–३०पू०॥

यावदिदं मोहकत्वमस्येत्यत्रोच्यते — "**यावन्न कलया**" इत्यादि। **यावत् पत्युः** परमेश्वरस्य **कलया** अनुग्रहशक्त्या **गुरुं प्रति न प्रेरितः**, मुक्तौ तावत् **अणुः** आत्मा संसारी भवेत्। ततः परं मुक्तो भवतीत्यर्थः। **एवम्** उक्तप्रकारेण **कालः अनिन्दितः** प्रत्यक्षादिप्रमाणैरनिन्दितश्च। **तत्त्वं** तत्त्वधर्मेण युक्तो यथा भवेत् तथा प्रतिपत्तव्य इत्युक्तार्थोपसंहारः ॥३०उ०–३१पू०॥

एवं कालस्य [4]तत्त्वधर्म उक्तः। कालनियत्योर्भुवनधर्मोऽप्युच्यते — "**तत्र ये संस्थिताः**" इत्यादि। अथैतेऽष्टौ **रुद्राः** कपालेशादिवदशुद्धा वा। नेत्युच्यते — **भुक्तिमुक्तिप्रदाः** इत्यादि। **शिवाः** इति शुद्धा एवेत्यर्थः ॥३१उ०–३६॥

अथ व्याख्यातार्थोपसंहाराय व्याख्येयस्योपक्रमाय च श्लोकः — "**कालो यथा**" इत्यादि। **कालः प्रेरणशीलकत्वात् यथा स्थितः**, **तथा**, **अध्वनि** अध्वनिमित्तं भुवनाधारत्वेन च यथा स्थितः तथा, **तत्त्वविभागयुक्त्या** [5]तत्त्वस्य कालस्वरूपस्य विभागं कृत्वा युक्त्या अनुमानेन [6]यथा स सिद्धो भवति तथा च **मयोक्तः** इत्युक्तार्थोपसंहारः।

अथ व्याख्येयस्योपक्रमः — या **अखिलभावनासु** पुंसां कर्मजन्यसुखदुःखमोहरूपबुद्धिषु **नियतिं** करोति, **तां नियतिमधुना शृणुष्व** इति ॥३७॥

इति [7]श्रीमन्मतङ्गवृत्तौ कालतत्त्वप्रकरणम्।

**द्वादशः पटलः**

---

[1] रसात्मा — ऐ.

[2] तथैव — ऐ.

[3] कालनियत्योः कं च ... पश्चाच्छोधनार्थमुक्तमिति भावः — ऐ.

[4] तत्त्वधर्मेणोक्ता कालनियत्योर्भुवनधर्मेणाप्युच्यते — ऐ.

[5] तत्त्वं कालस्वरूपं विभागं — ऐ.

[6] यथा सिद्धं भवति — ऐ.

[7] श्रीमन्मतङ्गपरमेश्वरवृत्तौ — ऐ.

# त्रयोदशः पटलः

## नियतितत्त्वप्रकरणम्

**अथ** इति कालतत्त्वादनन्तरं "[1]नियतिं शृणुष्व" इति पूर्वक्रियाभिसंबन्धः। पदार्थादयोऽपि संबन्धाः प्राग्वदेव। वाक्यात्मकस्तु —

"[2]नियत्याख्येन तत्त्वेन [3]स पश्चाद्विनियम्यते।"

इत्याद्यनेकविधः। **इदानीम्** इति। तत्त्वान्तरवृत्तिभ्यो नियतिवृत्तेरतिसूक्ष्मतरत्वान्नियतिः[4] **अमितद्युतेः कारणस्य** अनन्तपरमेश्वरस्य संबन्धिनी **नियामिका** [5]**शक्तिः** स्वभावः। अतः सैव, **नियमस्थितिहेतुना** इति नियमो भोगनियमः। स्थितिः शरीरादेः स्थितिरूपः। [6]तयोर्हेतुना। **नियामकेन भावेन** इति अथ भोक्तुमारब्धयोर्द्वयोरंशयोरस्यैवांशोऽनेन भोक्तुं योग्यो नान्यस्येति नियमितत्वादन्यांशभोजनावसरे विघ्नसमूहैर्निवार्यमाणतया स्थितो बुद्धिविशेषो नियामकभावः तेन [7]युक्तेन **पुंसः** संबन्धिना **तत्त्वेन** नियत्याख्यतत्त्वेन **च सह सर्पिता** भवति। अतिसूक्ष्मतरकर्मफलनियन्तृत्वं [8]कर्तुमन्यैरसाध्यमिति स्वयमेवानन्तेश्वरसंबन्धिनी नियामिका शक्तिर्नियतिमधिष्ठाय प्रवर्तत इत्यर्थः॥१–२पू०॥

अथ सैव नियत्यधिष्ठानान्नियतिरित्युच्यते — "[9]**ययाणुः**" इत्यादि। यया नियामिकाख्यया शक्त्या **अणुः** पुद्गलो **भोगसंताने** सुखदुःखभोगपरंपराविषये **नेच्छन्नपि** इच्छारहितोऽपि **बलात्** स्ववीर्येण तत्तद् [10]**नियम्य** अवस्थाप्यायोग्यभोगसंताने **विनिवार्यते** निवारितो भवति। सेयमेव **असमञ्जसवैनाशं कृत्वा** असमञ्जसं नाम "सृष्टिकाले कर्मयुक्तस्य मुक्तिः, संहारकाले [11]कर्मरहितस्य भोगः" इत्याद्यनवस्थानं तन्निवार्य, तत्तत्काले तत्तदुत्पत्तिनियमकरणे तात्पर्ययुक्ता भवति। सेयमेव **स्वोचितेषु भोगेषु व्यवस्थाकारिणी** भवति। तथा हि — भ्रमराणां पुष्परसे एव, हंसानां [12]किञ्जल्के एव, चातकानां [13]मेघोदके एव नियमेन भुक्तिः। **अथ स्वोचितेषु शरीरेषु** च सेयमेव व्यवस्थाकारिणी भवति। तथाहि — गजानामूर्ध्वावृतजिह्वा, सर्पाणां चक्षुःश्रवणजिह्वाद्वयवत्वं, बिडालानामन्धकारेऽप्या[14]लोकनवत्त्वं, उलूकानां दिवान्धत्वं च तत्तज्जातिशरीरेषु नियमेन दृश्यते। तत एवमादि[15]सूक्ष्मस्रष्टृत्वं **तत्त्वसंततौ** कलादितत्त्वपरंपराया मध्येऽन्यस्य **न विद्यते**। तस्माद्

---

[1] मतङ्ग० विद्या० १२. ३७.

[2] मतङ्ग० विद्या० १२. २६ उ०.

[3] "स पश्चाद्विनियम्यते" इति पाठः एतद्व्याख्यातृसंमतः।

[4] 'नियतिः' इति नास्ति — ऐ.

[5] शक्तिस्वभावतो नियमस्थिति० — ऐ.

[6] 'तयोः' इति नास्ति — ऐ.

[7] युक्ता पुंसः संबन्धेन — ऐ.

[8] 'कर्तुं' इति नास्ति — ऐ.

[9] 'ययाणुः' इति पाठः एतद्व्याख्यातृसंमतः—ऐ.

[10] नियम्यास्थाप्य योग्य० — ऐ.

[11] स्थितिकर्मरहितस्य — ऐ.

[12] किञ्जल्कमेव — ऐ.

[13] मेघोदकमेव — ऐ.

[14] ०लोकनत्वं — ऐ.

[15] सूक्ष्मदृष्टित्वं — ऐ.

**अस्मिन् तन्त्रे** शिवागमे **सा भर्तुराज्ञानुवर्तिनी** अनन्तपरमेश्वराज्ञाकारिणी **सुपेशला** सुसामर्थ्या नियामिका शक्तिरेव **नियतिः** इति नियतितत्त्वाधिष्ठानान्नियतिरिति **विहिता** शिवेन कथितेति मन्तव्या ॥२उ०–५पू०॥

ननु पुरुषाणां धर्माधर्मात्मकं कर्मैव फलनियामकं[1] कारणमस्तु। किं नियत्याख्येन कारणान्तरेण, कल्पनागौरवादित्यत्रोच्यते — "**कोटिद्वयं समाख्यातम्**" इत्यादि। **पशोः** आत्मनः संबन्धि **धर्माधर्मात्मकं कोटिद्वयं** [2]तुलाकोटचोरुन्नत्यवनतिवद्धर्माधर्मफलपाकाधिके व्यवस्थाकारि कोटिद्वयमस्त्येव। सत्यम्। किं तु [3]**सर्वदेहिनां** संबन्धि कर्मनिमित्तं **शरीरम्** इत्युपलक्षणम्। स्थूलसूक्ष्मात्मकं शरीरमिन्द्रियाणि, विषयाः, भोगाधिकरणं च, भुवनं च **व्यक्तिमायाति**। तदुक्तं श्रीमत्**स्वायम्भुवे**[4] —

"कर्मतश्च शरीराणि विषयाः [5]करणानि च।" इति।

एतदुक्तं भवति — कर्मणः फलजननमात्रेण चरितार्थत्वात् तत्रापि हेतुत्वे सर्वतत्त्वकलनाभावप्रसङ्गः स्यादिति। ततः कर्मव्यतिरेकेण कृष्यादाविव राजाज्ञया नियत्याख्येन तत्त्वेन भवितव्यमित्युच्यते ॥५उ०–६पू०॥

"**तद्विपाकेषु**" इत्यादि। **यस्माद्** येनाहं शताश्वमेधं विधाय शक्रपदवीं च गमिष्यामीति सुष्ठु निरूप्य यानि कर्माणि विहितानि [6]तानि सर्वाणि कृतानि। **तद्विपाकेषु** तेषां कर्मणां [7]विपाकेषु विशेषेण फलप्रदानाय पाकं गतेषु सत्सु या तं [8]सुनिरूपणयुक्तं **च क्षेत्रज्ञम्** आत्मानं तत्फलभोक्तृतया नियामयति। **अनायासं** च [9]दस्युमिवाकृततत्कर्माणं पुरुषं च तत्कर्मफलस्याभोक्तृतया च **नियामयति, तस्मात्** कर्मव्यतिरेकेण **नियतिः** इति शिवागमेषु **उच्यते**॥ ६उ०–७पू०॥

किं च — "**तयोः**" इत्यादि। या **तयोः** धर्माधर्माख्यकर्मणोः फलं **यत् सुखम्** वा, **अथवा** असुखं दुःखरूपं तत् तत्कर्तृ[10]संबन्धित्वेन यत्किंचिद् **अधिकं न ददाति**। सा नियतिः सदाशिव[11]शक्त्योन्मीलितेन **स्ववीर्येणैव** एवंविधसूक्ष्मकृत्यं विधत्ते। न कर्मण [12]एवंविधसामर्थ्यमिति भावः ॥७उ०–८पू०॥

किं च "**न चोपभोग**[13]**वैकल्यम्**" इत्यादि। **कारणेन** अनन्तपरमेश्वरेण [14]**अधिरोपिता** प्रेरिता सती **स्वविपाके** स्वस्वकर्मणः फलोन्मुखीभावसमये तस्य तत्तत्फलस्य **भोगवैकल्यं** सुखदुःखसंवेदनविकलभावं **न** करोति। किं च [15]**अभुक्तात् तं न समुद्धरेत्**। कल्पकोटिशतैरपि तत्कर्मयोगाय

---

[1] ०नियामके — ऐ.

[2] तुल्याकारयोरुन्नत्य० — ऐ.

[3] अत्र 'पशोरात्मनः' इत्यधिकम् — ऐ.

[4] ३२. १३ पू०.

[5] कारणानि — ऐ.

[6] 'तानि सर्वाणि कृतानि' इत्येतन्नास्ति — ऐ.

[7] 'विपाकेषु' इति नास्ति — ऐ.

[8] सुनिरूपितं च — ऐ.

[9] दस्युरिव तत्कर्माकृतं पुरुषं — ऐ.

[10] संबन्धत्वे यत् — ऐ.

[11] ०शक्त्योन्मीलनस्व० — ऐ.

[12] एवंविधमिति भावः — ऐ.

[13] 'वैकल्यम्' इति पाठः एतद्व्याख्यातृसंमतः।

[14] अभिरोपिता — ऐ.

[15] अमुकार्थं न — ऐ.

[1]नियामकी भवतीत्यर्थः। किं च प्रारब्धकर्मपाके **भुक्ते** भुज्यमाने सति तत्कर्मणां मध्ये **यदन्यत्** कर्म **अतिरिच्यते** अत्यन्तं फलोन्मुखीभावं भजते, **तस्मिन्** तत्कर्मफले **अणुम्** आत्मानं [2]**नियोजयेत्।** किं च **आशु** शीघ्रगत्या **त्रुटचंशमपि** निमेषचतुर्थांशः त्रुटिः, तस्य चतुर्थांशमपि [3]जात्यायुःप्रद-कर्मणा प्राप्तं भोक्तृ[4]भोगसमये **उचितं** तद् **न हरते**; तस्य न क्षयं करोति। किं तु **ददाति** एव तत्पालनं करोत्येवेत्यर्थः ॥८उ०–१०पू०॥

अथोक्तार्थोपसंहारायोच्यते — "**तत्तन्त्रः**" इत्यादि। एवमुक्तप्रकारेण **सततं भोक्ता तत्तन्त्रः** नियत्यायत्तो भूत्वा सुखदुःखसंवेदनरूपं भोगं भुङ्क्ते। तथापि **मूढधीः** मायाञ्जनतिरस्कृतज्ञान-क्रियाशक्तित्वात् **तां** नियतिं **न वेत्ति** ॥१०उ०॥

अथैवंभूतनियत्यधिकारः [5]कदा वा निवर्तेत इत्यत्रोच्यते — "नियम्य बलवत्प्रीत्या" इत्यादि। **यावत् स्वेषु भोगेषु प्रीत्या**, वाशब्दादपरभोगेषु च प्रीत्या **भोगतत्परं** भोगास्वादननिष्ठं **भोगिनं** कर्मपाशयुक्तं तं **पुद्गलं** [6]**नियतेषु नियम्य, ध्वस्तकर्माशयं** प्रति **तस्माद् अपरेषु** नियतेषु **नियम्य दुःखपीडितम्** अपि **न** [7]**परिहीयते** इति। एवंभूतसंसारपरित्यागाय [8]यावदतृप्तोऽपि भवति, तावत्तं नियतिः **बलवद् धारयेत्**; तं प्रति नियतिर्यथाबलं स्वाधिकारं करोत्येवेत्यर्थः ॥११–१२॥

ततः परं निवर्तेत इत्युच्यते — "**तद्विधेष्वपि**[9]" इत्यादि। **तद्विधेष्वप्येवम्** इति पूर्वोक्तबद्ध-सदृशेषु संसारिषु एवं बलवत् स्वाधिकारं कृत्वा **अनन्ते सृष्टिवर्त्मनि** इति सृष्टौ संसारप्रवाहेऽवगमं[10] सेत्स्यति। **अथ आत्मवर्तिना स्वभावेन** इति मलपरिपाकेन संसारवैराग्यतः शिवशक्त्या मुक्त्यर्थं प्रेरितं पुद्गलं प्रति स्वाधिकारं समाप्य तदर्थमेव **प्रेरयितुं शक्ता** भवति। [11]तस्मिन् नियतिः शक्तिनिपातचिह्नं प्रकटीकरोतीत्यर्थः ॥१३॥

अथैतदेव दृष्टान्तेनोच्यते — "**यथाविष्टः**" इत्यादि। **यथा लोके अतिबलीयसा ग्रहेण आविष्टः पुमानाशु** [12]**विकारं दर्शयति। तद्वत्** संसारविमुखीभावादिचिह्नैरमुं प्रति नियत्या [13]शक्तिपात-प्रकटीकरणं [14]निर्वर्तितं भवत्येवेति [15]निश्चयः स्यात् ॥१४॥

अथैवं मलपरिपाकेन, कर्मणश्च समत्वाद् भोगविमुखीभावयुक्तं पुरुषं प्रति [16]नियतिरकिंचित्करा भवेदित्युच्यते — "**धर्माधर्मविपाके**" इत्यादि। यस्य पुरुषस्य **यदा** मलपरिपाको भवति तदा

---

[1] नियामको — ऐ.
[2] 'नियोजयेदाशु' इति पाठः एतद्व्याख्यातृसंमतः।
[3] कामायुःप्रद० — ऐ.
[4] ०भोगसमयोचितं — ऐ.
[5] को वा — ऐ.
[6] तन्नियमेषु नियम्य — ऐ.
[7] परिह्रियते — ऐ.
[8] अनादृतोऽपि — ऐ.
[9] 'तद्विधेष्वपि' इति पाठः एतद्व्याख्यातृसंमतः।
[10] सृष्टिसंहारप्रवाहेऽवगमे सति — ऐ.
[11] तद् नियतिः — ऐ.
[12] 'विकारं' इति पाठः एतद्व्याख्यातृसंमतः।
[13] 'शक्तिपातप्रकटीकरणं' इत्येतन्नास्ति — ऐ.
[14] निवर्तो भवत्येवेति — ऐ.
[15] निश्चितः — ऐ.
[16] नियतिर्किंचित्करोभूदित्युच्यते — ऐ.

**अस्मिन् धर्माधर्मविपाके** [1]**तुल्या कोटी** उन्नत्यवनतिरहिता तुलाकोटीव, धर्मपरिपाकसुखरूपं फलं च, अधर्मपरिपाकदुःखरूपं फलं चैककाले भोक्तुम् **उपलक्ष्यते**; प्राप्तं भवति। **तदा नियतिः तत्समुद्धारात्** तस्य कोटिद्वयसमायुक्तकर्मपाक[2]समुद्धरणेन नान्यत् [3]**कर्मणि पश्यति।** तत्र **भोक्तुः समे** पाके सति **यस्मात्** सुखदुःखरूपभोगान् **युगपत्** भोजयितुम् **असंभवात् शून्यवत् संस्थिता** भवति। [4]तस्मान्नियामिकाशक्त्यधिष्ठिता **निरपेक्षैव** तदा लक्ष्यते ॥१५–१६॥

तदा नियामिका शक्तिरपि एवं मन्यमाना भवतीत्युच्यते — "[5]**समानधर्मव्यापारः कष्टोऽयम्**" इति। संसारिणं [6]प्रति दुःखमोहरूपेण परिपीडनाय प्रवर्तितोऽयं [7]समानधर्मव्यापारः कष्टतर [8]इति। [9]तथापि **समानधर्मव्यापारः सुदुष्करः कथं स्याद्** इत्यत्र हेतुरुच्यते — पुमांसं **सुखदुःखाभ्यां सह युगपत् योक्तुं** कथं मया शक्यत इति[10] ॥१७॥

अथ त्राणा शक्तिः नियतिं समुद्धरतीत्युच्यते — **एतस्मिन्नन्तरे** इत्यादि। **एतस्मिन्नन्तरे** नियामिकाशक्त्यैवं मन्यमानावसरे **कर्तुः** अनन्तपरमेश्वरस्य संबन्धिनी [11]**उद्धरणशीलिनी** मलपरिपाकयुक्तं **क्षेत्रज्ञं** पुरुषं संसारसागरादुद्धरणसामर्थ्ययुक्ता **या** त्राणारूपा **सा वेगात् अतिभूरिणा स्ववीर्येण नियतिं प्रोत्सार्य, पश्चाद् भोगपराङ्मुखं कृत्वा वासयेत्।** परश्रेयोवासनायुक्तं करोतीत्यर्थः ॥१८–१९पू०॥

तदायं मुक्तो भवतीत्युच्यते — "**नानायासात्**" इत्यादि। एवं शिवशक्त्या स्पृष्टो योऽयं **नानायासाद्** नानाप्रलययुक्ताद् **महाघोरादस्मात् संसारसागरात् परमं सौख्यं** प्राप्तुम् "**अन्यः कश्चिदुपायोऽस्ति**" इति मत्या तत्कारणभूतं [12]शिवमुपास्ते। तेन पुरुषेण **यदनिन्दितम्**[13] मलादिदूषणरहितं पराह्लादप्रदं **तत् पदं प्राप्यते** ॥१९उ०–२०॥

अथोक्तार्थोपसंहारायोच्यते — "**तेन शक्तिनिपातेन**" इत्यादि। एवं **तेन** प्रोक्तनयेन **शक्तिनिपातेन** यः **अणुः** आत्मा **सम्यक्** रक्षितो भवति, स **हि कर्हिचित्** कदाचिदपि **नियत्याख्येन तत्त्वेन** [14]**न नियम्येत**। यदा **यतः तस्याः वशो न स्यात्**, तदा **समानतया स्थितः** इति। [15]तदुक्तम्[16] —

"न हृष्यत्युपचारेण नापकारेण कुप्यति" इति।

सुखदुःखसमानतया स्थितो भवतीत्यर्थः ॥२१–२२पू०॥

पुनः प्रसङ्गान्मतङ्गमुनिः — "**समानपरिपक्वस्य**" इत्यादि। एवं भगवता प्रसाधितेऽर्थे **स**

---

[1] 'तुल्या कोटचुपलक्ष्यते' इति पाठः एतद्वचाख्यातृसंमतः।
[2] समुद्धरणेनान्ये कर्मणि पश्यति — ऐ.
[3] 'कर्मणि' इति पाठः एतद्वचाख्यातृसंमतः।
[4] यस्माद् — ऐ.
[5] योऽयं व्यापारः कष्ट इति — ऐ.
[6] 'प्रति' इति नास्ति — ऐ.
[7] 'समानधर्मव्यापारः' इति नास्ति — ऐ.
[8] इतिशब्दो नास्ति — ऐ.
[9] तथापि — ऐ.
[10] अत्र 'मन्यमाना तिष्ठति' इत्यधिकम् — ऐ.
[11] 'उद्धरणशीलिनी' इति पाठः एतद्वचाख्यातृसंमतः।
[12] शिवमुपासते — ऐ.
[13] 'अनिन्दितम्' इति पाठः एतद्वचाख्यातृसंमतः।
[14] नकारो नास्ति — ऐ.
[15] 'तदुक्तं' इति नास्ति — ऐ.
[16] आकरो न लभ्यते।

**महान्** द्विविधो **विरोधः** प्रतिभासते। तत्र **समानपरिपक्वस्य कर्मणः भोगो न युज्यते**। धर्माधर्मयोः समानपरिपक्वं दृष्ट्वा यदा नियतिर्यं प्रति निवर्तते, तदा भोगाभावात् तस्य समनन्तरमेव देहपतनं द्रष्टव्यं तदपि न दृष्टमित्येको विरोधः।

किं च **शक्तिनिपाताच्च सः** अणुः **निरवस्थानः** ईश्वरशक्तिनिपात[1]मात्रेणैव ध्वस्तदेहादिसर्वप्रपञ्चोऽयं **तत्क्षणान्मुच्यते**। तस्य किमर्थं **परा दीक्षा**; पाश[2]क्षयार्थे हि दीक्षा। तत्क्षणान्मुच्यमानस्य **न ज्ञानं वा, योगो** वा, **चर्या** वा **प्रवर्तते**। एतेषां [3]दीक्षोत्तरकालमनुष्ठीयमानत्वेन श्रुतत्वात् समनन्तरमेव देहपतनयुक्तस्य [4]ज्ञानाद्युक्तिरेको विरोधः। तत्र द्विविधविरोधे **समाधानं** [5]**ब्रवीहि** इति पूर्वपक्षः ॥२२उ०–२४॥

तत्र समाधानम् — "**एकस्मादाशयाद्**" इत्यादि। समानपरिपक्वस्य कर्मणो भोगो न युज्यत इति यदुक्तं तन्न युक्तम्। तथा हि — यः कर्मफलभोगाय आरब्धो भवति स [6]**एकस्मादाशयाद्** एकजात्यायुर्भोगप्रदस्य परिपक्वकर्मणः क्षयात् **क्षिप्रमन्यमाशयं** तत्समनन्तरं [7]भोगप्रदानाय परिपक्वं कर्मान्तरम् **अनुसर्पति** संक्रमते, **स** तावत् **तेन वासितः** तत्कर्मवासनायुक्तः सन् **तन्मयत्वमुपैति** तद्वासनाभिभव[8]युक्तो भवति। ततः किमित्युच्यते — [9]यद्यपि यत्कर्मणा प्रारब्धदेहयुक्तो यः **परं** मुख्यं **शक्तिमयं** शिवशक्तिनिपातस्वरूपं **सामर्थ्यं प्राप्य निरुद्धात्मा ध्वस्तकर्माशयः** सर्वपाशक्षययुक्तश्च। तथापि **तद्वासितः** प्रारब्धकर्मवासनायुक्तः **सन्** देहादियुक्तो भोगं भुङ्क्ते ॥२५–२६॥

तत्र दृष्टान्तः कथ्यते — "**हिङ्गुपूर्णम्**" इत्यादि। **यथा** लोके **हिङ्गुपूर्णं** हिङ्गुद्रव्यैः पूरितं **पात्रमुपयुक्तेऽपि** हिङ्गुद्रव्ये निःशेषं यथा भवति तथान्यत्र योजितेऽपि **तद्वासः** हिङ्गु[10]द्रव्यगन्धो **न त्यजेत्** पात्रं न जह्यात्, **तद्वत्** समत्वेन सर्वकर्मक्षयेऽपि प्रारब्धवासनया किंचित्कालमस्य **शरीरं** [11]तन्निमित्तकर्मफलं च तिष्ठत्येव ॥२७॥

तदेव प्रपञ्चयति — "**न च तत्रास्ति**" इत्यादि। **तत्र** पात्रे तद्भुवनसमत्वेन हिङ्गु**द्रव्यं नास्त्येव**। **तद्वासो न प्रहीयते**; तद्वासस्तत्पात्रं न जह्यादेव। **पूर्वाशयवशात्** प्रारब्ध[12]कर्मफले नष्टेऽपि तद्वासनावशाद् **आहितसंस्कारः** प्राप्तभोगाभिलाषः सन् **न सुखदुःखाभ्यां युज्यते**। तथापि तत्कर्मबन्धैः **अत्यन्तं न** [13]**प्रबाध्यते** एव ॥२८–२९पू०॥

अथैवं कर्मसमत्वपक्षे शरीरस्थितिं, तन्निमित्तसुखदुःखभोगाभावदोषं च परिहृत्य, शक्तिनिपातपक्षे देहपतनप्रसङ्गदोषमपि परिहर्तुमुच्यते — "**शरीरनिरपेक्षत्वाद्**" इत्यादि। यदा शिवेच्छया

---

[1] ०मात्रयैव — ऐ.
[2] ०क्षयार्थो हि — ऐ.
[3] दीक्ष्योत्तर० — ऐ.
[4] ज्ञानाद्युक्तिनियोनेत्येको — ऐ.
[5] ब्रवीति पूर्वपक्षः — ऐ.
[6] एकस्मादन्यादाशयादेकदेश एकजात्यायु० —ऐ.
[7] भोगप्रदाय — ऐ.
[8] ०युक्तोऽभूत् — ऐ.
[9] यदा यत्कर्मणा — ऐ.
[10] ०द्रव्यगडो — ऐ.
[11] तन्निर्मितकर्म० — ऐ.
[12] ०कर्मनष्टेऽपि — ऐ.
[13] प्रवास्यते — ऐ.

शिवस्यानुग्रहशक्त्याघ्रातः मलपरिपाकतारतम्येन स्पृष्टो भवति सोऽसौ पुरुषः, तस्य **शरीरनिरपेक्षत्वात्** शरीराद्यपेक्षया प्रयोजनाभावाद् [1]**विमुक्तः** एव च। **नात्र संशयः**। किं तु **यावद्देहस्य पर्ययः** प्रारब्धदेहक्षयं यावत् **शिवरागेण रञ्जितः** शिवाराधननिष्ठो भवति। एवं भूत्वा **सदैव निराकाङ्क्षः** पुनर्भवविषयेऽपेक्षारहितः **परान् भोगान्** अपि शुद्धाध्वभोगानपि **नापेक्षते**। किं पुनः सुखदुःखविषये। एवं वासनावशात् क्वचित् कालं स्थित्वा तत्तनुक्षयो यदा भवति तदा मुक्तो भवत्येव ॥२९उ०–३१पू०॥

अथास्य [2]दीक्षाद्यप्रयोजनमिति यदुच्यते तन्निराकर्तुमुच्यते — "**किं तु दीक्षात्मकैः**" इत्यादि। शक्तिनिपातादनन्तरमेव न मुक्तो भवति। सत्यमेव। **किं तु** शक्तिनिपातनिश्चयोऽत्र केन प्रमाणेन गम्यते। नात्र प्रत्यक्षेण वज्रनिपतनादिव चक्षुरादिना प्रमीयते। शक्तेररूपिद्रव्याश्रितत्वात्। अथानुमानेनैवास्य **लिङ्गैर्विना** अर्थस्य गमकत्वाभावात्। तस्य लिङ्गं किमस्तीत्यत्रोच्यते — **दीक्षात्मकैर्लिङ्गैः** इति। शिवदीक्षाविध्यादौ श्रद्धादिरूपाणि येषां तैर्लिङ्गैर्ज्ञात्वैवावगम्यते। तदुक्तं श्रीमन्**मृगेन्द्रे**[3] —

> "येषां शरीरिणां शक्तिः पतत्यविनिवृत्तये।
> तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ ॥
> भक्तिश्च शिवभक्तेषु श्रद्धा [4]तत्साधके विधौ।" इति।

ततः शक्तिनिपातो लिङ्गैरनुमीयत इति। **ततः** सोऽयं पुरुषः शक्तिनिपातयुक्त इति निश्चयादनन्तरं **शिवोदितो निष्ठान्तः** परनिर्वाणोऽन्तो यस्य स **सर्वः** संस्काररूपत्वात्सर्वोऽयं **संस्कारः** दीक्षात्मकः [5]**शिवशक्त्या धृतात्मनां सर्वजन्तूनां** प्रवर्तते। एतदुक्तं भवति — मलपरिपाके [6]सति सर्वकर्मणश्च भोगं प्रारब्धवासनया भुञ्जानस्य वर्तितस्य पुरुषस्य अनुग्रहाय शिवशक्तिर्निपतति। तदा ग्रहाविष्टः पुरुषो यथा तल्लिङ्गैर्ग्रहावेशं दर्शयति, तथा शक्त्याविष्टोऽपि तल्लिङ्गैः शक्त्यावेशं दर्शयति। तदुक्तं श्रीमत्**स्वायम्भुवे**[7] —

> "क्षीणे [8]तस्मिन्यियासा स्यात्परं निःश्रेयसं प्रति" इति।

ततो यियासावाञ्छिवेच्छयाधिकृतमेव देशिकं प्राप्नोति। ततस्तु देशिकोऽपि तस्मिञ्शक्तिनिपातलिङ्गानि सम्यग्विलोक्य, तीव्रतरशक्तिनिपातयुक्तो यदि तस्यानुग्रहं कर्तुमारब्धो "अस्य मलादिबन्धो द्रव्यत्वान्न तावत् स्वयं क्षरति। न हि निगलादिबन्धनं स्वयं बन्धिनः [9]पुरुषान् विमुञ्चति। नापि पुरुषस्तस्य क्षरणे कारणं भवति, तस्य मलादिपाशैर्निरुद्धशक्तित्वात्। अथ ताभ्यां च बलीयसी शिवशक्तिः, अतस्तन्निपात[10]मात्रेण क्षरतीति चेत्तदपि न। यथा निगलादिना बन्धितस्य बन्धं विमोक्तुकामेन स्पृष्ट[11]मात्रेण निगलादि न क्षरति। किं तु तद्व्यापारेणैव। तथा शिवशक्तेर्व्यापारात्मिकया दीक्षया अस्य सर्वपाशाञ्छित्वा शिवपदे योजयामि" इति मत्वा सद्योनिर्वाणदीक्षां विधाय परपदे योजयति। तदासौ सद्यो मुक्तो भवति।

---

[1] विमुक्तये च नात्र — ऐ.
[2] दीक्षाद्यप्रयोजक इति — ऐ.
[3] विद्या० ५. ४, ५ पू०.
[4] तच्छासके – मुद्रितमृगेन्द्रागमपाठः।
[5] 'शिवशक्त्या धृतात्मनां' इति पाठः एतद्व्याख्यातृसंमतः।
[6] 'सति' इति नास्ति — ऐ.
[7] ३२. १७ पू०.
[8] तस्मिन्यया सा — ऐ.
[9] पुरुषाद्बन्धं विमुञ्चति — ऐ.
[10] ०मात्रया क्षरतीति — ऐ.
[11] ०मात्रया निगलादि — ऐ.

यदा यस्य तीव्रशक्तिनिपातस्तल्लिङ्गैर्निश्चितो भवति, तदा तस्यासद्योनिर्वाणदीक्षां विधाया-रब्धमलादिपाशक्षयार्थं ज्ञानं, योगं, चर्यां चोपदिशति। [1]सोऽपि च ज्ञानाद्यनुष्ठानं [2]विदधान एव स्थित्वा तनुक्षये मुक्तो भवति। ततो ज्ञानादेः [3]प्रयोजनमस्त्येव।

यदा मन्दतरशक्तिनिपातस्तदा समयसंस्कारदीक्षां विधाय रुद्रपदे योजयित्वा, तदुचितज्ञान-चर्ये उपदिशति। सोऽपि [4]यथावत्तदनुष्ठानं [5]विदधानस्तनुक्षये रुद्रपदं प्राप्नोति।

यदा मन्दशक्तिनिपातस्तदास्य विशेषदीक्षां विधायेश्वरपदे योजयित्वा, तदुचितज्ञानयोगचर्या उपदिशति। सोऽपि [6]तदनुष्ठानं कुर्वंस्तनुक्षये ईश्वरपदं प्राप्नोति। ततश्चतुर्विधशक्तिनिपात-लिङ्गैर्दीक्षयैव मुक्तिरिति दीक्षाया एव [7]मुक्तिहेतुत्वम्। तदुक्तं श्रीमत्**स्वायम्भुवे**[8] —

"अस्मात्प्रविततादुन्धात्परसंस्थानिरोधकात्।
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि॥" इति॥ ३१उ०–३२॥

एवं प्रासङ्गिकं सप्रपञ्चं निरूप्य प्रकृतनियतितत्त्वनिरूपणायोच्यते — "**तस्मान्नियतितत्त्वस्य**" इत्यादि। यस्माद्दीक्षादिना कर्ममलमुक्तो भवति, **तस्मात्** सद्य ऊर्ध्वं शिवशक्त्या परपदे योजितं पुरुषं प्रति **नियतितत्त्वस्य वीर्यं** नियामकत्वेन भावेन **कर्हिचिन्न सर्पति**। किं तु यतः **पुरा** नियति-तत्त्वं **पुंसो भोगाय विसृता**। न मुक्तं प्रति प्रवृत्तेत्यर्थः॥३३॥

अथ व्याख्यातार्थोपसंहाराय व्याख्येयस्योपक्रमाय च श्लोकः — "**याणोः**" इत्यादि। **या** [9]**प्रथित-गुणगणा** प्रथिताः समस्ताध्वनि [10]स्थितानां सकलात्मनां विचित्रकर्मपाकेषु न्यूनाधिकसमस्तनियम-करणे प्रसिद्धाः गुणानां समर्थानां गणाः समूहाः यस्याः सा। **अणोः** पुरुषस्य **नित्यं प्रसक्ता**। न [11]बुद्ध्यादिरिव क्वचित्पक्षे प्रयोजिका। सदैव भोगनियन्त्रीत्वेन **संयुता**। **सादरेण यो** यत्रा-भिलषेद् भोगान्, तस्य तदनुगुणं **या** [12]**स्थितिनियमवशात्** स्थितिनियमहेतुत्वात्। स्थितिनियम-शब्देन जात्यायुःप्रदकर्मणी उच्येते, तयोर्वशाद् **भोगदा**। बालानां क्षीरं, चातकानां मेघोदक-मित्याद्यायुर्जात्यनुगुणं भोगदेत्यर्थः। **न्यायतः** यो यत्कर्मकर्ता तत्कर्मफलं [13]स एव भोक्तुं योग्यो नान्य इतीश्वरविहिततया **समुचितविषयान्** सम्यक् तेन भोक्तुं योग्या विषयाः स्रक्चन्दनादयो येषां तान् **भोगान्** सुखदुःखसंवेदनरूपान् **विभक्तुं** तदंशमात्रेण विभागं कर्तुं **शक्ता**। **रूपेणात्यन्त-शुद्धा** पक्षपातविनिर्मुक्ता। तत्तद्भुवनाधिपान् स्वरूपेण **नीतिभावात्** नीतिसंभवादवति। निर्मला तथापि **विषमतटगता** सुखभोगसमये दुःखं, दुःखभोगसमये सुखमित्यादिविषमरूपसंसारमार्गं प्रविष्टा।

---

[1] सोऽपि शनाद्यनुष्ठानं – ऐ.
[2] विधायैव स्थित्वा — ऐ.
[3] प्रयोजनमस्यैव — ऐ.
[4] यथानुष्ठानं — ऐ.
[5] विधाय तनुक्षये — ऐ.
[6] तदनुष्ठिततनुक्षये — ऐ.
[7] 'मुक्तिहेतुत्वम्' इति नास्ति — ऐ.
[8] ३३. २४.
[9] 'प्रथितगुणगणा' इति पाठः एतद्व्याख्यातृसंमतः।
[10] स्थितसकलात्मनां — ऐ.
[11] बुद्ध्यादीनामिव — ऐ.
[12] 'स्थितिनियमवशात्' इति पाठः एतद्व्याख्यातृसंमतः।
[13] 'सः' इति नास्ति — ऐ.

तदाश्चर्यमित्यद्भुतोऽलंकारः। **पशूनां** तथा **लक्ष्यते**। [1]नहुपादीनां तथा दृष्टत्वादित्यर्थः। सेयं नियतिः **समासात्** संक्षेपोक्त्या **व्याख्याता** इति व्याख्यातार्थोपसंहारः। अथ व्याख्येयोपक्रमः— **सांप्रतं** तत् पुरुषतत्त्वमभिधास्ये इति ॥३४॥

इति श्रीमन्मराङ्गवृत्तौ नियतितत्त्वप्रकरणम्।

**त्रयोदशः पटलः**

---

[1]नहुषकथा महाभारते वनपर्वणि १८१ तमेऽध्याये दृश्यते।

# चतुर्दशः पटलः

## पुरुषतत्त्वप्रकरणम्

**अथ** इति नियतितत्त्व[1]व्याख्यानादनन्तरं **पुंस्तत्त्वनिर्देशः** क्रमप्राप्तः, तं विधास्ये इति पूर्व-क्रिययाभिसंबध्यते। पदार्थादिसबन्धाः पूर्वोक्ता एव। वाक्यात्मकस्तु[2] --

"एवमाहितसंस्कारः पूर्वाशयवशात्पुमान्"

इत्याद्यनेकविधः। ननु पुंसश्चेतनरूपत्वादचेतनतत्त्वमध्ये कथं पठ्यत इत्यत्रोच्यते -- [3]**स्वाधिष्ठा-नोपसर्पितः** इत्यादि। स्वाधिष्ठानेन तत्त्वगणेन संबन्धितो भूत्वा पुंस्तत्त्वतामधिगच्छति। स एवात्मा। **न द्वितीयम्** आत्मव्यतिरिक्तं **पुरुषाह्वयं** चेतनरूपत्वमिति[4] ॥१॥

अथ तत्स्वरूपनिरूपणायोच्यते -- **कञ्चुकत्रितयाविद्धम्** इत्यादि। यदात्मा कञ्चुकत्रितया-विद्धः प्रथमं कलाविद्यारागाख्यतत्त्वत्रयेण [5]संबन्धितो भवेत्। **शनैः** ततः परं **कालेन** [6]प्रेरितो भवेत्। ततः परं नियत्यालिङ्गितो भवेत्[7]। एवं क्रमेण पञ्चतत्त्वसंबन्धेन **आत्मवर्तिना पुंभावेन** आत्मवर्तिदृक्क्रियेच्छास्वरूपलाभात्मपुरुषभावेन युक्तो भवति। ततः [8]पुंस्तत्त्वत्वं **याति** ॥२॥

ततः परं -- "**यस्मात्**" इत्यादि। **यस्मात् पञ्चावयवलक्षितः** कलादिपञ्चतत्त्वोपोद्बलनेन लक्षितं भोक्तृत्वं यस्य सः। **भावितः** सोऽहं भोक्तेति भावितो भवेत्। **तस्मात् पुंभावसामर्थ्यात्** स्वेच्छाज्ञानक्रियाबलेन **उत्कण्ठात्** भोगाभिलाषेण **प्रधानं** प्रकृतितत्त्वं **पूरयति**। प्रकृतेः कार्य-विभवमधिगच्छतीत्यर्थः ॥३॥

एवं भोक्तृत्वस्वरूपप्रतिष्ठया पुरुषत्वं प्रतिपाद्य, अथ प्रकृतेः [9]पूरकतया च पुरुषत्वमित्युच्यते --"**पुष्णाति**" इत्यादि। **यस्मात्** प्रकृतिं **पुष्णाति तस्माच्च पुरुषः** इति **उच्यते** ॥४पू०॥

अथ भोक्तृत्वसमर्थनं विना भोगेषु च तस्य [10]न [11]समर्थतेत्युच्यते -- "**तज्जेष्वेवोपभोगेषु**" इत्यादि। **यतः** यस्मात्कारणात् **पञ्चतत्त्वोपबृंहितः** कलादिपञ्चकेन युक्त एव **दृक्क्रियः** इति दृक्क्रियावान् भवति। तस्मात् पुरुष एव **तज्जेषु** प्रकृतिजन्येषु **भोगेष्वपि सदा समर्थो** भवति। **नान्यथा** [12]निष्कलभावादित्यर्थः ॥४ उ०-५पू०॥

---

[1] ०व्याख्यातादनन्तरं -- ऐ.
[2] मतङ्ग० विद्या० १३. २८ उ०.
[3] 'स्वाधिष्ठानोपसर्पितः' इति पाठः एतद्व्याख्यातृसंमतः।
[4] इतिशब्दो नास्ति -- ऐ.
[5] संबन्धितोऽभूत् -- ऐ.
[6] प्रेरितोऽभूत् -- ऐ.
[7] ०लिङ्गितोऽभूत् -- ऐ.
[8] पुंस्तत्त्वं -- ऐ.
[9] पूर्णतया -- ऐ.
[10] नकारो नास्ति -- ऐ.
[11] समर्थनतायोच्यते -- ऐ.
[12] निष्कलाभावाद् -- ऐ.

तदेवोच्यते — "**अकर्ता**" इत्यादि। निष्कलावस्थायां मलरुद्धक्रियत्वाद् यः **अकर्ता**[1] **निर्गुणः** चिद्गुणरहितः **सूक्ष्मः** शरीराभावात्। अत एव **अशक्तः इति पठ्यते** ॥५उ०॥

**सः अणुः** आत्मा **पुंभावमापन्नः** पञ्चतत्त्वयोगेन पुरुषो भूत्वा, पश्चात् **प्रधानाशयगोचरं** प्रकृतिगतकर्मजन्यविषयं **प्राप्य अभिलाषमोहेन** भोगविषयरागकृतमोहेन प्रकृतेः स्वस्य च **कश्चन भेदो नास्तीति** मन्यमानो [2]भवेत्॥६॥

अत एव प्रधानकारणसृष्टौ च कारणं पुरुष इत्युच्यते — "**तस्मात्**" इत्यादि। **तस्मात्** एकत्वभावनासद्भावहेतोः **सर्वेषु** प्रधानकार्येषु **तत्त्वेषु क्षरतः** [3]प्रकृतितया क्षरणशीलस्य **अस्य** प्रधानस्य **विभागकृत्** पुरुष एव॥७पू०॥

तदेव दृष्टान्तेनोच्यते — "**यथाश्वत्थकणात्**" इत्यादि। **यथा क्षुब्धाद् अश्वत्थकणाद्** वाय्वग्निजलक्षेत्रसंयोगादुच्छूनताभावं गतादश्वत्थबीजात् **त्वक्पत्रमूलशाखादिविभागः पृथक् पृथक् सर्वतः** विभागतोऽस्य त्वक्पत्रादीनां [4]सर्वेषां विभागश्च भवति। **तद्वत् सृष्टेः** प्रधानसृष्टेः **तत्त्वानां** गुणादितत्त्वानां विभागः **स्यात्**॥७उ०–८॥

अथ प्रधानस्याचेतनत्वात्तस्य सृष्टिः कथम्, तत्त्वानां विभागश्चेत्यत्रोच्यते — "**प्रकरोति महादेवः**" इत्यादि। किं [5]करोति? **मायासमुद्भूतम्** इति लक्षणयोच्यते। मायासमीपवर्तिकलोद्भूतमित्यर्थः। अत एव मायाकार्यत्वात् **स्थूलं प्रकृतिसंज्ञकं तत्त्वं** श्रीकण्ठपरमेश्वरेण **कार्यं** कर्तुं योग्यं, **हार्यं** हर्तुं योग्यं, **धार्यं** धर्तुं स्थितीकर्तुं योग्यम्। अत एव **अस्वतन्त्रमचेतनं सदा पुंरागाकुलितं** पुंस्त्वमलेन विकृतीकृतमेवंभूतं प्रधानतत्त्वं **स्वतन्त्रः परमेश्वरो महादेवः** श्रीकण्ठनाथः [6]**पुरुषस्फुरणाद्** हेतोः **व्यक्तं** गुणादिचतुर्विंशतितत्त्वविभागं **प्रकरोति**॥ ९–१०॥

किं च **तयोः** पुंप्रधानयोः **योगाद्** हेतोः **कारणेच्छासमीरितं** श्रीकण्ठनाथस्येच्छया प्रेरितं **सचराचरं ब्रह्माद्यं कृत्स्नं** [7]**जगद्** भूतभुवनभावात्मकं च **विस्पष्टं व्यक्तिमायाति**॥११॥

किंच — "**तयोः**" इत्यादि। **तयोः** पुंप्रधानयोः **अन्योन्यसंयोगाद्** हेतोः **जगतः** बुद्ध्यादेः **साध्यसाधनकल्पना** भवति। [8]पुंसो बुद्ध्यादिभिः संबन्धात् साधनभावकल्पना, [9]विषयाकारबुद्धेः पुंसा सबन्धात् साध्यभाव[10]कल्पना च भवतीति **वक्तुं शक्यते**। **अन्यथा** तयोरन्योन्यसंबन्धाभावे **कदाचन** साध्यसाधनकल्पना **न** वक्तुं शक्यते॥१२॥

---

[1] 'यः अकर्ता' इत्यत्र 'योक्ता' इति दृश्यते — ऐ.
[2] अभूत् — ऐ.
[3] पा... नतया — ऐ.
[4] सर्वस्माद्विभागश्च — ऐ.
[5] 'करोति' इति नास्ति — ऐ.
[6] 'पुरुषस्फुरणाद्' इति पाठः एतद्व्याख्यातृसंमतः — ऐ.
[7] युगपद्भूत० — ऐ.
[8] पुमान् बुद्ध्यादि० — ऐ.
[9] विषयाकारो बुद्धि पुंसा — ऐ.
[10] ०कल्पा इति वक्तुं शक्यते — ऐ.

अथात्र हेतुरुच्यते — [1]"**यस्माद्**" इत्यादि। **यस्मात्** कारणात् **सदा** पुमान् **दृक्क्रियामात्रः** पञ्चतत्त्वोपबृंहितत्वात्, किं च [2]**प्रधानात् परतः** प्रधानस्योपरि स्थितः तस्माच्च, यस्मात् **प्रधानमपि स्वभावतः सूक्ष्मत्वात्** अव्यक्तभावात् **सत्तामात्रं** भवति तस्माच्च साध्यसाधनकल्पना न वक्तुं युज्यते। किं तु **तद्भोगेषु** प्रधानजन्यभोगेषु **समासक्तः** एवायं पुमान् **भोगी** इति भोगसाधन इति **लक्ष्यते** लक्षणयुक्तो भवति। **प्रधानं** च तद्भोगेषु **भोग्यत्वात्** तत्त्वम् इति साध्यभावमिति **लक्ष्यते** लक्षणयुक्तं भवति॥१३–१४॥

एवमन्वयव्यतिरेकेण[3] जगतः साध्यसाधनकल्पनायां तयोर्योग एव कारणमिति [4]प्रसाध्य तदुपसंहारायोच्यते — "**एवम्**" इत्यादि। **एवं** तयोः प्रधानपुरुषयोः **अन्योन्यसंयोगात् साध्यसाधन**-[5]**धर्मित्वम्** इत्यनेन **युक्तितः** अनुमानेन [6]तयोरन्योन्यसंयुक्तत्वमुक्तं भवति॥१५॥

एवं प्रासङ्गिकं समाप्य प्रकृतपुंस्तत्त्वनिरूपणायोच्यते — "**अनादिः**" इत्यादि। **अनादिः** प्रवाहानादिसिद्धपुंभावः। किं च **आशयोपेतः** कर्मयुक्तः। अत एव **कलादिना प्रेरितः** सन् भोक्तेति **पुमान् प्रोक्तः** भवति। यतः **प्रकृतिजान् गुणान्** सुखदुःखमोहरूपान् **भुङ्क्ते** ततः कारणादिति॥१६॥

ननु अविवेककृतस्तयोः प्रकृतिपुरुषयोर्भोग्यभोक्तृत्वसंबन्ध इति सांख्याः। तदयुक्तमित्युच्यते —"**अस्वतन्त्रः**" इत्यादि। ननु त्वन्मते पुरुषस्य नित्यनिर्मलत्वादविवेकः [7]कस्माद्भवति। प्रकृतिसंबन्धाद्यदि प्रकृतिसंबन्धात् प्राग् निर्मलस्य पुरुषस्य प्रकृतेश्च संबन्धोऽस्ति वा, नास्ति वा? नास्ति चेत् पुरुषस्याव्यापकदोषः संभवति। अस्ति चेत्सदाविवेकः पुरुषस्य संभवतीति मोक्षाभावप्रसङ्गः स्यात्। यदि वा संबन्धविशेष इत्युच्यते। तद्विशेषः को वा। तत्संबन्धः विशेषश्चेत्, [8]प्रधानतत्त्वं वा पुरुषेण विशेषेण संबध्यते, पुरुषो वा। [9]त्वन्मते च प्रकृतितत्त्वस्याचेतनत्वात् [10]तत् पुरुषं प्रति नो याति। तत्संबन्धविशेषश्चावयोः प्रमाणसिद्ध एव, तदभावे संसाराभावप्रसङ्गादिति। **यस्मात्** कारणादनादिमलदूषितत्वेन **पुमान् अस्वतन्त्रः** प्रोक्तः। प्रकृतित्वं चाचेतनं प्रोक्तम्। तस्मात् तयोः [11]संबन्धात् संसारी भवति **यतो** यदा **अयं** पुरुषः सदा प्रकृत्यासामान्यसंबन्धयुक्तः सदा **प्रभुः** इति व्यापकश्च भवतीति कश्चिन्न दोषः। तस्मात्सांख्यमतं तिरस्कृतमेव॥१७–१८पू०॥

"**तत्तत्वं तत्त्वसंताने**" इत्यादि। [12]यदा पुमान् पञ्चकञ्चुकसंयुक्तोऽनात्मादावात्माभिमानरूपपुंस्त्वमलबद्धो भवति, तदा **तत्त्वसंताने** इति तत्त्वगणनायां तदवस्थाविशेषं शोधयितुं प्रकृत्यां **पुमाख्यं तत्त्वं** सिद्धान्तशास्त्रेषु **परिकीर्तितं** भवति। तत्तत्त्वमेव तेषां मुक्तिस्थानमित्युक्तमिति मन्तव्यम्।

---

[1] 'यस्मात्पुं दृक्क्रियामात्रः' इति पाठः एतद्व्याख्यातृसंमतः।
[2] 'प्रधानात्परतः' इति पाठः एतद्व्याख्यातृसंमतः।
[3] ०व्यतिरेको — ऐ.
[4] प्रसह्य — ऐ.
[5] धर्मित्वादित्यनेन — ऐ.
[6] तयोरन्यत्वमुक्तं — ऐ.
[7] तस्माद्भवति — ऐ.
[8] 'प्रधान' इति नास्ति — ऐ.
[9] तन्मते च — ऐ.
[10] 'तत्' इति नास्ति — ऐ.
[11] 'संबन्धात्' इति नास्ति — ऐ.
[12] अत्र 'सत्यं' इत्यधिकम् — ऐ.

ननु च तदवस्थाविशेषात्मकत्वाद् भुवनाधारत्वात् तत् तेषामास्पदं कथं [1]न भवतीति चेत् अत एवात्र भुवनं नोक्तम्। तथापि पुंस्तत्त्वस्योक्तं भुवनं रागतत्त्वे स्थितमिति श्रूयते। यदुक्तं श्रीमत्**किरणे**[2] — "तत्रैव पुरुषो ज्ञेयः" इति। तद्भुवने तेषामास्पदमिति मन्तव्यम्।

ननु कैवल्यमुक्तिः किल सांख्यानां, तेषां कथं पुरुषतत्त्वभुवनप्राप्तिरत्र प्रोक्ता। [3]न तु सांख्यानां कैवल्यमुक्तिः संभवति। रागादितत्त्वभुवनेषु भोक्तव्यतया स्थितस्य कर्मणः सद्भावात् तदुक्तं श्रीमद्**रौरववृत्तिषु**[4] —

"गुणतत्त्वोर्ध्वभोग्यस्य कर्मणोऽनुपलब्धितः।
कैवल्यमपि सांख्यानां नैव युक्तमसंक्षयात्॥" इति।

[5]ततस्तेषां "पञ्चविंशतितत्त्वानि च सन्ति, पुरुषश्च नित्यव्यापकत्वयुक्तः [6]पृथक्" इत्येवंविध-विवेको भवतीति। [7]एवं विज्ञाय वैराग्ययुक्ता अध्यात्मकानुष्ठानं कुर्वन्ति। ततोऽध्यात्मका-ख्यानि वैराग्यजन्यानि कर्माणि तेषां संजातानि भवन्ति। तत्परीपाके तद्भुक्त्यर्थं परमेश्वरस्तान्[8] योजयति पुंस्तत्त्वभुवने। तद्भुवनजशरीरसद्भावादास्पदत्वं तेषां भवत्येव। [9]न केवलं सांख्य-मात्रास्तद्भुवनप्राप्ताः, वेदान्तवादिषु [10]क्रीडाब्रह्मब्रह्मविवर्तवादिनश्चाध्यात्मकाख्यकर्मयुक्ताः किल, [11]तेऽपि तद्भुक्त्यर्थं पुरुषतत्त्वे योजिताः सन्तो भोगान्भुञ्जाना भवन्ति।

परिणतिवेदान्तवादिनस्तु मायातत्त्वभुवनगता एव। तदुक्तं **परमोक्षनिरासकारिकासु**[12] —

"विज्ञानमात्रमानन्दं वस्तु सत्यं न तत्र हि।
नैवंविधमुपादानं दृष्टं तत्त्वादि सूरयः॥
भुवनत्वे निविष्टस्य तद्धि [13]तस्योपचर्यते।
गुणतस्तत्र संस्थानां भोगिनां मुख्यलक्षणम्॥
भुवनस्य विनाशित्वं दृष्टत्वा[14]तद्विनाशने।
तद्भोक्तॄणामपि भवेत्तेनैषा न ध्रुवा गतिः॥" इति।

एवं प्रकृतिचैतन्यकेन्द्रियचैतन्यककालचैतन्यकानां प्रकृत्यादितत्तत्तत्त्वभुवनेषु स्वार्जिताध्यात्मक-कर्मभोक्तृत्वमूह्यम्। तदुक्तं **श्रीमन्मृगेन्द्रे**[15] —

"यत्कैवल्यं पुंप्रकृत्योर्विवेकाद्
यो वा सर्वं ब्रह्म [16]मत्वा विरामः।
या वा काश्चिन्मुक्तयः पाशजन्या-
स्तास्ताः सर्वा भेदमायान्ति सृष्टौ॥" इति।

ननु चामुक्तौ मुक्तिभ्रान्त्याध्यात्मानुष्ठानं कुर्वतां भगवांस्तदनुष्ठानफलं कथं ददातीत्युक्तम्।

---

[1] नकारो नास्ति — ऐ.
[2] विद्या० ८. १२५ उ०.
[3] ननु — ऐ.
[4] परमोक्षनिरासकारिका ५२.
[5] ततस्ते पञ्चविंशति० — ऐ.
[6] पृथक् विधाने का भवतीति — ऐ.
[7] 'एवं' इति नास्ति — ऐ.
[8] 'तान्' इति नास्ति — ऐ.
[9] ननु केवलं — ऐ.
[10] क्रीडाब्रह्मचित्रब्रह्म० — ऐ.
[11] 'तेऽपि' इति नास्ति — ऐ.
[12] कारिका ४९–५१.
[13] 'तत्स्थितस्योपपद्यते' इति मुद्रितपरमोक्ष-निरासकारिका पाठः।
[14] ०तद्विनाशिनः — ऐ.
[15] विद्या० २. २८.
[16] मत्वाभिरामः — ऐ.

सत्यम्। तेषां मुक्तिविषयज्ञान एव भ्रान्तिः। न तु तत्तत्तत्त्वादिपदार्थविषयज्ञाने। ततो भगवान् सर्वानुग्रहकृपायुक्तो हि तत्तत्सुगुणमात्रं गृहीत्वा तत्तदनुष्ठानफलं ददातीति मन्तव्यम्। तदुक्तं **मोक्षकारिकासु**[1] —

"पाशदृष्टिविरोधाय प्रवृत्तमपि मानताम्।
न जहाति यतश्छेद्याः पाशास्तस्येह सर्वतः॥" इति।

ननु च सर्वेषां मुक्तिवादिनां तत्तद्भुवनेषु भोगभोक्तृत्वमेव मुक्तिश्चेत् —

"[2]अङ्गुष्ठ[3]मात्रे भुवने कैवल्यं संभवेत्पशोः।
विज्ञानयोगसंन्यासैर्भोगाद्वा कर्मणः क्षयात्॥"

इति श्रूयते तत्कथम्। सत्यम्। सिद्धान्तशास्त्रोक्तविज्ञानादिनैव कैवल्यता, न तु वेदान्तादिशास्त्रोक्तेनेति मन्तव्या। तदुक्तं **रत्नत्रये**[4] —

"बिन्दोर्विवेके सहसा [5]छिद्यन्ते मलकम्बुकाः।
मायापुरुषविवेके तु धर्माधर्मतुषक्षयः॥" इति सर्वमनवद्यम्॥१८उ०॥

ननु [6]अन्यस्यान्यत्रासद्भावः सर्वदाव्यभिचारिणी व्याप्तिरिति व्याप्तिलक्षणात् पञ्चकञ्चुकाद्यवच्छिन्नस्य पुरुषस्य प्रकृते कथं व्याप्तिर्भविष्यतीत्यत्रोच्यते — "[7]**प्रकृतेरप्यनन्तत्वात्**" इत्यादि। सत्यम्। तथापि तयोर्व्याप्तिः सिद्धैव। तद्यथा — पञ्चकञ्चुकोपलक्षितः कलादिभिः प्रत्यर्थं तत्तत्तत्त्वैरारब्धसूक्ष्मशरीरेण भुवनजस्थूलशरीरेण च युक्तो हि पुरुषः। प्रकृतिश्च **शरीरस्यानुरूपतः** इति सूक्ष्मशरीरे सूक्ष्मतया च, स्थूलशरीरे स्थूलतया च वर्तते। ततः **प्रकृतेरप्यनन्तत्वाद्** इति प्रतिपुरुषं स्थूलरूपत्वेनानन्ता प्रकृतिश्च, ततो व्याप्तिः सिद्धैव। किं च सांख्यवत् प्रकृतिरेकैवेति मन्यसे, तथापि [8]**प्रदीपनेत्रवद्योगाद्** इति यथैकः प्रदीपोऽनेकपुरुषनेत्रेषु व्याप्तस्तथैकप्रकृतेश्चानेकपुरुषाणां च व्याप्तिः सिद्धैव। किं च प्रकृतेः **स्थूलसूक्ष्म**[9]**विभागतः** इति कार्यकारणतया **वैश्वरूप्याद्** इति। तत्त्वभूतभुवनरूपत्वात् तत्र पुरुषोऽपि स्थित इति सदा **तस्य** पुरुषस्य प्रकृतेश्च **व्याप्तिः** सिद्धेति **महामुने ज्ञेया**॥१९॥

अथ व्याख्यातस्योपसंहाराय व्याख्येयस्योपक्रमाय च श्लोकः — "[10]**तस्यात्मनः**" इत्यादि। यो निष्कलः प्रलयकेवलावस्थायामभोक्तेति पठ्यते **तस्यात्मनः यया** कञ्चुकसंयुक्तात्मिकयावस्थाविशेषया **स** एव **भोक्तेति समर्थितः** समर्थीकृतः **स्यात्**। **सेयं तत्त्वविभागसंस्था** तत्त्वविभागेषु विभज्य व्यवहर्तुं योग्या स्थितिः **मया कथिता** इति व्याख्यातोपसंहारः। अथ व्याख्येयोपक्रमः — तस्य भोक्तृभोग्यं **जगद् विधौ** सृष्टिविषये प्रधानं पठ्यते। **तच्च यथावद्** अभिधास्य इति॥२०॥

इति श्रीमन्मतङ्गवृत्तौ पुरुषतत्त्वप्रकरणम्।

**चतुर्दशः पटलः**

---

[1] कारिका १४४.

[2] परमोक्षनिरासकारिका ५४.

[3] 'मात्रभुवने' इति मुद्रितपरमोक्षनिरासकारिकापाठः।

[4] श्लोकः १७५

[5] 'छिद्यते मलकम्बुकः' इति मुद्रितरत्नत्रयपाठः।

[6] अन्यस्यान्यत्र सद्भावः — ऐ.

[7] 'प्रकृतेरप्यनन्तत्वात्' इति पाठः एतद्व्याख्यातृसंमतः।

[8] 'प्रदीपनेत्रवद्योगात्' इति पाठः एतद्व्याख्यातृसंमतः।

[9] 'विभागतः' इति पाठः एतद्व्याख्यातृसंमतः।

[10] 'तस्यात्मनः' इति पाठः एतद्व्याख्यातृसंमतः।

## पञ्चदशः पटलः

## प्रधानतत्त्वप्रकरणम्

**अथ** इति पुंस्तत्त्वादनन्तरं प्रधानं "[1]विधास्ये" इति पूर्वक्रियाभिसंबन्धः। पदार्थादिसंबन्धाः पूर्ववदेव। वाक्यात्मकस्तु —

"[2]प्रधानमपि सूक्ष्मत्वात्सत्तामात्रं स्वभावतः।"

इत्याद्यनेकविधः। पाटलिकस्तु पूर्वपटलान्ते "[3]भोग्यं जगत्तच्च विधौ विधास्ये" इति सूचितः।

अथ प्रधानस्य परमकारणत्वेन भुवनाधारत्वाभावाद् गुणतत्त्ववर्तिश्रीकण्ठभुवन एव क्रोधेश्वरादिप्रधानभुवनाष्टकमपि स्थितम्। तत्र ते रुद्राः क्रीडन्तीत्युच्यते — "**अथ रुद्राः**" इत्यादि। **योगियोगेश्वराः** इति योग्यष्टकवर्तिश्रीकण्ठभुवनयुक्तभुवनानामीश्वराः। **शिवाः** परमेश्वरशिष्याः **सूक्ष्माः सूक्ष्मतराः** इति श्रीकण्ठादयः सूक्ष्माः, ततश्च सूक्ष्मतराः क्रोधेश्वरादयः। साक्षाच्छिवनियुक्तत्वादित्यर्थः। **श्रीकण्ठश्च** इति श्रीकण्ठोऽपि शिवनियुक्त एव। **सर्वरुद्राग्रनायकः** इति कालाग्निरुद्रादीनां नायकः। **तस्योर्ध्वभागे भुवनम्** इति क्रोधेश्वराद्यष्टभुवनमित्यर्थः ॥१–२॥

अथ श्रीकण्ठनाथ एव प्रधानतत्त्वक्षोभक इत्युच्यते — "स नाथो [4]व्यक्तरूपी" इत्यादि। **व्यक्तरूपी** इति परमेश्वरशक्त्याभिव्यञ्जितज्ञानक्रियाशक्तियुतः [5]**स्वेच्छाविधायकः** न त्वनन्तप्रेरित इत्यर्थः ॥ ३पू० ॥

अथ प्रधानतत्त्वलक्षणमुच्यते — '**अव्यक्तम्**" इत्यादि। अव्यक्तम् इति व्यक्त्यभावात् प्रधानतत्त्वम्। **अखिलस्यास्य जगतः** इति गुणादिपृथ्व्यन्तानां **कारणम्** उपादानं परंपरयेत्यर्थः ॥३उ०॥

अथ तज्जगदुत्पत्तिक्रम उच्यते — "[6]**स्वशक्तिकिरणैः** इत्यादि। प्रकृतत्वात् श्रीकण्ठनाथस्य **स्वशक्तिकिरणैः** प्रधानं **क्षोभ्यम्**। **तत्क्षणाद्** इति इच्छामात्रेण कुलालवत् करणाक्लेशादित्यर्थः। **व्यक्तिं नयति** इति पूर्वं शक्तिरूपेण स्थितं गुणादिकं व्यक्तिरूपेण कृतवानित्यर्थः ॥ ४पू० ॥

अथ "[7]डुधाञ् धारणपोषणयोः" इत्यस्माद्धातोरुत्पन्नत्वात्प्रधानशब्दस्य तत्र पोषणतया प्रधानाख्यत्वमुच्यते — "**व्यक्तस्य वृत्तयः**" इत्यादि। **व्यक्तस्य** इति गुणादि[8]तत्त्वात्मकत्वेन परिव्यक्तस्य तस्य प्रधानस्य **व्यक्तयः** प्रकाशप्रवृत्तिनियमाख्याः **तिस्रः सर्वगोचराः** इति सर्वात्मनां

---

[1] मतङ्ग० विद्या० १४. २० उ०.
[2] मतङ्ग० विद्या० १४. १३ उ०.
[3] मतङ्ग० विद्या० १४. २० उ०.
[4] 'व्यक्तरूपी' इति पाठः एतद्व्याख्यातृसंमतः।
[5] 'स्वेच्छाविधायकः' इति पाठः एतद्व्याख्यातृसंमतः।
[6] 'स्वशक्तिकिरणैः क्षोभ्यं व्यक्तिं' इति पाठः एतद्व्याख्यातृसंमतः।
[7] ११९७ तमो धातुः।
[8] ०तत्त्वात्मकपरिव्यक्तस्य — ऐ.

विषयतया वर्तन्ते। **तासां परमा काष्ठा** परमपोषणवृत्तिः या सा प्रधानपोषणमिति तया **तत् प्रधानम्** इति **इह** पारमेश्वरशास्त्रे पठ्यते॥ ४उ०–५पू०॥

अथ धारणतया प्रधानत्वमुच्यते— **प्रतिसंचरमापन्नम्** इत्यादि। महाप्रलये **प्रतिसंचरमापन्नं** शक्त्यात्मकत्वेन स्थित्युन्मुखम् **एतद् गुणात्मकं जगद्** गुणादिपृथ्व्यन्तं **प्रकृष्य स्वोदरे विनिपात्य** तत्सर्वं स्वात्मनि धारयित्वा "[1]**धारितुं** धर्तुं **शक्तं** यत् तत् प्रधानमिति धारणार्थतया प्रधानशब्देनोच्यते॥५उ०–६॥

[2]ननु पाञ्चरात्राः प्रधानलक्षणमेवं नोक्तवन्तः। किं तु— "अस्मात्परं नास्त्यपरम्" इत्युक्तवन्तः। तथा हि— यथा मृदन्वितेषु घटादिषु मृत्कार्यत्वदर्शनाद्भवद्भिः सुखाद्यन्वितेष्वपि कार्यकारणादिषु सुखादिरूपप्रधानकारणत्वमिष्यते। तथैवात्मनां प्रधानस्य च भेदेऽप्येकसमन्वयसंभवादेककारणत्वमिष्यताम्। अत्र च तन्मा भूदिति विशेषाभावात्तेषां चिदचितां परमकारणत्वात् परा प्रकृतिः सैव, तस्मात्परमचेतनरूपं प्रधानतत्त्वं क्वचित् कारणान्तरजन्यं नास्ति। किं च नित्यव्यापकयुक्तं चेतनात्मकमपरमपि नास्ति। तत्रैवाणीयस्तया अव्यापकत्वेन तत्कार्यत्वेनानित्यतया च चेतनानामुत्पन्नत्वात्, तत एवोपादानकारणाद् विकृतिधर्मकादविद्याकर्मानुबन्धेन जीवात्मनां संभवात्, तत्क्षयतः समुपशान्तकार्यभेदरूपे तस्मिन् परमकारणात्मनि तेषां विलयो हि परा मुक्तिः" इति चोक्तवन्तः। तत्कथमित्यत्रोच्यते— "**अस्मात् परं नास्त्यपरम्**" इत्यादि। तदयुक्तम्। हे **मुनिव्याघ्र**। तद्यथा अचेतनानामचेतनोपादानकारणजन्यत्वे प्रमाणमस्ति। न तत्र विवादः। यत् "'**अस्मात् परं नास्ति**" इत्युक्तं तत्रोच्यते। चिदचित्परिणतिधर्मे प्रधाने तत्प्रलयावस्थायां तेषां चिदचितां लयस्योक्तत्वात्, पुनः सृष्टौ सर्वे मुक्ता अमुक्ताश्च संसारिणो भवन्ति।

स्यादेतत्। यद्यपि प्रलये तत्र सर्व एव जीवात्मानो बद्धा अबद्धाश्च लीनाः। तथापि प्रतिसर्गमविद्यादिवासनायुक्तेन ये बद्धास्ते जीवात्मरूपेण पुनरपि परावर्तन्ते। न त्वबद्धाः, तेषां परावृत्तिहेतोरविद्यादेस्तत्राभावादिति। तदयुक्तम्। तस्यामवस्थायां विभागाभावात्। अविभागावस्थैव परमकारणम्। तत्रापि बद्धाबद्धयोर्विभागे विभागस्याविभागपूर्वकत्वात् तत्प्रकृत्यनुमानं स्फुटमेवेति न तेन परमत्त्वं तस्याः प्रकृतेः, असकृत्प्रकृतीतरसद्भावदिति।

किं च "तस्मात् नित्यव्यापकधर्मयुक्तमपरं चेतनरूपमपि नास्ति" इति। तत्रोच्यते। तथा हि— नैकस्मादुपादानकारणाच्चेतनाचेतनरूपविरुद्धकार्यद्वयोत्पत्तिर्युज्यते। विरुद्धयोरेकोपादानत्वायोगाद्भावाभावयोरिव। अथ कश्चिद्भागस्तस्य चेतनः, कश्चिन्नेत्युच्यते। यद्येवं सभागत्वेन तस्य घटवत्कार्यत्वं सिद्धम्।

यदुक्तमेकसमन्वयात् कार्यत्वसिद्धावात्मनां तत्परा प्रकृतिः सिद्ध्यतीति। तदयुक्तम्। असिद्धत्वादात्मनां समन्वयस्य। समन्वयो हि ग्राह्यस्य कर्मतामापन्नस्य ग्रहीतुं युज्यते। न चात्मा स्वात्मन एव ग्राह्यो भवति, तत्र तस्य व्यापारविरोधात्। स हि ग्राहकत्वेन प्रत्यग्रूपतया सर्वदा प्रतिभासते। तस्मान्न कर्मतया गृह्यते।

स्यादेतत्। ग्राह्यसमन्वयो ग्राह्यत्वापन्नस्यैव गृह्यते। यत्तु ग्राहकसमन्वयो ग्राहकरूपेणैव

---

[1] 'धारितुं' इति पाठः एतद्व्याख्यातृसंमतः—ऐ.

[2] सप्तमश्लोकव्याख्याने दृश्यमानो विषयः परमोक्षनिरासकारिकायां द्वितीयकारिकावृत्तौ, मोक्षकारिकायां २० उ०–२३ पू० वृत्तौ, नरेश्वरपरीक्षाप्रकाशे १.५४,५५ श्लोकविवरणे च दृश्यते। प्रायेण वाक्यान्यपि तत्रत्यवाक्यसमानाकाराण्येव दृश्यन्ते।

तस्मिन्नात्मनि भासमाने भासत इति। तदयुक्ततरम्। ग्राहकसमन्वयो ह्यनेकग्राहकप्रकाशपूर्वकः। न चैकैकात्मस्वभावग्राहकस्वसंवेदनेन ग्राहकान्तरसंवेदनमस्ति। तस्य ततोऽन्यत्वेन घटादिवत् परत्वात्। न ह्यात्मानः स्वसंवेदनमात्राः परस्परं संकीर्यन्ते। सर्वस्य सर्वज्ञताप्रसङ्गादिति। प्रत्येकं स्वात्मसंवेदने कस्य कुत्रान्वयः।

यद्येवं सर्वे एवात्मानः सर्वज्ञस्य ग्राह्यत्वमनतिक्रान्ताः, तस्मात् स एव तेषु ग्राह्येष्वन्वयं ग्रहीष्यतीति। तदयुक्तम्। सर्वज्ञात्मनैव व्यभिचारात्। सोऽपि हि स्वसंवेदनेन परात्मभ्यो भेदेनैव तद्ग्रहीतृतया भासते यतः। न च ग्रहीतर्यन्वयः संभवतीत्युक्तम्। न तस्य सर्वज्ञत्वाद्विपरीतग्रहणमुपपद्यते। तत एवात्मानः परस्परं भिन्नाः समन्वयविषयभावमतिक्रम्य वर्तन्त इति। अत एव स्वरूपसत्ता एवात्मानः परमकारणवत्। सर्वे आत्मानः इत्येकपदप्रवृत्तिश्च वृक्षादिशब्दवदभिधेयमात्रे प्रयोजकाः। यद्वा सादृश्यनिमित्तात्मवत्प्रवृत्तिः। समन्वयभेदत्वान्नित्याः परत्वेन सिद्धाः। न प्रधानकार्या इव सिद्धाः। नाणीयस्त्वमपि तेषाम्। अणीयस्त्वेनात्मनामाकाशादिवदरूपत्वात् काश्मीरस्थस्येव दक्षिणापथे परिदृश्यमानदेशान्तरभवस्वकर्मफलभोक्तृत्वं नोपपद्यते। शरीरसंयोगेन चेत्, शरीरस्य नवद्वारत्वाद्वायुना सह बहिर्निष्क्रमो भवतीति। तत्तत्त्वे चामुक्तौ मुक्तिभ्रान्ताः। **न ते मुक्ताः**। किं तु वेदान्तवाद्यादीनामिव प्रधानतत्त्वेऽव्यात्मककर्मफलभुक्त्यनन्तरं **पुनरायान्त्यधोमुखाः** इति संसारिणो भवन्तीति मन्तव्याः। एवं गुणादिभूतान्तचैतनिकानां तत्र तत्र लयभावो मन्तव्यः परावृत्तिश्च ॥७॥

ननु यद्येवं ब्रह्मादीनां प्रकृतिलयत्वेनोक्तश्रुतिविरोधः। नात्र श्रुतिविरोधः, आत्मनां लयभोगाधिकारावस्थात्रयस्योक्तत्वाद् भोगाधिकारावसाने लयावस्थया ब्रह्मादयः प्रधानतत्त्वे स्थिता इत्युक्तश्रुतीनां भ्रमादर्थावगत्या सर्वेषां लयावस्थामुक्तवन्त इत्युच्यते — "**स्वव्यापारावसाने तु**" इत्यादि। एतदेव **प्रलयपटले** च वक्ष्यति —

"[1]एवमब्दशतं पूर्णं भावाभावपरिक्रमात्।
स्वाधिकारं समाप्यैव महत्तत्त्वे स विश्वराट्॥
बुभोज विपुलान्भोगान्भोगस्थानं यतस्तु तत्।
लयश्चास्य पदे ज्ञेयो गुणाख्ये गुणवत्तरे॥" इति।

**गुणवत्तरे** इति प्रधानतत्त्वमुच्यते।

**यस्मिन्** प्रधानतत्त्वे **ब्रह्मा** इत्युपलक्षणं विष्णवादेश्च। ततश्च पाञ्चरात्रा एतच्छ्रुत्यर्थमविज्ञाय नारायणाख्यश्च प्रकृतिश्च एक एवेति मत्वा जगदीश्वरत्वेन वासुदेवानिरुद्धमकरध्वजरौहिणेयभेदेन प्रकृत्यैव प्रवर्तत इति पाशरूपत्वेनेश्वरसिद्धिमुक्तवन्तो भ्रान्ता एव। यदुक्तं **व्योमव्यापिस्तवे**[2]—

"पशुदृक्षूक्तो भ्रान्तैः पशुपाशास्त्वीश्वरः स्वतन्त्रे तु।
सद्भावेन यदुक्तः सद्भावेश्वर नमोऽस्तु तस्मै ते॥" इति।

**श्रीकण्ठेच्छासमीरितः** इति ते ब्रह्मादयः श्रीकण्ठनियुक्तास्ततस्तत्प्रेरिता अधिकारभोगलयस्थानेषु स्थिताः। [3]न तु स्वेच्छाविहारा इत्यर्थः॥८॥

अथ ब्रह्मण आयुःशतं श्रीकण्ठनाथस्याहः, तावती रात्रिः स्थिता। ततः परमस्याहर्मुखे प्राप्ते श्रीकण्ठनाथेन गुणादिपृथिव्यन्ततत्त्वे कृते सति त एव वा, परे वा ब्रह्मादयस्तेन श्रीकण्ठेन प्रेरिताः

---

[1] मतङ्ग० विद्या० २५. ४३ उ० —४५ पू०.

[2] श्लो० ५८. (टि० ११२)

[3] ननु — ऐ.

स्वाधिकारं कुर्वन्तीत्युच्यते — "**श्रीकण्ठस्यापि**" इत्यादि। यतः **विराट्** ब्रह्मा तेन श्रीकण्ठनाथेन **तेजसा** ज्ञानक्रियात्मतेजसा **प्रबुद्धः** [1]विकसितः, तदा **सहसा व्यक्तिमायाति** स्वाधिकारप्रवृत्तिमासाद्य **ततो विविधां सृष्टिम्** इति ब्रह्माण्डान्तर्वर्तिचतुर्दशविधभूतसृष्टिं [2]**चकार**। तत्त्वभुवनसृष्टेः श्रीकण्ठनाथेन तदहर्मुखे कृतत्वादिति भावः ॥ ९–१०पू० ॥

अथ प्रासङ्गिकमुपसंहृत्य प्रकृतः प्रधानतत्त्वव्यापार उच्यते — "**सत्त्वं रजस्तमश्च**" इत्यादि। **प्रधानस्य** [3]**प्रसारणाकुञ्चनाभ्याम्** इति प्रवृत्तिभ्यां ये **सत्त्वं रजस्तमः** इति त्रिगुणाः, **लक्ष्यन्ते सुरमानुष्यतिर्यग्जातिष्ववस्थिताः** इति सुरेषु सत्त्वं, मानुष्येषु रजः, तिर्यग्जातिषु तमः [4]इति क्रमेणावस्थिताः सन्तः, [5]**स्वासु प्रवृत्तिषु** प्रवृत्ताः [6]**विशेषान्तम्** इति पृथिव्यन्तं स्वव्यापारप्रकाशप्रवृत्तिनियमाख्यप्रवृत्तीः **व्यवस्थया** निश्चयेन कुर्वन्तो लक्ष्यन्ते प्रधानवृत्तय इति मन्तव्याः ॥१०उ०–१२पू०॥

अथ [7]विवर्तवादिनामिव पटस्य [8]कुटिवद्विवर्ततया प्रसारणं न युक्तं गुणतत्त्वस्य। तथा परिणाम एव मृद्घटवत् प्रधानस्य प्रसारणमित्युच्यते — "**सर्गः** [9]**प्रसारणं प्रोक्तम्**" इत्यादि॥१२उ०॥

उक्तार्थमुपसंहरति — "**एवंविधं प्रधानम्**" इत्यादि। **ब्रह्मणा सहितम्** इत्युपलक्षणं ब्रह्मादिभुवनेश्वरसहितं तत्त्वभुवनभूतात्मना श्रीकण्ठनाथेन **क्षोभमायाति** इत्यर्थः ॥१३॥

ननु सांख्यैर्गुणा एव समावस्थां प्राप्ताः प्रधानमित्युच्यते। तत्कथमित्यत्रोच्यते — "[10]**ईषदुन्मीलितं सत्त्वम्**" इत्यादि। यतः प्रधानतत्त्वस्वरूपं **सर्वं च गुणात्मकम्** इति त्रिगुणस्वरूपम्। तथापि तस्य सत्त्वस्य **उन्मीलितम्** इति प्रकाशव्यापारश्च, **रजसः** प्रवृत्तिव्यापारश्च, [11]**संहारः तमसः** इति नियमव्यापारश्च **ईषत् पृथग् न विद्यते**। तस्मात् **प्रधानाख्यं तत्त्वं** [12]**अन्यद्** इति गुणतत्त्वादन्यद्। अयमभिप्रायः — क्ष्मादिभागानां घटादिरूपाणां यथा पृथिव्यात्मके आधारेऽवश्यमविभागो भवति। एवं सत्त्वादीनामपि गुणभागानां कस्मिंश्चिदाधारेऽवश्यमविभागः सिद्ध इति। तदुक्तं श्रीमत्**पौष्करे**[13] —

"अव्यक्तगुणसाम्यं तु प्रधानं परिपठ्यते।" इति ॥१४–१५पू०॥

ननु गुणतत्त्वस्यास्य[14]अव्यक्तगुणसाम्यरूपात् प्रधानतत्त्वात् को विशेष इत्युच्यते — "**महदादिमहत्कार्यकारणस्य**" इत्यादि। [15]**महदादिमहत्कार्यकारणस्य** इति बुद्धितत्त्वादिमहत्कार्याणां विशेषगुणबाहुल्ययुक्तानां कारणस्य गुणतत्त्वस्य सत्त्वादिगुणा **उपलक्षिताः** इति व्यक्तिरूपेण साम्यतां

---

[1] विकसीकृतः — ऐ.

[2] 'चकार' इति पाठः एतद्व्याख्यातृसंमतः।

[3] 'प्रसारणाकुञ्चनाभ्यां' इति पाठः एतद्व्याख्यातृसंमतः।

[4] इतिशब्दो नास्ति — ऐ.

[5] 'स्वासु प्रवृत्तिषु' इति पाठः एतद्व्याख्यातृसंमतः।

[6] 'विशेषान्तं व्यवस्थया' इति पाठः एतद्व्याख्यातृसंमतः।

[7] वृत्तिवादिनामिव — ऐ.

[8] कुण्टिवद्वृत्तितया — ऐ.

[9] 'प्रसारणं' इति पाठः एतद्व्याख्यातृसंमतः।

[10] 'ईषदुन्मीलितं' इति पाठः एतद्व्याख्यातृसंमतः।

[11] 'संहारस्तमसः' इति पाठः एतद्व्याख्यातृसंमतः।

[12] 'अन्यत्सर्वं' इति पाठः एतद्व्याख्यातृसंमतः।

[13] पुंस्तत्त्वपटले श्लो० ३५ उ०.

[14] त्रिगुणसाम्यरूपत्वात् — ऐ.

[15] 'महदादिमहत्कार्यकारणस्योपलक्षिताः' इति पाठः एतद्व्याख्यातृसंमतः।

गता [1]इति। अयमेव विशेषो गुणतत्त्वस्य बुद्ध्यादेश्चेति भावः। तदुक्तं तत्रैव[2] —

"विभक्तगुणसाम्यं तु गुणतत्त्वमिहोदितम्।
विभक्तगुणवैषम्यं तत्त्वं बुद्ध्यादिकं द्विजाः॥" इति ॥१५उ०॥

ननु "प्रकृतिरेव बुद्ध्याद्यात्मकतया परिणता पुरुषस्य भोग्यत्वेन तद्दर्शयति। पुरुषस्य द्रष्टृत्वमात्रमेव" इति सांख्याः। तदयुक्तमित्युच्यते — "**प्रवृत्तिरसतः**" इत्यादि। **न तु असतः** इति अचेतनस्य चित्प्रेरणं विना स्वतः **प्रवृत्तिः** क्वचिदपि प्रमाणसिद्धा न भवति। ननु च

[3]"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य",

तथा प्रवृत्तिरज्ञस्य युज्यते तदयुक्तम्। तत्रापि चेतनस्य गोः प्रेरणया क्षीरस्य प्रवृत्तिर्दृष्टा। किं चायस्कान्तप्रवृत्तौ च योक्तारमपेक्षत इति [4]पूर्वमेव तिरस्कृतत्वादत्र न विस्तृत इति॥

ननु प्रधानतत्त्वं नित्यमिति सांख्याः। तदयुक्तम्। [5]"प्रकृतेरप्यनन्तत्वाद्" इति पूर्वमेव निषिद्धमिति नात्रोच्यते। आचैतन्ये सत्यनेकत्वात् कारणपूर्वकत्वं सिद्धमेवेति भावः। तदुक्तं श्रीमद्**रौरवे** —

[6]"कलातत्त्वाद्रागविद्ये द्वे तत्त्वे संबभूवतुः।
अव्यक्तं च" इति ॥१६पू०॥

अथ प्रधानतत्त्वाद्गुणादिपृथिव्यन्तानामुत्पत्तिक्रम उच्यते — "**युगपच्चलतः**" इत्यादि। यतोऽसतः प्रवृत्तिर्नेष्यते तस्मात्, श्रीकण्ठनाथेन **चलतस्तस्य** इति विक्षोभितस्य प्रधानतत्त्वस्य सकाशाद् **युगपद्** एव, **कालतः** इति सृष्टिमार्गतो गुणादीनि **विशेषान्तानि** इति पृथिव्यन्तानि **तत्त्वानि** संजातानि। तथापि सर्वानुक्रमसिद्धानि तु **प्रतिलोमाद्** इति संहारक्रमेण स्थूलस्थूलतरसूक्ष्मसूक्ष्मतरक्रमेण पृथिव्यादिगुणान्तानि क्रमसिद्धानि सृष्टिक्रमेण गुणादीनि **प्रसिद्धानि** मन्तव्यानि॥१६उ०–१८पू०॥

अथोक्तार्थमुपसंहरति — "**तत्त्वं जगदुपादानम्**" इत्यादि। **जगदुपादानम्** इति गुणादिपृथिव्यन्तजगदुपादानं **तत्त्वम्** इति प्रधानतत्त्वम् **उक्तम्**। अथ **तस्य वृत्तयः** इति वृत्तिशब्देन कार्याण्युच्यन्ते॥१८उ०॥

अथ व्याख्यातोपसंहाराय व्याख्येयोपक्रमाय च श्लोकः — "**गुणत्रयम्**" इत्यादि। **गुणत्रयं** गुणानां त्रयं यस्य तत्। **उदारवृत्तम्** उदाराः अभिव्यक्ताः तत्कार्यगताः वृत्तयः प्रकाशादयः यस्य तत्। **प्रशान्तकालानुगतं** संहारकालमनुगच्छति कर्मपाकार्थं यद् **एतत्** प्रधानतत्त्वम्। अस्य **समस्तम्** अपि लक्षणं प्रोक्तमिति व्याख्यातार्थोपसंहारः। **अस्य अवसरागता प्रसूतिः** गुणतत्त्वसृष्टिः, तामपि शृणु त्वमिति व्याख्येयोपक्रमः॥१९॥

इति श्रीमन्मतङ्गवृत्तौ प्रधानतत्त्वप्रकरणम्।
**पञ्चदशः पटलः**

---

[1] इतिशब्दो नास्ति — ऐ.
[2] पौष्करे पुंस्तत्त्वपटले श्लो० ३६.
[3] सांख्यकारिका ५७ पू०.
[4] क्षीरस्य गोप्रेरणया प्रवृत्तिः (मतङ्ग० विद्या० ६. ६९ उ०, ७० पू०); अयस्कान्तस्य प्रवृत्तौ योक्त्रपेक्षा (मतङ्ग० विद्या ६. ४१).
[5] मतङ्ग० विद्या० १४. १९ पू०.
[6] विद्या० २. १५.

## षोडशः पटलः

## गुणतत्त्वप्रकरणम्

अथ इति प्रधानतत्त्ववर्णनादनन्तरं **क्रमात्** सूक्ष्मतरादिक्रमात्। **अतः** इति प्रधानतत्त्वात् **सृष्टिं** गुणसृष्टिमित्यर्थः। [1]**विस्तारतः** प्रवक्ष्यामीति। पदार्थादिसंबन्धाः प्राग्वदेव। वाक्यात्मकस्तु —

"[2]सत्त्वं रजस्तमश्चेति गुणाः स्वासु प्रवृत्तिषु।"

इत्याद्यनेकविधः। पाटलिकस्तु पूर्वपटलान्ते [3]"वृत्तयस्तस्य शृणु" इति सूचितः॥१पू०॥

अथ श्रीकण्ठनाथेन प्रधानक्षोभकालनिर्णय उच्यते — **अनन्तविक्रमः** इति। स **श्रीकण्ठः** न त्वनन्तनियुक्तः शिवनियुक्त एवेत्यर्थः। सः [4]**स्वाख्ये अहर्मुखे प्रबुद्धः** इति आदिसृष्टौ कलादिसमस्तजगतोऽनन्तकर्तृकत्वान्मध्यमप्रलयावसानमेव तदहर्मुखं, तस्मिन् प्रबुद्ध इति। प्राग् आत्मनां विश्रान्त्यै च, कर्मणां पाकाय च, प्रकृतेः शक्त्युपोद्बलनाय च संहारं कृत्वा, तेषां पुनर्भवसामर्थ्यं यदा भवतीत्यवलोक्य स्थितः सन्, तत्सामर्थ्ययुतकाले प्रबुध्य इति। न तु मर्त्यानामिव स्वापात्प्रबुद्धच इत्यर्थः। एतदेवाह — **स्वभावो वृत्तयः तस्य** इति न तु कार्यकारणादिप्रेरिता ज्ञानक्रियावृत्तयस्तस्य। किं तु **स्वभावः** एवेति। अन्यप्रेरणानपेक्षस्वभावसिद्धज्ञानक्रियासामर्थ्ययुक्तो यतः। ततः स्वापादयो वृत्तयोऽस्य नैवेत्यर्थः। ततः **प्रबुद्धस्य तस्य** सूक्ष्मसूक्ष्मतरकार्यसृष्टौ **सूक्ष्माः शक्तयः** वामादिक्रियाशक्तयो **बलीयसा स्ववीर्येण समन्ततः** इति कार्यप्रसूत्युन्मुखामत्र प्रकृतिं समन्ततः [5]**प्रसृताः** इति। गुणतत्त्वसृष्ट्यर्थं प्रवृत्ता इत्यर्थः।

ननु श्रीमत्किरणे[6] —

"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः।"

इति नियमः कृतः। अत्राशुद्धाध्वमध्यवर्तिप्रधानतत्त्वे कथं श्रीकण्ठनाथस्य कर्तृत्वमुक्तम्। सत्यम्। अत एवानेन ज्ञायते महाप्रलयावसानेऽशुद्धेऽध्वनि तत्त्वादिसमस्तस्यानन्त एव कर्ता, न तु श्रीकण्ठादय इति नियमः मध्यमप्रलयादौ श्रीकण्ठादीनां, तन्नियुक्तब्रह्मादीनां च तत्र कर्तृत्वस्योक्तत्वान्न नियम इति॥१–उ०२॥

अथ न तु श्रीकण्ठशक्तिक्षोभात् प्रधानेऽसत उत्पत्तिः। किं तु कारणावस्थात्यागेन कार्यात्मनाभिव्यक्तिरेवोत्पत्तिरित्युच्यते — "**तत्संयोगाच्चलति**" इत्यादि। **प्रधानं** प्रधानतत्त्वं **तत्संयोगाद्** इति श्रीकण्ठशक्तिसंयोगात् कुलालशक्तिसंयोगान्मृद्वच्च, **स्वासु वृत्तिषु** इति स्वकार्याणां गुणानामुत्पत्तिनिमित्तं चलतीति। कारणावस्थां त्यजतीति यावत्। अथ सत्कार्यसिद्धेः [7]प्रागेवोक्तत्वाच्छक्त्यात्मना स्थिता गुणा व्यक्तीभूता भवन्तीत्युच्यते — "**वृत्तयश्च गुणाः**" इत्यादि। यतो [8]**न्यग्भूता** इति अर्थक्रियाकारिकार्यावस्थां विहाय शक्त्यात्मककारणावस्थात्मिका **प्रकृतिः** स्थिता।

---

[1] 'विस्तारतः' इति पाठः एतद्व्याख्यातृसंमतः।

[2] मतङ्ग० विद्या० १५. १० उ०.

[3] मतङ्ग० विद्या० १५. १८.

[4] 'स्वाख्ये' इति पाठः एतद्व्याख्यातृसंमतः।

[5] 'प्रसृताः' इति पाठः एतद्व्याख्यातृसंमतः।

[6] विद्या० ३. २७.

[7] मतङ्ग० विद्या० ६. ४६ उ०, ४७, ५४ श्लोकेषु।

[8] 'न्यग्भूता प्रकृतिः' इति पाठः एतद्व्याख्यातृसंमतः।

ततः पुनरर्थक्रियाकारिकार्यावस्थामासाद्य, प्रकाशादिवृत्तिं करोति। तदवस्थैव **गुणाः** इति प्रोक्ता।

ननु नैयायिकैस्तु सत्त्वादयो गुणा आत्मगुणा एवेत्युक्ताः। अत्र तु प्रधानकार्यत्वेन कथं प्रतिपाद्यन्ते। तदयुक्तम्। तैरपि मोक्षेऽत्यन्तोच्छेदत्वं तेषामुच्यते। किं चात्मस्वभावस्य ज्ञानक्रियात्मनो नित्यस्य गुणस्य मुक्तौ सर्वतो व्यापकत्वेनाभिव्यक्तिः श्रूयते। किं च पटादिज्ञानानामध्यवसायरूपाणामव्यापकत्वं दृश्यते। तस्मादनित्या अव्यापका धर्मादिरूपाः सत्त्वादयो गुणा [1]नित्यस्य व्यापकस्यात्मनो गुणा भवितुं नार्हन्ति। तदुक्तं **भोगकारिकासु**[2] —

"अत्यन्तोच्छेदतो मुक्तावभिव्यक्तेश्च [3]सर्वदा।
पटादिबोधवैतत्यादात्मनो न गुणा गुणाः॥" इति।

यद्येवं गुणानां गुणिनं विहाय पृथक् स्थितिः कथमुपपद्यते। मैवम्। सत्त्वादिगुणन्यूनाधिकतया सत्त्वादिगुणाभिधानं गुणात्मकतत्त्वस्य। न तु गुणानां पृथक्स्थितिरुक्ता। तदुक्तं श्रीमत् **सर्वज्ञानोत्तरे**[4] —

"रजस्तमश्चाभिभूय सत्त्वं वर्धति षण्मुख।
रजःसत्त्वं तमश्चैव तमःसत्त्वं रजस्तथा॥" इति।

श्रीमन्**मृगेन्द्रे**ऽपि[5] —

"एकैकश्रुतिरेतेषां वृत्त्याधिक्यनिबन्धना।" इति च।

यद्वा सर्वे पदार्था [6]गुणसमूहरूपाः। तत्र चैकगुणाधिक्याद्गुणव्यवहारः, अनेकगुणा गुणित्वेनोपचारादुच्यन्त इति सर्वमनवद्यम्॥३॥

अथ प्रधानस्य प्रकृतिशब्दवाच्यत्वमुच्यते — [7]"**स्वभावो यः**" इत्यादि। [8]**यः** अविकारधर्मी अविकारिस्वभावः स्यात् सा **प्रकृतिः** इति लोके प्रसिद्धा, अत्र च तत्स्वभावादुक्तेति॥३–४पू०॥

अथ प्रकृतितत्त्वस्य परमकारणत्वेन निरवयवत्वेन भुवनाधारत्वाभावात् तत्तत्त्वभुवनाष्टकं गुणमूर्ध्नि स्थितमित्युक्तमागमेषु। अत्रापि भुवनसृष्टौ तदष्टकमेवादौ श्रीकण्ठनाथः सृजतीत्युच्यते — "**तस्मादेव** [9]**परिक्षोभात्**" इत्यादि। **प्रबुद्धाः** [10]**परमेश्वराः** इति गुणतत्त्वसंहारे श्रीकण्ठभुवने स्थितास्तद्भुवननाथाः, तद्भुवनाष्टकसृष्टिमवलोक्य तत्र **विविधैर्भोगैश्चेष्टन्ते**। **प्रधानतत्त्वे प्राधान्यम्** इति प्रधानतत्त्वे प्रथमभुवनसृष्टिः **तेषां** शिखेदादीनां भुवनस्येत्यर्थः॥४उ०–५॥

अथ तद्भुवनक्रम उच्यते — "**शिखेदस्य पुरम्**" इत्यादि॥ ६–९पू०॥

अथ गुणतत्त्वस्यापि सूक्ष्मस्थूलरूपत्वात् सूक्ष्मगुणतत्त्वेऽनन्तेश्वरसृष्टश्रीकण्ठनाथादिभुवनानां मध्यमप्रलये संहाराभावात् स्थूलगुणतत्त्वस्यैव मध्यमप्रलये लय इति तद्विधिरुच्यते — "**तस्माद्**" इत्यादि।

---

[1] अनित्यस्य — ऐ.
[2] कारिका ५६.
[3] 'सर्वतः' इति मुद्रितभोगकारिकापाठः।
[4] ३. ४८.
[5] विद्या० १०. २१ उ०.
[6] गुणानां समोहरूपाः — ऐ.
[7] 'स्वभावो योऽविकारी स्यात्' इति पाठः एतद्व्याख्यातृसंमतः।
[8] यो विकारधर्म्यप्यविकारी स्वभावः — ऐ.
[9] 'परिक्षोभात्' इति पाठः एतद्व्याख्यातृसंमतः।
[10] 'परमेश्वराः' इति पाठः एतद्व्याख्यातृसंमतः।

**तस्माद् महाग्रन्थैः** इति शिखेदादिभुवनमारभ्य बुद्धितत्त्वादि [1]अभवत् **गुणपिण्डात्मकम्** इति स्थूल-गुणतत्त्वमित्यर्थः ॥९उ०॥

अथ व्यक्तगुणसाम्यरूपे गुणतत्त्वे तद्गतविशेषनिरूपणस्य शक्यत्वाद्गुणविशेषं दर्शयितुं ब्रह्माण्ड-सृष्टिरुच्यते — "**स्वाधिकार**" इत्यादि। [2]**स्वाधिकारपराक्रान्तम्** इति सूक्ष्मपृथिवीतत्त्व[3]ब्रह्माण्डा-द्बहिर्दशदिक्षु स्थितशतभुवनेषु स्थित्वा स्वाधिकारं कुर्वतां शतरुद्राणां शक्तिभिराक्रान्तं स्थूलपृथिवी-तत्त्वात्मकं स्थूलसृष्टौ **पुराभवत्** ॥१०पू०॥

अथ ब्रह्मण उत्पत्तिरुच्यते — "**तन्मध्ये कललम्**" इत्यादि। **तन्मध्ये** ब्रह्माण्डमध्ये सत्य-लोक इत्यर्थः। यतो देवानां भुवनजशरीरस्य कारणं भूतसारात्मकत्वाद् **अनिन्दितं** तेजोरूपं **गुणात्मकं** सत्त्वगुणरूपं [4]**सूक्ष्मम्** अमरादिशरीरकारणत्वात् सूक्ष्मम्। **कललं** स्थूलशरीरोत्पत्ति-कारणं **यत्तद् शक्तिसंपातात्** श्रीकण्ठनाथशक्तिक्षोभाद् **भिन्नम्** उत्पन्नं भवति। तस्माद् **विराद्** ब्रह्मा **अभिव्यक्तवान्** भवति। स्थूलशरीरयुक्तो भवतीत्यर्थः ॥१०उ–११पू०॥

अथोऽस्यैश्वर्यस्वरूपमुच्यते — "**सत्त्वोत्कटेन**" इत्यादि। सत्त्वोत्कटेन भावेन [5]बुद्धेर्धर्मादिभिः सत्त्वभावाधिक्येनाणिमाद्यष्टकमैश्वर्यं भवति। तत् पिशाचादिपितामहान्तदेवयोन्यष्टकेषु एकैक-गुणाधिक्याच्चतुष्षष्टि[6]गुणाधिकमैश्वर्यं भवति। ततश्चतुष्षष्टिगुणाधिक्येनैश्वर्येणान्वितश्च ॥११उ०॥

किं च — "अन्योऽपि" इत्यादि। यो बुद्धौ सात्त्विकभाव[7]रूपो धर्मादिः **चतुर्धा संप्रतिष्ठितः** व्यवस्थितः, तेन सांसिद्धिकभावभेदो भवति। **तेन** चान्वितः ॥१२॥

अथ तत्सृष्टिरुच्यते — "**करोति प्रक्रियां चित्राम्**" इत्यादि। सत्यलोकादूर्ध्वं [8]स्थितानां श्रीकण्ठनाथेन निर्मितत्वात्सत्यलोकादधः कूष्माण्डभुवनावधिस्थितानां भुवनानां **मालिकां चित्रां प्रक्रियां** सप्तविधयोनिभेदसृष्टिं च **करोति** ॥१३पू०॥

तथा तत्रैव ब्रह्माण्डे सत्त्वादिगुणाः स्वस्ववृत्तिभेदैर्विजृम्भिता इत्युच्यते— "**गुणाः सर्वे**" इत्यादि। यतो ब्रह्माण्डे [9]**सर्वे गुणाः** विजृम्भितास्ततस्**तेषां सत्त्वादीनां** वृत्तयः **समासेनोपवर्ण्यन्ते** ॥१३उ०–१४पू०॥

अथ गुणादिपृथिव्यन्तेषु पुनर्जन्मवतां पुंसां सूक्ष्मदेहद्वारेण सत्त्वादीनां गुणानां वृत्तिं क्रमेण दर्श-यितुं पुनर्भवयोग्यानां पशूनां भेद उच्यते — "**सत्त्वादन्यः पुमान्**" इत्यादि। **सत्त्वादन्यः पुमान् सिद्धः** इति प्रकृतिपुरुषविवेकज्ञानेन मुक्ता ये ते च, **अनेनाशययोगेन** इति अनेन सांख्ययोगेन [10]कैवल्यापेक्षया ये मुक्तास्ते च, **परमाणवः** इति [11]परमात्मैव सर्वमिति वेदान्तज्ञानेन ये **विमुक्ताः**

---

[1] 'अभवत्' इति नास्ति — ऐ.

[2] 'स्वाधिकारपराक्रान्तं' इति पाठः एतद्व्याख्यातृसंमतः।

[3] ०ब्रह्माण्डस्य बहिः — ऐ.

[4] सूक्ष्ममस्मदादिशरीर० — ऐ.

[5] बुद्धेर्धर्मादिसत्यभावाधिकोनाणिमा० — ऐ.

[6] ०गुणाधिकं भवति — ऐ.

[7] ०रूपा अधमादि चतुर्धा सं — ऐ.

[8] 'स्थितानां' इति नास्ति — ऐ.

[9] 'सर्वे' इति पाठः एतद्व्याख्यातृसंमतः।

[10] कैवलप्रेक्षया — ऐ.

[11] परमात्मेव — ऐ.

ते च, **बलाद्** इति हठात्कारेण ये भृगुपतनादिना स्वर्गादिमुद्दिश्य तत्रात्मानं योजयन्ति ते च, **शिवशक्तिसमूहेन** इति [२]ये वामदक्षिणमार्गेण शिवशक्तिपरिज्ञानेन मुक्तास्ते च, **ये च लीनाः क्रमेण** इति ये च नवविधतुष्टि[१]भेदैर्भूतादिप्रकृत्यन्तेष्वात्मभावनया तत्तत्त्वेषु लीना मुक्तिं प्राप्तास्ते च **क्षोभमायान्ति** इति पुनः संसारिणो भवन्ति। तेषु वृत्तिं प्रदर्शयामीति भावः ॥ १४उ०–१६पू०॥

तदेवाह — "**व्यक्तीभूतेषु**" इत्यादि। एवंभूतेषु सर्वेष्वात्मवर्गेषु [३]**व्यक्तीभूतेषु** प्रत्येकं गुणवृत्तिः **न शक्यते वक्तुं**, ततः संक्षेपेणोच्यते ॥१६उ०–१७पू०॥

अथ क्रमेण सत्त्वगुणवृत्तिं प्रदर्शयति — "**स्थैर्यं**" इत्यादि ॥१७उ०–१९पू०॥

अथ रजोगुणवृत्तिरुच्यते — "**क्रौर्यम्**" इत्यादि ॥१९उ०–२०॥

अथ तमोगुणवृत्तिरुच्यते — "**अरतिः**" इत्यादि ॥२१–२२पू०॥

अथ त्रिगुणानां विमिश्रा वृत्तिरित्युच्यते — "**विमिश्राश्च**" इत्यादि ॥२२उ०॥

तत्र हेतुरुच्यते — "**प्रवृत्तिर्नेष्यते यस्माद्**" इत्यादि। **यस्माद्** एकपुरुषे क्वचित् क्वचित् त्रिगुणवृत्तयो दृश्यन्ते। ता व्यक्तानां गुणानां कारणानां तत्र स्थितिं विना नोपपद्यन्ते। ततोऽत्र त्रिगुणवृत्तयो मिश्रा एव **स्थिताः** **तथाप्युत्कृष्टदर्शनात्** इति एकैकगुणवृत्त्याधिक्याद् **व्यस्ताः** एकैक[४]गुणवत्त्वमित्युच्यते ॥२३–२४पू०॥

अत एव गुणानां वृत्तिं विनात्मनां परं भोग्यं नास्तीत्युच्यते — "**दृश्यं तेभ्यः**" इत्यादि ॥२४उ०॥

एवमादिप्रसङ्गेन गुणतत्त्वं तत्त्वधर्मेणोक्त्वा भुवनधर्मेण त्रिपर्वपदार्थद्योतनायोच्यते — "**श्रीकण्ठस्तत्कृतावासः**" इत्यादि। श्रीकण्ठनाथः **स्वं वीर्यं** स्वस्य रूपं योगबलेन **द्विधा** कृत्वा, **प्रधानादवतीर्य** सूक्ष्मगुणतत्त्वे स्थितः। प्रधान[५]भुवनादनन्तेश्वरनिर्मितादवतीर्य स्वेन निर्मिते स्थूलगुणतत्त्वस्थितश्रीकण्ठभुवने [६]सदा **कृतावासो** भवति ॥२५॥

तत्र किंनिमित्तमधिवसतीत्यत्रोच्यते — "**रुद्राणां स्थितये विभुः**" इत्यादि। [७]**वीरभद्रादयः** इति वीरभद्रादारभ्य कालाग्निरुद्रान्तास्ते, **ब्रह्मान्ताः लोकनायकाः** इति गुणतत्त्वस्थितविष्णुमारभ्य ब्रह्माण्डमध्यस्थितब्रह्मान्तभुवनपालकाश्च। तत्र वीरभद्रादयश्च, शतरुद्राश्च, पञ्चाष्टकरुद्राश्च, अनन्तशिष्यः श्रीकण्ठश्च मध्यमप्रलये संप्राप्ते तदा तदा श्रीकण्ठभुवने **अदुःखिताः** सुखिनो वसन्ति। पुनर्गुणादिपृथिव्यन्ते तत्त्वसंताने स्वस्व[८]भुवनेष्वधिकारं कुर्वन्ति। कालाग्न्यादयस्तु मध्यमप्रलयान्तं

---

[२] ये वा सदक्षिण० — ऐ.
[१] भेदैर्भुवादि० — ऐ.
[३] व्यक्तितेषु — ऐ.
[४] ०गुणत्वमुच्यते — ऐ.
[५] ०भुवनादनलेश्वरनिर्मिता० — ऐ.
[६] सदा वासो भवति — ऐ.
[७] 'वीरभद्रादय' इति' इति नास्ति — ऐ.
[८] ०भुवने वेष्टं त्यधिकारं — ऐ.

सुखिनो भवन्ति। भुवनपालकाश्च तत्प्रलयान्तं सुखिनो भवन्ति। तत्सर्वं श्रीकण्ठ**बलमाहात्म्याद्** एव। तदर्थमत्राधिवसतीति मन्तव्यः ॥२५उ०–२६॥

अथ गुणमध्यपतित[1]योग्यष्टकभुवनस्वरूपमुच्यते — **पत्युः** श्रीकण्ठस्य भुवनं सत्त्वाधिक्येन **जातमतस्तेजोमयम्**। तत्र स्थितानां च सत्त्व[2]गुणाधिक्यम्। ते सत्त्वयुक्ता एव। **औमम्** इति तदधःस्थितं भुवनं रजोगुणाधिक्ययुक्तं [3]ततो **महादीप्तं** तरुणादित्यसंकाशम्। तत्र स्थिताश्च सुखिनो भवन्ति। उमादेव्यश्च त्रिरूपाः स्थूलसूक्ष्मपरभेदात्। तत्र स्थूला उमा कैलासाधिपति-श्रीकण्ठभट्टारकपट्टमहिषीत्वेन स्थिता। सूक्ष्मा तु गुणतत्त्वस्थित [4]श्रीकण्ठभट्टारकपट्टमहिषीत्वेन स्थिता सैव तद्भुवने स्थिता। परा तु सदाशिवभट्टारकपट्टमहिषीत्वेन सदाशिवभुवने स्थिता। तदुक्तं श्रीमद्**रौरवे**[5] —

"उमाप्रियं सदाकान्तं प्रणतोऽस्मि सदाशिवम्" इति ॥

तदधः कौमारभुवनं, तदपि [6]प्रकृतत्वाद्रजसाधिक्ययुक्तमीषत्सत्त्वगुणयुक्तं च। अत एव तस्य सर्वोत्कर्षवीर्यवत्वेऽपि ज्ञानाधिक्यसंभवः। सोऽपि स्थूलसूक्ष्मपरभेदेन त्रिरूप एव। तत्र स्थूलः कैलासाधिपतिकुमारत्वेन स्थितः। सूक्ष्मस्तु गुण[7]भुवनाधिपतिश्रीकण्ठनाथकुमारत्वेन कौमारभुवने स्थितः। परस्तु सदाशिवभुवन एव स्थितः। तदधस्तु वैष्णवं भुवनं **शुद्धरजोमयम्**। अत एव तस्य प्रवृत्त्याधिक्यम्। सोऽपि त्रिविध एव। तत्र स्थूलो ब्रह्माण्डवर्तिवैष्णवभुवने स्थितः। सूक्ष्मस्तु [8]गुणतत्त्ववर्तिवैष्णवभुवने स्थितः। परस्तु शिवस्य [9]पञ्चावरणस्थितविष्णुत्वेन सदाशिव-भुवने स्थितः। [10]**तदधस्ताद्** ब्राह्मं भुवनं तदपि प्रकृतत्वाद्रजोमयमपि किंचित्तामस[11]गुणयुक्तं भवति। अत एव तस्य [12]प्रवृत्तिमत्वेऽप्यवीर्यवत्वम्। सोऽपि त्रिविधः। तत्र स्थूलः सत्यलोके स्थितः। सूक्ष्मस्तु गुणभुवनब्राह्माख्ये स्थितः। परस्तु [13]पञ्चावरणस्थितः सदाशिवभुवन एव। तदधो भैरवं भुवनम्। तत्तमोगुणमयमपि किंचिद्रजोगुणयुतम्[14]। अत एव तस्य नियामकत्वेऽपि वीर्यवत्वम्। तदधः [15]**कृतनाम्नो** भुवनं रजोमयमपि **ईषत्सत्त्वाधिकमिति**। किंचित्तामसयुतं च। अत एव तत्र शास्त्रोक्तानुष्ठानपराः स्थिताः। तदधः **अकृतं** नाम भुवनम्। तत्तु **शुद्ध**-तमोमयम्। अत एवाशास्त्रीयमपि भक्त्याधिक्येन कृतवन्तः स्थिताः। इत्यष्टभुवनानि योग्यष्ट-कनाम्ना गुणतत्त्वे श्रीकण्ठनिर्मितान्येव ॥२७–३१पू०॥

अत्र विभागमाह — "**तमसो वृत्तिम्**" इत्यादि। कृताकृतभैरवभुवनत्रये स्थिता योगिन-स्तमोवृत्तिनियमयुताः[16]। ब्राह्मवैष्णवकौमारभुवनत्रये स्थिता योगिनो रजोवृत्तिप्रवृत्तियुताः। औम-भुवने स्थितानां योगिनामीषद्रजोवृत्तिप्रवृत्तियुतसत्त्ववृत्ति[17]प्रकाश एव। **अतः परं** श्रीकण्ठभुवने स्थिता योगिनः शुद्धसत्त्ववृत्तिज्ञानयुताः ॥३१उ०–३३॥

---

[1] ०योग्य एकभुवन० — ऐ.
[2] ०गुणाधिक्ययुक्ता एव — ऐ.
[3] ततो दीप्ततरुणादित्य० — ऐ.
[4] श्रीकण्ठपट्टमहिषीत्वेन — ऐ.
[5] विद्या० १. ११ उ०.
[6] प्रकृतत्वाद्रजोधिक्यमीषत् — ऐ.
[7] ०भुवन श्रीकण्ठनाथश्रीकण्ठः कुमार० —ऐ.
[8] गुणवत्त्ववैष्णव० — ऐ.
[9] पञ्चावर्णस्थित० — ऐ.
[10] तदधः तद्ब्रह्मं प्रकृतत्वात् — ऐ.
[11] ०गुणयुक्तमपि भवति — ऐ.
[12] प्रवृत्तित्त्वेऽप्यवीर्यत्वं — ऐ.
[13] पञ्चावर्णस्थितः — ऐ.
[14] अत्र अपीत्यधिकम् — ऐ.
[15] कृतनामभुवनं — ऐ.
[16] ०नियमवृत्तियुताः — ऐ.
[17] ०प्रकाशयुता एव — ऐ.

ननु श्रीकण्ठादयः परमेश्वरनियुक्ताः सर्वबन्धरहितास्तेषां कथमत्र [1]सत्त्वाधिक्याद्युच्यते इत्यत्रोच्यते — [2]"**विना येनापि**" इत्यादि। सत्यम्। तेषु सत्त्वादीनां गुणानां वृत्त्यभावेऽपि गुणवृत्तिक्रमोक्तिः प्रसङ्गादत्रोपचारादुच्यते। न मुख्यतयेति भावः ॥३४पू०॥

अत्र प्रसङ्गात्, श्रीकण्ठादीनां शिवनियुक्तानां महत्त्वमुच्यते — "**योगवीर्यमदामोदविलासेन**" इत्यादि। [3]**स्वतेजोगूढगोचराः** इति स्वतेजोभिर्ज्ञानक्रियाशक्तिभिः गूढमत्यन्त[4]गहनमपि शिवादिकं वस्तु[5]प्रत्यक्षीकृतमित्यर्थः ॥३४उ०–३७॥

अथ गुणानां मुख्यवृत्तिश्च वर्णक्रमेणोच्यते — "**चन्द्रांशुनिर्मलम्**" इत्यादि ॥३८–३९पू०॥

किं चैता वृत्तयश्च सत्त्वादीनां मुख्या इत्युच्यते — "**आह्लादनस्वभावः**" इत्यादि। यत्र पुंसि शुद्धसत्त्वयोगाद् **आह्लादनस्वभावः** जायते, [6]सोऽपि सुखरूपा वृत्तिर्मुख्या सत्त्वस्य। [7]यत्र पुंसि **सर्वारम्भेषु** [8]**आवेशयन्** [9]यो व्यापारः प्रवृत्तः, [10]सोऽपि दुःखरूपा वृत्तिर्जायते, सापि **रजसः** मुख्या वृत्तिः। यत्र पुंसि **मूढता** मोहरूपा वृत्तिः सर्वारम्भेषु जायते, सापि **तमसः** मुख्या वृत्तिरिति ॥ ३९उ०–४०॥

अथ व्याख्यातस्योपसंहाराय व्याख्येयस्योपक्रमाय च श्लोकः — "**व्यक्ता गुणाः**" इत्यादि। ये **गुणाः कारणवीर्ययोगात्** श्रीकण्ठनाथशक्तिक्षोभाद् **व्यक्ताः** [11]यथा व्यक्तीकृताः प्रधानात्, **यैः** गुणैः **पशूनां स्थितये** भोगभोग्यस्थितिनिमित्तं गुणादिसर्वं **जगद्** यथा व्याप्तं तथा च **ते** वर्णिता इति व्याख्यातोपसंहारः। "**बुद्धेर्विस्तरं शृणु**" इति व्याख्येयोपक्रमः ॥४१॥

इति श्रीमन्मतङ्ग[12]ज्ञानपादवृत्तौ गुणतत्त्वप्रकरणम्।
**षोडशः पटलः**

---

[1] सत्त्वाधिक्येनोच्यते — ऐ.
[2] 'विना येनापि' इति पाठः एतद्व्याख्यातृसंमतः।
[3] 'स्वतेजोगूढगोचराः' इति पाठः एतद्व्याख्यातृसंमतः।
[4] ०गमनमपि — ऐ.
[5] प्रत्यक्षीकृता इत्यर्थः — ऐ.
[6] सापि सुखरूपा वृत्तिर्मुख्यतत्त्वस्य — ऐ.
[7] तत्र — ऐ.
[8] 'आवेशयन् प्रदृश्येत' इति पाठः एतद्व्याख्यातृसंमतः।
[9] 'यो व्यापारः' इति नास्ति — ऐ.
[10] 'सोऽपि' इति नास्ति — ऐ.
[11] यया व्यक्तिप्रकृताः — ऐ.
[12] 'ज्ञानपाद' इत्येतद् अत्रैव प्रकरणे दृश्यते।

# सप्तदशः पटलः

## बुद्धितत्त्वप्रकरणम्

**अथ** इति गुणतत्त्ववर्णनादनन्तरं बुद्धेरपि "[1]विस्तरं शृणु" इति पूर्वक्रिययाभिसंबन्धः। पदार्थादिसंबन्धाः प्राग्वदेव। वाक्यात्मकस्तु —

"[2]महदादि महत्कार्यकारणस्योपलक्षिताः।"

इत्याद्यनेकविधः। पाटलिकस्तु पूर्वपटलान्ते "[3]बुद्धेरिदानीम्" इत्यनेन सूचितः। **यो बुद्धेर्विकासः** विस्तारः स [4]**स्वभावेन** स्वस्या बुद्धेर्भावाष्टकेन **अनुमीयते**। ततो युक्तियुक्तमेव तस्या लक्षणं शृण्विदानीं वक्ष्याम इति भावः ॥१पू०॥

अथ बुद्धेर्लक्षणं संहृत्योच्यते — "**क्षुब्धेभ्यः सहसा**" इत्यादि। श्रीकण्ठनाथशक्त्या **क्षुब्धेभ्यो गुणेभ्यो बुद्धिः सहसा पूर्वम्** इति अहंकारादिभ्यः पूर्वमभिव्यज्यते। गुणेभ्य इति बहुवचनं गुणभेदाद्बुद्धेरपि त्रिभेदत्वद्योतनार्थमेव। अन्यथा गुणतत्त्वस्यैक्यत्वाद्बुद्धेरप्यैक्यं स्यादिति भावः। अथ तल्लक्षणं **भूतगोचरा** भूतानामात्मनां सुखदुःखमोहभेदशब्दादिविषयरूपा। किं च सर्वेषां पुंसां वस्तुनिश्चयकृद्वृत्त्या सह **भावानां** धर्मादिभावानां **जननी** तज्जननकर्त्रीत्यर्थः। किं च पिशाचादिपितामहान्तानां देवयोन्यष्टकानामष्टाष्टगुणाधिक्येनोपेता युक्ता। **विभागेन** एतल्लक्षणविभागेन **यथाक्रमं वर्ण्यते** ॥१उ०–२॥

अथ मतङ्गमुनिः, गुणानां बुद्धेश्च कारणकार्यत्वजिज्ञासया प्रश्नयति — "**कार्यकारणभावो यः**" इत्यादि। **अस्मिन् लोके सर्वत्र** इति लोके वेदे च व्यवहर्तृषु [5]सर्ववादिषु एककार्योत्पत्तौ उपादानकारणं, सहकारिकारणं, निमित्तकारणमिति त्रिविधं हि कारणत्वेन प्रसिद्धम् ॥३–४पू०॥

अत्र च बुद्धिनामकार्योत्पत्तौ गुणानामुपादानकारणत्वेन वा, सहकारिकारणत्वेन वा, निमित्तकारणत्वेन वा भगवताभीप्सितमिति मुनिर्विकल्प्य तत्रोपादानकारणत्वे दोषमाह — स्वात्मलोपकृतः इत्यादि। यथोपादानकारणे क्षीरे दध्युत्पद्यते, तथा [6]गुणोपादानकारणे बुद्धिरुत्पद्यते चेत्, क्षीरस्य द्रवत्व[7]माधुर्यादिसर्वगुणानां नाशेनाद्रवत्वादिगुणयुक्तं दध्युत्पद्यते, तथाखिलगुणनाश इति सत्त्वरजस्तम इत्युक्तगुणानां सर्वत्र नाशेनान्यगुणयुक्ता बुद्धिरुत्पद्यतामिति। तदस्तु का नो हानिरिति चेत्, बुद्धेर्गुणत्वेनोत्पन्नत्वाद् बुद्धिरेकाङ्गीकर्तव्या। बुद्धौ **गुणानां** सत्त्वरजस्तमोगुणानां प्रकाशादिवृत्तिः **कुतः** कस्मादिति तदेद हानिरिति भावः ॥४उ०–५॥

---

[1] मतङ्ग० विद्या० १६. ४१ उ.

[2] मतङ्ग० विद्या० १५. १५ उ.

[3] मतङ्ग० विद्या० १६. ४१ उ.

[4] 'स्वभावेनानुमीयते' इति पाठः एतद्व्याख्यातृसंमतः।

[5] सर्वादिषु — ऐ.

[6] गुणानामुपादानकारणे — ऐ.

[7] माधुर्यत्वादि — ऐ.

अथ सहकारिकारणत्वेऽपि दोषमाह— **मातृपुत्रकृतान्न्यायाद्** इत्यादि। यथा शुक्लशोणितात्मकोपादानकारणात् पुत्रनामकार्योत्पत्तौ मातुः शोणितांशमात्रे सहकारितया व्याप्तिः सिद्धा न सर्वत्र तथा बुद्धौ गुणसहकृतांशमात्रे गुणानां व्याप्तिः सिद्धा स न सर्वत्रेति बुद्धेः सर्वत्र कुतो गुणानां वृत्तय इत्यव्याप्तिदोषः प्रसज्यते ॥६पू०॥

अथ निमित्तकारणत्वेऽपि दोषमाह— "**कर्तृकर्मविभेदात्**" इत्यादि। यथा निमित्तकारणत्वे[1]नाभिमतदेवदत्तादिकर्त्रा स्नानदेवार्चाध्ययनपाचनभोजनकृषिवाणिज्याद्यनेककर्मभेदस्योत्पत्तिर्दृश्यते, तथा गुणाख्यनिमित्तकारणेन बुद्धेरप्युत्पत्तिश्चेत् तदयुक्तम्। निमित्तकारणवस्तुधर्मे [2]बुद्धिमत्कर्तृत्वमस्ति। तद्भवद्भिरपि [3]चेतनानामभ्युपगतमित्यस्योक्तत्वान्निमित्तकारणत्वं[4] गुणानां न प्रसज्यते। अथाचेतनस्य गुणस्यापि बुद्धिमत्कर्तृत्वाभ्युपगमे[5] चेतनवस्तुधर्मो बुद्धिमत्कर्तृत्वमचेतनानां नास्त्येवेति व्यवस्थित्यभावदोषः प्रसज्यते। किं च गुणानां निमित्तकारणत्वेऽङ्गीक्रियमाणेऽपि तस्य निमित्तकारणत्वमात्रे चरितार्थत्वाद्बुद्धिः कस्माद्वस्तुधर्मोपादान[6]कारणादुत्पद्यत इति निश्चयाभावदोषश्चेति पूर्वपक्षः ॥६उ०॥

अत्र समाधानम्— **लोकसंव्यवहारार्थम्** इत्यादि। **लोकसंव्यवहारार्थं** सर्ववाद्यभिमतकारणत्रयमस्तीत्यत्र यदुक्तं तदस्माकमप्यस्त्येव। तत्र बुद्धिनामकार्योत्पत्तौ गुणानामुपादान[7]कारणत्वमेवास्माभिरप्यभ्युपगतम्। तस्य स्वात्मलोपकृतो योऽयं नियमः कार्योत्पत्तौ सर्वत्र वर्तत इति यदुक्तं तदयुक्तमेव। तन्नियमस्यानैकान्तिकत्वात्। उपादानकारणानां बहुविधत्वात्। तथा हि— यथा मृद उपादानकारणात्[8] स्थालीघटशरावकरकादिपृथक्कार्याण्युत्पद्यन्ते। तत्कार्येषु तदवयवेषु कण्ठादिषु तत्कार्येषु च कर्परादिषु च सर्वत्र मृद्गुणानां काठिन्यलौहित्यगन्धवत्त्वादीनां [9]दर्शनाद्, मृदश्च लोपाभावाच्च[10] **वस्तुनोऽभेदेऽपि** [11]**व्यक्तिभेदः पृथक् पृथक्** सर्वैश्च दृश्यते। तत्कार्यं त्वया [12]**किं न दृष्टम्** इति परिहासोक्तिः। यथा च लोहैः [13]स्वर्णादिभिर्मुकुटादीनां वस्तुनोऽभेदेऽपि व्यक्तिभेदात्पृथक् पृथगुत्पत्तिर्दृश्यते। ततोऽस्य स्वात्मलोप[14]कृतस्य नियमस्य नियमेन व्याप्तिर्न दृश्यते। तद्वद्गुणाख्योपादानकारणाद्बुद्धिरुत्पद्यते ॥७–८पू०॥

तद्गुणाख्यवस्तुनोऽभेदेऽपि बुद्धौ च सत्त्वरजस्तमोगुणवृत्तयो विशेषेण वर्तन्ते चेद्बुद्धिरेकैवास्तु। [15]गुणैः किं कार्यमिति यदुक्तं तदपि नेत्युच्यते— "**साध्यसाधनभेदेन**" इत्यादि। यथा [16]**स्थानानाम्** आधाररूपाणामुपादानकारणानां मृदादीनां **संततिः** परंपरा च तत्कार्यरूपाणां स्थाल्यादीनां [17]परंपरा च साधनभेदेन कारणरूपभेदेन, साध्यभेदेन कार्यरूपभेदेन च पृथग्विधाः। अन्यथा पुनः

---

[1] ०नाभिमते देवदत्तादि कर्ता स्नान० — ऐ.
[2] बुद्धिमत्कर्तृकं तद्भवद्भिरपि — ऐ.
[3] ०चेतनानां मताभ्युपगमस्योक्तत्वा — ऐ.
[4] ०कारणत्वे — ऐ.
[5] कर्तृकत्वाभ्युपगमे — ऐ.
[6] ०कारणत्वादुत्पद्यत — ऐ.
[7] ०कारणत्वेनैवास्मिभि० — ऐ.
[8] ०कारणत्वात् — ऐ.
[9] 'दर्शनात्' इति नास्ति — ऐ.
[10] चशब्दो नास्ति — ऐ.
[11] ०ऽभेदोऽपि व्यक्तिभेदात्पृथक् — ऐ.
[12] 'किं' इति नास्ति — ऐ.
[13] स्वार्णादिभिर्मुकुल्यादयो वस्तुतोऽभेदेऽपि —ऐ.
[14] ०कृतेन नियमेन व्याप्तिर्दृश्यते — ऐ.
[15] गुणेभ्यः किं — ऐ.
[16] 'स्थानसंततिः' इति पाठः एतद्व्याख्यातृसंमतः।
[17] परंपरात्वसाधन० — ऐ.

कार्याणामनुत्पत्तिप्रसङ्गादिति। तद्वदत्रापि गुणा आधाररूपतया च कारणरूपतया च पृथक् सिध्यन्तीति न कश्चिद्दोषः। तदुक्तं **तत्त्वसंग्रहे** —

[1]"अविभागो हि गुणानामाधारे क्ष्मादिभागवदवश्यम्।" इति ॥८उ०॥

अथ निमित्तकारणत्वे वस्तुधर्मोऽनवस्थित इति योऽत्र दोषः प्रोक्तस्तदपि नेत्युच्यते — **शक्तयः परमेशस्य** इत्यादि। नास्माकं बुद्धिकार्योत्पत्तौ गुणानां निमित्त[2]कारणत्वमभिमतम्। अचेतनानां चेतनप्रेरणं विना सर्वत्र नैव प्रवृत्तिरिति नियमेन व्याप्तिसिद्धेः।

"[3]प्रवृत्तिरसतो यस्मान्नेष्यते [4]मुनिसत्तम"।

इत्यादिना निषिद्धत्वात्। किं तु सर्वत्र निमित्तकारणत्वेन सर्वज्ञत्वसर्वकर्तृत्वयुक्तस्य शिवस्यैवाभिमतत्वात्। अत्रापि गुणेभ्य उपादानेभ्यो बुद्धिनामकार्योत्पत्तौ शिवेनाधिष्ठितश्रीकण्ठनामशक्तिसंचालितेभ्यः सत्त्वरजस्तमोभ्यः सात्त्विकराजसतामसभेदेन बुद्धिश्च त्रिभेदेनोत्पद्यते। ततो वस्तुधर्मानवस्थितिदोष उभयत्रापि न प्रसज्यते। गुणेभ्य उपादानेभ्यो निमित्तकारणादीश्वराद्बुद्धिरुत्पद्यत इत्यभिमतत्वात् ॥९–११पू०॥

अथ सहकारिकारणस्याव्यापकदोषोऽत्र प्रतिपादितः सोऽपि नेत्युच्यते — "**यथान्नपरिपाकस्य**" इत्यादि। यथान्नपरिपाकमात्रस्य सहकारित्वस्य मातृपितृदेहमात्रे व्याप्तिः सर्वत्र सिद्ध्यत्येव। ततो न सहकारिकारणस्याव्यापित्वदोषः। किं च पटसहकारिकारणस्य तुरीवेमादीनां च पटेषु सर्वत्र संचारितमात्रस्य व्याप्तिसिद्धत्वाच्च। नात्रास्माभिर्बुद्धिकार्ये गुणानां सहकारिकारणत्वं विवक्षितम्। किं तूपादानकारणत्वेनोक्तत्वात् ॥११–१३॥

अथात्र बुद्धिकार्ये सहकारिकारणं किमिति चेत् कर्माण्येव सहकारिकारणतयाभिमतानीत्युच्यते— "**व्यक्तः** [5]**पुंसोऽपकाराय**" इत्यादि। यतः **भोक्तुः** आत्मनः कर्मणां सहकारिणां विपाकेन परिपक्वेन **महदादिना** बुद्ध्यादिभेदेन यो **भोग्योऽर्थोऽनेकधा पुंसोऽपकाराय व्यक्तः** ततः कर्माण्येवात्र सहकारिकारणत्वेनोक्तानि। तदुक्तं श्री**मृगेन्द्रे**[6] —

"ईशाविद्याद्यपेक्षत्वात्सहकारि तदुच्यते।" इति।

श्रीमत्**स्वायम्भुवे** च[7] —

"कर्मतश्च शरीराणि [8]विषयाः करणानि च।" इति ॥१४॥

इत्येवं बुद्धेर्गुणानां कारणत्वे मुनिना प्रतिपादितान्दोषान्संपरिहृत्य, तस्यास्त्रिविधानि सम्यक्कारणानि च प्रसाध्योपसंहरति — "**ततो गुणा विकारैः स्वैः**" इत्यादि। यतो बुद्धेस्त्रिगुणानामुपादानकारणत्वं सिद्धं, ततस्त्रिरूपैर्गुणानां **विकारैः** सात्त्विकराजसतामसाख्यबुद्धिभेदैश्च बुद्धेः कार्य-

---

[1] श्लो० ९ उ०.

[2] ०कारणत्वेनाभिमतम् — ऐ.

[3] मतङ्ग० विद्या० १५. १६ पू०.

[4] 'मुनिसत्तम' इति पाठः एतद्व्याख्यातृसंमतः।

[5] 'पुंसोऽपकाराय' इति पाठः एतद्व्याख्यातृसंमतः।

[6] विद्या० ८. ३ पू०.

[7] ३२. १३.

[8] विविधाः कारणानि च — ऐ.

रूपैरहंकारैस्त्रिविधैश्च सर्वत्र स्वस्ववृत्तिभेदैः **गुणाः विसृताः** इति नात्र कश्चिद्दोषः ॥१५पू०॥
अथ बुद्धेः सात्त्विकगुणभेदाः प्रोच्यन्ते — "**धर्मो ज्ञानं च**" इत्यादि। अथ बुद्धेस्ते चतुर्विधाः सात्त्विकगुणाः ॥१५उ०॥

देवयोन्यष्टकेष्वष्टाष्टगुणोपेता[1] इति यल्लक्षणमुक्तं[2] तदुच्यते — "**निसर्गेणैव**" इत्यादि। देवयोन्यष्टकेषु ब्रह्मणि केवलं सात्त्विका एव। [3]प्रजापतौ किंचिद्रजोगुणयुक्ताः सात्त्विकाः। सोमे रजोऽधिकयुक्तसात्त्विकाः। इन्द्रेऽर्धाधिकरजोयुक्तसात्त्विकाः। गन्धर्वेऽर्धाधिकरजोयुक्तसात्त्विका ईषत्तमोगुणश्च। यक्षेऽर्धरजोगुणतमोगुणयुक्तसात्त्विकाः। रक्षसि पादोनतमोऽर्धरजोगुणयुक्ताः सात्त्विकाः। पिशाचे तमोगुणाधिक्य[4]युक्तसात्त्विकाः। अत एव **सात्त्विकाः देवाः** प्रोक्ताः। **मानुषाः** रजोगुणाधिक्याः। तिर्यग्योनयस्तामसगुणाधिक्याः ॥१६–२१॥

ननु विमिश्राश्च गुणाः [5]प्रागुक्ताः तत्कथमित्यत्रोच्यते — "**तथापि**" इत्यादि। सत्यम्। योनिभेदप्रसङ्गेन साधारणेन क्रमेण यथास्थितमित्युक्तम्। तथापि पुंसां **प्राकृते देहे** विमिश्रा गुणवृत्तयो वर्तन्ते। ता **युक्तितः** मानेन निश्चेतव्याः ॥२२॥

[6]पूर्वं च [7]प्रधानतत्त्वपटले च वृत्तिभेदा विस्तरेणोक्ता इति तदेवानुवदति — "**तदापूरितवीर्यस्य**" इत्यादि। **बुद्ध्यादयश्च** कार्यकारणरूपप्रारब्धकार्यकर्म . . .[8]

---

[1] ०ष्वष्टगुणोपेता — ऐ.
[2] मतङ्ग० विद्या० १७. २ उ०.
[3] प्रजापतिषु किंचिद्रजो० — ऐ.
[4] 'युक्त' इति नास्ति — ऐ.
[5] मतङ्ग० विद्या० १६. २२.
[6] मतङ्ग० विद्या० १६. १७ उ०–२४.
[7] मतङ्ग० विद्या० १५. १० उ०, ११.
[8] इतः परमेतत्पटलान्तं रामकण्ठवृत्तिरेव 'ऐ' कोशे लभ्यते।

[**अहंकारप्रकरणे प्रथमश्लोकोत्तरार्धादारभ्य ३९ तमश्लोकपर्यन्तं 'ऊ, ऋ' कोशयोः परमुपलभ्यमानाया रामकण्ठीयमतङ्गवृत्तेः स्थाने विजातीया काचन अनिर्दिष्टकर्तृका वृत्तिः 'ऐ' कोशे परमुपलभ्यते, सेयं वृत्तिरत्रानुबन्धे दीयते। मूलश्लोकसंख्या वृत्तेरन्ते दत्तास्ति। वृत्तिरशुद्धभूयिष्ठत्वाच्छोधिता। मातृकापाठाः टिप्पण्यां दीयन्ते। ४२७ तमे पृष्ठे १५ तमसंख्यागता टिप्पणी द्रष्टव्या।**]

## अष्टादशः पटलः

# अहंकारादिसप्तदशतत्त्वप्रकरणम्

अथ "[1]स्वभावाद्व्यतिरिच्यते" इत्युक्तम्। कोऽसौ स्वभाव इत्युच्यते — "**स्वभावोऽध्यवसायाख्यः**" इत्यादि। **यतः** [2]यस्मात्कारणात् पुंबोधव्यक्तिभूमिका या बुद्धिरध्यवसायाख्या **सा प्रकृतिः** अहंकारस्य [3]व्यक्तेर्मूलकारणम् **उच्यते**। [4]तस्मादध्यवसायाभिधाना [5]वृत्तिरेका बुद्धेः **स्वभावः** स्यादिति मन्तव्यः। तदुक्तं भवति —

"[6]अक्षार्थसङ्गमोत्थं यद्विज्ञानं प्रत्ययात्मकम्।
[7]तेनानुवासितात्मा तु परत्र विनिवेदयेत्॥"

इत्युक्तत्वात् सोऽयं घटः परिवर्तुलः श्यामल इति सर्वेषामहंकारव्यवसायात्मको [8]यथात्मन्यनुभव आत्मनां जायते स एव बुद्ध्याभि[9]व्यञ्जितः प्रत्ययात्मकं फलम्। तदेव पश्चाद्धियया आत्मा [10]स्वीकरोति। ततो घटज्ञानवानहमिति स्वात्मपरामर्शज्ञानं जायते। तस्माद्बुद्धेरध्यवसायाख्या वृत्तिः स्वभावो मूलकारणम्। ततः परं जातोऽहंप्रत्ययः सोऽस्य **विकारः** इति। ततोऽहंप्रत्ययकारणं **तद्** अहंकारतत्त्वं बुद्धिकार्यम् **अनिन्दितम्** निन्दावर्जितमेव भवतीति ॥१उ०-२पू०॥

अथ तत्साधनं — "**स्वसूतेरुच्यते योनिः**" इत्यादि। अहमित्यात्मविषयज्ञानपरंपराणां **कारणम्**। किं च तत्त्वसङ्घानां मनआदिषोडशानां **योनिः**। तत्त्वानां राट् परिवर्धनकृदित्यर्थः। "अकृतस्य करणं तस्य परिवर्धनं च प्रकृतेः कर्म" इति श्रुतेः। अत एव कारणं तेषामित्यर्थः। अयमर्थः—सर्वेषामात्मनां सर्वेषु च प्रत्ययेष्वहमिति प्रत्ययो वर्तते। सोऽयं निष्कारणो न भवति। ततो यत्तत्कारणं [11]तदहंकारतत्त्वमिति। किं च यतो मनोबुद्धीन्द्रियकर्मेन्द्रियतन्मात्रसंज्ञानि तत्त्वानि तत्तत्कार्यतः सिद्धानि। [12]तानि तत्त्वानि निष्कारणानि न भवन्ति। ततो यत्तत्कारणं [13]तदहंकारतत्त्वमिति ॥ २ उ०॥

---

[1] मतङ्ग० विद्या० १८. १ उ०.
[2] तस्मात् — ऐ.
[3] व्यक्तिमूलकारणम् — ऐ.
[4] तस्माद्व्यवसायाभि० — ऐ.
[5] वृत्तिरेकबुद्धेः — ऐ.
[6] मतङ्ग० विद्या० ६. १६.
[7] 'तेनानुवासितात्मा' इति पाठः एतद्व्याख्यातृसंमत. — ऐ.
[8] यथात्मन्यानुभवः — ऐ.
[9] ०व्यञ्जितं — ऐ.
[10] स्वीक्रियते — ऐ.
[11] तदहंकारमिति — ऐ.
[12] 'तानि' इति नास्ति — ऐ.
[13] तदहंकारमिति — ऐ.

किं च—"**स्वभिप्रायेण**" इति । चराचरात्मप्राणिनामहमित्यभिप्रेत्यागतेन[1] भावेनात्मरूपेण सर्वं सितासितात्मकं **जगद्विकिरति**। ततोऽहंकारमयमेव सर्वं जगच्छब्दवाच्यमिति। ततश्चाहंकार-सिद्धिरिति ।।३पू०।।

अथास्य त्रिगुणात्मकबुद्धिकार्यत्वात् त्रिविधो वृत्तिभिरित्युच्यते—"**स त्रिधा भेदमापन्नः**" इत्यादि । "कारणगुणा हि कार्यगुणानामारम्भकाः" इति [2]न्यायेन बुद्धेस्त्रिगुणात्मकत्वात्तत्कार्यात्मकोऽहंकारोऽपि [3]वृत्तिभेदात्त्रिरूपो भवतीति ।।३उ०।।

ननु च 'अहं भोक्ता' इत्यत्रात्मव्यतिरेकेणाहंकार इति कश्चिद्धर्मी केन प्रमाणेन लभ्यत इत्यत्रोच्यते—"**महतश्च समुद्भूतः**" इत्यादि। सत्यम्। अहमित्यात्मपरामर्शरूपोऽयं प्रत्ययो यो वर्तते स एवायमात्मा नान्यः। किं तु "घटज्ञानवानहम्" इत्याद्यात्मपरामर्शज्ञानोत्पत्त्यवसरे सर्वत्र [4]"**महतः**" इति आत्ममनोऽक्षार्थसंयोगादनन्तरं बुद्ध्या "सोऽयं घटः" इति तत्समस्तधर्माध्यवसायादनन्तरमेव घटज्ञानवानहमिति प्रत्ययो जायते। तत एव बुद्धिवृत्तेः पूर्वमेवात्मा सिद्धो भवतीति यथा बुद्धेरन्योऽयमात्मा तथाहंकारवृत्तेः पूर्वं सिद्ध आत्माहंकारादन्य एवेत्यनुभवसिद्धो भवति। तत्तद्वृत्तयस्तु आत्मवृत्तय एव। [5]तद्भेदांश्च **तत्तद्वृत्तिभिरधुना** वक्ष्याम इति ।। ४पू०।।

अथ तद्भेदरूपेणोच्यते—"**स्वरूपं धर्मिणः**" इत्यादि । योऽयं पूर्वोक्तन्यायेनाहंकारवृत्त्यात्मनाहमिति प्रत्ययो वर्तते स एव **धर्मिणः** आत्मनः **स्वरूपं** तद्धर्म एव बुद्ध्यादिवृत्तिभेदः सर्व इति **ध्रुवम्** निश्चय एव ।।४उ०।।

कस्मादित्युच्यते—"**अहमिति प्रत्ययः**" इत्यादि। **अहमिति यः प्रत्ययः** सर्वात्मसु वर्तते **स** एव ज्ञानेन्द्रियकर्मेन्द्रियवृत्तिभेदैः **पञ्चधा वर्तते** ।।५।।

[6]तथैवात्मानुभवाद्वृत्तयः सर्वा धर्मा एवास्येति। तथा हि—"**अहं श्रोता मया**" इत्यादि। एवं तैजसाहंकारजन्यज्ञानेन्द्रियपञ्चकैर्व्यञ्जितस्वधर्मज्ञान[7]पञ्चकैः **श्रोताहं स्प्रष्टाहं द्रष्टाहम् आस्वादयिताहं** [8]घ्रापयिताहम् इति प्रवृत्तिभेद[9]धर्मस्वरूपं सत्त्वाहंकारवृत्तिः पूर्वं [10]प्रतिज्ञातेति मन्तव्या ।।६–९।।

अथ कर्मेन्द्रियपञ्चकैः राजसाहंकारवृत्तिरप्युच्यते—"**क्रियापञ्चकमन्यच्च**" इत्यादि। पूर्वोक्तप्रकारेण अहं वक्ता, [11]अहमादाता, अहं गन्ता, अहमुत्स्रष्टा, [12]अहमेनां तर्पयिता इत्यादिप्रवृत्तिभेदधर्मस्वरूपं राजसाहंकारवृत्तिपञ्चकमपि [13]ज्ञातव्यमिति ।।१०–११।।

---

[1] ०प्रेत्य गतेन — ऐ.

[2] 'कारणगुणपूर्वकः कार्यगुणो दृष्टः' वैशेषिकसूत्रम् १. ३. २४; कारणगुणप्रक्रमन्यायः लौ० न्यायाञ्जलिः २. पृ० १९.

[3] वृत्तिभेदकत्रिरूपो — ऐ.

[4] महत्त्वं — ऐ.

[5] तद्भेदश्च — ऐ.

[6] तदैवात्मानु० — ऐ.

[7] ०पञ्चकैत्यगतोऽहं — ऐ.

[8] जिघ्रापितेति — ऐ.

[9] ०धर्मिस्वरूपं — ऐ.

[10] प्रतिज्ञातमिति मन्तव्यः — ऐ.

[11] अहं तदा अहं गता — ऐ.

[12] अहमेनतर्पितेत्यादि — ऐ.

[13] ज्ञातव्येति — ऐ.

अथ एवमाद्याकारात्मना ज्ञानक्रियाशक्त्युन्मीलिते सत्येवाहंकारवृत्तिभेदो नान्यथेत्युच्यते — "**या सा** [१]**ज्ञानक्रियाशक्तिः**" इत्यादि ॥१२॥

अथ ज्ञानेन्द्रियपञ्चकं सात्त्विकमपि रजसा युक्तमित्युच्यते — " [२]**ज्ञानशक्तिः**" इत्यादि। ज्ञानेन्द्रियपञ्चकं च सत्त्वोन्मीलितमपि तत्तद्विषयग्रहणप्रवृत्तिभूतक्रियया च सत्त्वमीषद्रजसापि संयुतं भवति। तदा **शब्दादिविषयान् गृह्य** संगृह्य ज्ञानशक्त्या **विकासते** ॥१३–१४पू०॥

एवं कर्मेन्द्रियपञ्चकमपीत्युच्यते — " [३]**क्रियाशक्तिः**" इत्यादि। एवं [४]कर्मेन्द्रियपञ्चकमपि प्रवृत्तिगुणाधिक्यवत्तथापि ज्ञानं विना प्रवृत्त्ययोगादीषत्सत्त्वगुणयुक्तमपि भवति। तदा वचनादि-क्रियाभेदयुक्तक्रियाशक्तिः प्रकाशते। तत आत्मनो ज्ञानक्रियात्मिका शक्तिरेव [५]ज्ञानेन्द्रियकर्मेन्द्रिय-वृत्तिभेदेन विकासते। तद्धर्मरूपेणाहंकारवृत्तिरपि दशधा भिद्यत इति ॥१४उ०॥

अथेच्छाशक्तिभेदेनापि अहंकारवृत्तिरष्टधा भिद्यत इत्युच्यते — "**गुणाधारसमायोगाद्**" इत्यादि यदा परमेश्वरेण **गुणाधारेण** प्रकृतितत्त्वेन **समायोगः**[६] आत्मनः क्रियते तदा तत्संबन्धात् सर्वं त-त्कार्यात्मकं ज्ञत्वकर्तृत्वरूपस्वबलव्यक्तिकारकं समस्तमप्याश्रित्य, **सादरम्** आदरेण सहितं यथा भवति तथा इच्छापूर्वमित्यर्थः **कर्तृत्वेन** पुरुषार्थकर्तृत्वेन युक्तः पुरुषः सुखार्थं प्रवर्तते। तदास्य **यशस्विनी** इति अस्य यशसो भोगमोक्षात्मकस्य करणे शीलमस्या इति सा शक्तिः **विकरोति** विशेषेण पुरुषस्य कुर्वाणा कार्येच्छाप्रवृत्तिं करोति ॥१५॥

अथ ततः किमिति। [७]तत इच्छाप्रवृत्तिभेदेनाहंकारवृत्तेरभेदः [८]संभवतीति कथ्यते—**ममैषा महिषी भद्रा** इत्यादि। तत्र प्रथमं कर्तृकारकभावेच्छोच्यते यथा "**नाहं गच्छामि सागरम्**" इत्यादि। द्वितीयाकारकभावेच्छाभेदेनाहंकारवृत्तिर्यथा "मां कश्चिन्न विजानाति" इत्यादि। तृतीयाकारका-भिप्रायेणात्राहंकारवृत्तिर्न स्फुटीभवतीति नोक्ता। तथा हि — " [९]कर्तृकरणयोस्तृतीया" [१०]इति तृतीयाकारके "[११]रामेण बाणेन हतो वाली" इत्यादावहंकारवृत्त्यस्फुटीभावो मन्तव्यः। एवं " "[१२]सहयुक्तेऽप्रधाने" इत्यादावप्यूह्यम्। अथ चतुर्थीकारकाभिप्रायेच्छयाहंकारवृत्तिर्यथा "**अस्मभ्यं पृथुवासांसि**" इत्यादि। अथ पञ्चमीकारकाभिप्रायेणोद्भूतेच्छयाहंकारवृत्तिर्यथा "**मत्तः शीघ्रतरो मृगः**" इत्यादि। अथ [१३]"षष्ठी शेषे" इत्यादिसूत्रैः स्वस्वामिभावसंबन्धः शेष इति कृत्वा स्वामि-भावेच्छयाहंकारवृत्तिरुच्यते यथा "[१४]**ममैषा महिषी भद्रा**", "ममैतद्विपुलं पुरम्" इत्यादि। "मद्रत्नं [१५]प्रतिगृह्णाति" इत्यादि च स्वभेदज्ञापनाय दृष्टान्तभेद इति मन्तव्यः। अथाध्यात्मसंबन्धाभिप्रायेण

---

[१] 'ज्ञानक्रियाशक्तिः' इति पाठः एतद्व्याख्यातृ-संमतः।
[२] 'ज्ञानशक्तिर्विकासते' इति पाठः एतद्व्याख्या-तृसंमतः।
[३] 'क्रियाशक्तिः' इति पाठः एतद्व्याख्यातृसंमतः।
[४] कर्मेन्द्रियमपि . . . गुणाधिक्यं तथापि —ऐ.
[५] वागेन्द्रिय० — ऐ.
[६] समायोगं — ऐ.
[७] 'ततः' इति नास्ति — ऐ.
[८] 'संभवतीति' इति नास्ति — ऐ.
[९] पाणिनिसूत्रम् २. ३. १८.
[१०] इतिशब्दो नास्ति — ऐ.
[११] सिद्धान्तकौमुद्यां २. ३. १८ सूत्रविवरणे।
[१२] पाणिनिसूत्रम् २. ३. १९.
[१३] पाणिनिसूत्रम् २. ३. ४०.
[१४] 'ममैषा महिषी भद्रा' इति पाठः एतद्व्याख्या-तृसंमतः।
[१५] 'प्रतिगृह्णाति' इति पाठः एतद्व्याख्यातृसंमतः।

षष्ठी यथा "नास्ति मे निश्चितं मनः" इत्यादि। अथ सप्तमीकारकभावेच्छयाहंकारवृत्तिर्यथा "तुष्टे मयि न भेतव्यम्" इत्यादि। **भावाष्टकम्** इति भावोऽभिप्रायः इतः परमस्मिन्विषये एवं कर्तव्यमितीच्छेत्यर्थः। तेनाहंकारवृत्तिरष्टभेदैर्भिद्यत इति मन्तव्या ॥१६–१८पू०॥

अथास्य भावाष्टकविषये करणं किमित्युच्यते — "**सत्वेनापूरितस्य**" इत्यादि। **सत्त्वेनापूरितस्य** [1]तैजसाहंकारकार्यसत्त्वगुणयुक्तस्य **अस्य** पुरुषस्य **मनो निर्मलं** यथा भवति तथाभिव्यज्यते। तत एवेच्छाया मनोवृत्तित्वान्मन एवात्र [2]करणमिति ॥१८उ०॥

अथ योगबलेनेन्द्रिय[3]वृत्तेरपि पटुत्वं वर्तते। तदाहंकार[4]वृत्तेरपि पटुत्वं दशधा भिद्यते। तदुक्तवृत्तिषु मध्यमा वृत्तिः [5]पूर्वोक्तैव। अधमा वृत्तिरशक्तिभेदेन [6]वक्ष्यमाणेति कृत्वा तत्र योगबलयुक्तोत्तमा वृत्तिः करणभेदैरुच्यते—"**इन्द्रियार्थेषु पाटव्यम्**" इत्यादि। यद् **इन्द्रियार्थेषु** श्रोत्रादीन्द्रियाणामर्थेषु शब्दादिषु [7]व्यवहिताव्यवहितेषु सर्वत्र ऋजुमार्गेण स्वर्गादिषु स्थितेष्वपि प्रतिपत्तिः प्रत्यक्षेण योगिनां वर्तते। तच्च **योगाद्** योगाभ्यासबलेनात्मनां प्रवर्तते। तदा श्रोत्रवृत्तं [8]शब्दविषयज्ञानादिकं समस्तं **विस्पष्टं** भवति। एवं ज्ञानेन्द्रियपञ्चकवृत्तिपञ्चकमपि विस्फुटं भवति। विषयीकृताहंकारवृत्तिरपि शब्दादिविषयजालं समस्तं मयानुभूयत इत्यादिना पञ्चधा उत्तमवृत्तित्वेन भिद्यते ॥१९–२१॥

एवं कर्मेन्द्रियवृत्त्याप्यहंकारस्य पञ्चविधपटुत्वमूह्यमित्युच्यते — "**वक्तव्यपाटवम्**" इत्यादि ॥२२–२३॥

अथाधमवृत्तिभेदं वर्णयितुं तद्धेतुरुच्यते — "**तमसा भूरि संपृक्ता**" इत्यादि। यदा पापिनां तमोगुणोऽधिको वर्तते। तेन सत्त्वरजोगुणौ तत्र नष्टौ भवतः। तदास्य पुरुषस्य [9]**ज्ञानक्रियाशक्तिः प्रसुप्ता इव लक्ष्यते**। ज्ञानक्रियोन्मीलनकरणकारणसत्त्वरजोगुणाभावात् तत्कार्यमपि न भवति। तेन तद्वृत्तिरपि न भवति। तद्वृत्तिमाश्रित्योत्पन्नं **गर्वस्य माहात्म्यमपि** [10]वृत्तिरपि न भवतीत्यर्थः। तदा परमेश्वरः **चितौ** पुंसि **तत्तद् लीनं करोति**। तदास्य दुःखं पापकर्मपरिपाकात् प्राप्तं भवति। [11]अत एव करणवृत्त्यभावात्मिका **एषा अशक्तिः** इति **ज्ञेया**। [12]इयमेवाधमवृत्तिरित्युच्यते — "**मनसोऽपाटवं मौढ्यम्**" इत्यादि ॥२४–२७॥

ननु सर्वदा करणानां वृत्त्यभावे मृतप्रायः पुरुषो भवति। तस्य दुःखसंवेदनं कथं भवतीत्यत्रोच्यते — "**किं तु स्वाशयमाहात्म्याद्**" इत्यादि। सत्यम्। **यस्माद्** [13]**भोगिनः** संसिरिणो यद्यदिन्द्रियविषयात्मकं सुखं वा दुःखं वावश्यं **भोक्तव्यं** भवति। तत्तदाशयमाहात्म्यात्तत्तत्कर्मपरिपाकवैभवाद् वावसरागतकालतो वा भोक्तव्यमेवेति। तस्मात्क्वचित्कर्मपरीपाकाभावादप्राप्तबाह्यशरीरस्य

---

[1] तैजसाहंकारस्य कार्यत्वात्सत्त्व० — ऐ.
[2] कारणमिति — ऐ.
[3] ०वृत्तिरपि पटुत्वेन वर्तते — ऐ.
[4] ०वृत्तिरपि पटुत्वेन दशधा — ऐ.
[5] मतङ्ग० विद्या० १८. ५–१४.
[6] मतङ्ग० विद्या० १८. २४–२७.
[7] व्यवधानाव्यवधानेषु — ऐ.
[8] शब्दविषयादिकं — ऐ.
[9] 'ज्ञानक्रियाशक्तिः' इति पाठः एतद्व्याख्यातृसंमतः।
[10] वृत्तिमपीत्यर्थः — ऐ.
[11] तत एव — ऐ.
[12] तदेवाधम० — ऐ.
[13] 'भोगिनः' इति पाठः एतद्व्याख्यातृसंमतः।

**सर्वदा सर्वं** च श्रोत्रादिविषयज्ञानादिकं **न भवति**। अथवा प्राप्तबाह्यशरीरस्यापि यत्काले यद्-भोक्तव्यमिति परमेश्वरेण विहितं [1]तत्काले प्राप्तावसरे संनिपातविषमूर्च्छादौ **क्वचित्क्वचित् सर्वदा सर्वं** च **न** भवति। तदा मृतप्रायोऽपि मोहसंवेदनात्मकत्वाद् भोग एव भवति। अथ क्वचित् पुरुषेषु **सर्वत्र** चैतत्सर्वं श्रोत्रादि [2]विषयकम् **अपाटवं न** भवति। किं तु [3]किंचिद्विषयकमेवापाटवं वर्तते। तदेवमशक्तित्वं विभज्य **वक्ष्यामि**॥२८–२९॥

तथा हि "**शिवशक्तिकरावेशात्**" इत्यादि। **शिवस्य** परमेश्वरस्य शक्त्याः, सवितुः किरणवत् पद्ममुकुलादौ कर्मपाकापेक्षया तद्विषयेषु प्रेरकभावेनेषत्प्रयुक्तत्वाद्धेतोः[4] **चलितस्य** भोगेषु प्रवृत्तस्य पुरुषस्य **रजः** इति रजसः फलं च, **सत्त्वम्**, इति सत्त्वस्य फलं च [5]**प्रणष्टं** भवति। **तमः** इति तमसः फलम् **अतिरिक्तं** अत्यन्तं भोगाय परिपक्वं भवति। **तदा** [6]**गर्वस्य** अहंकारस्य **परीवारः** ज्ञानेन्द्रियकर्मेन्द्रिय [7]मनोऽभिधानानि तत्कार्याणि **न क्वचिद्** विषयेषु स्ववृत्तिषु **प्रवर्तते**। प्रवृत्तविषयेषु च विघ्नसंघातैर्व्याहितविषयो भूत्वा विस्पष्टं [8]व्यापारं **न करोति**। तदाहंकारवृत्तेरपि न पाटवं भवति ॥३०–३१॥

अथ [9]सैव करणाशक्तिः प्रपञ्चतयोच्यते — "श्रोत्रेन्द्रियस्य" इत्यादि॥ ३२–३४॥

अथ क्वचित् [10]प्राणिषु भ्रमरादीनां सर्वदा श्रोत्रेन्द्रियवृत्तिर्न भवति। [11]पिपीलिकादीनां चक्षुःश्रोत्रयोर्वृत्तिः सर्वदा न भवति। [12]वृक्षलतादीनां रसनाघ्राणनेत्रश्रोत्राणां चतुर्णां वृत्तयः सर्वदा न भवन्तीति मनसि निधाय स्थावराणां सर्वदा अशक्तिरेव भवतीत्युच्यते — "**सर्वात्मनानिषण्णोऽयम्**"[13] इत्यादि। **यतः स्थावराणां** त्वगिन्द्रियवृत्तिमात्रयुक्तत्वात् **सर्वात्मना अयम्** अहंकारः **अनिषण्णः** भवति। तस्मात्तद्वृत्तिश्च न स्फुटा व्यक्ता भवति। **यतः** ते स्थावराः पापकर्मफलभोक्तारः तस्माद् [14]लतावृक्षा ब्रह्मणः **तमसोत्कृष्टवीर्येण** तमःसंबन्धप्रेरणया **प्रथमं जाताः** भवन्ति। **तेन** [15]**मौर्ख्याः** मूढप्राया इति कीर्तिताः ॥३५–३६पू०॥

अथ प्रसङ्गात् सौगतच्छायया मतङ्गमुनिः — "**स्थावरान्**" इत्यादि। **अन्ये** सौगताः "स्थावरा अचेतना एव केशनखादिवदबुद्धियुक्ता भवन्ति" इति **वदन्ति**। भवद्भिः कथं चेतनत्वेनोक्ता इति पूर्वपक्षः॥३६उ०–३७पू०॥

तत्र समाधिः — "**ऋतुमद्भावसंयुक्ताः**" इत्यादि। चेतनधर्मयोगात् स्थावराः **चेतनाः** एव। तथा हि — **तरवो निराहारा म्रियन्ते, स्वपुष्टचर्थं अम्बु पादेन पिबन्ति। ऋतुमद्भावसंयुक्ताः** पुष्पवन्तश्च भवन्ति चेत्यादिलिङ्गैरनुमानेन चेतना एवेति निश्चीयते। तदुक्तम्—[16]

---

[1] तत्कालप्राप्तावसरे — ऐ.
[2] ०विषयमपारं च भवती — ऐ.
[3] किंचिद्विषयमेवापरवं — ऐ.
[4] ०त्प्रयुक्ताद्धेतोः — ऐ.
[5] 'प्रणष्टं सत्त्वम्' इति पाठः एतद्व्याख्यातृसंमतः।
[6] 'गर्वपरीवारः' इति पाठः एतद्व्याख्यातृसंमतः।
[7] मनोऽभिधानतत्कार्याणि — ऐ.
[8] 'व्यापारं' इति नास्ति — ऐ.
[9] तदेव करणाशक्तिः — ऐ.
[10] प्राणेषु — ऐ.
[11] वियीमिकादीनां — ऐ.
[12] वृक्षाचलादीनां — ऐ.
[13] 'अनिषण्णोऽयं' इति पाठः एतद्व्याख्यातृसंमतः।
[14] तालवृक्षाः — ऐ.
[15] 'मौर्ख्यास्तेन' इति पाठः एतद्व्याख्यातृसंमतः।
[16] इतःपरं 'ऐ' कोशे रामकण्ठवृत्तिरेवोपलभ्यते।

